श्रीगणेशाय नमः




# अष्टांगसंग्रहः

## श्रीमद्वाग्भटाचार्यनिर्मितः ॥

षड्भिः सूत्रादिभिः स्थानैरायुर्वेदप्रकाशकः ॥



भिषग्वर्यशिरोरत्नबालशास्त्रिपदांबुजे ॥
मिलिंदायितचित्तेन जनस्थाननिवासिना ॥
तर्टेइत्युपनाम्ना च भिषक्पदभृता गुरोः ॥
सखारामतनूजेन गणेशेन प्रयत्नतः ॥
देवधरकुलोत्पन्नभिषजः कृष्णशास्त्रिणः ॥
साह्येनायं यथाबुद्धि शोधितश्च प्रकाशितः ॥



मुंबापुरस्थगणपतकृष्णाजीमुद्रणालयेशेन ॥
कान्होबातनुजात्मारामेण स्वीयमुद्रणायंत्रे ॥
आकाशचंद्रवसुभूमित १८१० शकसंवत्सरे शुचौ मासे॥
पक्षेऽसिते तृतीयातिथौ गुरोर्वासरेंऽकितश्चापि ॥



श्रीशं वंदे

## उपोद्घातः

अस्तीदं वसुमतीमंडलैकदेशवर्ति भरतखंडं नाम ॥ अत्र वेदवेदांगपारगास्त्रैकालिक-ज्ञानिनो महर्षयः संबभूवुः ॥ तैर्लोकानुग्रहकांक्षयाऽनेकानि शास्त्राणि रचितानि ॥ पूर्व-र्षिमार्गानुयायिनोऽत्रत्याः पंडितवर्यास्तत्तच्छास्त्रेषु विस्तीर्णान् ग्रंथान् रचयामासुः ॥

तथावैद्यकेऽप्यायुर्वेदानुसारेणात्रेयधन्वंतरिप्रभृतयोमहर्षयोऽग्निवेशसुश्रुतप्रमुखास्त-च्छिष्याश्च स्वनामप्रसिद्धान्यनेकानि तंत्राणि तेनिरे ॥ तानि सर्वाण्यालोच्य वैद्यवर्यशिरो-मुकुटालंकारहीरकःश्रीमद्वाग्भटाचार्योऽपिवैद्यशास्त्रे सर्वलोकोपयोगायाष्टांगसंग्रहाष्टांगहृद-यरसरत्नसमुच्चयादीनतिप्रगल्भग्रंथान् रचयामास ॥

अयं ग्रंथकारस्तु सिंधुदेशेऽजनि तत्पितृनाम सिंहगुप्तइति तत्पितामहनाम वाग्भटए-वासीत्॥एतच्चानेन तंत्रकृताऽस्मिन्नेवाष्टांगसंग्रहे प्रकटीकृतम् ॥ तद्यथा ॥ भिषग्वरोवाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य ॥ सुतोऽभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिंधुषु लब्धजन्मेति ॥

बुद्धाय तस्मै नमः इत्याद्युक्त्वाद्वाग्भटो बौद्धमतानुयाय्यासीदिति केषां चिन्मतम् तत्तु नसम्यक् यतः अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन्॥अथर्वविहिता शांतिःप्रतिकूलग्रहा-र्चनम् ॥ मातरं पितरं देवान् वैद्यान्विप्रान् हरं हरिं ॥ पूजयेच्छीलयेद्दानदमसत्यदया-र्जवान् ॥ इत्यादिवाग्भटवचनानुरोधात् बुद्धशब्दस्य ज्ञानवानित्यर्थपरत्वाच्च वाग्भटो वैदिकधर्मानुयायी ब्राह्मणआसीन्नबौद्धमतानुयायीत्यधिगम्यते ॥

वाग्भटः कस्मिन्काले समजनीति सम्यङ्न ज्ञायते ॥ तथाप्यस्य प्राचीनत्वं सर्वैर प्युररीकृतं

आयुर्वेदस्याष्टावंगानि कायबालग्रहोर्ध्वांगशल्यविषरसायनवाजीकरणानीति ॥ तानि सूत्रशारीरनिदानचिकित्साकल्पोत्तरस्थानेषु षट्सु व्याख्यातानि ग्रंथकारेण ॥ तत्र बहुधा पंचस्थानव्यापि कायांगमुत्तरस्थानं चेतरांगसंग्राहकं ॥ अष्टांगानां कल्पना शरी-रावस्थाविशेषनिबंधनाऽस्ति ॥ कायशब्देनात्र सर्वावस्थं सर्वावयवं च शरीरं गृह्यते ॥ बालशब्देन प्राथमिकवयस्थं शरीरं । ग्रहशब्देनभूतादिभिरार्त्तशरीरं । ऊर्ध्वांगशब्देन शिरः। शल्यशब्देन व्रणार्त्तत्वं । शेषं स्पष्टं ॥

१ तत्र प्रथमं सूत्रस्थानं चत्वारिंशदध्यायात्मकं ग्रंथकर्तुराचार्यस्यातीव शास्त्ररचना-चातुर्यं प्रकटीकरोति ॥ अस्मिन् स्थाने सर्वतंत्रव्यापिनो निखिलशास्त्रार्थाः सूचिताः ॥ आरोग्यरक्षणोपायास्तत्तदृतुजनितदोषवैषम्यविमुक्त्यर्थं ग्रहपत्याचरणं वेगरोधनिषेधना-थानित्योपयोगिनामन्नपानादिद्रव्याणां गुणा विधयश्च द्रव्याणां गणा गुणाश्च दोषधातु-मलानां विकृताविकृतानां लक्षणानि विकृतानां शमोपायाः रोगाणां सामान्यतश्चिकित्सितभे-दाः प्रतिषेधाश्च स्नेहस्वेदवमनविरेचनबस्तिनस्यधूमगंडूषाञ्जनादिविधयश्च [illegible]

निरूपिताः ॥ तथाच यंत्राणां शस्त्राणां च निरूपणं सांगोपांगं कृतं ॥ किंच सिराणां व्यधः कथंकर्तव्यः शल्यानामाहरणं कथं कार्यं शस्त्रक्षाराग्निकर्माणि कथं विधेयानि तदर्हारोगाः के इत्येतत्सर्वं सविस्तरं कथितम् ॥

२ द्वितीयं शारीरस्थानं द्वादशाध्यायात्मकं ॥ अत्र शुद्धाशुद्धयोः शुक्रार्त्तवयोर्लक्षणानि तद्दोषास्तत्प्रतीकाराश्च तत्संयोगाद्गर्भोत्पत्तिः गर्भिणीलक्षणानि सा पुत्रं कन्यां तृतीयप्रकृतिं वा जनयिष्यतीति सूचकान्यव्यभिचारीणि लक्षणानि मासिमासि गर्भः कथं जायते गर्भसंगे जाते सति किं कर्त्तव्यं गर्भस्य व्यापदः कास्तस्य निष्क्रामणे काव्यापत्तयः संभवंति मूढगर्भादीनां निष्क्रामणं कथं कार्यं तेषु शस्त्रावचारणं कथं विधेयमित्येतत्सकलं सूतिकाशास्त्रं विवर्णितम्॥ अपिच अंगप्रत्यंगविभागः अस्थिसिराधमनीस्रोतसां वर्णनं स्थाननिर्देशश्च मर्मणां स्थानानि नामानि प्रमाणानि च तद्विघातजानि लक्षणानि तेषां सद्यःप्राणहरत्वं कालांतरप्राणहरत्वं विकृतांगकारकत्वं चेत्यादि यद्यच्चिकित्सोपयोगि शारीरवर्णनमावश्यकं तत्सर्वं कार्त्स्न्येन निदर्शितं मरणख्यापकानि रिष्टानि च कथितानि ॥

३ तृतीयं निदानस्थानं षोडशाध्यायात्मकं ॥ अत्र ज्वरादीनां हेतवः पूर्वरूपाणि लिंगानि उपशयः संप्राप्तिश्चेति रोगज्ञानोपायाः कथिताः ॥

४ चतुर्थं चिकित्सास्थानं चतुर्विंशत्यध्यायात्मकं ॥ अत्र पूर्वोक्तज्वरादिव्याधिषु दोषावस्थानुरोधेनौषधप्रयोगाः कथिताः प्रतिरोगं विशिष्टान्यन्नपानानि सूचितानि शस्त्रावचारणार्हेषु व्याधिषु पक्वशोफोदरार्शोश्मरीप्रभृतिषु शस्त्रक्रिया साकल्येन प्रदर्शिता क्षाराग्निसाध्येषु क्षाराग्निकर्म च ॥

५ पंचमं कल्पस्थानमष्टाध्यायात्मकं ॥अत्र वमनविरेचनबस्तीनां कल्पा वमनादीनां व्यापत्तयस्तत्प्रतीकाराश्च ॥ औषधीनां क्वाथादिकल्पना मानं च कथितं ॥

६ षष्ठमुत्तरस्थानं पंचाशदध्यायात्मकं ॥अत्र षड्भिरध्यायैर्बालचिकित्सितं द्वितीयमंगं व्याख्यातं ॥ चतुर्भिर्भूतविद्यानाम तृतीयमंगं ॥अष्टादशभिः शालाक्यापरपर्यायमूर्ध्वांगनाम चतुर्थमंगं कथितं ॥ यत्र नेत्रकर्णनासामुखमूर्ध्नां रोगास्तल्लक्षणानि चिकित्साच निरवशेषं व्याख्याता ॥ एकादशभिः शल्यतंत्रं पंचममंगं कथितं ॥ अस्मिन् व्रणभेदा अस्थिभंगलक्षणानि भगंदरादिलक्षणानि योनिमेंढ्ररोगास्तच्चिकित्सा च॥नवभिर्विषतंत्रं नाम षष्ठमंगं ॥ यत्र स्थावरजंगमभेदेन द्विविधं विषं सविस्तरं निरूपितं ॥ एकेनाध्यायेन सप्तमं रसायनमंगं॥ यत्रोक्तप्रयोगैर्जरावलीपलितनाशो भवति बलाधानं स्मृत्युद्रेकश्च भवति ॥ पंचाशत्तमेनांतिमेनाध्यायेन वाजीकरणमष्टममंगं व्याख्यातं यदीयौषधप्रयोगाः शुक्रवृद्धिं स्त्रीरमणे च शक्तिं ददति ॥ एवं षड्भिः स्थानैःपंचाशदधिकशताध्यायात्मकमष्टांगसंग्रहं नाम तंत्रं समुल्लसति ॥

ग्रंथस्यास्य संशोधनार्थं वेदशास्त्रसंपन्नानां माटे इत्युपाव्हानां बालशास्त्रिणां समग्रमेकं संग्रहपुस्तकं पुण्यपत्तनादानीतम् ॥ तथा परलोकनिवासिनां निरंतरोपाव्हानां

# उपोद्घातः

गोविंदशास्त्रिणां समग्रं पुस्तकं जनस्थानादानीतम् तयोर्बहूपयोगोजातः तथाच सर्वांगसुंदराव्याख्यासहितस्याष्टांगहृदयस्य तथा हेमाद्रिव्याख्यायास्तथा चरकसुश्रुतयोश्चोपयोगोजातः ॥ पुस्तकसंशोधनसमये देवधरकुलोत्पन्नस्य भिषजः कृष्णशास्त्रिणस्तथा देवोपनाम्नो विदुषो मनोहरशर्मणो ऽपि सम्यक्साहाय्यं जातं ॥ राजदत्तरावबहादुरपदवीनामधारिणां फ० क्का० स० जज्जइत्यधिकारवतां उमयाशंकरतनुजानां लालशंकरशर्मणां । तथा राजदत्तरावसाहेब इति पदव्या सी. एस. आयइति पदव्या च विराजमानानां मंडलिकोपाव्हानां नारायणसूनुविश्वनाथशर्मणां महताऽऽश्रयेण कृपया चैतद्ग्रंथमुद्रणं समाप्तिमगमत् ॥ पुस्तकग्राहकाणामपि महत्साहाय्यं जातं तेषांनामावलिरपि लिखिताऽस्त्यग्रे ॥

अस्मिन् ग्रंथेऽन्यपुस्तकदृष्टपाठांतराणि तत्तत्पत्राधो लिखितानि ॥क्वचित्क्वचित्स्थले ऽरुणदत्तहेमाद्रिव्याख्यानुरोधेनामरमेदिनीकारकोशाद्यनुरोधेन च संक्षिप्तटिप्पण्यपिलिखिताऽस्ति तथा यत्र क्वचित्स्थले ग्रंथसंगतिः समीचीना न दृष्टा तत्रैवं* चिन्हं कृतमस्ति ॥ भ्रमप्रमादादिनायद्यशुद्धादिकं क्वचित्स्यात्तत्सुधियः क्षंतुमर्हंति ॥ संति हि सर्वसहाः सूरयइत्यलं विस्तरेणेति शम् ॥

गणेशशर्मा

श्री

# अष्टांगसंग्रहपूर्वभागस्यानुक्रमणिका


| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| | **१ सूत्रस्थाने** | |
| १ | आयुष्कामीयाध्यायः | १ |
| २ | शिष्योपननीयाध्यायः | ५ |
| ३ | दिनचर्याध्यायः | ७ |
| ४ | ऋतुचर्याध्यायः | १४ |
| ५ | रोगानुत्पादनीयाध्यायः | १८ |
| ६ | द्रवद्रव्यविज्ञानीयाध्यायः | २० |
| ७ | अन्नस्वरूपविज्ञानीयाध्यायः | २९ |
| ८ | अन्नरक्षाविध्यध्यायः | ४४ |
| ९ | विरुद्धान्नविज्ञानीयाध्यायः | ५५ |
| १० | अन्नपानविध्यध्यायः | ६४ |
| ११ | मात्राशितीयाध्यायः | ६९ |
| १२ | विविधौषधविज्ञानीयाध्यायः | ७४ |
| १३ | अग्र्यसंग्रहाध्यायः | ८० |
| १४ | शोधनादिगणसंग्रहाध्यायः | ८३ |
| १५ | महाकषायसंग्रहाध्यायः | ८६ |
| १६ | विविधगणसंग्रहाध्यायः | ८९ |
| १७ | द्रव्यादिविज्ञानीयाध्यायः | ९२ |
| १८ | रसभेदीयाध्यायः | ९६ |
| १९ | दोषादिविज्ञानीयाध्यायः | १०० |
| २० | दोषभेदीयाध्यायः | १०५ |
| २१ | दोषोपक्रमणीयाध्यायः | ११० |
| २२ | रोगभेदीयाध्यायः | ११४ |
| २३ | भेषजावचारणीयाध्यायः | ११९ |
| २४ | द्विविधोपक्रमणीयाध्यायः | १२४ |
| २५ | स्नेहविध्यध्यायः | १२८ |
| २६ | स्वेदविध्यध्यायः | १३२ |
| २७ | वमनविरेचनविध्यध्यायः | १३६ |
| २८ | बस्तिविध्यध्यायः | १४४ |
| २९ | नस्यविध्यध्यायः | १५१ |
| ३० | धूमपानविध्यध्यायः | १५८ |
| ३१ | गंडूषादिविध्यध्यायः | १६० |
| ३२ | आश्चोतनांजनविध्यध्यायः | १६३ |
| ३३ | तर्पणपुटपाकविध्यध्यायः | १६५ |
| ३४ | यंत्रशस्त्रविध्यध्यायः | १६७ |
| ३५ | जलौकोविध्यध्यायः | १७३ |
| ३६ | सिराव्यधविध्यध्यायः | १७५ |
| ३७ | शल्याहरणविध्यध्यायः | १८० |
| ३८ | शस्त्रकर्मविध्यध्यायः | १८४ |
| ३९ | क्षारकर्मविध्यध्यायः | १८९ |
| ४० | अग्निकर्मविध्यध्यायः | १९३ |
| | **२ शारीरस्थाने** | |
| १ | पुत्रकामीयशारीराध्यायः | १९५ |
| २ | गर्भावक्रांतिशारीराध्यायः | २०१ |
| ३ | गर्भोपचरणीयशारीराध्यायः | २०७ |
| ४ | गर्भव्यापच्छारीराध्यायः | २१३ |
| ५ | अंगविभागशारीराध्यायः | २१९ |
| ६ | सिराविभागशारीराध्यायः | २२७ |

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| ७ | मर्मविभागशारीराध्यायः | २३३ |
| ८ | प्रकृतिभेदीयशारीराध्यायः | २३७ |
| ९ | विकृतांगविज्ञानीयशारीराध्यायः | २४२ |
| १० | विकृतेहाविज्ञानीयशारीराध्यायः | २४५ |
| ११ | विकृतव्याधिविज्ञानीयशारीराध्यायः | २४७ |
| १२ | दूतादिविज्ञानीयशारीराध्यायः | २५० |

## ३ निदानस्थाने

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| १ | सर्वरोगनिदानाध्यायः | २५६ |
| २ | ज्वरनिदानाध्यायः | २६० |
| ३ | रक्तपित्तकासनिदानाध्यायः | २६६ |
| ४ | श्वासहिध्मानिदानाध्यायः | २६९ |
| ५ | राजयक्ष्मादिनिदानाध्यायः | २७० |
| ६ | मदात्ययादिनिदानाध्यायः | २७४ |
| ७ | अर्शोनिदानाध्यायः | २७६ |
| ८ | अतीसारग्रहणीरोगनिदानाध्यायः | २८१ |
| ९ | मूत्राघातनिदानाध्यायः | २८१ |
| १० | प्रमेहनिदानाध्यायः | २८३ |
| ११ | विद्रधिवृद्धिगुल्मनिदानाध्यायः | २८६ |
| १२ | उदरनिदानाध्यायः | २९० |
| १३ | पांडुरोगकामलाशोफविसर्पनिदानाध्यायः | २९३ |
| १४ | कुष्ठकृमिनिदानाध्यायः | २९६ |
| १५ | वातव्याधिनिदानाध्यायः | २९९ |
| १६ | वातशोणितनिदानाध्यायः | ३०३ |

## अष्टांगसंग्रहोत्तरभागस्यानुक्रमणिका

## ४ चिकित्सास्थाने

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| | ज्वरचिकित्सिताध्यायः | १ |
| २ | जीर्णज्वरचिकित्सिताध्यायः | ७ |
| ३ | रक्तपित्तचिकित्सिताध्यायः | १५ |
| ४ | कासचिकित्सिताध्यायः | १९ |
| ५ | क्षतक्षयकासचिकित्सिताध्यायः | २४ |
| ६ | श्वासहिध्माचिकित्सिताध्यायः | ३२ |
| ७ | राजयक्ष्मचिकित्सिताध्यायः | ३६ |
| ८ | छर्दिहृद्रोगतृष्णाचिकित्सिताध्यायः | ४३ |
| ९ | मदात्ययादिचिकित्सिताध्यायः | ४८ |
| १० | अर्शसांचिकित्सिताध्यायः | ५६ |
| ११ | अतिसारचिकित्सिताध्यायः | ६६ |
| १२ | ग्रहणीदोषचिकित्सिताध्यायः | ७२ |
| १३ | मूत्राघातचिकित्सिताध्यायः | ७७ |
| १४ | प्रमेहचिकित्सिताध्यायः | ८२ |
| १५ | विद्रधिवृद्धिचिकित्सिताध्यायः | ८६ |
| १६ | गुल्मचिकित्सिताध्यायः | ८९ |
| १७ | उदरचिकित्सिताध्यायः | ९५ |
| १८ | पांडुरोगचिकित्सिताध्यायः | १०१ |
| १९ | श्वयथुचिकित्सिताध्यायः | १०६ |
| २० | विसर्पचिकित्सिताध्यायः | १०८ |
| २१ | कुष्ठचिकित्सिताध्यायः | ११० |
| २२ | श्वित्रकृमिचिकित्सिताध्यायः | १२१ |
| २३ | वातव्याधिचिकित्सिनाध्यायः | १२४ |
| २४ | वातशोणितचिकित्सिताध्यायः | १३२ |

## ५ कल्पस्थाने

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| १ | वमनकल्पाध्यायः | १३७ |
| २ | विरेचनकल्पाध्यायः | १४१ |
| ३ | वमनविरेचनव्यापत्सिद्ध्यध्यायः | १४६ |
| ४ | बस्तिकल्पाध्यायः | १५० |
| ५ | सिद्धबस्तिकल्पाध्यायः | १५४ |

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| ६ | बस्तिव्यापत्सिद्धिकल्पाध्यायः | १५८ |
| ७ | स्नेहव्यापदिकासिध्यध्यायः | १६३ |
| ८ | भेषजकल्पाध्यायः | १६६ |

## ६ उत्तरस्थाने

| अ०क्रमांकाः | अ० नामानि | पृष्ठांकाः |
|---|---|---|
| १ | बालोपचारणीयाध्यायः | १७० |
| २ | बालामयप्रतिषेधाध्यायः | १७७ |
| ३ | बालग्रहविज्ञानाध्यायः | १८७ |
| ४ | बालग्रहप्रतिषेधाध्यायः | १८९ |
| ५ | स्नपनविध्यध्यायः | १९४ |
| ६ | प्रत्येकग्रहप्रतिषेधाध्यायः | १९७ |
| ७ | भूतविज्ञानाध्यायः | २०३ |
| ८ | भूतप्रतिषेधाध्यायः | २०८ |
| ९ | उन्मादप्रतिषेधाध्यायः | २१२ |
| १० | अपस्मारप्रतिषेधाध्यायः | २१६ |
| ११ | वर्त्मरोगविज्ञानाध्यायः | २२० |
| १२ | वर्त्मरोगप्रतिषेधाध्यायः | २२२ |
| १३ | संधिसितासितरोगविज्ञानाध्यायः | २२५ |
| १४ | संधिसितासितरोगप्रतिषेधाध्यायः | २२७ |
| १५ | दृष्टिरोगविज्ञानाध्यायः | २३२ |
| १६ | तिमिरप्रतिषेधाध्यायः | २३४ |
| १७ | लिंगनाशप्रतिषेधाध्यायः | २४० |
| १८ | सर्वगताक्षिरोगविज्ञानाध्यायः | २४३ |
| १९ | अभिष्यंदप्रतिषेधाध्यायः | २४५ |
| २० | अक्षिपाकपिल्लप्रतिषेधाध्यायः | २५१ |
| २१ | कर्णरोगविज्ञानाध्यायः | २५४ |
| २२ | कर्णरोगप्रतिषेधाध्यायः | २५५ |
| २३ | नासारोगविज्ञानाध्यायः | २६३ |
| २४ | नासारोगप्रतिषेधाध्यायः | २६४ |
| २५ | मुखरोगविज्ञानाध्यायः | २६८ |
| २६ | मुखरोगप्रतिषेधाध्यायः | २७२ |
| २७ | शिरोरोगविज्ञानाध्यायः | २७९ |
| २८ | शिरोरोगप्रतिषेधाध्यायः | २८१ |
| २९ | व्रणविभक्तिविज्ञानीयाध्यायः | २८७ |
| ३० | व्रणप्रतिषेधाध्यायः | २९१ |
| ३१ | सद्योव्रणविज्ञानप्रतिषेधाध्यायः | २९६ |
| ३२ | भंगविज्ञानप्रतिषेधाध्यायः | ३०० |
| ३३ | भगंदरविज्ञानप्रतिषेधाध्यायः | ३०५ |
| ३४ | ग्रंथ्यर्बुदश्लीपदापचीनाडीवि० | ३०८ |
| ३५ | ग्रंथ्यादिप्रतिषेधाध्यायः | ३१० |
| ३६ | क्षुद्ररोगविज्ञानाध्यायः | ३१४ |
| ३७ | क्षुद्ररोगप्रतिषेधाध्यायः | ३१७ |
| ३८ | गुह्यरोगविज्ञानाध्यायः | ३१९ |
| ३९ | गुह्यरोगप्रतिषेधाध्यायः | ३२२ |
| ४० | विषप्रतिषेधाध्यायः | ३२९ |
| ४१ | सर्पविषविज्ञानाध्यायः | ३४१ |
| ४२ | सर्पविषप्रतिषेधाध्यायः | ३४६ |
| ४३ | कीटविषविज्ञानप्रतिषेधाध्यायः | ३५२ |
| ४४ | लूताविषविज्ञानप्रतिषेधाध्यायः | ३५८ |
| ४५ | प्रत्येकलूताविषप्रतिषेधाध्यायः | ३६२ |
| ४६ | मूषिकालर्कविषविज्ञानप्रतिषेधाध्यायः | ३६६ |
| ४७ | विषोपद्रवप्रतिषेधाध्यायः | ३७० |
| ४८ | विषोपयोगीयाध्यायः | ३७५ |
| ४९ | रसायनाध्यायः | ३७९ |
| ५० | वाजीकरणाध्यायः | ४०९ |


समाप्तेयमनुक्रमणिका

॥ श्री ॥

# अष्टांगसंग्रहे

## सूत्रस्थानम् १

श्रीगणेशाय नमः ॥ श्रीधन्वंतरये नमः ॥ श्रीसीतारामचंद्राय नमः ॥ श्रीशं वंदे ॥ श्रीगुरुभ्यो नमः ॥ तृष्णादीर्घमसद्विकल्पशिरसं प्रद्वेषचंचत्फणं कामक्रोधविषं वितर्कदशनं रागप्रचंडेक्षणं ॥ मोहास्यं स्वशरीरकोटरशयं चित्तोरगं दारुणं प्रज्ञामंत्रबलेन यः शमितवान्बुद्धाय तस्मै नमः ॥ रागादिरोगाः सहजाः समूला येनाशु सर्वे जगतोऽप्यपास्ताः ॥ तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीन् ॥ अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ आयुःकामयमानेन धर्मार्थसुखसाधनं ॥ आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ आयुर्वेदामृतं सार्थं ब्रह्मा बुध्वा सनातनं ॥ ददौ दक्षाय' सोऽश्विभ्यां' तौ शतक्रतवे 'ततः ॥ धर्मार्थकाममोक्षाणां विघ्नकारिभिरामयैः ॥ नरेषु पीड्यमानेषु पुरस्कृत्य पुनर्वसुं ॥ धन्वंतरिभरद्वाजनिमिकाश्यपकश्यपाः ॥ महर्षयो महात्मानस्तथाऽलंबायनादयः ॥ शतक्रतुमुपाजग्मुः शरण्यममरेश्वरं' ॥ तान्दृष्ट्वैव सहस्राक्षो निजगाद यथागमं ॥ आयुषः पालकं वेदमुपवेदमथर्वणः ॥ कायबालग्रहोर्ध्वांग[1]शल्य[2]दंष्ट्रा[3]जरा[4]वृषैः ॥ गतमष्टांगतां' पुण्यं बुबुधे यं पितामहः' ॥ गृहीत्वा ते तमाम्नायं प्रकाश्य च परस्परं ॥ आययुर्मानुषं लोकं मुदिताः परमर्षयः' ॥ स्थित्यर्थमायुर्वेदस्य ते ऽथ तंत्राणि चक्रिरे' ॥ कृत्वा ऽग्निवेशहारीतभेडमांडव्यसुश्रुतान् ॥ कराळार्क-

---

१ आत्रेयं २ ३ शल्यदंष्ट्राशब्दौ व्रणविषमात्रोपलक्षणौ ४ स्त्रीप्रसंगित्वं

श्च सच्छिष्यान् ग्राहयामासुरादृताः[1] ॥ स्वंस्वं तंत्रं ततस्तेऽपि चक्रुस्ता-
नि कृतानि च ॥ गुरून् संश्रावयामासुः सर्षिसंघान्सुमेधसः ॥ तैः प्रश-
स्तानि तान्येषां प्रतिष्ठां भुवि लेभिरे[1] ॥ तेषामेकैकमप्यापि समस्तव्या-
धिसाधने ॥ प्रतितंत्राभियोगे तु पुरुषायुषसंक्षयः ॥ भवत्यध्ययनेनैव
यस्मात्प्रोक्तः पुनःपुनः ॥ तंत्रकारैः स एवार्थः क्वचित्कश्चिद्विशेषतः
॥ तेऽर्थप्रत्यायनपरा वचने यत्नवादृताः[1] ॥ सर्वतंत्राण्यतः प्रायः सं-
हृत्याष्टांगसंग्रहः ॥ अस्थानविस्तराक्षेपपुनरुक्तादिवर्जितः ॥ हे-
तुलिंगौषधस्कंधत्रयमात्रनिबंधनः ॥ विनिगूढार्थतत्त्वानां प्रदेशानां प्र-
काशकः ॥ स्वान्यतंत्रविरोधानां भूयिष्ठं विनिवर्तकः ॥ युगानुरूप-
संदर्भो विभागेन करिष्यते[1] ॥ नित्योपयोगेऽदुर्बोधं सर्वांगव्यापि भा-
वतः ॥ संगृहीतं विशेषेण यत्र कायचिकित्सितं ॥ न मात्रामात्र
मप्यत्र किंचिदागमवर्जितं ॥ तेऽर्थाः स ग्रंथबंधश्च संक्षेपाय
क्रमोऽन्यथा[1] ॥ वायुः पित्तं कफश्चेति त्रयोदोषाः समासतः ॥ प्रत्येकं
ते त्रिधा वृद्धिक्षयसाम्यविभेदतः ॥ उत्कृष्टमध्याऽल्पतया त्रिधा वृ-
द्धिक्षयावपि ॥ विकृताविकृता देहं घ्नंति ते वर्द्धयंति च ॥ ते व्यापिनो-
ऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ वयोऽहोरात्रिभुक्तानां तेंऽतम-
ध्यादिगाः क्रमात् ॥ तैर्भवेद्विषमस्तीक्ष्णोमंदश्चाग्निः समैः समः ॥
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ॥ शुक्रार्तवस्थै जन्मादौ
विषेणेव विषकृमेः ॥ तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ॥
समधातुः समस्तासु श्रेष्ठा निंद्या द्विदोषजाः[1] ॥ तत्र रूक्षो लघुः शी-
तः खरः सूक्ष्मश्चलो ऽनिलः ॥ पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं
द्रवं ॥ स्निग्धः शीतो गुरुर्मंदः श्लक्ष्णो मृत्स्नः स्थिरः कफः ॥ संसर्गः
सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ तौ षोढा दशधा चोक्तावुत्कर्षा-
दिविकल्पनात्[1] ॥ रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः ॥ सप्त

१ जन्म आदाविति पदद्वयं २ सवाक्यार्थपदार्थे

तृष्णा[1] मलो मूत्रशकृत्स्वेदादयोऽपि च ॥ रसादिस्थेषु दोषेषु व्याध-यः संभवंति ये ॥ तज्जानित्युपचारेण तानाहुर्घृतदाहवत् ॥ प्रीणनं जी-वनं लेपः स्नेहो धारणपूरणे ॥ गर्भोत्पादश्च कर्माणि धातूनां क्रमशो विदुः ॥ शरीरं धारयंत्येते धात्वाहाराश्च सर्वदा ॥ वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ॥ रसाः स्वाद्वम्ललवणतिक्तोषणकषाय-काः ॥ षट् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥ तत्राद्या मारुतं घ्नंति त्रयस्तिक्तादयः कफं ॥ कषायतिक्तमधुराः पित्तमन्ये तु कुर्व-ते ॥ शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ उष्णशीतगुणो-त्कर्षात्तत्र वीर्यं द्विधा स्मृतं ॥ त्रिधा विपाको द्रव्यस्य स्वाद्वम्लक-टुकात्मकः ॥ गुरुमंदहिमस्निग्धश्लक्ष्णसांद्रमृदुस्थिराः ॥ गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः ॥ इंद्रियार्थो व्यवायी च विका-षी चापरे गुणाः ॥ व्यवायी देहमखिलं व्याप्य पाकाय कल्पते ॥ विकाषी विकषन्नेव संधिबंधान्विमुंचति ॥ सरतीक्ष्णप्रकर्षौ तु कैश्चि-त्तौ परिकल्पितौ ॥ सत्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥ कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ॥ सम्यग्योगश्च विज्ञे-यो रोगारोग्यैककारणं ॥ रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ॥ निजागंतुविभागेन रोगाश्च द्विविधा मताः ॥ तेषां कायमनोभेदादधि-ष्ठानमपि द्विधा ॥ रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥ द-र्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणं ॥ रोगं निदानप्राग्रूपलक्ष-णोपशयाप्तिभिः ॥ भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ जांगलं वा-तभूयिष्ठमनूपं तु कफोल्बणं ॥ साधारणं सममलं त्रिधा भूदेशमा-दिशेत् ॥ क्षणादिर्व्याध्यवस्था च कालो भैषज्ययोगकृत् ॥ शोध-नं शमनं चेति समासादौषधं द्विधा ॥ शरीरजानां दोषाणां क्रमेण

---

१ तिक्तः किराततिक्तादिः ( कडूइति भाषायां ) २ उषणः मरीचादिः ( तिखट इ० भा० )

३ लघुतीक्ष्णोष्णरूक्षखरद्रवकठिनसरस्थूलपिच्छिला इति [illegible]

परमौषधं ॥ बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥ धीधैर्यात्मादि-
विज्ञानं मनोदोषौषधं परं ॥ तंत्रस्यास्य परं चातो वक्ष्यते ऽध्यायसं-
ग्रहः ॥ आयुष्कामीयशिष्यार्थदिनर्तुव्याध्यसंभवाः ॥ द्रवान्नज्ञान
संरक्षाविरुद्धान्नान्नपानिकाः ॥ मात्राशितौषधज्ञानश्रेष्ठशुध्यादिसं-
ग्रहाः ॥ महाकषायविविधद्रव्यादिरसभेदकाः ॥ दोषादिज्ञानत-
द्भेदतत्क्रियारोगभेषजं ॥ चिकित्सास्नेहनस्वेदशुध्यास्थापननावनं
॥ धूमगंडूषदृक्सेकतृप्तियंत्रजलौकसः ॥ सिराविधिः शल्यविधिः
शस्त्रक्षाराग्निकर्मकाः ॥ चत्वारिंशदिमेऽध्यायाः सूत्रं शारीरमुच्यते ॥
पुत्रार्थगर्भावक्रांतिचर्याव्यापच्छरीरजाः ॥ सिराममर्मप्रकृत्याख्याविं-
कृतांगेहितामयाः ॥ सदूता द्वादशाध्याया निदानं सार्वरोगिकं ॥
ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणां ॥ मूत्राघातप्रमेहाणां
विद्रध्याद्युदरस्य च ॥ पांडुकुष्ठानिलार्त्तानां वातास्रस्य च षोडश ॥
चिकित्सा च ज्वरस्यास्रकासयोः श्वासयक्ष्मणोः ॥ वमौ मदात्ययेऽर्शः
सु विशि द्वौ द्वौ च मूत्रिते ॥ विद्रधौ गुल्मजठरपांडुशोफविसर्पिषु ॥
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितं ॥ चतुर्विंशतिरध्यायाः
कल्पसिद्धिरतःपरं ॥ कल्पो वमेर्विरेकस्य तत्सिद्धि र्बस्तिकल्पना॥
कल्पसिद्धिश्च बस्तीनां सिद्धिर्बस्त्यनुवासयोः॥द्रव्यकल्पो ऽष्टमः स्था
नमतउत्तरमुत्तरं ॥ बालोपचरणे व्याधिग्रहज्ञाननिषेधने ॥ स्नाने पृथ-
ग्ग्रहे भूते द्वावुन्मादे स्मृतिक्षये ॥ वर्त्मसंधिगतौ द्वौ द्वौ दृक्तमोलिं-
गनाशिषु ॥ सर्वदृक्स्पंददृक्पाके कर्णनासामुखेषु च ॥ मूर्ध्नि व्रणे
तथा द्वौ द्वौ सद्योभंगे भगंदरे ॥ ग्रंथ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथ-
ग्द्वयं ॥ विषे द्वौ भुजगे कीटे द्वौ च लूतासु मूषके ॥ विषे विषोप
योगे च तथा ऽध्यायो रसायने ॥ वाजीकरणमुद्दिश्य पंचाशोऽष्टां-
गपूरणः ॥ पञ्चाशदध्यायशतं षड्भिः स्थानैः समीरितं ॥ इत्यायुष्का-
मीयो नाम प्रथमोऽध्यायः ॥ १ ॥

॥ अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः ॥ गुरुभ-
क्तो ऽभियुक्तो ऽतियुक्तो धीस्मृतिपाटवैः ॥ ऋज्वास्यनासानयनस्त-
नुस्निग्धनखच्छविः ॥ ब्रह्मचारी जितद्वंद्वो धीरः सुचरितः स्थिरः ॥
षण्मासानुषितः शक्तो लज्जाशौचकलान्वितः ॥ शिष्योऽध्याप्यो ग-
तो यावदंतं तंत्रार्थकर्मणां ॥ नाकालविद्युत्स्तनिते भूकंपे राहुदर्श-
ने ॥ पंचदश्यामचंद्रायां परोक्षे वा गुरोः पठेत् ॥ नाविच्छिन्नपदं
नातिमंदं नात्युच्चनीचकैः ॥ हितान्यतममाचार्यं पर्युपासीत राजव-
त् ॥ शयीत सुप्तएवास्मिन्नुत्तिष्ठेतास्य पूर्वतः ॥ न ब्रूयात्केवलं ना-
म न साध्वपि विनोदयेत् ॥ अभेद्योऽनुद्धतः स्तब्धः सूरतः प्रियद-
र्शनः ॥ बहुश्रुतः कालवेदी ज्ञातग्रंथो ऽर्थशास्त्रवित् ॥ अनाथान्
रोगिणो यश्च पुत्रवत्समुपाचरेत् ॥ गुरुणा समनुज्ञातः स भिषक्छ-
ब्दमश्नुते ॥ यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ स मुह्यत्यातु-
रं प्राप्य प्राप्य भीरुरिवाहवं ॥ यः पुनः कुरुते कर्म धाष्ट्यार्च्छास्त्र-
विवर्जितः ॥ स सत्सु गर्हामाप्नोति वधं चर्च्छति राजतः ॥ हेतौ लिं-
गे प्रशमने रोगाणामपुनर्भवे ॥ ज्ञानं चतुर्विधं यस्य स राजार्हो भि-
षक्तमः ॥ शस्त्रं शास्त्राणि सलिलं गुणदोषप्रवृत्तये ॥ पात्रापे-
क्षीण्यतः प्रज्ञां बाहुश्रुत्येन बृंहयेत् ॥ प्रदीपभूतं शास्त्रं हि दर्शनं वि-
पुला मतिः ॥ ताभ्यामतः सुयुक्ताभ्यां चिकित्सन्नापराध्यति ॥ आ-
हूतएव यो याति सुवेषः सुनिमित्ततः ॥ गत्वाऽऽतुरार्थादन्यत्र न नि-
धत्ते मनः क्वचित् ॥ व्याधीन्परीक्षते सम्यङ्निदानादिविशेषतः ॥
गोपणीयां च तदार्तौ न प्रकाशयते बहिः ॥ सहसा न च तस्याऽ-
पि क्रियाकालमहापयन् ॥ जानाति मोक्षचरितुं स वैद्यः सिद्धिम-
श्नुते ॥ नाददीतामिषं स्त्रीभ्यस्तदध्यक्षे पराङ्मुखे ॥ नाभिभाष रह-

---

१ कपालुः सूरतः समइत्यमरः २ युद्धं ३ निंदां ४ च ऋच्छतीति [illegible] ५ गोपनीया-
मितिपाठः ६ आमिषं भोग्यवस्तुनीति कोशः

सि स्थानं परिहासं च वर्जयेत् ॥ आर्त्तं च नृपसद्वैद्यैर्द्विष्टं तद्वेषि-णं द्विषं ॥ चंडं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनं ॥ हीनोपकरणं व्य-ग्रमविधेयं गतायुषं ॥ जिजीविषुर्व्याधितोऽपि पूर्वोक्तगुणवर्जितान् ॥ क्रियाविक्रयिणो वैद्यान्मृत्योरग्रेसरा हि ते॥ भिषक् द्रव्याण्युपस्था-ता रोगी पादचतुष्टयं ॥ चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणं ॥ दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक्॥ बहुकल्पं बहुगुणं संप-न्नं योग्यमौषधं ॥ अनुरक्तः शुचिर्दक्षो बुद्धिमान्परिचारकः[1] ॥ आ-ढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥ यद्वैद्ये विगुणे पादा गु-णवंतोऽप्यनर्थकाः ॥ सपादहीनानप्यार्तान् गुणवान् यश्च यापयेत् ॥ चिकित्सायास्तमेवातः प्रधानं कारणं विदुः[1] ॥ साध्योऽसाध्यइति व्याधिर्द्विधा तौ तु पुनर्द्विधा ॥ सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चा-नुपक्रमः ॥ सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ॥ अमर्मगोऽ-ल्पहेत्वग्ररूपरूपोऽनुपद्रवः ॥ अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि ॥ ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ॥ सुखसाध्यः सुखोपायः का-लेनाल्पेन साध्यते ॥ कृच्छ्रैरुपायैः कृच्छ्रस्तु महद्भिश्च चिरेण च ॥ असाध्यलिंगसंकीर्णस्तथा शस्त्रादिसाधनः ॥ शेषत्वादायुषः पथ्यैर्या-प्यः प्रायो विपर्यये ॥ दत्त्वाऽल्पं सुखमल्पेन हेतुना स प्रतन्यते ॥ या-ति नाशेषतां रोगः कर्मजो नियतायुषः ॥ प्रपतन्निव विष्कंभैर्धार्यतेऽ ग्रातुरो हितैः ॥ परोऽसाध्यः क्रियाः सर्वाः प्रत्याख्येयो ऽतिवर्तते ॥ तस्मादुपेक्ष्यएवासौ स्थितोऽत्यंतविपर्यये ॥ भ्रममोहारतिकरो दृष्ट-रिष्टोऽक्षनाशनः[1] ॥ व्याधिं पुरा परीक्ष्यैवमारभेत ततः क्रियां ॥ स्वार्थविद्यायशोहानिमन्यथा ध्रुवमाप्नुयात् ॥ साध्ययोरपि संयोगो ऽबलिनो यात्यसाध्यतां ॥ विद्यादसाध्यमेवातः साध्यासाध्यसमाग-मं ॥ नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यतां॥ पादाप-

१ परिचारकः २ गुरोःसकाशाद्गृहीतशास्त्रार्थः

चाराद्वैवाच यांत्यवस्थांतरं गदाः ॥ वरमाशीविषविषं क्वथितं ताम्रमयोऽपि वा ॥ उपयुंजीत न त्वार्त्तादामिषं कृपणाज्जनात् ॥ परोभूतदयाधर्म इत्यार्त्तेषु भिषग्वरः ॥ वर्त्तते यस्तु सिद्धार्थः स सर्वमतिवर्त्तते ॥ इति शिष्योपनयनीयो नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥ ब्राह्मे मुहूर्त्तउत्तिष्ठेज्जीर्णाजीर्णे निरूपयन् ॥ रक्षार्थमायुषः स्वस्थो जातवेगः समुत्सृजेत् ॥ उदङ्मुखो मूत्रशकृद्दक्षिणाभिमुखो निशि ॥ वाचं नियम्य प्रयतः संवीतांगोऽवगुंठितः ॥ प्रवर्त्तयेत्प्रचलितं नतु यत्नादुदीरयेत् ॥ नामेध्यमार्गमृद्भस्मगोस्थानाकीर्णगोमये ॥ पुरांतिकादिवल्मीकरम्योत्कृष्टचितिद्रुमे ॥ न नारीपूज्यगोर्केंदुवाय्वन्नाग्निजलं प्रति ॥ न चांतिरस्कृत्य महीं भयाशक्त्योस्तु कामतः ॥ न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयं ॥ निःशल्यादुष्टमृत्पिंडीपरिमृष्टमलायनः ॥ अभ्युद्धृताभिः शुचिभिरद्भिर्मृद्भिश्च योजयेत् ॥ लेपगंधापहं शौचमनुत्पातितबिंदुभिः[1] ॥ स्पृष्ट्वा धातून्मलानश्रु दृशं केशनखांश्च्युतान् ॥ स्नात्वा भोक्तुमना भुक्त्वा सुप्त्वा क्षुत्वा सुरार्चने ॥ रथ्यामाक्रम्य चाचामेदुपविष्टउदङ्मुखः ॥ प्राङ्मुखो वा विविक्तस्थो न बहिर्जानु नान्यदृक् ॥ अजल्पन्नुत्तरासंगी स्वच्छैरंगुष्ठमूलगैः ॥ नोद्धृतैर्नानतो नोर्ध्वं नाग्निपक्वैर्नपूतिभिः ॥ न फेनबुद्बुदक्षारैर्नैकहस्तार्पितैर्जलैः ॥ नार्द्रैकपाणिर्नामेध्यहस्तपादो न शब्दवत्[2] ॥ वटासनार्कखदिरकरंजकरवीरजं ॥ सर्जारिमेदापामार्गमालतीककुभोद्भवं ॥ कषायतिक्तकटुकं मूलमन्यदपीदृशं ॥ विज्ञातवृक्षं क्षुण्णाग्रमृज्वग्रंथि सुभूमिजं ॥ कनीन्यग्रसमस्थौल्यं सुकूर्चं द्वादशांगुलं ॥ प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दंतधावनं ॥ व्योष्यत्रिवर्गत्रितयक्षौद्राक्तेन च घर्षयेत् ॥ शनैस्तेन ततो दंतान्

१ सर्वविषं २ दीनात् ३ रात्रेरुपान्त्योमुहूर्तोब्राह्मस्तस्मिन् ४ नचापरिष्कस्येतिपाठः ५ व्योष्यं कटु त्रिवर्गत्रितयं त्रिकटुत्रिफलात्रिजातकानि

दंतमांसान्यबाधयन् ॥ लिखेदनुसुखं जिव्हां जिव्हानिर्लेखनेन च ॥ तथाऽस्य मलवैरस्यजिव्हागंधाऽऽस्यदंतजाः ॥ रुचिवैशद्यलघुता न भवंति भवंति च ॥ नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ॥तृष्णाऽऽस्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ नैवश्लेष्मातकारिष्टबिभीतधवधन्वजान् ॥ बिल्वबभ्भुलनिर्गुंडीशिग्रुतिल्वकतिंदुकान् ॥ कोविदारशमीपीलुपिप्पलेंगुदगुग्गुलून् ॥ पारिभद्रकभम्लीकामोचक्यौ शाल्मलीं शणं ॥ स्वाद्वम्ललवणं शुष्कं सुषिरं पूतिपिच्छिलं ॥ पालाशमासनं दंतधावनं पादुके त्यजेत् ॥ दंतान्पूर्वमधो घर्षेत्मातः सिंचेच्च लोचने ॥ तोयपूर्णमुखो ग्रीष्मशरदोः शीतवारिणा ॥ प्रणम्य देवान्वृद्धांश्च मंगलाष्टशतं शुभं ॥ शृण्वन्कांचनविन्यस्तं सर्पिः पश्येदनंतरं ॥ सौवीरमंजनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥ लोचने तेन भवतो मनोज्ञे सूक्ष्मदर्शने ॥ व्यक्तत्रिवर्णे विमले सुस्निग्धघनपक्ष्मणी ॥ चक्षुस्तेजोमयं तस्य विशेषात्श्लेष्मतो भयं ॥ योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थं रसांजनं ॥ अणुतैलं ततो नस्यं ततोगंडूषधारणं ॥ घनोन्नतप्रसन्नत्वक्स्कंधग्रीवाऽऽस्यवक्षसः॥ सुगंधिवदनाः स्निग्धनिःस्वना विमलेंद्रियाः ॥ निर्वलीपलितव्यंगा भवयुर्नस्यशीलिनः ॥ ओष्ठस्फुटनपारुष्यमुखशोषद्विजामयाः ॥ न स्युः स्वरोपघाताश्च स्नेहगंडूषधारणात् ॥ खदिरक्षीरिवृक्षारिमेदांबुकवलग्रहः ॥ अरोचकास्यवैरस्यमलपूतिप्रसेकजित् ॥ सुखोष्णोदकगंडूषैर्जायते वक्त्रलाघवं ॥ प्रायोगिकं ततो धूमं गंधमाल्यादि चाचरेत् ॥ धूमादस्योर्ध्वजत्रूत्था न स्युर्वातकफामयाः ॥ अंजनोत्क्लेशितं नस्यैः कवलैर्नावनेरितं ॥ धूमेन कवलोत्क्लिष्टं क्रमाद्वालकफंजयेत् गंधमाल्यादिकं वृष्यमलक्ष्मीघ्नं प्रसाधनं ॥ वासो न धारयेज्जीर्णं

---

१ मलवैरस्यादयोनभवंति रुच्यादयोभवंतिचेतिसंबंधः २ दूतादिविज्ञानीयशारीरोक्तं दधिमधुघृतादि

मलिनं रक्तमुल्बणं ॥ माल्यं[1] न लंबं न बहिर्न रक्तं जलजादृते ॥ नैव चान्येन विधृतं वस्त्रं पुष्पमुपानहौ ॥ रुचिवैशद्यसौगंध्यमिच्छन्वक्त्रेण धारयेत्॥जातीलवंगकर्पूरकंकोलकटुकैः सह॥तांबूलीनां किसलयं हृद्यं पूगफलान्वितं॥रक्तपित्तक्षतक्षीणरूक्षोत्कुपितचक्षुषां॥विषमूर्च्छामदार्तानामपथ्यं शोषिणां च तत् ॥ पथ्यं सुप्तोत्थिते भुक्ते स्नाते वांते च मानवे॥द्विपत्रमेकं पूगं च सचूर्णखदिरं चतत्॥उत्तिष्ठेत ततोऽस्यर्थमर्थेष्वर्थानुबंधिषु[2] ॥ निंदितं दीर्घमप्यायुरसन्निहितसाधनं ॥ कृषिं वणिज्यां गोरक्षामुपायैर्गुणिनं नृपं॥लोकद्वयाविरुद्धां च धनार्थी संश्रयेत्क्रियां॥ मुक्तवेगश्च गमनस्त्वमाहारसभास्त्रियः' ॥ पाणिनाऽऽलम्ब्य निष्क्रामेद्रत्नपूज्याज्यमंगलं ॥ सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥ निशि चात्ययिके कार्ये दंडी मौली सहायवान् ॥ प्रावृत्य पर्यटेद्रात्रौ न प्रावृत्य शिरो ऽहनि ॥ चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥ नाक्रमेच्छर्करालोष्टबलिस्नानभुवो न च ॥ मध्यान्हे संध्ययोरात्रावर्द्धरात्रे चतुष्पथं ॥ न सेवेत न शर्वर्यां वृक्षचैत्यान्न चत्वरं ॥ सूनाटवीशून्यगृहश्मशानानि[3] दिवाऽपि न ॥ न हुंकुर्याच्छिवं पूज्यं प्रशस्तान्मंगलानि च ॥ नापसव्यं परिक्रामेन्नेतराण्यनुदक्षिणं ॥ चतुष्पथं नमस्कुर्यात्प्रज्ञातांश्च वनस्पतीन् ॥ न व्यालव्याधिताशस्तैर्नादांतक्षुत्पिपासितैः ॥ न छिन्नपुच्छैर्नैकाक्षैर्गोपृष्ठेन च न व्रजेत् ॥ नातिभंगेऽतिसायं[4] वा न नभोमध्यगे रवौ ॥ नासन्निहितपानीयो नातितूर्णं न संततं ॥ न शत्रुणा नाविदितैर्नैको नाधार्मिकैः सह ॥ दद्याद्वर्त्माऽऽर्तवृद्धस्त्रीभारिचक्रि[5]द्विजन्मने ॥ स्नानभोजनपानानि बाह्येभ्यो नाचरेत्पुरः० ॥ नदीं तरेन्न बाहुभ्यां नाग्निस्कंधमभिव्रजेत् ॥ नारोहेद्विषमं

१ माल्यं कुसुमतत्स्रजोरितिमेदिनी ॥ २ अर्थो विषयार्थनयोर्धनकारणवस्तुष्विति मेदिनी ॥ ३ प्राणिवधस्थानं ४ प्रभातकाले ५ रथी

शैलं नावं संशयितां तरुं ॥ निपातयेन्नलोष्टेन न फलेन फलं द्रुमा-
त् ॥ न वार्यमाणः प्रविशेन्नाद्वारेण न चासने ॥ स्वयं तिष्ठेत्परगृहे यु-
क्तनिद्रं न बोधयेत् ॥ नाचरेत्पाणिवाक्पाददृङ्मेढ्रोदरचापलं ॥ त्रिः
पक्षस्य कचश्मश्रुनखरोमाणि वर्द्धयेत् ॥ न स्वहस्तेन दंतैर्वा[1] स्नानं
चानुसमाचरेत् ॥ अथ जातान्नपानेच्छो मारुतघ्नैः सुगंधिभिः ॥ यथ-
र्तुसंस्पर्शसुखैस्तैलैरभ्यंगमाचरेत् ॥ अभ्यंगो वातहा पुष्टिस्वप्नदार्ढ्य-
बृहत्वकृत् ॥ दग्धभग्नक्षतरुजाक्लमश्रमजरापहः ॥ रथाक्षचर्मघटव-
द्भवंत्यभ्यंगतो गुणाः ॥ स्पर्शने ऽभ्यधिको वायुः स्पर्शनं च त्वगा-
श्रयं ॥ त्वच्यश्च परमभ्यंगो यस्मात्तं शीलयेदतः ॥ शिरःश्रवणपादे-
षु तं विशेषेण शीलयेत् ॥ स केश्यः शीलितो मूर्ध्नि कपालेंद्रियतर्पणः ॥
हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणं ॥ पादाभ्यंगस्तु तत्स्थैर्यनिद्रादृ-
ष्टिप्रसादकृत् ॥ पादसुप्तिश्रमस्तंभसंकोचस्फुटनप्रणुत् ॥ वर्ज्यो ऽ-
भ्यंगः कफग्रस्तकृतसंशुध्यजीर्णिभिः ॥ शरीरायासजननं कर्म व्या-
याममुच्यते ॥ लाघवं कर्मसामर्थ्यं दीप्तो ऽग्निर्मेदसः क्षयः ॥ वि-
भक्तघनगात्रत्वं व्यायामादुपजायते ॥ वातपित्तामयी बालो वृद्धो ऽ
जीर्णी च तं त्यजेत् ॥ अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभो-
जिभिः ॥ शीतकाले वसंते च मंदमेव ततो ऽन्यदा ॥ तं कृत्वा ऽनुसु-
खं देहं मर्दयेच्च समंततः ॥ तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ॥
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ व्यायामजागरा-
ध्वस्त्रीहास्यभाष्यादिसाहसं ॥ गज सिंह इवाकर्षन् भजन्नति विनश्य-
ति ॥ उद्वर्त्तनं कफहरं मेदसः प्रविलायनं ॥ स्थिरीकरणमंगानां त्वक्प्र-
सादकरं परं ॥ दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदं ॥ कंडूमलश्रम-
स्वेदतंद्रातृड्दाहपाप्मजित् ॥ उष्णांबुनाऽधःकायस्य परिषेको बला-
वहः ॥ तेनैव चोत्तमांगस्य बलहृत्केशचक्षुषां ॥ नानाप्लुत्य शिरः

---

१ छेदयेत् ॥

स्नायान्नजले ऽल्पे न शीतले ॥ स्नानोदकावतरणस्वभान्नग्नो न चाचरेत् ॥ पंच पिंडाननुधृत्य न स्नायात्परवारिणि ॥ नात्मानमीक्षेत जले नतटस्थो जलाशयं ॥ न प्रतिस्फालयेदंबु पाणिना चरणेन वा ॥ स्नात्वा न मृज्याद्गात्राणि धुनुयान्न शिरोरुहान् ॥ न वसीतार्द्रएवाशु सोष्णीषे धौतवाससी ॥ न त्वंबरं पूर्वधृतं न च तैलवसे स्पृशेत् ॥ वासोऽन्यदन्यच्छयने निर्गमे देवतार्चने ॥ स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितं ॥ अन्नपानविधानेन भुंजीतान्नं विनात्ययात् ॥ अभिनंद्य प्रसन्नात्मा हुत्वा दत्वा च शक्तितः ॥ पाकं सजलमेकांते यथासुखमविब्रुवन् ॥ प्रयच्छेत्सर्वमुद्दिश्य पाचयेन्नान्नमात्मने ॥ नान्नमद्यान्मुमूर्षूणां मृतानां दुःखजीविनां ॥ स्त्रीजितक्लीबपतितक्रूरदुष्कृतकारिणां ॥ गणारिगणिकासत्रधूर्तानां पाणिकं च न ॥ नोत्संगे भक्षयेद्भक्ष्यान्जलं नांजलिना पिबेत् ॥ सर्वं च तिलसंबद्धं नाद्यादस्तमिते रवौ ॥ न भुक्तमात्रआयस्येन्ननिषिद्धं भजेत्सुखं ॥ धर्मोत्तराभिरर्थ्याभिः कथाभिस्त्रिगुणात्मभिः ॥ मध्यं दिनस्य गमयेदिष्टशिष्टसहायवान् ॥ न लोकभूपविद्विष्टैर्न संगच्छेत नास्तिकैः ॥ कलिवैररुचिर्नस्याद्धीरः संपद्विपत्तिषु ॥ श्रुतादन्यत्र संतुष्टस्तत्रैव च कुतूहली ॥ क्षांतिमान् दक्षिणो दक्षः सुसमीक्षितकार्यकृत् ॥ ह्रीमान् धीमान्महोत्साहः संविभागी प्रियातिथिः ॥ अक्षुद्रवृत्तिर्गंभीरः साधुराश्रितवत्सलः ॥ दाता पितृभ्यः पिंडस्य यष्टा होता कृपात्मकः ॥ अनुज्ञाता सुवार्तानां दीनानामनुकंपकः ॥ आश्वासकारी भीतानां कुद्धानामनुनायकः ॥ पूर्वाभिभाषी सुमुखः सुशीलः पूज्यपूजकः ॥ वित्तबंधुवयोविद्यावृत्तैः पूज्या यथोत्तरं ॥ आत्मद्रुहममर्यादं मूढमुज्झितसत्पथं ॥ सुतरामभ्युपेक्षेत नरकार्चिष्मदिंधनं ॥ धर्म्यमर्थ्यं प्रियं तथ्यं मितं पथ्यं वदेद्वचः ॥ नात्मानमवजानीयान्न स्तूयान्न च पीडयेत् ॥ न हीना

नवमन्येत वृत्यर्थांगबलश्रुतैः ॥ नारुंतुदःस्यान्न क्रूरो न तीक्ष्णो नोपतापवान् ॥ हेतावीर्षेन्न तु फले पापं पापेऽपि नाचरेत् ॥ परस्य दंडं नोद्यच्छेत्क्रुद्धोनैनं निपातयेत् ॥ अन्यत्र पुत्राच्छिष्याद्वाशासनार्हाद्धिताय सः ॥ नृत्यवादित्रगीतादिनोल्वणां नाचरेत्क्रियां ॥ प्रसिद्धकेशवाग्वेषशमसांत्वपरायणः ॥ ऊर्ध्वं नाभेः शरीरस्य स्पृशेन्नाधरवाससा ॥ न कुर्यान्मिथुनीभूय शौचंप्रति विलंबनं ॥ नासंवृतमुखो हास्यक्षवोद्गारविजृंभणं ॥ पाणिद्वयेन युगपत्कंडूयेन्नात्मनः शिरः ॥ वहेन्न भारं शिरसा युगपच्चाग्निवारिणी ॥ नासिकां न विकुष्णीयाद्दशनान्न विघट्टयेत् ॥ कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनं ॥ नाकार्ये न च कार्येऽपि मुखांगनखवादनं ॥ पादं पादेन नाक्रामेन्न कंडूयेन्न शौचयेत् ॥ न कांस्यभाजने तौ च नोपविष्टः प्रसारयेत् ॥ अभीक्ष्णं निर्मलान् दध्यान्नखपादमलाशयान् ॥ नासमिद्धमुपासीत हुताशं नैव चाशुचिः ॥ नानुवातं न विवृतो न क्लांतो नान्यमानसः ॥ धमेन्नास्येन न स्कंदेन्नाधःकुर्यान्न पादतः ॥ सततं न निरीक्षेत चलसूक्ष्माप्रियाणि च ॥ नाप्रशस्तं न विण्मूत्रं न दर्पणममार्जितं ॥ उद्यंतमस्तमायांतं तपंतं प्रतिमागतं ॥ उपरक्तं च भास्वंतं वाससा वा तिरोहितं ॥ नान्यदप्यतितेजस्वि न क्रुद्धस्य गुरोर्मुखं ॥ स्त्रियं स्रवंतीं नोदक्यां न नग्नां नान्यसंगतां ॥ न पानभोजनस्वमक्षुतजृंभासुखासने ॥ शयीत नैकशयने न चाश्नीयात्तया सह ॥ तामनीर्ष्यश्च गोपायेत्स्वैरिणी नाशयेद्गृहं ॥ नोच्छिष्टस्तारकाराहुतुहिनांशुदिवाकरान् ॥ पश्येन्न यायान्न पठेन्न स्वप्यान्न स्पृशेच्छिरः ॥ पाययंतीं चरंतीं वा नान्यस्मै गां निवेदयेत् ॥ अर्केंदुपरिवेषोल्काशतक्रतुधनूंषि च ॥ नान्यद्देवार्चने कर्म कुर्याद्धावेन्न वर्षति ॥ तिथिं प-

१ पातकिनि २ गीतादिना उल्बणामितिपदच्छेदः ३ नाविकिरेत् ४ चेतिपाठः ५ अथरजःस्वला ॥ स्त्रीधर्मिण्यविरात्रेयीमलीनी पुष्पवत्यपि ॥ ऋतुमत्यप्युदक्यापीत्यमरः

क्षस्य न ब्रूयान्नक्षत्राणि न निर्दिशेत् ॥ नात्मनो जन्मलग्नर्क्ष-
धनसारं गृहे मलं ॥ प्रकाशयेन्नावमानं न च निःस्नेहतां प्रभोः ॥ पु-
रोवातातपरजस्तुषारपरुषानिलान् ॥ अनृजुः क्षवथूद्गारकासस्वप्नान्नमै-
थुनं ॥ सशब्दमनिलं हस्तभ्रूनेत्रोत्क्षेपवादितां ॥ कूलच्छायां[1] सुरापानं
व्यालदंष्ट्रिविषाणिनः ॥ हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः[2] ॥ सं-
ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिंतनं ॥ आरोग्यजीवितैश्वर्यविद्यासु-
स्थितिमानितां ॥ तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयं ॥ मद्या-
तिसक्तिं विस्रंभस्वातंत्र्ये स्त्रीषु च त्यजेत् ॥ नैकाहमप्यधिवसेद्वास्तु
तच्छास्त्रगर्हितं ॥ न देशं व्याधिबहुलं नावैद्यं नाप्यनायकं ॥ नाधर्मि
जनभूयिष्ठं नोपसृष्टं न पर्वतं ॥ वसेत्प्राज्यांबुभैषज्यसमित्पुष्पतृणें-
धने ॥ सुभिक्षक्षेमरम्यांते पंडितैर्मंडिते पुरे ॥ नसामसणां सिद्धानां शा-
स्त्राणां चाजिगुप्सकः ॥ आराधकस्त्रिवर्गस्य यथायोग्यं जनस्य च ॥
दश धर्मपथान् रक्षन् जयेन्नाभ्यंतरानरीन् ॥ हिंसा[3]स्तेयान्यथाकामं पै-
शून्यं परुषानृतं ॥ संभिन्नालापं व्यापादमभिध्यां दृग्विपर्ययं ॥ पापं
कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ परोपघातक्रियया वर्जयेदर्जनं
श्रियः ॥ अर्थानां बव्हनर्थानामदाताऽपि ह्यसंभवात् ॥ स्वर्गापवर्गविभ-
वानयत्नेनाधितिष्ठति ॥ सायं भुक्त्वा लघु हितं समाहितमनाः शुचिः ॥
शास्तारमनुसंस्मृत्य स्वशय्यां चाथ संविशेत् ॥ देशे शुचावनाकीर्णे
द्विन्नाप्तपरिचारकः ॥ युक्तोपधानं स्वास्तीर्णं विस्तीर्णाविषमं सुखं ॥
जानुतुल्यं मृदु शुभं सेवेत शयनासनं ॥ प्राग्दक्षिणशिराः पादावकु-
र्वाणो गुरून् प्रति ॥ पूर्वापरनिशाभागे धर्ममेवानुचिंतयेत् ॥ आददीत
सदा देहादित्थं सारमसारतः ॥ बिभ्यत्प्रतिक्षणं मृत्योरयथातथचेष्टि-
तात् ॥ आरोग्यविभवप्रज्ञावयोधर्मक्रियावतः ॥ सुखमायुर्हितं चोक्तं

---

१ कूलंरोधस्तच्छायां २ कलहमितियावत् ३ प्राणिवधः । चौर्यं । अगम्यागमनं । प
रस्यामत्यक्षं तद्दोषकीर्तनं । परस्यप्रत्यक्षंतद्दोषकीर्तनं । असत्यं । असत्प्रलापः । परानिष्टार्चि-
तनं । परस्वापहारेच्छा । आप्तवाक्येष्वप्रमाणबुद्धिरिति हिंसादीनां क्रमात्पर्यायाः ॥

विपरीतं विपर्यये ॥ सर्वतेजोनिधानं हि नृपइत्युच्यते भुवि ॥ अदूषयन्मनस्तस्माद्भक्तिमांस्तमुपाचरेत् ॥ पर्यस्तिकोपाश्रयकोपहासविवादनिष्ठीवनजृंभणानि ॥ सर्वाः प्रकृत्यभ्यधिकाश्च चेष्टास्तत्संन्निधाने परिवर्जयेत्तु ॥ सर्वाह्यवस्था विविधाश्च तास्ताः सम्यक् समीक्ष्यात्महितं विदध्यात् ॥ अन्योऽपि यः कश्चिदिहास्ति मार्गो हितोपदेशेषु भजेत तं च ॥ इति चरितमुपेतः सर्वजीवोपजीव्यः प्रथितपृथुगुणौघो रक्षितो देवताभिः॥ समधिकशतजीवी निर्वृतः पुण्यकर्मा व्रजति सुगतिनिष्ठो देहभेदेऽपि तुष्टिं ॥ इति दिनचर्यानाम तृतीयोऽध्यायः ॥ ३ ॥

अथात ऋतुचर्याध्यायं व्याख्यास्यामः ॥ कालो हि नाम भगवाननादिनिधनो यथोपचितकर्मानुसारी यदनुरोधादादित्यादयः खादयश्च महाभूतविशेषास्तथातथा विपरिणमंतो जन्मवतां जन्ममरणस्यर्तुरसवीर्यदोषदेहबलव्यापत्संपदां च कारणत्वं प्रत्ययतां प्रतिपद्यंते ॥ स मात्राकाष्ठाकलानाडिकामुहूर्तयामाहोरात्रपक्षमासर्त्वयनवर्षभेदेन द्वादशधा विभज्यते ॥ तत्राक्षिनिमेषो मात्रा ॥ ताः पञ्चदश काष्ठा ॥ तास्त्रिंशत्कला ॥ ताः सदशभागा विंशतिर्नाडिका ॥ नाडिकाद्वयं मुहूर्तश्च ॥ ते तुल्यरात्रिंदिवे राशिभागे चत्वारः पादोना यामः ॥ तैश्चतुर्भिरहो रात्रिश्च ॥ पञ्चदशाहोरात्राः पक्षः ॥ पक्षद्वयं मासः ॥ स शुक्लांतः ॥ तैर्मार्गशीर्षादिभिर्द्विसंख्यैः क्रमाद्धेमंतशिशिरवसंतग्रीष्मवर्षाशरदाख्याः षडृतवो भवति ॥ तेषु शिशिरादयस्त्रयो स्वेरुदगयनमादानं च शेषा दक्षिणायनं विसर्गश्च ॥ तावादानविसर्गौ वर्षं ॥ तयोरादानमाग्नेयं॥ तस्मिन् खलु कालस्वभावमार्गपरिगृहीतोऽत्यर्थोष्णगभस्तिजालमंडलोऽर्कस्तत्संपर्काद्वायवश्च तीव्ररूक्षाः सोमजं गुणमुपशोषयंतो जगतः स्नेहमाददाना ऋतुक्रमेणोपजनितरौक्ष्याद्रू-

१ पर्यंकिका २ लघ्वक्षरोच्चारणमात्रोऽक्षिनिमेषइतिसुश्रुतः ॥

क्षान् रसांस्तिक्तकषायकटुकानभिप्रबलयंतो नृणां दौर्बल्यमावहंति ॥ विसर्गस्तु सौम्यः ॥ तस्मिन्नपि कालमार्गमेघवातवर्षाभिहतप्रभावे दक्षिणायनगेऽर्के शशिनि चाव्याहतबले शिशिराभिर्भाभिः शश्वदाप्यायमाने माहेंद्रसलिलप्रशांतसंतापे जगत्यरूक्षा रसाः प्रवर्द्धंतेऽम्ललवणमधुरा यथाक्रमं बलं चोपचीयते नृणामिति॥ भवति चात्र ॥ हेमंते शिशिरे चाग्र्यं विसर्गादानयोर्बलं ॥ शरद्वसंतयोर्मध्यं हीनं वर्षानिदाघयोः ॥ धूमधूम्रा रजोमंदास्तुषाराविलमंडलाः ॥ दिगादित्या मरुच्छैत्यादुत्तरो रोमहर्षणः ॥ रोध्रप्रियंगुपुन्नागलवल्यः कुसुमोज्वलाः ॥ दृप्ता गजाजमहिषवाजिवायससूकराः ॥ हिमानीपटलच्छन्ना लीनमनिविहंगमाः ॥ नद्यः सबाष्पाः सोष्माणः कूपापश्च हिमागमे ॥ देहोष्माणो विशंतोऽतः शीते शीतानिलाहताः॥ जठरे पिंडितोष्माणं प्रबलं कुर्वतेऽनलं ॥ विसर्गे बलिनां प्रायः स्वभावादिगुरु क्षमं ॥ बृंहणान्यन्नपानानि योजयेत्तस्य युक्तये ॥ अनिंधनोऽन्यथा सीदेदत्युदीर्णतयाऽथवा ॥ धातूनपि पचेदस्य ततस्तेषां क्षयान्मरुत् ॥ तेजःसहचरः कुप्येच्छीतः शीते विशेषतः ॥ अतो हिमे भजेत्स्निग्धान्स्वाद्वम्ललवणान् रसान् ॥ बिलेशयौदकानूपप्रसहानां भृतानि च ॥ मांसानि गुडपिष्टोत्थमद्यान्यभिनवानि च ॥ माषेक्षुक्षीरविकृतिवसातैलनवौदनान् ॥ व्यायामोद्वर्तनाभ्यंगस्वेदधूमांजनातपान् ॥ सुखोदकं शौचविधौ भूमिगर्भगृहाणि च ॥ सांगारयानां शय्यां च कुथकंबलसंस्कृतां ॥ कुंकुमेनानुदिग्धांगोऽगुरुणा गुरुणाऽपि वा ॥ लघूष्णैः प्रावृतः स्वप्यात्कालेधूपाधिवासितः ॥ पीनांगनांगसंसर्गनिवारितहिमानिलः ॥ शिशिरे शीतमधिकं मेघमारुतवर्षजं॥ रौक्ष्यं चादानजं तस्मात्कार्यः पूर्वोऽधिकं विधिः ॥ वसंते दक्षिणो वायुरानाम्रकिरणो रविः ॥ नवप्रवालस्वक्षन्नाः पादपाः ककुभोऽमलाः ॥ किंशुकाशोकचूतादिवनराजिविराजि-

१ हिमानी हिमसंहतिरित्यमरः २ दिशः

ताः॥ कोकिलालिकुलालापकलकोलाहलाकुलाः॥ शिशिरे संचितः श्लेष्मा दिनकृद्भाभिरीरितः ॥ तदा प्रबाधमानोऽग्निं रोगान्प्रकुरुते बहून् ॥ अतोऽस्मिंस्तीक्ष्णवमनधूमगंडूषनावनं ॥ व्यायामोद्वर्तनक्षौद्रयवगोधूमजांगलान् ॥ सेवेत सुहृदुद्यानयुवतीश्च मनोरमाः ॥ स्नातः स्वलंकृतः स्रग्वी चंदनागुरुरूषितः ॥ विचित्रामत्रविन्यस्तान् सहकारोत्पलांकितान् ॥ निर्गदांश्चासवारिष्टसीधुमार्द्वीकमाधवान् ॥ क्वथितंमुस्तशुंठ्यंबु सारांभः क्षौद्रवारि वा ॥ गुरुशीतंदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ॥ ग्रीष्मे ऽतसीपुष्पनिभस्तीक्ष्णांशुर्दावदीपिताः ॥ दिशो ज्वलंति भूमिश्च मारुतो नैर्ऋतः सुखः ॥ पवनातपसंस्वेदैर्जंतवो ज्वरिताइव ॥ तापार्ततुंगमातंगमहिषैः कलुषीकृताः ॥ दिवाकरकरांगारनिकरक्षपितांभसः ॥ प्रवृद्धरोधसो नद्यश्छायाहीना महीरुहाः ॥ विशीर्णजीर्णपर्णाश्च शुष्कवल्कलतांकिताः॥ आदत्ते जगतः स्नेहांस्तदादित्यो भृशं यतः ॥ व्यायामातपकट्वम्ललवणोष्णं त्यजेदतः ॥ मद्यं न सेव्यं स्वल्पं वा सेव्यं सुबहुवारि वा ॥ अन्यथा शोषशैथिल्यदाहमोहान्करोति तत् ॥ नवमृद्भाजनस्थानि हृद्यानि सुरभीणि च ॥ पानकानि समंथानि सिताढ्यानि हिमानि च ॥ स्वादुशीतं द्रवं चान्नं जांगलान्मृगपक्षिणः ॥ शालिक्षीरघृतद्राक्षानारिकेरांबुशर्कराः ॥ तालवृंतानिलान् हारान् स्रजः सकमलोत्पलाः ॥ तन्वीर्मृणालवलयाः कांताश्चंदनरूषिताः ॥ सरांसि वापीः सरितः काननानि हिमानि च ॥ सुरभीणि निषेवेत वासांसि सुलघूनि च ॥ निष्पतद्यंत्रसलिले स्वप्याद्धारागृहे दिवा ॥ रात्रौ चाकाशतलके सुगंधिकुसुमास्तृते ॥ कर्पूरचंदनार्द्रांगो विरतानंगसंगमः ॥ वर्षासु वारुणो वायुः सर्वसस्यसमुद्गमः॥ भिन्नेंद्रनीलनीलाभ्रवृंदमंदाविलं नभः ॥ दीर्घिका नववार्यौघमग्नसोपानपंक्तयः ॥ वारिधाराभृशाघातविकाशितसरोरुहाः ॥ सरितः सा-

---

१ अरण्याग्निप्रकाशिताः ॥ २ संश्लेषैरितिपाठः ३ कूलं रोधश्च तीरंचेत्यमरः

गराकारा भूरव्यक्तजलस्थला ॥ मंद्रस्तनितजीमूतशिखिदर्दुरनादिता ॥ इंद्रगोपधनुःखंडविद्युदुद्योतदीपिता ॥ परितः श्यामलतृणा शिलींध्रकुटजोज्ज्वला ॥ तदाऽऽदानाबले देहे मंदेऽग्नौ बाधिते पुनः ॥ वृष्टिभूबाष्पतोयाम्लपाकदुष्टैश्चलादिभिः॥ बस्तिकर्म निषेवेत कृतसंशोधनक्रमः॥ पुराणशालिगोधूमयवान् यूषरसैः कृतैः ॥ निर्गदं मदिरारिष्टमार्द्वीकं स्वल्पमंबु वा ॥ दिव्यं क्वथितकूपोत्थं चौंड्यं सारसमेववा ॥ वृष्टिवाताकुले त्वन्हि भोजनं क्लेदवातजित् ॥ परिशुष्कं लघु स्निग्धमुष्णाम्ललवणं भजेत् ॥ प्रायोन्नपानं सक्षौद्रं संस्कृतं च घनोदये ॥ असरीसृपभूबाष्पशीतमारुतशीकरं ॥ साग्नियानं च भवनं निर्दंशमशकोंदुरं ॥ प्रघर्षोद्वर्त्तनस्नानधूमगंधागुरुप्रियः ॥ यायात्करेणुमुख्याभिश्चित्रस्रग्वस्त्रभूषितः ॥ नदीजलोदमंथाहःस्वप्नातिद्रवमैथुनं ॥ तुषारपादचरणव्यायामार्ककरांस्त्यजेत् ॥ शरदि व्योम शुभ्राभ्रं किंचित्पंकांकिता मही ॥ प्रकाशकाशसप्ताह्वकुमुदा शालिशालिनी ॥ विक्षिप्ततीक्ष्णकिरणो मेघौघविगमाद्रविः ॥ बभ्रुवर्णोऽतिविमलाः क्रौंचमालाकुला दिशः ॥ कमलांतरसल्लीनमीनहंसांसघट्टनैः ॥ तरंगभंगतुंगानि सरांसि विमलानि च ॥ वर्षाशीतोचितांगानां सहसैवार्करश्मिभिः ॥ तप्तानां संचितं पूर्वं तदा पित्तं प्रकुप्यति ॥ शस्तं तिक्तहविःपानं विरेकोऽस्रस्रुतिः सदा ॥ शीतं लघ्वन्नपानं च कषायस्वादुतिक्तकं ॥ शालिषष्टिकगोधूमयवमुद्गसितामधु ॥ पटोलामलकं द्राक्षा जांगलं क्षुद्वतां भृशं ॥ दिवा दिवाकरकरै निशाकरकरैर्निशि ॥ संतप्तं ल्हादितं तोयमगस्त्येनाविषीकृतं ॥ निर्मलं शुचि कालेन पक्वं पानेऽमृतोपमं ॥ हंसौघपक्षविक्षेपभ्रमद्भ्रमरपंक्तिषु ॥ सुसरोरुहसेव्यासु सरसीषु प्लवेत च ॥ लघुशुद्धांबरस्रग्वी शीतोशीरविलेपनः ॥ सेवेत चंद्रकिरणान्प्रदोषे

१ हंसांगघट्टनैरितिपाठः २ कुष्ठाधिकारिसतोक्तं ।



सौधमाश्रितः ॥ तृषिदध्यातपक्षारवसातैलपुरोनिलान् ॥ तीक्ष्णमद्यदिवास्वमनुषारांश्च विवर्जयेत् ॥ नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ऋत्वोरंत्यादिसप्ताहावृतुसंधिरिति स्मृतः ॥ तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात् ॥ ऋतुष्वेवंविधेष्वेव विधिः स्वास्थ्ये च देहिनां ॥ निर्दिश्यतेऽन्यरूपेषु विरुद्धज्ञानिको विधिः ॥ मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयं॥ यथोत्तरं भजेच्चर्यां तत्र तस्य बलादिति ॥ इति ऋतुचर्यानाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातो रोगानुत्पादनीयमध्यायं व्याख्यास्यामः॥वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधां ॥ निद्राकासश्रमश्वासजृंभाश्रुच्छर्दिरेतसां॥अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ॥वातमूत्रशकृत्संगदृष्ट्यग्निवधहृद्गदाः ॥ स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ॥ पानानि बस्तयश्चैव शस्तं वातानुलोमनं ॥ शकृतः पिंडिको[1]द्वेष्टप्रतिश्यायशिरोरुजः॥ऊर्ध्ववायुः परीकर्तो[2] हृदयस्योपरोधनं ॥ मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ॥ अंगभंगाश्मरीबस्तिमेंढ्रवंक्षणवेदनाः ॥ स्युर्मूत्ररोधात्पूर्वे च प्रायो रोगास्तदौषधं ॥ वर्त्यभ्यंगावगाहाश्च स्वेदनं बस्तिकर्म च ॥ अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ॥ मूत्रजेषु तु पाने च प्राग्भक्ताच्छस्यते घृतं ॥ जीर्णांतिकं चोत्तमया मात्रया योजनाद्वयं॥ अवपीडकमेतच्च संज्ञितं धारणात्पुनः॥ उद्गारस्यारुचिः कंपो विबंधो हृदयोरसोः ॥ आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजं॥ शिरोर्तीन्द्रियदौर्बल्यमन्यास्तंभार्दितं क्षुतेः॥तीक्ष्णधूमांजनाघ्राणनावनार्कविलोकनैः ॥ प्रवर्तयेत्क्षुतिं सक्तां स्वेदाभ्यंगौ च शीलयेत् ॥ योज्यं वातघ्नमन्नं च घृतं चोत्तरभक्तकं ॥ शोषांगसादबाधिर्यसंमोहभ्र-

---

१ जंघायाःपश्चिमे भागे पिंडिकाकृति मांसं पिंडिका तस्याउद्वेष्ट्यमानाया इव दुःखं

२ गुदे परिकर्त्तनवत्पीडा

मद्धृद्गदाः ॥ तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ॥ अंगभंगा-
रुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥ तत्र योज्यं लघु स्निग्धमुष्णमल्पं
च भोजनं ॥ निद्राया मोहमूर्द्धाक्षिगौरवालस्यजृंभिकाः ॥ अंगमर्दश्च
तत्रेष्टः स्वमः संवाहनानि च॥कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदा-
मयाः॥शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः॥ गुल्महृद्रोग-
संमोहाः श्रमश्वासाद्विधारितात् ॥ हितं विश्रमणं तत्र वातघ्नश्च क्रि-
याक्रमः ॥ जृंभायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥ पीनसाक्षि-
शिरोहृद्रुङ्मन्यास्तंभारुचिभ्रमाः॥सगुल्मा बाष्पतस्तत्र स्वमो मद्यं प्रि-
याः कथाः ॥ विसर्पकोठकुष्ठाक्षिकंडूपांड्वामयज्वराः ॥ सकासश्वासहृ-
ल्लासव्यंगश्वयथवो वमेः ॥ गंडूषधूमावाहारं रूक्षं भुक्त्वा तदुद्वमः ॥
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनं ॥सक्षारलवणं तैलमभ्यंगार्थं
च शस्यते ॥ शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुज्वराः ॥ हृद्व्यथामूत्रसं-
गांगभंगवृद्ध्यश्मषंढताः॥ताम्रचूडसुराशालिबस्त्यभ्यंगावगाहनं॥बस्ति
शुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः ॥ तृट्शूलार्त्तं त्यजेत्क्षीणं
विड्वमं वेगरोधिनं ॥ रोगाः सर्वेऽपि जायंते वेगोदीरणधारणैः[1] ॥ नि-
र्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान्प्रति ॥ ततश्चानेकधा प्रायः पवनो
यत्प्रकुप्यति ॥ अन्नपानौषधं तस्य युंजीतातोऽनुलोमनं ॥ तेषु तेषु
विकारेषु यथास्वं च चिकित्सितं ॥ क्रमादपंकेऽपि मणौ पंकोऽ
वश्यं भवेद्यतः ॥ उत्तिष्ठेत यथाकालं मलानां शोधनं प्रति ॥ च-
यकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ॥ प्रायशः सुचिरेणापि भेष-
जद्वेषिणो गदान् ॥ अतिस्थौल्याग्निसदनकुष्ठमेहहृतौजसः ॥ स्रो-
तोरोधाक्षविभ्रंशश्वासश्वयथुपांडुताः ॥ आमोरुस्तंभजठरकृच्छ्रालस-
कदंडकान् ॥ तृप्तिप्रमीलकालस्यग्रहण्यर्शोभगंदरान् ॥ प्लीह-
विद्रधिवीसर्पमदसंन्यासपीनसान् ॥ छर्दिगंडक्रमिग्रंथितंद्रादुःस्वप्न-

१ वेगोदीरणधारणात्

दर्शनं ॥ कंठामयान्मूर्द्धरुजं प्रणाशं बुद्धिनिद्र्योः ॥ तेजोवर्ण-बलानां च तृप्यतो बृंहणैरपि ॥ उचितैरपि चाहारैर्यस्मादस्य व-हंति न ॥ दोषोपलिप्तवदना रसं रसवहाः शिराः ॥ वमनादीनतो युंज्यात्स्वस्थस्यैव यथाविधि ॥ दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः ॥ ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ य-थाक्रमं यथायोगमतऊर्ध्वं प्रयोजयेत् ॥ रसायनानि सिद्धानि वृष्य-योगांश्च कालवित् ॥ भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥ शालि-षष्टिकगोधूममुद्गमांसघृतादिभिः ॥ हृद्यदीपनभैषज्यसंयोगाद्रुचिप-क्तिदैः ॥ साभ्यंगोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ॥ तथा स लभ-ते शर्म सर्वपावकपाटवं ॥ धीवर्णेंद्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ये भूतविषवाय्वग्निक्षतभंगादिसंभवाः ॥ कामक्रोधभयाद्याश्च ते स्युरागंतवो गदाः ॥ त्यागः प्रज्ञापराधानामिंद्रियोपशमः स्मृतिः ॥ देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्त्तनं ॥ अथर्वविहिता शांतिः प्र-तिकूलग्रहार्चनं ॥ भूताद्यस्पर्शनोपायो निर्दिष्टश्च पृथक्पृथक् ॥ अनुत्पत्त्यै समासेन विधिरेषः प्रदर्शितः ॥ निजागंतुविकाराणामुत्पन्ना-नां च शांतये ॥ शीतोद्भवं दोषचयं वसंते विशोधयन् ग्रीष्मजम-भ्रकाले ॥ घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु ॥ नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ॥दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥ अर्थेष्वलभ्येष्व कृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ॥जितेंद्रियं नानुतपंति[1] रोगास्तत्का-लयुक्तं यदि नास्ति दैवं॥ कालोऽनुकूलो विषया मनोज्ञा धर्म्याः क्रियाः कर्म सुखानुबंधि ॥ सत्त्वं विधेयं विशदा च बुद्धिर्भवंति धीरस्य सदा सुखाय ॥ इति रोगानुत्पादनीयो नाम पंचमोऽध्यायः ॥ ५ ॥

अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥ जीवनं तर्प-

---

१ नानुपतंतीतिपाठः

णं हृद्यं ल्हादि बुद्धिप्रबोधनं ॥ तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमं ॥ सूर्योद्भूतप्रमुक्तत्त्वाल्लघु वातकफापहं ॥ शैत्यजीवनसौम्यत्वैः पित्तरक्तविषार्त्तिजित् ॥गंगांबु नभसो भ्रष्टं स्पृष्टं त्वर्केंदुमारुतैः॥ हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ येनाभिवृष्टममलं शाल्यन्नं राजतस्थितं ॥ अक्लिन्नमविवर्णं वा तत्तोयं गांगमन्यथा ॥ सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ॥ खातधौतशिलापृष्ठवस्त्रादिभ्यः स्रुतं जलं ॥ हेममृन्मयपात्रस्थमविपन्नं सदा पिबेत् ॥ तदभावे च भूमिष्ठमांतरिक्षानुकारि यत् ॥ श्वेते कषायं तत्स्वादु कृष्णे तिक्तं च पांडुरे॥ नीले कषायमधुरं देशे लवणमूषरे॥ सक्षारं कपिले मिश्रं मिश्रेऽथांबुगुणाधिके ॥ मधुरं लवणाम्लं तु भवेद्भूमिगुणाधिके ॥ तेजोधिके तिक्तकटु कषायं पवनाधिके ॥ दिव्यानुकारि त्वव्यक्तरसत्वात्खगुणाधिके ॥ शुचिपृथ्व्यसितश्वेते देशे चार्कानिलाहतं ॥ कौपसारसताडागचौंड्यप्रास्रवणौद्भिदं[2] ॥ वापीनदीतोयमिति तत् पुनः स्मृतमष्टधा ॥ सक्षारं पित्तकृत्कौपं दीपनं नातिवातलं ॥ सारसं स्वादु लघु च ताडागं गुरु वातलं ॥ चौंड्यं तु पित्तलं दोषहरं प्रस्रवणोदकं ॥ औद्भिदं स्वादु पित्तघ्नं स्वादु[3] वापीजलं लघु ॥ नादेयं वातलं रूक्षं कटुकं च तथाऽऽदिशेत् ॥ धन्वानूपमहीध्राणां सामिप्याद्गुरुलाघवं ॥ पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥ पथ्याः समासात्ता नद्यो विपरीतास्ततोऽन्यथा ॥ उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ हिमवन्मलयोद्भूताः पथ्यास्ताएव च स्थिराः ॥ कृमिश्लीपदहृत्कंठशिरोरोगान्प्रकुर्वते[1] ॥ प्राच्यावंत्यपरांतोत्थास्था दुर्नामानि[1] महेंद्रजाः ॥ उदरश्लीपदातंकान्[1] सह्यविंध्यभवाः पुनः॥ कुष्ठपांडुशिरोरोगान्[1] दोषघ्न्यः पारियात्रजाः ॥ बलपौरुषकारिण्यः[1] सागरांबु त्रिदोषकृत् ॥ कीटाहिमूत्रविट्कोथतृणजा-

---

१ तत्पेयमितिपाठः २ स्वयंविशीर्णशैलश्वभ्रंचौंडिः तत्संबंधिचौंड्यं ३ तथेतिपाठः

लोत्कशाविलं ॥पंकपंकजशैवालहृतपर्णादिसंस्तृतं ॥ सूर्येंदुपवनादृष्टं जुष्टं च क्षुद्रजंतुभिः ॥अभिवृष्टं विवर्णं च कलुषं स्थूलफेनिलं॥ विरसं गंधवत्तप्तं दंतग्राह्यतिशैत्यतः ॥ अनार्त्तवं च यद्दिव्यमार्त्तवं प्रथमं च यत्॥लूतादितंतुविण्मूत्रविषसंश्लेषदूषितं॥ तत्कुर्यात्स्नानपानाभ्यां तृष्णाऽऽध्मानोदरज्वरान् ॥ कासाग्निसादाभिष्यंदकंडूगंडादिकानतः ॥ तद्वर्जयेदभावे वा तोयस्यान्यस्य शस्यते॥घनवस्त्रपरिस्रावैः क्षुद्रजंत्वभिरक्षणं ॥ व्यापन्नस्यास्य तपनमग्न्यर्कायसपिंडकैः ॥ पर्णीमूलबिसग्रंथिमुक्ताकतकशैवलैः॥ वज्रगोमेदकाभ्यां वा कारयेत्तत्प्रसादनं ॥ पाटलाकरवीरादिकुसुमैर्गंधनाशनं[1] ॥पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे॥ अजीर्णे क्वथितं चामे पक्के जीर्णेऽपि नेतरत्॥शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ॥ पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयं ॥ अतोऽत्यंतनिषेधेऽपि न क्वचिद्वारि वार्यते ॥ तस्य शोषांगसादाद्या मृत्युर्वा स्यादलाभतः ॥ न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य च ॥ केवलं सौषधं पक्कमाममुष्णं हितं च तत् ॥ समीक्ष्य मात्रया युक्तममृतं विषमन्यथा ॥ अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितं ॥ प्रयाति पित्तश्लेष्मत्वं ज्वरितस्य विशेषतः ॥ वर्द्धयत्यामतृण्निद्रातंद्राऽऽध्मानांगगौरवं ॥ कासाग्निसादहृल्लासप्रसेकश्वासपीनसान् ॥ पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितं ॥ तस्मादयोगपानेन लाघवान्न वियोजयेत् ॥ आमविष्टब्धयोः कोष्णं निष्पिपासोप्यपः पिबेत् ॥ यावत्यः क्लेदयंत्यन्नमतिक्लेदोऽग्निनाशनः ॥ विबद्धः कफवाताभ्यां मुक्तामाशयबंधनः ॥ पच्यते क्षिप्रमाहारः कोष्णतोयद्रवीकृतः ॥ अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ॥ नाल्पमप्याममुदकं हितं तद्धि त्रिदोषकृत् ॥ तेजसः प्रतिपक्षत्वान्मंदाग्निर्वर्जयेज्जलं ॥ सर्व-

---

१ पानीयं जलं न पानीयं न पेयं

मेव तथा स्यंदप्लीहविद्रधिगुल्मिनः ॥ पांडूदरातिसारार्शोग्रहणीशोष-
शोफिनः ॥ काममल्पमशक्तौ तु पेयमौषधसंस्कृतं ॥ कृते शर-
न्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः ॥ भक्तस्यादौ जलं पीतम-
ग्निसादं कृशांगतां ॥ अंते करोति स्थूलत्वमूर्ध्वं चामाशयात्क-
फं ॥ मध्ये मध्यांगतां साम्यं धातूनां जरणं सुखं ॥ शीतं मदा-
त्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् ॥ तृष्णोष्मदाहपित्तास्रविषाण्यं-
बु निहंति तत् ॥ क्षीणपादत्रिभागार्द्धं देशर्तुगुरुलाघवात् ॥ क्वथि-
तं फेनरहितमवेगममलं हितं ॥ हिध्माऽऽध्मानानिलश्लेष्मतृट्कास-
श्वासपीनसे ॥ पार्श्वशूलाममेदःसु सद्यःशुद्धौ नवज्वरे ॥ दीपनं पा-
चनं कंठ्यं लघु बस्तिविशोधनं ॥ पाषाणरूप्यमृद्धेमजतुनापाकेता-
पितं ॥ पानीयमुष्णं शीतं वा त्रिदोषघ्नं तृडर्तिजित् ॥ लघ्वरूक्षं क्ल-
मघ्नं च तोयं क्वथितशीतलं ॥ संसर्गे पित्तकफयोः सन्निपाते च श-
स्यते ॥ तोयं वन्हिगुणभ्रष्टं पाकेऽम्लं सर्वदोषकृत् ॥ भवेत्पर्युषितं
तद्वत्तोयं तु करकोद्भवं ॥ अतिशैत्यगुरुस्थैर्यसंघातैः कफवातकृत् ॥
चंद्रकांतभवं रक्षोविषपित्तज्वरापहं ॥ दृष्टिमेधावपुःस्थैर्यकरं स्वादु
हिमं लघु ॥ नारिकेलोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ॥ तृष्णापि-
त्तानिलहरं दीपनं बस्तिशोधनं॥वर्षासु दिव्यनादेये परं तोये वरावरे ॥
इति तोयवर्गः॥गव्यं माहिषमाजं च कारभं स्त्रैणमाविकं॥ऐभमैकशफं
चेति क्षीरमष्टविधं स्मृतं ॥ स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्द्धनं ॥
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलं ॥ प्रायः पयोऽत्रगव्यं तु जी-
वनीयं रसायनं ॥ क्षतक्षीणहितं मेध्यं वर्ण्यं स्तन्यकरं सरं ॥ श्रमभ्रम-
मदालक्ष्मीश्वासकासाधितृट्क्षुधः ॥ जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च
नाशयेत् ॥ हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमं ॥ अल्पांबुपा-
नव्यायामकटुतिक्ताशनैर्लघु ॥ आजं शोषज्वरश्वासरक्तपित्तातिसार-
जित् ॥ ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु॥शस्तं वातकफानाहकृमि-

शोफोदरार्शसां ॥ मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ॥ तर्पणाश्चोतनैर्नस्यैरह्यं तृष्णमाविकं ॥ वातव्याधिहरं हिध्माश्वासपित्तकफप्रदं ॥ हस्तिन्याः स्थैर्यकृद्गाढमुष्णं त्वैकशफं लघु ॥ शाखावातहरं साम्ललवणं जडताकरं ॥ पयोऽभिष्यंदि गुर्वामं युक्त्या श्रृतमतोऽन्यथा ॥ विना तु वनितास्तन्यमाममेव तु तद्धितं ॥ भवेद्गरीयोऽतिश्रृतं धारोष्णममृतोपमं ॥ पिण्याकाम्लाशिनीनां तु गुर्वभिष्यंदि तद्भृशं ॥ अचेष्टया च प्रादोषाद्गरीयः स्मृतमौषसं ॥ व्याख्यातस्तेन लघिमा चेष्टावत्प्रकृतिष्वपि ॥ ह्रस्वेषु चातिदेहेभ्यो मांसेष्वप्येवमादिशेत्[१] ॥ अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ मेदःशुक्रबलश्लेष्मरक्तपित्ताग्निशोफकृत् ॥ रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥ नैवाद्यान्निशि नैवोष्णं वसंतोष्णशरत्सु न ॥ नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलं ॥ न चानामलकं नापि [२]मंदं नो नित्यमन्यथा ॥ ज्वरासृक्पित्तवीसर्पकुष्ठपांडुभ्रमप्रदं ॥ तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥ गुल्मप्लीहघृतव्यापद्गरपांड्वामयान् जयेत् ॥ तद्वन्मस्तु सरं स्रोतःशोधि विष्टंभजिल्लघु ॥ शीतं स्वादु कषायाम्लं नवनीतं नवोद्धृतं ॥ यक्ष्माऽर्शोर्दितपित्तासृग्वातजिद्ग्राहि दीपनं ॥ क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ॥ शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषां ॥ बालवृद्धप्रजाकांतिसौकुमार्यस्वरार्थिनां ॥ क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनां ॥ वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहं ॥ स्नेहानामुत्तमं शीतं वयसः स्थापनं परं ॥ सहस्रवीर्यं विधिभिर्घृतं कर्मसहस्रकृत् ॥ मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् ॥ पुराणं[३] जयति व्याधीन्व्रणशोधनरोपणं ॥ पूर्वोक्तांश्चाधिका-

---

१ सम्यगनिष्पन्नं ( आदमुरें इति भाषायां ) २ नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ॥ न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिकइति हेमाद्रावधिकःश्लोकः ३ दशवर्षस्थितं

न्कुर्याद्गुणांस्तदमृतोपमं ॥ तद्वच्च घृतमंडोऽपि रूक्षस्तीक्ष्णस्तनुश्च सः ॥ बल्याः किलाटकूचीकातक्रपिंडकमोरणाः ॥ सक्षीरशाकपीयूषा रोचना वन्हिसादनाः ॥ शुक्रनिद्राकफकरा विष्टंभिगुरुदोषलाः ॥ विद्याद्दधिघृतादीनां गुणदोषान्यथापयः ॥ गव्ये क्षीरघृते श्रेष्ठे निंदिते चाविसंभवे ॥ इति क्षीरवर्गः ॥ इक्षोरसो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥ वृष्यः शीतः पवनजिद्भुक्ते वातप्रकोपनः ॥ रक्तपित्तप्रशमनः स्वादुपाकरसः सरः ॥ सोऽग्रे सलवणो दंतपीडितः शर्करासमः ॥ मूलाग्रजंतुजुष्टादिपीडनान्मलसंकरात् ॥ किंचित्कालविधृत्या च विकृतिं याति यांत्रिकः ॥ विदाही गुरुविष्टंभी तेनासौ तत्र पौंड्रकः ॥ शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥ शतपर्वककांतारनैपालाद्यास्ततः क्रमात् ॥ सक्षाराः सकषायाश्च सोष्णाः किंचिद्विदाहिनः ॥ फाणितं गुर्वभिष्यंदि चयकृन्मूत्रशोधनं ॥ नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥ प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ॥ हृद्यःपुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥ वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः ॥ मत्स्यंडिकाखंडसिताः क्रमेण गुणवत्तमाः ॥ तद्गुणा तिक्तमधुरा सकषाया हिमा लघुः ॥ त्रिदोषघ्नी सिता काशेपुदर्भच्छदसंभवा ॥ दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः ॥ शर्करेक्षुविकाराणां फाणितं च वरावरे ॥ इतीक्षुवर्गः ॥ चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्माऽस्रपित्तनुत् ॥ कुष्टमेहकृमिच्छर्दिश्वासकासातिसारजित् ॥ व्रणशोधनसंधानरोपणं वातलं मधु ॥

१ दध्ना तक्रेण वा सहपाकात्पृथक्भूतघनद्रवभागं क्षीरं कूचीका ॥ सैव पाकस्तद्विना क्षीरशाकः ॥ तयोर्घनभागः पृथगुद्धृतः किलाटः ॥ द्रवभागोमोरणः ॥ प्रसूतिदिनादारभ्ययावन्मलिनं घनं क्षीरं तावत्पीयूषः ॥ घनवस्त्रबद्धं स्वयं स्रुतद्रवभागं पिंडीभूतं तक्रं तक्रपिंडकइतिहेमाद्रिः २ अधौतगुडः ३ कषाया यासशर्करेतिपाठः । यासो दुस्पर्शः ( धमासा )

मधुरं कटुकं पाके तत्तुल्या मधुशर्करा ॥ उष्णमुष्णार्त्तमुष्णे च युक्तं चोष्णैर्निहंति तत् ॥ विषान्वयत्वेनं विषपुष्पेभ्योऽपि यतो मधु ॥[1] कुर्वते ते स्वयं यच्च सविषा भ्रमरादयः ॥ प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ॥ अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्त्तते ॥ गुरुरूक्षकषायत्वाच्छैत्याच्चाल्पं हितं मधु ॥ न हि कष्टतमं किंचित्तदजीर्णाद्यतो नरं ॥ उपक्रमविरोधित्वात्सद्यो हन्याद्यथा विषं ॥ नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु ॥ वृष्ययोगैस्तोयुक्तं वृषतामनुवर्तते ॥ भ्रामरं पौत्तिकं क्षौद्रं माक्षिकं च यथोत्तरं ॥[2] वरं जीर्णं च तेष्वंत्ये द्वे एव ह्युपयोजयेत् [3]॥ इति मधुवर्गः ॥ तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ॥ त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥ कृशानां बृंहणायालं स्थूलानां कर्शनाय च ॥ बद्धविट्कं कृमिघ्नं च संस्कारात्सर्वरोगजित् ॥ तैलप्रयोगादजरा निर्विकारा जितश्रमाः॥ आसन्नतिबला युद्धे दैत्याधिपतयः पुरा ॥सतिक्तोषणमैरंडं तैलं स्वादु सरं गुरु ॥ वर्ध्मगुल्मानिलकफानुदरं विषमज्वरं ॥ रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरंडोद्भवं भृशं॥ कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहं ॥[4] उमाकुसुंभजं सोष्णं त्वग्दोषकफपित्तकृत् ॥ दंतीमूलकरक्षोघ्नकरंजारिष्टशिग्रुजं ॥ सुवर्चलेंगुदीपीलुशंखिनीनीपसंभवं ॥ सरलागुरुदेवाव्हशिंशुपासारजन्म च ॥ तुवरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तकृत् ॥ अर्शःकुष्टकृमिश्लेष्मशुक्रमेदोनिलापहं ॥ करंजनिंबजे तिक्ते नात्युष्णे तत्र निर्दिशेत् ॥ कषायतिक्तकटुकं सारलं व्रणशोधनं ॥ भृशोष्णतीक्ष्णकटुनी

---

१ सविषपष्पेभ्यइतिपाठः २ वरं स्याद्भ्रामरं शुक्लं घृतवर्णं तु पौत्तिकं ॥ क्षौद्रं तु कपिलं प्रोक्तं तैलाभं माक्षिकं स्मृतं ॥ त्रिशेषाद्गुर्वभिष्यंदि भ्रामरं स्वादु तर्पणं ॥ क्षौद्रं सतिक्तमधरं लघु रूक्षं विशोधनं ॥ पौत्तिकं बृंहणं रूक्षं कफव्रणहितं लध्विति हेमाद्रावधिकः पाठः ३ मंडः पुराणो विशदस्तीक्ष्णो रूक्षो लघुस्तनुरितिच ४ लघु पित्तास्रकृत्कोठकुष्टार्शोव्रणजंतुजिदित्यष्टांगहृदयेऽधिकःपाठः

तौवरारुष्करोद्भवे ॥ विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने ॥ अ-क्षातिमुक्तकाक्षोडनालिकेरमधूकजं ॥ त्रपुसैर्वारुकूष्मांडश्लेष्मातक-पियालजं ॥ वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलं ॥ पित्तश्लेष्म-प्रशमनं श्रीपर्णीकिंशुकोद्भवं ॥ तिलतैलं वरं तेषु कौसुंभमवरं परं ॥ वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ मांसानुगस्वरूपौ च वि-द्यान्मेदोऽपि ताविव ॥ औलूकी शौकरी पाकहंसजा कुक्कुटोद्भवा ॥ वसा श्रेष्ठा स्ववर्गेषु कुंभीरमहिषोद्भवा ॥ काकमद्गुवसा तद्वत्कारंडोत्था च निंदिता ॥ शाखादमेदसां छागं हास्तिनं च वरावरे ॥ इति तैल-वर्गः॥ दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदं॥सस्वादु तिक्तकटुक-मम्लपाकरसं सरं ॥ सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ नष्टनिद्रा-तिनिद्रेभ्यो हितं पित्तास्रदूषणं ॥ कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतो-विशोधनं ॥ वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥ गुरु तद्दोषज-ननं नवं जीर्णमतोऽन्यथा ॥ पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥ नातितीक्ष्णमृदुस्वच्छघनं व्यापन्नमेव वा ॥गुल्मोदरार्शोग्रहणीशोषहृ-त्स्नेहनी गुरुः ॥ सुरा[1]ऽनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ॥ तद्गुणा-वारुणी[2] हृद्या लघुस्तीक्ष्णा निहंति च ॥ शूलकासवमिश्वासविबंधा-ध्मानपीनसान्॥ शूलप्रवाहिकाशोफतृष्णाऽऽटोपार्शसां हितः[3]॥ जंगलः पाचनो ग्राही रूक्षस्तद्वच्च मेदकः[4] ॥ बक्कसो[5] हृतसारत्वाद्विष्टंभी दो-षकोपनः ॥ नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ॥ व्रणे-पांड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ विष्टंभिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ॥ कौहली बृंहणी गुर्वी श्लेष्मलस्तु मधूलकः ॥ यथाद्रव्यगुणोऽरिष्टः[6] सर्वमद्यगुणाधिकः ॥ ग्रहणीपांडुकुष्ठार्शःशोष-

---

१ शालिपिष्टकृतं मद्यं २ श्वेतसुरा सा च श्वेतपुनर्नवादिमूलयुक्तेन शालिपिष्टेन क्रियते ३ मद्याधःस्थितद्रवभागः ४ मद्याधःस्थितघनभागः ५ ( बाकस इति भाषायां ) ६ क्वथितौषधैःकृतं मद्यं

शोफोदरज्वरान् ॥ हंति गुल्मकृमिप्लीन्हः कषायकटुवातलः ॥ मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरं ॥ अल्पपित्तानिलं पांडुमेहार्शःकृमिनाशनं ॥ अस्मादल्पांतरगुणं खार्जूरं वातलं गुरु ॥ शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ॥ सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ॥ मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥ छेदी मध्वासवस्तीक्ष्णो ॥ मेहपीनसकासजित् ॥ सुरासवस्तीक्ष्णमदः स्वादुस्तीक्ष्णोऽनिलापहः ॥ मैरेयो मधुरो वृष्यः सरः संतर्पणो गुरुः ॥ धातक्यभिषुतो जीर्णो रूक्षो रोचनदीपनः ॥ द्राक्षासवो मधुसमः परमं स तु दीपनः ॥ मार्द्वीकसदृशः प्रोक्तो मृद्वीकेक्षुरसासवः ॥ समासादासवो हृद्यो वातलः स्वौषधानुगः ॥ द्राक्षेक्षुमाक्षिकं शालिरुत्तमा व्रीहिपंचमाः ॥ मद्याकरा यदेभ्योऽन्यत्तन्मद्यप्रतिरूपकं ॥ गुणैर्यथोल्बणैर्विद्यान्मद्यमाकरसंकरात् ॥ रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनं ॥ विदाहि भृशतीक्ष्णोष्णं हृद्यं रुचिकरं सरं॥ दीपनं शिशिरस्पर्शं पांडुदृक्कृमिनाशनं ॥ गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरं ॥ कंदमूलफलाद्यं च तद्वद्विद्यात्तदासुतं ॥ शांडाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ॥ धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलं॥ श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलजित् ॥ शस्तमास्थापने हृद्यं लघु वातकफापहं ॥ एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥ कृमिहृद्रोगगुल्मार्शःपांडुरोगनिबर्हणे॥ते क्रमाद्वितुषैर्विद्यात्सतुषैश्च यवैः कृते॥इति मद्यवर्गः॥ मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवं ॥ पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ कृमिशोफोदरानाहशूलपांडुकफानिलघ्नन् ॥

---

१ अक्कथितौषधैः कृतं मद्यं २ उत्तमा मद्याकराइतियोजना ३ कंदमूलफलादीनि सस्नेहलवणानि च ॥ यत्र द्रवेऽभिषूयंते तच्छुक्तमभिधीयतइति ४ शाकमुद्गादिवटकसंधानं शांडाकी ५ शुक्तशांडाकोस्यामितरत्तच्च पिण्याकादिकृतं

गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ विरेकास्थापनालेपस्वेदादिषु च पूजितं ॥ दीपनं पाचनं भेदि तेषु गोमूत्रमुत्तमं ॥ श्वासकासहरं छागं पूरणात्कर्णशूलजित् ॥ दध्यात्क्षारे किलासे च गजवाजिसमुद्भवं ॥ हंत्युन्मादमपस्मारं क्रमीन्मेहं च रासभं ॥ कषायतिक्तमेतेषां हिध्माश्वासहरं शकृत् ॥ मार्गमोजःक्षयहरं वह्निकरं वातरोगनुत्॥प्रसहानामपस्मारमुन्मादं च नियच्छति॥ महामृगसमुद्भूतं कुष्ठहृज्जलचारिणां ॥ नेत्ररोगहरं पित्तं प्रवृद्धं च नियच्छति ॥ पित्तं तिक्तं क्रमिहरं रोचनं कफवातजित् ॥ तिक्तं पामाहरं मूत्रं मानुषं तु विषापहं॥ इति मूत्रवर्गः॥ तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात्॥ इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ इति द्रवद्रव्यविज्ञानीयो नाम षष्ठोऽध्यायः ॥ ६ ॥

अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ॥ रक्तोमहान् सकलमस्तूर्णकः शकुनाहृतः॥सारामुखो दीर्घशूको रोध्रशूकः सुगंधकः॥ पुंड्रः पांडुः पुंडरीकः प्रमोदो गौरशारिवौ ॥ कांचनो महिषः शूको दूषकः कुसुमांडकः ॥लांगला लोहवालाख्याः कर्दमाः शीतभीरुकाः ॥ पतंगास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ॥ शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ महांस्तस्यानु कलमस्तं चाप्यनु ततः परे ॥ तस्मादल्पांतरगुणाः क्रमशः शालयोऽवराः ॥ यवका हायनाः पांशुबाष्पनैषधकादयः ॥ स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ॥ सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निंदिताः॥ स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः॥ षष्टिकौ व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥ततः क्रमान्महाव्रीहिकृष्ण-

१ दध्यात्क्षये इतिसर्वांगसुंदरायांपाठः २ कंडनेन विना शुक्ला हैमंताः शालयः स्मृता इति भावप्रकाशे ३ वार्षिकाः कंडिताः शुक्ला व्रीहयश्चिरपाकिन इतिच ॥ सर्वांगसुंदरायां तु । क्षुण्णः सितः स्मृतः शालीरक्तोव्रीहिरुदाहृतइति

व्रीहिजनूमुखाः ॥ कुक्कुटांडकलावाख्यपारावतकसूकराः ॥ वरकोद्दालकोज्वालचीनशारददर्दुराः ॥ गंधनाः कुरुविंदाश्च ॥ गुणैरल्पांतराः स्मृताः ॥ स्वादुरम्लविपाकोन्यो व्रीहिः पित्तकरो गुरुः ॥ बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ कंगुकोद्रवजूर्णाह्वगर्मूटीचूर्णशादिकाः ॥ श्यामाकतोयश्यामाकहस्तिश्यामाकशिंबिराः ॥ शिंबिरो दारुनीवारवरूकूबरकोत्कटाः ॥ मधूली शांतनुः संडिवेणुपर्णी प्रशांतिका ॥ गवेधुकांडलौहित्यतोदपर्णीमुकुंदकाः ॥ कफपित्तहरा रूक्षाः कषायमधुरा हिमाः ॥ वातला बद्धविण्मूत्रा लघवो लेखनात्मकाः ॥ भग्नसंधानकृत्तत्र प्रियंगुर्बृंहणी गुरुः ॥ कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ॥ उद्दालकस्तु वीर्योष्णो नीवारः श्लेष्मवर्द्धनः ॥ शीतवीर्या विशेषेण स्निग्धा वृष्या मधूलिका ॥ रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ॥ वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफान् जयेत् ॥ पीनसश्वासकासोरुस्तंभकंठत्वगामयान् ॥ गुणैर्न्यूनतरा ज्ञेया यवादेव यवाह्वयाः ॥ उष्णाः सरा वेणुयवाः कषाया वातपित्तला ॥ वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ॥ संधानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ पथ्या नंदीमुखी[1] शीता कषाया मधुरा लघुः ॥ इति शूकधान्यवर्गः ॥ शिंबिजा मुद्गमंगल्यवनमुद्गमकुष्ठकाः ॥ मसूरचवलाढक्यश्चणकाश्च पृथग्विधाः ॥ कषायस्वादुलघवो विबंधाध्मानकारिणः ॥ रूक्षा बद्धमलाः शीता विपाके कटुका हिताः ॥ पित्तासृक्कफमेदस्सु सूपालेपादियोजनात् ॥ सूप्यानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः ॥ हरितास्तेष्वपि वरा मकुष्ठाः कृमिकारिणः ॥ वर्ण्याः परं प्रलेपाद्यैर्मसूरा ग्राहिणो भृशं ॥ राजमाषो गुरुर्भूरिशकृद्रूक्षोऽतिवातलः ॥ कषायस्वादुरूक्षोष्णाः कुलत्था रक्तपित्तलाः ॥ पीनसश्वासकासार्शोहिध्माऽऽनाहकफानिलान् ॥ घ्नंति

---

1 दीर्घसूक्ष्मो गोधूमो नंदीमुखी ( खपले गहूं )

शुक्राश्मरीं शुक्रं दृष्टिं शोफं तथोदरं ॥ ग्राहिणो लघवस्तीक्ष्णा विपाकेऽम्ला विदाहिनः ॥ निष्पावस्तु सरो रूक्षः कषायमधुरो गुरुः ॥ पाकेऽम्लो वातविष्टंभी स्तन्यमूत्रास्रपित्तकृत् ॥ उष्णो विदाही दृक्शुक्रकफशोफविषापहः ॥ माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ॥ गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ फलानि माषवद्विद्यात्काकांडोलात्मगुप्तयोः ॥ कुशाम्रशिंबी मधुरा वातपित्तहरा हिमा ॥ मधुराः शीतला गुर्व्यो बलघ्न्यो रूक्षणात्मिकाः ॥ स्नेहाढ्या बलिभिर्भोज्या विविधाः शिंबिजातयः ॥ स्निग्धोष्णतिक्तकटुकः कषायमधुरस्तिलः ॥ मेध्यः केश्यो गुरुर्वर्ण्यः स्पर्शशीतोऽनिलापहः ॥ अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत् ॥ कृष्णः प्रशस्तस्तमनु शुक्लस्तमनु चारुणः ॥ स्निग्धोमा[3] स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ॥ दृक्शुक्रहृत्कटुः पाके तद्वद्बीजं कुसुंभजं ॥ माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ नवं धान्यमभिष्यंदि सेक्यं केदारजं च यत् ॥ लघु वर्षोषितं दग्धभूमिजं स्थलसंभवं ॥ शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितं ॥ इति शिंबीधान्यवर्गः ॥ मंड[4]पेयाविलेपीनामोदनस्य च लाघवं ॥ यथापूर्वं शिवस्तत्र मंडो वातानुलोमनः ॥ तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ॥ स्रोतोमार्दवकृत्स्वेदी संधुक्षयति चानलं ॥ क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ मलानुलोमनी पथ्या पेया दीपनपाचनी ॥ विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥ व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनां ॥ सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ॥ यश्चाग्नेयौषधक्काथसाधितो भृष्टतंदुलः ॥ विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ॥ इतिसंयोगसंस्कारै-

---

१ निःशूका कपिकच्छुः २ सशूका कपिकच्छुः ( कवचबीज ) ३ उमा अतसी
४ सिक्थैर्विरहितो मंडः पेया सिक्थसमन्विता ॥ घनसिक्था विलेपी स्यादिति

स्न्नान्यन्यानि चादिशेत् ॥ शुष्यतां व्याधियुक्तानां शुद्धानां शुद्धिकांक्षिणां ॥ कृशक्षामक्षतोरस्कक्षीणधात्विंद्रियौजसां ॥ दृष्टिश्रवणवन्ध्यायुर्बलवर्णस्वरार्थिनां ॥ मर्मविश्लिष्टसंधीनां व्रणिनां वातरोगिणां ॥ हृद्यः पथ्यः परं वृष्यो बृंहणः प्रीणनो रसः ॥ मौद्गस्तु पथ्यः संशुद्धव्रणकंठाक्षिरोगिणां ॥ वातानुलोमी कौलत्थोगुल्मतूनीप्रतूनिजित् ॥ प्रभूताभ्यंतरमलो माषयूषः परं स्मृतः ॥ खलकांबलिकौ हृद्यौ छेदिनौ स्रोषधानुगौ ॥ पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः ॥ मूलैश्च तिलकल्काम्लप्रायः कांबलिकः स्मृतः ॥ ज्ञेया कृता कृतास्ते तु स्नेहादियुतवर्जिताः ॥ अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः ॥ विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरं॥ गौरवं तनुसांद्राम्लस्वादुष्वेषु पृथक् तथा ॥ तिलपिण्याकविकृतिः शुष्कशाकं विरूढकं[1] ॥ शांडाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥ पर्पटा लघवोरुच्या लघीयान् क्षारपर्पटः ॥ हृद्या वृष्या रुचिकरा गुरवो रागखांडवाः[2]॥ प्रीणना श्रमतृट्छर्दिमदमूर्च्छाश्रमच्छिदः॥ तृट्छर्दिश्रमनुन्मंथः[3] शीतः सद्यो बलप्रदः ॥ प्रमेहक्षयकुष्ठानि न च स्युर्मंथपायिनः ॥ रसाला[4] बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ॥ विष्टंभि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ॥ कासपित्तोपशमना दीपना लघवो हिमाः ॥ पृथुका गुरवो बल्याः कफविष्टंभकारिणः ॥ धाना[5] विष्टंभिनी रूक्षा तर्पणी लेखनी गुरुः ॥ कंठनेत्रामयक्षुत्तृट्श्रमच्छर्दिव्रणापहा ॥ सक्तवो[6] लघवः पानात्सद्यएव बलप्रदाः ॥ निचयात्कठिना गुर्वी प्रोक्ता पिंडी मृदुर्लघुः ॥ सक्तूनां द्रवतायोगाल्लघीय-

---

१ अंकुरितधान्यं २ सितामध्वाद्यिमधुरा रागास्तत्राच्छकांतयः ॥ ते साम्लाः खांडवा लेह्याः पेयाश्चांशुकगालिताइतितंत्रांतरे ३ द्रवालोडिताः ससर्पिष्काः सक्तवो मंथः ४ शिखरिणी ५ भृष्टयवादिधान्यं ६ भृष्टानां निस्तुषाणां यवानां चूर्णः

स्यवलेहिका ॥ शष्कुलीमोदकादीनां व्याख्यातैवं च कल्पना ॥ नोदकांतरितान्न द्विर्न निशायां न केवलान् ॥ न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ॥ कर्कंधुबदरार्दीनां श्रमतृष्णाक्लमच्छिदः ॥ सक्तवोऽम्लरसा हृद्या यथाद्रव्यगुणाश्च ते ॥ पिण्याको ग्लपनो रूक्षो विष्टंभी दृष्टिदूषणः ॥ वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ॥ मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥ कुकूलखर्परभ्राष्ट्रकंदुंगारविपाचितान् ॥ एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरं ॥ धारीकेंडरिकाद्याश्च गुरवश्च यथोत्तरं ॥ इति कृतान्नवर्गः ॥ हरिणैणकुरंगर्श्यगोकर्णमृगमातृकाः ॥कालपुच्छकचारुष्कवरपोतशशोरणाः ॥ श्वदंष्ट्रामशरभकोहकारकशंबराः ॥ करालकृतमालौ च पृपतश्च मृगाः स्मृताः ॥ लाववर्तीकवार्तीररक्तवर्त्मककुभाः ॥ कपिंजलोपचक्राख्यचकोरकुरुबाहवः ॥ वर्त्तको वर्तिका चैव तित्तिरः क्रकरः शिखी ॥ ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः ॥ तथा सारपदेंद्राभवरटाश्चेति विष्किराः ॥ शतपत्रो भृंगराजः कोयष्टिर्जीवजीवकः ॥ खंजरीटकहारीतदुर्नामारिकुशा गृहाः ॥ लट्वा लडूषो वटहा गोक्ष्वेडो डिंडिमाणवः ॥ जटी दुंदुभिपाकीरलोहपृष्ठकुलिंगकाः ॥ सारिकाशुकशार्ङ्गाख्यचिरीटीककुयष्टिकाः ॥ मंजूलीयकदात्यूहगोपापुत्रप्रियात्मजाः ॥ कलविंकः परभृतः कपोतोऽगारचूडकः ॥ पारावतः पाणविक इत्युक्ताः प्रतुदा द्विजाः ॥ श्वेतः श्यामश्चित्रपृष्ठः कालकः काकुली मृगः ॥ भेकचिल्लटकूचीकागोधाशल्लकशंडकाः ॥वृषाहिकदलीश्वाविन्नकुलाद्या बिलेशयाः ॥ गोखराश्वतरोष्ट्राऽश्वद्वीपिसिंह-

१ नागरधान्यकाजाजिहिंगुघृतादिसंस्कृतं कुट्टितं मांसं २ श्वभ्राकारमुत्तानं मृन्मयपात्रं कुकूलं ॥ तदेव न्युब्जं खर्परं ॥तदेव सच्छिद्रं भ्राष्ट्रं ॥ लोहमयंन्युब्जंकंदु ॥ अंगारशब्देन अंगारपूर्णं पात्रं हसंत्यादि ३ विकीर्यभक्षयंति ते विष्किराः ४ प्रतुद्य भक्षयंति ते प्रतुदाः ५ बिले शेरते वसंति ते बिलेशयाः

श्वेवानराः ॥ मार्जारमूषकव्याघ्रवृकबभ्रुतरक्षवः ॥ लोपाकजंबुक-
श्येनचाषोलूकश्ववायसाः ॥ शशघ्नीभासकुररगृध्रवेश्यकुलिंगकाः ॥
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥ महिषन्यंकुरोहीतवराह-
रुरुवारणाः ॥ सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ हंससारस-
कादंबबककारंडवप्लवाः ॥ मृणालकंठचक्राह्वबलाकारक्तशीर्षकाः ॥
उत्क्रोशपुंडरीकाक्षशरारीमणितुंडिकाः ॥ काकतुंडघनारावमद्गुक्रौंचा-
बुकुकुटाः ॥ नंद्यास्यमल्लिकाद्याश्च पक्षिणो जलचारिणः ॥ मत्स्या
रोहितपाठीनकूर्मकुंभीरकर्कटाः ॥ शुक्तिशंखोद्रशंबूकशफरीवर्मि-
चंद्रिकाः ॥ चुलुकीनक्रमकरशिशुमारतिमिंगिलाः ॥ राजीचिलिचि-
माद्याश्च मांसमित्याहुरष्टधा ॥ योनिष्वजावी व्यामिश्रगोचरत्वाद-
निश्चिते ॥ आद्यांत्या जांगलानूपा मध्यौ साधारणौ स्मृतौ ॥ विकी-
र्यादिक्रियायोगैर्भक्षणाद्विष्किरादयः ॥ तत्र बद्धमला रुच्या मांसा-
नामुत्तमा हिमाः ॥ कषायस्वादुविशदा लघवो जांगला हिताः ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ताम्रोऽत्र हरिणः कृष्ण-
स्त्वेणो हृद्यस्त्रिदोषजित् ॥ लघीयान् षड्रसश्चासौ ग्राही रूक्षो हि-
मः शशः ॥ कटुपाकोऽग्निकृत्पथ्यः सन्निपातेऽनिलावरे ॥ तद्व-
ल्लावोऽप्यरूक्षस्तु किंचिद्रूक्षः कपिंजलः ॥ पारावताः कपोता-
श्च तद्वदन्याः सुपूजिताः ॥ ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकाद-
यः ॥ तित्तिरिस्तेष्वपि वरो मेधाऽग्निबलशुक्रकृत् ॥ ग्राही वर्ण्यो
ऽनिलोद्रिक्तसन्निपातहरः परं ॥ धन्वानूपविचारित्वात्स्निग्धोष्णगुरुबृं-
हणः ॥ नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशां ॥ तद्वच्च
कुकुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ॥ मेधानलकरा हृद्याः
क्रकराः सोपचक्रकाः ॥ गुरुः सलवणः काणकपोतः सर्वदोषकृत् ॥
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरं ॥ मूत्रशुक्रकृतो बल्या वा-

१ प्रसह्य हत्वा भक्षयंति ते प्रसहाः

तघ्नाः कफपित्तलाः ॥ शीता महामृगास्तेषु[1] क्रव्यादाः प्रसहाः पुनः ॥
चक्षुष्याः सृष्टविण्मूत्रा मांसलाः कटुपाकिनः ॥ जीर्णार्शोग्रह-
णीदोषशोषार्तानां परं हिताः ॥ गोधा नियच्छति विषं मूषकः शु-
क्रवर्द्धनः ॥ शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ॥ कार्श्यं
केवलवातांश्च गोमांसं संनियच्छति ॥ चटकाः श्लेष्मलाः स्नि-
ग्धा वातघ्नाः शुक्रलाः परं ॥ गुरूष्णो महिषः स्निग्धः स्वमदा-
र्ढ्यबृहत्वकृत् ॥ तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ हंसः स्वरकरः
पित्तरक्तजिन्मधुरो हिमः॥ कफपित्तकरा मत्स्याः परं पवननाशनाः ॥
प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च ॥ रोहितः प्रवरस्तेषां परं चि-
लिचिमोऽवरः ॥ अगोचरविचारित्वात्सर्वदोषकरो हि सः ॥ कुलीरः
परमं वृष्यो बृंहणः प्रीणनो गुरुः ॥ नातिशीतगुरुस्निग्धं मांसमा
जमदोषलं ॥ शरीरधातुसामान्यादनभिष्यंदि बृंहणं ॥ विपरीतमतो
ज्ञेयमाविकं बृंहणं तु तत् ॥ अतिमेद्यं त्यजेन्मांसं हतं व्याधिविषो-
दकैः ॥ स्वयं मृतं धूमपूर्णमगोचरमृतं कृशं ॥ सद्योहतं वयस्थं च
शुद्धं सुरभि शस्यते ॥ एणः कुरंगो हरिणः शशो लावः कपिंजलः ॥
तित्तिरिः क्रकरो गोधा श्वाविद्बभ्रो मृगाधिपः ॥ बर्हिणः सारिका-
न्यंकुर्हंसो रोहितकच्छपौ ॥ वर्मी चाग्र्यः स्ववर्गेषु[2] प्रवरास्तेष्वपि
स्मृताः ॥ लावेणगोधाः सिंहश्च[1] निंदितो गौः सदर्दुरः ॥ कृष्यः काण-
कपोतश्च[1] शेषमुक्तं यथायथं ॥ गुरूण्यंडानि[1] बालानां कषायलवणं
पलं ॥ वृद्धानां स्नायुभूयिष्ठमबल्यं गुरु दोषलं ॥ पुंस्त्रियोः पूर्वपश्चा-
र्द्धे गुरुणी[1] गर्भिणी गुरुः ॥ लघुर्योषिच्चतुष्पात्सु विहंगेषु पुनः पुमान्॥
शिरःस्कंधोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवं ॥ तथाऽऽमपक्काशय-
योर्यथापूर्वं विनिर्दिशेत् ॥ शोणितप्रभृतीनां तु धातूनामुत्तरोत्तरं ॥
मांसाद्गरीयो वृषणमेंढ्रवृक्कयकृद्गुदं ॥ इति मांसवर्गः ॥ शाकं पाठा-

१ मांसभक्षकाः २ नित्यशैवालभक्षत्वादितिपाठः ३ अत्यंतपुष्ट

शठी सूषा सुनिषण्णसतीनजं ॥ त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकं ॥ सुनिषण्णो ऽग्निकृद्वृष्यस्तेषु[1] राजक्षवः परं ॥ ग्रहण्यर्शोविकारघ्नो[1] वर्चोभेदि तु वास्तुकं[1] ॥ हंति दोषत्रयं कुष्टं वृष्या सोष्णा रसायनी ॥ काकमाची सरा स्वर्या[1] चांगर्यम्ला ऽग्निदीपनी ॥ ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ॥ पटोलसप्तलारिष्टशार्ङ्गेष्टाऽवल्गुजाऽमृताः ॥ वेत्राग्रबृहतीवासाकुंतलीतिलपर्णिका ॥ मंडूकपर्णीकर्कोटकारवेल्लकपर्पटाः ॥ नाडीकलायगोजिह्वावार्ताकं वनतिक्तकं ॥ करीरं कुलकं नंदी कुचैला शकुलादनी ॥ कटिल्लं केंबुकं शीतं सकोशातककर्कशं ॥ तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥ हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदं ॥ पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयं ॥ वृषं तु वमिकासघ्नं रक्तपित्तहरं परं ॥ कारवेल्लं सकटुकं दीपनं कफजित्परं ॥ वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ॥ सक्षारमग्निजननं हृद्यं रुच्यमपित्तलं ॥ करीरमाध्मानकरं कषायं स्वादु तिक्तकं ॥ कोशातकावल्गुजकौ भेदनावग्निदीपनौ[1]॥ श्यामाशाल्मलिकाश्मर्यफंजीकर्णकयूथिकाः ॥ वृक्षादनीक्षीरिवृक्षाविंबीतनिकवृक्षकाः ॥ लोध्रः शणः कर्बुदारः ससेलुर्विषमुष्टिका ॥ भल्लातकः कोविदारः कमलोत्पलकिंशुकं ॥ पटोलादिगुणं स्वादु कषायं पित्तजित्परं ॥ बद्धमूत्रं सरा फंजी करीरं स्यादभीरुजं ॥ सतिक्तं लघु चक्षुष्यं वृष्यं दोषत्रयप्रणुत् ॥ तंडुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥ मदपित्त विषासृग्घ्नो मुंजातं वातपित्तजित् ॥ स्निग्धं शीतं गुरु स्वादु बृंहणंशुक्रकृत्परं ॥ पालंक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा ॥ मदघ्न्युपोदका चंचुर्ग्राही तौ पूर्ववत्तथा ॥ विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ॥ जीवनी बृंहणी कंठ्या गुर्वी वृष्या रसायनी ॥

१ पूर्वोक्तपटोलादिगणगुणयुक्तं

चक्षुष्या सर्वदोषघ्नी जीवंती मधुरा हिमा ॥ शाकानां प्रवरा न्यूना द्वितीया किंचिदेव तु ॥ वातपित्तहरा भंडी पर्वणी पर्वपुष्पिका ॥ कूष्मांडतुंबकालिंगकर्कारुर्वारुतिंडिशं ॥ तथा त्रपुसचिनाकचिर्भटं कफवातकृत् ॥ भेदि विष्टंभ्यभिष्यंदि स्वादुपाकरसं गुरु ॥ वल्लीफलानां प्रवरं कूष्मांडं वातपित्तजित् ॥ बस्तिशुद्धिकरं वृष्यं त्रपुसं त्वतिमूत्रलं ॥ तुंबं रूक्षतरं ग्राहि कालिंगैर्वारुचिर्भटं ॥ बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ॥ शीर्णवृंतं तु सक्षारं पित्तलं कफवातजित् ॥ रोचनं दीपनं हृद्यमष्ठीलाऽऽनाहनुल्लघु ॥ मृणालबिसशालूकशृंगाटककसेरुकाः ॥ नंदीमाषककेलूटक्रौंचादनकलोड्यकं ॥ सतरुढं कदंबं च रूक्षं ग्राहि हिमं गुरु ॥ कलंबनालिकामार्षकुटिंजरकुतुंबकं ॥ चिल्लीनिष्पावलट्वाककुरुटकगवेधुकाः ॥ जातुका सालकल्याणी त्रिपर्णी पीलुपर्णिका ॥ कुमारजीवलोणीकाथवशाकं सुवर्चला ॥ कुकुंडनलिनीमुष्टकधूमकलक्ष्मणं ॥ आलुकानि च सर्वाणि तथा सूप्यानि रालकः ॥ जीवंतकश्चंचुपर्णी प्रपुन्नाटकुठेरकं ॥ स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ॥ शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥ स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलं ॥ लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ॥ तर्कारीवरुणं स्वादु सतिक्तं कफवातजित् ॥ वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकं ॥ दीपनं भेदनं हंति गरशोफकफानिलान् ॥ दीपनाः कफवातघ्नाश्चिरबिल्वांकुराः सराः । लघुरुष्णा सरा तिक्ता सोरुबूका च लांगली ॥ वातलौ कटुतिक्ताम्लौ भेदिनौ तिलवेतसौ ॥ तद्वत्पंचांगुलो वंशकरीरास्तु विदाहिनः ॥ वातपित्तकरा रूक्षाः कटुपाकाः कफापहाः ॥ बिल्वरास्नाबलाशाकं वातघ्नमतिसारजित् ॥ वायुं वत्सादनी हन्यात्कफं कंजीरचिञ्चकौ ॥ पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ॥ कृमिकासकफोत्क्लेदान्कासमर्दो जयेत्सरः ॥

रूक्षोष्णमम्लं कौसुंभं गुरु पित्तकरं सरं ॥ सक्षारमधुरं स्निग्धमुष्णं गुरु च सार्षपं ॥ शाकानामवरं बद्धविण्मूत्रं सर्वदोषकृत्[1] ॥ यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकं ॥ तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ॥ गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥ स्वराग्निसादोदावर्तपीनसांश्च[1] महत्पुनः ॥ रूक्षोष्णं कटुकं स्वादु विपाके सर्वदोषकृत् ॥ गुर्वभिष्यंदि च स्निग्धसिद्धं तदपि वातजित् ॥ वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलं ॥ कटूष्णो वातकफहा पिंडालुः पित्तवर्द्धनः[1] ॥ कुठेरशिग्रुसुरसहुमुखाऽऽसुरिभूस्तृणाः ॥ धान्यतुंबरुशैलेययवानीशृंगबेरिकाः ॥ पर्णाशो गृंजनोऽजाजी कंडीरो जलपिप्पली ॥ फणिज्झार्जकजंबीरखराश्वाकालमालिकाः ॥ दीप्यकक्षवकद्वीपिबस्तगंधादि बद्धविट् ॥ रसे पाके च कटुकं दोषोत्क्लेशकरं लघु ॥ विदाहि रूक्षं तीक्ष्णोष्णं दृक्शुक्रकृमिनाशनं ॥ वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते ॥ वासनो व्यंजनानां च हृद्यो दीपनरोचनः ॥ हिध्माकासविषश्वासपार्श्वरुक्पूतिगंधहा ॥ सुरसः सुमुखः शोफगरहा धानका पुनः ॥ कषायतिक्तमधुरा मूत्रला न च पित्तकृत् ॥ खराश्वा बस्तिशूलघ्नी चित्रको दीपनः परः ॥ पत्रे सक्षारमधुरो मध्ये मधुरपिच्छिलः ॥ तीक्ष्णोष्णो लशुनः कंदे कटुपाकरसः सरः ॥ हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो दीपनपाचनः ॥ भग्नसंधानकृद्बल्यो रक्तपित्तप्रदूषणः ॥ किलासकुष्ठगुल्मार्शोमेहकृमिकफानिलान् ॥ सहिध्मापीनसश्वासकासान्हंति रसायनं ॥ पलांडुस्तद्गुणैर्न्यूनो विपाके मधुरस्तु सः ॥ कफं करोति नो पित्तं केवलानिलनाशनः ॥ दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ विशेषादर्शसां पथ्यो भूकंदस्त्वतिदोषलः ॥ पुष्पे पत्रे फले नाले कंदे च गुरुता क्रमात् ॥ वरा शाकेषु जीवंती सार्षपं त्वरं परं ॥ इति शाकवर्गः ॥ द्राक्षा फलोत्तमा

१ २ ( तोंडीलावणी [1]चटण्याकोशिंबिरीवगैरे )

वृष्या चक्षुष्या सृष्टमूत्रविट् ॥ स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ॥ निहंत्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥ उद्रिक्तपित्तान् जयति त्रीन् दोषान्स्वादु दाडिमं ॥ पित्ताविरोधि नात्युष्णमम्लं वातकफापहं ॥ सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनं ॥ मोचखर्जूरपनसनारिकेलपरूषकं ॥ आम्रातताल‌काश्मर्यराजादनमधूकजं ॥ सौवीरबदरांकोलफल्गुश्लेष्मातकोद्भवं ॥ वातामाभिषुकाक्षोडमुकूलकनिकोचकं ॥ उरुमाणं प्रियालं च बृंहणं गुरु शीतलं ॥ दाहक्षतक्षयहरं रक्तपित्तप्रसादनं ॥ स्वादुपाकरसं स्निग्धं विष्टंभि कफशुक्रकृत् ॥ नारिकेलं गुरु स्निग्धं पित्तघ्नं स्वादु शीतलं ॥ बलमांसकरं हृद्यं बृंहणं बस्तिशोधनं ॥ मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलं ॥ रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ॥ स्निग्धं स्वादु कषायं च राजादनफलं गुरु ॥ फलं तु पित्तलं तालं सरं काश्मर्यजं हिमं ॥ शकृन्मूत्रविबंधघ्नं केश्यं मेध्यं रसायनं ॥ मधूकजमहृद्यं तु बदरं सरणाल्पकं ॥ वातामाद्युष्णवीर्यं तु कफपित्तकरं सरं ॥ परं वातहरं स्निग्धमनुष्णं तु पियालजं ॥ पियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ कोलमज्जा गुणैस्तद्वच्छर्दितृट्कासजिच्च सः ॥ तिंदुकाश्मंतकासीनफलिनीबिंबतोदनं ॥ टंकाश्वकर्णबकुलगांगेरुधवधन्वनं ॥ श्वेतपाकं कपित्थानि सिंचतीभव्यजांबवं ॥ क्षीरिवृक्षफलं बीजं पौष्करं कफपित्तजित् ॥ कषायमधुरं रूक्षं शीतलं गुरु लेखनं ॥ विबंधाध्मानजननं स्तंभनं वातकोपनं ॥ कपित्थमामं कंठघ्नं कषायाम्लं त्रिदोषकृत् ॥ पक्कं रुच्यं कषायाम्लं स्वादु हिध्मावमिप्रणुत् ॥ दोषघ्नं खांडवारिष्टरागयुक्तिषु पूजितं ॥ विषघ्नमुभयं ग्राहि कपित्थाद्येवमादिशेत् ॥ बृंहणं वातपित्तघ्नं स्निग्धं सिंचतिकाफलं ॥ भव्यं विशदमम्लं च जा-

१ पित्तोदासीनमित्यर्थः

घ्नं त्वतिवातलं ॥ विष्टंभकृदकंठ्यं च साम्लं तु क्षीरिवृक्षजं ॥ पित्तश्लेष्मघ्नमम्लं च वातलं चाक्षकीफलं ॥ बालं कषायकट्वम्लं रूक्षं वातास्रपित्तकृत् ॥ संपूर्णमाम्रमम्लं तु रक्तपित्तकफप्रदं ॥ [1]स्वादु साम्लं गुरु स्निग्धं मारुतघ्नमपित्तलं ॥ हृद्यं पर्यागतं श्लेष्ममांसशुक्रबलप्रदं ॥ सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः ॥ दीपनः पित्तवातघ्नः शुक्रशोणितशुद्धिकृत्॥कषायं रोचनं हृद्यं वातलं लवलीफलं॥ गुर्वग्निसादकृद्बिल्वं दोषलं पूतिमारुतं ॥ पक्वं बालं पुनस्तीक्ष्णं पित्तलं लघु दीपनं ॥ वातश्लेष्मघ्नमुष्णं च स्निग्धं ग्राह्युभयं परं ॥ वृक्षाम्लं ग्राहि रूक्षोष्णं लघु रोचनदीपनं ॥ वातश्लेष्महरं किंचिदूनं कोशाम्रजं ततः ॥ फलं करंजं विष्टंभि पित्तश्लेष्मा विरोधि च ॥ गुरूष्णमधुरं रूक्षं केशघ्नं च शमीफलं ॥ कटुपाकरसं पीलु तीक्ष्णोष्णं भेदि पित्तलं ॥ कृमिगुल्मोदरगरप्लीहार्शः कफवातजित् ॥ सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ॥ नीपं शताक्षिकं प्राचीनामलं तृणशूल्यकं ॥ अस्मादल्पांतरगुणमैंगुदं सविकंकतं ॥ त्वक् तिक्ता कटुका स्निग्धा मातुलुंगस्य वातजित् ॥ बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥ लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥ आस्यशोषानिलश्लेष्मविबंधच्छर्द्यरोचकान् ॥ गुल्मोदरार्शःशूलानि मंदाग्नित्वं च नाशयेत् ॥ भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलं॥ तदस्थ्यग्निसमं मेध्यं कफवातहरं परं ॥ स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ॥ रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकं ॥ पक्वमाशु जरां याति नात्युष्णं गुरु दोषलं ॥ द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदं ॥ गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकं ॥ तथाऽम्लं कोलकर्कंधुलिकुचाम्रातकारुकं ॥ ऐरावतं दंतशठं सतूदं मृगलिंडिकं ॥ नाति पित्तकरं पक्वं शुष्कं च करम-

[1] पक्वं

दकं ॥ दीपनं भेदनं शुष्कमम्लिकाकोलयोः फलं ॥ तृष्णाश्रम क्लमच्छेदि लघ्विष्टं कफवातयोः ॥ फलानामवरं तत्र लिकुचं सर्वदोषकृत् ॥ हिमानलोष्णदुर्वातव्याललालादिदूषितं ॥ जंतुजुष्टं जले मग्नमभूमिजमनार्तवं ॥ अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽपि च ॥ धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलं ॥ असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ प्रायेण फलमप्येवं तथाऽऽमं बिल्ववर्जितं ॥ इति फलवर्गः ॥ शूकशिंबिजपक्वान्नमांसशाकफलाश्रयैः ॥ वर्गैरन्नैकदेशोऽयं भूयिष्ठमुपयोगवान् ॥ निर्दिष्टो रसवीर्याद्यैर्यथास्वं कर्मसाधने ॥ न शक्यं विस्तरेणापि वक्तुं सर्वं तु सर्वथा ॥ हिताहितत्वेऽप्येकांतनियमोऽस्मादनिश्चितः ॥ मात्रायोगक्रियादेशकालावस्थादिभेदतः ॥ ततस्ततो यतो दृष्टास्ते ते भावास्तथा तथा ॥ मात्रया सेवितं मद्यं हंति रोगांस्तदुद्भवान् ॥ निषेव्यमाणं तिलशो विषमप्यमृतायते ॥ हीनातिमात्रमशनं मरुन्निचयकोपनं ॥ भजतो विषरूपत्वं तुल्यांशे मधुसर्पिषी ॥ क्षारोऽम्लरससंयोगे मधुरी भवति क्षणात् ॥ उत्तुंडक्यास्तिंदुकेन तिक्तता मधुरायते ॥ हिंगुगैरिकसिंधूत्थं गंधवर्णरसाधिकं ॥ पूगतांबूलशंखेभ्यो वर्णगंधरसोद्भवः ॥ कोद्रवो हंत्यसृक्पित्तं करोत्येव विदाहिभिः ॥ कुष्ठं तत्कार्यपि तिलो हंति भल्लातकैः सह ॥ गुडः कर्त्ताऽग्निसादस्य स हिनस्त्यभयादिभिः ॥ तृष्यत्यग्नौ संमदनं सर्पिरप्युपदिश्यते ॥ जीवनीयमपि क्षीरं विषलेशेन मृत्यवे ॥ तुल्ये अपि हतोऽन्योन्यं विषे स्थावरजंगमे ॥ सक्तवो वातला रूक्षाः पीतास्ते तर्पयंति तु ॥ विनाऽपि चोपयोगेन मणिमंत्रादि कार्यकृत् ॥ आर्द्रकाज्जायते शुंठी संस्कारेण लघीयसी ॥

१ सर्पादिसविषप्राणी व्यालः २ तिलस्य कुष्ठकारित्वमभ्यवहारविषये
३ ससिक्थक

लघुभ्योऽपि हि सक्तुभ्यो गुरवः सिद्धपिंडिकाः ॥ भृष्टः क्षुण्णोऽपि पृथुको रक्तशालेर्लघोर्गुरुः ॥ शालिः पिष्टो गरीयस्त्वं गोधूमादपि गच्छति ॥ लघुपित्तहरा लाजा ब्रीहितो गुरुपित्तलात् ॥ संग्राहिणो लघोर्मुद्गात्कुल्माषो[1] भेदनो गुरुः ॥ आमं ग्राहितरं तक्रं ततव-लीकृतमन्यथा ॥ गुडात्तोयाच्च सुतरां मूत्रलं गुरु पानकं ॥ गरीयो गुडदध्युक्तं रसाला चातिशुक्लता ॥ दंडाभिमथनाद्दध्नो गुरुणंश्वा-तिशोफदात् ॥ अनुद्धृतस्नेहमपि तक्रं शोफहरं लघु ॥ सर्पिः स्नि-ग्धतरं हंति नार्दितं नवनीतवत् ॥ चक्षुष्योऽपि हि गोधूमस्तैलप-क्वस्तु दृष्टिहा ॥ मूलकं दोषजननं स्निग्धसिद्धं त्वदोषलं[2] ॥ उष्णं वि षीभवत्येव विषघ्नमपि माक्षिकं ॥ दुर्भाजनस्था द्राक्षाऽम्ला दोषला-च प्रजायते ॥ श्लक्ष्णशुष्कघनोलेपश्चंदनस्यापि दाहकृत् ॥ त्वगग-तस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः ॥ मेध्यस्तिलः स्पर्शशीतो ऽमेध्यं तैलं खलोऽहिमः ॥ तस्यैव श्लेष्मकारित्वं न तैलस्य खल-स्यवा ॥ दध्नः श्वयथुकारित्वं न तक्रनवनीतयोः ॥ भूमिसात्म्यं द-धिक्षीरकरीरं मरुवासिषु ॥ क्षारः प्राच्येषु मत्स्यास्तु सैंधवेष्वश्मके-षु तु ॥ तैलाम्लं कंदमूलादि मलये कोंकणे पुनः ॥ पेया मंथउदी-च्येषु गोधूमोऽवंतिभूमिषु ॥ बाल्हीका बाल्हवाश्चीना शूलीका य-वनाः शकाः ॥ मांसगोधूममार्द्वीकशस्त्रवैश्वानरोचिताः ॥ देहसात्म्यं घृतं क्षीरं मद्यं मांसं च कस्यचित् ॥ पेया यूषो रसोऽन्यस्य गोधू-मोऽन्यस्य शालयः ॥ अहितैरपि तेषां च तैरवोपहितं हितं ॥ अ-न्नपानौषधं दोषमात्राकालाद्यपेक्षया ॥ सात्म्यं ह्याशु बलं धत्ते नातिदोषं च बव्हपि ॥ स्रंसनं सत् पयो गव्यं भवति ग्राहि कस्य-चित् ॥ मंदोऽग्निर्भवति प्रायः कफवातोत्तरे हिमे ॥ विषघ्नेनापि प-यसा देहेऽहेर्वर्द्धते विषं ॥ स्थूलस्थविरबालादौ वमनादि निषिध्यते ॥

---

१ अर्द्धस्विन्नं मुद्गादिधान्यं कुल्माषः २ सिद्धं तु तददोषलमितिपाठः

तक्रमामं कफं कोष्ठे हंति कंठे करोति तु ॥ वातहृत्वेऽपि मृद्वीका-
खर्जूरं कोष्ठवातकृत् ॥ नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशां॥
दृष्टेः स्पर्शेहिमं द्रव्यं श्रोत्रस्योष्णं तु पूजितं ॥ पयः स्वादु सरं
शीतं विपरीतं ततो दधि ॥ कालेन जायते तस्मात्क्षीरवच्च पुनर्घृ-
तं ॥ पयो दधि च वातघ्नमजातं वातलं तु तत् ॥ तक्रं ग्राहि कषा-
याम्लमम्लमेव तु भेदनं ॥ धातकीगुडतोयानि कारणं मद्यसुक्त-
योः ॥ शीते न तु तदाद्यंते स्निग्धाम्ललवणा हिताः ॥ उदमंथदिवा-
स्वप्नौ ग्रीष्मादन्यत्र गर्हितौ ॥ समयोगेऽपि घर्माद्या वातादिचयहे-
तवः ॥ ऋतुष्वन्यो रसेष्वन्यो रूक्षस्नेहबलक्रमः ॥ रसायनी-
काकमाची सद्यः पर्युषिता विषं ॥ मूलकं दोषजिद्बालं विपरीतं तु
कंदवत् ॥ ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनं ॥ षडहं षडहं
युंज्याद्वीक्ष्य रोगबलाबलं ॥ छर्दिहृद्रोगगुल्मार्तौ वमनं च चिकित्सि-
तं ॥ निषिद्धमपि निर्दिष्टं ॥ बस्तिरर्शसकुष्ठिनोः ॥ ज्वरे तुल्यर्तु-
दोषत्वं प्रमेहे तुल्यदूष्यता ॥ रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेत-
वः ॥ आश्चोतनमभिष्यंदे युंजीतोर्ध्वं दिनत्रयात् ॥ अंजनं पक्वदो-
षस्य प्रतिश्याये च नावनं ॥ नातिप्रवृद्धे तिमिरे सिरामोक्षो वि-
धीयते ॥ दुष्टास्रसंभवेऽपीष्टो नास्रपित्ते सिराव्यधः ॥ अपथ्यं
पथ्यमप्यन्नं निशायां नेत्ररोगिणां ॥ अहिताः सक्तवः शुष्का
हिता स्ते तु प्रमेहिणः ॥ गुल्मिनः क्षीरदध्यादि हपुषाद्यैर्युतं हि-
तं ॥ वातलं वातकोपेऽपि वर्षासु मधु शस्यते ॥ तदेव मद्यं मद्यस्य
विषस्य तु विषांतरं ॥ घृतमानूपदेशोत्थं हेमंते च बलाधिकं ॥ आ-
लस्यगौरवे रूपं वातजेऽपि ज्वरे पुरः ॥ स्वेदैर्याति शमं दाहः प्रायो-
लशुनपाकजः ॥ दिवास्वप्नाज्जरां याति भुक्तमन्येद्युरद्य न ॥ को-
ष्ठे रूक्षो ऽग्निरुद्वायुर्मेदसाऽर्शोभिरग्निहृत् ॥ दुष्पानं दुर्जरं सर्पिर्दी-

१ दोषबलाबलमितिपाठः २ पानहृदितिपाठः

पनं च पयोऽन्यथा ॥ सर्पादिशवकोथेभ्यो वृश्चिकानां समुद्भवः ॥ ते तैरेव पुनर्दष्टाः सद्यो मुंचंति जीवितं ॥ स्वयमेवविषं तीव्रं तान्पुनर्नातिबाधते ॥ सर्वांगव्यापि तेषां च शुक्रवत्संसृतं विषं ॥ तन्मांसमुपयोगाय मांसवर्गे च पठ्यते ॥ छर्दिघ्नी मक्षिकाविट् च मक्षिकैव तु वामयेत् ॥ कफे लंघनसाध्येऽपि कर्तारि ज्वरगुल्मयोः ॥ तुल्येऽपि देशकालादौ लंघनं न समंजसं ॥ सर्वथा दोषजित्तक्रं ग्रहण्यां दोषकृद्व्रणे ॥ पीनसश्वासकासादौ सिद्धमेव प्रशस्यते ॥ इत्येतेऽन्ये च बहवः सूक्ष्मा दुर्लभहेतुकाः ॥ कर्म वैचित्र्यभावेषु किंचित्तेषां निदर्शितं ॥ दिशाऽनया शेषमपि स्वयमूहेत बुद्धिमान् ॥ न शास्त्रमात्रशरणो न चानालोचितागमः ॥ इति मात्रादिप्रकरणं ॥ इत्यन्नस्वरूपविज्ञानीयो नाम सप्तमोऽध्यायः ॥ ७ ॥

अथातोऽन्नरक्षाविधिमध्यायं व्याख्यास्यामः ॥ ईश्वराणां वसुमतां विशेषेण तु भूभुजां प्रायेण मित्रेभ्योऽप्यमित्रा भूयांसो भवंति॥ ततस्तत्प्रयुक्ताः समासन्नवर्तिनो ऽन्नपानादिषु विषं प्रयच्छंति ॥ स्त्रियश्च तत्प्रणिधिप्रयुक्ताः सौभाग्यलोभेन ॥ तस्माद्राजा कुलीनं स्निग्धमाप्तमास्तिकमार्यमार्यपरिग्रहं दक्षं दक्षिणं निभृतं शुचिमनुद्धतमनलसमव्यसनिनमनहंकृतमकोपनमसाहसिकं वाक्यार्थावबोधकुशलं निष्णातमष्टांगे यथाऽऽम्नायमायुर्वेदे सुविहितयोगक्षेमं सन्निहितागदादियोगं सात्म्यज्ञं च प्राणाचार्यं परिगृह्णीत॥ तमर्थमानाभ्यां यथाकालं गुरुमिव शिष्यः पितरमिव पुत्रः पूजयेत्॥प्रतिकूलमपि तद्वचः सांप्रतं मतमिति प्रति मन्येत ॥ न हि भद्रोऽपि गजपतिर्निरंकुशः श्लाघनीयो जनस्य॥ तस्मात्तदायत्तमाहारविहारं प्रति चात्मानं कुर्यात् ॥ उपात्तमपि खलु जीवितमुपायबलेन स्वसमयमधितिष्ठति ॥ अपिच ॥ बहुपरिग्रहा नरपतयः संति चाशुकारिणः शूलसंन्यासादयः प्र-

१ धर्माविचित्रभागेष्वितिपाठः २( गुप्तहेर) ३ परिग्रहः परिजने पत्न्यामिति मेदिनी

तिक्षणं प्रत्यवेक्षणीयावस्थाश्च रोगिणो विशेषेण राजानः ॥ ते हि प्रमादपरिगता दुःखासहिष्णवश्च स्वयमप्यपथ्यरुचयः सन्निहिता हितप्रियवचनप्रायपरिवाराश्च ॥ तस्माद्भिषजो राजा राजगृहासन्ने निवेशनं कारयेत् ॥ तथाहि ॥ सर्वोपकरणेषु नृपतिशरीरोपयोगिष्वपरोक्षवृत्तिर्भवति ॥ स सम्यक्संपन्नमन्नं सुपरीक्षितं विशुद्धमग्न्यादिषु प्रागुपनीतं शिखिना दृष्टमभिप्रोक्षितं प्रोक्षणैः पुरस्थितो राजानं हस्तबद्धौषधिरत्नं भोजयेत्॥भुंजानस्यास्य दुंदुभीनगदप्रलिप्तान्वादयेत् ॥ तत्र सविषमन्नं स्राव्यमानमविस्राव्यं भवति चिरेणपच्यते पक्कं च सद्यः पर्युषितमिव निरूष्मस्तब्धं च जायते यथास्ववर्णगंधरसैर्व्यापद्यते प्रक्लिद्यते चंद्रिकाचितं च भवति ॥ व्यंजनानामाशु शुष्कत्वं भवति क्काथस्य ध्यामता हीनातिरिक्तविकृतानां चात्र छायानां दर्शनमदर्शनमेव वा फेनपटलसीमंतकोर्ध्वविविधराजितंतुबुद्बुदप्रादुर्भावः ॥ विशेषेण लवणोल्वणे फेनमाला ॥ रसस्य मध्ये नीला राजी ॥ पयसस्ताम्रा ॥ मद्यतोययोः काली ॥ दध्नः श्यावा ॥ तक्रस्याऽऽनीलपीता ॥ मस्तुनः कपोताभा ॥ धान्याम्लस्य कृष्णा ॥ द्रवौषधस्य कपिला ॥ घृतस्य सलिलाभा ॥ क्षौद्रस्य हरिता ॥ तैलस्यारुणा वसागंधश्च ॥ फलानामामानां पाकः ॥ पक्कानां प्रकोथः ॥ द्रव्याणामार्द्राणां सहसा म्लानत्वमन्यत्वभावः ॥ शुष्काणां श्यावता वैवर्ण्यंच॥ कठिनानां म्रदिमा॥ मृदूनां कठिनत्वं ॥ माल्यस्य म्लानता गंधनाशः स्फुटिताग्रत्वं ॥ आस्तरणप्रावरणानां ध्याममंडलता तंतुरोमपक्ष्मसदनं च ॥ लोहमणिमयानां पंकमलोपदेहः स्नेहरागगौरवप्रभावर्णस्पर्शनाशश्च ॥ विषदस्तु स्वदोषशंकया त्रस्तो भीतः स्वेदवेपथुमान् शुष्कश्याववक्त्रः समंतात्सोद्वेगं विलक्षोऽभिवीक्षते ॥ यत्र चानेन विषं प्रयुक्तं तद्विशेषेण॥ तथा स्रस्तोत्तरीयः स्तंभकुड्या-

---

१ प्रोक्षणमंत्रैः २ वार्त्ताकादीनि दधिनक्रदाडिमादिसंस्कृतानि ३ मलिनता

दिग्भिरात्मानमंतर्धत्ते स्वलितगतिर्दीनो लज्जावानस्थानगामी पृष्टोऽसंबद्धमुत्तरं ददाति नैव वा विवक्षुर्मुह्यत्यंगुलीः स्फोटयति ग्रीवामालभते शिरःकंडूयत्योष्ठौ परिलेढि जृंभते भुवं लिखति क्रियासु त्वरते विपरीतमाचरति स्वभूमौ च नावतिष्ठते॥नृपाज्ञया त्वरयाऽपि केचिदपराधांतराद्वाऽनवस्थितसत्त्वाः समाचरंत्येवं ॥ तस्मादन्याद्दिष्वपि परीक्षेत ॥ वन्हिस्तु सविषमन्नं प्राप्यैकावर्तो रूक्षमंदार्चिरिंद्रायुधवदनेकवर्णज्वालो भृशं चटचटायते ॥ कुणपगंधी धूमश्चास्य मूर्च्छाप्रसेकरोमहर्षशिरोवेदनापीनसदृष्ट्याकुलताः जनयति ॥ तत्र नलदकुष्ठलामज्जकैः क्षौद्रप्लुतैर्नस्यमंजनं च कुर्यात् ॥ धूममेव वाऽपामार्गविडंगबलाद्वयचित्रकमेषशृंगीपुष्पसुमनः[2]क्षारकद्राक्षाघृतगुडकृतं पिबेत् ॥ स्नेहलवणयोगादपि चाग्निरित्थं स्यात् ॥ अतो वयोभिः[4] परीक्षेत ॥ तत्र विषजुष्टाहाराभ्यवहारात्काकाः क्षामस्वरा भवंति ॥ मक्षिकाः सविषान्ने न निलीयंते ॥ निलीना वा विपद्यंते ॥ दृष्टएव चास्मिंश्चकोरस्याक्षिणीविरज्येते ॥ कोकिलस्य स्वरो विकृतिमेति ॥ हंसस्य गतिः स्खलति ॥कूजति भृंगराजः ॥ माद्यति क्रौंचः ॥ विरौति कृकवाकुः ॥ विक्रोशति शुकः ॥ सारिका च छर्दयति ॥ चामीकरोऽन्यतो याति ॥कारंडवो म्रियते ॥जीवंजीवको ग्लायति॥हृष्टरोमा भवति नकुलः ॥ शकृद्विसृजति वानरो रोदिति पृषतो हृष्यति मयूरो दर्शनादेव चास्य विषं मंदतामुपैति ॥ विषदूषितस्य पुनराहारस्योष्मा मयूरकंठाभोऽभ्युदेति ॥ तद्बाष्पेण धूमवन्मूर्च्छादयः ॥ तेषां तद्वदेव साधनं ॥ हस्तेन स्पृष्टमन्नं विषवद्दाहशोफस्वापनखशातान्करोति ॥ तत्र श्यामेंद्रगोपसोमोत्पलैर्लेपः ॥ अभ्यवन्हियमाणं त्वोष्ठचिमिचिमांतर्वक्त्रदाहजिव्हामूलगौरवहनुस्तं-

१ सविषान्नयुक्तवन्हेः २ सुमना मालती जातिरित्यमरः ३ क्षारको जालकं क्लीबे कलिका कोरकः पुमानिर्तिच ४ पक्षिभिः ५ शूलेतिपाठः

प्रदंतहर्षलालाः करोति रसापरिज्ञानंच ॥ तत्र धूमोक्तं दंतकाष्ठोक्तं च कर्म ॥ आमाशयगतं स्वेदमदमूर्च्छाच्छर्दिवैवर्ण्याध्मानरोमहर्षदाहारुचिदृष्टिहृदयोपरोधान् बिंदुभिश्चाचयमंगानां करोति ॥ तत्र मदनफलालाबुबिंबीकोशातकीफलैर्दधिमधुयुक्तमाशु वमनं दद्यान्निष्पावांबुभिर्वा ॥ ततः स्निग्धशरीरं विरेचयेत् ॥ त्रिफलात्रिकटुनागपुष्पमधुकबर्हिणपर्णीबृहतीद्वयचूर्णं सिंहव्याघ्रवृकतरक्षुऋक्षद्वीपिमार्जारशृगालमृगगोधानामन्यतमपित्तयुक्तं सक्षौद्रं पानमेष जीवनो नामाऽगदः परं सर्वविषौषधं ॥ तस्मिन् जीर्णे व्योषातिविषासिद्धां पयसा घृतेन चोपस्तंभितां यवागूं पाययेत् ॥ परिणतायां च तस्यां त्रिकटुकसिद्धेन मुद्गयूषेण किंचिल्लवणेन ससर्पिष्केण मृदुमोदनं भोजयेत् ॥ मधुकशिरीषचंदनैश्चैनमालिंपेत् ॥ पक्काशयगतं तृड्दाहमदमूर्च्छातीसाराटोपतंद्रेंद्रियविकृतिबलभ्रंशकार्श्यपांडुत्वोदराणि जनयति ॥ तत्र नीलिनीफलयुक्तेन सर्पिषा विरेचनं ॥ समाक्षिकं च दूषीविषारिं दध्ना पाययेत् ॥ दंतकाष्ठप्रयुक्ते तु विषे कूर्चकविशरणमौषधगंधो रूक्षता जिव्हादंतौष्ठमांसशोफश्च ॥ तत्र प्रच्छाय धातकीपुष्पजांबवास्थिहरीतकीचूर्णैः सक्षौद्रैः सप्तच्छदकल्केन वा प्रतिसारणं कुर्यात् ॥ दाडिमकरमर्दभव्याम्राम्रातककोलबदररसं क्षौद्रयुतं गंडूषं ॥ अनेन जिव्हानिर्लेखनकवलगंडूषा व्याख्याताः ॥ अंजनप्रयुक्तेऽश्रुदूषिकोपदेहदाहरागवेदनादृष्टिविभ्रमा भवंत्यांध्यं च ॥ तत्र सर्पिःपानं योज्यं ॥ शृतेन पयसा सप्तकृत्वः पिप्पलीर्भावयेत् ॥ ततस्तत्कल्केन सर्पिर्विपक्कं नेत्रतर्पणं ॥ कपित्थमेषशृंगीभल्लातकानां पुष्पैर्वरणनिर्यासेन चांजनं ॥ बृहतीशिरीषबीजप्रपौंडरीकनागबलाचूर्णं सप्तकृत्वो मधुना भावयेत् ॥ तच्च स्रोतोंजनसुवर्णचूर्णयुक्तमंजनं ॥ नस्यधूमप्रयुक्ते शिरोरुक्कफास्रावः खे-

१ बिंदाकारैः स्फोटैः २ प्रच्छानं कृत्वा ( फांसण्याटाकून ) ३ दूषिका नेत्रमलः

भ्योरुधिरागमनमिंद्रियवैकृतं च ॥ तत्रातिविषाश्वेताकाकमाचीमदयंतिकाकल्कक्षीरसिद्धं सर्पिर्नस्ये पाने च विदध्यात् ॥ अभ्यंगप्रयुक्ते त्वग्दाहस्वेदपाकस्फोटावदरणानि॥ तत्र शीतांबुपरिषिक्तस्य चंदनतगरोशीरकुष्ठवेणुपत्रिकाऽमृतासोमवल्लीश्वेतापद्मकालेयकैरनुलेपनं ॥ एतान्येव च सकपित्थरसगोमूत्राणि पानं॥गिरिकर्णिकाश्वेतमूलाप्रियंगुसारिवामधुकसर्पसुगंधामृगैर्वारुमूलानि शेलुक्काथपिष्टानि प्रलेपः॥अनेनोद्वर्त्तनोद्घर्षणपरिषेकानुलेपनभूषणयानशय्याऽऽस्तरणवस्त्रकवचरथपादुकोपानत्पादपीठा व्याख्याताः ॥ विशेषतस्त्वाभरणकृते विकारेऽश्वगंधाऽपामार्गकिणिहीखदिरशिरीषकल्कैर्गोपित्तप्रयुक्तैः प्रदेहः ॥ पादपीठकृते श्लेष्मातकसर्पसुगंधाकल्को मधुयुक्तः॥ छत्रप्रयुक्ते स्फोटानां क्षिप्रपाकानां पक्वजांबवप्रकाशानां प्रादुर्भावः॥ तत्र मधुकपाटलाकसेरुकरोध्रांजनकुष्ठसर्पसुगंधाखदिरशिरीषकल्कैः सर्वगात्रप्रदेहः॥ अनेन चामरव्यजने व्याख्याते ॥ शिरोभ्यंगप्रयुक्ते वेदना ग्रंथिजन्म केशच्यवनं च ॥ तत्र श्यामापालिंदीतंदुलीयकचूर्णघृतर्क्षपित्तैः सुभावितकृष्णमृत्प्रलेपः ॥ गोमयमालतीमूषिककर्ण्यन्यतमकल्को रसो वाऽगारधूमो वा ॥ श्लेष्मातकत्वक्पाटलाशिरीषमधुकहरिद्राद्वयैरजाक्षीरालोडितैः परिषेकः ॥ अनेन शिरःस्नानस्नपनोदककंकतकस्रगुष्णीषा व्याख्याताः॥ कर्णपूरणप्रयुक्ते शोफशूलपाकाः श्रोत्रवैगुण्यं च॥ तत्र बहुपत्रास्वरसो घृतक्षौद्रयुक्तः प्रतिपूरणं सोमवल्करसो वा सुशीतः ॥ मुखालेपप्रयुक्ते मुखस्य श्यावता पद्मकंटकाश्च भवंत्यभ्यंगजाश्च विकाराः ॥ तत्र मधुकपयस्याबंधुजीवकफंजीपुनर्नवाचंदनैः सघृतैर्लेपः सर्पिषः पानं च ॥ सविषपुष्पाघ्राणाच्छिरोव्यथा साश्रुनेत्रत्वं गंधाज्ञानं च ॥ तत्रानंतरोक्तो विधिर्बाष्पोदितश्चेति ॥ भवति चात्र ॥ फलमूलच्छदादीनां दद्यात्प्रक्षालनोद-

१ कंकतकं तु प्रसाधनमित्यमरमाला (फणी कंगवा) २ मधुसर्पिषोः पानंचेति पाठः

कं ॥ भाजनव्यंजनानां च तथा कुर्यादतंद्रितः ॥ ध्रेयाणि घ्रापयित्वा तु स्पृश्यान्संस्पृश्य तानपि ॥ प्रतिवापं ततो दत्वा प्रतीक्ष्येवैकनादिकां ॥ ततो विज्ञाय शुद्धिं च भाजनस्योदकस्य च ॥ आहारमुपयुंजीत यथावद्वसुधाधिपः ॥ मंदं तीक्ष्णविषाभ्याशाद्विषमुत्क्षीयते भृशं ॥ तस्मात्तीक्ष्णविषं हस्ते बध्नीयात्कुशलो भिषक् ॥ विषसंधारणं धन्यं रक्षोघ्नं प्रीतिवर्द्धनं ॥ अपिच ॥ सापधानघटीभूषाफलकस्थापितौषधं ॥ प्रागुदिच्योर्दिशोर्गुप्तं भैषज्यागारमिष्यते ॥ उच्चैः प्रशस्तदिग्देशं बहुवातायनं महत् ॥ महानसं सुसंमृष्टं विश्वास्यजनसेवितं ॥ सद्वाःस्थाधिष्ठितद्वारं कक्ष्यावत्सवितानकं ॥ सुधौतदृढकुंभादिपरिशुद्धजलेंधनं ॥ स्वकर्मकुशला दक्षाः सूदास्तत्राप्रमादिनः ॥ कृत्तकेशनखाः पित्र्या राज्ञः कृत्यैरसंगताः ॥ तेषामधिपतिर्विप्रः कुलजः सुपरीक्षितः ॥ संविभक्तश्च भक्तश्च शुचिर्वैद्यवशानुगः ॥ सर्वेऽपि भूभृदासन्नाः शस्ताः संततमीदृशाः ॥ मिथोविग्रहसंघातरहिता भूभृते हिताः ॥ तान्वैद्यो गुणवानेको मनसा प्रतिजागृयात् ॥ भूभृद्गृहोपकरणसंरक्षणसमुद्यतः ॥ अथाभ्यमित्र्यं भजतो जिगीषोर्वैद्यः सुसज्जौषधशस्त्रयंत्रः ॥ तुंगध्वजाख्यातनिवासभूमिर्युद्धागतं योधजनं चिकित्सेत् ॥ पंथानमुदकं छायां भक्तं यवसमिंधनं ॥ दूषयंत्यरयो यस्मात्तद्विद्याच्छोधयेत च ॥ प्रस्थानं वा निवेशं वा नाविज्ञाय प्रयोजयेत् ॥ भूवारितृणकाष्ठाश्ममार्गान्मार्गवनस्पतीन् ॥ विषेणोपहता भूमिः क्वचिद्दग्धेव लक्ष्यते ॥ प्रम्लानतृणगुल्मादिमृतकीटसरीसृपा ॥ विशीर्यंते खुरनखा दाहकंडूरुजान्विताः ॥ छर्दिर्मूर्च्छा ज्वरो मोहः शिरोदुःखं च जायते ॥ तत्र शोभांजनान्मूलं सोमवल्लीमुशीरकं ॥ मातु-

---

१ सान्निध्यात् २ कक्ष्यागृहप्रकोष्ठेभ्यादिति कोशः ३ यो गच्छत्यलंविद्विषतः प्रति ॥ सोऽभ्यमित्र्य इत्यमरः

लुंगरसं हिंगु पाययेद्दधि मात्रया ॥ मूत्राण्यजाविहस्तिभ्यो मांसानि-रुधिराणि च ॥ सर्वगंधैः समायोज्य पचेत्पक्के च निक्षिपेत् ॥ सोमराजीं सुनंदाख्यां सरलां गंधनाकुलीं॥ चारटीं त्रायमाणां च प्रोक्षयेत्तेन तांभुवं ॥ सविषं विरसं तोयं कवोष्णं राजिभिश्चितं ॥ फेनिलं गुरु वि-च्छिन्नं खगैरनभिनंदितं ॥ मृताकुलितमत्स्यं च स्पर्शाद्रुक्शोफकं कुरुत् ॥ ओदनः साधितस्तेन भुक्तमात्रो विदह्यते ॥ विदग्धः पच्यते कृच्छ्रात्पक्वो मूर्च्छाज्वरप्रदः ॥ दर्शयेत्सर्वतो नीलपीतलोहितकर्बुरं ॥ तत्र शिग्र्वादिमगदं भूमिदोषोदितं पिबेत् ॥ अजशृंगीं विशालाख्यां विषघ्नीमुत्तमारणीं ॥ फणिज्जकं प्रतिविषां दग्ध्वा तद्भस्म गालयेत् ॥ बहुशो गालितं तच्च पाचयेत्तत्र च क्षिपेत् ॥ कल्कयित्वा प्रतीवापं सरलां रजनीद्वयं ॥ एलामुदीच्यं मंजिष्ठां सुनंदां बाकुचीमपि ॥ पात्यंते बिंदवस्तस्माद्यत्र तन्निर्विषी भवेत् ॥ पाटलापारिभद्राश्वकर्णशम्याकशिग्रुकान् ॥ कलशांतर्गतान् दग्ध्वा प्रक्षिपेत्सविषेऽम्भसि ॥ शीते घर्मो हिमश्चोष्णे मारुतो विषसंयुतः ॥ भ्रममूर्च्छादिकारी च शिग्र्वादिस्तत्र चेष्यते ॥ देवदारुनतानंतामधुकांजनगैरिकं ॥ वज्रकंदं लतां लोध्रं विकिरेत् श्लक्ष्णचूर्णितं ॥ वृक्षाग्रेषु पताकासु दूष्येषु[1] सुमहत्सु च ॥ सर्वतश्चूर्णसंपर्कान्निर्विषो जायतेऽनिलः ॥ विकृता भवति च्छाया पादपे विषदूषिते ॥ निर्गंधमतिगंधं वा तत्पुष्पं हृच्छिरोरुजं ॥ कुर्यात् फलपलाशादि कंडूपाकातिसारकृत् ॥ भूमीमुद्दिश्य यत्प्रोक्तं तत्सर्वं तत्र शस्यते ॥ न च कन्यामविदितां संस्पृशेदपरीक्षितां ॥ विविधान्कुर्वते योगान्कुशलाः खलु-मानवाः ॥ आजन्मविषसंयोगात्कन्या विषमयी कृता ॥ स्पर्शोच्छ्वासादिभिर्हंति तस्यास्त्वेतत्परीक्षणं ॥ तन्मस्तकस्य संस्पर्शान्म्लायेते पुष्पपल्लवौ ॥ शय्यायां मत्कुणैर्वस्त्रे[2] यूकाभिः स्नानवारिणा ॥ जंतुभि-

१ दूष्याद्यं वस्त्रवेश्मनीत्यमरः ॥ ( तंबूइति लोके ) २ तद्वस्त्रकेशसंस्पर्शादिति पाठः

म्रियते ज्ञात्वा तामेवं दूरत स्त्यजेत् ॥ नाप्रोक्षितं नाविदितं भिषजा नानवेक्षितं ॥ नाप्राशितं च सूदाद्यैः किंचिदाहारयेन्नृपं ॥ धन्यं सर्वार्थसिद्धाख्यं पापरक्षोविषापहं ॥ परं चक्षुष्यमायुष्यं शत्रुघ्नं वक्ष्यतेऽजनं ॥ अथ शुक्लपक्षे पुण्येऽहनि पुष्यपुनर्वसुहस्तचित्रामृगशिरःश्रवणरेवतीशतभिषक्प्राजापत्योत्तराणामन्यतमेन नक्षत्रेण योगमुपगते भगवत्यौषधिपतौ प्रशस्ते मुहूर्ते सिंधुस्रोतः समुत्थं स्निग्धं समभंगं धवर्णच्छेदैर्नीलोत्पलाभमंजनमाहरेत् ॥ तस्याष्टौ भागाः कनकरजतोदुंबराणामेकैको भागस्तत्सर्वं मूषायां प्रक्षिप्य बलिमंगलपूर्वकमग्निमुपसमाधाय खदिरकदरधवस्यंदनान्यतमदारुभिर्गोमयैर्वा प्रज्वालयेत् ॥ ततश्चार्यावलोकितेश्वरमार्यताराब्रह्मदक्षाश्विरुद्रेंद्रादित्यसोमवरुणवैश्वानरवायुविष्णुजनकभरद्वाजधन्वंतरिसुश्रुतभव्यसुकन्यास्कंदचवनवैनतेयानन्यांश्च यथाविध्युक्तदेवताः सुमनोऽक्षतलाजस्वस्तिकसंयावनिस्तुषयवसंस्कृतगुडघृतमिश्रपायसैरर्चयित्वा वृद्धवैद्यब्राह्मणांश्च शुक्लवाससो महतीभिर्दक्षिणाभिः पूजयित्वा तस्मिन्नग्नौ तदंजनं ध्मातं ध्मातमावर्त्य पृथक् पृथङ्निषेचयेद्गोशकृद्रसमूत्रघृतदधिक्षौद्रवसामज्जतैलमद्यसर्वगंधांबुशर्करोदकेक्षुरसेषु तथा हरीतक्यामलकबिभीतककाश्मर्यमृद्वीकाशृंगाटककसेरुकोत्पलनलिनसौगंधिकमृणालिकाक्काथेषु तथा लावकपिंजलैणशशहरिणकुलीररसेषु तथा मधुकचंदनकालानुसार्यनलदपद्मकोशीरमंजिष्ठाऽनंतागैरिककुंकुमोदकेषु ॥ ततः शुक्लवाससि बध्वा द्वादशसप्तमांतरिक्षेऽम्भसि वासयेत् ॥ ततश्छायायां विशोष्य स्फटिकमुक्ताप्रवालकालानुसार्यप्रतिवापं पुनरपि बलिमंगलपूर्वकं महद्वाससा कन्यया दृषदि पेषयित्वा सुवर्णरजतताम्रशंखशैलद्विरदरदनगवलवैदूर्यस्फटिकमेषशृंगासनसारान्यतमघटितायामंजनिकायां निधापयेत् ॥ अथ

१ गवलं माहिषं शृंगमित्यमरः ॥

पुनरपि पूर्ववत्कृतस्वस्त्ययनं सावित्रेण कर्मणा सर्वविद्द्विजन्मा विधिवत्तदग्निसंस्कुर्यात् ॥ ततो गजस्कंधमारोप्य पांडुरच्छत्रचामरवालव्यजनैरनुगतं तथा शंखदुंदुभिस्वनैर्द्विजातिवरप्रयुक्तैश्च वेदवादमिश्रैः पुण्याहघोषैः कृतपुष्पोपहारं वैद्यगृहान्नायकगृहमनुप्रवेशयेत् ॥ अनंतरं च तेन विदेहाधिपोपदिष्टेन सर्वार्थेषु सिद्धेनांजनेन यथोक्तानामेवांजनभाजनद्रव्याणामन्यतमया शलाकया गोब्राह्मणपूजापूर्वकं शुचिः सनियमो भूत्वा धारणीमिमां विद्यामधीयानः पूतः पूर्वमक्षि दक्षिणमंजयेत् ॥ नमश्चक्षुःपरिशोधनराजाय तथागतायार्हते सम्यक्संबुद्धाय ॥ तद्यथा ॥ ॐचक्षुःप्रज्ञाचक्षुर्ज्ञानचक्षुर्विज्ञानचक्षुर्विशोधय स्वाहा ॥ ततः परं तामेव धारणीमनुसंस्मरन् सायं प्रातः प्रत्यहं ॥ एतत्परमं पवित्रमारोग्यकरमूर्जस्करं सर्वविघ्नहरमंजनमश्विभ्यामिंद्रस्य वृत्रवधाभ्युदितस्य प्राक् प्रकल्पितं ॥ तस्मादेतद्राज्ञां राजमहामात्राणां च महीं विजिगीषमाणानां ब्राह्मणानां च वेदाध्ययनमन्यद्वा महच्छास्त्रमवगाहमानानां प्रसन्नमना भिषक् प्रकल्पयेदिति ॥ भवंति चात्र ॥ अथ योगाः प्रवक्ष्यंते बृहस्पतिकृताः शिवाः ॥ यान्सेवमानो नृपतिः शत्रुभ्यो नैति वंचनां ॥ बिल्वाढकीयवक्षारपाटलीबाल्हिकोषणाः ॥ श्रीपर्णीशाल्मलीयुक्ता निःक्काथः प्रोक्षणं परं ॥ सविषं प्रोक्षयेत्तेन सद्यो भवति निर्विषं ॥ यवसेंधनपानीयवस्त्रशय्यासनोदनं ॥ कवचाभरणच्छत्रवालव्यजनवेश्मच॥सेलुपाटल्यतिविषाशिग्रुगोपीपुनर्नवं ॥ समंगाविषमूलत्वक्कपित्थवृषशोणितं ॥ सहदंतशठं तद्वत्प्रोक्षणं विषनाशनं ॥ लाक्षाप्रियंगुमंजिष्ठासमंगाऽलहरेणुकाः ॥ सयष्ट्याह्वामधुयुता बभ्रुपित्तेन कल्किताः ॥ निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले ॥ ततः कृत्वा मणिं हेम्ना बद्धं हस्तेन धारयेत् ॥ संस्पृष्टं सविषं तेन

१ बभ्रुर्नकुलः

सद्यो भवति निर्विषं ॥ मनोह्वाऽलशमीपुष्पत्वङ्निशाश्वेतसर्षपाः ॥ कपित्थकुष्ठमंजिष्ठाः पित्तेन श्लक्ष्णकल्किताः ॥ शुनो गोः कपिलायाश्च सौम्याख्योऽयं वरोऽगदः ॥ विषजित्परमं कार्यो मणिरत्र च पूर्ववत् ॥ मूषकाजरुहा वाऽपि हस्ते बद्धा विषापहा ॥ हरेणुमांसीमंजिष्ठारजनीमधुकं मधु ॥ अक्षत्वक् सुरसं लाक्षा श्वपित्तं पूर्ववन्मणिः ॥ वादित्राणि पताकाश्च पिष्टैरेभिश्च लेपिताः ॥ श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः ॥ त्र्यूषणं पंचलवणं मंजिष्ठां रजनीद्वयं ॥ सूक्ष्मैलां त्रिवृतां पत्रं विडंगानींद्रवारुणीं ॥ मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत् ॥ तस्मादुष्णांबुना मात्रां प्राग्भक्तं योजयेत्तथा ॥ विषं भुक्तं जरां याति निर्विषेऽपि न दोषकृत् ॥ जतुसर्जरसोशीरसर्षपापत्रवालकैः ॥ संवेल्लारुष्करपुरैः[1] कुसुमैरर्जुनस्य च ॥ धूपो वासगृहे हंति विषं स्थावरजंगमं ॥ न कीटाः सविषास्तत्र नोंदुरा न सरीसृपाः ॥ न कृत्याः कार्मणाद्याश्च धूपोऽयं यत्र दह्यते ॥ शिखिपिच्छं बलाकास्थि सर्षपाश्चंदनं घृतं धूपो विषघ्नः शयनवसनासनगेहगः॥ विशालाव्योषमंजिष्ठायष्टीलवणपंचकं ॥ द्विनिशापत्रवेल्लैलात्रिवृच्चूर्णं समाक्षिकं ॥ पूर्वोक्तं त्र्यूषणादिं च ग्लानीयेंऽभसि योजयेत् ॥ क्वाथोऽथवाऽर्ककुसुमश्वेतापामार्गसर्षपैः ॥ सदध्याज्यः कृतो युक्तैः समाचीनाकुलीयकैः ॥ कल्को वा चंदनक्षीरिपलाशद्रुमवल्कलैः ॥ मूर्वैलवालुसुरसनाकुलीतंडुलीयकैः ॥ क्वाथः सर्वोदकार्येषु काकमाचीयुतैर्हितः ॥ रोचनापत्रनेपालीकुंकुमैस्तिलकान्वहून् ॥ विषैर्न बाध्यते स्याच्च नारीनरनृपप्रियः ॥ चूर्णैर्हरिद्रामंजिष्ठाकिणिहीकणनिंबजैः ॥ दिग्धं निर्विषतामेति गात्रमित्याह गौतमः ॥ नस्यपानांजनालेपैर्युज्यात् संजीवनादिकान् ॥ अगदान्विभजन्[2] तीक्ष्णानि वमनानि च ॥

---

1 सबिल्वारुष्करयवैरिति पाठः २ मनःशिला

पिप्पलीमधुकक्षौद्रशर्करेक्षुरसैः सह ॥ द्विनिशापत्रवेल्लैलात्रिवृ चूर्णं समाक्षिकं ॥ विरेचनं सिरामोक्षं प्राप्तं विस्रावणं यदि ॥ हृदयावरणं कार्यं प्रागेव हितमिच्छता ॥ पिबेद्घृतमजेयाख्यम-मृतं चाप्यभुक्तवान् ॥ सर्पिः क्षौद्रं दधि क्षीरमंनल्पः शीतलं जलं ॥ सितामधुकपालिंदीकल्कवन्मांसमिष्यते ॥ गोधाश्वहरि-णवभ्रूणां सकणाशुंठि पार्षतं ॥ सनागरं सातिविषं शिखिनः स-सितोपलं ॥ सुशीताः सघृताश्चैषां यथास्वं कल्पिता रसाः ॥ विषपी-ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ सूक्ष्मं ताम्ररजः काले सक्षौ-द्रं हृद्विशोधनं ॥ शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ न सज्जते हेमपांगे पद्मपत्रेंबुवद्विषं ॥ जायते विपुलं चायुर्गरेप्येष विधिः स्मृतः ॥ इत्थं विषगरादिभ्यो रक्षेद्वैद्यो नरेश्वरं ॥ स्यात्तदु-च्छेदउच्छेदः प्रजानां सर्वकर्मणां ॥ आज्ञाधैर्यक्षमात्यागा मानु-षत्वेऽप्यमानुषाः ॥ यद्राज्ञः[1] कर्मभिस्तस्मादाराध्योऽसावतींद्रियैः ॥ यत्र साक्षान्नृपस्तत्र विज्ञातः प्रविशेद्भिषक् ॥ न संमतोप्यनुचितं यानस्थानासनं भजेत् ॥ उचितं पुरतो राज्ञस्तिष्ठेद्वाक्यं न चाक्षि-पेत् ॥ अहीनकालं राजार्थं स्वार्थं प्रियहितैः सह ॥ देशे काले प-रार्थं च वदेद्धर्मार्थसंहितं ॥ नानुशिष्यादपृच्छंतं महदेतद्धि सा-हसं॥नाचरेदहितेनैनं मूलच्छेदकरं हितन्॥अनुकूलं हितं वाच्यमहि-ताद्वारयेन्मिथः॥उदारैः सांत्वयन्वाक्यैर्दोषश्चेत्तदुपेक्षया॥तूष्णीं वा प्र-तिवाक्ये स्याद्वर्जयेत् द्वेषसंकथां ॥ विपश्चिदप्यचित्तज्ञो बालिशोऽपि तु भाववित् ॥ अतिप्रियोपि द्वेष्योऽपि यात्याशु विपरीततां ॥ निवेद्य राज्ञे कुर्वीत कार्याणि सुलघून्यपि ॥ न यायान्नचिरं तिष्ठेत्कोशस्था-नावरोधयोः॥ स्वल्पेऽपि दर्शयेत्तुष्टिं लाभेऽनुद्धतमानसः॥मिथः कथ-नमन्येन कौलीनं[2] द्वंद्ववादितां ॥ वस्त्रादि राज्ञः सदृशं राजलीलां

---

१ यद्राजा कर्मभिस्तस्मादाराध्योऽसावतींद्रतैरिति पाठः २ लोकापवादं कुकर्म वा

च वर्जयेत् ॥ दत्तं यत्तु नृपेणैव तद्धार्यं तुष्टिवृद्धये ॥ हसितव्ये स्मितं कुर्यात्प्रभोरेवानुवृत्तितः ॥ उच्यमानेऽवलंबेत परमर्मणि मूकतां ॥ स्वमर्मणि तु बाधिर्यधैर्यमाधुर्यसौष्टवं ॥ अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितं ॥ पातो यथा हि दुःखाय नोच्छ्रायः सुखकृत्त-था[1]॥ आसन्नसेवा नृपतेः क्रीडा शस्त्राहिपावकैः ॥ कौशले-नातिमहता विनीतैः सा निरुध्यते ॥ प्राप्य दुष्प्रापमैश्वर्यं बहु-मानं च भूपतेः ॥ यथोपभुंजीत चिरं तथा स्यादप्रमादवान् ॥ विदध्यात्परितः शय्यां रक्षामंत्राभिमंत्रितान् ॥ रात्रौ सिद्धार्थकान् भूतिमक्षतैरन्वितां शुचिं ॥ रक्षाशक्तिं तथोच्छीर्षे सयवां-कुरयावकां ॥ सदूर्वं पूर्णकलशं सपुष्पफलपल्लवं ॥ उपहारं च सं-ध्यायां भुक्त्वाचांते निशासु च ॥ एतत्स्वस्त्ययनं कर्म कर्त्तव्यं शु-चिनाऽऽशु च ॥ आयुष्यं पौष्टिकं भूतविषकार्मणपाप्मजित् ॥ सं-क्षेप एष विषपालनसाधनाय प्रोक्तस्तु विस्तरविधिः पुनरुत्तरेषु ॥ आलोक्य सम्यगखिलं मतिपूर्वकारी युंजीत तं परिकलय्य वि-कारचिन्हं ॥ इति विषगररक्षोरक्षणायोपदेशं भजति नरपतिर्यो नि-त्यमेवाप्रमत्तः ॥ निजपुररिपुवृंदैरप्रधृष्यो महात्मा जनयति स ज-नानां क्षेमयोगौ चिराय ॥ इत्यन्नरक्षा० नामाष्टमोऽध्यायः ॥ ८ ॥

अथातो विरुद्धान्नविज्ञानीयमध्यायं व्याख्यास्यामः ॥ ग्रा-म्यानूपौदकपिशितानिमधुगुडतिलपयोमाषमूलकबिसैर्विरूढधान्यैश्च नैकध्यमद्यात् ॥ विशेषतः पयसा मत्स्यान् ॥ उभयं ह्येतन्मधुर-रसविपाकत्वादत्यभिष्यंदि शीतोष्णवीर्यत्वात्परस्परं विरुद्धं ॥ ते-ष्वपि विशेषेण चिलिचिमः ॥ स पुनः शकली लोहितनयनः सर्वतो लोहितराजिः प्रायो भूमौ विचरति ॥ सोऽत्यभिष्यंदितमत्वात्सुतरां-व्याधीनुपजनयत्यामविषं च ॥ सर्वं चाम्लं द्रवमद्रवं पयसैकध्यं विरु-

---

1 निरुध्यतइति पाठः

द्धं ततउत्तरं वा विरुद्धं फलं च ॥ कंगुवरकमकुष्टकुलत्थमाषनिष्पावा श्च ॥ न मूलकादि हरितकं भक्षयित्वा पयः सेव्यं कुष्टाबाधभयात् ॥ पौष्करं रोहिणीकं जातुकं वा शाकं सह मधुपयोभ्यां नाभ्यवहरेत् ॥ ताभ्यां च सह कपोतान् सर्षपतैलभृष्टान् ॥ तथा सर्षपतैलभृष्टानां मत्स्यवराहाणां मांसानि ॥ बदराणि श्वाविद्वराहमांसानि चैकध्यं ॥ पित्तेनाममांसानि ॥ दध्ना कुक्कुटं पृषतं च ॥ कुसुंभशाकेनौरभ्रं॥ सौवीरकेण तिलशष्कुलीः॥ क्षीरेण लवणं ॥ मूलकेन माषसूपं ॥ नवनीतेन[1] मूलशाकं ॥ उपोदकां मैरेयमार्द्वीकाभ्यां ॥ पीलूनि करीरैः ॥ बिसैर्विरूढकानि ॥ दध्ना माषसूपेन गुडेन मधुना घृतेन वा लकुचफलं ॥ दध्ना तक्रेण तालफलेन वा कदलीफलं ॥ पिप्पलीमरिचाभ्यां मधुना गुडेन वा काकमाचीं ॥ तामेव मत्स्यपचने शृंगबेरपचने वा भाजने सिद्धामन्यत्र नाभ्यवहरेत् ॥ ताभ्यां वा सिद्धां रात्रिमुषितां ॥ कांस्यभाजने दशरात्रोषितंसर्पिः ॥ मद्यदधिमधुभल्लातकेषु चोष्णं ॥ तक्रसिद्धः कांपिल्लको[2] विरुद्धः ॥ अंगारशूल्यो भासः ॥ सुराकृशरापायसाश्चैकध्यं विरुद्धाः ॥ मधुसर्पिर्वसातैलोदकानि समधृतानि द्विशस्त्रिशः समस्तानि वा ॥ मधुघृते वादिव्योदकानुपाने ॥ मधुपुष्करबीजं ॥ पद्मोत्तरिकाशाकं शार्करो मैरेयो मधु च सहोपयुक्तं सर्वं विरुद्धं वातं चातिकोपयनि ॥ हारिद्रकः सर्षपतैलभृष्टो विरुद्धः पित्तं चातिकोपयति ॥ पायसो मंथानुपानो विरुद्धः श्लेष्माणं चातिकोपयति ॥ उपोदका तिलकल्कसिद्धा हेतुरतिसारस्य ॥ बलाका वारुण्या कुल्माषैश्च विरुद्धा ॥ सैव वराहवसापरिभृष्टा सद्यो व्यापादयति ॥ गोधालावतित्तिरिमयूरकपिंजलाश्चैरंडदार्वग्निसिद्धा ऐरंडतैलसंमूर्च्छिताः ॥ हारीतमांसं हारिद्रशूलकावसक्तं हरिद्राग्निप्लुष्टं च ॥ तदेव भस्मपांशुपरिध्वस्तं सक्षौद्रं च ॥ तथा मत्स्यावि

१ नवनीतेन शाकमिति क्वचित्पाठः   २ रेचनद्रव्यविशेषः

स्खलनसिद्धाः पिप्पल्यः ॥ शीतोष्णं नवपुराणमामपक्वं च नैकध्य-मद्यात् ॥ सलिलाऽभ्यवगाहः सहसोष्णाभितप्तस्य त्वग्दृष्ट्योरुप-घाताय तृष्णाऽभिवृद्धये च ॥ तथैव च पयःपानं रक्तपित्ताय ॥ श-रीरेणायस्तस्य सहसाऽभ्यवहारश्छर्दिषे गुल्माय वा ॥ वाचा त्वाय-स्तस्य स्वरसादाय ॥ इत्यन्नपानद्रव्यविरोधैकदेशो बाहुल्येनोपयो-गी कथितः ॥ भेषजद्रव्याणां तु यथोपदेशमेव प्रयोगो न्याय्यतरः ॥ तद्विरोधः पुनरतिप्रसंगभयान्नोक्तः ॥ न च तद्विज्ञानमेकांतभद्रकं ॥ अपिच ॥ उत्क्लेश्य दोषान्नहरेद्द्रव्यं यत्तत्समासतः ॥ विरुद्धं तद्धि धातूनां प्रत्यनीकतया स्थितं ॥ बलिनां मिथोगुणानां विषमतया स-मतयाऽप्युभयथाऽपि ॥ संस्कारादिवशादपि भवति निसर्गादपि विरोधः ॥ क्षीरं कुलत्थैः पनसेन मत्स्यैस्तसं दधि क्षौद्रघृते समांशे ॥ वार्पूखरे रात्रिषु सक्तवश्च तोयांतरास्ते यवकास्तथैव ॥ कुशाग्रीय-धियामेतदुदाहरणमात्रकं ॥ उपनीतबलं विद्वान्सर्वत्र क्रमते यतः ॥ विस्फोटशोफमदविद्रधिगुल्मयक्ष्मतेजोबलस्मृतिमतींद्रियचित्तनाशा-न्॥कुर्याद्विरुद्धमशनं ज्वरमस्रपित्तमष्टौ गदांश्च महतो विषवच्च मृत्युं॥ तेष्वाशु कुर्यात्संशुद्धिं शमं वा तद्विरोधिभिः॥ द्रव्यैस्तैरेव वा पूर्वं शरी-रस्याभिसंस्कृतिं ॥ व्यायामस्निग्धदीप्ताग्निवयस्थबलशालिनां॥ विरो-ध्यपि न पिडायै सात्म्यमल्पं च भोजनं॥ दोषादिवैपरीत्येन हरंती रो-गिणो रुजं ॥ एकध्यं दधिदुग्धादियोजना न विरुध्यते ॥ योगादिभे-दाद्यद्वा पथ्यानामप्यपथ्यता ॥ तद्भेदांतरतस्तद्वद्विरोधोऽपि नि-वर्तते ॥ पादांशेन त्यजेत्सात्म्यमहितं हितमाचरेत् ॥ एकांतरं त-तश्चोर्ध्वं द्व्यंतरं त्र्यंतरं तथा ॥ क्रमेणानेन संत्यक्ता दोषाः संवर्द्धि-

१ वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः ॥ अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकी-र्तिताइति

ता गुणाः ॥ प्रभवंति न पीडायै प्राप्नुवंति स्थिरात्मतां ॥ त्रितयं चेदमुपष्टंभनमाहारः स्वप्नोऽब्रह्मचर्यं च ॥ एभिर्युक्तियुक्तैरुपष्टब्धमुपस्तंभैः शरीरं बलवर्णोपचयोपचितमनुवर्तते यावदायुषः संस्कारः ॥ तत्राहार उक्तो वक्ष्यते च ॥ कालादिसर्गप्रभवा तमोमूला तमोमयी ॥ बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥ श्लेष्मावृतेषु स्रोतःसु श्रमादुपरतेषु च ॥ इंद्रियेषु स्वकर्मभ्यो निद्राऽऽविशति देहिनं ॥ सर्वेंद्रियव्युपरतौ मनोऽनुपरतं यदा ॥ विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥ निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलं ॥ वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ॥ अकालेऽतिप्रसंगाच्च न च निद्रा निषेविता ॥ सुखायुषी पराकुर्यात्कालरात्रिरिवापरा ॥ सैव युक्ता पुनर्युंक्ते निद्रा देहं सुखायुषा ॥ योगाभियोगिनां बुद्धिर्निर्मला तपसा यथा ॥ रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ अरूक्षमनभिष्यंदित्वासीनप्रचलायितं ॥ ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ॥ दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः॥ मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ॥ क्रोधशोकभयैः क्लांतान् श्वासहिध्माऽतिसारिणः ॥ वृद्धबालाबलक्षीणक्षुत्तृट्शूलप्रपीडितान् ॥ अजीर्ण्यभिहतोन्मत्तान्दिवास्वप्नोचितानपि ॥ धातुसाम्यं तथा ह्येषां श्लेष्मा चांगानि पुष्यति ॥ बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ॥ विषार्तः कंठरोगी च नैव जातु निशास्वपि ॥ हलीमकशिरोजाड्यस्तैमित्यगुरुगात्रताः ॥ ज्वरभ्रममतिभ्रंशस्रोतोरोधाग्निमंदताः ॥ शोफारोचकहृल्लासपीनसार्द्धावभेदकाः॥ कंडूरुक्कोठपिटकाकासतंद्रागलामयाः ॥ विषवेगप्रवृत्तिश्च भवेदहितनिद्रया ॥ अपच्यमानो बाहुल्यात्स्रोतांस्यावृणुते कफः ॥ ततः स्रोतःसु रुद्धेषु जायते गात्रगौरवं ॥ गुरुगात्रस्य चालस्यमालस्यादतिनिद्रता ॥

१ स्नेकादीतिपाठः

विरेकः कायशिरसोर्वमनं रक्तमोक्षणं ॥ धूमक्षुत्तृड्व्यथाहर्षशोक-
मैथुनभीक्रुधः ॥ चिंतोत्कंठाऽसुखा शय्या सत्वौदार्यं तमोजयः ॥
रूक्षान्नं चाहितां निद्रां वारयंति प्रसंगिनीं ॥ एत एव च विज्ञेया
निद्रानाशस्य हेतवः ॥ कालशीलक्षयो व्याधिर्वृद्धिश्चानिलपित्तयोः ॥
निद्रानाशादंगमर्दशिरोगौरवजृंभिकाः ॥ जाड्यग्लानिभ्रमापक्तितंद्रा-
रोगाश्च वातजाः ॥ कफोऽल्पो वायुनोद्धूतो धमनीः संनिरुध्य तु ॥
कुर्यात्संज्ञापहां तंद्रां दारुणां मोहकारिणीं ॥ उन्मीलितविनिर्भुग्ने
परिवर्तिततारके ॥ भवतस्तत्र नयने स्रुते लुलितपक्ष्मणी ॥ अर्द्धत्रि-
रात्रात्सा साध्या न सा साध्या ततःपरं ॥ यथाकालमतो निद्रां रात्रौ-
सेवेत सात्म्यतः ॥ असात्म्याज्जागरादर्द्धं प्रातः स्वप्यादभुक्तवान् ॥
शीलयेन्मंदनिद्रस्तु क्षीरमिक्षुरसं रसं ॥ आनूपौदकमांसानां भक्ष्यान्
गौडिकपैष्टिकान् ॥ शालीन्मद्यानि माषांश्च किलाटान्माहिषं दधि ॥
अभ्यंगोद्वर्तनस्नानमूर्द्धश्रवणपूरणं ॥ चक्षुषस्तर्पणं लेपं शिरसो वदन-
स्य च ॥ प्रवाते सुरभौ देशे सुखां शय्यां यथोचिते ॥ संवाहनं स्पर्श-
सुखं चित्तज्ञैरनुजीविभिः॥सर्पिः क्षीरानुपानं च जीवनीयैः शृतं पिबेत्॥
कांताबाहुलताऽऽश्लेषो निर्वृत्तिः कृतकृत्यता ॥ मनोनुकूला विषयाः
कामं निद्रासुखप्रदाः ॥ ब्रह्मचर्यरतेर्ग्राम्यसुखनिस्पृहचेतसः ॥ निद्रा
संतोषतृप्तस्य स्वंकालं नातिवर्तते ॥ एतान्येव च भूयिष्ठं निद्रालुः प-
रिवर्जयेत् ॥ कालस्वभावाऽऽमयचित्तदेहखेदैः कफागंतुतमोभवा
च ॥ निद्रा बिभर्ति प्रथमा शरीरं पापात्मिका व्याधिनिमित्तमन्या ॥
ग्राम्यधर्मप्रवृत्तौ तु रजस्वलामनिष्टाचारामप्रशस्तामतिस्थूलामतिकृशां
गर्भिणीं सूतिकामनुत्तानां विकृतांगीं गणिकामप्रजसं दुष्टयोनि
मन्ययोनिमन्यस्त्रियं विशेषाच्च वयोवर्णवृद्धां सगोत्रां गुरुमित्रबंधुभृ-
त्यपत्नीं वर्णिनीं तथा चैत्यचत्वरचतुष्पथोपवनश्मशानायतनसलिलौ-
षधिद्विजगुरुसुरनृपालयेष्वह्नि गोसर्गे मध्यंदिनेऽर्द्धरात्रे पर्वदिने-

ष्वनंगे पिपासुरप्रणीतसंकल्पो वा न गच्छेत् ॥ विशेषेण चातिव्य-वायितां गर्भिणीं नवप्रसूतामृतुमतीं संवृतयोनिं च न विपरीतव्य-वाये योजयेत् ॥ मूर्द्धादिघातं च परिहरेत् ॥ न च निषेकाभिमु-खं शुक्रं धारयेत् ॥ मनःशरीरस्थितिमात्रमेव सेवेद्व्यवायं न च त-त्परः स्यादिति ॥ भवति चात्र ॥ विश्रब्धहृष्टो रहसि तत्कामस्तत्क्षणः पुमान् ॥ समस्थितांगः सुरभिर्मुक्तमूत्रादिरव्यथः ॥ नानाशितो नात्य-शितो वृष्याणां तर्पितस्त्र्यहात्॥नारीं नारीगुणैर्युक्तां सहपूर्वगुणां व्रजेत् त्र्यहाद्वसंतशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ सेवेत कामतः कामं हेमंते शिशिरे बली ॥ स्नानांगरागव्यजनेंदुपादमांसासवक्षीररसान् रसालां ॥ भक्ष्यान्सिताढ्यान्सलिलं सुशीतं सेवेत निद्रां च रतांततांतः ॥ स्त्रीसं-संसर्गाद्धि सद्यः स्यात्क्लीबता बलिनामपि ॥ एवं त्वाप्याय्यते शीघ्रं तेषां शुक्रं च धाम च ॥ दृष्ट्वाऽयुरोजःशुक्राणां क्षयं मेंढ्राश्रया-न्गदान् ॥ वायोः कोपमधर्मं च मूढः प्राप्नोत्यतोऽन्यथा ॥ उत्तानो वेगरोधी वा वृद्धिमेहाश्मशर्कराः ॥ तिमिरादिगदोत्पत्तिं मूर्द्धाद्या-हननाद्ध्रुवं ॥ श्रमक्लमोरुदौर्बल्यबलधात्विंद्रियक्षयाः ॥ अपर्वमरणं च स्याद्विशेषेणातिमैथुनात् ॥ न चर्तेषोडशाद्वर्षात्सप्ततेः परतो न च ॥ आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥ अतिबालो ह्यसंपूर्णसर्वधातुः स्त्रियं व्रजन् ॥ उपतप्येत सहसा तडागमिव का-जलं ॥ शुष्कं रूक्षं यथा काष्टं जंतुजग्धं विजर्जरं ॥ स्पृष्टमाशु विशीर्येत तथा वृद्धः स्त्रियं व्रजन् ॥ कायस्य तेजः परमं हि शुक्र-माहारसारादपि सारभूतं ॥ जितात्मना तत्परिरक्षणीयं ततो वपुः संततिरप्युदारा ॥ अप्रमत्तो भजेद्भावांस्तदात्वसुखसंज्ञकान् ॥ सु-खोदर्केषु सज्जेत देहस्यैतदलं हितं ॥ प्रज्ञापराधोऽसात्म्यार्थसंयोगः कालवैकृतं ॥ हितेऽपि रतमाहारे योजयंत्यामयैर्नरं ॥ नापथ्यसेविनं

१ त्र्यहादित्यष्टांगहृदये पाठः

सद्यः प्रबाधंते तदा मलाः ॥ प्रकोपं प्रतिबध्नंति भिन्नैर्दूष्यादिभिर्यदा ॥ न च सर्वोपचारोऽपि सर्वदा सर्वदोषहृत् ॥ न हि सर्वाण्यपथ्यानि तुल्यदोषाणि नैव च ॥ सर्वे तुल्यबला दोषा न सर्वाणि वपूंषि च ॥ व्याधिक्षमत्वे शक्तानि यतोऽपथ्यं तदेव तु ॥ गच्छत्यपथ्यतामतां तुल्यदूष्यादिवर्द्धितं ॥ त एव च पुनर्दोषा हेतुभिर्बहुभिश्चिताः ॥ मिथो विरुद्धा बलिनो दीर्घकालानुबंधिनः ॥ सर्वे समं प्रकुप्यंति प्राप्यालपमपि कारणं ॥ प्राणायतनमाश्रित्य गंभीराः सर्वमार्गगाः ॥ देहे हितोचिते ते स्युश्चिरादप्याशुकारिणः ॥ अहितान्यपि चान्येषामभ्यासादुपशेरते ॥ दोषाश्चैषां क्षयं यांति कर्म वातातपादिभिः ॥ भिन्नाहारवयःसात्म्यप्रकृतीनां समं भवेत् ॥ एको विकृतवाय्वादियुगपत्सेवनाद्गदः ॥ वातादीनां तु विकृतिर्विकृताद्ग्रहचारतः ॥ भौमांतरिक्षदिव्येभ्य उत्पातेभ्यश्च जायते ॥ संभवः पुनरेतेषां कर्मणः सामुदायिकात् ॥ दुष्टो वायुरभिष्यंदी स्तिमितोऽत्युष्णशीतलः ॥ कुंडली भैरवरवः परुषोऽनार्तवो बली ॥ अन्योन्यव्याहतगतिः पांसुबाष्पविषान्वितः ॥ रसवर्णादिविकृतमपक्रांतविहंगमं ॥ निंदितप्रभवं तोयमुपक्षीणजलाशयं ॥ मक्षिकामूषिकाव्यालबहूत्पातप्रदूषितः ॥ देशोऽपथ्यान्नबहुलो नष्टधर्ममहौषधिः ॥ कालश्च विपरीतोऽतिहीनलिंगो यथायथं ॥ एते दुष्परिहारत्वादहितायोत्तरोत्तरं ॥ येषामनियतं कर्म तस्मिन्काले सुदारुणे ॥ कर्म पंचविधं तेषां योज्यं तद्वद्रसायनं ॥ शस्यते देहवृत्तिश्च भेषजैः पूर्वमुद्धृतैः ॥ ब्रह्मचर्यं दया दानं सदाचाररतिः शमः ॥ सद्धर्मः सत्कथा पूजा देवर्षीणां जितात्मनां ॥ देशानामविपन्नानां साधूनां च निषेवणं ॥ दैवव्यपाश्रयं चेष्टं कर्म जीवितरक्षणं ॥ हेमंतादिषु कुर्वीत स्वं स्वं चाकालिकेष्वपि ॥ विधिं तच्छीलनं यस्माच्छीतादिद्वंद्वकारितं ॥

1 बहूनामेकरोगोत्पत्तिमाह ॥

ऋतुचर्या हि शीतोष्णवृष्टिदोषप्रतिक्रिया ॥ अतएवर्तुचर्यायां हेमंत-शिशिरौसमौ ॥ सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते ॥ दैवे पुरुष-कारे च स्थितं ह्यस्य बलाबलं ॥ अन्यजन्मकृतं कर्म दैवं पौरुष-मैहिकं ॥ विद्यात्ते कर्मणी त्रेधा श्रेष्ठमध्यावरत्वतः ॥ तयोरुदारयो-र्युक्तिर्दीर्घस्य सुसुखस्य च ॥ नियतस्यायुषो हेतुर्विपरीतस्य चाप-रा ॥ मध्या मध्यस्य मिश्रस्य संकीर्णा शृणु चापरं ॥ दैवं पुरुषका-रेण दुर्बलं ह्युपहन्यते ॥ तथा दैवेन बलिना पौरुषं कर्म दुर्बलं ॥ दृष्ट्वा तदेके मन्यंतेऽनियतं मानमायुषः॥कर्म किंचित्क्वचित्काले विपा-के नियतं महत् ॥ किंचित्त्वे कालनियतं प्रत्ययैः प्रतिबोध्यते ॥ एवं च द्विविधो मृत्युः कालाकालविभेदतः ॥ उपदिष्टस्ततश्चैष हि-ताहितविधिक्रमः ॥ एकोत्तरं मृत्युशतं ब्रुवते वेदवादिनः ॥ तत्रैकः कालसंयुक्तः शेषास्त्वागंतवः स्मृताः ॥ श्येनाजिरादियागेन भ्रातृ-व्यस्य तथाच तैः ॥ दैर्घ्यश्रवससामाद्यैर्विहितः स्वात्मनो वधः ॥ आयु ष्कामस्य तत्प्राप्तिस्तथेष्ट्या मित्रविंदया ॥सर्वस्मादेवचात्मानं गोपाये-दीदृशी स्मृतिः ॥ तथा मरणमुद्दिष्टं सौगतानां चतुर्विधं ॥ विषमाप-रिहारेण जायते नियतायुषां॥ ध्रुवं रोगित्वमन्येषां मृत्युरेव त्वपर्वणि॥ अकांडशस्त्रघाताद्यैः प्रत्यक्षो मृत्युरन्यथा ॥ उद्भ्रांतचंडमातंगतु-रंगादिसमागमं ॥ अरातिदुष्टवाय्वादिसाहसाहितभोजनं ॥ वर्जयेदिति न ब्रूयुर्मुनयो दिव्यचक्षुषः ॥ दैवव्यपाश्रयादींश्च रसायनविधिं नवा ॥ न वा तेऽपि यथाकाममायुषः स्थितिमाप्नुयुः ॥ अहिसिंह-गजादिभ्यो विदुषां न भयं भवेत् ॥ मिथ्या प्राकारदुर्गाणि मिथ्या मारणरक्षणं ॥ आयुष्कामस्य मिथ्यैव परदारादिवर्जनं ॥ मंत्रदे-

---

१ अथाकालमृत्युमाह २ किंचिन्नेतिपाठः ३ भ्रातृव्यस्य शत्रोः भ्रातृव्यो भ्रातृजद्वि-षाविस्यमरः ॥ ४ सोमाद्यैर्विहितस्त्वात्मनोवधइतिपाठः ५ श्रुतिरितिपाठः ६ विने तिपाठः

बतयाऽऽहूता नाचक्षीरन्महाहयः ॥ विषमुसमप्रबुद्धस्याभावभावौ तदायुषः ॥ संन्यासरोहिणीकादिग्रस्तस्य सहसा भवेत् ॥ उपेक्षया न मरणं जीवितं वा चिकित्सया ॥ प्रत्यहं नृसहस्रस्य युद्धेऽन्योन्यमभिघ्नतः ॥ साधुवृत्तस्य चातुल्या न भवेदायुषः स्थितिः ॥ नाप्युर्धैर्द्विषामिंद्राद्या नौषधैरार्तमश्विनौ ॥ उपक्रमेरन्न भवेदकालमरणं यदि ॥ घटानामामपक्वानां पालनापरिपालनैः ॥ चिराशुकालवर्तित्वं चित्रस्थानां च दृश्यते ॥ इत्यत्यंतप्रसिद्धेऽपि सिद्धे सर्वागमैरपि ॥ दृष्टेऽप्यकालमरणे विचिकित्सेत्कथंबुधः ॥ गुणवद्भिषगादीनां संभवे संभवेत्तु यः ॥ मृत्युस्तं कालजं प्राहुरितरं तद्विपर्यये ॥ यथा रथो वाह्यमानो न्यायेन क्रमशः क्षयं ॥ यायादात्मवतामायुस्तथाऽन्येषां विपर्ययः॥शुचितैलदशो दीपः कीटवाताद्यपीडितः॥ दीप्तिमान्वर्त्तते सम्यक् यथैवास्नेहसंक्षयात् ॥ स एवातो यथा च स्याद्विपरीतो विपर्यये ॥ हिताहितोपचारेण तथैव पुरुषो ध्रुवं ॥ सर्वमन्यत्परित्यज्य शरीरं पालयेदतः ॥ तदभावे हि भावानां सर्वाभावः शरीरिणां ॥ नगरी नगरस्येव रथस्येव रथी सदा ॥ स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ आहारकल्पनाहेतून्स्वभावादीन्विशेषतः ॥ समीक्ष्य हितमश्नीयाद्देहो ह्याहारसंभवः ॥ भीलज्जायंत्रणालोभहर्षशोकवशंगतः ॥ न जातु धारयेद्वेगांस्तद्धि सर्वापदां पदं ॥ हितमभ्यस्यतः पुंसो नाकाले कालदंष्ट्रया ॥ संजायते परामर्शो बलोत्साहेंद्रियायुषां ॥ अहितानि च संत्यज्य दोषमप्याप्नुयाद्यदि ॥ तथाप्यानृण्यमायाति साधूनामात्मवानिति ॥ यच्च रोगसमुत्थानं न शक्यमिह केन चित् ॥परिहर्तुं न तत्प्राप्य शोचितव्यं मनीषिणा ॥ हिताहारविहाराणां सदाचारनिषेविणां ॥ लोकद्वयव्यपेक्षाणां जीवितं ह्यमृतायते ॥ नृभुग्र्म्यसुखे वश्यः क्लेशानां हृतसत्पथः ॥ मूढो

१ बाहुल्यान्नेति पाठः

जीवत्यनर्थाय दुर्गतिं परिबृंहयन् ॥ विदुषांऽतःशरीरस्थान्नित्यं सन्निहितानरीन् ॥ जित्वा वर्ज्यानि वर्ज्यानि चिरं जीवितुमिच्छता ॥ तदात्वे चानुबंधे वा तस्मात्कर्माशुभोदयं ॥ स्मरन्नात्रेयवचसो न धीमान्कर्तुमर्हति ॥ ॥ इति विरुद्धान्नविज्ञानीयो नाम नवमोऽध्यायः ॥ ९ ॥

अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः ॥ विधिविहितमन्नपानमिष्टेंद्रियार्थमायतनमायुषो ब्रुवते ॥ यत्तदायत्तानि ह्योजस्तेजोधात्विंद्रियबलतुष्टिपुष्टिप्रतिभारोग्यादीनि ॥ तदिंधना चांतरग्नेःस्थितिः ॥ अग्निमूलं च देहधारणमिति ॥ अथात्मवान् स्वभावसंयोगसंस्कारमात्रादेशकालोपयोगव्यवस्थाः समाहारकल्पनाविशेषाणां स्वास्थ्यास्वास्थ्यफलानां हेतुभूताः समीक्ष्य हितमेवानुरुध्येत ॥ तत्र स्वभावतो दिव्योदकरक्तशालिषष्टिकमुद्गैणलावादयो लघवः ॥ क्षीरेक्षुव्रीहिमाषानूपामिषादयो गुरव इति ॥ ते खल्वपि संयोगादिविशेषैरन्यथात्वं प्रतिपद्यंते ॥ तत्र संयोगो नाम द्वयोर्बहूनां वा संहतीभावः ॥ स विशेषमारभते यन्नैकशो नैकदोषाणि द्रव्याणि ॥ संस्कारस्तु तोयाग्निसन्निकर्षशौचमंथनदेशकालभावनाभाजनादिभिरुपजन्यते ॥ मात्रा पुनः पिंडपरिमाणतः समुदायेन प्रतिद्रव्यापेक्षया चाहारराशिः ॥ देशो द्रव्यस्योपयोक्तुश्चोत्पत्त्यवस्थाने ॥ तत्र पुनरुपयोक्ता स्वस्थातुरत्वतः प्रकृतिभेदतश्च परीक्ष्यः ॥ कालस्तु ऋतुव्याध्यपेक्षो जीर्णाजीर्णलक्षणश्च ॥ अजीर्णं हि पूर्वस्याहारस्यापरिणतो रस उत्तरेण संसृज्यमानः सर्वान्दोषान्प्रकोपयत्याशु ॥ जीर्णे तु स्वस्थानस्थेषु दोषेषु वातानुलोम्यात्सृष्टेषु मूत्रपुरीषवेगेषु विशुद्धेषूद्गारहृदयस्रोतोमुखेषु विशदकरणे लघुनि शरीरेऽग्नावुदीर्णे जातायां बुभुक्षायामभ्यवहृतमन्नमप्रदूषयद्दोषानापुर्बलवर्णानभिवर्द्धयति ॥ केवलमयमेव कालो भोजनस्य ॥ अतीतकालं पुनस्तद्वातविघ्नत्वं कृच्छ्राद्विपच्य-

१ तत्कालस्तु तदात्वं स्यादित्यमरः

ते कर्शयत्यन्नरुचिं च पुनरुपहंति ॥ उपयोगव्यवस्था तु नास्नातो न दिग्वासा नैकवस्त्रधृक् न मलिनवसनो नाहुत्वा नाजपित्वा नानिरूप्य देवताभ्यो न पितृभ्यो नादत्वाग्रमग्नये न गुरुभ्यो नातिथये नाभ्यागतेभ्यो न श्ववयःश्वपचेभ्यः प्रत्यवेक्ष्य चाश्रितानपि तिरश्चः परिगृहीतान् प्रशस्तदेशकालोपकरणयुक्तः स्रग्वी विभूषितः सुगंधिरार्द्रपाणिपादः सुविशुद्धवदनोऽभिमतसहायः केशमक्षिकाद्यजुष्टमनिंद्यमनिंदन्न निंदितं पुनर्नोष्णीकृतं नात्युष्णमनुपदग्धं सुसिद्धमलोलो नासात्म्यं नाविदितं नाविदितागमं नातिसायं नातिप्रगे नाकाशे नातपे नांधकारे नाधो वृक्षस्य न शय्यास्थो नोन्नम्य प्रदेशिनीं न पात्रे भिन्ने नासंवृते न मलिने भावदूषिते वा न चासनस्थितेन हस्तेन प्राङ्मुखः सुमनाः शुचिभक्ताक्षुधितानुकूलजनोपहितं हितमन्नमश्नीयात् ॥ न पर्युषितमन्यत्र मांसोपदंशभक्ष्येभ्यः ॥ नाशेषमन्यत्र दधिमधुघृतसलिलसक्तुशुक्तपायसेभ्यः ॥ अपिच ॥ स्निग्धं लघूष्णमविलंबितमनतिद्रुतमजल्पन्नहसंस्तन्मनाः समीक्ष्य सम्यगात्मानं ॥ स्निग्धलघूष्णानि हि वन्हिमौदर्यमुदीरयंति कोष्ठं परिशोधयंति धातून्न विकुर्वते क्षिप्रं जीर्यंत्यनिलमनुलोमयंति ॥ तथा स्निग्धं दृढीकरोतींद्रियाण्युपचिनोति शरीरमपचिनोति जरसं बलमभिवर्द्धयति वर्णप्रसादमभिनिर्वर्त्तयति ॥ लघु च पुनः स्वभावादिभिरन्नमप्रतिपीडयद्दोषानव्यथमानं परिणाममेति ॥ विपन्नमपि चाल्पदोषं भवति ॥ उष्णं पुनर्जनयति रुचिमुपशोषयति श्लेष्माणं ॥ विलंबितं तु भुंजानो न तृप्तिमधिगच्छति बहु च भुंक्ते शीती भवति चान्नजातं विषमपाकं च भवति ॥ अतिद्रुतं तु भुंजानस्य जल्पतो हसतो ऽन्यमनसो वा भवेदुत्स्नेहनमवसादनं भोजनस्याप्रतिष्ठानं गुणदोषाविभावनं च॥समीक्ष्य

सम्यगात्मानमिति ॥ ममेदं सात्म्यमिदमसात्म्यमिति च नित्यमप्रमत्तः प्रत्यवेक्षेत ॥ तत्र सात्म्यं नाम सहात्मना भवत्यतस्तदौचित्यादुपशेत इत्येके ॥ सात्म्यविपरीतमनुपशयादसात्म्यं ॥ अन्ये पुनः प्रकृतिवयोदेशर्तुदोषव्याधिवशेन सात्म्यं बहुविधमिच्छंति ॥ ते ह्युपशयमात्रमंगीकृत्य विपरीतगुणमप्युपचारेण सात्म्यमाचक्षते ॥ तुल्यगुणं चानुपशयादसात्म्यं ॥ सात्म्यं तु प्रवरावरमध्यविभागेन त्रिविधं ॥ तत्र सर्वरसं प्रवरमेकरसमवरं मध्यं तु मध्यममेव ॥ तेषु प्रवरं समदोषस्योपदिशंतीति ॥ तेषामपि क्रमेण सात्म्यमपि चाहितं पादेन पादांशेन वा विवर्जयेदित्युक्तं प्राक् ॥ तत्र यदाहारजातं समान्धातूननुवर्त्तयति विषमांश्च समीकरोति तत्समासतो हितं ॥ विपरीतमहितं ॥ तत्पुनर्मात्रायोगादिवैचित्र्यादनियतमपि यथोपदेशं यथाभूयिष्ठं च शीलयेत्परिहरेच्च ॥ तथा विशेषतः समशनमध्यशनममात्राशनं विषमाशनं च वर्जयेत् ॥ तत्र पथ्यापथ्यमेकत्र भुक्तं समशनं ॥ भुक्तस्योपरि भुक्तमध्यशनं ॥ अमात्राशनं पुनः पृथगेवोपदेक्ष्यते ॥ अप्राप्तातीतकालं तु भुक्तं विषमाशनमिति॥ भुंजानस्तु पेयायूषरसा-न्व्यंजनानि राजतेषु पात्रेषु निदध्यात्॥ परिशुष्कप्रदिग्धानत्युष्णं च पयः सौवर्णेषु ॥ खलकं[1] रकं[2] वल्लिकान्कांस्येषु ॥ रागखांडवसट्टकान् वज्रवैडूर्यविचित्रेषु ॥ घृतमायसे ॥ पयः सुशीतं ताम्रमये ॥ पानीयपानकानि च मृद्धेमस्फाटिकमयेषु ॥ ओदनं च विस्तीर्णे मनोरमे स्थाने॥अन्यथा हि वर्णगंधरसान्यत्वादहितं स्यात्॥अपिच॥दक्षिणपार्श्वे भक्ष्यं स्थापयेत् ॥ सव्ये पेयं मुखोद्धर्षणापिंडीं च ॥ मध्ये भोज्यमिति ॥ यथाऽग्निसात्म्यं तु प्राक् द्रवमुपशुष्कं वाऽश्नीयात्॥प्रागेव तु गुरु स्वादु स्निग्धं च ॥ मध्येऽम्ललवणं ॥ अंते रूक्षं द्रवमितररसयुक्तं[3] च ॥ तत्र

१ दधिसंतानिका २ त्रिकटुजीरकदाडिमशर्करायुक्तं मथितं दधि सट्टकः ३ द्रव्यमितिपाठः

मंदाग्नेर्द्रवोष्णेन समुत्तेजितोष्मणोऽन्यदुपयुक्तं सम्यक्पाकमेति ॥ अनुपानं तु सलिलमेव श्रेष्ठं सर्वरसयोनित्वात्सर्वभूतसात्म्यत्वाज्जीवनादिगुणयोगाच्च॥ तच्छीतं दधिमधुगोधूममद्यविशेषेषु सर्वेषु च विदाहिषु शरद्ग्रीष्मयोश्च ॥ उष्णं पिष्टमयेष्वन्येषु च दुर्जरेषु हेमंते च ॥ द्रवद्रव्यविज्ञानीयं चेक्षेत ॥ क्षीरं शालिषष्टिकयोर्लङ्घनोपवासाध्वभाष्यस्त्रीव्यायामक्लांतबालवृद्धेषु ॥ मांसरसः शोषादिषु ॥ वाते त्वम्लानि च ॥ पित्ते शर्करोदकं॥ त्रिफलोदकं तु सक्षौद्रं श्लेष्मणि प्रायशश्चाक्षिगलरोगेषु ॥ मस्त्वेव वा दधनि कूर्चीकाकिलाटयोश्च ॥ धान्याम्लं मस्तु तक्रं वा शाकावरान्नेषु ॥ मद्यं मांसेषु फलाम्लमंबुवाऽऽसवांश्च विविधान् विभज्य प्रयोजयेत् ॥ विशेषतस्तु मध्वासवान् ग्राम्येषु ॥ तीक्ष्णान् फलासवान्वन्येषु ॥ न्यग्रोधादिफलासवान्विष्किरेषु ॥ अर्कैलुशिरीषकपित्थासवान्विलेशयेषु दिग्धहतेषु च ॥ अम्लफलासवान्प्रसहेषु ॥ काशेक्षुपद्मबीजशृंगाटककसेरुकमृद्वीकामदिरासवान् क्षौद्रयुक्तं वा शीतमुदकमुदश्विद्वा महामृगेष्वौदकेषु च ॥ सुरां प्रतुदेषु तथा श्रमार्तेषु कृशेषु च ॥ मधूदकं स्थूलेषु ॥ मद्यं मद्यमांससात्म्याल्पाग्निषु ॥ अपिच ॥ समासेनान्नविपरीतमविरोधि च ॥ अनुपानं खलु तर्पयति प्रीणयत्यूर्जयति बृंहयति देहस्य पर्याप्तिमभिवर्द्धयति भुक्तमवसादयत्यन्नसंघातं भिनत्ति मार्दवमापादति क्लेदयति सुखपरिणामितामाशुव्यवायितां चाहारमुपनयति ॥ वर्ज्यं तूर्ध्वजत्रुगदश्वासकासप्रसेकहिध्मास्वरभेदोरःक्षतिभिर्गीतभाष्यप्रसक्तैश्च ॥ तेषां हि प्रदूष्यामाशयमुरःकंठस्थितमाहारजं स्नेहमासाद्य तदभिष्यंदाग्निसादच्छर्द्यादीनामयान्विदध्यात् ॥ पीत्वा च भाष्यगेयाध्वस्वमान्न शीलयेत् ॥ पानं तु प्रक्लिन्नदेहमेहकंठाक्षिरोगव्रणिनर्हति ॥ ततः पाणिगतमन्न-

१ तक्रं ह्युदश्विन्मथितं पादांब्वर्द्धांबु निर्जलमित्यमरः २ निषिद्धानुपानानां

मन्येनापनीय दंतांतरस्थं च शनैः शोधनेन विशोध्य विधाय लेपगंध-स्नेहापनोदमाचांतोऽगुल्यग्रगलितांबुपरिषिक्तनेत्रस्तांबूलादिकृतवदन-वैशद्यो धूमपानादिहृतोर्ध्वकफवेगः पदशतमात्रं गत्वा वामपार्श्वेन संविशेत् ॥ द्रवोत्तरभोजनस्तु शय्यां नातिसेवेत् ॥ यानप्लवनवाहना-ग्न्यातपांश्च भुक्तवान्वर्जयेत् ॥ आहारपरिणामकराः पुनरूष्मा वायुः क्लेदः स्नेहः कालः समयोगश्च ॥ तत्रोष्मा पाचयति वायुरपकर्षति क्लेदः शैथिल्यमापादयति स्नेहो मार्दवं जनयति कालः सर्ववपुर्व्या-सिमभिनिर्वर्त्तयति ॥ समयोगस्त्वेषां परिणामधातुसाम्यकरः संप-द्यते ॥ समयोगस्य पुनः कारणान्युचितो हितश्च देहसंस्कारोऽभ्य-वहारश्चेष्टा शयनं सौमनस्यं च ॥ परिणामतस्त्वाहारगुणाः शरीरज-गुणभावमापद्यंते यथास्वमविरुद्धाः ॥ विरुद्धास्तु विहिताश्च विरो-धिभिर्विहन्युः शरीरमिति ॥ भवंति चात्र ॥ कुकूलभृष्टपृथुका-न्सुपिष्टकृततंदुलान् ॥ न जातु भुक्तवानद्यान्मात्रयाऽद्यात्सुकां-क्षितः ॥ शाकावराम्लकट्वम्लकषायलवणोत्कटं ॥ त्यजेदेकरसासात्म्यं गुरु शुष्कं च भोजनं ॥ वक्ष्यते यन्निदानादौ सर्वरोगप्रकोप-नं ॥ अत्यभिष्यंदि विष्टंभि विदाहि हिमरूक्षणं ॥ किलाटदधि-कूचीकामत्स्यशुष्कामूलकं ॥ क्षारपिष्टविरूढाद्यं तत्समस्तं न शी-लयेत् ॥ शीलयेच्छालिगोधूमयवषाष्टिकजांगलं ॥ सुनिषण्णकजी-वंतीबालमूलकवास्तुकं ॥ पथ्याऽऽमलकमृद्वीकापटोलीमुद्गशर्कराः ॥ घृतदिव्योदकक्षीरक्षौद्रदाडिमसैंधवं ॥ त्रिफलां मधुसर्पिर्भ्यां निशि नेत्र-बलाय च ॥ स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥ स्व-भावमात्रायोगादिपरस्परविपर्ययैः ॥ भोजनानि विरुध्यंते तानि विद्वा-न् विवर्जयेत् ॥ त्यागाद्विषमहेतूनां समानां चोपसेवनात् ॥ विषमा नानुबध्नंति जायंते धातवः समाः ॥ अन्नेन कुक्षेर्द्वावंशौ पानेनैकं

१ शाकादिमूलकमितिपाठः

प्रपूरयेत् ॥ आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ मंदानलबला-
रोग्यनृपेश्वरसुखात्मसु ॥ योज्यः क्रमोऽयं सततं नावश्यमितरेषु
च ॥ करोति रूक्षं बलवर्णनाशं त्वग्रूक्षतां वातशकृन्निरोधं ॥ स्नि
ग्धं त्वतिश्लेष्मचयप्रसेकहृद्गौरवालस्यरुचिप्रणाशान् ॥ अत्युष्णम
न्नं मददाहतृष्णाबलप्रणाशभ्रमरक्तपित्तं ॥ शीतं तु सादारुचिव
न्हिनाशं हृल्लासविष्टंभनरोमहर्षान् ॥ अतिस्थिरं मूत्रशकृद्विबंधम-
तृप्तिमत्यासिमशीघ्रपक्तिं ॥ अतिद्रवं पीनसमेहकासस्यंदान्करोत्य-
ग्निबलं च हंति ॥ अतिमधुरमनलशमनं भुक्तमसात्म्यं न पुष्ट-
ये वपुषः ॥ अतिलवणमचक्षुष्यं तीक्ष्णात्यम्लं जरा साक्षात् ॥
इति विधिमवलंब्य योऽन्नपानं बलमिव विग्रहवत्सदोपयुंक्ते[1] ॥ त-
नुमपि तनुजां रुजं त्वनाप्य व्रजति नरः स समाशतस्य पारं ॥
इत्यन्नपानविधिर्नाम दशमोऽध्यायः ॥ १० ॥

अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ॥ मात्राशी स्या
त् ॥ मात्रा पुनरग्निबलाहारद्रव्यापेक्षिणी ॥ कुक्षेरप्रतिपीडनमाहा-
रेण हृदयस्यासंरोधः पार्श्वयोरविपाटनमनतिगौरवमुदरस्य प्री-
णनमिंद्रियाणां क्षुत्पिपासोपरतिः स्वस्थानासनशयनगमनोच्छ्वा-
सप्रश्वासहास्यसंकथासु सुखानुवृत्तिः सायं प्रातश्च सुखेन प-
रिणमनं बलवर्णोपचयकरत्वं चेति मात्राया लक्षणं ॥ त्रिभा-
गसौहित्यमर्द्धसौहित्यं वा गुरूणां समुपदिश्यते ॥ लघूनाम-
पि च नातिसौहित्यं ॥ अनिलानलगुणबहुलानि हि लघूनि तुल्यगु-
णत्वादग्निसंधुक्षणान्यविधिना चाल्पदोषाणि ॥ इतराणि तु पृथिवी-
सलिलगुणबहुलान्यसामान्याद्विपरीतान्यन्यत्र व्यायामाग्निबलात् ॥
अमात्रा पुनरशनस्य हीनता ऽऽधिक्यं च ॥ तत्र हीनमात्रमशनं
बलवर्णोपचयमनोबुद्धींद्रियोपघातकरं विबंधकृदवृष्यमनायुष्यमनौ-

१ सदोपभुंक्त इति पाठः

जन्यं सारविध्मापनमलक्ष्मीजननमशीतेश्च वातविकाराणामायतनं ॥ अतिमात्रं पुनः सर्वदोषप्रकोपनमाहुः ॥ तेन हि प्रपीड्यमाना वातादयो युगपत्प्रकुपिताः कुक्ष्येकदेशस्थास्तदेवापरिपक्कमाविश्य विष्टंभयतोऽलसकमभिनिर्वर्तयंति सहसा वाऽधरोत्तराभ्यां मार्गाभ्यां प्रच्यावयंतो विसूचीकां ॥ अपिच ॥ प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ॥ विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ सूचीभिरिव गात्राणि विध्यतीति विसूचिका ॥ तत्र वातः शूलानाहांगमर्दमुखशोषप्रलापकंपमूर्च्छाभ्रमजृंभोद्वेष्टनाऽक्षिप्रवेशशिरोहृदयातिरुक्शिराकुंचनस्तंभनानि करोति ॥ पित्तं पुनर्ज्वरातिसारांतर्दाहवैवर्ण्यतृष्णामदभ्रमप्रलपनानि ॥ श्लेष्मा तु छर्द्यरोचकप्रसेकांगसादाविपाकशीतज्वरगात्रगौरवाणि ॥ विशेषतस्तु दुर्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणोऽन्नपानमनिलप्रपीडितं श्लेष्मणा विबद्धमार्गमलसत्वाद्बहिर्मुखी भवेत् ॥ छर्द्यतीसारवर्जानियथोक्तानि शूलादीन्युपजनयत्यतिमात्राणि ॥ अतिमात्रदुष्टास्तु दोषा प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छंतः कदाचिदस्य शरीरं दंडवत्स्तंभयंति ततस्तमलसकमसाध्यं ब्रुवते ॥ विरुद्धाध्यजीर्णाशनशीलिनः[1] पुनरामदोषमामविषमामनंति विषसदृशलिंगत्वात्तत्परमसाध्यमाशुकारितया विरुद्धोपक्रमत्वाच्च ॥ न च केवलं मात्रयैव कृत्स्नमाहारफलमवाप्तुं शक्यं स्वभावादीनां भिन्नफलत्वात्॥तथाहि ॥ गुरुरूक्षशुष्कशीतद्विष्टविष्टंभिविदाह्यशुचिविरुद्धात्यंबुपानद्रवमकाले वा कामक्रोधलोभेर्ष्याह्रीशोकोद्वेगभयक्षुत्तुपतप्तेन वा यदन्नपानमुपयुज्यते तदप्यामसेव प्रदूषयति ॥ तत्र साध्यमामं दुष्टमलसीभूतमुल्लिखेत्पाययित्वा सलवणमुष्णं वारि॥ तथा त्वच्छर्दयंतमतिलीनदोषं कृष्णानागदंतीक-

1 विरुद्धाध्यशनाजीर्णशीलिनइतिपाठः

ल्कयुक्तं पाययेत् ॥ मदनफलकषायं वा पिप्पलीसिद्धार्थककल्कयुक्तं ॥ दंतीमागधिकाऽवचूर्णितं वा कोशातकीरसं ॥ अवस्थापेक्षी वा वमनकल्पोक्तानि तीक्ष्णवमनानि ॥ ततः स्वेदनवर्तिप्रणिधानाभ्यामुपाचरेत् ॥ अपिच ॥ सद्यः सम्यग्विशुद्धस्य शाम्यंति तदुपद्रवाः ॥ शूले निरन्नकोष्ठेऽद्भिः कोष्णाभिश्चूर्णिताः पिबेत् ॥ हिंगुप्रतिविषा व्योषसौवर्चलवचाभयाः ॥ अथवा पिप्पलीमूलत्रिवृतादारुसैंधवं ॥ शुंठीस्नुक्क्षीरलवणपिप्पलीमरिचानि च ॥ पाठाम्लवेतसक्षारयवानीपौष्कराणि च ॥ द्विरुत्तरं हिंगुवचाऽग्निकुष्ठसुवर्चिकाक्षारबिडाजमोदं ॥ शूलोदरानाहविसूचिकार्शोहृद्रोगगुल्मोर्ध्वसमीरणघ्नं ॥ मुस्ताजमोदपूतीकवचाशुंठ्यग्निधान्यकैः ॥ सवाल्कसठीबिल्वैः क्वाथं तृट्शूलवान् पिबेत् ॥ पिबेद्द्विपक्कं ह्यमृताकषयं कदंबनिंबार्जुनवृक्षकाणां ॥ क्वाथं सुखोष्णं लवणप्रगाढं विसूचिकाऽजीर्णविषादमर्दिनं ॥ रास्नाकट्फलषड्ग्रंथाबृहतीद्वयजोंगकैः ॥ गुग्गुल्वतिविषाकुष्ठपत्रव्याघ्रनखांबुदैः ॥ कुर्याच्छुष्कैः समूत्रैर्वा लेपोद्वर्तनधूपनं ॥ सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ॥ दारुहैमवतीकुष्ठशताह्वाहिंगुसैंधवैः ॥ यवचूर्णश्च सक्षारतक्रः कोष्ठार्तिजित्परं ॥ योजयेत् सैंधवार्तैश्च तत्र विण्मूत्रसंग्रहे ॥ नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् ॥ विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥ द्विक्षारजीर्णपिण्याककुष्ठारुष्करपत्रकैः ॥ सशुक्तसैंधवैस्तैलं पक्कमभ्यंजने हितं ॥ सुच्छर्दितविरिक्तस्य गात्रायामेऽतिदारुणे ॥ भल्लातकमधूच्छिष्टजीर्णपिण्याकनागरैः ॥ घृततैलं पचेत्साम्लैस्तच्च खल्लीघ्नमुत्तमं ॥ त्वक्पत्ररास्नाऽगुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः ॥ उद्वर्तनं खल्लिविसूचिकाघ्नं तैलं विपक्कं च तदर्थकारि ॥ तदहश्चोपवास्यैनं विरिक्तं वदुपाचरेत् ॥ सामान्येनेति सिद्धोक्ता विसूच्यलसकक्रिया ॥ आमदोषेषु त्वन्नकाले जी-

१ वार्तमितिपाठः

र्णाहारं दोषोपलिप्तामाशयस्तिमितगुरुकोष्ठमनन्नाभिलाषमभिसमीक्ष्य पाययेत्॥दोषशेषपाचनार्थमौषधं वन्हिसंधुक्षणहेतोश्च॥अजीर्णाहारं पुनर्न पाययेत् ॥ यत आमसन्न आमदोषमौषधमाहारजातं चाशक्तः पक्तुमग्निः॥ इत्येषां विभ्रमोऽतिबलत्वादुपरतानलमसद्बलमातुरं सहसा निपातयेत् ॥ आमदोषजानां पुनर्विकाराणामपतर्पणेनैवोपशमो भवति ॥ तत्तु त्रिविधं ॥ लंघनं लंघनपाचनमवसेचनं च ॥ तत्र लंघनमल्पदोषाणां ॥ तेन ह्यनिलानलवृद्ध्या वातातपपरीत इवाल्पसलिलाशयोऽल्पो दोषः शोषमापद्यते ॥ लंघनपाचनाभ्यां मध्यमलो वातातपाभ्यां पांसुभस्मावकिरणैरिव चानतिमहान्सलिलाशयः॥ बहुदोषाणां पुनर्दोषावसेचनमेव कार्यं ॥ न ह्यस्राविते पल्वलोदकौघे शाल्यादिपुष्टिर्भवति ॥ तस्मात्संतर्पणनिमित्तानां नांतरेणापतर्पणमस्ति शांतिः ॥ अपतर्पणनिमित्तानां नांतरेण संतर्पणमिति ॥ एवमन्येषामपि व्याधीनां यथास्वं निदानविपरीतमौषधमवचारयेत् ॥ सति त्वनुबंधे निदानविपरीतमपास्य व्याधिविपरीतमेव तदर्थकारि वा॥ विमुक्तामदोषस्य पुनः परिपक्वामदोषशेषस्य दिप्ते चाग्नावभ्यंगास्थापनानुवासनं विधिवत्स्नेहपानं च युक्त्या प्रयोज्यं प्रसमीक्ष्य दोषौषधादीन्यनंतराणीति ॥ भवति चात्र ॥ यः श्यावदंतोष्ठनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यंतरयातनेत्रः ॥ क्षामस्वरः सर्वविमुक्तसंधिर्यायान्नरोऽसौ पुनरागमाय ॥ व्योषं करंजस्य फलं हरिद्रे मूलं समावाप्य च मातुलुंग्याः ॥ छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विसूचीं नयनांजनेन॥ शिरीषनक्ताव्हफणिज्जबीजत्रायंत्यपामार्गफलानि वर्तिः ॥ बस्तस्य मूत्रेण विसूचिकाघ्नी प्रलेपधूपांजननस्ययोगैः ॥ अजीर्णं च कफादामं विष्टब्धमनिलाद्भवेत् ॥ विदग्धं पित्तदोषेण त्रिप्रकारमिति स्मृतं ॥ तत्रामे गुरुतोत्क्लेदः शोफो गंडाक्षिकूटयोः॥ उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ विष्टब्धे शूलमाध्मानं विवि-

धा वातवेदनाः ॥ मलवातामवृत्तिश्च स्तंभो मोहोऽगपीडनं ॥ विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः ॥ उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ लंघनं कार्यमामे तु विष्टब्धे स्वेदनं भृशं ॥ विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥ गरीयसो भवेल्लीनादामादेव विलंबिका ॥ कफवातानुविद्धामलिंगा तत्समसाधना ॥ रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ॥ तत्राभुक्त्वा दिवास्वप्यात्क्षुद्वानद्यान्मितं लघु ॥ यामैश्चतुर्भिर्द्वाभ्यां च भोज्यभैषज्ययोः समे ॥ पाकोऽग्नौ युक्तयोर्शीघ्रं च तीक्ष्णे मंदे पुनश्चिरात् ॥ सभक्तमौषधं तस्मान्मंदाग्नेरवचारयेत् ॥ पूर्वाण्हे भोजनं सात्म्यं लघुदीपनबृंहणं ॥ प्रातराशे त्वजीर्णेऽपि सायमाशो न दुष्यति ॥ अजीर्णे सायमाशे तु प्रातराशो हि दुष्यति ॥ दिवा प्रबोध्यतेऽर्केण हृदयं पुंडरीकवत् ॥ तस्मिन्विबुद्धे स्रोतांसि स्फुटत्वं यांति सर्वशः॥व्यायामाच्च विचाराच्च विक्षिप्तत्वाच्च चेतसः ॥ न क्लेदमुपगच्छंति दिवा तेनास्य धातवः ॥ अक्लिन्नेष्वन्नमासक्तमन्यत्तेषु न दुष्यति ॥ अविदग्धेष्विव पयःस्वन्यत्संमिश्रितं पयः ॥ रात्रौ तु हृदये म्लाने संवृतेष्वयनेषु च ॥ यांति कोष्ठे परिक्लेदं संवृते सर्वधातवः ॥ क्लिन्नेष्वन्यदपक्वेषु तेष्वासक्तं प्रदुष्यति ॥ विदग्धेषु पयःस्वन्यत्पयस्तेष्विवार्पितं ॥ नैशे तस्मादजीर्णेऽन्ने नान्यद्भुंजीत भोजनं॥उद्गारशुद्धिरुत्साहो वेगोत्सर्गौ यथोचितः॥ लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणं ॥ प्रायः प्रज्ञापराधेन रोगग्रामः प्रजायते ॥ नृणामशनलुब्धानां विशेषेण विसूचिका ॥ दोषोपनद्धं यदि लीनमन्नं पित्तोल्बणस्यावृणुयान्न वन्हिं ॥ जायेत दुष्टा तु ततो बुभुक्षा या मंदबुद्धीन्विषवन्निहंति॥ ॥इति मात्राशितीयो नामैकादशोऽध्यायः ॥ ११ ॥

अथातो विविधौषधविज्ञानीयमध्यायं व्याख्यास्यामः॥ द्विविधमौषधमूर्जस्करं रोगघ्नं च ॥ उभयमपि चोभयात्मकं ॥ बाहुल्येन तु निर्देशः ॥ तत्रोर्जस्करं द्विविधं रसायनं वाजीकरणं च ॥ रोगघ्नमपि द्विविधं ॥ रोगस्य प्रशमनमपुनर्भवकरं च ॥ पुनश्च द्विविधं ॥ द्रव्यमद्रव्यं च ॥ तत्र द्रव्यं त्रिविधं ॥ भौममौद्भिदं जंगममिति ॥ तेषु वक्ष्यमाणहेमादिलवणांतं प्रायेण भौमं ॥ औद्भिदं तु पुनर्वनस्पतिवानस्पत्यवीरुदौषधिभेदेन चतुर्विधं भवति ॥ तत्र फलिनो वनस्पतिः ॥ पुष्पफलवान्वानस्पत्यः ॥ वल्लीगुल्मं वीरुत् फलपाकांतावौषधिरिति ॥ जंगमोद्भवं तु मधुघृतादि जंगमं द्रव्यमाहुः ॥ अद्रव्यं पुनरुपवासानिलातपच्छायामंत्रसांत्वदानभयोत्रासक्षोभणहर्षणभर्त्सनस्वप्नजागरणसंवाहनादि ॥ तथा त्रिविधमौषधं दैवव्यपाश्रयं युक्तिव्यपाश्रयं सत्वावजयश्च ॥ तत्र दैवव्यपाश्रयं मंत्रौषधिमणिमंगलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादि ॥ युक्तिव्यपाश्रयमाहारौषधयोजनादि ॥ सत्वावजयः पुनरहितान्मनोनिग्रहः ॥ पुनरपि च त्रिविधं ॥ अपकर्षणं प्रकृतिविधानं निदानत्यागश्च ॥ ते पुनरपकर्षणादयो द्विविधाः बाह्याभ्यंतरभेदेन ॥ तत्र बाह्यमपकर्षणं ग्रंथ्यर्बुदोपपक्ष्मकृमिशल्यादिषु शस्त्रहस्तयंत्रादिभिः॥ अभ्यंतरं पुनर्वमनविरेचनादिभिः ॥ प्रकृतिविधानं संशमनं ॥ तद्बाह्यमभ्यंगस्वेदप्रदेहपरिषेकोन्मर्दनाद्यं ॥ अभ्यंतरं यदंतरमनुप्रविश्याविक्षोभयद्दोषान् शमयति ॥ निदानत्यागो यथादोषं शीतोष्णासनव्यायामादीनां वर्जनं स्निग्धरूक्षाद्यनभ्यवहारश्च॥ तत्र शस्त्रादिसाध्ये भेषजमनुक्रमते न तु भेषजसाध्ये शस्त्रादि ॥ पुनरपि त्रिविधं हेतुविपरीतं व्याधिविपरीतमुभयार्थकारि च तत्र हेतुविपरीतं गुरुस्निग्धशीतादिजे व्याधौ लघुरूक्षोष्णादि तथेतरस्मिन्नितरत् ॥ व्याधिविपरीतं द्वौ मूलोपक्रमौ तौ च स्नेहस्वेदौ लंघनबृंहणे पंचकर्माणि वमनादी-

नि सधूपधूमांजनादीनि च॥ तथा विम्लापनोपनाहनपाटनादीनि॥ यच्च दोषशमनत्वे सत्यपि ज्वरे विशेषतोऽभिहितं मुस्तापर्पटकं यवाग्वश्च प्रमेहे रजनी यवान्नं चेत्यादि॥ रक्तपित्ते चोर्ध्वगे विरेचनमधोगे वमनं॥ उभयार्थकारि पुनर्दैवव्यपाश्रयमौषधं॥ तथा छर्द्यां छर्दनमतिसारेऽनुलोमनं मदात्यये मद्यपानं तुच्छदग्धेऽग्निप्रतपनं पित्तेऽतर्गूढे विमार्गगे वा स्वेदः कट्वम्ललवणतीक्ष्णोष्णाभ्यवहारश्च बहिःप्रवर्त्तनाय स्वमार्गापादनाय च॥ श्लेष्मणि चांतर्निगूढे स्तब्धे बहिः शीतोपचारस्तत्पीडितस्योष्मणोऽतःप्रवेशेन कफविलयनायेति॥ एवंविधं ह्यविपरीतमेव सङ्क्लेषजं हेतुव्याधिविपरीतमर्थं करोति॥ अनौषधं पुनर्द्विविधमेव॥ बाधनमनुबाधनं च॥ तत्र सद्यःप्राणहरं बाधनं॥ कालांतरेणानुबाधनमिति॥ परं चातो रसवीर्यादिभेदेन यथास्थूलमौषधैकदेश उपदिश्यते॥ सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः॥ विषदोषहरं शीतं सकषायं रसायनं॥ रूप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरं[1]॥ वयसःस्थापनं शीतं लेखनं वातपित्तजित्॥ ताम्रं सतिक्तमधुरं कषायं लेखनं लघु॥ कटुपाकरसं शीतं रोपणं कफपित्तजित्॥ कांस्यं कषायानुरसं विशदं लेखनं लघु॥ दृष्टिप्रसादनं रूक्षं तिक्तं पित्तकफापहं॥ सतिक्तलवणं भेदि पांडुत्वक्रिमिवातनुत्॥ लेखनं पित्तलं किंचित्त्रपु[2] सीसं च तद्गुणं॥ चक्षुष्यं कृष्णलोहं च कषायं स्वादुतिक्तकं॥ लेखनं वातलं शीतं कृमिकुष्ठकफप्रणुत्॥ गात्रशैथिल्यपालित्यपांडुघ्नं शोषशोफजित्॥ तद्वत्तीक्ष्णं विशेषेण तद्विकारापि सुदुर्जरं॥ पद्मरागमहानीलपुष्परागविदूरकाः॥ मुक्ताविद्रुमवज्रेंद्रवैडूर्यस्फटिकादिकं॥ मणिरत्नं सरं शीतं कषायं स्वादु लेखनं॥ चक्षुष्यं धारणात्तत्तु पापालक्ष्मीविषापहं॥ धन्यमायुष्यमोजस्यं हर्षोत्साहकरं शिवं॥ सक्षार उष्णवीर्यश्च काचो दृष्टिकृदंजनात्॥ शंखोदधि-

१ सरमितिपाठः २ वंगं

मलौ शीतौ कषायावतिलेखनौ ॥ तुत्थकं कटु सक्षारं कषायं विशदं-
लघु॥लेखनं भेदि चक्षुष्यं कंडूक्रमिविषापहं ॥विशदो गैरिकः स्निग्धः
कषायमधुरो हिमः ॥ कफघ्नी तिक्तकटुका मनोव्हा लेखनी सरा ॥
स्निग्धं कषायकटुकं हरितालं विषप्रणुत् ॥ कषायं मधुरं शीतं लेख-
नं स्निग्धमंजनं ॥ रक्तपित्तविषच्छर्दिहिध्माघ्नं दृक्प्रसादनं ॥ स्रोतों-
जनं वरं तत्र ततः सौविरकांजनं॥कफघ्नं तिक्तकटुकं छेदि सोष्णं रसां
जनं ॥ स्वादु हिध्माप्रशमनं कासमेहक्षयापहं ॥ कफघ्नमुष्णं कटुकं
शिलाजतु रसायनं ॥ तिक्तं च च्छेदनं योगवाहित्वात्सर्वरोगजित् ॥
विशेषात्कृच्छ्रमेहार्शःपांडुशोफकफापहं॥ कषाया मधुरा रूक्षा कासघ्नी
वंशरोचना॥ तवक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ॥ विष्यंदि ल-
वणं सर्वं सूक्ष्मं सृष्टमलं मृदु ॥ वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफ-
पित्तकृत् ॥ सैंधवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ॥ लघ्वनुष्णं
दृशः पथ्यमविदाह्यग्निदीपनं ॥ लघु सौवर्चलं हृद्यं सुगंध्युद्गारशो-
धनं ॥ कटुपाकं विबंधघ्नं दीपनीयं रुचिप्रदं ॥ ऊर्ध्वाधःकफवातानु-
लोमनं दीपनं बिडं ॥ विबंधानाहविष्टंभशूलगौरवनाशनं ॥ विपाके
स्वादु सामुद्रं गुरु श्लेष्मविवर्द्धनं ॥ सतिक्तकटुकं क्षारं तीक्ष्णमुत्क्लेदि
चौद्भिदं ॥ कृष्णे सौवर्चलगुणा लवणे गंधवर्जिताः ॥ रोमकं लघु पां-
सूत्थं सक्षारं श्लेष्मलं गुरु॥लवणानां प्रयोगे तु सैंधवादि प्रयोजयेत्॥
गुल्महृद्ग्रहणीपांडुप्लीहानाहगलामयान् ॥ श्वासार्शःकफकासांश्च शम-
येद्यवशूकजः ॥ स्वर्जिका तद्गुणान्न्यूना क्षारेण तु ततोऽधिका ॥
क्षारः सर्वश्च परमं तीक्ष्णोष्णः क्रिमिजिल्लघुः ॥ पित्तासृग्दूषणः पा-
की छेद्यो हृद्यो विदारणः ॥ अपथ्यः कटुलावण्याच्छुक्रौजःकेशच-
क्षुषां ॥ पथ्या कषायभूयिष्ठा स्वादुः पाके रसात्यये॥ रसैः पंचभि-
राधुक्ता रूक्षा विलवणा लघुः ॥ दीपनी पाचनी मेध्या वयसः स्था-
पनी परं ॥ उष्णवीर्या सराऽऽयुष्या बुद्धींद्रियबलप्रदा॥कुष्ठवैवर्ण्यवै-

स्वर्यं पुराणविषमज्वरान् ॥ शिरोक्षिपांडुहृद्रोगकामलाग्रहणीगदान् ॥ सशोषशोफातीसारमेहमोहवमिक्रमीन् ॥ श्वासकासप्रसेकार्शःप्लीहाना-हगरोदरं ॥ विबंधं स्रोतसां गुल्ममूरुस्तंभमरोचकं ॥ हरीतकी जये-द्व्याधींस्तांस्तांश्च कफवातजान् ॥ तद्वदामलकं शीतं माधुर्यात्पित्त-जित्परं ॥ कफं कटुविपाकित्वादम्लत्वान्मारुतं जयेत् ॥ परं च कंठ्यं चक्षुष्यं हृद्यं दाहज्वरापहं ॥ आक्षं तु तद्गुणन्यूनं कषायमधुरं हिमं ॥ कासश्वासगलश्लेष्मपित्तशुक्रहरं लघु ॥ परं केश्यस्तु तन्मज्जा शुक्रघ्नं च ततोऽजनं ॥ इयं रसायनवरा त्रिफलाऽक्ष्यामया-पहा ॥ रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ पत्रकं कफवातघ्नं त्रिसुगंधि त्रिजातकं ॥ केसरं रक्तगुदजविषपित्तकफापहं ॥ तद्युक्तं तच्चतुर्जातं नातिशीतोष्णमुच्यते ॥ पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं रोचनदीपनं ॥ रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥ श्ले-ष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली ॥ सा शुष्का विप-रीताऽतः स्निग्धा वृष्या रसे कटुः ॥ स्वादुपाकाऽनिलश्लेष्मकास-श्वासापहा सरा ॥ न तामत्युपयुंजीत रसायनविधिं विना ॥ नागरं दीपनं वृष्यं ग्राहि हृद्यं विबंधनुत् ॥ रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ॥ तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ स्थौल्या-ग्निसदनश्वासकासश्लीपदपीनसान् ॥ चविकापिप्पलीमूलं मरिचा-ल्पांतरं गुणैः ॥ चित्रकोऽग्निसमःपाके शोफार्शःक्रिमिकुष्ठहा ॥ पंच-कोलकमेतच्च मरिचेन विना स्मृतं ॥ गुल्मप्लीहोदरानाहशूलघ्नं दी-पनं परं ॥ बिल्वकाश्मर्यतर्कारीपाटलाटिंटुकैर्महत् ॥ जयेत्कषायं तिक्तोष्णं पंचमूलं कफानिलौ ॥ ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतं ॥ स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ॥ बलापुनर्न-वैरंडैः शूर्पपर्णीद्वयेन च ॥ मध्यमं कफवातघ्नं नातिपित्तकरं लघु ॥ अभीरुवीराजीवंतीजीवकर्षभकैः स्मृतं ॥ जीवनाख्यं तु चक्षुष्यं

वृष्यं पित्तानिलापहं ॥ तृणाख्यं शरदर्भेक्षुशालिकाशैस्तु पित्तजित् ॥ अजशृंगी हरिद्रा च विदारी सारिवाऽमृता ॥ वल्याख्यं कंटकाख्यं तु श्वदंष्ट्राऽभीरुसैर्यकैः ॥ सहिंस्राकरमर्दीकैः सर्वदोषहरे च ते ॥ कारवीकुंचिकाऽजाजीकवरीधान्यतुंबरु ॥ अन्नगंधहरं रुच्यं दीपनं कफवातजित् ॥ बाष्पिका कटुतिक्तोष्णा कृमिश्लेष्महरा परं ॥ तद्वच्च राजिका विष्टंसादेनी दीपनी परं ॥ शूलाटोपहरा रुच्या दीप्यकः कोष्ठशूलजित् ॥ अल्पद्याः सर्षपाः स्निग्धाबाष्पिकावच्चकीर्तिताः ॥ हिंगु वातकफानाहशूलघ्नं पित्तकोपनं ॥ कटुपाकरसं रुच्यं दीपनं पाचनं लघु ॥ पित्तास्रकोपि तच्चैव श्रेष्ठं बोष्काणदेशजं ॥ ततो न्यूनगुणं त्वन्यद्व्यव्यंजनधूपनं ॥ शताह्वाकुष्ठतगरसुरदारुहरेणवः ॥ एलैलवालुसरलत्वग्व्याघ्रनखचोरकाः ॥ लघूष्णाः कटुकाः पाके कफवातनिबर्हणाः ॥ सैर्यकस्तिक्तमधुरः स्निग्धोष्णः कफवातजित् ॥ बस्तिमूत्रविबंधघ्नो वृष्यो गोक्षुरको हिमः ॥ पाचनं कफपित्तघ्नं तिक्तं शीतं विषार्द्दयं ॥ कफघ्नं तिक्तकटुकं मुस्तं संग्राहि पाचकं ॥ तिक्ताऽमृता त्रिदोषघ्नी ग्राहिण्युष्णा रसायनी ॥ दीपनी ज्वरतृड्दाहकामलावातरक्तनुत् ॥ तिक्तशीतौ ज्वरहरौ लघू भूनिंबपर्पटौ ॥ निंबस्तिक्तो हिमः कुष्ठकृमिपित्तकफापहः ॥ महानिंबः परं ग्राही कषायो रूक्षशीतलः ॥ गुग्गुलुः पिच्छिलस्पर्शो विशदोऽभ्यवहारतः ॥ सस्वादुः सकटुस्तिक्तः सकषायो रसायनं ॥ व्रणयः स्वर्यः कटुः पाके रूक्षः सूक्ष्मोऽग्निदीपनः ॥ क्लेदमेदोऽनिलश्लेष्मगंडमेहापचीकृमीन् ॥ पिटकाग्रंथिशोफांश्च हंत्युष्णः स्रंसनो लघुः ॥ शंखपुष्पी सरा तिक्ता मेध्या कृमिविषापहा ॥ कटुतिक्तोष्णमगुरु स्निग्धं वातकफापहं ॥ पित्तास्रविषतृड्दाहक्लमघ्नं गुरु रूक्षणं ॥ सर्वं सतिक्तमधुरं चंदनं शिशिरं प-

१ बल्याख्यमिति पाठः २ साधनोति पाठः ३ व्हर्यमिति पाठः

रं ॥ लघु रक्तं तथोशीरं वालकं पाचनं च तत् ॥ ज्वरातिसा-
रवमथुरक्तपित्तक्षतापहं ॥ मधुकं रक्तपित्तघ्नं व्रणशोधनरोपणं ॥
गुरु स्वादु हिमं वृष्यं चक्षुष्यं स्वरवर्णकृत् ॥ कटुतिक्ते निशे मेहकुष्ठ-
पित्तकफापहे ॥ प्रलेपाज्जयतः कंडूं शोफं दुष्टव्रणं विषं ॥ प्रपौं-
डरीकं चक्षुष्यं शिशिरं व्रणरोपणं ॥ कषायतिक्तमधुरं रक्तपित्तप्र-
सादनं ॥ बलात्रयं स्वादु वृष्यं स्निग्धं शीतं बलप्रदं ॥ तत्र ना-
गबला बल्या क्षतक्षीणहिता गुरुः ॥ तांबूलं कटु सक्षारं रुच्यमु-
ष्णं कफप्रणुत् ॥ भेदि संमोहकृत्पूगं कषायं स्वादु रोचकं ॥ जा-
तिपत्री कटुफलं कंकोलकलवंगकं ॥ लघु तृष्णापहं हृद्यं वक्त्रदौ-
र्गंध्यनाशनं ॥ सस्वादुतिक्तस्तृष्णाघ्नः कर्पूरश्छेदनो हिमः ॥ लताक-
स्तूरिका तद्वन्मुखशोषहरा परं ॥ कषायमधुरं शीतं पद्मं पित्तक-
फास्रजित् ॥ तद्वद्बकुलपुन्नागकुमुदोत्पलपाटलं ॥ सचंपकं ततो न्यू-
नं गुणैः कोरंटकिंशुकं ॥ मालतीमल्लिकापुष्पं तिक्तं जयति मारुतं॥
विषपित्तकफान्नागं सिंधुवारं च तद्गुणं ॥ कफघ्नं कैतकं तिक्तं शैरी-
षं विषहारि च ॥ वातलं पुष्पमागस्त्यं कषायं कफपित्तजित् ॥ चा-
तुर्थिकज्वरहरं नावनेनोपयोजितं ॥ बंधूकं श्लेष्मलं ग्राहि तद्वदेव-
च यूथिका ॥ कफघ्नमुष्णवीर्यं च कुंकुमं व्रणशोधनं ॥ अवल्गुजैडगज
जं बीजं वातकफप्रणुत् ॥ आस्या वर्णश्लेष्ममेदःसौकुमार्यकृदन्यथा॥
अतोऽध्वाऽग्निबलायूंषि कुर्याच्चंक्रमणं सुखं ॥ मारुतस्यानुलोम्यं च
खुडस्तंभश्रमापहं ॥ अन्वर्थसंज्ञं पादत्रं बलदृक्शुक्ररक्षणं ॥ वर्ण्यं
नेत्रहितं छत्रं वातवर्षातपापहं ॥ प्रवातो रौक्ष्यवैवर्ण्यस्तंभकृद्दाहतृड्-
भ्रमान् ॥ श्रमाग्निमूर्च्छाश्च जयेदप्रवातस्ततोऽन्यथा ॥ प्राग्वायु-
रुष्णोऽभिष्यंदी त्वग्दोषार्शोविषकृमीन् ॥ सन्निपातज्वरश्वासमाम-
वायुं च कोपयेत् ॥ पश्चिमः शिशिरो हंति मूर्च्छां दाहं तृषं विषं ॥

१ वातलमितिपाठः २ एकत्रस्थितिः

दक्षिणो मारुतः श्रेष्ठो नेभ्योऽगबलवर्द्धनः ॥ रक्तपित्तप्रशमनो न च वातप्रकोपनः ॥ उत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च ॥ कषायानुरसः शीतो दोषाणामप्रकोपनः ॥ आतपो भ्रमतृट्स्वेददाहमूर्च्छाविवर्णताः ॥ कुर्यात् पित्तास्रवन्हींश्च छायात्वेतानपोहति ॥ तमः कषायकटुकं ज्योत्स्ना मधुरशीतला ॥ भवति चात्र ॥ रसादिभेदैरिति भेषजानां दिङ्मात्रमुक्तं नयतोऽस्ति किंचित् ॥ अनौषधं द्रव्यमिहावबोधो रूपस्य तेषां वनगोचरेभ्यः ॥ इति विविधौषधविज्ञानीयो नाम द्वादशोऽध्यायः ॥ १२ ॥

अथातोऽग्र्यसंग्रहमध्यायं व्याख्यास्यामः ॥ श्रेष्ठमुदकमाश्वासनस्तंभनक्लेदनानां ॥ स्नानं सुरा च श्रमहराणां ॥ क्षीरं जीवनीयानां॥ मांसं बृंहणीयानां ॥ रसः प्रीणनानां ॥ लवणमन्नद्रव्यरुचिकराणां ॥ तिंदुकमनन्नद्रव्यरुचिकराणां॥अम्लं हृद्यानां॥कुक्कुटो बल्यानां॥तैलं वातश्लेष्मप्रशमनानां ॥ सर्पिर्वातपित्तप्रशमनानां ॥ मधु श्लेष्मपित्तप्रशमनानां ॥ स्वेदो मार्दवकराणां ॥ व्यामामः स्थैर्यकराणां ॥ क्षारः पुंस्त्वोपघातिनां ॥ आमं कपित्थमकंठ्यानां ॥ आविकं सर्पिरहृद्यानां ॥ महिषीक्षीरं स्वप्नजननानां ॥ मंदकं दध्यभिष्यंदकराणां ॥ इक्षुर्मूत्रजननानां॥यवाः पुरीषजननानां ॥ जांबवं वातजननानां ॥कुलत्था अम्लपित्तजननानां ॥ माषाः शष्कुल्योऽविक्षीरं च पित्तश्लेष्मजननानां ॥ दुरालभा पित्तश्लेष्मोपशोषणानां ॥उपवासो ज्वरहराणां॥ वृषो रक्तपित्तप्रशमनानां ॥ कंटकारिका कासघ्नानां ॥ लाक्षा सद्यःक्षतघ्नानां ॥ नागबलाभ्यासः क्षयक्षतघ्नानां ॥ पुष्करमूलं हिध्माश्वासकासपार्श्वशूलहराणां ॥ अजापयः शोषघ्नस्तन्यकररक्तसंग्रहणप्रशमनानां ॥ मृद्भृष्टलोष्टप्रसादश्छर्दितृष्णातियोगप्रशमनानां ॥ अरुष्करश्चित्रकमूलं च शुष्कार्शःप्रशमनानां ॥ कुटजो रक्तार्शःप्रशमनानां ॥ लाजा-

श्छर्दिघ्नानां ॥ यावशूकः स्रंसनीयपाचनीयार्शोघ्नानां ॥ तक्राभ्यासोऽर्शःश्वयथुग्रहणीदोषघृतव्यापत्प्रशमनानां ॥ क्रव्यान्मांसाभ्यासोऽर्शःशोषग्रहणीदोषघ्नानां ॥ मुस्तं संग्रहणीयदीपनीयपाचनीयानां ॥ अतिविषा संग्रहणीयपाचनीयसर्वदोषहराणां ॥ बिल्वं संग्रहणीयदीपनीयवातकफप्रशमनानां ॥ उदीच्यं निर्वापणदीपनीयछर्द्यतीसारहराणां ॥ कट्वंगं संग्रहणीयदीपनीयानां ॥ कुटजत्वक् श्लेष्मपित्तरक्तसंग्रहणीयोपशोषणानां ॥ उत्पलकुमुदकिंजल्कोऽनंता च संग्रहणीयरक्तपित्तप्रशमनानां ॥ काश्मर्यफलं रक्तसंग्रहणीयरक्तपित्तप्रशमनानां ॥ गंधप्रियंगुः शोणितपित्तातिवेगप्रशमनानां ॥ पृश्निपर्णी रक्तसंग्रहणीयदीपनीयपाचनीयवातहरवृष्याणां ॥ शालिपर्णी वृष्यसर्वदोषहराणां ॥ बला संग्रहणीयबल्यवातहराणां ॥ पिप्पलीमूलं पाचनीयदीपनीयानाहहराणां ॥ चित्रकमूलं दीपनीयपाचनीयगुदशोफशूलहराणां ॥ गोक्षुरको मूत्रकृच्छ्रानिलहराणां ॥ हरिद्रा प्रमेहहराणां ॥ रक्तावसेको विद्रधिविसर्पपिटिकागंडमालापहराणां ॥ एरंडतैलाभ्यासो वध्मगुल्मानिलशूलहराणां ॥ लशुनो गुल्मानिलहराणां ॥ हिंगुनिर्यासश्छेदनीयदीपनीयानुलोमिकवातकफप्रशमनानां ॥ अम्लवेतसो भेदनीयदीपनीयानुलोमिकवातश्लेष्महराणां ॥ उष्ट्रीक्षीरमुदरश्वयथुघ्नानां ॥ अयोरजः पांडुरोगघ्नानां ॥ खदीरः कुष्ठघ्नानां ॥ विडंगं कृमिघ्नानां ॥ रास्ना वातहराणां ॥ एरंडमूलं वृष्यवातहराणां ॥ गुग्गुलुर्मेदोऽनिलहराणां ॥ अमृता संग्रहणीयदीपनीयवातश्लेष्मशोणितविबंधप्रशमनानां ॥ मदनफलं वमनास्थापनानुवासनोपयोगिनां ॥ त्रिवृत्सुखविरेचनानां ॥ चतुरंगुलो मृदुविरेचनानां ॥ स्नुक्पयस्तीक्ष्णविरेचनानां ॥ प्रत्यक्पुष्पी शिरोविरेचनानां ॥ त्रिफला तिमिरघ्नानां ॥ त्रिफलागुग्गुलु व्र-

ण्यानां ॥ शिरीषो विषघ्नानां ॥आमलकं वयःस्थापनानां ॥ हरीतकी पथ्यानां ॥ क्षीरघृताभ्यासो रसायनानां ॥ समघृतसक्तुप्राशाभ्यासो वृष्योदावर्तहराणां ॥ संकल्पो नक्रेतश्च वृष्याणां ॥ दौर्मनस्यमवृष्याणां ॥ तैलगंडूषाभ्यासो दंतबलरुचिकराणां ॥ चंदनोदुंबरं निर्वापणालेपनानां ॥ रास्नाऽगुरुणी शीतापनयनप्रलेपनानां ॥ लामज्जकोशीरे दाहत्वग्दोषस्वेदापनयनप्रलेपनानां ॥ कुष्टं वातहराभ्यंगोपनाहोपयोगिनां ॥ मधुकं चक्षुष्यवृष्यकेश्यकंठ्यवर्ण्यविरंजनीयरोपणीयानां ॥ अजीर्णाशनं ग्रहणीदूषणानां ॥ विरुद्धवीर्याशनं निंदितव्याधिकराणां ॥ गुरुभोजनं दुर्विपाकानां ॥ अतिमात्राशनमामदोषहेतूनां ॥ यथाग्न्यभ्यवहारोऽग्निसंधुक्षणानां ॥ यथासात्म्यमाहारविहारौ सेव्यानां ॥ एकाशनशयनभोजनं सुखपरिणामकराणां ॥ विषमाशनमग्निवैषम्यकराणां ॥ काले भोजनमारोग्यकराणां ॥ सुदर्शनमन्नं श्रद्धाजननानां॥वेगधारणमनारोग्यकराणां॥तृप्तिराहारगुणानां ॥ अनशनमायुषो ऱ्हासकराणां ॥ प्रमिताशनं गवेधुकान्नं च कर्शनीयानां उद्दालकान्नं रूक्षणीयानां ॥ मद्यं सौमनस्यजननानां ॥ मद्याक्षेपो धीधृतिस्मृतिहराणां ॥ स्त्रीष्वतिप्रसंगः शोषहाराणां॥ शुक्रवेगनिग्रहः षांढ्यकराणां ॥ पादाभ्यामुद्वर्तनमन्नश्रद्धाजननानां ॥ सूनादर्शनमन्नाश्रद्धाजननानां ॥ मिथ्यायोगो व्याधिमुखानां ॥ रजस्वलागमनमलक्ष्मीमुखानां ॥ ब्रह्मचर्यमायुष्याणां ॥ परदारगमनमनायुष्याणां ॥अयथाप्राणमारंभः प्राणोपरोधिनां ॥ विषादो रोगवर्द्धनानां ॥ हर्षः प्रीणनानां ॥ शोकः शोषणानां ॥ निर्वृतिः पुष्टिकराणां ॥ आश्वासो बलकराणां ॥ पुष्टिः स्वप्नकराणां ॥ स्वप्नस्तंद्राकराणां ॥ सर्वरसाभ्यासो बलकराणां ॥ एकरसाभ्यासो दौर्बल्यारोचकान्यतमदोषप्रकोपकराणां ॥ अग्निरामस्तंभशीतशूलोद्वेष्टकप्रशमनानां ॥ गर्भशल्यमाहार्याणां ॥ अजीर्णमुद्धार्याणां ॥

बालो मृदुभेषजार्हाणां ॥ वृद्धो याप्यानां ॥ गर्भिणी तीक्ष्णौषधव्यवायव्यायामवर्जनीयानां ॥ सौमनस्यं गर्भधारणानां ॥ सन्निपातो दुश्चिकित्स्यानां ॥ आमविषमचिकित्स्यानां ॥ ज्वरः शीघ्ररोगाणां ॥ कुष्ठं दीर्घरोगाणां ॥ राजयक्ष्मा रोगसमूहानां ॥ प्रमेहोऽनुषङ्गिणां ॥ जलौकसोऽनुशस्त्राणां ॥ बस्तिर्यन्त्राणां ॥ हिमवानौषधिभूमीनां ॥ सोम ओषधीनां ॥ मरुभूमिरारोग्यदेशानां ॥ आनूपभूमिरहितदेशानां ॥ निर्देशकारित्वमातुरगुणानां ॥ अनिर्देशकारित्वं रिष्टानां ॥ भिषक् चिकित्सांगानां ॥ सिद्धिर्वैद्यगुणानां ॥ नास्तिको वर्ज्यानां ॥ लौल्यं क्लेशकराणां ॥ आत्मवत्तोपकारिणां ॥ शास्त्रसहितस्तर्कः साधकानां ॥ दृष्टकर्मता निःसंशयकराणां ॥ असमर्थता भयकराणां ॥ तद्विद्यसंभाषा बुद्धिवर्द्धनानां ॥ आचार्यः शास्त्राधिगमहेतूनां ॥ सद्वैद्यद्वेषः प्राणत्यागहेतूनां ॥ आयुर्वेदोऽमृतानां ॥ सद्वचनमनुष्ठेयानां ॥ वायुः प्राणसंज्ञाप्रदानहेतूनां ॥ सर्वसंन्यासः सुखानामिति ॥ तत्रोदकाग्निमृद्धृष्टलोष्टप्रसादतक्राभ्यासरक्तावसेकैरंडतैलाभ्यासोष्ट्रीक्षीरमदनफलमद्याक्षेपैकरसाभ्यासगर्भिणीनामेकैकस्मात्समुदायाच्च निर्धारणं ॥ पुष्करमूलादीनां तु समुदायादेवेति ॥ अग्र्याणां शतमुद्दिष्टं पंचपंचाशदुत्तरं ॥ अल्पमेतद्विजानीयाद्धिताहितविनिश्चये ॥ इत्यग्र्यसंग्रहो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथातः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः ॥ मदनजीमूतकेक्ष्वाकुकोशातकीद्वयफलपुष्पपत्राणि ॥ कुटजकरंजत्रपुससर्षपपिप्पलीविडंगैलाप्रत्यक्पुष्पाहरेणुपृथ्वीकाकुस्तुंबरुप्रपुन्नाटानां फलानि शारदानि च ॥ हस्तिपर्णीकोविदारकर्बुदारारिष्टाश्वगंधानीपविदुलबिंबीबंधुजीवकश्वेताशणपुष्पीसदापुष्पीवचाचित्राचित्रकमृगेंद्रवा-

१ अस्मिन्नध्याये पञ्चपञ्चाशदधिकशतमग्र्याणामुक्तं गणनायां कृतायामेकोनषष्ट्यधिकशतमायाति तच्चिन्त्यं ॥

रुणीमुखवीचतुरंगुलस्वादुकंटकपाठापाटलीशार्ङ्गेष्टामधुकमूर्वासप्तपर्ण-सोमवल्कद्वीपिशिग्रुसुमनःसौमनस्यायवानीवृश्चीवपुनर्नवामहासहाक्षुद्रसहेक्षुकांडकालदंतपिप्पलीमूलचविकानलदोशीरन्हीबेरमूलानि ॥ शाल्मलीशाल्मलुकाभद्रपर्ण्यैरावण्युपोदकोद्दालकधन्वरसांजनराजादनोपचित्रागोपश्रृंगाटिकापिच्छाः॥प्रियंगुपुष्पं॥तालीसपत्रं॥हरिद्राश्रृंगबेरकंदौ॥मधूकदारुहरिद्रासारौ॥ तगरगुडूचीमधुफाणितक्षीरक्षारलवणानि चेति वमनोपयोगीनि ॥ त्रिवृत्श्यामादंतीद्रवंतीशंखिनीसप्तलाऽजगंधाऽजश्रृंगीवचागवाक्षीछगलांत्रीसुवर्णक्षीरीचित्रककिणिहीन्हस्वपंचमूलवृश्चीवपुनर्नवावास्तुकशाकसालमूलानि ॥ तिल्वकरम्यककांपिल्लकपाटलीत्वचः ॥ त्रिफलापीलुपियालकुवलबदरकर्कंधुकाश्मर्यपरूषकद्राक्षानीलिनीक्लीतनिकोदकीर्याविडंगपूगपंचांगुलफलानि ॥ चतुरंगुलफलपत्राणि॥पूतिकत्वक्फलपत्राणि ॥ महावृक्षसप्तपर्णज्योतिष्मतीक्षीराणि ॥ क्षीरमस्तुमद्यधान्याम्लमूत्राणिचेति विरेचनोपयोगीनि ॥ कोशातकीदेवदालीसप्तलाकारवेल्लिकास्वरसा अर्कक्षीरमुष्णोदकं चेत्युभयात्मकानि ॥ बस्तिषु तु तेषु तेष्ववस्थांतरेषु यान्युपयुज्यंते द्रव्याणि तान्येवासंख्येयत्वान्नोपदिश्यंते ॥ रसस्कंधेभ्य एव यथादोषं यथावस्थं च विभजेत् ॥ सर्वेषु तु प्रायो मदनकुटजजीमूतकेक्ष्वाकुकोशातकीद्वयत्रपुससिद्धार्थकशताव्हाफलानि॥बलादशमूलैरंडत्रिवृद्वचायष्टयाव्हकुष्टरास्नापुनर्नवकत्तृणमूलानि ॥ सरलदेवदारुहपुषाहिंगुरसांजनव्योषपत्रैलाऽमृतायवकोलकुलत्थगुडलवणमस्तुधान्याम्लमूत्रस्नेहक्षौद्रक्षीराणिचेति निरूहोपयोगीनि ॥ अपामार्गविडंगमरिचपिप्पलीशिरीषबिल्वाजाज्यजमोदवार्ताकपृथ्वीकैलाहरेणुफलानि॥तालीसतमालतर्कारीहरितकवर्गपत्राणि॥ सर्षपफलपत्राणि ॥ शिग्रुफलपत्रत्वचः॥ हरिद्रामूलकलशुननागरकंदपत्राणि॥अतिविषाकंदाः॥ कुष्ठवचाभार्ङ्गीश्वेताकिणिहीनागदंतीज्यो-

तिष्मतीगवाक्षीवयस्थावृश्चिकालीबिंबीकरंजमूलानि ॥ अर्कालर्कपुष्पमूलानि ॥ रोध्रमदनसप्तपर्णनिंबपीलुबीजानि ॥ मुरंगीमातुलुंगीलवंगपुष्पाणि ॥ अगुरुसुरदारुसरलसल्लकीजिंगिण्यसनरसांजनहिंगुलाक्षानिर्यासः ॥ तमालशालतालमधूकदार्वीसाराः ॥ तेजस्विनीमेषशृंगीवरांगेंगुदीबृहतीद्वयत्वचः ॥ राजादनमज्जक्षौद्रलवणानि मद्यानि गवादिशकृद्रसमूत्रपित्तान्येवंविधानि चेंद्रियोपशमनान्यन्यान्यपि तथा स्नेहाः क्षीरं रक्तं मांसरसो धान्यरसस्तोयमिति शिरोविरेचनोपयोगीनि ॥ मधुकपद्मकमंजिष्ठासारिवामुस्तापुन्नागकेसरैलवालुकसुवर्णत्वकृतमालपृथ्वीकाहरेणुलाक्षाशतपुष्पासल्लकीशर्करामदनकमरुबकन्यग्रोधोदुंबराश्वत्थप्लक्षलोध्रत्वक्पद्मोत्पलानि सर्वगंधद्रव्याणि च कुष्ठतगरवर्ज्यानि प्रायोगिकधूमोपयोगीनि ॥ अगुरुगुग्गुलुसल्लकीशैलेयकनलदन्हीबेरहरेणूशीरमुस्ताध्यामकवरांगश्रीवेष्टकस्थौणेयकपरिपेलवैलवालुककुंदुरुकसर्जरसयष्ट्याव्हफलसारस्नेहमधूच्छिष्टबिल्वफलमज्जयवतिलमाषकुंकुमानि मेदोमज्जवसासर्पींषि च स्नैहिकधूमोपयोगीनि॥शिरोविरेकद्रव्याणि गंधद्रव्याणि च तीक्ष्णानि मनोव्हाहरितालं चेति तीक्ष्णधूमोपयोगीनि॥भद्रदारुकुष्ठतगरवरुणबलातिबलातेंगलकच्छुराद्दकीकुबेराक्षीवत्सादन्यर्कालर्ककतकभार्ङ्गीकापासीवृश्चिकालीपत्तूरप्रभृतीनि विदार्यादिगणो वीरतरादिस्तृणारण्यवर्ज्यानि पट्पंचमूलानि चेति वातशमनानि॥दूर्वाऽनंतामोचरसमंजिष्ठापरिपेलवकालाकालीयकदलीकंदलीपयस्याऽश्मगुमानालिकेरखर्जूरद्राक्षाविदारीक्षुदरीबलानागबलानागपुष्पाशतावरीशीतपाक्योदनपाकीतृणशूल्यांशुमतीद्वयारिष्टकारिष्टाटरूषकेत्कटप्रियंगुधातकीधवधन्वनस्यंदनखदिरकदरपियालतालशालसर्जतिनिशाश्वकर्णगुंद्रावानीरपद्मापद्मकपद्मबीजमृणालकुमुदनलिनसौगंधिकपुंडरीकशतपत्रसेवालकल्हारोत्पलकाकोल्युत्पलिकाशालूकशृंगाटककसेरुकक्रौंचादनप्रभृतीनि शीतवी

र्याणि सारिवादिः पद्मकादिः पटोलादिर्न्यग्रोधादिर्दाहहरो महाकषाय-स्तृणपंचमूलं चेति पित्तशमनानि॥शीतशिवशतपुष्पासरलसुरदारुरा-स्नेंगुदीसातलामुमनःकाकादनीलांगलीहस्तिकर्णमुंजातलामज्जकप्रभृ तीन्यारग्वधादिरसनादिरर्कादिः सुरसादिर्मुष्ककादिर्वत्सकादिर्मुस्ता-दिः शीतघ्नश्च महाकषायो वल्लीकंटकपंचमूले च श्लेष्मशमनानीति॥ भवति चात्र॥समीक्ष्य दोषदूष्यादीनमी वर्गाः सुयोजिताः॥ सर्वामय-जयायालं जायंते नियतात्मनां॥ ॥ इति शोधनादिगणसंग्रहो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अथातो महाकषायसंग्रहमध्यायं व्याख्यास्यामः॥ आनंत्याद्दोष-धानामामयानां चानंता एव कषायाः॥ये तु सुतरामुपयोगवंतः प्रकर्ष-वर्तिनो वा ते जीवनीयादिसंज्ञाः प्रत्येकं दशकषायसंयोगात्पंचचत्वारिं-शन्महाकषाया वक्ष्यंते॥यत्प्रतिबोधार्थमेव मंदबुद्धीनां बुद्धिमतामुदा-हरणमात्रदर्शनार्थं॥शक्यं हि बुद्धिमद्भिः स्वादुशीतस्निग्धादीन् जी-वंत्यादिषु साधारणान् गुणानालोच्य क्षीरेक्षुद्राक्षाऽक्षोडविदारीकंदा-दिष्वपि तद्गुणेषु जीवनीयादित्वमवधारयितुं॥यथोक्तानुसरणमेव तु श्रे-यो मंदबुद्धेरिति ॥ व्यस्ताश्च ते चत्वारिंशतानि पंचाशदधिकानि तद-भिधानान्येव॥यद्यपि तानि तान्येव द्रव्याणीति द्रव्यसंकरः कषायेषु तथापि न संज्ञाविरोधः ॥ एकस्यापि बहुकार्यनिर्वर्तनात् ॥ तत्र लव-णवर्जा रसाः कल्पनायां कषाया इत्युच्यंते ॥ तद्योनित्वात् ॥ लवणे तु निर्यासादिकल्पनानामसंभवः ॥ पृथगुपयोगोपकाररहितत्वाच्च नैर-र्थक्यमिति ॥ भवंति चात्र ॥ जीवंतिकाकोल्यौ द्वे मेदे मुद्गमाषप-र्ण्यौ च ॥ ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ॥ वाट्या बला पयस्या काकोल्याविक्षुवाजिगंधे च ॥ क्षीरिणिराजक्षवके भार-द्वाजी च बृंहणीयो ऽयं ॥ हैमवती चिरबिल्वं मुस्ता कुष्टं वचा

१ तत्प्रतिपत्त्यर्थमितिपाठः

हरिद्रे च ॥ चित्रककटुकाऽतिविषा वर्गोऽयं लेखनीयाख्यः ॥ अ-
र्केरंडौ चित्राचित्रकचिरबिल्वशंखिनीसरलाः॥हेमक्षीरी कटुका वन्हि-
मुखी भेदनीयानि॥मधुमधुकपृश्निपर्णीकट्फललोध्रप्रियंगुधातक्यः॥
अंबष्ठकीसमंगा मोचरसश्चेति संधानः॥ हिंगुमरिचाम्लवेतसदीप्यक-
भल्लातकास्थिसंयोगात् ॥ वर्गः सपंचकोलो निर्दिष्टो दीपनीयोऽयं ॥
ऐंद्र्यतिरसापयस्या ऋष्यप्रोक्तास्थिराबलाऽतिबलाः ॥ इति बल्यो
दशकोऽयं हयगंधा रोहिणी ऋषभः॥ चंदनतुंगपयस्यासितालताम-
धुकपद्मकोशीरं ॥ वर्ण्यो गणोऽयमुदितो मंजिष्ठासारिवासहितः ॥ हं-
सपदीबृहतीद्वयमृद्वीकासारिवेक्षुमूलानि ॥ कैडर्यमधुककृष्णाः सवि-
दार्यः कंठजननानि ॥ वृक्षाम्लबदरदाडिमकुवलाम्राम्रातलिकुच-
करमर्दं ॥ हृद्यं समातुलुंगाम्लवेतसं विद्धि वर्गमिमं ॥ नागरच-
विकाचित्रकविडंगमूर्वाऽमृतावचामुस्ताः ॥ सहपिप्पलीपटोलास्तृ-
सिघ्नोऽयं गणः प्रथितः ॥ कुटजफलबिल्वचित्रकमहौषधभतिविषा-
वचाचविकाः ॥ धन्वयवासं पथ्या दारुहरिद्रा गणोऽर्शोघ्नः ॥ खदि-
रामलकारुष्करनिशाऽभयासप्तपर्णकरवीराः ॥ कुष्ठघ्नाश्चतुरंगुलविडंग-
जातिप्रवालाश्च ॥ नलदकृतमालचंदनसर्षपघननिंबकुटजमधुकानि ॥
कंडूं दारुहरिद्रा सनक्तमालानि निघ्नंति ॥ अक्षीवमरिचकेंबुकविडंग-
कांडीरकिणिहिनिर्गुंड्यः ॥ घ्नंति क्रमीन् श्वदंष्ट्राविषाखुपर्ण्यस्तथा न
चिरात् ॥ मंजिष्ठाश्लेष्मातकरजनीसुवहाशिरीषपालिंद्यः ॥ सैलाचं-
दनकतकाः ससिंदुवारा विषं घ्नंति ॥ शालिकुशकाशषष्टिकवीरण-
दर्भेक्षुबालिकेक्षूणां ॥ तद्वद्दुंद्रोत्कटयोर्मूलमलं स्तन्यजननाय ॥ पाठा
नागरसुरतरुघनाऽमृतासारिवेंद्रयवमूर्वाः॥ कटुकाकिरातातिक्तं वर्गोऽयं
स्तन्यशुद्धिकरः ॥ मेदाकाकोलीद्वयवृक्षरुहाजीवकर्षभकुलिंगाः ॥
शुक्रजननो गणोऽयं सहजटिलाशूर्पपर्णीभिः ॥ कुष्ठैलवालुकट्फलका-
ढेक्षिवक्ष्वब्धिफेनकोशीरैः ॥ वसुकेक्षुरकैः शुक्रं शुत्ध्येत्सकदंबनिर्या-

से: ॥ द्राक्षाकाकोलीद्वयमधुपर्णीमधुकजीवकविदार्यः ॥स्नेहोपगाः स-
मेदाजीवंतीशालिपर्णीकाः ॥ सौभांजनकपुनर्नवद्दश्चीवकुलत्थमाषब-
दराणि ॥ स्वेदोपगानि विद्यात्सयवतिलार्कोरुबूकानि ॥ लाजाम्रबद-
रदाडिमयवषष्टिकमातुलुंगसेव्यानि ॥ जंब्वाम्रपल्लवानि वमिनिग्रह-
णानि मृत्स्ना च ॥ नागरधन्वयवासकबालकपर्पटकचंदनगुडूच्यः ॥ भू-
निंबघनपटोली कुस्तुंबरुस्तृषं घ्नंति ॥ बृहतीद्वयवृक्षरुहापुष्करमूलाभ-
याकणाशृंग्यः॥हिध्मां निघ्नंति शठी दुरालभा बदरबीजं च॥ श्यामा-
ऽनंता पद्मा कट्वंगः पद्मकेसरं लोध्रं ॥ धातुकिकुसुमसमंगामोचरसा-
म्रास्थि विट्ग्रहणं॥जंबूसल्लकिमधुकं नीलोत्पलकच्छुरातिलश्याव्हं॥
भृष्टा च मृत्पयस्या सशाल्मली विड्विरजनानि ॥ जंब्वाम्रोदुंबरवट-
कपीतनप्लक्षपिप्पलाश्मंतं ॥ भल्लातसोमवल्कं मूत्रग्रहणाय निर्दिष्टं ॥
कमलनलिनकुमुदमधुकसौगंधिकधातकीलताकुसुमं ॥ मूत्रं नयति
विरागं सोत्पलशतपत्रपुंडरीकं च॥ वृक्षादनीश्वदंष्ट्रादर्भोत्कटवसुकवशि-
रकुशकाशाः ॥ मूत्रं विरेचयेयुर्गुंद्रा पाषाणभेदश्च ॥ द्राक्षाऽऽमलकपु-
नर्नवद्दश्चीवदुरालभाऽभयाकृष्णाः ॥ कासं घ्नंति सशृंगी तामलकी
कंटकारी च ॥ चंडाऽम्लवेतसशठीतामलकीसुरसाहिंगुजीवंत्यः॥ पुष्क-
रमूलैलाऽगुरु वर्गोऽयं श्वासशमनाय॥ द्राक्षापीलुपरूषकमंजिष्ठासारि-
वाऽमृतापाठाः ॥ त्रिफला चेति गणोऽगं ज्वरस्य शमनाय निर्दिष्टः ॥
दाडिमफल्गुपरूषकपियालयवषष्टिकेक्षुबदराणि ॥ श्रमनाशनानि वि-
द्याद्द्राक्षाखर्जूरसहितानि ॥ पद्मकलाजोशीरं मधुकोत्पलसारिवासि-
तोदीच्यं ॥ काश्मर्यफलं चंदनमेष गणो दाहहा प्रोक्तः ॥ नतनागरा-
गुरुवचाधान्यकभूतीकपिप्पलीव्याघ्र्यः॥शीतं शमयंत्यचिरात्स्योनाकः
साग्निमंथश्च ॥ तिंदुकपियालबीजकसप्तच्छदखदिरकदरबदराणि ॥
अरिमेदवाजिकर्णौ कंकुभश्चोदर्दशमनानि ॥ काकोल्येलासेव्यं नि-

१ कुटज इतिपाठः

दिग्धिके शाल्पिपृश्निपर्ण्यौ च ॥ घ्नंत्यंगमर्दमचिराच्चंदनमधुकोरुबूकं च ॥ दीप्यकमरिचाजाजीगंडीरं साजगंधमथ शूलं ॥ शमयति सपंचकोलं शोफं दशमूलमाढ्यं च ॥ मधुमधुकलाजगैरिकफलिनीमोचरसमृत्कपालानि ॥ संस्थापयंति रुधिरं रुधिरं च सशर्करं रोध्रं ॥ शैलैलवालुकट्फलमोचरसाशोकपद्मकशिरीषं ॥ स्थापयति वेदनामथ सहतुंगकदंबविदुलं च ॥ कैडर्यहिंगुचोरकपलंकषाऽशोकरोहिणिवयस्थाः ॥ पूत्यरिमेदो जटिलागोलोमिवचाश्च संज्ञाख्याः ॥ ऐंद्री दूर्वाऽमोघा विष्वक्सेनाऽव्यथा शिवा ऽरिष्टा ॥ ब्राह्मी सवाट्यपुष्पी शतवीर्या स्थापयेद्गर्भं ॥ अमृता पथ्या धात्री जीवंती श्रेयसी स्थिरा युक्ता ॥ मंडूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वयः ॥ इति नानाविधव्याधिविघातार्थमुदाहृताः ॥ योगा रोगातुरवशात्कल्पयेत्तानुयथायथं ॥ ॥ इति महाकषायसंग्रहो नाम पंचदशोऽध्यायः ॥ १५ ॥

अथातो विविधगणसंग्रहमध्यायं व्याख्यास्यामः ॥ विदारिपंचांगुलवृश्चिकालीवृश्चीवदेवाह्वयशूर्पपर्ण्यः॥ द्वे पंचमूले लघुजीवनाख्ये कंडूकरी गोपसुता त्रिपादी ॥ विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ॥ शोषगुल्मांगमर्दोर्ध्वश्वासकासहरो गणः ॥ सारिवोशीरकाश्मर्यमधूकशिशिरद्वयं ॥ यष्टीपरूषकं हंति दाहपित्तास्रतृड्गदान् ॥ पद्मकपुंड्रौ वृद्धितुगर्द्ध्यः शृंग्यमृता दश जीवनसंज्ञाः॥स्तन्यकरा घ्नंतीरणपित्तं प्रीणनबृंहणजीवनवृष्याः ॥ परूषकं वरा द्राक्षा कट्फलं कतकात्फलं॥राजव्हं दाडिमं शाकं तृण्मूत्रामयवातजित्॥अंजनं फलिनीमांसीपद्मोत्पलरसांजनं ॥ सैलामधुकनागाव्हं विषांतर्दाहपित्तनुत् ॥ पटोलकटुरोहिणीचंदनं मधुस्रवगुडूचिपाठान्वितं ॥ निहंति कफ-

१ आढ्यमूरुस्तंभं २ देवाव्हयशूर्पपर्ण्यइतिपाठः ३ ईरणोवायुः

पित्तकुष्ठज्वरान्विषं वमिमरोचकं कामलां ॥ गुडूचीपद्मकारिष्टधान्यकारक्तचंदनं ॥ पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ आरग्वधेंद्रयवपाटलिकाकतिक्तानिंबामृतामधुरसास्रुववृक्षपाठाः ॥ भूर्निबसैर्यकपटोलकरंजयुग्मसप्तच्छदाग्निसुषवीफलबाणघोंटाः ॥ आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान् ॥ कफं कंडूं प्रमेहं च दुष्टव्रणविशोधनः ॥ असनतिनिशभूर्जश्वेतवाहप्रकीर्याः खदिरकदरभंडीशिंशिपामेषशृंग्यः ॥ त्रिहिमतलपलाशा जोंगकः शाकशालौ धवक्रमुककलिंगच्छागकर्णाश्वकर्णाः ॥ असनादिर्विजयते श्वित्रकुष्ठकफक्रमीन् ॥ पांडुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ वरणसैर्यकयुग्मशतावरीदहनमोरटबिल्वविषाणिकाः ॥ द्विबृहतीद्विकरंजजयाद्वयं बहलपल्लवदर्भरुजाकराः ॥ वरणादिः कफं मेदो मंदाग्नित्वं नियच्छति ॥ आढ्यवातं शिरःशूलं गुल्मं चांतः सविद्रधिं ॥ ऊषकस्तुत्थकं हिंगु कासीसद्वयसैंधवं ॥ सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहं ॥ वीरतरोऽरणिको नलगुंठौ मोरटटुंटुकसैर्यकयुग्मं ॥ मुस्तकमंजरिकर्कशपाथा मूत्रविरेककरो दशकश्च ॥ वर्गो वीरतराद्योऽयं हंति वातकृतान्गदान् ॥ अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ रोध्रशाबरकरोध्रपलाशा जिंगिणीसरलकट्फलयुक्ताः ॥ कुत्सितांबकदलीगतशोकाः सैलवालुपरिपेलवमोचाः ॥ एष रोध्रादिको नाम मेदःकफहरो गणः ॥ योनिदोपहरः स्तंभी वर्ण्यो विषविनाशनः ॥ अर्कालर्कौ नागदंती विशल्या भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या ॥ प्रत्यक्पुष्पी पीततैलोदकीर्या श्वेतायुग्मं तापसानां च वृक्षः ॥ अयमर्कादिको वर्गः कफमेदोविषापहः ॥ कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ सुरसयुगफणिज्जं कालमाला विडंगं खरबुकवृषकर्णीकट्फलं कासमर्दः ॥ क्षवकसरसिभार्ङ्गीकार्मुकाः काकमाची कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ सुरसादिर्गणः श्ले-

१ महाकषायसंग्रहोक्तंवृक्षादनीत्यादिदशकं

ष्ममेदःक्रिमिनिषूदनः ॥ प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशिपाः ॥ गुल्ममेहाश्मरीपांडुमेदोर्शःकफशुक्रजित् ॥ वत्सको मधुरसा त्रुटिर्वचा दीर्घवृंतफलवेल्लसर्षपाः ॥ रोहिणी स्थपनिर्हिंगुभार्ङ्ग्यः शूलघाति दशकं घुणप्रिया॥ वत्सकाद्योऽनिलश्लेष्ममेदोऽरोचकपीनसान् ॥ शूलार्शोज्वरगुल्मांश्च हंति दीपनपाचनः ॥ वचाजलददेवाह्वनागरातिविषाऽभयाः ॥ हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ वचाहरिद्रादिगणावामातीसारपाचनौ ॥ मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ प्रियंगुपुष्पांजनयुग्मपद्माः पद्माद्रजो योजनवल्यनंता ॥ मानद्रुमो मोचरसः समंगा पुन्नागशीतं मदनीयहेतुः ॥ अंबष्ठा मधुकं नमस्करी नंदीवृक्षपलाशकच्छुराः ॥ रोध्रं धातुकिबिल्वपेशिके कट्वंगः कमलोद्भवं रजः ॥ गणौ प्रियंग्वंबष्ठादी पक्कातीसारनाशनौ ॥ संधानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ मुस्तावचाग्निद्विनिशाद्वितिक्ताभल्लातपाठात्रिफलाविषाख्याः ॥ कुष्ठं त्रुटी हैमवती च योनिस्तन्यामयघ्ना मलपाचनाश्च ॥ न्यग्रोधपिप्पलसदाफलरोध्रयुग्मजंबूद्वयार्जुनकपीतनसोमवल्काः ॥ प्लक्षाम्रवंजुलपियालपलाशनंदीकोलीकदंबविरलामधुकं मधूकं ॥ न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधनः ॥ मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः॥एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकस्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ॥ शुक्तिर्व्याघ्रनखो ऽमराह्वमगुरुः श्रीवासकः कुंकुमं चंडा गुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयौ ॥ एलादिको वातकफौ विषं च विनियच्छति ॥ वर्णप्रसादनः कंडूपिटिकाकोठनाशनः ॥ श्यामादंतीद्रवंतीक्रमुककुठरणाशंखिनीचर्मसाह्वास्वर्णक्षीरीगवाक्षीशिखरिरजनकच्छिन्नरोहाकरंजाः ॥ बस्तांत्री व्याधिघातो बहलबहुरस-

१ पूर्वाध्यायोक्तं दीप्यकादि

स्तीक्ष्णवृक्षात्फलानि श्यामाद्यो हंति कुष्ठं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रं ॥ पिप्पलीपिप्पलीमूलचव्यचित्रकशृंगबेरमरिचहस्तिपिप्पलीहरेणुकैलाऽजमोदेंद्रयवपाठाजीरकसर्षपमहानिंबफल्गुहिंगुभार्ङ्गीवचामुस्तामधुरसाऽतिविषाविडंगानि कटुरोहिणीचेति ॥ पिप्पल्यादिः कफहरः प्रतिश्यायानिलारुचीः ॥ निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ पंचविंशतिरित्युक्ता[2] वर्गास्तेषु त्वलाभतः ॥ युंज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकं ॥ एते वर्गा दोषदूष्याद्यपेक्ष्य कल्कक्वाथस्नेहलेहादियुक्ताः ॥ पाने नस्येऽन्वासनेंऽतर्बहिर्वा लेपाभ्यंगैर्घ्नंति रोगान्सुकृच्छ्रान् ॥ इति विविधगणसंग्रहो नाम षोडशोऽध्यायः ॥ १६ ॥

अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ इह हि द्रव्यं पंचमहाभूतात्मकं ॥ तस्याधिष्ठानं पृथिवी योनिरुदकं खानिलानलसमवायान्निर्वृत्तिविशेषौ ॥ उत्कर्षेण तु व्यपदेशः ॥ तस्माद्भूतसमवायसंभवान्नैकरसं द्रव्यं ॥ ततश्च नैकदोषा व्याधयः ॥ तत्र व्यक्तो रसः ॥ अनुरसस्तु रसेनाभिभूतत्वादव्यक्तो व्यक्तो वा किंचिदंते ॥ रसस्य तु छेदनोपशमने द्वे कर्मणी हिताहितौ प्रभावौ ॥ तदाश्रयेषु च द्रव्यसंज्ञकेषु पृथिव्यादिषु गुणाः प्रकृतिविकृतिविचारदेशकालवशाद्गुर्वादयो रसेषूपचर्यंते ॥ तत्र द्रव्यं गुरुकठिनविशदमंदसांद्रस्थूलस्थिरगंधगुणबहुलं पार्थिवमुपचयगौरवसंघातस्थैर्यकरं ॥ द्रवस्निग्धशीतगुरुमंदसांद्रसरमृदुपिच्छिलरसगुणबहुलमौदकमुपक्लेदस्नेहबंधविष्यंदमार्दवप्रल्हादकरं ॥ तीक्ष्णोष्णरूक्षसूक्ष्मलघुविशदरूपगुणबहुलमाग्नेयं दाहपाकप्रकाशप्रभावर्णकरं ॥ रूक्षसूक्ष्मलघुविशदविकाषिव्यवायिशीतखरस्पर्शगुणबहुलं वायव्यं रौक्ष्यलाघववैशद्यग्लानिविचारकरं ॥ मृदुसूक्ष्मलघुविशदश्लक्ष्णव्यवा-

१ गुल्ममितिपाठोऽष्टांगहृदये २ आचार्येणास्मिन्नध्यायेपंचविंशतिर्गणसंख्याकथिता गणनायांकृतायांषड्विंशतिर्गणाआयांति तच्चित्यं॥ममतुपिप्पल्यादिगणोऽधिकोभाति॥

थिविपक्तिशब्दगुणबहुलमाकाशात्मकं मार्दवसौषिर्यलाघवकरं ॥ इत्थं च नानौषधभूतं जगति किंचिद्द्रव्यमस्ति विविधार्थप्रयोगवशात् ॥ तत्राग्निमारुतात्मकं प्रायेणोर्ध्वभागं॥ तयोर्हि लाघवादूर्ध्वगतित्वाच्चा- ग्नेः प्लवनत्वाच्च मारुतस्य॥ भूम्यौदकात्मकं तु प्रायेणाधोभागं तयोर्हि गौरवान्निम्नगत्वाच्च तोयस्य ॥ व्यामिश्रात्मकमुभयतो भागं ॥ शमनं तु दोषविपरीतगुणमुक्तं प्राक् ॥ तत्संकरे च यतो बाहुल्येन व्यपदे- शः ॥ तथाऽनिलात्मकं ग्राहि ॥ अनलात्मकं दीपनपाचनं ॥ उभया- त्मकं लेखनं ॥ भूम्युदकात्मकं बृंहणं ॥ तत्र कट्वम्ललवणा वीर्येण यथोत्तरमुष्णाः ॥ तिक्तकषायमधुराः शीताः ॥ तिक्तकटुकषाया रूक्षा बद्धविण्मूत्रमारुताः ॥ लवणाम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारु- ताः ॥ लवणकषायमधुरा गुरवः ॥ तद्वदम्लकटुतिक्ता लघवः ॥ अ- न्ये पुनर्गुरुलघुस्निग्धरूक्षसाधारणं लवणमिच्छंति ॥ वीर्यं तु केचि- द्गुरुलघुस्निग्धरूक्षतीक्ष्णमंदशीतोष्णभेदेनाष्टविधमाहुः ॥ अपरे पुनः पठंति ॥ वीर्यं द्रव्यस्य तज्ज्ञेयं यद्योगात्क्रियते क्रिया ॥ नावीर्यं क्रि- यते किंचित्सर्वा वीर्यकृता हि सा ॥ यैरष्टविधं तैरपि चैवमतिप्रकृष्ट- शक्तियुक्तानामशेषौषधगुणसारभूतानामष्टानामेव गुर्वादीनां वीर्यसं- ज्ञा विशिष्टाऽऽम्नायविहितापि लौकिकीति समुद्भाव्यते ॥ तथाहि रसविपाकगुणांतरविजयिन्या भूयांसश्च वरिष्ठाश्च गुणाः संगृहीताः ॥ विशेषवृत्त्या च तत्र तत्र द्रव्यस्वरूपकथने व्यवहारः प्रवर्तितो भवति ॥ अतएव च सर्वातिशायी द्रव्यस्वभावः प्रभाव इत्याम्नातः ॥ सत्यपि च क्रियानिर्वर्त्तनसाम्ये विपरीता रसादयो वीर्याख्यया प्रभावसंज्ञया वा न परिमृश्यंते ॥ अन्ये तु गुर्वादीनामग्नीषोमात्मकत्वादादानवि- सर्गविभागेन कालस्योष्णशीतात्मकं द्विविधमेवामनंति ॥ एवं चा- हुः ॥ नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ व्यक्ताव्यक्तं जग-

१ अथः प्रयोजनं प्रयोगोयुक्तिः

दिव नातिक्रामति जातुचित् ॥ तत्रोष्णं दहनपचनस्वेदनविलयनाविलकफशमनानि करोति ॥ शीतं ल्हादनस्तंभनजीवनरक्तपित्तप्रसादनादीनि ॥ विपाकस्तु प्रायः स्वादुः स्वादुलवणयोरम्लोऽम्लस्य कटुश्तिरेषां ॥ रसैरसौ तुल्यफलः ॥ द्रव्यगुणविशेषेण चास्याल्पमध्यभूयस्त्वमुपलक्षयेत् ॥ पराशरस्तु पठति ॥ पाकास्त्रयो रसानामम्लोऽम्लं पच्यते कटुः कटुकं ॥ चत्वारोऽन्ये मधुरं संसृष्टरसास्तु संसृष्टं ॥ कटुतिक्तकषायाणां कटुको येषां विपाक इति पक्ष स्तेषां पित्तविघाते तिक्तषायौ कथं भवतः ॥ तत्र यन्मधुरं रसविपाकयोः शीतवीर्यं च द्रव्यं यच्चाम्लं तयोरुष्णवीर्यं च यद्वा कटुकं तेषां यथास्वं रसादिभ्यः प्रायो गुणान् दोषकोपशमनत्वं च विद्यात् ॥ तद्यथा ॥ क्षीरमदिरामरिचादीनां रसादिसंकरेण त्वन्यथात्वं॥ यथा मधु मधुरं श्लेष्माणं शमयति कटुपाकतया सकषायत्वाद्रौक्ष्याच्च वातं जनयति शीतवीर्यत्वाच्च॥ तथा यवोऽपि ॥ आनूपौदकपिशितं शीतमपि पित्तं करोत्युष्णवीर्यत्वात्तथा तैलं कटुविपाकतया च विपाकतएव बद्धविण्मूत्रं ॥ अम्लं कांजिकं कफं जयति रुक्षोष्णत्वात् ॥ कपित्थं तु रौक्ष्यात् पित्तं च शीतवीर्यत्वात् ॥ आमलकं पित्तं शीतवीर्यत्वात् स्वादुपाकतया च कफं रौक्ष्याल्लाघवाच्च शैत्यरौक्ष्यलाघवैस्तु न वातं॥ लवणं सैंधवं स्वादुपाकतया पित्तं जयति लाघवात्कफं जयति ॥ कटुकाऽपि शुंठी स्नेहोष्णस्वादुपाकैर्वातं क्षपयति पिप्पली च ॥ लशुनोऽपि स्नेहोष्ण्यगौरवैः ॥ पलांडुश्च ॥ स तु स्नेहगौरवाभ्यां जनयति श्लेष्माणं वृद्धं च मूलकं स्वादुपाकतया ॥ तिक्तानि व्याघ्रीविशल्याऽकांगुरूण्युष्णवीर्यत्वात् पित्तं जनयंति ॥ कषायतिक्तं महत्पंचमूलं वातं जयति न तु पित्तमुष्णवीर्यत्वात् ॥ कषायश्च कुलत्थोऽम्लपाकतया च ॥ इत्येतन्निदर्शनमात्रमुक्तं ॥ तस्मात् ॥ किंचिद्रसेन कुरुते कर्म वीर्येण चापरं ॥ द्रव्यं गुणेन पाकेन प्रभावेणैव किंचन ॥ यद्यद्द्रव्ये

रसादीनां बलवत्वेन वर्त्तते ॥ अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ॥ विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ॥ रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति ॥ बलसाम्ये रसादीनामिति नैसर्गिकं बलं ॥ विरुद्धा अपि चान्योन्यं रसाद्याः कार्यसाधने ॥ नावश्यं स्युर्विघाताय गुणदोषा मिथो यथा ॥ रसवीर्यप्रभृतयो भूतोत्कर्षापकर्षतः॥ एकरूपा विरूपा वा द्रव्यं समधिशेरते ॥ माधुर्यशैत्यपैच्छिल्यस्नेहगौरवमंदताः ॥ सहवृत्त्या स्थिताः क्षीरे नत्वानूपौदकामिषे ॥ गुणा द्रव्येषु ये चोक्तास्तएव तनुदोषयोः ॥ स्थितिवृद्धिक्षयास्तस्मात्तेषां हि द्रव्यहेतुकाः ॥ रसं विद्यान्निपातेन तेनाधिवसनेन च ॥ वीर्यं विपाकं द्रव्याणां कर्मणः परिनिष्ठया ॥ मधुरस्कंदनिर्दिष्टघृततैलगुडादिषु ॥ गुणाः स्वाद्वादिभेदेन रसषट्कं न युज्यते ॥ अस्तु भेदादसंख्यत्वमैक्यं वा स्वादुलक्षणात् ॥ भूतोत्कर्षापकर्षेण भेदो यो ऽल्पेन कल्प्यते ॥ संकीर्णत्वात्फले चासौ तुल्यत्वान्न विवक्ष्यते ॥ गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ॥ संख्याभेदो यथा नास्ति रसानामपि स क्रमः ॥ दृष्टं मुखोपलेपादि यत्सर्वेषु घृतादिषु ॥ न च तद्दाडिमाद्येषु षडेवातो रसाः स्मृताः ॥ आनंत्यैकत्वयोश्च स्यान्न विचित्रार्थतंत्रणं ॥ गुर्वाद्या वीर्यमुच्यंते शक्तिमंतो ऽन्यथा गुणाः ॥ परसामर्थ्यहीनत्वाद्गुणा एवेतरे गुणाः ॥ यथारसं जगुःपाकाः षट्केचित्तदसांप्रतं ॥ यत्स्वादुर्व्रीहिरम्लत्वं न चाम्लमपि दाडिमं ॥ याति तैलं च कटुतां कटुकाऽपि न पिप्पली ॥ यथारसत्वे पाकानां न स्यादेवं विपर्ययः ॥ यस्माद्दृष्टो यवः स्वादुर्गुरुरप्यनिलप्रदः ॥ दीपनं शीतमप्याज्यं वसोष्णाप्यग्निसादिनी ॥ कटुपाकोपि पित्तघ्नोऽमुद्गो माषस्तु पित्तलः ॥ स्वादुपाकोऽपि चलकृत्स्निग्धोष्णं गुरु फाणितं ॥ रसः स्वादुर्यथा चैतत्तथाऽन्येष्वपि दृश्यते॥वातलं कफपित्तघ्नमम्लमप्याक्षकीफलं॥कुरुते दधि गुर्वेव वन्हिं प्राल्वमं तु न॥कपित्थं दाडिमं आ-

म्लं ग्राहि नामलकीफलं ॥ कषाया ग्राहिणी शीता धातकी च हरीतकी ॥ अप्रधानाः पृथक् तस्माद्रसाद्याः संमृतास्तु ते ॥ प्रभावस्तु यतो द्रव्ये द्रव्यं श्रेष्ठमतो मतं ॥ रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजं ॥ दंती रसाद्यैस्तुल्याऽपि चित्रकस्य विरेचनी ॥ मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनं ॥ कटुपाकरसस्निग्धगुरुत्वैः कफवातजित् ॥ लशुनो वातकफकृन्नतु तैरेव यद्गुणैः ॥ मिथोविरुद्धान्वातादीन्लोहिताद्या जयंति यत् ॥ कुर्वंति यवकाद्याश्च तत्प्रभावविजृंभितं ॥ शिरीषादि विषादिघ्नं स्वमाद्यं तद्विदृद्धये ॥ मणिमंत्रौषधीनां च यत्कर्म विविधात्मकं ॥ शल्याकर्षणपुंजन्मरक्षाथुर्धीवशादिकं ॥ दर्शनाद्यैरपि विषं यन्नियच्छति चागदः ॥ विरेचयति यद्वृष्यमाशु शुक्रं करोति वा ॥ ऊर्ध्वाधोभागिकं यच्च द्रव्यं यद्वमनादिकं ॥ मात्रादि प्राप्य तत्तच्च यत्प्रपंचेन वर्णितं ॥ तच्च प्रभावजं सर्वमतोऽचिंत्यः स उच्यते ॥ रसेन वीर्येण गुणैश्च कर्म द्रव्यं विपाकेन च यद्विदध्यात् ॥ सद्योऽन्यथा तत्कुरुते प्रभावाद्धेतोरतस्तत्र न गोचरोऽस्ति ॥ इति द्रव्यादिविज्ञानीयो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथातो रसभेदीयमध्यायं व्याख्यास्यामः ॥ रसः खल्वाप्यः प्रागव्यक्तश्च ॥ स षड्ऋतुकत्वात्कालस्य महाभूतगुणानामूनातिरेकविशेषेण संसृष्टो विषमं विदग्धः षोढा पृथग्विपरिणमते मधुरादिभेदेन ॥ तत्र भूजलयोर्बाहुल्यान्मधुरो रसः॥ भूतेजसोरम्लः ॥ जलतेजसोर्लवणः॥ वाय्वाकाशयोस्तिक्तः ॥ वायुतेजसोः कटुकः ॥ वायूर्व्योः कषायः ॥ तेषां स्वादुरास्वाद्यमानो मुखमुपलिंपतींद्रियाणि प्रसादयति देहं प्रल्हादयति षट्पदपिपीलिकानामिष्टतमः ॥ अम्लस्तु जिव्हामुद्वेजयत्युरःकंठं विदहति मुखं स्रावयत्यक्षिभ्रुवं संकोचयति दर्शनाद्धर्षयति रोमाणि च ॥ लवणो मुखं विष्यंदयति कंठकपोलं विदहत्यन्नं

१ संसृष्टविषमविदग्धइतिपाठः २ षट्पदभ्रमरालयइत्यमरः

प्ररोचयति ॥ तिक्तो विशदयति वदनं विशोधयति कंठं प्रतिहंति रसनं ॥ कटुको भृशमुद्वेजयति जिव्हाग्रं चिमिचिमायति कंठकपोलं स्त्रावयति मुखाक्षिनासिकं विदहति देहं ॥ कषायस्तु जडयति जिव्हां बध्नाति कंठं पीडयति हृदयं॥तत्र मधुरो रसो जन्मप्रभृति सात्म्यात्सर्वधातुविवर्द्धन आयुष्यो बालवृद्धक्षतक्षीणबलवर्णेंद्रियत्वक्केशकंठहितः प्रीणनो बृंहणो जीवनस्तर्पणः स्थैर्यसंधानस्तन्यकरो वातपित्तविषदाहमूर्च्छातृष्णाप्रशमनः स्निग्धः शीतो मृदुर्गुरुश्च ॥ एवंगुणोऽपि स सदाऽत्युपयुज्यमानः स्थौल्याग्निसादगुरुताऽलसकातिनिद्राः॥श्वासप्रमेहगलरोगविसंज्ञताऽऽस्यमाधुर्यलोचनगदार्बुदगंडमालाः ॥ छर्युदर्दमूर्द्धरुकासपीनसकृमीन् ॥श्लीपदज्वरोदरष्ठीवनानि चावहेत् ॥ अम्लोऽनिलनिबर्हणोऽनुलोमनः कोष्ठविदाही रक्तपित्तकृदुष्णवीर्यः शीतस्पर्शो बोधयतींद्रियाणि रोचनः पाचनो दीपनो बृंहणस्तर्पणः प्रीणनः क्लेदनो व्यवायी लघुः स्निग्धो हृद्यश्च ॥ जनयति शिथिलत्वं सेवितः सोऽति देहे कफविलयनकंडूपांडुतारुग्विघातान् ॥ क्षतविहितविसर्परक्तपित्तं पिपासां श्वयथुमपि कृशानां तैजसत्वाद्भ्रमं च ॥ लवणः स्तंभबंधसंघातविध्मापनः सर्वरसप्रत्यनीको दीपनो रोचनः पाचनः क्लेदनः शोषणः स्नेहनः स्वेदनो भेदनश्छेदनः सरो व्यवायी विकाषी हरति पवनं विष्यंदयति कफं विशोधयति स्रोतांसि नातिगुरुः स्निग्धतीक्ष्णोष्णश्च ॥ खलतिपलिततृष्णातापमूर्च्छाविसर्पश्वयथुकिटिभकोठाऽऽक्षेपरोधास्रपित्तं ॥ क्षतविषमदवृद्धिं वातरक्तं करोति क्षपयति बलमोजः सोऽति वा सेवनेन॥तिक्तः स्वयमरोचिष्णुररुचिविषकृमिमूर्च्छोत्क्लेदज्वरदाहतृट्कुष्ठकंडूहरः क्लेदमेदोवसामज्जाविण्मूत्रपित्तश्लेष्मोपशोषणो दीपनः पाचनो लेखनः स्तन्यकंठशोधनो मेध्यो नातिरूक्षः शीतो लघुश्च ॥ धातुबलक्षयमूर्च्छाग्लानिभ्रमवा-

नरोगपरुषत्वं ॥ खरविशदरौक्ष्यभावैः सोऽतिसमासेवितः कुर्यात्॥कटु-
कोऽलसकश्वयथूदर्दस्थौल्याभिष्यंदक्रमिवक्ररोगविषकुष्ठकंडूप्रशमनो
व्रणावसादनः स्नेहक्लेदशोषणो रोचनः पाचनो दीपनो लेखनः शोध-
नः शोषयत्यन्नं स्फुटयतींद्रियाणि भिनत्ति शोणितसंघातं छिनत्ति
बंधान् विवृणोति स्रोतांसि क्षपयति श्लेष्माणं लघुरूक्षतीक्ष्णोष्ण-
श्च ॥ कुरुतेऽतिनिषेवितः स तृष्णामदमूर्च्छादवमोहदेहसादान् ॥ बल-
शुक्रगलोपशोषकंपभ्रमतापग्लपनातिकर्शनानि ॥ करचरणपार्श्वपृष्ठ-
प्रभृतिष्वनिलस्य कोपमति तीव्रं ॥ संकोचतोदभेदैर्वाय्वग्निगुणाधिक-
त्वेन॥कषायो बलासं सपित्तं सरक्तं निहंत्याशु बध्नाति वर्चोऽतिरूक्षः॥
गुरुस्त्वक्सवर्णत्वकृत् क्लेदशोषी हिमः प्रीणनो रोपणो लेखनश्च॥ अ-
त्यभ्यासात्सोऽपि शुक्रोपरोधं तृष्णाऽऽध्मानस्तंभविष्टंभकार्श्यं॥स्रोतो-
बंधं वातविण्मूत्रसंगं पक्षाघाताक्षेपकार्दींश्च कुर्यात् ॥ अथ मधुरद्रव्य-
स्कंधो घृतमधुतैलक्षीरमेदोमज्जेक्षुविकृतिद्राक्षाऽक्षोडखर्जूरमोचचोच-
पनससिंचितिकापियालराजादनखर्जूरीतालमस्तककाश्मर्यमधूकपरूष
कतामलकीवीराविदारीशतावरीतवक्षीरीक्षीरर्षभीक्षीरशुक्लामधूलिका-
ऽऽत्मगुप्ताबलाऽतिबलाविश्वेदेवासहदेवीशालिपर्णीपृश्निपर्णीमहासहा
क्षुद्रसहर्द्धिवृद्धिश्रावणीमहाश्रावणीछत्राऽतिछत्रर्ष्यप्रोक्तर्ष्यगंधाश्वऽ-
गंधाश्वंदंष्ट्रामृणालिकापुष्करबीजशृंगाटककसेरुकतककनकबिंबीप्रपौं
डरीकप्रभृतीनि जीवनीयो गणस्तृणपंचमूलं च॥ अम्लद्रव्यस्कंधो दा-
डिमामलकाम्राम्रातककोशाम्रमातुलुंगवृक्षाम्लाम्लीकाम्लवेतसकुल-
लकुचपालेवतभव्यकरमर्दधन्वधन्वनकोलबदरैरावतकपित्थदंतशठप्रा-
चीनामलकतिलकंटकरूप्यदधिमस्तुतक्रधान्याम्लमद्यशुक्तप्रभृतीनि
॥ लवणद्रव्यस्कंधः सैंधवादीनि क्षारांतानि त्रपुसीसकप्रभृतीनि च ॥
तिक्तद्रव्यस्कंधोऽगुरुतगरोशीरवालकचंदननलदकृतमालनक्तमालापा
मार्गहरिद्राद्वयमुस्तमूर्वामदनफलाजशृंगीत्रायमाणाकटुकाकिरातति-

त्ककरवीरविशालासुषव्यतिविपायवासकज्योतिष्मतीपाठाविकंक-तार्ककाकमाचीवचावरणवत्सकवैजयंतीवेतससप्तपर्णसोमवल्कसुमनः कांस्यलोहप्रभृतीनि पटोलादिश्च शाकवर्गः॥कटुकद्रव्यस्कंधो मरिच-हिंगुतेजोवतीहस्तिपिप्पलीविडंगभल्लातकास्थिमूलकसर्षपलशुनपलां-डुकरंजमनःशिलाऽलदेवदारुकुष्ठैलासुरसुरसचोरकहरेणुकामूत्रपित्तप्र-भृतीनि कुठेरादिश्च हरितवर्गः पंचकोलं च ॥ कषायद्रव्यस्कंधो ह-रीतकीप्रियंग्वनंताक्षौद्रलोध्रकट्वंगकट्फलधवधन्वनधात्रीफलधातुकी-पुष्पपद्मापद्मकपद्मपुष्पनागकेसरकुमुदोत्पलतुंगतिंदुककदंबोदुंबरजं-ब्वाम्रप्लक्षवटबिभीतकविकंकतजंब्वाम्रास्थ्यामकपित्थाश्वत्थमोचरस-समंगासोमवल्कसप्तपर्णस्यंदनासनसल्लकीशालतालपियालैलवालुक-परिपेलवजिंगिणीबदरीखदिरकदरारिमेदकाशकसेरुकवंशाश्मंतकाशो-कशिरीषशिंशपापलाशशमीशणशंखनाभिमेषशृंगीवरुणखर्जूरस्फूर्ज-कसर्जभूर्जार्जुनाजकर्णवरुणप्रवालमुक्तांजनगैरिकबिसमृणालप्रभृती-नि ॥ तत्रप्रायो मधुरं श्लेष्मलमन्यत्र पुराणशालियवगोधूम-मुद्गमधुशर्कराजांगलमांसात् ॥ प्रायोऽम्लं पित्तलमन्यत्र दाडिमा-मलकात् ॥ प्रायो लवणमचक्षुष्यमन्यत्र सैंधवात् ॥ प्रायस्ति-क्तकटुकं वातलमवृष्यं चान्यत्रामृतापटोलनागरपिप्पलीलशुनात् ॥ प्रायः कषायं शीतं स्तंभनं चान्यत्र हरीतक्याः ॥ इति यथास्थू-लं नित्योपयोगिनां प्रधानतमानां चोपसंग्रहः ॥ घृतामलकसिंधू-त्थपटोलीमगधाऽभयाः ॥ श्रेष्ठा यथास्वं स्कंधेषु रसदेशास्तु क-थ्यते॥ अथ यः शिशिरपवनधरणीधरविविधवनगहननदीतडागपल्व-लोदपानकमलकुमदकुवलयाकीर्णो रम्योऽतिस्थिरस्निग्धभूमिर्भूरिह-रिततृणोऽतिदूरविस्तृतप्रतानप्रवालोपसंच्छन्नपादपः संस्यसरीसृप-खगबहुलः श्लेष्मपित्तप्रायो गुर्वौषधिसलिलः श्लीपदगलरोगाप-

१ मत्स्येतिपाठः

चीज्वराद्यामयोपद्रुतजनपदः सोऽनूपो मधुररसयोनिः ॥ यस्तु विषमविपुलसिकतास्थलबहुलोऽतिदूरावगाढविरससलिलः कठिनः क्लेशसहारोगशरीरदीर्घायुःप्रायजनपदोऽनूपविपरीतश्च स जांगलः कटुकरसयोनिः ॥ अत एव चानूपसाधारणो जांगलसाधारणश्चेति विकल्पः ॥ तयोराद्यो लवणाम्लयोर्योनिरितरश्चेतरयोः ॥ संयोगास्तेषां सप्तपंचाशद्भवंतीति ॥ भवंति चात्र ॥ स्वादुर्द्विकेषु पंचाम्लश्चतुरो लवणस्त्रयं ॥ द्वौ तिक्तः कटुकश्चैकं याति पंचदशेति ते ॥ त्रिकेषु मधुरः साम्लश्चतुरो लवणान्वितः ॥ त्रीन्युक्तस्तिक्तकेन द्वौ कटुनैकं निषेवते ॥ स्वादुर्दशैवमम्लः षट् त्र्यादिसंख्यातु पूर्ववत् ॥ लवणस्त्रीन्भजत्येकं तिक्त एषोऽत्र विंशतिः ॥ स्वादुः साम्लश्चतुष्केषु षट् त्रयं लवणानुगः ॥ एकं तिक्तयुतो याति दशैव मधुरो रसः ॥ चतुरोऽम्लः पटुश्चैकं भेदाः पंचदशेति च ॥ एकैकस्य परित्यागे विद्यात्पंचरसाश्च षट् ॥एकं च षड्रसं षट् च पृथगेवं त्रिषष्टिधा॥ ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च ॥ संभवंति गणनां समतीता दोषभेषजवशादुपयोज्याः ॥ ॥ इति रसभेदीयो नामाष्टादशोऽध्यायः ॥ १८॥

अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ दोषधातुमलमूलो हि देहः ॥ तमुच्छ्वासनिश्वासोत्साहप्रस्पंदेंद्रियपाटववेगप्रवर्तनाभिर्वायुरनुगृण्हाति ॥ पक्त्यूष्माभिलाषक्षुत्पिपासाप्रभाप्रसादवर्शनमेधाशौर्यमार्दवादिभिः पित्तं ॥ स्थैर्यस्नेहसंधिबंधदृपताक्षमाधीबलालौल्यादिभिः श्लेष्मा ॥ तुष्टिप्रीणनरक्तपुष्टिभिस्तु रसः ॥ जीवनवर्णप्रसादनमांसपोषणैरसृक् ॥ देहलेपमलमेदःपुष्टिभिर्मांसं ॥ नेत्रगात्रस्निग्धतास्नेहदार्ढ्यास्थिपुष्टिभिर्मेदः ॥ देहोर्ध्वताधारणमज्जपोषणाभ्यामस्थि ॥ स्नेहबलास्थिपूरणशुक्रपुष्टिभिर्मज्जा ॥ हर्षबलगर्भोत्पादनैः शुक्रं ॥ अवष्टंभानिलानलधारणैः शकृत् ॥

अम्बक्लेदनिर्वाहणेन मूत्रं ॥ क्लेदत्वक्स्नेहरोमधारणैः स्वेद इति ॥
कार्श्यकार्ष्ण्यगात्रकंपस्फुरणोष्णकामितासंज्ञानिद्रानाशबलेंद्रियोपघातास्थिशूलमज्जाशोषमलसंगाध्मानाटोपमोहदैन्यभयशोकप्रलापादिभिर्वृद्धो वायुः पीडयति ॥ पीतत्वग्ग्लानींद्रियदौर्बल्यौजोविस्रंसशीताभिलाषदाहतिक्तास्यतातृण्मूर्च्छाऽल्पनिद्रताक्रोधादिभिः पित्तं ॥ श्वैत्यशैत्यस्थौल्यालस्यगौरवांगसादस्रोतःपिधानमूर्च्छानिद्रातंद्राश्वासकासप्रसेकहृल्लासाग्निसादसंधिविश्लेषादिभिः श्लेष्मा ॥ प्रसेकारोचकास्यवैरस्यहृल्लासस्रोतोरोधस्वादुद्वेषांगमर्दादिभिरन्यैश्च श्लेष्मविकारप्रायैरसः ॥ कुष्ठविसर्पपिटिकासृग्दराक्षिमुखमेढ्रगुदपाकप्लीहगुल्मविद्रधिव्यंगकामलाऽग्निनाशतमःप्रवेशरक्तांगनेत्रतावातरक्तैरेभिरन्यैश्च पित्तविकारप्रायैरसृक् ॥ गलगंडगंडमालाऽर्बुदग्रंथिताल्वजिह्वाकंठरोगस्फिग्गंडौष्ठबाहूदरोरुजंघागौरववृद्धिभिः श्लेष्मरक्तविकारप्रायैश्च मांसं ॥ प्रमेहपूर्वरूपैः स्थौल्योपद्रवैश्चान्यैरपि श्लेष्मरक्तमांसविकारप्रायैर्मेदः ॥ अध्यस्थिभिरधिदंतैश्चास्थि ॥ नेत्रांगरक्तगौरवैः पर्वसु च स्थूलमूलारुर्भिर्मज्जा ॥ अतिस्त्रीकामताशुक्राश्मरीसंभवाभ्यां शुक्रं ॥ आधिक्यकुक्षिशूलाटोपगौरवैः शकृत् ॥ आधिक्यबस्तितोदाध्मानैर्मूत्रं ॥ आधिक्यकंडूदौर्गंध्यैः स्वेदः॥अन्येऽपि च दूषिकादिमला बाहुल्यद्रवताकंडूगौरवैः ॥ प्रसेकारुचिहृल्लाससंज्ञामोहाल्पवाक्चेष्टताप्रहर्षांगसादाग्निवैषम्यादिभिः क्षीणो वायुः पीडयति ॥ स्तंभशैत्यानियततोददाहारोचकाविपाकांगपारुष्यकंपगौरवनखनयनशौक्ल्यादिभिः पित्तं ॥ भ्रमोद्वेष्टनानिद्रांगमर्दपरिशोषतोददवदाहस्फोटनवेपनधूमायनसंधिशैथिल्यहृदयद्रवश्लेष्माशयशून्यतादिभिःश्लेष्मा॥ शब्दासहत्वहृदयद्रवकंपशोषशूलशून्यतास्पंदनघट्टनैरल्पयाऽपि च चेष्टया श्रमतर्षाभ्यां रसः ॥ त्वग्रौक्ष्याम्लशीताभिलाषशिराशैथिल्यैरसृक्॥स्फिग्गंडादिशुष्कनातोदरौक्ष्याक्षग्लानिसंधिस्फोटनधमनीशैथिल्यैर्मांसं॥ प्ली-

हृद्वृद्धिकटीस्वापसंधिशून्यतांऽगरूक्षताकार्श्यश्रमशोषमेदुरमांसाभिलाषैर्मांसक्षयोक्तैश्च मेदः ॥ दंतनखरोमकेशशातनरौक्ष्यपारुष्यसंधिशैथिल्यास्थितोदास्थिबद्धमांसाभिलाषैरस्थि ॥ अस्थिसौषिर्यनिस्तोददौर्बल्यश्रमतमोदर्शनैर्मज्जा॥श्रमदौर्बल्यास्यशोषतिमिरदर्शनांगपांडुतासदनक्लैब्यमुष्कतोदमेंढ्रधूमायनैश्चिराच्च निषेकेण सरक्तनिषेकेण वा शुक्रं॥सशब्दस्य वायोः कुक्षौ तिर्यगूर्ध्वं च भ्रमणेनांत्रवेष्टनेन पार्श्वहृदयपीडनेनाल्पतया च शकृत् ॥ बस्तिनिस्तोदमुखशोषकृच्छ्राल्पविवर्णमूत्रतादिभिः सरुधिरमूत्रतया वा मूत्रं ॥ स्तब्धरोमतारोमच्यवनत्वक्परिपाटनस्वापपारुष्यस्वेदनाशैः स्वेदः ॥ अन्येऽपि च मला यथायथं मलायनदोषतोदशोषशून्यत्वलाघवैः ॥ विपरीतगुणक्षयवृद्धिभ्यां च वृद्धिक्षयावुपलक्षयेत् ॥ मलानां त्वतिसंगोत्सर्गाभ्यां च तद्वृद्धिक्षयौ॥वृद्धेस्तु मलानां क्षयः पीडयति सुतरामनौचित्यात् ॥ तत्रास्थि स्थितो वायुरसृक्स्वेदयोः पित्तं शेषेषु तु श्लेष्मा॥तस्मादेकवृद्धिक्षयसाधनत्वमेषां न त्वेवमस्थिवाय्वोः॥सर्वैव हि वृद्धिःप्रायोऽतिसंतर्पणनिमित्तत्वाच्छ्लेष्मणाऽनुगता ॥ तद्विपर्ययाच्च क्षयो वायुना ॥ तस्माल्लंघनबृंहणाभ्यां वृद्धिक्षयजान्विकारानुपाचरेत् ॥ पवने तु बृंहण लंघनाभ्यां ॥ सर्वत्र च द्रव्यगुणकर्मविपर्ययतुल्यभावेनाविरुद्धेन ॥ धातवः खलु शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाऽऽहारविहारैरभ्यस्यमानैर्वृद्धिमाप्नुवंति ॥ ह्रासं तु विपरीतैर्विपरीतगुणभूयिष्ठैर्वा ॥ तथाहि देहे धातवो ये गुरवस्तेगुरुभिरेवयकारितयोपचीयंते ॥ लघवस्तु लघुभिः ॥ तद्विपरीतैस्तु पृथक्त्वकारिभिरपचीयंते ॥ तस्मादन्येभ्यो द्रव्येभ्योऽपि सुतरां रक्तमाप्याप्यते रक्तेन मांसं मांसेन मेदो मेदसा मज्जा मज्ञा शुक्रं शुक्रेणामगर्भेण गर्भः॥यत्र त्वेवं लक्षणेन सामान्येन सामान्यवतामाहारविहाराणामसान्निध्यं स्यात् सन्निहितानां चाभ्यवहरणमशक्यं विरुद्धत्वात्पृ-

णित्वादरुचिरन्यस्माद्वा कारणांतरात् ॥ तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनामाहारविहाराणामभ्यवहारः श्रेयान् ॥ तद्यथा ॥ शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धशीतानामपरेषां च द्रव्याणां ॥ कर्मापि यद्यस्य धातोः समानक्रियतया वृद्धिकरं तस्यतस्य वृद्धिमभिलषता तत्तदासेव्यं॥तथैव चातुल्यक्रियतया ह्रासकरं भेदार्थेनेति॥ अपिच ॥ विशेषतो रक्तवृद्धिजान् रक्तनिबर्हणप्रसादनकार्यविरेचनैः ॥ मांसवृद्धिजान् संशोधनशस्त्रक्षाराग्निकर्मभिः ॥ मेदोजान्स्थौल्यकार्श्यक्रियाक्रमेण ॥ रसक्षयजान्मांसरसमद्यक्षीरैः ॥ अस्थिक्षयजान् बस्तिभिस्तिक्तोपहितैश्च क्षीरसर्पिर्भिः ॥ शकृद्वृद्धिजानतीसारसाधनेन ॥ शकृत्क्षयजान् यवमाषकुल्माषाजमेषमद्यादिभिः॥मूत्रवृद्धिक्षयजान् मेहकृच्छ्रचिकित्सया ॥ स्वेदक्षयजानभ्यंगव्यायाममद्यस्वप्नानिवातशरणस्वेदैरिति ॥ भवति चात्र ॥ ये पाचकांशा धातुस्थास्तेषां मांद्यातितैक्ष्ण्यतः ॥ वृद्धिः क्षयश्च धातूनां जायते शृणु चापरं ॥ पारंपर्येऽपि दावाग्नेस्तत्तत्प्राप्येंधनं शिखा ॥ वृद्धिक्षयौ यथा याति तथा धातुपरंपरा ॥ द्रव्यं तुल्यं विशिष्टं हि स्वं स्वं वृद्ध्यै क्षयाय च ॥ प्रत्यात्मबीजनैर्यस्माद्भृशमाशु च जायते ॥ पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधं ॥ दोषा दुष्टा रसैर्धातून् दूषयंत्युभये मलान् ॥ अधो द्वे सप्त शिरसि खानि स्वेदवहानि च ॥ मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ वक्ष्यंते वातजास्तत्र निदाने वातरोगिके ॥ पित्तं त्वचि स्थितं कुर्याद्विस्फोटकमसूरिकाः ॥ रक्ते विसर्पं दाहं च मांसे मांसावकोथनं ॥ सदाहान्मेदसि ग्रंथीन् स्वेदतृड्वमनं भृशं ॥ अस्थ्नि दाहं भृशं मज्ज्नि हारिद्रनखनेत्रतां ॥ पूति पीतावभासं च शुक्रं शुक्रसमाश्रितं ॥ शिरागतं क्रोधतापप्रलापं स्नायुगं तृषं ॥ कोष्ठगं मदतृड्दाहान् व्यापिनोऽन्यांश्च

१ स्वेदात्युद्वमनं तृषमिति पाठः २ क्रोधनतामितिपाठः

यक्ष्मणः ॥ श्लेष्मा त्वचि स्थितः कुर्यात्स्तंभं श्वेतावभासतां ॥ पांड्वामयं शोणितगो मांससंस्थोऽर्बुदापचीः ॥ आर्द्रचर्मावनद्धाभगात्रतां चातिगौरवं ॥ मेदोगः स्थूलतां मेहमस्थ्नां स्तब्धत्वमस्थिगः ॥ मज्जगः शुक्लनेत्रत्वं शुक्रस्थः शुक्रसंचयं ॥ विबंधं गौरवं चाति शिरास्थः स्तब्धगात्रतां॥ स्नायुगः संधिशून्यत्वं कोष्ठगो जठरोन्नतिं॥अरोचकाविपाकौ च तांस्तांश्च कफजान् गदान्॥ विण्मूत्रयोः साश्रययोस्तत्र तत्रोपदेक्ष्यते॥ उपतापोपघातौ तु स्वाश्रयेंद्रियगैर्मलैः॥व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ॥ कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च॥दोषा यांति तथा तेभ्यः स्रोतोमुखविशोधनात्॥वृद्ध्याभिष्यंदनात्पाकात्कोष्ठं वायोश्च निग्रहात्॥तत्रस्थाश्च विलंबेरन् भूयो हेतुप्रतीक्षिणः॥ ते कालादिबलं लब्ध्वा कुप्यंत्यन्याश्रयेष्वपि ॥ तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु ॥ कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु॥आगंतुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ॥ तेजो यत्सर्वधातूनामोजस्तत्परमुच्यते ॥ मृदु सोमात्मकं शुद्धं रक्तमीषत्सपीतकं॥ यत्सार आदौ गर्भस्य यत्तद्गर्भरसाद्रसः ॥ संवर्तमानं हृदयं समाश्रयति यत्पुरा ॥ यच्छरीररसस्नेहः प्राणा यत्र प्रतिष्ठिताः ॥ यस्यानाशान्न नाशोऽस्ति प्रीणिता येन देहिनः ॥ हृदयस्थमपि व्यापि तत्परं जीवितास्पदं ॥ ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥ बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेंद्रियः ॥ दुश्छायो दुर्मना रूक्षो भवत्क्षामश्च तत्क्षये ॥ जीवनीयौषधक्षीररसाद्यास्तत्र भेषजं ॥ ओजोवृद्धौ हि देहस्य तुष्टिपुष्टिबलोदयाः॥यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु ॥ तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत् ॥ कुर्वते हि रुचिं दोषा विपरीतसमानयोः ॥ वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयंत्यबुधास्तु न ॥ यथाबलं यथास्वं च दोषा वृद्धा वितन्वते ॥ रू-

१ स्थानिदोषसंबंधिनीं ॥

पाणि हीनाः प्रोझ्झंति समाः स्वं कर्म कुर्वते ॥ यएव देहस्य समा विवृद्ध्यै त एव दोषा विषमा वधाय ॥ यस्मादतस्ते हितचर्ययैव क्षयाद्विवृद्धेरिव रक्षणीयाः ॥ ॥ इति दोषादिविज्ञानीयो नामैकोनविंशोऽध्यायः ॥ १९ ॥

अथातो दोषभेदीयमध्यायं व्याख्यास्यामः ॥ वाय्वाकाशधातुभ्यांवायुः ॥ आग्नेयं पित्तं ॥ अंभःपृथिवीभ्यां श्लेष्मा ॥ तत्र पक्वाशयः कटिः सक्थिनी पादावस्थि श्रोत्रं स्पर्शनं च वातस्थानानि ॥ अत्र पक्वाशयो विशेषेण ॥ नाभिरामाशयः स्वेदो लसीका रसो रुधिरं चक्षुः स्पर्शनं च पित्तस्थानानि ॥अत्र नाभिर्विशेषेण॥उरः कंठः शिरः क्लोम पर्वाण्यामाशयो रसो मेदो घ्राणं रसनं च श्लेष्मस्थानानि ॥ अत्राप्युरो विशेषेण ॥ इत्थमधोमध्योर्ध्वसन्निवेशिना दोषत्रयेण शरीरमागारमिव स्थूणात्रितयेन स्थिरीकृतं ॥ अतश्च दोषा देहं स्थेमानमानयंतः स्थूणा इत्युच्यंते ॥ धारणाद्धातवः ॥ मलिनीकरणादाहारमलत्वान्मलाः ॥ दूषणस्वभावाद्दोषाइति ॥ त एते प्रत्येकं पंचधा भिद्यंते ॥ तद्यथा ॥ प्राणोदानव्यानसमानापानभेदैर्वायुः ॥ तत्र प्राणो मूर्द्धन्यवस्थितः कंठोरश्चरो बुद्धींद्रियहृदयमनोधमनीधारणष्ठीवनक्षवथूद्गारश्वासोच्छ्वासान्नप्रवेशादिक्रियः ॥ उदानउरस्यवस्थितः कंठनासिकानाभिचरो वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्रोतःप्रीणनधीधृतिस्मृतिमनोविबोधनादिक्रियः ॥ व्यानो हृद्यवस्थितः कृत्स्नदेहचरः ॥ शीघ्रतरगतिर्गतिप्रसारणकुंचनोत्क्षेपावक्षेपनिमिषोन्मेषणजृंभणान्नस्वादनस्रोतोविशोधनस्वेदासृक्स्रावणादिक्रियो योनौ च शुक्रप्रतिपादनो विभज्य चान्नस्य किट्टात्सारं तेन क्रमशो धातूंस्तर्पयति ॥ समानोंऽतरग्निसमीपस्थितस्तत्संधुक्षणः पक्वामाशयदोषमलशुक्रार्त्तवांबुवहस्रोतोविचारी तदवलंबनान्नधारणपाचन-

विवेचनकिट्टाधोनयनक्रियः ॥ अपानोऽपानेऽवस्थितो बस्तिश्रोणिमेंढ्रवृषणवंक्षणोरुचरो विण्मूत्रशुक्रार्तवगर्भनिष्क्रमणादिक्रियः ॥ पाचकरंजकसाधकालोचकभ्राजकत्वभेदैः पित्तं ॥ तत्र यदामपक्वाशयमध्यस्थं पंचमहाभूतात्मकत्वेऽपि तेजोगुणोत्कर्षात्क्षपितसोमगुणं ततश्च त्यक्तद्रवस्वभावं सहकारिकारणैर्वायुक्लेदादिभिरनुग्रहाद्दहनपाचनादिक्रियया लब्धाग्निशब्दं पित्तमन्नं पचति सारकिट्टौ विभजति शेषाणि च पित्तस्थानानि तत्रस्थमेवानुगृण्हाति तत्पाचकमित्युच्यते ॥ आमाशयस्थं तु रसस्य रंजनाद्रंजकं ॥ हृदयस्थं बुद्धिमेधाभिमानोत्साहैरभिप्रेतार्थसाधनात्साधकं दृष्टिस्थं रूपालोचनाच्चालोचकं ॥ त्वक्स्थं त्वचो भ्राजनाद्भ्राजकं॥ तदभ्यंगपरिषेकालेपादीन्पाचयति छायाश्च प्रकाशयति ॥ अवलंबकक्लेदकबोधकतर्पकश्लेषकत्वभेदैः श्लेष्मा ॥ सनूरस्थः स्ववीर्येण त्रिकस्यान्नवीर्येण च सह हृदयस्य च शेषाणां च श्लेष्मस्थानानां तत्रस्थ एवोदककर्मणाऽवलंबनादवलंबक इत्युच्यते॥ आमाशयस्थितोऽन्नसंघातस्य क्लेदनात्क्लेदकः ॥ रसनस्थः सम्यग्रसबोधनाद्बोधकः ॥ शिरस्थश्चक्षुरादींद्रियतर्पणात्तर्पकः ॥पर्वस्थोऽस्थिसंधिश्लेषात् श्लेषकइति ॥ एवममीषु स्थानेषु भूयिष्ठमविकृताः सकलशरीरव्यापिनोऽपि वातपित्तश्लेष्माणो वर्तंते ॥ तेषां वृद्धिहेतुर्वक्ष्यते निदानेषु ॥ समासतश्च वृद्धिक्षयलक्षणमुक्तं पूर्वाध्याये ॥ वृद्धिर्हि द्वेधा चयकोपभेदेन ॥ तत्रोष्णगुणोपहिता रूक्षादयो वायोः संचयमापादयंति शीतगुणोपहिताः प्रकोपमुष्णगुणोपहिताः स्निग्धादयः प्रशमं ॥ शीतगुणोपहितास्तीक्ष्णादयः पित्तस्य चयमुष्णगुणोपहिताः कोपं शीतगुणोपहिता मंदादयः प्रशमं ॥ शीतगुणोपहिताः स्निग्धादयः कफस्य चयमुष्णगुणोपहिताः कोपं तथा तु रूक्षादयः प्रशमं ॥ तत्र॥चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥ विपरीतगुणेच्छा च कोपस्तून्मार्गगा-

मिता ॥ लिंगानां दर्शनं स्वेषामस्वास्थ्यं रोगसंभवः ॥ स्वस्थानस्थस्य समता विकारासंभवः शमः॥देहे कुद्धोऽनिलवशात्कृत्स्नेऽर्द्धेऽवयवेऽपि वा ॥ दोषो विकारं कुरुते खे वर्षमिव तोयदः ॥ अथ प्रकुपिता वातादयो नानाविधैर्विकारैः शरीरमुपतापयंति ॥ आविष्कृततमास्तु क्षयोरशीतिर्विकाराश्चत्वारिंशत्पित्तस्य विंशतिः श्लेष्मणः ॥ तत्र वातविकाराः ॥ तद्यथा ॥ नखभेदो विपादिका पादशूलं पादभ्रंशः सुप्तपादता वातखुडता गुल्फग्रहः पिंडिकोद्वेष्टनं गृध्रसी जानुभेदो जानुविश्लेषऊरुसादऊरुस्तंभः पंगुत्वं गुदभ्रंशो गुदार्तिर्वृषणाक्षेपो मेंढ्रस्तंभो वंक्षणानाहः श्रोणिभेदो विड्भेदउदावर्तः खंजत्वं कुब्जत्वं वामनत्वं त्रिकग्रहः पृष्ठग्रहः पार्श्वावमर्दउदरावेष्टो हृन्मोहो हृद्द्रवो वक्षोद्घर्षस्तथा[1] वक्षोपरोधो वक्षस्तोदो बाहुशोषस्तथा ग्रीवास्तंभो मन्यास्तंभः कंठध्वंसो हनुस्तंभस्ताल्वोष्ठभेदो दंतभेदो दंतशैथिल्यं मूकत्वं वाक्संगः प्रलापः कषायास्यता मुखशोषो रसाज्ञत्वं घ्राणनाशः कर्णशूलमशब्दश्रुतिरुच्चैःश्रुतिर्बाधिर्यं वर्त्मस्तंभो वर्त्मसंकोचस्तिमिर-मक्षिशूलमक्षिव्युदासो भ्रूव्युदासः शंखभेदो ललाटभेदः शिरोरुक्केश-भूमिस्फुटनमर्दितमेकांगरोगः सर्वांगरोग आक्षेपको दंडकः श्रमो भ्रमो वेपथुर्जृंभाग्लानिर्विषादो रौक्ष्यं पारुष्यं श्यावारुणावभासत्वमस्वप्नो-ऽनवस्थितचित्तता च ॥ पित्तविकाराःपुनः ॥ ओषः प्लोषो दवो दवथु-र्विदाहोऽतर्दाहस्त्वग्दाहोऽसदाहो धूमकोऽम्लकऊष्माधिक्यमतिस्वे-दोंगगंधोऽवयवसदनं शोणितक्लेदो मांसक्लेदस्त्वङ्मांसदरणं चर्मदर-णं रक्तकोठो रक्तविस्फोटो रक्तमंडलानि रक्तपित्तं हरितत्वं हारिद्रत्वं नीलिका कक्ष्या कामला तिक्तास्यता लोहितगंधास्यता पूतिमुखत्वं तृष्णाधिक्यमतृप्तिरास्यपाको गलपाको ऽक्षिपाकः पायुपाको मेंढ्रपाको जीवादानं तमःप्रवेशो हरितहारिद्रनेत्रमूत्रशकृत्वं च ॥ श्लेष्मविकारा-

१ वक्षउद्धर्षश्च वक्षउपरोधश्च वक्षस्तोद इति हेमाद्रिपाठः

स्तु॥ तृप्तिस्तंद्रा निद्राऽऽधिक्यं स्तैमित्यं गुरुगात्रताऽऽलस्यं मुखमाधुर्यं प्रसेकः श्लेष्मोद्गिरणं मलाधिक्यं बलासो हृदयोपलेपः कंठोपलेपो धमनीप्रतिचयो गलगंडोऽतिस्थौल्यं शीताग्नित्वमुदर्दः श्वेतावभासता श्वेतनेत्रमूत्रशकृत्त्वं च ॥ तत्र सर्वांगीणस्तीव्रो दाहः स्वेदारतिमानोषः ॥ प्रादेशिकः स्वेदरहितोऽग्न्यर्चिषेव दाहः प्लोषः ॥ मुखौष्ठतालुषु दाहो दवः ॥ चक्षुरादींद्रियेषु दाहो दवथुः ॥ पाणिपादांसमूलेषु विविधः संतापो विदाहः ॥ कोष्ठे दाहोंऽतर्दाहः॥ शिरोग्रीवाकंठतालुषु धूमायनं धूमकः ॥ सांतर्दाहहृदयशूलोद्गारोऽम्लकः॥ शोणितस्य कृष्णतादौर्गंध्यतनुत्वानि क्लेदः ॥ मांसस्यतु कृष्णतादौर्गंध्यंच ॥ बाह्यत्वक्संहतिश्वर्म॥कोष्ठगौरवादाहारास्पृहा तृप्तिः॥अन्ये पुनराहुः॥ अन्नानभिनंदना तृप्तिरिव तृप्तिररोचकः ॥ निद्रार्तस्येव विषयाग्रहणं तंद्रा ॥ स्तैमित्यं तु प्रमीलक इत्यन्यैः पठितं ॥ उपलेप इवोपलेपः ॥ तदतिशयः प्रतिचयो ऽतिपूरणं ॥ अग्नेरतिमंदता शैत्यं॥उरोऽभिष्यंदउदर्दः ॥ केषांचिच्छीतवेपथुरुदर्दः ॥ अन्ये पुनराहुः ॥ शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः ॥ सरागकंडूः शोफः स्यादुदर्दः स कफोद्भव इति ॥ महाविकारास्तु यथास्वमेवोपदेक्ष्यंते ॥ क्षुद्रविकाराः पुनर्यदेवांगमाविशंति तदुपपदमेव नाम लभंते ॥ यथा ॥ नखशंखललाटभेदाः सांतर्दाहकंठहृदयोपलेपादयः॥तेषां हि तथैव स्वरूपमुपदिष्टं भवति ॥ सर्वेषु तेषु तेष्वनुक्तेषु चान्येष्वसंख्येयत्वाद्विकारेष्विमान्येव दोषाणामात्मलिंगानि सकलशरीरव्यापीन्यव्यभिचारीणि च॥ तथा तत्कर्माण्युपक्रमश्च ॥ तत्रात्मलिंगान्यायुष्कामीये निर्दिष्टानि॥ कर्माणि तु वायोः स्रंसव्याससंगसादभेदतोदहर्षतर्षवर्तमर्दकंठव्यधवेष्टभंगशूलशोषस्वापपारुष्यसौषिर्यसंकोचस्पंदनानि कषायरसत्वं श्यावारुणवर्णता च ॥ पित्तस्य दाहोष्मपाकस्वेदक्लेदकोथस्रावरागाः कट्वम्लरसत्वं शुक्लारुणवर्ज्यवर्णता च ॥ श्लेष्मणः कंडूस्थैर्यगौरवोपदेहस्ने

दृशैत्यबंधचिरकारित्वानि मधुरलवणरसत्वं श्वेतवर्णता चेति ॥ कपिलस्त्वेषां स्वलक्षणानि रसतो निर्दिदेश॥ कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः ॥कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥ सुश्रुतः पुनः पठति ॥ पित्तं विदग्धमम्लतामुपैति ॥ श्लेष्मा लवणतां ॥ तदेवमेतानि वाय्वादिरूपकर्माण्यवहितः सम्यगुपलक्षयेदागमप्रत्यक्षानुमानैः ॥ अनंतरं च देशकालमात्रादीन्प्रमाणीकृत्याश्वेवोपक्रमेतेति ॥ भवंति चात्र ॥ वक्ष्यंतेऽतः परं दोषा वृद्धिक्षयविभेदतः ॥ पृथक् त्रीन्विद्धि संसर्गस्त्रिधा तत्र तु तान्नव ॥ त्रीनेवसमया वृध्या षडेकस्यातिशायने॥ त्रयोदश सस्तेषु षड्ढ्येकातिशयेन तु ॥ एकं तुल्याधिकैः षट् च तारतम्यविकल्पनात् ॥ पंचविंशतिरित्येवं वृद्धैः क्षीणैश्च तावतः ॥ एकैकवृद्धिसमताक्षयैः षट् ते पुनश्च षट् ॥ एकक्षयद्वंद्ववृद्ध्या सविपर्ययया‍ऽपि ते ॥ भेदा द्विषष्टिर्निर्दिष्टास्त्रिषष्टः स्वास्थ्यकारणं॥ रोगावस्थासु युगपद्वृद्धिसाम्यक्षयानुगं॥ षट्कं हि दुर्बोधतरं विकारैरिति दर्श्यते ॥प्रकृतिस्थं यदापित्तं वृद्धो वायुः कफक्षये॥ स्थानादादाय गात्रेषु यत्र यत्र विसर्पति ॥ तदा भेदश्च दाहश्च तत्र तत्रानवस्थितौ ॥ गात्रोद्देशे तथा स्यातां बलहानिपरिश्रमौ ॥ प्रकृतिस्थंकफं क्षीणे पित्ते वायुर्यदा बली ॥ कर्षेत्कुर्यात्तदा शूलं सशैत्यस्तंभगौरवं ॥ प्रकृतिस्थं यदा वातं पित्तं वृद्धं कफक्षये ॥ संरुणद्धि तदा दाहः शूलं चास्योपजायते ॥ प्रकृतिस्थं कफं वृद्धं पित्तं वायुक्षये यदा ॥ सन्निरुध्यात्तदा कुर्यात्सतंद्रागौरवं ज्वरं ॥ प्रकृतिस्थं यदा वायुं वृद्धः पित्तक्षये कफः ॥ सन्निरुध्यात्तदा कुर्याच्छीतकं गौरवं रुजं ॥ प्रकृतिस्थं यदा पित्तं वृद्धः श्लेश्मा‍ऽनिलक्षये ॥ सन्निरुध्यात्तदा कुर्यान्मंदाग्नित्वं शिरोग्रहं ॥ निद्रातंद्रोपलेपांश्च हृद्रोगं गात्रगौरवं ॥ ष्ठीवनं पित्तकफयोर्नखादीनां च पीनतां ॥ ये दोषवृद्धिक्षययोर्विकाराः कीर्तिताः पृथक् ॥ शेषेष्वपि तु तानेव कल्पयेत्तद्यथायथं ॥ संसर्गाद्रसरुधिरादि-

भिस्तथैषां दोषांस्तु क्षयसमनाविवृद्धिभेदैः ॥ आनंत्यं तरतमयोगत- श्च यातान् जानीयादवहितमानसो यथास्वं ॥ इति दोषभेदीयो नाम विंशोऽध्यायः ॥ २० ॥

अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ॥ वातस्योपक्रमः स्नेहः स्वेदो मृदूनि स्निग्धोष्णमधुराम्ललवणानि संशोधनान्यभ्यवहार्याणि चाभ्यंगपूर्वमुपनाहनोपवेष्टनोन्मर्दनपरिषेकावगाहसंवाहनपीडनानि वित्रासनविस्मापनविस्मरणानि सुरासवविधानं स्नेहाश्चानेकयोनयो दीपनीयपाचनीयवातहरविरेचनीयद्रव्योपहितास्तथा शतपाकसहस्रपाकाः सर्वशः प्रयोगार्था बस्तयो बस्तिनियमो विशेषतस्तैलं मांसरसोऽनुवासनानि सुखशीलता स्त्रीसंपर्कवर्जनश्च हैमंतो विधिः ॥ पित्तस्य सर्पिःपानं सर्पिषा स्नेहनमधोदोषहरणं मधुरतिक्तकषायाणामौषधाभ्यवहार्याणामुपयोगो मृदुसुरभिशीतहृद्यानां गंधानामुपसेवा परमशिशिरसुरभिसलिलमज्जनं मनोनुकूलसंस्पर्शसुखानां मुक्तामणिवैदूर्याश्मगर्भशंखशिलापद्मरागचंद्रकांतकांततरतरलावलीनां चामरत्रासितसहस्रपत्रोत्पलकदलीदलनवमालिकाकुंदमल्लिकादिविविधवर्णप्रसूनविरचितानां स्रजां च धारणमुरसा ॥ क्षणे क्षणे चाग्र्यचंदनप्रियंगुकालीयकमृणालकर्पूरसुगंधिशीतस्वच्छगंधवारिभिः सकमलकुमुदकुवलयैर्भूमितलकवाटवातायनहर्म्यभित्तीनामभिप्रोक्षणं ॥ श्रुतिसुखदमृदुमधुरमनोनुगानां गीतवादित्राणामभ्युदयानां च श्रवणं ॥ अयंत्रणैः समानवेषचरितैरुत्सवोत्तरान्योन्यदर्शनैः सुहृद्भिः सहासनं॥अमृतवचनविहारस्वभावसुरभितरवदनकुड्मलानां नातिस्पष्टाभिधायिनामनुपचारमधुरकोमलोल्लापानां प्रियाणामपत्यकानां सदयमाश्लेषः॥नि र्दयं च तनुमृदुसुरभिनिवसनाभिर्मल्लिकामुकुलानुकारिमुक्ताफलप्राय-

१ अश्मगर्भोमरकतमणिः ( पाचइतिलोके ) गारुत्मतंमरकतमश्मगर्भोहरिन्मणिरित्यमरः

२ तरलोहारमध्यगइत्यमरः ३ चमरत्रासितेतिपाठोभाति

विभूषणाभिः सहचरीनिनादसंकल्पोपजनितौत्सुक्यकलहंसानुनादि-लनूपुररशनाकलापसिंजितानुगमसंमुखमुग्धमृदुवचनाभिर्निजजघननि बिडकुचयुगुलालंकारभारोद्वहनश्रमश्वसनकंप्रमध्यमुकुलितलोचनोत्पलाभिः किंचिद्विगलितनवयौवनाभिः प्रियांगसंगमात्रातिमात्रसुखास्वादविस्रंस्यमानांशुकैककालोपजातव्रीडावैलक्ष्यप्रगल्भतावैक्लव्य-हर्षविषादविस्मयस्मितकोपप्रसादसाध्वसत्रस्तस्विन्नसर्वांगद्रवीकृत-हिमांगरागाभिः समस्तदेहहृदयप्रल्हादकारिणीभिर्विलासवतीभिश्च-तुरंगमिवानंगबलमंगैस्तनुभिरपि समुद्वहंतीभिरंगनाभिः[1]॥सकलरजनी-करकरनिकरावकीरणशिशिरतराणि भवनतलसलिलपुलिनानि ॥ सित सिकततोयसृततलमनेककायपंत्रप्रवृत्तविमलसलिलधारं धारागृहं[2] ॥ सागरानुकारितोयाशयोपतीरसुनिविष्टकुसुमितबहुविटपपृथुतुंगविवि-धतरतरुनिवहबहलच्छायोपसंच्छन्नं धवलरक्तनीलनीरजरजोव्याप्तस-मस्तजलविपुलसिकतिलोपकल्पितं दोलायमानगलदुदककलशशर-णाकरकस्रवदुदकप्रवाहाहितमृत्सौरभभूतलैकदेशं प्रलंबमानाम्रजंबू-कदंबविदुलनिचुलादिकिसलयमंजरीफलस्तबकप्रत्युप्तपटालिकं मु-हुर्मुहुः पुरुषप्रयत्नप्रेरितघटमुखोद्गीर्णोशीरचंदनानुविद्धावलंबपतित-शेषमुक्ताफलायमानजललवमुच्छ्रायविस्तारवदनिषिद्धदूरविस्तृतशी-तवातप्रवेशमत्यर्थसततांबुशीतशीकराभिषेकर्मातहृतसंतापदाहमोह-श्रमक्लमपिपासमतिशयप्राप्तरमणीयकं हिमाचलस्पर्द्धिशैत्यमंबुधर-काललीलाविडंबि कायमानं ॥ प्रफुल्लपद्मोत्पलपुंडरीकसौगंधिकको-कनदशतपत्रपरागरागानुरंजितजलचरविहंगगणकलनिनदरम्या दी-र्घिकाः ॥ मधुपानलोभनिलीयमानालिकुलचलितलताप्रताननिपति-तविविधकुसुमनिचयशयनरचनासव्यापारमृदुपवनान्युपवनानि ॥ वि-शेषतस्तु घृतं पयो विरेचनानि सौम्याः सर्वे भावा दिवास्वप्नवर्ज्य-

१ अंगनाभिर्निर्दयमाश्लेषइतिपूर्वेणसंबंधः २ वेण्वादिनिर्मितगृहविशेषं ( मांडवइ० भा० )

श्च ग्रैष्मो विधिः ॥ श्लेष्मणः पुनर्विधिविहितानि तीक्ष्णानि संशोधनानि विरूक्षप्रायाण्यभ्यवहार्याणि कटुतिक्तकषायोपहितानि तीक्ष्णानि दीर्घकालस्थितानि हृद्यानि मद्यानि ॥ धावनलंघनप्लवनजागरणनियुद्धसंव्यवायव्यायामरूक्षोन्मर्दनस्थानोच्छादनानि ॥ विशेषतः क्षौद्रं यूषो वमनानि सर्वशश्चोपवासः सधूमगंडूषः सुखप्रतिषेधः सुखार्थं वासंतो विधिरिति ॥ भवति चात्र ॥ उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कल्पितः ॥ संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ ग्रैष्मः प्रायो मरुत्पित्ते वासंतः कफमारुते ॥ मरुतो योगवाहित्वात्कफपित्ते तु शारदः ॥ योज्याः पट्वम्लमधुरा वायौ क्रुद्धे रसाः क्रमात्॥पित्ते तिक्तस्ततः स्वादुः कषायश्च रसो हितः॥कटुकः प्राक् ततस्तिक्तः कषायोंऽते कफामये ॥ चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥ वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरादिषु ॥ चीयते लघुरूक्षाभिरोषधीभिः समीरणः ॥ तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥ अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशं ॥ पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ॥ चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ॥ तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ॥ इति कालस्वभावोऽयमाहारादिवशात्पुनः ॥ चयादीन् यांति सद्योऽपि दोषाः कालेऽपि वा न तु ॥ व्याप्नोति सहसा देहमापादतलमस्तकं ॥ निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत्॥ चयएव जयेद्दोषं कुपितं त्वविरोधयन् ॥ सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ॥ वातादीनां यथापूर्वं यतः स्वाभाविकं बलं ॥ ऊचे पराशरोप्यर्थममुमेव प्रमाणयन् ॥ यथोपन्यासतः प्रासमादौ दोषभिषग्जितं ॥ नेतृभंगेन दृष्टो हि समं सैन्यपराजयः ॥ स्थानतः केचिदिच्छंति प्राक् तावत् श्लेष्मणो वधं ॥ शिरस्युरसि कंठे च प्रलिप्तेऽग्नरपि कु-

तः ॥ तदभावे कथं भोज्यपानद्रव्यावचारणं ॥ असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥ तस्मादादौ कफो घात्यः कायद्वारार्गलेव सः ॥ मध्यस्थायि यतः पित्तमाशुकारि च चिंत्यते ॥ अतो वातसखस्यास्य कुर्यात्तदनुनिग्रहं ॥ अतएव च पित्तादिः कफांतोऽन्यैः क्रमः स्मृतः ॥ सुश्रुतश्च न सर्वत्र मतमेतद्ब्रवीति तु ॥ जयेज्ज्वरेऽतिसारे च क्रमात्पित्तकफानिलान् ॥ प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते ॥ विशश्च सरता पित्तात्तथा च मृदुकोष्ठता ॥ तस्य चानुबलः श्लेष्मा गौरवापक्तिजाड्यकृत् ॥ वायुश्च वर्द्धतेऽवश्यं यस्त्वहःसु तयोः क्षये ॥ ज्वरातिसारयोस्तस्मादेषदोषजये क्रमः ॥ कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ॥ यस्मादामाशयोत्क्लेशाद्भूयिष्ठं तत्समुद्भवः ॥ क्रमेणाद्येन तत्रापि प्रवृद्धान् स्वाशये स्थितान् ॥ स्वाशये तु प्रदुष्टानां स्थितैवं ह्याशुकारिता ॥ विज्ञाय कर्मभिः स्वैस्वैर्दोषोद्रेकं यथाबलं ॥ भेषजं योजयेत्तत्र तंत्री[1]कुर्यान्नतु क्रमं ॥ प्रयोगः शमयेद्व्याधिं ॥ योऽन्यमन्यमुदीरयेत् ॥ नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥ क्रुद्धं मल्लमलं जेतुं नाल्पभावादुभावपि ॥ दोषा दोषात्मकत्वाच्च न साम्येऽपि परस्परं ॥ शीतद्रवाम्ललवणकट्वादिगुणतुल्यता ॥ दृष्टा मिथश्च दोषेषु नातोऽन्योन्यं जयंति ते ॥ आरंभकं विरोधेऽपि मिथो यद्वद्गुणत्रयं ॥ विश्वस्य दृष्टं युगपद्व्याधेर्दोषत्रयं तथा ॥ वायुरामान्वयः सार्तिराध्मानकृदसंचरः ॥ दुर्गंधमसितं पित्तं कटुकं बहलं गुरु ॥ आविलस्तंतुमांस्त्यानः प्रलेपी पिच्छिलः कफः ॥ विपर्यये तु पक्वत्वं तथा ताम्रं समेचकं ॥ पीतं च पित्तमच्छं च श्लेष्माऽच्छः पिंडितोऽथवा ॥ विशदश्च सफेनश्च धवलो मधुरो रसे ॥ उष्मणोऽल्पबल-

---

१ तंत्रं प्रधानेनिद्धांतइत्यमरः ॥ सर्वांगसुंदरायांतु भेषजं योजयेत्तत्तु स्वीकुर्यान्न क्रमंभिषगितिपाठःसन्निपातज्वरचिकित्साप्रकरणे

त्वेन धातुमाद्यमपाचितं ॥ दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ॥ कोद्रवेभ्यो विषस्येव वदंत्यामस्य संभवं ॥ सर्वदेहप्रविसृतान् सामान्दोषान्न निर्हरेत् ॥ लीनान्धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥ आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ॥ पाचनैर्दीपनैः स्नेहैस्तान्स्वेदैश्च परिष्कृतान् ॥ शोधयेच्छोधनैः काले यथासन्नं यथाबलं ॥ हंत्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ॥ उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयं ॥ धारयेदौषधैर्दोषान्विधृतास्तेऽपि कुर्वते ॥ रोगानुत्पादनिर्दिष्टानतिस्थौल्यादिकान् गदान् ॥ प्रवृत्तान्प्रागतो दोषानुपेक्षेत हिताशिनः ॥ विविधान् पाचनैस्तैस्तैः पाचयन्निर्हरेत वा ॥ इति दोषोपक्रमणीयो नामैकविंशोऽध्यायः ॥ २१ ॥

अथातो रोगभेदीयमध्यायं व्याख्यास्यामः ॥सप्तविधाः खलु रोगा भवंति सहगर्भजातपीडाकालप्रभावस्वभावजाः ॥ ते तु पृथक् द्विविधाः ॥ तत्र सहजाः शुक्रार्तवदोषान्वयाः कुष्ठार्शोमेहादयः पितृजा मातृजाश्च ॥गर्भजा जनन्यपचारात्कौब्ज्यपांगुल्यपैंगल्यकिलासादयोन्नरसजा दौहृदविमानजाश्च ॥ जातजाः स्वापचारात्संतर्पणजा अपतर्पणजाश्च ॥ पीडाकृताः क्षतभंगप्रहारक्रोधशोकभयादयः शारीरा मानसाश्च ॥ कालजाः शीतादिकृता ज्वरादयो व्यापन्नजा असंरक्षणजाश्च ॥ प्रभावजा देवगुरूल्लंघनशापाथर्वणादिकृता ज्वरादयः पिशाचादयश्च ॥ स्वभावजाः क्षुत्पिपासाजरादयः कालजा अकालजाश्च ॥ तत्र कालजा रक्षणकृताः अरक्षणजा अकालजाः ॥ तएते समासतः पुनर्द्विविधा भवंति प्रत्युत्पन्नकर्मजाः पूर्वकर्मजाश्च ॥ तत्र रोगोत्पत्तिं प्रत्युत्पन्नं कर्म यदनेनैव शरीरेण दृष्टमदृष्टं चोद्दिश्याप्तोपदिष्टानां विहितानां प्रतिषिद्धानामननुष्ठानमनुष्ठानं वा ॥ जन्मांतरा-

तीतेन तु पूर्वं ॥ तत्तु पुनर्दैवाख्यमुक्तं च नियतानियतभेदेन प्राक् ॥ तस्मात् दृष्टहेतवः प्रत्युत्पन्नकर्मजाः ॥ विपरीता दैवजन्मानः ॥ अल्पनिदाना महारुजश्चोभयात्मकाः ॥ तत्र यथास्वं प्रतिपक्षशीलनात् पूर्वेषां रोगाणामुपशमः ॥ सत्येव विपक्षशीलने निर्दिष्टकर्मक्षयाद्वैविकानां ॥ दोषकर्मक्षयादन्येषां ॥ अन्ये पुनः प्रत्युत्पन्नं कर्म परकृतमपि वर्णयंति ॥ तच्च पराभिसंस्कारमाचक्षते ॥ एवं चाहुः ॥ यदि स्वयं कृतादेव कर्मणः कार्यनिर्वृत्तिः स्यात् न दृष्टं पुरुषांतरकृतात्किमिति विद्वानपि पराचरितयोरुपकारापकारयोः सुखदुःखानुरोधात्तोषरोषौ प्रतिकर्त्तव्यचिंतां वा प्रतिपद्यते ॥ एवमेते व्याधयो द्विविधाः संतस्त्रिविधा जायंते ॥ ततश्च दोषविशेषतो भूयः सप्तविधाः ॥ सकलोऽपि चायं रोगसमूहः प्रतीकारवानायुर्वेदविहितमुपदेशमपेक्षते ॥ यस्मान्नियतहेतुकोऽप्यामयः सम्यग्भिषगादेशानुष्ठानादुपात्तायुःसंस्कारापरिक्षये सद्यवेदनतां प्रतिपद्यते ॥ अनुपक्रम्यमाणस्तु सर्व एव प्रायशो भवत्क्षयकांडे ॥ स्वयमपि च दैवान्निदानाल्पतया वा निवर्तमानः षोडशगुणसमुदितक्रियोपलंभादाशुतरमपरिक्लिष्टस्य चापगच्छति ॥ अनियतफलदायिनि तु दैवे हिताभ्यासरतस्यावकाशमेव न लभते व्याधिः ॥ तस्मान्न कस्यांचिदवस्थायामात्मवान् हिताहितयोस्तुल्यदर्शी स्यात् ॥ त्रिविधाश्च पुनर्व्याधयो मृदुमध्याधिमात्रभेदेन ॥ तत्राल्पलक्षणा मृदवो मध्यलक्षणा मध्याः संपूर्णलक्षणास्त्वधिमात्राः ॥ ते पुनः सुखसाध्यादिविशेषेण चतुर्विधाः प्रागुपदिष्टाः ॥ सुबहुशोऽपि च भिद्यमाना व्याधयो निजागंतुतां न व्यभिचरंति ॥ तत्र निजास्तु दोषोत्थाः ॥ तेषु पूर्वं वातादयो वैषम्यमापद्यंते ततो व्यथाऽभिनिर्वर्त्तते ॥ बाह्यहेतुजास्त्वागंतवः ॥ तेषु व्यथा पूर्वमुपजायते ततो दोषवैषम्यं ॥ दोषवैषम्येणैव च बहुरूपा रुगनुबध्यते प्रव-

१ दोषकर्मजव्याधीनां २ अपरिक्लिष्टस्य नाशमुपगच्छतीतिपाठः

र्द्धंते च ॥ एवंच कृत्वा न दोषव्यतिरेकेण रोगानुबंधः ॥ केवलं पौर्वापर्ये विशेषः ॥ तस्मादेकाकाराएव रोगास्तथा रुक्सामान्यादसंख्यभेदा वा प्रत्येकं समुत्थान[1]स्थानसंस्थान[2]धर्म[3]नामवेदनाप्रभावोपक्रमविशेषात्ते यथास्थूलं यथास्वमेवोपदेक्ष्यंते ॥ असंख्येयत्वाच्च दोषलिंगैरेवरोगानुक्रमं च विभजेत् ॥ दोषा एव हि सर्वरोगैककारणं॥ यथैव शकुनिः सर्वतः परिपतन् दिवसं स्वां छायां नातिवर्तते ॥ यथा वा कृत्स्नं विकारजातं वैश्वरूप्येण व्यवस्थितं गुणत्रयमव्यतिरिच्य वर्तते ॥ तथैवेदमपि कृत्स्नं विकारजातं दोषत्रयमिति ॥ यथा च विद्युद्वर्षादयो नभसि भवंति न त्ववश्यं निमित्ततस्त्ववश्यमपि ॥ तरंगबुद्बुदादयश्चांभसः ॥ तथा दोषेषु रोगाः ॥ त्रिविधं तु निमित्तमेषामसात्म्येंद्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च ॥ ते पुनः प्रत्येकमतियोगायोगमिथ्यायोगभेदात्त्रिविधा भिद्यंते ॥ तत्र यथास्वं चक्षुरादींद्रियाणां रूपादिभिरर्थैरतिसंसर्गोऽतियोगः ॥ अल्पशो नैव वा संसर्गस्त्वयोगः ॥ सूक्ष्मातिदूरांतिकस्थातिभास्वद्भैरवाप्रियविकृतादिदर्शनं द्विष्टात्युच्चपरुषभीषणादिश्रवणं पूत्यमेध्यातितीक्ष्णोग्रप्रतिकूलाद्याघ्राणं स्वभावादिभिराहारकल्पनाविशेषायतनैरपथ्यानां रसानामभ्यवहारस्तथा स्नानादीनां शीतोष्णादीनां च स्पृश्यानामयथावदुपसेवनमशुचिभूताभिघातविषवातादिसंस्पर्शश्च मिथ्यायोगः ॥ कायवाङ्मनोभेदेन तु त्रिविधमप्यहितं कर्म प्रज्ञापराधः॥ तत्र कायादिकर्मणोऽतिप्रवृत्तिरतियोगः ॥ अल्पशो नैव वा प्रवृत्तिरयोगः ॥ वेगोदीरणधारणविषमांगचेष्टनस्खलनकंडूयनप्रहारप्राणायामादि तथा क्षुत्पिपासाऽर्द्धभुक्तभाषणादि भयशोकेर्ष्यामात्सर्यादि दशविधं चाकुशलं कर्म यथास्वं मिथ्यायोगः ॥ परिणामः पुनः कालउच्यते ॥ सोऽपि शीतोष्णवर्षभेदात्त्रिधा तत्रातिमात्रस्वलक्षणः कालोऽतियोगः ॥

---

१ समुत्थानं रोगकारणं २ संस्थानं रोगलक्षणं ३ वर्णइतिपाठः

हीनस्वलक्षणस्त्वयोगः ॥ विपरीतो मिथ्यायोगः ॥ त एतेऽतियोगादयः सामान्यतोऽनुपशयलक्षणाः ॥ सर्वो वा प्रज्ञापराधएवायं यदेषामविवर्जनं ॥ अर्थकर्मकालाः पुनः सम्यग्योगेनोपशयाद्भूयिष्ठं स्वास्थ्यहेतवः ॥ तत्रापि रसवर्जा विषया यथायथमिंद्रियं बाधंते ऽनुगृण्हंति च शेषा रसकर्मकालास्तु सर्वं देहं ॥ अपिच ॥ सर्वभावानां भावाभावौ नांतरेण योगातियोगादीन् व्यवस्येत् ॥ सर्वेषां पुनर्विकाराणां निदानदोषदूष्यविशेषेभ्यो भावाभावविशेषा भवंति ॥ यदा ह्येते त्रयोनिदानादिविशेषान्नान्योन्यमनुबध्नंतीषद्वाऽनुबध्नंत्यबला वा न तदाऽभिनिवर्तंते व्याधयश्चिराद्वा ऽभिनिवर्तंते तनवो वा भवंत्यसंपूर्णलिंगा वा ॥ विपर्यये तु विपरीताः ॥ त्रयश्च रोगाणां मार्गा बाह्यमध्याभ्यंतराः ॥ तत्र बाह्यो रक्तादिधातवस्त्वक् स पुनः शाखाख्यः ॥ तदाश्रया गंडपिटिकालज्यपचीचर्मकीलार्बुदाधिमांसमषव्यंगादयो बहिर्भागाश्च शोथार्शोगुल्मविसर्पविद्रध्यादयः ॥ मध्यो मूर्द्धहृदयबस्त्यादीनि मर्माण्यस्थिसंधयः ॥ तत्रोपनिबद्धाश्च स्नायुशिराकंडरादयः ॥ तदाश्रयाः पक्षवधग्रहापतानकार्दितराजयक्ष्मास्थिसंधिशूलगुदभ्रंशादयो मूर्द्धादिरोगाश्च ॥ आभ्यंतरो महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयाश्रयः कोष्ठोऽतरिति पर्यायाः ॥ तदाश्रया ज्वरातिसारच्छर्द्यलसकविसूचिकाश्वासकासहिध्माऽऽनाहोदरप्लीहादयोऽतर्भागाश्च शोफार्शोविद्रधिगुल्मादयः ॥ ते च रोगाः स्वप्रधाना भवंत्यन्यपरिवारा वा क्रमादननुबंधानुबंधाख्याः ॥ तत्राद्याः स्वतंत्राः स्पष्टाकृतयो यथास्वं समुत्थानोपशयाश्च ॥ इतरे तु तद्वीपरीताः ॥ तद्वच्च दोषा अपि ॥ तत्रान्यपरिवारा व्याधयो द्विविधाः पुरोगामिनो ऽनुगामिनश्च ॥ तेष्वाद्याः पूर्वरूपसंज्ञाउपद्रवास्त्वितरे ॥ तान् यथायथमेव वक्ष्यमाणानुपलक्षयेत् ॥ प्रधानप्रशमे प्रशमो भवति तेषां ॥ अनुपशाम्यतो वा पश्चात्तानुपक्रमेत् त्वरितं वा बलवंतमुपद्रवं प्रधानाविरोधेन ॥ स हि पीडाक-

स्तरो भवति ॥ व्याधिपरिक्लिष्टदेहत्वात्प्रमेहपीडकादिवत् ॥ तथाऽन्यः प्रधानमेवरोगोऽन्यस्य हेतुर्भवति ॥ यथा ज्वरो रक्तपित्तस्य रक्तपित्तं वा ज्वरस्य ॥ तौ श्वासस्य ॥ प्लीहा जठरस्य ॥ तच्छ्वयथोः ॥ अर्शांसि गुल्मोदरातिसारग्रहणीनां ॥ प्रतिश्यायः कासज्वरयोः॥तौ क्षयस्य ॥ क्षयः शोषस्य ॥ एकश्चापचारो निमित्तमेकस्य व्याधेः ॥ बहूनां च तथा बहवः ॥ तद्वदेकं लिंगं ॥ एवमेव प्रशमेऽभ्युपायः ॥ तथा स एवान्यस्य प्रकोपे ॥ तस्मात्तानवहितः सम्यगागमादिभिः परीक्षेत ॥ तत्रागमतो रोगमेवमेवंप्रकोपनमेवंयोनिमेवमात्मानमेवमधिष्ठानमेवंवेदनमेवंरूपशब्दगंधरसस्पर्शमेवंपूर्वरूपमेवमुपद्रवमेवंवृद्धिस्थानक्षयान्वितमेवमुदर्कमेवंनामानं ॥ तस्मिन्नियं प्रतीकारस्य प्रवृत्तिरन्यथा निवृत्तिः ॥ प्रत्यक्षतस्त्वातुरस्य यथास्वमिंद्रियैर्वर्णसंस्थानप्रमाणोपचयच्छायाविण्मूत्रच्छर्दिनाधिक्यमंत्रकूजनमंगुल्यादिसंधिस्फुटनं देहशकृद्व्रणादिगंधं सुखशीतोष्णस्तंभसंस्पंदश्लक्ष्णखरस्पर्शं च ॥ प्रकृतिविकृतिमुक्तमास्यरसं[1] तु प्रश्नेन तथा सुच्छर्दिदुश्च्छर्दित्वं मृदुक्रूरकोष्ठतां स्वप्नदर्शनमभिप्रायं जन्मामयप्रवृत्तिनक्षत्रद्विष्टेष्टसुखदुःखानि च ॥ तथा वयः प्रत्यक्षेण च ॥ अनुमानतस्तु यूकापसर्पणेन शरीरस्य वैरस्यं ॥ मक्षिकोपसर्पणेन माधुर्यं ॥ तथाऽग्निं जरणशक्त्या बलं व्यायामशक्त्या गूढलिंगं व्याधिमुपशयानुपशयतो दोषप्रमाणमुपचारविशेषेणायुषः क्षयं रिष्टैः प्रकृतिसत्वसारसात्म्यबलान्यनुशीलनेनेति॥भवति चात्र॥ ज्ञानबुद्धिप्रदीपेन योनाविशति योगिवत्॥ आतुरस्यांतरात्मानं न स रोगांश्चिकित्सति ॥ द्वाविमौ व्याधितौ व्याधिस्वरूपस्याप्रकाशकौ॥ तद्यथैको गुरुव्याधिः सत्वदेहबलाश्रयात् ॥ लघुव्याधिवदाभाति लघुव्याधिस्ततोऽन्यथा ॥ बाह्यावयवमात्रेण तयोर्मुह्यति बालिशः ॥ ततोऽल्पमल्पवीर्यं वा विपरीतमतोऽथवा ॥ पथ्यं विपर्यये युंजन् प्रा-

१ प्रकृतिविकृतिभुक्तमास्यरसांत्विति पाठः

णान्मुष्णाति रोगिणां ॥ ज्ञानांशेन न हि ज्ञानं कृत्स्ने ज्ञेये प्रवर्तते ॥ बुभुत्सेत भिषक् तस्मात्तत्वं तंत्रानुशीलनात् ॥ अभियुक्तस्तु सततं सर्वमालोच्य सर्वथा ॥ न जातु स्खलति प्राज्ञो विषमेऽपि क्रियापथे ॥ आगंतुरन्वेति निजं विकारं निजस्तथाऽऽगंतुमतिप्रवृद्धं ॥ तत्रानुबंधं प्रकृतिं च सम्यक् ज्ञात्वा ततः कर्म समारभेत ॥ ॥ इति रोगभेदीयो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

अथातो भेषजावचारणीयमध्यायं व्याख्यास्यामः ॥ भेषजमवचारयन् प्रागेव तावदेवमातुरं परीक्षेत ॥ कस्मिन्नयं देशे जातः संवृद्धो व्याधितो वा ॥ तस्मिंश्च देशे मनुष्याणामिदमाहारजातमिदंविहारजातमेतावद्बलमेवंविधंसत्त्वमेवंविधंसात्म्यमियंभक्तिरिमेव्याधयो हितमिदमहितमिदमिति ॥ प्रायो ग्रहणेन केन वा निदान विशेषेणास्य कुपितो दोषो दोषस्य ह्येकस्यापि बहवः प्रकोपे हेतवः ॥ तस्माद्यथास्वलक्षणैः कर्मभिश्च बुध्याऽपि दोषमेवमवगमयेत् ॥ तद्यथा ॥ किमाहारेण कुपितो वायुः किं विहारेण तथा रूक्षेण लघुना शिशिरेण वा साहसेन वेगरोधेन वा भयेन शोकेन वेति ॥ ततश्च तत्प्रतिपक्षमेवौषधं प्रयुज्यमानमाशु सिद्धये संपद्यते ॥ तत्र मधुराम्ललवणा रसाः कटुतिक्तकषायाश्चेतरेतरप्रतिपक्षाः ॥ तदनंतरं चोपलभेत मृदुमध्यातिमात्रविकल्पनया कथं निदानमासेवितं ॥ एकरूपस्यापि हि हेतोर्मृद्वादिविभागेन पृथक्समवेतानां च दोषाणामंशांशबलविकल्पविशेषाद्व्याधेर्बलाबलविशेषः ॥ तत्रानेकदोषात्मकेषु व्याधिष्वनेकरसेषु च भेषजेषु रसदोषप्रभावमेकैकशोऽभिसमीक्ष्य व्याधिभेषजप्रभावतत्त्वं व्यवस्येत ॥ नत्वेवं सर्वत्र ॥ नहि विषमविकृतिसमवेतानां नानात्मकानां परस्परेणोपगृहीतानामुपहतानां चान्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसितुं शक्यं ॥ तथाविधे हि समुदये समुदयप्रभावमेवोपलभ्य व्याध्यौषधप्र-

१ समुदायःसमुदयइत्यमरः

भावतत्त्वमवगच्छेत् ॥ तथा कस्य धामाधिष्ठाय व्याधिरयमवस्थित इति निरूपयेत् ॥ प्रविसृतो हि दोषः स्वमेव स्थानमातंकायाधितिष्ठन् मूर्द्धादीन्वा दुस्तरो भवति ॥ ततश्च स्थानविशेषेण भेषजविशेषः पर्येषितव्यः ॥ ततश्चैवमालोचयेत् ॥ कस्यायमौषधस्य व्याधिरातुरो वा योग्यः कियतो वा दोषानुरूपो हि भेषज्यवीर्यप्रमाणविकल्पो व्याधिव्याधितबलापेक्षो भवति॥सहसाऽतिबलानि संशोधनौषधान्याग्नेयवायव्यान्यतिसौम्यान्यतिमात्राणि वा तथाऽग्निक्षारशस्त्रकर्माण्यल्पसत्त्वमातुरमल्पबलं वा ऽतिपातयेयुः ॥ संशमनानि तु व्याधिबलादधिकानि तमुपशमय्य व्याधिं व्याधिक्षपिते देहे शीघ्रमन्यमावहंति॥शरीरबलादधिकानि ग्लानिमूर्च्छामदमोहबलक्षयानाग्निबलादधिकानि ग्लानिमग्निसादं च ॥ अपिच ॥ अतिस्थूलोऽतिकृशो दुर्बलो दुर्बद्धमांसशोणितास्थ्यंगावयवोऽल्पाग्निरल्पाहारोऽसात्म्याहारोऽपचितः साररहितो वा व्याधिबलमेव तावदसमर्थः सोढुं किं पुनस्तथाविधो भेषजमेवंवेगं ॥ तस्मात्तादृशमविषादकैर्मृदुसुखैरुत्तरोत्तरगुरुभिरविभ्रमैश्चोपाचरेदौषधैर्विशेषादबलाः ॥ ताह्यनवस्थितमृदुविक्लवहृदयाः प्रायः सुकुमाराः परं संस्तभ्याश्च ॥ ततोऽपि विशेषेण शिशवः ॥ तथा बलवति बलवद्व्याध्यातुरे ऽल्पबलमल्पं वा भेषजमकिंचित्करं भूयएव दोषमुत्क्लेश्य व्याधिमुदीरयेत् ॥ योग्यमपि चौषधमेवं परीक्षेत ॥ इदमेवंरसवीर्यविपाकमेवंगुणमेवंद्रव्यमेवंकर्मैवंप्रभावमस्मिन्देशे जातमस्मिन्नृतावेवंगृहीतमेवंनिहितमेवंविहितमेवंनिषिद्धमेवमुपसंस्कृतमेवंसंयुक्तमेवंयुक्तमनया मात्रयैवंविधस्य पुरुषस्यैवंविधे कालएतावंतंदोषमपकर्षत्युपशमयति वा ॥ अन्यदपि चैवंविधं भेषजमभूत्॥तथा तेनानेन वा विशेषेण प्रयुक्तमिदमकरोत्॥सूक्ष्माणि हि दोषौषधदूष्यदेशकालबलानलाहारसारसात्म्यसत्वप्रकृतिवयसाम-

१ भेषजमत्रंकल्पमितिपाठः २ स्त्रियः

वस्थांतराणि यान्यनालोचितानि निहन्युरातुरं॥आलोच्यमानानि तु विपुलबुद्धिमपि चिकित्सकमाकुलीकुर्युः किंपुनरल्पबुद्धिं ॥ तस्मादभीक्ष्णशः शास्त्रार्थकर्मानुशीलनेन संस्कुर्वीत प्रज्ञां॥अपिच ॥ संति व्याधयो ये शास्त्रउत्सर्गापवादैरुपक्रमं प्रति निर्दिष्टाः ॥ तत्र प्राज्ञएव दोषादिगुरुलाघवेन सम्यगध्यवस्येदन्यतरनिष्ठायां ॥कालश्च भेषजस्य योग्यतामादधाति ॥ सतु क्षणलवमुहूर्तादिभेदेनातुरावस्थया च द्विधोक्तः प्राक् ॥ अपिच ॥ शीतोष्णवर्षलक्षणस्त्रिविधः कालः ॥ तत्र शीतोष्णयोर्वृष्टिशीतयोश्चांतरेण साधारणौ वसंतजलदात्ययौ ॥ ग्रीष्मवर्षकालयोस्तु प्रारंभो वृष्टेः प्रावृडिति विकल्प्यते ॥ प्राक् तत्र शीतोष्णवर्षलक्षणा ऋतवस्त्रयो हेमंतग्रीष्मवर्षाख्यास्तेषामंतरे संशोधनार्थं साधारणा वसंतप्रावृट्शरदाख्यास्त्रयो विकल्प्यंते ॥ तत्र संशोधनं प्रति फाल्गुनचैत्रौ वसंतः ॥ आषाढश्रावणौ प्रावृट् ॥ कार्तिकमार्गशीर्षौ शरत् ॥ तेषु साधारणेष्वहस्सु वमनादीनां प्रवृत्तिर्निवृत्तिरितरेष्वयोगातियोगभयात् ॥ साधारणा हि मंदशीतोष्णवर्षतया सुखत्वाद्भवंत्यविकल्पकाः शरीरौषधानां विपरीतास्त्वितरे ॥ तथाहि ॥ शीतकालेऽतिमात्रशीतोपहतत्वाच्छरीरमत्यर्थशीतवातविष्टब्धबद्धगुरुदोषं भवति ॥ तदनुप्राप्तं च भेषजं संशोधनार्थमुष्णस्वभावमपि शीतोपहतत्वान्मंदवीर्यतां गतमयोगाय जायते॥शिशिरं च वातप्रायोपद्रवाय॥तद्वद्वर्षास्वपि समंतादतिघनेन घनसंघातेनावनते नभस्युपरुद्धतेजःप्रकरेषु दिनकरकरेषु जलदपटलप्लावनोद्दामकर्दमायां भूमावत्यर्थंपक्लिन्नमवसन्नानलमलमुद्रिक्तमलबलमादानदुर्बलं शरीरं भवति॥औषधग्रामस्तु जलदोदरप्रततप्रमुक्तधारावपातसंभूतांबुनिवहोपप्लावितमूलजालसारविटपो बहलकोमलपल्लवोपचितस्कंधशाखः पुनरिव बालतामुपगतोऽल्पवीर्यो भवति॥अपरि-

१ .प्रज्ञयैवेतिहेमाद्रीपाठः

संस्थिततया च क्षितिमल्पप्रायाभिरम्लविपाकाभिः खगमृगसरीसृपादि-शवधातुमूत्रपुरीषसंस्पृष्टाभिरद्भिः सलिलसीकरानुविद्धशिशिरपवन-संपृक्तेन च धराधरोष्मणा कोमलत्वादपरिणतस्यास्य सुतरां विदाहो जन्यते ॥ ततश्चासावपथ्यतामुपगतो ध्रुवमयोगाय ॥ प्रथमसंगृहीत-मपि चौषधं तोयदतोयानुगतमारुतोपहतं जगतीति ॥ ग्रीष्मे पुनरा-दानोपहतत्वाच्छरीरमुष्णरूक्षवातातपाध्मातमतिस्विन्नमतिशिथिल-मतिप्रविलीनदोषं भवति ॥ भेषजं पुनरनुष्णमपि तपनतरतपनकरनि-पातादुष्णवीर्यतीक्ष्णतामुपगतमतियोगायोपकल्पते ॥ शरीरं च पि-पासाश्रमक्लमोपद्रवाय ॥ तस्मात्साधारणेष्वेव तदंतरालेषु वमनादीनि योजयेत्॥न चेदात्ययिको व्याधिः॥आत्ययिके तु कृत्रिमगुणोपधानेन-यथर्तुगुणविपरीतेन संयोगसंस्कारप्रमाणविकल्पैश्चोपपाद्यौषधमव-हितोऽवचारयेत् ॥ आतुरावस्थासु तु कालाकालसंज्ञा ॥ तद्यथा ॥ अस्यामवस्थायामस्यौषधस्य कालोऽकालो वा ॥ न ह्यप्राप्तातीत-कालमौषधं यौगिकं भवति तस्यत्वेकादशधाऽवचारणं ॥ तद्यथा ॥ अभक्तं प्राग्भक्तं मध्यभक्तमधोभक्तं समभक्तमंतरभक्तं सामुद्गं मुहु-र्मुहुः सग्रासं ग्रासांतरं निशि च ॥ तत्राभक्तं नाम केवलमेवौषधं ॥ त-न्निरन्नोपयोगादतिवीर्यं कफोद्रेके विमुक्तामाशयस्रोताः प्रातर्बलवा नुपयुंजीत ॥ इतरस्तु प्राग्भक्तादिकं ॥ अन्नसंसर्गेण हि तन्नाति ग्लानिकरं भवति ॥ प्राग्भक्तं नाम यदनंतरभक्तं ॥ तदपाना निलविकृतावधःकायस्य च बलाधानार्थं तद्गतेषु च व्याधिषु प्रशमनाय कृशीकरणं च योज्यं ॥ मध्यभक्तं मध्ये भक्तस्य तत्समा-नानिलविकृतौ कोष्ठगतेषु च व्याधिषु पैत्तिकेषु च॥अधोभक्तं भक्ता-दनंतरं ॥ तत्तु व्यानविकृतौ प्रातराशांतमुदानविकृतौ पुनः सायमाशांतं पूर्वकायस्य च बलाधानार्थं तद्गतेषु व्याधिषु च श्लैष्मिकेषु

१ आध्मातं दग्धं ॥ आध्मातः शब्दिते दग्धे इतिमेदिनीकरः

च प्रशमाय स्थूलीकरणं च ॥ समभक्तं यदन्नेन समं साधितं पश्चाद्वा समालोडितं ॥ तद्बालेषु सुकुमारेष्वौषधद्वेषिष्वरुचौ सर्वांगेषु ॥ अंतरभक्तं यत्पूर्वाण्हभक्ते जीर्णे मध्यान्हे भेषजमुपयुज्यते तस्मिंश्च जीर्णे पुनरपराण्हे भोजनं ॥ एतेन रात्रिर्व्याख्याता ॥ तद्दिप्ताग्नेर्व्यानजेष्वामयेषु ॥ सामुद्गं यदादावंते च भुक्तस्य ॥ तत्तु लघ्वन्नपानयुक्तं पाननावनावलेहादि हिध्मायां कंपाक्षेपयोरूर्ध्वाधःसंश्रयेच दोषे ॥ मुहुर्मुहुस्तु पुनःपुनर्भुक्ते यदभुक्ते वा ॥ तच्छ्वासकासहिध्मातृट्छर्दिषु विषनिमित्तेषु च विकारेषु ॥ सग्रासं यद्ग्रासससंपृक्तं ॥ ग्रासांतरं यद्ग्रासयोर्ग्रासयोर्मध्ये ॥ द्वयमप्येतत्प्राणानिलविकृतौ ॥ तथा सग्रासं चूर्णलेहवटकादिकमग्निदीपनं वाजीकरणानि चोपयुंजीत ॥ ग्रासांतरं हृद्रोगे वमनं धूमं च ॥ जत्रूर्ध्वामयेषु तु निशायां ॥ अत्राद्ये काले तृषितः पीतांबुरजीर्णी क्षुधितः क्षामश्च भेषजं वर्जयेत् ॥ शेषेषु चाहृद्यमसात्म्यमतितीक्ष्णोग्रगंधं भूरिमात्रं चेति ॥ भवति चात्र ॥ रोगमादौ परीक्षेत तदनंतरमौषधं ॥ ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत् ॥ निवृत्तोऽपि पुनर्व्याधिरल्पेनायाति हेतुना ॥ देहे मार्गीकृते दोषशेषः सूक्ष्म इवानलः ॥ तस्मात्तमनुबध्नीयात्प्रयोगेणानपायिना ॥ सिद्धानामपि योगानां पूर्वेषां दार्ढ्यमावहन् ॥ सातत्यात्स्वादुभावाद्वा पथ्यं द्वेष्यत्वमागतं ॥ कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत्पुनः ॥ मनसोऽर्थानुकूल्येन तुष्टिरूर्जा रुचिर्बलं ॥ सुखोपभोगता च स्याद्व्याधेश्चातः परिक्षयः ॥ लौल्याद्दोषक्षयाद्व्याधिवैषम्येण च याऽरुचिः ॥ तासु पथ्योपचारज्ञो योगेनान्नं प्रकल्पयेत् ॥ शीतोष्णवर्षानिचितं चैत्रश्रावणकार्तिके ॥ क्रमात्साधारणे श्लेष्मवातपित्तं हरेद्द्रुतं ॥ प्रावृट्शरद्वसंतानां मासेष्वेतेषु वाऽऽहरेत् ॥ साधारणेषु विधिना त्रिमासांतरितान्मलान् ॥ कृत्वा शीतोष्णवृष्टीनां प्रतीकारं

यथायथं ॥ प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ समाहे-न गुणालाभे क्रियामन्यां प्रयोजयेत् ॥ पूर्वस्यां शांतवेगायां न क्रि-यासंकरो हितः ॥ गुणेऽल्पेऽपि तु तामेव विशेषोत्कर्षलब्धये ॥ भे-षजं नृपतेर्हृद्यमल्पमल्पात्ययं शुचि ॥ सिद्धागमं बहुगुणं बहुकृत्वः प्रयोजितं ॥ अनन्यकार्योऽवहितस्तन्मंत्रिगुरुसंमतं ॥ आस्वादि-तं परिचरैः स्वयं चानु प्रयोजयेत् ॥ उचितो यस्य यो देशस्तज्जं तस्यौषधं हितं ॥ देशे ऽन्यत्रापि वसतस्तत्तुल्यगुणजन्म च ॥ वी-र्यवद्भावितं सम्यक्स्वरसैरसकृल्लघु ॥ रसगंधादिसंपन्नं काले जीर्णे च मात्रया ॥ एकाग्रमनसा युक्तं भैषज्यममृतायते ॥ इति भे-षजावचारणीयो नाम त्रयोविंशोऽध्यायः॥ २३ ॥

अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः ॥उपक्रम्यस्य हि द्वित्वाद्विधैवोपक्रमो मतः ॥ एकः संतर्पणस्तत्र द्वितीयश्चापतर्प-णः ॥ बृंहणो लंघनश्चेति तत्पर्यायावुदाहृतौ ॥ बृंहणं यद्बृहत्वाय लंघ-नं लाघवाय यत् ॥ देहस्य भवतः प्रायो भौमाप्यमितरच्च ते ॥ स्नेहनं रू-क्षणं कर्म स्वेदनं स्तंभनं च यत् ॥भूतानां तदपि द्वैध्याद्द्वितयं नातिवर्तते ॥ शोधनं शमनं चेति द्विधा तत्रापि लंघनं ॥ यदीरयेद्बहिर्दोषान् ॥ पंच-धा शोधनं तु तत् ॥ निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ न शोधयति यद्दोषान्समान्नोदीरयत्यपि ॥ समीकरोति विषमान् शमनं तच्च सप्तधा ॥ पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ॥ बृंहणं शम-नं त्वेव वायोः पित्तानिलस्य च ॥ बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोक-कर्शितान् ॥ भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ गर्भिणीसूति-कावालवृद्धान् ग्रीष्मेऽपरानपि ॥ मांसक्षीरसितासर्पिर्मधुरस्निग्धब-स्तिभिः ॥ स्वप्नशय्यासुखाभ्यंगस्नाननिर्वृतिहर्षणैः ॥ मेहामदोषाति-स्निग्धज्वरोरुस्तंभकुष्ठिनः ॥ विसर्पविद्रधिप्लीहशिरःकंठाक्षिरोगिणः ॥ स्थूलांश्च लंघयेन्नित्यं शिशिरेत्वपरानपि ॥ तत्र संशोधनैः स्थौल्यब-

लपित्तकफाधिकान् ॥ आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥विबंध-गौरवोद्गारहृल्लासादिभिरातुरान् ॥ मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः ॥ एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ॥ क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान् ॥ समीरणातपायासैः किमुताल्पबलैर्नरान् ॥ न बृंहयेल्लंघनीयान् बृंह्यांश्च मृदु लंघयेत् ॥ युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ॥ बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः ॥ विमलेंद्रियता सर्गो मलानां लाघवं रुचिः ॥ क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकंठता ॥ व्याधिमार्दवमुत्साहस्तंद्रानाशश्च लंघिते ॥ अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ॥ अतिस्थौल्यातिकार्श्यादीन् वक्ष्यंते ते च सौषधाः ॥ रूपं तैरेव विज्ञेयमतिबृंहितलंघिते॥ तत्र शोधनमुद्दिश्य स्थौल्याद्याः प्रागुदाहृताः॥ गुर्वादिद्रव्यसंलीनश्लेष्ममिश्रोऽन्नजो रसः॥ आमएव श्लथीकुर्वन् धातून्स्थौल्यमुपानयेत्॥ अतिस्थौल्यादतिक्षुत्तृट्प्रस्वेदश्वासनिद्रताः ॥ आयासाक्षमताजाड्यमल्पायुर्बलवेगता ॥ दौर्गंध्यं गद्गदत्वं च भवेन्मेदोतिपुष्टितः ॥ स्रोतःसु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः ॥ चरन्प्रज्वलयत्यग्निं क्षुत्तृषौ स्तस्ततोऽधिकं ॥ स्थूलं कोटरवद्वृक्षौ दहतोऽग्न्यनिलौ च तं ॥ स्वेदवाहिसिरामूलभवाद्विष्यंदनादपि ॥ मेदसः श्लेष्मयोगाच्च भवति स्वेदभूरिता ॥ कोष्ठ एव विपक्वेऽस्य संरुद्धस्रोतसो रसे ॥ सर्वत्रालब्धवृत्तित्वात्प्रायो मेदः प्रचीयते॥तच्छेषोऽल्परसोऽल्पत्वान्नालं रक्तादिपुष्टये ॥ तुल्येऽपि वाय्वादिचये प्राकृचितं चीयते तरां ॥ मेदस्तेनासमत्वेन धातूनां विदधाति तनू॥श्वासादीनचिराच्चान्यान्ज्वरोदरभगंदराम् ॥ मेहोरुस्तंभपिटकाविद्रधिप्रभृतीम् गदान् ॥ अयथोपचयोत्साहश्चलस्फिगुदरस्तनः ॥ अतिस्थूलः स्मृतो योज्यं तत्रान्नं मारुतापहं॥ श्लेष्ममेदोहरं यच्च कुलत्था यवका यवाः ॥ जूर्णश्यामाकमुद्गाद्याः पानेऽरिष्टो मधूदकं ॥ मस्तु तक्रं च तीक्ष्णोष्णं रूक्षं छेदि च भेषजं ॥चिं-

तान्यवायव्यायामशोधनास्वपनं भजेत् ॥ देहापेक्षी तथा रूक्षं स्नान-मुद्वर्तनादि च ॥ मधुना त्रिफलां लिह्याद्गुडूचीमभयां घनं ॥ रसांजनस्य महतः पंचमूलस्य गुग्गुलोः ॥ शिलाजतोः प्रयोगश्च साग्निमंथरसो हितः ॥ विडंगं नागरं क्षारः काललोहरजो मधु ॥ यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ मदनं त्रिफलामुस्तसप्ताह्वारिष्टमस्तुकं ॥ सपाठारग्वधं पीतमतिबृंहणरोगजित् ॥ तद्वद्वत्सकशम्याकदेवदारुनिशाद्वयं ॥ समुस्तपाठाखदिरत्रिफलानिंबगोक्षुरं ॥ एलावृषभषड्ग्रंथाखराश्वोपलभेदकं ॥ तक्रेण दधिमंडेन पीतं कोलरसेन वा ॥ मूत्रकृच्छ्रं कृमीन्मेहं स्थूलतां च व्यपोहति ॥ कृमिघ्नत्रिफलातैलसक्तुत्र्यूषणदीप्यकैः ॥ लोहोदकाप्लुतो मंथः शस्तो बृंहणरोगिणां ॥ व्योषकट्वीवराशिग्रुविडंगातिविषास्थिराः ॥ हिंगुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ निशे बृहत्यौ हपुषा पाठा मूलं च केंबुकात् ॥ एषां चूर्णं मधुघृतं तैलं च सदृशांशकं ॥ सक्तुभिः षोडशगुणैर्युक्तं पीतं निहंति तत् ॥ अतिस्थौल्यादिकान्सर्वान् रोगानन्यांश्च तद्विधान् ॥ हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ॥ बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनं ॥ योज्यं तथा यथा व्याधिः स्वेदासृक्स्रावणान्यपि ॥ अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ॥ स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥ बस्तिरुङ्मूर्द्धजंघोरुत्रिकपार्श्वरुजा ज्वरः ॥ प्रलापोर्ध्वानिलग्लानिछर्दिपर्वास्थिभेदनं ॥ वर्चोमूत्रग्रहाद्याश्च जायंते ऽतिविलंघनात् ॥ अतिकार्श्येन नायासवर्षशीतोष्णक्षुत्तृषः ॥ तृप्तिव्याध्यौषधमदान् सहते ऽल्पबलत्वतः ॥ श्वासकासक्षयप्लीहगुल्मार्शोवन्हिमंदताः ॥ कृशं प्रायश्च धावंति रक्तपित्तज्वरामयाः ॥ कार्श्यमेव वरं स्थौल्यान्न हि स्थौल्यस्य भेषजं ॥ बृंहणं लंघनं नालम-

---

१ वत्सकमितिपाठः ॥

तिमेदोग्निवातजित् ॥ मधुरस्निग्धसौहित्यैर्यत्सौख्येन च नश्यति ॥ कृशिमा स्थविमा ऽत्यंतविपरीतनिषेवणैः ॥ शुष्कस्फिगुदरग्रीवः स्थूलपर्वा सिराततः ॥ उच्यते ऽतिकृशस्तत्र प्रागुक्तो बृंहणो विधिः ॥ अश्वगंधाविदार्याद्या वृष्याश्चौषधयो हिताः ॥ अचिंतया हर्षणेन ध्रुवं संतर्पणेन च ॥ स्वप्नप्रसंगाच्च कृशो वराह इव पुष्यति ॥ लंघनोत्थेषु रोगेषु शेषेष्वप्युपकल्पयेत् ॥ यत्तदात्वे समर्थं स्याद्यच्चाभ्यासेन पुष्टये॥ सद्यःक्षीणो यतः सद्यो बृंहणेनोपचीयते ॥ चिरं क्रमेण च क्षीणस्तदाभ्यासेन तत्र च ॥ बृंहणं तत्र मात्राग्निबलादीन्वीक्ष्य योजयेत् ॥ नहि मांससमं किंचिदन्यद्देहबृहत्वकृत् ॥ मांसादमांसं मांसेन संभृतत्वाद्विशेषतः ॥ क्रव्यान्मांसरसांस्तस्माद्दद्यात्लावाणिकाँल्लघून् ॥ वेसवारीकृतैस्तद्वज्जांगलैश्च कृताकृतान् ॥ रसांस्तथा च क्षीरादींस्तर्पणांस्तर्पणान्पुनः॥ युंज्यात्कृशानां ज्वरिणां कासिनां मूत्रकृच्छ्रिणां ॥ तृष्यतामूर्ध्ववातानां मूढमारुतवर्चसां ॥ समकृष्णासितातैलक्षौद्राज्यो हि सतर्पणः ॥ मंथस्तद्वत्सिताक्षौद्रमदिरासक्तुयोजितः॥फाणितं सक्तवः सर्पिर्दधिमंडोऽम्लकांजिकं ॥ तर्पणं मूत्रकृच्छ्रघ्नमुदावर्तहरं परं ॥ मंथः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ॥ परूषकैः सामलकैः सद्यस्तृष्णार्तिरोगजित् ॥ स्वादुरम्लो जलकृतः सस्नेहो रूक्ष एव च ॥ सद्यः संतर्पणो मंथः स्थैर्यवर्णबलप्रदः ॥ गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ॥ यवगोधूममुभयोस्तद्योग्याहितकल्पनं ॥ स्थौल्यकार्श्ये प्रकृत्याऽपि स्यातां तत्राप्ययं विधिः ॥ सततं व्याधितनया सदा योज्यो विभज्य च ॥ मात्रादियुक्ते सेवेत यस्तु बृंहणलंघने ॥ समधात्वग्निदेहो ऽसौसमसंहननो भवेत् ॥ दृढेंद्रियबलत्वाच्च न द्वंद्वैरभियुज्यते ॥ दोषगत्याऽतिरिच्यंते ग्राहिभेद्यादिभेदतः ॥ उपक्रमा न तु द्वित्वाद्भिन्ना अपि गदा इव ॥ ॥ इति द्विविधोपक्रमणीयो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ॥ स्नेहादिषूपयोगाय तद्यापच्छमनाय च ॥ कुर्यात्प्रागेव तद्योगिद्रव्यसंभारसंग्रहं ॥ गुरुशीतसरस्निग्धमंदसूक्ष्ममृदुद्रवं ॥औषधं स्नेहनं प्रायो विपरीतं विरूक्षणं॥ सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतं ॥ तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ माधुर्यादविदाहित्वाज्जन्माद्येव च शीलनात् ॥ पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरं ॥ घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपिच ॥ द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥ स्नेहाशया दधि क्षीरं मांसास्थि फलदारु च ॥ स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिंतकाः ॥ वृद्धबालाबलकृशा रूक्षाः क्षीणास्ररेतसः ॥ वातार्तस्यंदतिमिरदारुणप्रतिबोधिनः ॥ स्नेह्या न त्वतिमंदाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥ ऊरुस्तंभातिसारामगलरोगगरोदरैः ॥ मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ॥ अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ॥ तत्र धीस्मृतिमेधाग्निकांक्षिणां शस्यते घृतं ॥ ग्रंथिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ॥ तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ॥ वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥ रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ॥ शेषौ वसा तु संध्यस्थिमर्मकोष्ठरुजासु च ॥ तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ॥ तैलं प्रावृषि वर्षांते सर्पिरन्यौ तु माधवे ॥ सर्वं सर्वस्य च स्नेहं युंज्याद्भास्वतिनिर्मले ॥ ऋतौ साधारणे दोषसाम्येऽनिलकफे कफे ॥ दिवा निश्यनिले पित्ते संसर्गे पित्तवत्यपि ॥ त्वरमाणे तु शीतेऽपि दिवा तैलं च योजयेत् ॥ उष्णेऽपि रात्रौ सर्पिश्च दोषादीन्वीक्ष्य चान्यथा ॥ निश्यश्नुते वातकफाद्रोगानहनि पित्ततः ॥ युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ॥ नस्याभ्यंजनगंडूषमूर्द्धकर्णाक्षितर्पणैः ॥ रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ॥ स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ॥ यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ॥ स्नेहस्य कल्पः स श्रेष्ठः स्नेह-

कर्माशुसाधनात् ॥ द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यंति याः क्रमात् ॥ ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च कनीयसीं ॥ कल्पयेद्वीक्ष्य दोषादीन्प्रागेव तु ह्रसीयसीं ॥ अज्ञातकोष्ठे हि बहुः कुर्याज्जीवितसंशयं॥ तत्र दुर्बलमंदाग्निबालवृद्धसुखात्मकैः ॥ अपथ्यरिक्तकोष्ठैश्च ज्वरातीसारकासिभिः ॥ ह्रस्वा पेया सुखा सा हि परिहारे नु* वर्त्तते ॥ चिराच्च बल्पा न रुजे व्यापन्नाऽपि प्रकल्पते ॥ मेहारुःपिटिकाकुष्ठवातशोणितपीडितैः ॥ मध्यमा मृदुकोष्ठैश्च स्नेहनी स्यात्सुखेन सा ॥ न बलक्षपणी मंदविभ्रंशा शुद्धयेऽप्यलं ॥ महादेहानलबलक्षुत्तृट्क्लेशसहिष्णुभिः ॥ गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः ॥ उन्मत्तैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा ॥ सर्वमार्गानुसारेण जयेद्व्याधीन्सुयोजिता ॥ ह्यस्तने जीर्णएवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥ शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ बृंहणो रसमद्याद्यैः सभक्तोऽल्पो हितः स च ॥ बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥ स्त्रीस्नेहनित्यमंदाग्निसुखितक्लेशभीरुषु ॥ मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥ स्नेहः प्राग्भोजनात् कुर्यादूरुजंघाकटीबलं ॥ वेगानुलोम्यमारोग्यमधःकायगदक्षयं ॥ मध्ये बृहत्वाग्निबलस्थिरताकुक्षिरुक्शमान् ॥ इंद्रियस्थिरतामूर्ध्वमूर्ध्वजत्रुगदक्षयं ॥ वाते सलवणं सर्पिः पित्ते केवलमिष्यते ॥ वैद्यो दद्याद्बहुकफे क्षारत्रिकटुकान्वितं ॥ वार्युष्णमच्छेऽनुपिबेत्स्नेहे तत्सुखपक्तये ॥ आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु ॥ उष्णोपचारः स्नेहे स्यादुष्णो ह्युष्णैर्विरुध्यते ॥ ततो गुरुप्रावरणो निर्वातशयनस्थितः ॥ जरणांतं प्रतीक्षेत तृष्यन्नुष्णाल्पवारिपः ॥ शिरोरुक्भ्रमनिष्ठीवमूर्च्छासादारतिक्लमैः ॥ जानीयाद्भेषजं जीर्यज्जीर्णं तच्छांतिलाघवात् ॥ अनुलोमानिलस्वास्थ्यक्षुत्तृष्णोद्गारशुद्धिभिः ॥ जीर्णाजीर्णविशंकायां पुनरुष्णोदकं पिबेत् ॥

तेनोद्गारविशुद्धिः स्यात्ततश्च रुचिलाघवं ॥ भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ॥ द्रवोष्णमनभिष्यंदि नातिस्निग्धमसंकरं ॥ उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ॥ व्यायामवेगसंरोधशोकवर्षहिमातपान् ॥ प्रवातयानयानाध्वभाष्यात्यशनसंस्थितीः ॥ नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥ यान्यहानि पिबेत्तानि तावंत्यन्यान्यपि त्यजेत् ॥ सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ॥ स्नेहस्य पानात्पूर्वं च दातव्यं मृदु भेषजं ॥ उत्तेजनं हुताशस्य कोष्ठलाघवकारि च ॥ त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ॥ सम्यक्स्निग्धोऽथवा यावदतः सात्मी भवेत्परं ॥ सात्मीभूतो हि कुरुते न मलानामुदीरणं ॥ अतियोगेन वा व्याधीन् यथांभो ह्यतियोजनात् ॥ विहत्य सेतुं मृत्कोष्ठात्स्रवति क्षपयन्मृदं ॥ स्नेहोऽप्यग्निं तथा हत्वा स्रवति क्षपयंस्तनुं ॥ वातानुलोम्यं दीप्तोग्निर्वर्चः स्निग्धमसंहतं ॥ मृदुस्निग्धांगताग्लानि स्नेहोद्वेगोऽथ लाघवं ॥ विमलेंद्रियता सम्यक्स्निग्धे रूक्षे विपर्ययः ॥ पांड्वामयांगसदनघ्राणवक्रगुदस्रवाः ॥ गुददाहारुचिच्छर्दिमूर्च्छातृष्णाप्रवाहिकाः ॥ शुष्कोद्गारभ्रमश्वासकासाः स्नेहातिसेवनात् ॥ अमात्रयाऽहितोऽकाले मिथ्याहारविहारतः ॥ स्नेहः करोति शोफार्शस्तंद्रानिद्राविसंज्ञिताः ॥ कंडूकुष्ठज्वरोत्क्लेशशूलानाहबलक्षयान् ॥ जठरेंद्रियदौर्बल्यजाड्यामस्तंभवाग्ग्रहान् ॥ तांस्तान्स्वदोषहेतूंस्थान्पांड्वादींश्चातियोजनात् ॥ क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजं ॥ तक्रारिष्टखलोद्दालयवश्यामाककोद्रवाः ॥ पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ॥ यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनं ॥ विरूक्षणे लंघनवत् कृतातिकृतलक्षणं ॥ स्नेहेन पैत्तिकस्याग्निर्यदा तीव्रतरीकृतः ॥ स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन् ॥ उदीरयेत्सोपसर्गां पि-

१ क्रोधहिमातपानितिपाठः २ त्यासनसंस्थितीरि० पा०

पासामस्य चाधिकां ॥ सोसृंस्त्यजेद्यद्युदकं न पिबेदाशु शीतलं ॥ शीतसेकावगाहान्वा तत्तृष्णापीडितो भजेत् ॥ स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः ॥ अजीर्णबलवत्यां तु शीतैर्दिह्याच्छिरोमुखं ॥ छर्दयेत्तदशांतौ च पीत्वा शीतोदकं पुनः ॥ रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्यां तु कफानिले ॥ समदोषश्च निःशेषं स्नेहमुष्णांबुनोद्धरेत् ॥ ततो दोषातिबलतः पूर्वोक्तं च विधिं श्रयेत् ॥ न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ॥ सर्वं ह्यनुरुजं देहं हत्वा संज्ञां च मारयेत् ॥ स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ॥ स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं वमनं पुनः ॥ एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ तिलमाषदधिक्षीरगुडमत्स्यरसादिभिः ॥ मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ॥ स्नेहोचिताश्च ये स्नेह्यास्तान्पूर्वं रूक्षयेत्ततः ॥ संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥ अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ॥ बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥ योगानिमाननुद्वेगान्सद्यःस्नेहान्प्रयोजयेत् ॥ प्रभूतमांसनिःक्वाथान् जांगलानूपजान् रसान् ॥ स्नेहभृष्टेषु वा तेषु यवागूं वाऽतिसंहतां ॥ तिलचूर्णं च सस्नेहं फाणितं कृशरां तथा ॥ तिलकांबलिकं भूरिस्नेहं सर्पिष्मतीमपि ॥ पेयां सुखोष्णां क्षैरेयीं पात्रे वा ससिताघृते ॥ सर्पिर्लवणयुक्तं वा सद्यःस्निग्धं तथा पयः ॥ पेयां च पंचप्रसृतां स्नेहैस्तंदुलपंचमैः ॥ पायसं माषमिश्रं च बहुस्नेहसमायुतं ॥ तैलशुंठीगुडसुरं जीर्णे मांसरसाशिनः ॥ स्नेहं वैकं सुराऽच्छेन दध्नो वा सगुडं सरं ॥ वसां वराहजां सर्पिः पिप्पलीं लवणं तिलान् ॥ पिप्पलीं लवणं स्नेहांश्चतुरो दधि मस्तुकं ॥ दध्ना सिद्धं व्योषगर्भं धात्रीद्राक्षारसे घृतं ॥ यवकोलकुलत्थांबुसारक्षीरसुरादधि ॥ घृतं च सिद्धं तुल्यांशं सद्यःस्नेहनमुत्तमं ॥ सिद्धांश्च चतुरः स्नेहान् बदरत्रिफलारसैः ॥ योनिशुक्रामयहरान्सद्यःस्नेहान्प्रयोजयेत् ॥ लवणोपहिताः

स्नेहाः स्नेहयंत्यचिरान्नरं ॥ तद्धि विष्यंद्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥ गुडानूपामिषक्षीरतिलमाषसुरादधि ॥ कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ॥ स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ॥ क्षीणानां त्वामयैरग्निदेहसंधुक्षणक्षमान् ॥ दीप्तांतराग्निःपरिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ॥ दृढेंद्रियो मंदजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ इति स्नेहविधिर्नाम पंचविंशोऽध्यायः ॥ २५ ॥

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ॥ चतुर्विधोऽग्निस्वेदो भवति ॥ तापोपनाहद्रवोष्मभेदेन ॥ तत्र तापस्वेदः पाणिकांस्यफालवालुकावस्त्रघटिकादिभिः साक्षादग्निना च प्रयोक्तव्यः ॥ उपनाहस्तु सर्वगंधधान्यसर्षपकिण्ववचादेवदारुरास्नैरंडमूलमधुकशताव्हासुराकिण्वादिवातहरद्रव्यचूर्णैर्यवगोधूमशकलैरानूपास्रकृपित्तशिरःपादामिषवेसवारैश्च ॥ तथा श्लेष्मसंसृष्टे वायौ सुरसादिभिः पित्तसंसृष्टे च पद्मकादिभिः ॥ पृथक् सहितैर्वा क्षीरशुक्तधान्याम्ललवणमस्तुप्रगाढैः सुस्निग्धैः सुखोष्णैः साल्वणाभिधानैः बहुशः प्रदिग्धोष्णवीर्यापूतिमृदुरोमचर्मभिस्तदभावे घनवातहरपत्राविककौशेयैरुपनद्धमंगमहःस्थितं विदाहपरिहारार्थं निशि मुंचेत् दिवा वा निशि बद्धं दोषदेशकालवशेन वा ॥ द्रवस्वेदस्तु द्विविधः परिषेकोऽवगाहश्च ॥ तत्र शिग्रुवरणामृतकमूलकसर्षपसुरसार्जकवासावंशाश्मंतकाशोकशिरीषार्ककरंजैरंडमालतीपत्रभंगभूतिकदशमूलादिवातहरद्रव्यसलिलसुराक्षीरशुक्तादिक्वाथैः पूर्वोक्तैश्च यथादोषं पृथक्सहितैर्वा कुंभीर्वर्षणिकाः प्रणालीर्वा पूरयित्वा वातहरसिद्धस्नेहाभ्यक्तमनभ्यक्तं वोपविष्टं क्लिजे वा शयानमेकांगे सर्वांगे वा वस्त्रावच्छन्ने परिषेचयेत्॥ तैरेवाभिपूर्णे महति कटाहे कुंडे द्रोण्यां वाऽवगाहयेत्॥ऊष्मस्वेदः पुनरष्टधा भि

१ वैणवास्तरणे

घते ॥ पिंडः संस्तरो नाडी घनाश्मा कुंभी कूपः कुटी जेंताकश्च ॥ तत्र कपालपाषाणलोष्टलोहपिंडानग्निवर्णान्संदंशेन गृहीत्वांऽभस्यम्ले वा निमज्जयेत् ॥ तैरार्द्राविकवस्त्रेण वेष्टितैः श्लेष्ममेदोभूयिष्ठं सरुजमंगं ग्रंथिमद्वा स्वेदयेत् ॥ पांशुसिकतागवादिपुरीषधान्यबुसपुलाकपललैर्वाऽम्लोत्कथितैः पूर्ववद्वेष्टितैर्गवादिशकृताऽऽर्द्रेण पिंडीकृतेनोपनाहद्रव्योत्कारिकाकृशरापायससर्पिंडैर्वा वातरोगेष्विति पिंडस्वेदः ॥ स एव संकराख्यः ॥ यथार्हस्वेदद्रव्याणि पिहितमुखायां कुंभ्यां सम्यगुपस्वेद्य निवातशरणशयनकिलिंजे प्रस्तार्याविककौशेयवातहरपत्रान्यतमोत्तरप्रच्छदे कुथकाविकाजिनप्रावारादिष्ववच्छन्नं स्वेदयेदिति संस्तरस्वेदः ॥ पूर्ववदेववोपस्वेद्योखामुखेनाधोमुखां नाडीं मूलच्छिद्रप्रमाणपार्श्वच्छिद्रामभिसंधायावलिप्य च पार्श्वच्छिद्रस्थया नाड्या शरेषिकावंशदलकिलिंजकरंजपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घयाऽध्यर्द्धव्यामदीर्घया वा स्वायामचतुर्भागाष्टभागपरिणाहमूलाग्रस्रोतसा सर्वतो वातहरपत्रसंवृतछिद्रया द्विस्त्रिर्वा वि[illegible]ामितया सुखोपविष्टस्य स्वभ्यक्तप्रावृतेऽगे बाष्पमुपहरेत् ॥ बाष्पो ह्यनृजुगामी विहतचंडवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाडीस्वेदः ॥ पुरुषायाममात्रमधिकं वा घनं समं च शिलातलं भूप्रदेशं वा वातहरदारुदीप्तेनाग्निना सर्वतस्तापयित्वाऽग्निमपोह्योष्णोदकाम्लादिभिरभ्युक्ष्य यथोक्तप्रच्छदे संस्तरवत्स्वेदयेदिति घनाश्मस्वेदः ॥ पूर्ववत्स्वेदद्रव्याणि कुंभ्यामुत्काथ्योपश्लिष्योपविष्टस्तद्वदूष्माणं गृह्णीयात् ॥ भूमौ वा तां निखार्य तदूर्ध्वमासनं शयनं वा नातिघनप्रच्छदं परितः प्रलंबमानकुथाकंबलगोणिकं निधाय तत्रस्थस्योष्माणं गृण्हतः कुंभ्यामग्निवर्णानयोगुडानुपलांश्च शनैर्निमज्जयेदिति कुंभीस्वेदः ॥ शयनस्याधो विस्तारद्विगुणखाते कूपे वातहरदारुकरीषान्यत-

---

१ तैः कपालादिभिः २ पिठरः स्थाल्युखा कुंडमित्यमरः ॥

रपूर्णदग्धे विगतधूमे स्वास्तीर्णशयनस्थं स्वेदयेदिति कूपस्वेदः ॥ कुटीं नात्युच्चविस्तारां वृत्तामच्छिद्रामुपनाहकल्कघनप्रदिग्धकुड्यां सर्वतो विधूमप्रदीप्तखदिरांगारपूर्णहसंतिकासमूहपरिवृतां विधाय तन्मध्ये च शय्यां तत्रस्थं स्वेदयेदिति कुटीस्वेदः ॥ अथ जेंताकं चिकीर्षुर्भूमिं परीक्षेत ॥ पूर्वस्यामुत्तरस्यां वा दिशि गुणवति प्रशस्तभूमिभागे देशे कृष्णमृत्तिके सुवर्णवर्णमृत्तिकेवा परीवाहपुष्करिण्यादीनां जलाशयानामन्यतमस्य कूले दक्षिणे पश्चिमे वा सुतीर्थे समसुविभक्तभूमिभागे सप्ताष्टौ वाऽरत्नीः परिक्रम्योदकात्प्राङ्मुखमुदङ्मुखं वाऽभिमुखतीर्थं कूटागारं कारयेत् ॥ उत्सेधविस्तारतः परमरत्नयः षोडश समंतात्सुवृत्तं मृत्कर्मसंपन्नमनेकवातायनं ॥ अस्य च कूटागारस्यांतः समंततो भित्तिमरत्निविस्तारोच्छ्रायां पिंडिकां कारयेदाकपाटात् ॥ मध्ये चास्य कूटागारस्य [१]किष्कुमुक्तं द्विपुरुषप्रमाणं मृन्मयं कंदुसंस्थानं बहुसूक्ष्मछिद्रमंगारकोष्ठकस्तंभं सापिधानं कारयेत् ॥ तं च खादिराणामाश्वकर्णानां वा काष्ठानां पूरयित्वा दीपयेत् ॥ स यदा जानीयात्साधुदग्धानि काष्ठानि विगतधूमान्यवतप्तं सर्वमग्निना तदग्निगृहं स्वेदयोग्येन चोष्मणा युक्तमिति॥ तत्रैनं वातहराभ्यंगाभ्यक्तगात्रं वस्त्रावच्छन्नं प्रवेशयेत् ॥ अनुशिष्यात्सौम्य प्रविश कल्याणायारोग्याय च ॥ प्रविश्य चैनां पिंडिकामारुह्य पार्श्वापरपार्श्वाभ्यां यथासुखं शयीथाः ॥ न च त्वया स्वेदमूर्च्छापरीतेनापि पिंडिकैषा विमोक्तव्याऽऽप्राणोच्छ्वासात् ॥ भ्रश्यमानो ह्यतः पिंडिकावकाशाद्द्वारमनधिगच्छन् स्वेदमूर्च्छापरीततया सद्यःप्राणान् जह्याः॥तस्मात्पिंडिकामेनां न कथंचन मुंचेथाः॥त्वं यदा जानीयाः विगताभिष्यंदमात्मानं सम्यक्प्रसृतस्वेदपिच्छं सर्वस्रोतोविमुक्तं लघुभूतमपगतविबंधस्तंभसुप्तिवेदनागौरवमिति ॥ ततः पिंडि-

१ कृतमुष्टिकरो रत्निररत्निरकनिष्ठिकइतिकोशः २ कासेल्कपाटवर्जमिति चरकेपाठः ३ चरकेतु चतुष्किष्कुमात्रं पुरुषप्रमाणमिति पाठः ॥ किष्कुर्हस्तः

कानुसारेण द्वारं प्रपद्येथाः ॥ निष्क्रम्य च चक्षुषोः परिपालनार्थमति-
स्विन्नोऽपि न सहसा शीतोदकमनुप्रविशेथाः ॥ सम्यक्स्विन्नस्त्वपग-
तसंतापक्लमो मुहूर्तात्सुखोष्णेन वारिणा यथान्यायं परिषिक्तोऽश्नी-
यादिति जेंताकः स्वेदः ॥ तेषां विशेषतस्तापोष्मस्वेदौ कफे प्रयो-
जयेत् ॥ उपनाहमनिले किंचित्पित्तसंसृष्टे ऽन्यतरस्मिन् द्रवमिति ॥
अनाग्नेयं पुनर्मेदःकफावृत्ते वायौ ॥ निवातसदनगुरुप्रावरणमुहु-
र्मद्यपानक्षुद्व्यायामातपनियुद्धाध्वभारहरणामर्षभयैः ॥ उपनाहं च पि-
त्तान्वये पूर्वोक्तेनैव विधिनाऽग्निरहितमिति ॥ भवति चात्र ॥ निवा-
तेंऽतर्बहिः स्निग्धो जीर्णान्नः स्वेदमाचरेत् ॥ व्याधिव्याधितदेशर्तुवशा-
न्मध्यवरावरं ॥ कफार्तो रूक्षणंरूक्षो रूक्षस्निग्धं कफानिले॥आमाश-
यगते वायौ कफे पक्वाशयाश्रिते ॥ रूक्षपूर्वं तथा स्नेहपूर्वं स्थाना-
नुरोधतः॥ अल्पं वंक्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥ पद्मोत्पला-
दिभिः सक्तुपिंड्या वाऽऽच्छाद्य चक्षुषी ॥ शीतैर्मुक्तावलीपद्म कु-
मुदोत्पलभाजनैः ॥ मुहुः करैश्च तोयार्द्रैः स्विद्यतो हृदयं स्पृशेत् ॥
शीतशूलक्षये स्विन्नो जातेंऽगानां च मार्दवे ॥ स्याच्छनैर्मृदितः
स्नातस्ततः स्नेहविधिं भजेत् ॥ पित्तास्रकोपतृण्मूर्छास्वरांगसदन-
भ्रमाः ॥ संधिपीडा ज्वरः श्यावरक्तमंडलदर्शनं ॥ स्वेदातियोगाच्छर्दि-
श्च तत्र स्तंभनमौषधं ॥ विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ स्वे-
दनं गुरु तीक्ष्णोष्णं प्रायः स्तंभनमत्र तु ॥ तत्र स्थिरसरस्निग्धरूक्ष-
सूक्ष्मं च भेषजं ॥ स्वेदनं स्तंभनं श्लक्ष्णरूक्षसूक्ष्मसरद्रवं ॥ प्रायस्ति-
क्तं कषायं च मधुरं च समासतः॥स्तंभितः स्याद्बले लब्धे यथोक्तामय-
संक्षयात् ॥ स्तंभत्वक्स्नायुसंकोचकंपहृद्वाग्घनुग्रहैः ॥ पादौष्ठत्वक्करैः
श्यावैरतिस्तंभितमादिशेत् ॥ न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्छितान् ॥
स्तंभनीयक्षतक्षीणक्षाममद्यविकारिणः ॥ तिमिरोदरवीसर्पकुष्ठरोगा-
र्तपांडुरोगः ॥ पीतदुग्धदधिस्नेहमधून्कृतविरेचनान् ॥ भ्रष्टदग्धगुद-

ग्लानिक्रोधशोकभयार्दितान् ॥ क्षुत्तृष्णाकामलापांडुमेहिनः पित्तपीडितान् ॥ गर्भिणीं पुष्पितां सूतां मृदुचात्ययिके गदे ॥ श्वासकासप्रतिश्यायहिध्माऽऽध्मानविबंधिषु ॥ स्वरभेदानिलव्याधिपक्षाघातापतानके ॥ अंगमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ॥ महत्वे मुष्कयोः खल्यामायामे वातकंटके ॥ मूत्रकृच्छ्रार्बुदग्रंथिशुक्राघाताढ्यमारुते ॥ वेपथुश्वयथुस्वापस्तंभजृंभांगगौरवे ॥ कर्णमन्याशिरःकोष्ठजंघापादोरुरुक्षु च॥स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ स्विन्नोऽन्नं पथ्यमश्नीयाद्दोषरोगानुरोधतः ॥ तदहः स्निग्धसर्वांगो व्यायामं सुतरां त्यजेत् ॥ अग्नेर्दीप्तिं मार्दवं त्वक्प्रासादं भक्तश्रद्धां स्रोतसां निर्मलत्वं ॥ कुर्यात्स्वेदो जाड्यतंद्रापहारं स्तब्धान् संधींश्चेष्टयत्याशु चास्य॥स्नेहक्लिन्नाः कोष्ठगा धातुगा वा स्रोतोलीना ये च शाखास्थिसंस्थाः ॥ दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं नीताः सम्यक् शुद्धिभिर्निर्ह्रियंते ॥ इति स्वेदविधिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥

अथातो वमनविरेचनविधिमध्यायं व्याख्यास्यामः ॥ दोषहरणमूर्ध्वभागं वमनाख्यमधोभागं विरेचनाख्यमुभयं वा मलविरेचनाद्विरेचनमुच्यते ॥ तत्रोष्णतीक्ष्णसूक्ष्मव्यवायिविकाशीन्यौषधानि स्ववीर्येण हृदयमुपेत्य सौक्ष्म्याद्व्यवायित्वाच्च धमनीरनुसृत्य स्नेहेन मृदूकृत्यांतःशरीरे स्वोष्मणाऽऽर्द्रदारुवद्विष्यन्ने स्थूलाणुस्रोतोभ्यः सकलमपि दोषसंघातमौष्ण्यात्पुनर्विष्यंदयंति ॥ तैक्ष्ण्याद्विकाषित्वाच्च विच्छिंदंति ॥ स विष्यन्नविच्छिन्नो दोषसंघातः परिप्लवः स्नेहाक्तभाजनस्थइवोदकांजलिरसज्जन्नणुस्रवणभावादामाशयमागम्योदानप्रणुन्नोऽग्निवाय्वात्मकत्वादूर्ध्वभागप्रभावाच्चौषधस्योर्ध्वं प्रवर्तते*॥ सलिलपृथिव्यात्मकत्वादधोभागप्रभावाच्चौषधस्याधः ॥ उभयत्उभयगुणात्मकत्वादुभयभागप्रभावाच्च ॥ तत्रोत्क्लिष्टे श्लेष्मणि संसृष्टे वा तत्स्थानगते वा पित्ते ऽनिले वा श्लेष्मोत्तरे वमनमा

*पाठः

पित्ते तु विरेकं श्लेष्मसंसृष्टे वा तत्स्थानगते वा श्लेष्मणीति ॥ तत्र व-
मनसाध्या विषपीतदष्टदिग्धविद्धविरुद्धाजीर्णान्नवज्वरराजयक्ष्मा-
तिसाराधोरक्तपित्तविसूचिकाऽलसकाविपाकारोचकापचीग्रंथ्यर्बुद-
श्लीपदमेदोगरोन्मादापस्मारश्वासकासहृल्लासविसर्पप्रमेहकुष्ठपांडुवर्त्म
मुखघ्राणकपालरोगकर्णकोथशोफस्तन्यदोषादयो दोषभेदीयोक्ताश्च
श्लेष्मव्याधयो विशेषेणैते हि परं वमनेन नाशमुपयांति॥सलिलापम-
मेनानिष्पन्नशाल्यादिवत् ॥ अवम्यास्तु गर्भिणीसुकुमारान्यकार्य-
व्यग्ररूक्षरूक्षाशनप्रायातिदीप्ताग्निभाराध्वकर्मनित्यक्लांतक्षतक्षीणा-
तिस्थूलकृशवृद्धबालदुर्बलश्रमभयशोकक्रोधमदमूर्छाक्षुत्पिपासार्त्तोप-
वासव्यवायव्यायामाध्ययनचिंताप्रसक्तच्छर्दिरूर्ध्वरक्तपित्तवातास्था-
पितानुवासितसंवृतकोष्ठदुश्छर्दहृद्रोगोदावर्तमूत्राघातप्लीहगुल्मोदरा-
ष्ठीलार्शःस्वरोपघाततिमिरभ्रमानिलार्तार्दिताक्षेपकाक्षिशिरःशंखकर्ण-
पार्श्वशूलिनो ऽनास्थापितश्च क्रमिणकोष्ठइति॥ अन्यत्रामगरविषविरु-
द्धाभ्यवहारेभ्यः शीघ्रतरविकारित्वादेषां ॥ तत्र गर्भिण्या गर्भव्याप-
दामगर्भभ्रंशाच्च दारुणरोगप्राप्तिः स्यात् ॥ सुकुमारस्य हृदयविकर्ष-
णादूर्ध्वमधो वा रुधिरप्रवृत्तिः ॥ अन्यकार्यव्यग्रस्यौषधं न प्रवर्त्तते ॥
कृच्छ्रेण वा प्रवर्तमानमयोगाद्दोषान्कुर्यात् ॥ रूक्षस्य वायुरंगग्रहं ॥रू-
क्षाशनप्रायस्य वायुना क्षपितदोषत्वाद्बलक्षयः स्यात् ॥ तथाऽतिदी-
प्ताग्नेरग्निबलेन ॥ भाराध्वकर्मनित्यानां चायासेन ॥ क्षतस्य भूयःक्ष-
णनाद्रक्तातिप्रवृत्तिः ॥ क्षीणादीनामौषधबलाक्षमत्वाद्देहबलोपरोधो-
ऽतःक्षतभयं च ॥ प्रसक्तच्छर्घूर्ध्वरक्तपित्तयोरुदानउत्क्षिप्य प्राणान्
हरेद्रक्तं वाऽतिप्रवर्तयेत् ॥ऊर्ध्ववातास्थापितानुवासितानामूर्ध्ववातादि
प्रवृत्तिः ॥ संवृतकोष्ठस्य दुश्छर्दस्य चातिमात्रप्रवाहणाद्दोषः कोष्ठे
समुत्क्लिष्टदोर्वीविसर्पस्तंभजाड्यवैचित्त्यानि मरणं वा ॥ हृद्रोगिणो

हृदयोपरोधः ॥ उदावर्तादिभिरार्तानामर्दितादिभिश्च यथायथमा-
मयवृद्धिर्मरणं वा ॥ कृमिणकोष्ठस्यास्थापनेनाधः पूर्वमनिर्हृतौ कृमि-
भिरतिवहुत्वादशेषानिःसरणेन हृदयमतिकर्षद्भिश्छर्दिषोऽतिप्रवृत्तिः
स्यात् ॥ चिताप्रसक्ताश्चात्र धूमान्तैः प्रायः सर्वकर्मभिर्वक्ष्यमाणैः
परिहर्तव्याः ॥ अजीर्णी तु सर्वैरेव वमनवर्जैरामदोषभयात् ॥
नवज्वरस्य दोषस्तंभभयादिति ॥ अथ विरेचनसाध्या जीर्ण-
ज्वरोर्ध्वरक्तपित्तगुल्मविद्रधिप्लीहाऽर्शोभगंदरोदरकृमिणकोष्ठमूत्राघा-
तरेतोयोनिदोषवातशोणितहलीमकव्यंगतिमिरकाचाभिष्यंदाक्षिपा-
कक्षाराग्निदग्धदुष्टव्रणशिरःपक्वाशयशूलोदावर्तविबंधच्छर्दिविस्फोटा-
दयो वम्योक्ताश्च विसूचिकादयो दोषभेदीयोक्ताश्च पित्तव्या-
धयो विशेषेण ॥ एते हि परं विरेचनेन नाशमुपयान्त्यग्न्यपन-
यनेनाग्निगृहतापवत् ॥ अविरेच्याः पुनर्नवज्वरातीसार्यधोरक्त-
पित्तक्षतगुदलंघितरात्रिजागरितास्थापितालपाग्निराजयक्ष्ममदात्यया-
ध्मातसशल्याभिहतातिस्निग्धरूक्षक्रूरकोष्ठाः ॥ तत्र नवज्वरस्यावि-
पक्वान्दोषान्न निर्हरेद्वा[1] तानेव तु कोपयेत् ॥ अतिसार्यधोरक्तपित्त-
योरतिप्रवृत्त्या हन्यात् ॥ क्षतगुदस्य गुदे प्राणोपरोधकरीं रुजं जन-
येत् ॥ लंघितादयो भेषजवेगं न सहेरन् ॥ राजयक्ष्मार्तस्य क्षीण-
धातुतया मलबलत्वं तदभावाद्देहनाशः स्यात् ॥ मदात्ययार्तस्य
मद्यक्षीणे देहे वायुः प्राणोपरोधाय ॥ आध्मातस्य पुरीषाशये नि-
चितो वायुर्विसर्पन् सहसा तीव्रतरमाध्मानं मरणं वा जनयेत् ॥ स-
शल्याभिहतयोः क्षते वायुराश्रितो जीवितं हिंस्यात् ॥ अतिस्नि-
ग्धस्यातियोगो भवेत् ॥ क्रूरकोष्ठस्यौषधोद्धता दोषा ह्यप्रवर्तमाना
हृदयशूलपर्वभेदानाहच्छर्दिमूर्च्छाक्लमान् जनयित्वा प्राणान् हन्युः ॥
गर्भिण्यादीनां पूर्वोक्तदोषः स्यात् ॥ अथ साधारणे काले सम्य-

१ वातमेवत्वितिपाठः

कृतस्निग्धस्विन्नमनुपहतमानसं सुच्छर्दयितव्यमिति ग्राम्यानूपौदकमृगमांसरसक्षीरदधिमाषतिलशाकादिभिर्वमनीयैः समुत्क्लिष्टश्लेष्माणं सुखोषितं जीर्णाहारं पूर्वाह्णे स्नातानुलिप्तं स्रग्विणमहतवाससं देवताऽग्निद्विजगुरुवृद्धवैद्यानर्चितवन्तं कृतहोमबलिमंगलप्रायश्चित्तस्वस्तिवाचनं जानुसमसंस्तृतमहोपधानोपाश्रयासनोपविष्टं निरन्नमीषत्स्निग्धं वा यवागूमंडेन घृतमात्रां पीतवन्तं भीरुकृशबालवृद्धसुकुमारान्वा दोषानुरूपेणाकंठं पीतक्षीरतक्रयूषेक्षुमांसरसमद्यतृप्तोदकयवागूमन्यतमं नक्षत्रतिथिकरणमुहूर्तोदये प्रशस्ते यथाव्याधिदोषदूष्यादिविहितामौषधमात्रां मधुसैंधवयुक्तां सुखोष्णां ब्राह्मणप्रयुक्ताभिराशीर्भिरभिमंत्रितां पुनश्च ॥ ब्रह्मदक्षाश्विरुद्रेंद्रभूचंद्रार्कानिलानलाः ॥ ऋषयः सौषधिग्रामा भूतसंघाश्च पांतु वः ॥ रसायनमिवर्षीणाममराणामिवामृतं ॥ सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ नमो भगवते भैषज्यगुरवे वैदूर्यप्रभराजाय तथागतायार्हते सम्यक्संबुद्धाय ॥ तद्यथा ॥ ॐ भैषज्ये भैषज्ये महाभैषज्ये भैषज्यसमुद्गते स्वाहा ॥ इत्येवमभिमंत्र्योदङ्मुखः प्राङ्मुखमातुरं पाययेत् ॥ पीतवांश्चानूरून्यस्तभुजो वमनानुगतमानसो ऽग्नितप्तैः पाणिभिरुपतप्यमानो मुहूर्तमनुपालयेत् ॥ स यदा जानीयात् स्वेदप्रादुर्भावेन दोषं प्रविलयमापद्यमानं रोमहर्षेण वा स्थानेभ्यः प्रविचलितं कुक्ष्याध्मानेन च कुक्षिमनुसृतं क्रमात् हृदयोपमर्दहृल्लासास्यसंस्रवणैश्चोर्ध्वमभिमुखीभूतं समुपस्थितानेकप्रतिग्राहः[1] पार्श्वललाटोपग्रहेण नाभिप्रपीडनेन पृष्ठप्रतिलोममर्दनेन च प्रहृष्टसुप्रपन्नपाणीयपुरुषो विवृतौष्ठतालुकंठो नातिमहता व्यायामेन वेगानुदीरयन्नप्रवृत्तान् प्रवर्तयन् प्रवृत्तांश्चानुवर्तयन् सुपरिलिखितनखाभ्यामंगुलीभ्यामुत्पलकुमुदैरंडनालैर्वा कंठमनभिस्पृशन् वमेत्स्थ-

१ प्रतिग्राहः नतद्रहद्दृष्यमरः ( पिकदाणी किंवा तस्त )

अतो नात्यवनतः पार्श्वापवृत्तो वा ॥ तत्रात्युन्नतस्य पृष्ठहृदयपीडा भवति॥ अत्यवनतस्य शिरः कोष्ठपीडा पार्श्वापवृत्तस्य पार्श्वकोष्ठहृदयोर्ध्वजत्रुपीडेति॥ एवं कटुतीक्ष्णैः कफे छर्दयेत्॥स्वादुभिः पित्तयुते ॥ अम्लैः सस्नेहैरनिलसंसृष्टे ॥ यावत्कफच्छेदः केवलौषधप्रवृत्तिः पित्तदर्शनं वा ॥ हीनवेगस्तु पिप्पल्यामलकसर्षपकल्कलवणोष्णोदकैः पुनः पुनः प्रवर्तयेत् ॥ अभूतवमनासहिष्णुर्द्व्यहं त्र्यहं वा विश्रम्य॥ असात्म्यबीभत्सदुर्दर्शदुर्गंधानि वमनानि विदध्यात् ॥ विपरीतानि तु विरेचनानि ॥ सर्वेषु च वमनेषु सैंधवं मधु च विदध्यात्कफविलयनविच्छेदनार्थं ॥ वेगांश्चास्य प्रतिग्राहगतानवेक्षेत ॥ तत्राप्रवृत्तिः केवलस्य वा भेषजस्य प्रवृत्तिर्विबंधो वा वेगानामयोगलक्षणं॥ ततश्चारोचकगौरवाध्मानकंडूस्फोटकोठालस्यशूलप्रतिश्यायलोमहर्षप्रसेकशोफशीतज्वरादयः॥योगलक्षणं पुनः काले क्रमात्कफपित्तानिलप्रवृत्तिर्नातिमहती व्यथा स्वयं चावस्थानं॥ततश्च स्वस्थता मनःप्रसादः स्वरविशुद्धिररोचकादिवैपरीत्यं च॥अतियोगे तु फेनिलरक्तचंद्रिकोद्गमनं ततश्च क्षामतास्वरक्षयदाहकंठशोषभ्रममोहोन्मादमूर्च्छाशिरःशून्यताहृद्द्रवाध्मानगात्रशूलसुप्तितृष्णोर्ध्वानिलप्रकोपकर्णशूलार्दितवाक्संगहनुस्तंभनजिह्वाप्रवेशनिर्गमाक्षिव्यावृत्तिविसंज्ञतानिद्राबलाग्निहानयो भवंति ॥ जीवशोणितप्रवृत्त्या मरणं वा॥ तेषां सिद्धिषु साधनं वक्ष्यते॥ योगेनतु खल्विमं छर्दितवंतं सुविशोधितपाणिपादमुखं मुहूर्तमाश्वास्य धूमत्रयस्यान्यतमं सामर्थ्यतः पाययित्वा पुनरुपस्पृष्टोदकं संमानितसुरभितांबूलं निवातागारशय्यास्थितं स्नेहोक्तेनाहारविधिनाऽनुशिष्यात् ॥ ततोऽग्निबलमवेक्ष्य क्षुधं च सायान्हे सुखोदकपरिषिक्तः पुराणानां रक्तशालितंदुलानां सुसिद्धमम्लमस्नेहलवणकटुकमल्पस्नेहलवणकटुकं वा द्रवप्रायमुष्णोदकानुपायं सायं प्रातरुपभुंजानो विधिमिममवेक्षेत ॥ पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकं ॥

क्रमेण सेवेत नरोऽन्नकालान्प्रधानमध्यावरशुद्धिशुद्धः ॥ यथाऽणुर-
ग्निस्तृणगोमयाद्यैः संधुक्ष्यमाणो भवति क्रमेण ॥ महान् स्थिरः सर्व-
पचस्तथैव शुद्धस्य पेयादिभिरंतराग्निः ॥ जघन्यमध्यप्रवरे तु वेगाश्च-
त्वार इष्टा वमने षडष्टौ॥ दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा स्या-
त् द्विचतुर्गुणश्च ॥ पित्तावसानं वमनं विरेकादर्द्धं कफांतं च विरेकमा-
हुः ॥ द्वित्रान्सविट्कानपनीयवेगान्मेयं विरेके वमने तु पीतमिति॥अ-
थ वमितवंतं पुनरेव स्नेहस्वेदाभ्यामुपपाद्य श्वो विरेचयितव्य इति सु-
जरमश्लेष्मलं स्निग्धं फलाम्लमुष्णमुष्णोदकानुपानं जांगलरसौदनं
भोजयेत् ॥ ततः सुखोषितं पूर्वोक्तेन विधिनाऽतीतश्लेष्मकाले निरन्नं
विभज्य कोष्ठं यथार्हौषधमात्रां पाययेत्॥न त्वकृतवमनमन्यत्रातिक्रू-
रकोष्ठात् ॥ अकृतवमनस्य हि श्लेष्मणोपहृतमौषधमूर्ध्वं प्रवर्तते ॥
उरसि वाऽवरुद्धमवतिष्ठते॥ततो नालं विरेकाय ॥ सम्यग्विरिक्तस्यापि
चाधःस्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति प्रवाहिकां
वा॥न त्वेष दोषोऽतिक्रूरकोष्ठस्य वाय्वात्मकत्वात्॥ श्लेष्मकाले त्वकृ-
तवमनोक्तदोषः ॥ शूलाध्मानगौरवाणि च कृत्वा* छर्दिक्षीणे श्लेष्म
ण्यपराह्णे रात्रौ वा विरेचयेत् ॥तेनाप्याहृतमपि तुल्यं छर्दिं च पुनस्त-
ज्जनयति ॥ अविरिक्तस्य तु श्लेष्मकाले वमनं योज्यं तथोर्ध्वं सुखेन
निर्हरणात् ॥ कोष्ठस्तु त्रिविधो भवति ॥ मृदुः क्रूरो मध्यश्च ॥ तत्र
बहुपित्तो मृदुः ॥ स विरिच्यते क्षीरेक्षुरसाम्लतक्रमस्तुगुडशर्करास-
र्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिरपि ॥ बहुवातः क्रूरः स
दुर्विरेच्यस्त्रिफलातिल्वकत्रिवृन्नीलिनीफलादिभिरपि ॥ बहुश्लेष्मा
समदोषश्च मध्यः ॥ स साधारणः ॥ ये च स्निग्धास्त्वच्छपानेन प्राय-
शोऽभ्यस्तपंचरात्रैरिति ॥ तत्र कषायमधुरद्रव्यैः पित्ते विरेचनं ॥ मूत्र-
कटूष्णैः कफे ॥ स्निग्धोष्णलवणैर्वाते ॥ पीतमात्र एव चौषधे छर्दि-
विघाताय शीतांबुना मुखमस्य सहसा सिंचयेत् ॥ ततश्चोष्णोदकेन

स्रोऽतगुरुत्वं विशोध्यार्द्रसुरभिमृन्मातुलुंगजंबीरसुमनःसौगंधिकादिहृद्यगंधानुपजिघ्रेत् ॥ निवातसुखशय्यास्थितश्चाविबंधार्थमल्पाल्पमुष्णोदकमनुकंठ्यंस्तन्मना वेगानधारयन्न नीस्यमाणश्च शय्यासन्ने प्रतिग्राहेऽशीतस्पृक् विरिच्येत ॥ यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेण प्रवर्तन्ते तथा विरेचने वातमूत्रपुरीषपित्तकफाः पुनश्चांते वायुः दोषाणां हि देहे तथा संनिवेशान्मार्गवैपरीत्याच्च शोधनयोरिति ॥ अप्रवृत्तौ भेषजोत्तेजनार्थमुष्णोदकं पाययेत् ॥ पाणितापैश्च जठरं स्वेदयेत् ॥ प्रवृत्ते च दीप्ताग्नेः स्निग्धवपुषो बहुदोषस्याल्पे दोषे नैव वा प्रवृत्तेऽल्पदोषस्यापि जीर्णभेषजस्याह्नः शेषं बलं चापेक्ष्य भूयो मात्रां विदध्यात् ॥ न त्वजीर्णौषधस्यातियोगभयात् ॥ तदहर्वा भुक्तवतोऽन्येद्युः ॥ अदृढस्नेहं वा दशरात्रादूर्ध्वमुपस्कृतदेहमवहितो भूयः पाययेत् ॥ स्त्रीभयलोभैश्च वेगाभिघातशीलाः प्रायशस्त्रियो राजसमीपस्था वणिजश्च भवंति ॥ तस्मादेते वेगधारणप्रवृद्धवातत्वात्सदाऽऽतुरा दुर्विरेच्याश्च॥ तान्सुस्निग्धान् शोधयेत् ॥ अन्यानपि चाकालनिर्हारविहाराहारान् ॥ अतश्चैषां सदाऽऽतुरत्वादल्पोऽप्यामयो दुःसाध्यो भवति ॥ तेषां पुनः क्रियाविधिः स्नेहव्यापत्सिद्धावुपदेक्ष्यते ॥ तत्रासम्यग्विरेकात्कुक्षिहृदयाविशुद्धिराध्मानमरुचिः प्रसेकः कफपित्तोत्क्लेशछर्दिभ्रमाः कंडूः पिटका विदाहो गौरवमग्निसादस्तंद्रा स्तैमित्यं प्रतिश्यायो वातविण्मूत्रसंगश्च ॥ सम्यग्विरेकाद्व्याध्युपशमो यथोक्तविपर्ययश्च ॥ अतिविरेकात्तु केवलं दोषरहितमुदकं रक्तं वा मेदोमांसधावनोपमं कृष्णं वा प्रवर्त्तते ॥ परिकर्तिका हृदयोद्वेष्टनं गुदनिःसरणं नयनप्रवेशः पिपिल्लिकासंचारइवांगे वमनातियोगतुल्यता च॥सम्यग्विरिक्तं चैनं वमनोक्तेन धूमवर्जेन विधिनोपपादयेत् ॥ अथ वमितवानिव क्रमेणानुगुणानुपभुंजानः प्रकृतिभोजनमागच्छेदिति ॥ भवति चात्र ॥ जीर्णान्ने वमनं पोऽर्थ

कफे जीर्णे विरेचनं ॥ मंदवन्हिमसंशुद्धमक्षामं दोषदुर्बलं ॥ अदृष्ट
जीर्णलिंगं च लंघयेत्पीतभेषजं ॥ स्नेहस्वेदौषधोत्क्लेशसंगैरिति न बा-
ध्यते ॥ संशोधनास्रविस्रावस्नेहयोजनलंघनैः ॥ यात्यग्निर्मंदतां तस्मा-
त्क्रमं पेयादिमाचरेत् ॥ स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकं ॥
पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ॥ अपक्वं वमनं दोषान् प-
च्यमानं विरेचनं ॥ निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥ ऊर्ध्वा-
धो रेचनं युक्तं वैपरीत्येन जायते ॥ यदा तदा छर्दयतः सिंचेदु-
ष्णेन वारिणा ॥ पादौ शीतेन चोर्ध्वांगं विपरीतं विरेचनं ॥ दुर्बलो
बहुदोषश्च दोषपाकेन यः स्वयं ॥ विरिच्यते भेदनीयैर्भोज्यैस्तमुपपा-
दयेत् ॥ दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ अपरिज्ञातको-
ष्ठश्च पिबेन्मृद्वल्पमौषधं ॥ वरं तदसकृत्पीतमन्यथा संशयावहं ॥ हरेद्ब-
हूंश्चलान्दोषानल्पानल्पान्पुनःपुनः ॥ दुर्बलस्य मृदुद्रव्यैरल्पान्संशमयेत्तु
तान् ॥ क्लेशयंति चिरं ते हि हन्युश्चैनमनिर्हृताः ॥ मंदाग्निं क्रूरकोष्ठं च
सक्षारलवणैर्घृतैः ॥ संधुक्षिताग्निं विजितकफवातं विशोधयेत् ॥ रूक्ष-
बह्वनिलक्रूरकोष्ठव्यायामशीलिनां ॥ दीप्ताग्नीनां च भेषज्यमविरेच्यै-
व जीर्यते ॥ तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनं ॥ शकृन्नि-
र्हृत्य वा किंचित्तीक्ष्णाभिः फलवर्तिभिः ॥ प्रवृत्तं हि मलं स्निग्धो
विरेको निर्हरेत्सुखं ॥ विषाभिघातपिटिकाकुष्ठशोफविसर्पिणः ॥ काम-
लापांडुमेहार्तान्नातिस्निग्धान्विशोधयेत् ॥ सर्वान्स्नेहविरेकैश्च रूक्षै-
स्तु स्नेहभावितान् ॥ कर्मणां वमनादीनां पुनरप्यंतरेऽन्तरे ॥ स्नेह-
स्वेदौ प्रयुंजीत स्नेहमंते बलाय च ॥ ऊषादिभिर्यथोत्क्लेश्य ह्रियते
वाससो मलः ॥ तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः ॥ स्नेहस्वे-
दावनभ्यस्य कुर्यात्संशोधनं तु यः ॥ दारुशुष्कमिवानामे शरीरं
तस्य दीर्यते ॥ सुखं क्षिप्रं महावेगमसक्तं यत्प्रवर्तते ॥ नातिग्लानि-

१ ऊषःक्षारमृद्विपोक्तामतिमोहनीक्षारः

करं चापि हृदि पायौ च तत्करं ॥ अंतराशयगं क्लिष्टं कृत्स्नं दोषं निरस्यति ॥ विरेचनं निरूहं वा तत्तीक्ष्णमिति निर्दिशेत्॥ जलाग्निकीटैरस्पृष्टं देशकालगुणान्वितं ॥ नवं मात्राधिकं किंचित्तुल्यवीर्यैः सुभावितं ॥ स्नेहस्वेदोपपन्नस्य तीक्ष्णत्वं याति भेषजं ॥ अतो विपर्यये मंदं मंदतां च प्रपद्यते ॥ तीक्ष्णोमध्यो मृदुर्व्याधिः सर्वमध्याल्पलक्षणः ॥ बलापेक्षं हितं तेषु तीक्ष्णं मध्यं मृदु क्रमात् ॥ अभ्यस्तं मलान् द्रव्यं सात्मीभूतं हि जीर्यति ॥ वमनं वा विरेकं वा तस्मात्सात्म्यं न योजयेत् ॥ विभ्रंशो विषवत्सम्यग्यो हि यस्यामृतोपमः॥ काले ऽवश्यं प्रयोज्यं च तस्माद्यत्नेन तत्पिबेत् ॥बुद्धिप्रसादं बलमिंद्रियाणां धातुस्थिरत्वं ज्वलनस्य दीप्तिं ॥ चिराच्च पाकं वयसः करोति संशोधनं सम्यगुपास्यमानं ॥ ॥ इति वमनविरेचनविधिर्नाम सप्तविंशोऽध्यायः ॥ २७॥

अथातो बस्तिविधिमध्यायं व्याख्यास्यामः ॥ बस्तिरनिलप्रधानेषु प्रयुज्यते ॥ बस्तिना दीयते बस्तिं वा पूर्वमन्वेत्यतो बस्तिः ॥ स च सर्वोपक्रमाणां प्रधानतमः शीघ्रसुखबृंहणानुकारित्वाद्विकृतानिलोच्छेदित्वाच्च ॥ अनिलो हि दोषाणां नेता स्वतंत्रः सर्वशरीरचेष्टैककारणं पंचात्मतया सप्रत्यंगांगव्यापी विधाता विविधबाह्याध्यात्मिकभावसर्गस्थितिप्रलयानां हेतुर्मार्गत्रयजानामपि रोगाणामिति॥ सुखत्वादेव च बस्तिर्बालवृद्धकृशस्थूलक्षीणधातिवेंद्रियेषु स्त्रीष्वनिलोपसर्गादप्रजासु कृच्छ्रप्रजासु चोपदिश्यते ॥तथाऽग्निबलवर्णमेधास्वरायुःसुखप्रदो वयःस्थापनः पंगुकुब्जभग्नस्तंभसंकुचितानिलाध्मानशूलारोचकोदावर्तपरिकर्तिकादिषु हित इति ॥ स तु बस्तिस्त्रिविधः ॥ आस्थापनमनुवासन उत्तरबस्तिश्च ॥ तत्रास्थापनं दोषदूष्यानुसारेण नानाद्रव्यसंयोगादिनिर्वृत्तं ॥ तस्य भेदा उत्क्लेदनं शोधनं शमनं लेखनं बृंहणं वाजीकरणं पिच्छाबस्तिर्माधुतैलिकमित्यादयः ॥ माधु-

तैलिकस्य पर्याया यापनो युक्तरथो दोषहरः सिद्धबस्तिरिति ॥ ते-षां नामभिरेव स्वरूपमाख्यातं ॥ तद्वयःस्थापनाद्दोषस्थापनाद्वाऽऽ-स्थापनमित्युच्यते ॥ शरीररोहणाद्दोषनिर्हरणादचिंत्यवीर्यप्रभावतया चास्मिन्नूहासंभवान्निरूह इति ॥ अनुवासनं यथार्हौषधसिद्धः स्नेह-नार्थे स्नेहः ॥ स्नेहविधौ स चतुर्धाऽभिहितः ॥तस्य भेदो मात्राबस्तिः स पेयस्नेहन्हृस्वमात्रातुल्यः सेव्यः सदा च माधुतैलिकवद्बालवृद्धा-ध्वभारयानव्यायामचिंतास्त्रीनित्यस्त्रीनृपेश्वरसुकुमारदुर्बलानिलभग्ना-ल्पाग्निभिर्निष्परिहारतया सुखो बल्यो वर्ण्यः सृष्टमलो दोषघ्नश्च ॥ तथापि तौ नाजीर्णे योज्यौ॥न च दिवास्वप्नस्तयोः सेव्यः॥यतश्चासा-वनुवसन्नपि न दूष्यत्यनुवासरमपि वा दीयत इत्यनुवासनं॥उत्तरबस्ति-रपि स्नेहनेऽनुवासनवच्छोधने निरूहवदपि च केचिदाहुः ॥ स निरू-हादुत्तरमुत्तरेण वा मार्गेण दीयत इत्युत्तरबस्तिः॥तत्रास्थाप्या गुल्म-प्लीहानाहशूलशुद्धातीसारजीर्णज्वरप्रतिश्यायाढ्यरोगहृदयकुक्षिपा-र्श्वग्रहपर्वाभितापपार्श्वयोनिशूलांगसुप्तिशोषकंपगौरवातिलाघवांत्रकू-जवातविण्मूत्रशुक्रसंगाश्मरीशर्करावृद्धिशुक्रार्तवस्तन्यनाशरजःक्षयो-न्मादवोषक्रमिणकोष्ठविषमाग्निसशब्दाल्पाल्पोग्रगंधोत्थानादयो दोष-भेदीयोक्ताश्च वातव्याधयः ॥ विशेषेणैते हि परं बस्तिना नाशमुप-यांति मूलच्छेदेन वृक्षवत् ॥ अनास्थाप्यास्त्वतिस्निग्धोत्क्लिष्टदोषक्ष-तोरस्कातिकृशा निरन्नाः कृतवमनविरेकनस्यप्रसक्तच्छर्दिनिष्ठीविका-कासश्वासहिध्माऽर्शोबद्धछिद्रदकोदराध्मातालसकविसूचिकाऽऽमाती सारारोचकाल्पाग्निगुदशोफकुष्ठमदमेहार्ता गर्भिणी चाप्रवृत्ताष्टममा-सा ॥ तत्रातिस्निग्धोत्क्लिष्टदोषयोर्दोषानुत्क्लेश्योदरं मूर्छां श्वयथुं वा निरूहो जनयेत् ॥ क्षतोरस्कस्यातिकृशस्य च क्षोभव्यापन्नशरीर-माशु पीडयेत् ॥ अनिरन्नस्य वक्ष्यते ॥ कृतवमनविरेकयोस्तु रिक्तं

देहं क्षतं क्षार इव दहेत् ॥ स्नेहबस्तिस्तु सद्योऽग्निमवसाद्य श्लेष्मामयाय स्यात्॥ कृतनस्यस्यास्य विभ्रंशं भृशविवृतोर्ध्वस्रोतस्तया कुर्यात् ॥ अनुवासनं तु दोषोत्क्लेशनं ॥ प्रसक्तच्छर्द्यादीनां वायुर्निरूहमूर्ध्वं नयेत् ॥ अर्शसस्यावृतमार्गत्वादनागच्छन्बस्तिः प्राणान्हिंस्यात् ॥ स्नेहः पुनरर्शांस्यभिष्यंद्याध्मानाय स्यात्॥बद्धोदराद्याध्मातानां भृशतरमाध्मानान्मृत्युः ॥ अलसकार्तादीनां चामदोषात् ॥ अरोचकार्तादीनां यथास्वमामयवृद्धिः ॥ गर्भिण्याः पूर्वोक्तो दोषः ॥ य एवास्थाप्यास्तएवानुवास्याः ॥ रूक्षातिदीप्ताग्नयः केवलानिलार्ताश्च विशेषेण ॥ ते हि परमनुवासनेनाप्यायंते मूलसेकेन वृक्षवत् ॥ य एवानास्थाप्यास्तएवाननुवास्याः ॥ तथा निरन्नपांडुरोगकामलाप्रमेहप्रतिश्यायप्लीहकफोदराढ्यवातवर्चोभेदार्तपीतविषगरपित्तकफाभिष्यंदगुरुकोष्ठातिस्थूलश्लीपदगलगंडापचीकृमिणकोष्ठाः ॥ तत्रातिस्निग्धादीनां यथास्वमुक्ताः पृथग्दोषाः ॥ अपिच ॥ अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनं ॥ सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते ॥ तेन वायोर्जयो न स्याद्वातधामन्यतिष्ठता ॥ कायाग्नेराशु नाशश्च विशेषादनिवर्तिना ॥ स्नेहः सद्योऽशिताहाररुद्धे त्वामाशयेऽनिलं ॥ पक्वस्थं हंति पक्वस्थश्च्यवते चान्नपाकतः ॥ निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि ॥ तावन्नमूर्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ॥ उर्ध्वं वा शकृता सार्द्धं संस्थितौ कोष्ट एव वा ॥ समलाहारविष्टब्धौ हरेतामाशु जीवितं ॥ भुक्त एवानुवास्योऽस्मान्न निरूह्योऽत्र भुक्तवान्॥ पांडुरोगार्तादीनां दोषानुत्क्लेश्य स्नेहबस्तिरुदरं जनयेत् ॥ प्रतिश्यायादिवतां भूयएव दोषं वर्द्धयेत् ॥ तयोस्तु नेत्रं सुवर्णादिधातुमणिशंखशृंगदंतास्थिवेणुनलखदिरकदरतिनिशतिंदुकादिदारुसारमग्रमृज्वककर्शं गोपुच्छाकृति गुलिकामुखमूनवर्षवार्षिकसप्तद्वादशषोडशवर्षाणां विंशतिप्रभृतिषु च क्रमात्पंचषट्सप्ताष्टनवद्वाद-

शांगुलप्रमाणंमूलेऽग्रे चातुरांगुष्ठकनिष्ठिकापरिणाहमर्द्धांगुलात्प्रभृत्य-र्द्धार्द्धांगुलप्रवृद्धं त्र्यंगुलपर्यंतप्रवेशमूलच्छिद्रं वनमुद्गमाषकलायक्लि-न्नकलायकंकंधुवाह्यग्रच्छिद्रं मूलच्छिद्रप्रमाणांगुलैरग्रे यथास्वं सन्नि-विष्टकर्णिकं कर्णिकांतःप्रतिबद्धसूत्रांतर्गृहीताग्रपिधानघनचैलवर्ति मू-ले द्व्यंगुलांतराले कर्णिकाद्वयं कारयेत् ॥ वर्षांतरेषु च वयोबलशरीरा-ण्यवेक्ष्य नेत्रप्रमाणमुत्कर्षयेत् ॥ ततोऽजाविवराहहरिणगोमहिषा-न्यतमजं स्नेह[1]मुद्गविमृदितं विगतच्छिद्रशिराग्रंथिस्कंधं नातिवर्तुलं मृ-दु दृढं कषायरक्तं सुखसंस्थाप्यौषधप्रमाणं न्युब्जं विवृताननं विवेश्य बस्तिं कर्णिकयोर्दृढेन सूत्रेण घनं समं च बध्वा परिवर्त्य पुनश्चान्यद्व-स्तिमुखबंधनार्थं सूत्रमुपधायानुगुप्तं निधापयेत् ॥बस्त्यभावे *प्लवनीज-गलांकपादमधूच्छिष्टोपदिग्धघनसूक्ष्मतांतवान्यतमं निवेशयेत् ॥ आ-स्थापनमात्रा तु प्रथमे वर्षे प्रकुंचः ॥ ततः परं प्रतिवर्षं प्रकुंचमभिव-र्द्धयेदाषट् प्रसृताः ततश्चोर्ध्वं प्रसृताभिवृद्धिः ॥ प्राप्तानतीताष्टादशम-प्ततेस्तु द्वादश प्रसृताः ॥ परं चातो दशैव ॥ अन्ये पुनर्द्वादशप्रसृत-स्याप्यष्टाविच्छंति ॥ यथास्वमास्थापनमात्रा पादहीना माधुतैलिके-प्रयोज्या ॥ अनुवासने त्वेवमेवास्थापनस्य पाद इति ॥ अथास्थाप-नीयमातुरं स्नेहस्वेदोपपन्नं कृतवमनविरेकमासेवितपेयादिसंसर्गक्र-ममुपजातबलमनुवासनार्हं पूर्वमेवानुवासयेत् शीतवसंतयोर्दिवा अ-न्यथा रात्राववेक्ष्य वा दोषादीन् ॥ अन्यथा हि स्नेहोक्तामयप्रादुर्भा-वः ॥ धान्वंतरीयाः पुनराहुः ॥ न रात्रौ प्रणयेद्बस्तिं स्नेहोत्क्ले-शो[2] हि रात्रिजः ॥ स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरं ॥ अन्हि स्थानस्थिते दोषे वन्हौ चान्नरसान्विते ॥ स्फुटस्रोतोमुखं देहं स्नेहो यत्परिसर्पति ॥ अल्पपित्तकफं रूक्षं भृशं वातरुजार्दितं ॥ भुक्तं जी-र्णाशनं कामं रात्रावप्यनुवासयेत् ॥ केवलानिलनिपीडितं त्वशुद्धम-

१ सुश्रुतेनतुमुहुःस्नेहविमर्दितमितिपठितं २ दोषोत्क्लेशइतिपाठः

प्यनिरूपितबलं चाप्यनुवासयेदात्ययित्वाद्व्याधेः ॥ तस्य विधिर्वमना-
द्धिकतरं कृतमंगलमनुसुखमभ्यक्तमुष्णांबुस्नातं युक्तस्नेहमुचितात्पा-
दहीनं द्रवपूर्वं लघूष्णं सानुपानमशनमशितवंतं कृतचंक्रमणमुत्सृष्टवि
ण्मूत्रमनार्द्रहस्तमशंकनीयपरिवारं निवाते वेश्मनि प्रतते शयने
नात्युच्छ्रिते स्वास्तृत ईषदुन्नतपाददेशे वामपार्श्वेन प्राक्शि-
रसं संवेशयेत् ॥ अतिस्निग्धाशिनो ह्युभयमार्गसंसर्गात्स्नेहो मदमू-
र्च्छाग्निसादहृल्लासानूजनयति ॥ रूक्षाशिनो विष्टंभं बलवर्णहानिं
वा ॥ अल्पमात्रद्रवाशिनो विसृष्टविण्मूत्रस्य चान्नावृतेन तदावर-
णाद्व्यापदं ॥ चिरमशितवतो विदाहाभिमुखभक्तस्य ज्वरं कुर्यात् ॥
यतश्च वामपार्श्वाश्रयाणि वन्हिग्रहणीगुदवलीमुखानि तानि तत्पार्श्व-
शायिनो निम्नानि भवंति ॥ अतस्तथौषधमस्खलितमाप्नोति प्रवे-
शनिर्गमाविति संविष्टं चैनमृजुस्थितदेहं स्वबाहूपधानं प्रसारितवा-
मसक्थिमाकुंचितेतरं तस्यैव चोपरि प्रसारितदक्षिणबाहुं कारयेत् ॥
पूर्वमेव तु वैद्यो वर्त्या सुपिहिताग्रच्छिद्रं नेत्रं भाजनस्योपरि कृत्वा
दक्षिणपादांगुष्ठांगुलिभ्यां कर्णिकाया उपरिष्टान्निष्पीड्याविबंधाय
शताव्हासैंधवचूर्णावचूर्णितं प्रागेव नेत्रस्पर्शात्पूर्ववदभिमंत्रितं यथा-
र्हं यथार्हौषधविपक्वं सुखोष्णं बस्तौ स्नेहमासिच्यावलीकोच्छ्रासं
निःसारितवातबुद्बुदमौषधांते सूत्रेण द्विस्त्रिर्वा बस्तिमुखमावेष्ट्य द-
क्षिणपाणौ नेत्रमुपनिधाय तिष्ठेत् ॥ ततो घृताभ्यक्ते पायौ
वामहस्तप्रदेशिन्याऽभ्यक्तप्रवेशप्रदेशमपनीतवर्त्युत्तानवामहस्तांगुष्ठो-
दरपिहिताग्रं मध्यमाप्रदेशिन्युपगृहीतकर्णिकमृज्वनुपृष्ठवंशमनुसुख-
मेकमना लाघवेन निष्कंपमद्रुतमविलंबितं नेत्रमाकर्णिकं प्रवेशयेत्
॥ आतुरोऽपि तदनुलोममवलंबेत ॥ ततश्च वैद्यो बस्तिमुखं दक्षि-
णहस्तांगुष्ठप्रदेशिनीभ्याममुंचन्नेत्रमचालयन् हस्तद्वयेनोत्तानेनैक-
ग्रहणेनैवानिलाधिष्ठानभूतं किंचिदवशेषयन् न शनैरवेगमनुपीडये-

त् ॥ अन्यथा हि व्यापदो भवंति ॥ ताः ससाधना सिद्धिषु वक्ष्यंते ॥ अन्ये तु त्रिंशन्मात्राः पीडनकालमाहुः ॥ न च बस्तौ दीयमाने क्षवकासहासजृंभास्पंदनान्याचरेत् ॥ विण्मूत्रानिलवेगे तु नेत्रमाकृष्य वेगांते शेषं प्रणयेत् ॥ अंते चोत्तानस्य स्फिजौ पाणितलेन त्रिचतुरो वारांस्ताडयेत् ॥ तथा तत्पार्ष्णिभ्यां पादतश्च शय्यां त्रिरुत्क्षिपेत् ॥ सोपधानस्य च प्रसारितसर्वांगस्य पार्ष्णिके मुष्टिनाऽऽहन्यात् ॥ तथा पार्ष्ण्यंगुलिपादतलपिंडिकाः सरुजं चांगं स्नेहेन प्रतिलोमं वाक्शतमात्रं शनैर्विमृण्हीयात् ॥ एवमाशु स्नेहो न निवर्तते समनुगच्छति चासमंतात्सिराः॥ततःपरं तु स्नेहोक्तमाचारमनुवर्तेत ॥ दीप्ताग्निं च सायं लघ्वन्नं भोजयेत् ॥ नैव चानागतस्नेहमपि द्वितीये ऽहनि ॥ न च तमनुवासयेत् ॥ आगमनकालस्तु परो यामत्रयं ततःपरमनागच्छंतमहोरात्रमुपेक्षेत ॥ तदाप्यनिवर्तमाने फलवर्तिभिर्लवणारनालप्रायैर्वा तीक्ष्णबस्तिभिः शोधयेत् ॥ स्नेहव्यापत्सिद्धिं चेक्षेत ॥ अतिरौक्ष्यादनागच्छन्नचेज्जाड्याद्युपद्रवाय स्यात् ॥ ततस्तथाप्युपेक्षेत ॥ शीघ्रनिवृत्ते तु विना मलेन केवले स्नेहे स्नेहमन्यं पुनर्योजयेत् ॥ न ह्यसावतिष्ठन् कार्यं करोति ॥ सुखोषितं चैनं तथा कृतवमनविरेचनास्थापनान्यतमं प्रातः शुंठीधान्यक्वाथमितरद्वोष्णमुदकं स्नेहशेषजरणाय वातकफोपशांतये च पाययेत् ॥ ततोऽन्नकाले यथोक्तमन्नमश्नीयात् ॥ न चानुवासितं पेयां पाययेत् ॥ सा हि सस्नेहकोष्ठमेनमभिष्यंदयति ॥ पुनश्च तृतीयेऽहन्यनुवासयेत्पंचमे वा ॥ यथा वा स्नेहपक्तिः स्यात् ॥ अतश्च दीप्ताग्निरूक्षवातोल्बणव्यायामनित्यान्प्रत्यहं ॥ एवममुना क्रमेण दोषाद्यनुसारतस्त्रिचतुरैः स्नेहबस्तिभिरुपस्निग्धं शोधनेनास्थापनेन स्रोतोविशुद्ध्यर्थमास्थापयेत् ॥ वाताधिक्यादस्निग्धं तु स्नेहनेन ॥ अथैनं तृतीये पंचमे वाऽहनि किंचिदाहते मध्यान्हे कृतमंगलस्वस्त्ययनमा-

भ्यक्तदेहं स्वेदितमुत्सृष्टमलमनाशितं नातिक्षुधितमवेत्यातुरमार्यावलोकितं नाथमार्यं तारामात्मभुवं धातारमश्विनाविंद्रमात्रेयं सप्त मुनीन्काशिविदेहपतिप्रभृतीनग्निवेश्यादींश्च तंत्रकारान्दीपगंधपुष्पफलबलिधूपैर्यज्ञ इव प्रकल्पितभागान् कृत्वौषधीर्वृद्धवैद्यद्विजातींश्च संपूज्य तद्विद्यसहितो दोषौषधादिबलेन यथार्हमुपकल्पयेद्बस्तिं ॥ तत्र विंशतिमात्राणि पलान्यौषधानां मदनफलाष्टकं च क्काथकल्पेन विपचेत्॥ क्काथाच्चतुर्थांशं स्नेहमनिले षष्ठांशं पित्ते स्वस्थवृत्ते चाष्टमांशं तु कफे ॥ सर्वत्र चाष्टममंशं कल्कस्य स्याद्यावता वा नात्यच्छसांद्रता भवेत् ॥ गुडस्य पलं युक्त्या मधुसैंधवे यथायोग्यं च शेषाणि कल्पयेत् ॥ सर्वाणि चैकध्यमुष्णोदककुंभीबाष्पाभितप्तानि खजमथितानि बस्तौ प्रक्षिप्यानुवासनवन्निरूहं प्रणयेन्नात्युष्णशीतं नातिमृदुतीक्ष्णं नातिस्निग्धरूक्षं नातितनुसांद्रं न हीनातिमात्रं नाल्वणातिलवणं नात्यम्लं च ॥ तत्र बाष्पमात्रानुतापादौषधस्य विदाहो न भवति ॥ खजप्रमथनात्तु क्काथस्नेहादयः सम्यक् संप्रयुक्ताः सम्यगेव योगमारंभते ॥ अन्यथा पुनः क्काथादीनामुल्बणोऽन्यतमोऽन्यतमं यथास्वं दोषमीरयेत् ॥ अत्युष्णादीनां तु पृथग्व्यापदः साधनानि च सिद्धिषूत्तरकालमुपदेक्ष्यंते ॥ अपिच ॥ तीर्यक्प्रणीते हि न याति धारा गुदे व्रणः स्याच्चलिते च नेत्रे ॥ दत्तः शनैर्नाशयमेति बस्तिः कंठं प्रधावेदनिपीडितस्तु ॥ स्तंभं विधत्तेऽतिमृदुर्हिमश्च तप्ताम्लतीक्ष्णो भ्रमदाहमोहान् ॥ स्निग्धो ऽतिजाड्यं पवनं तु रूक्षस्तन्वल्पमात्रालवणस्त्वयोगं॥ करोति मात्राभ्यधिकोऽतियोगं क्षोभं तु सांद्रः सुचिरेण चैति ॥ दाहातिसारौ लवणोऽलिकुर्यात्तस्मात्सुयुक्तं सममेव दद्यात् ॥ अन्ये पुनराहुः ॥ मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक् ॥ कर्षार्द्धं माणिमंथस्य स्वस्थे कल्कपलद्वयं ॥ सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ॥ माक्षिकं

लवणं तैलं कल्कं क्काथमिति क्रमात् ॥ आवपेत निरूहाणामेष संयोजने विधिः ॥ दत्तमात्रे तूत्तानः सोपधानो निरूहवीर्येण देहव्याप्तये तन्मनास्तिष्ठेत् ॥ उदीर्णवेगश्चोत्कटको विसृजेत् ॥ आगमनकालस्तु परो मुहूर्तः ॥ तदाप्यनागच्छन्नाशु मृत्यवे स्यात् ॥ अतस्तत्रानुलोमिकस्नेहक्षारमूत्राम्लस्निग्धतीक्ष्णोष्णमन्यं प्रयोजयेत् ॥ फलवर्तिस्वेदभयोत्रासादींश्च ॥ वस्तिव्यापत्सिद्धिं चेक्षेत ॥ स्वयं निवृत्ते तु पूर्ववद्द्वितीयं तृतीयं चतुर्थं च दद्याद्यावद्वा सुनिरूढः स्यात् ॥ तत्राद्यो ऽनिलं स्वमार्गादपकर्षति द्वितीयः पित्तं तृतीयः श्लेष्माणमिति ॥ तस्य हीनसम्यगतियोगास्तु विरिक्तवत् ॥ सम्यङ्निरूढं तु कोष्णसलिलावसिक्तं तनुना जांगलरसेन भोजयेत् ॥ स्नाताशितस्यास्य चला दोषशेषाः स्वस्थानमाश्रयंते ॥ ततः पुनर्वातार्तमातुरं बृंहणीयमन्यं वा तद्विधमशितानंतरं सायं वा पुनरल्पलघ्वशितं यथास्वमनिलादिषु दशमूलादिसाधितेन तैलेनानुवासयेत् ॥ तस्य हीनसम्यगतियोगाः स्नेहपीतवत् ॥ विशेषस्तु सम्यगनुवासिते किंचित्कालं स्थित्वा स्नेहः सपुरीषोऽनिलानुगतः प्रवर्तेत इति ॥ भवति चात्र ॥ एवं कफे स्नेहबस्तिमेकं त्रीन्वा प्रयोजयेत् ॥ पंच वा सप्त वा पित्ते नवैकादश वाऽनिले ॥ पुनस्ततोप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ॥ वातघ्नौषधनिः क्काथत्रिवृतासैंधवैः स्मृतः ॥ बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णरसान्वितः ॥ न्यग्रोधादिगणक्काथपद्मकादिसितायुतौ ॥ पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ॥ आरग्वधादिनिःक्काथवत्सकादियुतास्त्रयः ॥ रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ॥ त्रयश्च सन्निपातेऽपि दोषान् घ्नंति यतः क्रमात् ॥ नाचार्यचरकस्यातो बस्तिस्त्रिभ्यः परं मतः ॥ न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ॥ त्रिधैव कल्पयेद्बस्तिमि-

त्यन्येऽपि प्रचक्षते ॥ दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ॥ सम्य-क्निरूढलिंगं तु नासंभाव्य निवर्त्तयेत् ॥ प्राक् स्नेह एकः पंचांते द्वादशास्थापनानि च ॥ सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ कालः पंचदशैकोऽत्र प्राक्स्नेहोंऽते त्रयस्तथा ॥ षट् पंच बस्त्यंतरिता योगोऽष्टौ बस्तयोऽत्र तु ॥ त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यंतयो-रुभौ ॥स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत्॥उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयं ॥ तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ॥ अष्टादशाष्टादशकान् बस्तीनां यो निषेवते ॥ विधिना ना यथोक्तेन स भवेदजरोऽरु-जः ॥ सहस्रायुः श्रुतधरो वीतपाप्माऽमरप्रभः ॥ वाजिस्यदो नागब-लः स्थिरबुद्धींद्रियानलः ॥ बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरं ॥ आतुरांगुलमानेन तन्नेत्रं द्वादशांगुलं ॥ वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकं ॥ सिद्धार्थ-कप्रवेशाग्रं श्लक्ष्णं हेमादिसंभवं ॥ कुंदाश्वमारसुमनःपुष्पवृंतोपमं दृढं ॥ तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा ॥ अथ स्नाताशि-तस्यास्य स्नेहबस्तिविधानतः ॥ ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ॥ हृष्टे मेंढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ मालतीपुष्पवृं-ताग्रपरिणाहां घनामृजुं ॥ श्लक्ष्णां शलकां प्रणयेत्तया शुद्धेऽनुसेव-नि ॥ आमेहनांतं नेत्रं च निष्कंपं गुदवत्ततः ॥ पीडिते ऽनुगते स्नेहे स्नेहबस्तिक्रमो हितः ॥ बस्तीननेन विधिना दद्यात्त्रींश्चतुरो-ऽपि वा ॥ अनुवासनवच्छेषं सर्वमेवास्य चिंतयेत् ॥ स्त्रीणामार्त-वकाले तु योनिर्गृण्हात्यपावृता ॥ विदधीत तदा तस्मादनृतावपि चात्यये ॥ योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ नेत्रं दशांगुलं मुद्गप्रवेशं चतुरंगुलं ॥ अपत्यमार्गे योज्यं स्याद्व्यंगुलं मूत्रवर्त्मनि ॥

१ अश्ववेगः

मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलं ॥ प्रकुंचो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ उत्तानायाः शयानायाः सम्यक्संकोच्य सक्थिनी ॥ ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ बस्तीस्त्रिरा- श्रमेवं च स्नेहमात्रां विवर्द्धयेत् ॥ त्र्यहमेव च विश्रम्य प्रणिदध्यात्पु- नस्त्र्यहं ॥ पश्चाद्विरेको वमिते ततः पश्चान्निरूहणं ॥ सद्यो निरूढश्चा- न्वास्यः सप्तरात्राद्विरेचितः ॥ यथा कुसुंभादियुतात्तोयाद्रागं हरेत्पटः॥ तथा द्रवीकृताद्देहाद्बस्तिर्निर्हरते मलान् ॥ ॥इति बस्तिविधिर्ना- माष्टाविंशोऽध्यायः ॥ २८ ॥

अथातो नस्यविधिमध्यायं व्याख्यास्यामः ॥ नासायां प्रणीय- मानमौषधं नस्यं ॥ नावनं नस्तःकर्मेति च संज्ञां लभते ॥ नासा हि शिरसो द्वारं तत्रावसेचितमौषधं स्रोतःशृंगाटकं प्राप्य व्याप्य मूर्द्धानं नेत्रश्रोत्रकंठादिसिरामुखानि च मुंजादिषीकामिवासक्तामू- र्ध्वजत्रुगतां वैकारिकीमशेषामाशु दोषसंहतिमुत्तमांगादपकर्षति ॥ तत्त्रिधा विरेचनं बृंहणं शमनं च ॥ तेषां विरेचनं जत्रूर्ध्वगतेऽधि- गौरवशोफोपदेहकंडूस्तंभाभिष्यंदस्रावप्रसेकवैरस्यारोचकस्वरभेदकृ- मिप्रतिश्यायापस्मारगंधाज्ञानग्रंथ्यर्बुददद्रुकोठादिषु श्लेष्मजेषु ती- क्ष्णेन स्नेहेन शिरोविरेचनद्रव्यैर्वा सिद्धेन तेषां वा क्वाथचूर्णस्वरसै- स्तैरेव वा यथाऽर्हद्रव्यश्लक्ष्णकल्कितालोडितैर्मधुसैंधवासवपित्तमूत्रै- र्यथास्वं चोपदिष्टैर्योज्यं ॥ तत्र भीरुस्त्रीकृशसुकुमारेषु स्नेहः ॥ गलरो- गसन्निपातज्वरातिनिद्रामनोविकारकृमिशिरोरोगाक्षिस्पंदनतिमिरकृ- च्छ्रविषाभिपन्नाभिष्यंदसर्पदष्टविसंज्ञेषु शेषौ ॥ तेष्वेव च भूयसि दोषे शीघ्रकारिणि च चूर्णः ॥ स हि नासायामावेगकरतरो भवति ॥बृं- हणं सूर्यावर्तार्द्धावभेदकृमिशिरोरोगाक्षिसंकोचस्पंदनतिमिरकृच्छ्रा- वबोधदंतकर्णशूलनादनासामुखशोषवाक्संगस्वरोपघातमन्यारोगाप-

मानकावबाहुकनिद्रानाशादिष्वनिलोत्थेषु स्निग्धमधुरद्रव्यैस्तत्सिद्धै-र्यथायथं चोपदिष्टैः स्नेहैर्निर्यासैर्धान्यमांसरसरक्तैश्च ॥ शमनमकालव-लीपलितखलतिदारुणकरक्तराजीव्यंगनीलिकारक्तपित्तादिषु यथास्व-मुपदिष्टैः स्नेहैर्भेषजस्वरसादिभिः क्षीरोदकाभ्यां वा समदोषे वाऽणुतै-लेनेति ॥ तत्र स्नेहो मात्राभेदाद्द्विधा ॥ मर्शः प्रतिमर्शश्च ॥ विरेचनः शमनो वा नासया प्रणीयमानः कल्कोऽवपीडसंज्ञो विरेचनचूर्णस्तु प्रधमनाख्यः ॥ परिशेषं तु नावनमवपीडकसंज्ञं ॥ कल्कीकृतादौषधा-दवपीडितः स्रुतो रसोऽवपीड इत्यपरेषां ॥ तत्र पुनस्तीक्ष्णो वैशेषि-की शिरोविरेचनसंज्ञा॥ तथाऽन्ये सर्वमेव विरेचनं नस्यमित्याहुः सद्यः श्लेष्मविरेचनसामान्यात् ॥ अणुतैलविधानं तु मंजिष्ठामधुकप्रपौंड-रीकजीवकर्षभककाकोलीद्वयपयस्यासारिवाऽनंतानीलोत्पलांजनरा-स्नाविडंगतंडुलमधुपर्णीश्रावणीमेदाकाकनासासरलसालभद्रदारुचंदनैः सुपिष्टैरष्टगुणं षड्गुणेन पयसा तैलं पचेत् ॥ घृतं वा पित्तोल्बणेषु दोषे-षु ॥अथवा चंदनागुरुपत्रदार्वीत्वङ्मधुकबलाद्वयबिल्वोत्पलपद्मकेसर-प्रपौंडरीकविडगोशीरन्हीबेरवन्यत्वङ्मुस्तसारिवाबृहतीद्वयांशुमतीद्वय-जीवंतीदेवदारुसुरभिशतावरीः शतगुणे दिव्येऽभसि दशभागावशिष्टं क्वाथयेत् ततस्तस्य क्वाथस्य दशमांशेन समांशं तैलं साधयेत् ॥ द-शमे चात्र पाके तैलतुल्यमाजमपि पयो दद्यात् ॥ एतदप्यणुतैलं पूर्वस्माद्विशेषेणेंद्रियदार्ढ्यकरं केश्यं त्वच्यं कंठ्यं प्रीणनं बृंहणं दोष-त्रयघ्नं च ॥ अस्यानर्हास्तु भुक्तभक्तस्नेहमद्यगरतोयपीतपातु-कामशिरःस्नातस्नातुकामसिरादिव्यधस्रुतरक्तमूत्रितोच्चारिताभिहतकृ-तवमनविरेकबस्तिकर्मगर्भिणीसूतिकानवप्रतिश्यायश्वासकासिनोऽना-र्तवदुर्दिनेष्वपि ॥ तत्र भुक्तभक्तस्य नस्येरितो दोष ऊर्ध्वस्रो-तांस्यावृत्य छर्दिश्वासकासप्रतिश्यायान् जनयेत् ॥ स्नेहादिपीतपातु-कामानामक्षिनासास्यस्यंदोपदेहतिमिरशिरोरोगान् ॥ शिरःस्नात-

स्य शिरोक्षिकर्णशूलकंठरोगपीनसहनुमन्यास्तंभार्दितशिरःकंपान् ॥ स्नातुकामस्य मूर्द्धस्तैमित्यजाड्यारुचिपीनसान् ॥ स्रुतरक्तस्य क्षामतामरुचिमग्निसादं च ॥ मूत्रितोच्चारितयोर्भृशतरवेगधारणजान्विकारान् ॥ अभिहतस्य तीव्रतरां रुजं ॥ कृतवमनादीनां श्वासकासस्वरेंद्रियहानिशिरोगौरवकंडूकृमिदोषान् ॥ गर्भिण्या भक्तद्वेषज्वरमूर्छाऽर्द्धावभेदकाः स्युरपत्यं च व्यंगं विकलेंद्रियमुन्मादापस्मारयुक्तं वा ॥ सूतिकायाः स्रुतरक्तोक्तान् दोषान् ॥ नवप्रतिश्यायस्य स्रोतोरोधाद्दुष्टप्रतिश्यायकेशशातकृमिकंडूविचर्चिकाः ॥ श्वासकासिनो व्याधिविवृद्धिः ॥ अकाले दुर्दिने सहसैव शैत्याच्छिरोरुग्वेपथुस्तैमित्यतालुनेत्रकंडूपाकमन्यास्तंभकंठरोगप्रतिश्यायारूंषिकाः॥ तेषु यथास्वमायतनं दोषोद्रेकं चापेक्ष्य स्नेहस्वेदशिरोवक्त्रलेपसेकतीक्ष्णावपीडधूमगंडूषादीनाचरेत् ॥ विशेषेण तु गर्भिणी रूक्षे नस्यकर्मणि वर्षाभूकाकोलीकपिकच्छुभिः शृतं पयः पिबेत् ॥ बलाविदार्यंशुमतीमेदाभिर्वा ॥ एभिरेव च शृतं हविः ॥ वातहरसिद्धश्च स्नेहः शिरोबस्तौ कर्णपूरणे च योज्यः॥एवं च बृंहणमन्नपानं ॥ भुक्तभक्तादिष्वपि चात्ययिकव्याध्यातुरमपेक्षेत ॥ मर्शप्रमाणं तु प्रदेशिन्यंगुलीपर्वद्वयान्निमग्नोत्धृताद्यावत्पतति स बिंदुः ॥ अमी दशाष्टौ षड्बिंदव उत्तममध्यमकनीयस्यो मात्राः॥क्वाथादीनामष्टौ षट् चत्वारः॥प्रधमननस्यं तु षडंगुलद्विमुखया नाड्या मुखानिलेरितस्याकंठगते दोषानुरोधतश्च पुनःपुनर्योजनमिति ॥ अथ नस्यार्हं नरमव्याहतवेगं धौतांतर्बहिर्मुखं स्निग्धस्विन्नशिरसं नातिक्षुधितं प्रायोगिकधूमपानविशुद्धस्रोतसं स्वास्तीर्णनिवातशयनस्थमुत्तानशीर्षमीषदुन्नतपादं प्रसारितकरचरणं जत्रूर्ध्वं पाणितापेन पुनः पुनः स्वेदयेत् ॥ ततः कनकरजतताम्रान्यतमशुक्तिस्थितं प्रदेयमौषधत्रिभागमुष्णांबुप्रतप्तं किंचित्प्रलंबितशिरसो वामहस्तांगुष्ठकनिष्ठिकाभ्यामाक्रम्य नयनप्रच्छादनं चतुर्गुणं-

घासो मध्यमया नासाग्रमुन्नमय्य प्रदेशिन्यनामिकाभ्यां चैकैकं नासापुटं पर्यायेण पिधायेतरस्मिन्नासास्रोतसि दक्षिणहस्तेन प्रनाड्या पिचुना वाऽनवच्छिन्नधारमासिंचेत् ॥ वातपित्तकफामयेषु क्रमेणापराण्हमध्यान्हपूर्वाण्हेषु ॥ लालास्रावसुप्तप्रलापदंतकटकटायनक्रथनकृच्छ्रोन्मीलनपूतिमुखकर्णनादतृष्णार्दितशिरोरोगश्वासकासोन्निद्रेषु रात्रौ स्वस्थवृत्ते तु शीते मध्यान्हे शरद्वसंतयोः प्राण्हे ग्रीष्मेऽपराण्हे वर्षास्वादित्यदर्शने पंचकर्माण्याचरतो बस्तिकर्मोत्तरकालमेव ॥ न च हीनाधिकं सकृदेव सर्वमत्युष्णशीतमत्युन्नतावनतशिरसे संकुचितगात्रावयवाय देयं ॥ तत्र हीनं दोषमुत्क्लेश्य न निर्हरेत् ॥ गौरवारुचिकासप्रसेकपीनसच्छर्दिकंठरोगान्कुर्यात् ॥ अधिकमतियोगदोषान् ॥ सकृदेव सर्वं दत्तमुत्स्नेहनशिरोरोगप्रतिश्यायघ्राणक्लेदानुच्छ्वासोपरोधं च ॥ अत्युष्णं दाहपाकज्वररक्तागमशिरोरुग्दृष्टिदौर्बल्यमूर्च्छाभ्रमान् ॥अतिशीतं हीनदोषान्॥अत्युन्नतशिरसोऽपि सम्यक्शिरोऽप्रतिपद्यमानं तानेव ॥ अत्यवनतशिरसोऽतिदूरगमनान्मूर्च्छाजाड्यकंडूदाहज्वरान् संकुचितगात्रस्य सम्यग्धमनीरव्याप्नुवद्दोषोत्क्लेशं वेदनां स्तंभं वा ॥ यदि च नस्ये दीयमाने भेषजवेगादसात्म्यतया वा मूर्च्छा स्यात्ततः शिरोवर्जं शीतांभसा सिंचेत् ॥ न च नस्ये निषिच्यमाने कोपहास्यव्याहारस्पंदनोच्छिंदनान्याचरेत् ॥ तथाहि शिरोरुक्प्रतिश्यायकासतिमिरखलतिपलितव्यंगतिलकालकमुखदूषिकाणां संभवः ॥ दत्तमात्रे तु नस्ये कर्णललाटकेशभूमिगंडमन्यास्कंधपाणिपादतलान्यनुसुखं मर्दयेत् ॥ शनैश्चोच्छिंघेत् ॥ अनभ्यवहरंश्च वामदक्षिणपार्श्वयोरौषधं निष्ठीवेत् ॥ सकफं हि तदभ्यवहृतमग्निमवसादयेत् ॥ दोषं च संवर्द्धयेत् ॥ एकपार्श्वे निष्ठीवने न सर्वाः सिरा भेषजेन सम्यग्व्याप्यंते ॥ पुनः पुनश्चैनं स्वेदयेदा भेषजदर्शनाच्चोच्छिंदेन्निष्ठीवेच्च ॥ ततश्चैवमेव द्वितीयमंशाम-

नुषेचयेत्तथा तृतीयं दोषादिबलेन वा ॥ विरेचने त्ववपीडे दोषबलमपेक्ष्य पश्चात्स्नेहमनुषेचयेत् ॥ निवृत्तनस्यं चैवमुत्त्चिद्रमुत्तानं वाक्शतमात्रं शाययेत् ॥ ततः पुनरप्युत्क्लिष्टदोषशेषोपशांतये वैरेचनिकं यथार्हं वा धूमं पाययित्वोष्णोदकगंडूषान्धारयेत् ॥ अथास्य स्नेहोक्तमाचारमादिशेत् ॥ अतिद्रवपानं च वर्जयेत् ॥ पुनश्च तृतीये ऽहनि नस्यमवसेचयेत् ॥ हिध्मास्वरोपघातमन्यास्तंभापतानकेषु शिरसि चानिलात्यर्थाद्यभिभूते प्रत्यहं सायं प्रातरुभयकालं वा ॥ अनेन विधिना पंच सप्त नव वा दिनानि दद्यादासम्यग्योगाद्वा ॥ तत्र सम्यक्स्निग्धे मूर्द्धनि विरिक्ते वा सुखोच्छ्वासनिश्वासक्षवथुस्वप्नप्रबोधशिरोवदनेंद्रियविशुद्धयो भवंति यथोक्तव्याध्युपशमश्च ॥ अयोगातियोगयोस्तु यथास्वं वातपित्तविकारास्तान्यथास्वमेव साधयेत् ॥ अन्यांश्च पूर्वोक्तान् विकारान्॥प्रतिमर्शस्तु क्षामक्षततृष्णामुखशोषवृद्धबालभीरुसुकुमारेष्वप्यकालवर्षदुर्दिनेष्वपि च योज्यः ॥ न तु दुष्टप्रतिश्यायबहुदोषकृमिणशिरोमद्यपीतदुर्बलश्रोत्रेषु ॥ एषां ह्युदीर्णदोषत्वात्तावता दोषोत्क्लेशो भवति ॥ तस्य पंचदशकालास्तेषां च गुणाः ॥ प्रातर्दत्ते भुक्तवतश्चांते स्रोतोविशुद्धिः शिरोलाघवं मनःप्रसादश्च भवति ॥ विण्मूत्रशिरोभ्यंगांजनकवलांते दृष्टिप्रसादः ॥ दंतधावनांते दंतदृढता सौगंध्यं च ॥ अध्वव्यायामव्यवायांते श्रमक्लमस्वेदस्तंभनाशः ॥ दिवास्वप्नांते निद्राशोषगौरवप्रणाशो मनःप्रसादश्च॥ अतिहसितांते ऽनिलप्रशमः ॥ छर्दितांते स्रोतोलीनश्लेष्मव्यपोहः ॥ दिनांते स्रोतोविशुद्धिः सुखनिद्राप्रबोधश्च भवति ॥ भवति चात्र ॥ प्रमाणं प्रतिमर्शस्य बिंदुद्वितयमिष्यते ॥ बिंदुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते ॥ निष्ठ्यूते यत्र वा स्नेहो न साक्षादुपलक्ष्यते ॥ न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ न चोनाष्टादशे धूमः कवलो नोनपंचमे ॥ न शुद्धिरूनदशमे न चातिक्रांतसप्ततौ ॥ आज-

म्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ॥ मर्शवच्च गुणान्कुर्यात्स हि नित्योपसेवनात् ॥ न चात्रयंत्रणा नापि व्यापद्भ्यो मर्शवद्भयं ॥ तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ शिरसः श्लेष्मधामत्वात्स्नेहाः स्वस्थस्य नेतरे ॥ आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ मर्शे च प्रतिमर्शे च न विशेषो भवेद्यदि ॥ को मर्शं सपरीहारं सापदं च भजेत्ततः ॥ अच्छपानविचाराख्यौ कुटीवातातपस्थिती ॥ अन्वासमात्राबस्ती च तद्वदेव विनिर्दिशेत् ॥ ॥ इति नस्यविधिर्नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

अथातो धूमपानविधिमध्यायं व्याख्यास्यामः॥धूमो हि शिरोक्षिकर्णशूलाभिष्यंदगौरवार्द्धावभेदकपीनसकासश्वासास्यवैरस्यप्रसेकवैस्वर्यपूतिघ्राणमुखहिध्मागलरोगदंतशूलदौर्बल्यारुचिहनुमन्याग्रहकृमिकंडूपांडुत्वकेशदोषक्षवथुनाशबाहुल्यतंद्राऽतिनिद्राक्रथनातिजत्रूर्ध्वगतवातकफव्याधिप्रशमाय प्रयुज्यते ॥ तथा शिरः कपालेंद्रियमनोबृंहणप्रसादनाय च ॥शीतद्रव्यनिर्वृत्तोऽपि त्वग्निसंयोगादुष्णतया पित्तरक्तविरुद्धः ॥ स त्रिविधो भवति ॥ शमनो बृंहणः शोधनश्च ॥ तथा कासघ्नो वामनो व्रणधूपनश्च ॥ तत्र शमनः प्रायोगिको मध्यम इति पर्यायाः ॥ बृंहणः स्नेहनो मृदुरिति ॥ शोधनो विरेचनस्तीक्ष्ण इति च॥अधूमार्हास्तु विरिक्तदत्तबस्तिरात्रिजागरिताभिहतशिरोमधुदधिदुग्धमद्यस्नेहयवागूविषपीतमत्स्याशितपांडुरोगप्रमेहोदराध्मानोर्ध्ववाततिमिररोहिणिकारक्तपित्तिनोऽत्युष्णेऽन्येपि ॥ एषां हि भ्रमज्वरशिरोभितापेंद्रियोपघाततालुशोषपाकधूमायनछर्दिमूर्च्छारक्तपित्तार्दितानि मृत्युं वा धूमो जनयति ॥ अतिमात्रश्चान्येषामपि ॥ तत्र वातकफान्यतरसंसृष्टं पित्तमुपलक्ष्य यथास्वं सर्पिःकषायपाननस्यास्यालेपांजनपरिषेकान्स्निग्धरूक्षशीतान् प्रयुंजीत ॥ एतेन सर्वधूमोपघातप्रतीकारा व्याख्याता ॥ विशेषतस्तु सर्वस्रोतोभिगते धूमे तीव्रतरा वे-

दना भवत्योषाध्माननेत्ररागश्वासकासपीनसांगस्वरसादाम्लकाः ॥तत्र घृतक्षीरेक्षुरसद्राक्षाशर्करोपयोगस्तद्विधैरेव वमनं कटुतिक्तैरपि च नस्यगंडूषाः ॥ पानकालास्त्वष्टौ प्रायोगिकस्य निशामूत्रशकृद्दंतधावनस्वेदनस्याहारशस्त्रकर्मांताः ॥ एकादशमृदोः क्षुतव्यवायहसितचिरासितजृंभितमूत्रशकृद्दंतधावनतर्पणपुटपाकशस्त्रकर्मांताः ॥ पंच तीक्ष्णस्य नस्यांजनछर्दितस्नानाहःस्वप्नांताः ॥ एषु हि कालेषु वातकफोत्क्लेशो भवति ॥ नेत्रं तु बस्तिनेत्रद्रव्यभवं गोपुच्छाकारमग्रमूलयोः कनिष्ठिकांगुष्ठाग्रपरिणाहं राजमाषधूमवर्तिप्रवेशाच्छिद्रमृजु त्रिकोशं श्लक्ष्णं शिथिलशलाकागर्भं शमनादिषु क्रमादातुरांगुलमानेन चत्वारिंशद्द्वात्रिंशच्चतुर्विंशत्यंगुलं कुर्यात् ॥ कासघ्ने वमने च दशांगुलं व्रणधूपनार्थेऽष्टांगुलं कलायपरिमंडलं कुलत्थवाहि स्रोतइति ॥ एवं हि धूमो दूरात्प्रवृत्तो नेत्रस्य पर्वच्छेदादूर्ध्वं तनुतया च शनैः श्लिष्यन्न बाधको भवति ॥ कासघ्नादिषु नेत्राभावे देवनलवंशैरंडादीनामन्यतमां नाडीं योजयेत् ॥ यथास्वं च धूमद्रव्याणां कल्केन श्लक्ष्णेनाक्षमात्रेण द्वादशांगुलायतामीषिकामंभस्यहोरात्रोषितां लेपयेत् ॥ तत्र च नवांगुलगर्भां पंचप्रलेपामंगुष्ठस्थूलां यवमध्यां छायाशुष्कां वर्तिं कृत्वा विगतेषिकां च स्नेहाक्तामंगारेषु प्रदीप्य नेत्रमूलच्छिद्रे च निधाय यथार्हं पानायोपनयेत् ॥ अथ धूमार्हः सुमना ऋजूपविष्टः प्राक्कृतोच्छ्वासनिश्वासो विवृतौष्ठदशनो नेत्राग्रनिविष्टदृष्टिः पर्यायेणैकैकं नासापुटं पिधायेतरेणाक्षिप्य मुखेनोत्सृजेत् ॥ मुखेन तु मुखेनैव न नासया दृग्विघातभयात् ॥ तत्र प्रायोगिकं द्वौ द्वौ त्रींस्त्रीन्वाऽऽपानांस्त्रींश्च पार्यायान्कंठाच्चोर्ध्वमुत्क्लिष्टे दोषे पूर्वं नासया ततो मुखेन कंठे तु पूर्वमास्येन परं चाहोरात्रस्य द्विः पिबेत् ॥ स्नैहिकं त्रींस्त्रींश्चतुरश्चतुरो वाऽऽपानान् यावद्वाऽऽश्रुप्रवृत्तिस्तथाऽहोरात्रस्य ॥ तीक्ष्णं नासाभ्यामेव चतुरश्चतुरश्चापानान् यावद्वा स्रोतो-

लाघवं तथा त्रिश्चतुर्वा ऽहोरात्रस्य ॥ तत्राक्षेपविसर्गावापानइत्याहुः॥ कासघ्नं तु चूर्णं गुलिकां वा निर्धूमदीप्तस्थिरांगारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन बुध्नवृत्तच्छिद्रेण शरावेणापिधाय निधाय च तत्र स्रोतसि नेत्रं मुखेनैव धूमं पिबेत् ॥ उरःप्राप्तं च मुखेनैवोद्वमेत् ॥ प्रशांते च धूमे पुनः क्षिपेत्पिबेच्च दोषशुद्धेर्लाघवाद्वा ॥ तद्वद्वामनमपि तिलकृशरामप्यनतिघनां पीत्वा पिबेत् ॥ तद्वच्च व्रणमपि धूपयेद्वैशद्याय क्लेदवेदनोपशमाय च ॥ धूमस्यायोगे दोषोत्क्लेशाद्रोगवृद्धिः ॥ अतियोगे प्रागुक्तमिति ॥ भवति चात्र ॥ हृत्कंठेंद्रियसंशुद्धिः शिरसो लाघवं शमः ॥ यथेरितानां रोगाणां सम्यक्पीतस्य लक्षणं ॥ शमनो वातकफयोः संसर्गे स्वस्थकर्मणि ॥ बृंहणो मारुते शस्तो धूमः संशोधनः कफे ॥ इति धूमपानविधिर्नामत्रिंशोऽध्यायः ॥ ३० ॥

अथातो गंडूषादिविधिमध्यायं व्याख्यास्यामः ॥ चतुर्विधो भवति गंडूषः स्नैहिकः शमनः शोधनो रोपणश्च ॥ तेषामाद्यास्त्रयः क्रमेण वातपित्तकफामयघ्नाः ॥ रोपणस्त्वास्यव्रणघ्नः शमनः स्तंभनः प्रसादनो निर्वापण इतिपर्यायाः ॥ तत्र स्वाद्वम्ललवणोष्णैरौषधैः सिद्धो युक्तो वा नात्युष्णः स्नेहो मांसरसतिलकल्कोदकं क्षीरं वा स्नैहिकः ॥ तिक्तकषायमधुरशीतैः पटोलारिष्टजंब्वाम्रमालतीपल्लवोत्पलमधुकक्वाथसितोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः शमनः ॥ कट्वम्ललवणोष्णैः शिरोविरेचनद्रव्यैः शुक्तमद्यधान्याम्लमूत्रान्यतमकल्कितालोडितैः शोधनः ॥ रोपणस्तु कषायमधुरशीतैर्यथास्वं चोपदिष्टैः ॥ अपिच ॥ दंतहर्षे दंतचाले मुखरोगे च वातिके ॥ सुखोष्णमथवाशीतं तिलकल्कोदकं हितं ॥ गंडूषधारणे नित्यं तैलं मांसरसोऽथवा ॥ ऊषादाहान्विते पाके क्षते चागंतुसंभवे ॥ विषे क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ॥ वैशद्यं जनयत्यास्ये संदधाति मुखव्रणान् ॥ दा-

हृतृष्णाप्रशमनं मधुगंडूषधारणं ॥ धान्याम्लमास्यवैरस्यमलदौर्गंध्य-नाशनं ॥ तदेवालवणं शीतं मुखशोषहरं परं ॥ आशु क्षारांबुगंडूषो भिनत्ति श्लेष्मणश्चयं ॥ अथ निवाते सातपे सुखोपविष्टस्तन्मनाः स्विन्नमृदितगलकपोलललाटदेशो वरमध्यावरां क्रमाद्वक्त्रार्द्धत्रिभागचतुर्भागपूरणीं द्रवमात्रां कल्कं वा कोलप्रमाणं किंचिदुन्नमितास्यो ऽनभ्यवहरन्धारयेत् ॥ कवले तु पर्यायेण कपोलौ कंठं च संचारयेत् ॥ अयमेव च कवलगंडूषयोर्विशेषः ॥ मुखे संचर्यते या तु सा मात्रा कवलः स्मृतः ॥ असंचारा तु या मात्रा स गंडूषः प्रकीर्तितः ॥ पुनश्चास्य स्वेदमर्दनान्याचरेत् ॥ एवमुत्क्लिष्टः कफो वक्त्रं प्रतिपद्यते ॥ तावच्च धार्यो यावत्कफपूर्णकपोलता स्रवद्घ्राणनेत्रता भेषजस्य वा ऽनुपहतिः कफेन ॥ एवं त्रीन्पंच सप्त वा गंडूषान्धारयेत् ॥ यावद्वा सम्यग्धूमपीतलिंगोत्पत्तिः ॥ तस्य स्वास्थ्येन योगं जाड्यरसाज्ञानारुचिप्रसेकोपलेपैरयोगं मुखशोषपाकक्लमारुचिहृदयद्रवस्वरसादकर्णनादैरतियोगमुपलक्षयेत् ॥ तेषां यथास्वं प्रतिकुर्वीत ॥ प्रतिसारणं तु त्रिविधं गंडूषोदितानां द्रव्याणां रसक्रिया कल्कश्चूर्णश्च ॥ तदभिष्यंदाधिमंथगलशुंडिकादिषु युक्त्या प्रयोज्यं ॥अतिप्रसारणाद्दूषाशोषदाहक्लेदशोफादयो भवंति ॥ मुखालेपोऽपि त्रिविधो दोषघ्नो विषघ्नो वर्ण्यश्च ॥ त्रिप्रमाणश्चतुर्भागत्रिभागार्द्धांगुलोत्सेधः ॥ न चालिप्तमुखोऽतिभाष्यहास्यक्रोधशोकरोदनस्वेदनाग्न्यातपदिवास्वप्नान्सेवेत ॥ कंडूत्वक्शोषपीनसदृष्ट्युपघातभयात् ॥ न च शुष्यन्नुपेक्षितव्यः ॥ शुष्को हि छविं दूषयति तमार्द्रयित्वाऽपनयेत् ॥ आलेपांते च मुखमभ्यज्यात्॥ न तु योज्यो रात्रिजागरिताजीर्णदत्तनस्यारुचिहनुग्रहप्रतिश्यायिनां ॥ सम्यक्प्रयुक्तश्चाकालवलीपलितनीतिमिरव्यंगतिलकादीन्प्रशमय-

ति ॥ स्वस्थस्य दृष्टिबलं पुंडरीककांतवक्रतां च करोति ॥ मूर्द्ध तैलं पुनश्चतुर्धा भिद्यते ॥ अभ्यंगः परिषेकः पिचुर्बस्तिरिति ॥ यथोत्तरं ते बलिनः ॥ तत्राभ्यंगो रूक्षकंडूमलादिषु प्रयुज्यते ॥ परिषेकस्त्वरूंषिकाशिरस्तोददाहपाकव्रणेषु ॥ केशशातस्फुटनधूपननेत्रस्तंभेषु पिचुः ॥ बस्तिस्तु प्रसुप्त्यर्दितरात्रिजागरितनासास्यशोषतिमिरवाक्संगेषु चातिदारुणेषु ॥ तेष्वभ्यंगादयः प्रसिद्धस्वरूपाः ॥ शिरोबस्तिविधिस्तु बस्तिं सुमृदितं द्विमुखं शिरःप्रमाणमाकर्णप्रदेशं द्वादशांगुलविस्तारं कुर्यात् ॥ अथ शुद्धतनोः सायं रात्रौ वा स्वभ्यक्तस्विन्नस्य सोपाश्रयासनोपविष्टस्य केशांते श्लक्ष्णं त्र्यंगुलं सुसूक्ष्मेण माषपिष्टेन सद्यःसुखांबुमृदितेनोभयतः प्रदिग्धं वस्त्रपट्टं बध्नीयात् ॥ ततस्तस्योपरि संधाय बस्तिं बस्तिमूलं च दृढमवलीकंसमं चैलवेणिकया बध्वा पुनर्माषपिष्टेनापरिस्रावि कृत्वा यथाव्याधिदोषदूष्यहितं सिद्धमन्यतमं स्नेहं सुखोष्णमासेचयेद्यावत्केशभूमेरुपर्यंगुलं ॥ तावच्च धार्यो यावत्कर्णमुखनासास्रुतिर्वेदनोपशमो वा ॥ विशेषतो वातजेषु विकारेषु दश मात्रासहस्राणि पित्तरक्तजेष्वष्टौ षट् कफजेषु सहस्रमरोगकर्मणि ॥ ततोऽपनीते स्नेहे विमुच्य बस्तिं शिरसः स्कंधग्रीवापृष्ठललाटादीन्यनुसुखं मर्दयेत् ॥ उष्णांबुना स्नातं च यथार्हं भोजयेत् ॥ स्नेहोक्तं चास्याचारमादिशेत् ॥ एवं त्रीणि पंच सप्त वा दिनानि योजयेदिति ॥ भवति चात्र ॥ तत्राभ्यंगः प्रयोक्तव्यो रौक्ष्यकंडूमलादिषु ॥ अरूंषिकाशिरस्तोददाहपाकव्रणेषु च ॥ परिषेकः पिचुः केशशातस्फुटनधूपने ॥ नेत्रस्तंभे च बस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ कचशातनसितत्वपिंजरत्वं परिफुटनं शिरसः समीररोगान् ॥ जयति जनयतींद्रियप्रसादं स्वरहनुमूर्धबलं च मूर्द्धतैलं ॥ धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ॥ रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ यावत्पर्यंति ह-

स्ताग्रं दक्षिणं जानुमंडलं ॥ निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ॥ इति गंडूषादिविधिर्नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

अथात आश्चोतनांजनविधिमध्यायं व्याख्यास्यामः ॥ आश्चोतनं सर्वाक्षिरोगेष्वाद्य उपक्रमः॥नानाद्रव्यकल्पनया च रागाश्रुघर्षरुग्दाहतोदभेदपाकशोफकंडूघ्नं॥अव्यक्तेष्वेवं गुणमेव पक्ष्मपरिहारेणाक्षिकोशालेपनं तच्च पुनर्बिडालकसंज्ञं ॥ तयोरकालो रात्रिः ॥ कालस्तु सर्वमहर्दिनोत्पत्तिर्वा ॥ निवातशरणशयनस्थस्य विरोध्य नेत्रमपांगेऽभ्यंजनं कृत्वा वामहस्तेनोन्मील्य दक्षिणहस्तेन शुक्त्यवसक्तया पिचुवर्त्या दश द्वादशाष्टौ वा बिंदून् कनीनकदेशे द्व्यंगुलादवसेचयेत् ॥ एवमनासन्नबिंदुपातेनाक्षिताडनाद्रागादयो जायंते ॥ आश्चोतितं च मृदुना चैलेन शोधयेत् ॥ अन्येन चोष्णांबुप्लुतेन वातकफयोः स्वेदयेत् ॥ आश्चोतनं च तयोः कोष्णं॥ सुशीतं पित्तरक्तविकारेषु ॥ तत्तु नात्यर्थं तीक्ष्णमुष्णं शीतं वा प्रभूतमूनमपरिस्रावितं वा योजयेत् ॥ अतितीक्ष्णमुष्णं वा दाहरागपाकदृष्टिदौर्बल्यानि करोति ॥ अतिशीतं स्तंभाश्रुघर्षनिस्तोदान् ॥ अतिमात्रं कषायवर्त्मतासंकोचस्फुरणोन्मीलनप्रवातासहत्वघर्षान् ॥ ऊनप्रमाणान्न रोगशांतिः ॥ अपरिश्रुतमश्रुघर्षवेदनाः ॥ नेत्रे च प्रणिहितमौषधं कोशसंधिसिराशृंगाटकघ्राणास्यस्रोतांसि गत्वोर्ध्वं प्रवृत्तमपवर्त्तयति दोषं ॥ यदा चाश्चोतनेन पित्तश्लेष्मशोणितोत्थेषु नयनामयेषु संशोधनैर्विशुद्धस्य दूषिकाघनत्वपैच्छिल्यकंडूद्रेकश्वयथुम्लानताराग‌विच्छेदैः पक्वलिंगमुपलक्षितं भवति तदा नेत्रमात्राश्रये व्याधावंजनं प्रयोज्यं ॥ न दोषवेगोदये न चानिर्हृतदोषे॥ तत्र हि दोषोत्क्लेशेन रागादिवृद्धिः शुक्रपाकतिमिरोत्पत्तिश्च॥तत्तु लेखनं रोपणं स्नेहनं प्रसादनमिति चतुर्विधं भवति॥ तत्राम्लादिभीरसैः पंचभिः शुक्रार्मादिषु लेखनं ॥ तिक्तकषायैः सस्नेहैरभिष्यंदेषु रोपणं ॥ सर्पादिवत्तादिभिर्वाततिमिरादिषु स्नेहनं ॥

स्वादुशीतैः सस्नेहैरभिष्यंदांते सूर्योपरागाशनिविद्युत्संपातभूतपिशाचात्यद्भुतदर्शनाद्युपहतायां दृष्टौ स्वस्थवृत्ते च प्रसादनं ॥ प्रसादनएव च चूर्णस्तीक्ष्णांजनातिसंतप्ते चक्षुषि प्रयुज्यमानः प्रत्यंजनसंज्ञां लभते ॥ षड्विधं वा प्रतिरसभेदादंजनं ॥ द्विविधमेव वा तीक्ष्णं मृदु च ॥ कल्पना तु त्रिविधा ॥ पिंडो रसक्रिया चूर्णश्च ॥ यथापूर्वं ते बलिनः ॥ तस्मात्प्रबलमध्याबलेष्वामयेषु क्रमात्तान्प्रयोजयेत् ॥ तत्र पिंडो हरेणुमात्रस्तीक्ष्णस्य ॥ रसक्रिया विडंगमात्रा ॥ तद्विगुणा मृदोः ॥ चूर्णो द्विशलाकः ॥ मृदोस्त्रिशलाकः ॥ पात्रे तु कुर्यात्सौवर्णे मधुरं ॥ राजतेऽम्लं ॥ मेषशृंगमये लवणं ॥ कांस्ये तिक्तं ॥ वैदूर्यमयेऽश्ममये वा कटुकं ॥ ताम्रमयआयसे वा कषायं ॥ नलप्लक्षपद्मकस्फटिकशंखान्यतमे शीतं ॥ एवमव्यापन्नगुणं भवति ॥ वर्तिघर्षणार्थं च शिला तीक्ष्णा निम्नमध्यानुकारिणी पंचांगुलायता त्र्यंगुलविस्तीर्णा ॥ शलाकाः पंच कनकरजतताम्रलोहोद्भवा अंगुली च॥ तत्राद्ये प्रसादनेऽजने स्नेहने च ॥ मध्या लेखने ॥ अंत्ये रोपणे ॥ मृदुत्वादंगुल्येव प्रधानं ॥ अंतःसरुजेऽक्षिण सैव प्रयोज्या ॥ शेषा दशांगुला राजमाषस्थूलाः सुश्लक्ष्णास्तनुमध्या मुखयोर्मुकुलाकाराः कलायपरिमंडलाश्च ॥ अथांजनं नातिशितोष्णाभ्रतायां वेलायामुभयकालं च योज्यं ॥ तथा सततं नैव वा ॥ सरुजे चाक्षिण प्राक्पश्चादितरस्मिन् ॥ अन्यथांऽजनोद्वेगसंकुचितेंऽतः सम्यगौषधं नानुप्रविशेत् ॥ तत्रैवमतिशीतादिषु यथास्वं दोषोत्क्लेशाद्विकारपरिवृद्धिः ॥ न च योज्यं क्रुद्धभीतशंकितशोकितश्रांतमात्रविरिक्तधूममद्यपीतदत्तनस्यरात्रिजागरितवेगितरुदितपिपासितज्वरितछर्दितांततांतनेत्राभिहतशिरोरुजार्तशिरःस्नातानुदितादित्येषु ॥ एष्वंजनादूष्मोर्ध्वगः संरंभाश्रुवेदमाविलत्वोषारागदूषिकानिस्तोदकृच्छ्रोन्मीलनश्वयथुशुक्र-

१ निम्नमध्याऽनुद्दातिनीति क्वचित्पाठः

तिमिरादीन् जनयेत् ॥अथ समसुखोपविष्टस्योपविष्टो वामांगुष्ठेन व-र्त्मोत्तरमुत्क्षिप्य कृष्णभागस्याधः कनीनकादपांगं यावदंजनं नयेदन-ल्पमप्रभूतमनतितीक्ष्णमनच्छमसांद्रमकर्कशमद्रुतमविलंबितमतिति-र्यग्दृष्ट्यकंपितमघट्टितमनाक्रांतं च ॥ चूर्णं तु गतागतं कुर्या-त् ॥ अन्यथा हि रागाश्रुशुक्राद्युत्पत्तिः॥ ततोऽजनानुगमनायानुन्मी-लयन् शनैरंतश्चक्षुः संचारयेत् ॥ एवमप्यनुगच्छति वर्त्मनी किंचिच्चा-लयेत् ॥ न तु सहसोन्मेषणनिष्पीडनप्रक्षालनानि कुर्यात् ॥ सबाह्यो-त्क्लिष्टदोषस्तंभभयात् ॥ अपिच अपेतौषधसंरंभं निर्वृत्तं नयनं यदा ॥ व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ सचैलेनाथ नयनं स-व्यांगुष्ठेनदक्षिणं ॥ ऊर्ध्ववर्त्मनि संगृह्य शनैः शोध्यं समंततः॥दक्षिणां-गुष्ठकेनैवं शोध्यं सव्यं च लोचनं ॥ वर्त्मप्राप्तोऽजनाद्दोषो रोगान्कुर्या-दतोऽन्यथा ॥ तीक्ष्णांजनांते चैनं धूमं पाययेत् ॥ यस्यांजिते कं-डूजाड्योपदेहाः स्युस्तस्य तीक्ष्णमंजनं धूमं वा पुनरेवावचारयेत् ॥ एतदेव दुर्विरक्ताक्षिलक्षणं साधनं च ॥ अतिविरेकात्संतापनिस्तोद-शूलस्तंभघर्षाश्रुदारुणप्रतिबोधकषायवर्त्मताशिरोरुग्दृष्टिदौर्बल्यानि॥ तत्र शीतमाश्चोतनं प्रत्यंजनं वा ॥ सम्यग्विरेकाद्यथास्वमामयोप-शमः सुखोन्मीलननिमीलनवातातपसहत्वानि चेति ॥ भवति चात्र ॥ रोपणाद्दिष्वपि तथा योगादीननुचिंतयेत् ॥ दोषोदयानुसारेण प्रतिकुर्वीत तेषु च ॥ ॥ इत्याश्चोतनांजनविधिर्नाम द्वात्रिंशोऽ-ध्यायः ॥ ३२ ॥

अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ॥ ॥ यन्नयनं परिताम्यति परिशुष्कं रूक्षं स्तब्धं जिम्हं निम्नमाविलमवनद्धं जी-र्णपक्ष्म तथाकृच्छ्रोन्मीलशिरोत्पातशिराहर्षार्जुनशुक्रतिमिराभिष्यंदा-धिमंथान्यतोवातवातपर्यायशुष्काक्षिपाकाल्पशोफादिरोगातुरमपगत-रागाश्रुदूषिकावेदनं तत्र तर्पणं योजयेत् ॥ न त्वशांतोपद्रवेऽक्षिणि ना-

तिशीतोष्णवर्षदुर्दिने न नस्यानर्हेषु च ॥ तद्वत्पुटपाकमपि ॥ अथ दिवसस्याष्टमे भागे गते शेषे वा निर्वातातपरजोधूमे कृतनीलपीतान्यतरजवनिके वेश्मनि जीर्णभक्तस्य सुखशयनगतस्योत्तानस्य सुमृदितमाषपिष्टकल्केन नेत्रकोशाद्बहिर्द्व्यंगुलोच्छ्रायावाधारौ परिमंडलावसंबाधौ समावपरिस्राविणौ कृत्वा तत्रोष्णोदकप्रविलीनं निमीलिते नेत्रे यथास्वौषधविपक्कं क्षीरं सर्पिः सर्पिर्मंडं वाऽवसेचयेद्यावन्निमग्नान्यक्षिपक्ष्माणि भ्रूरोमाणि च ॥ततः शनैरस्योन्मेषमाचरतोः मात्रा गणयेत् ॥ वर्त्मजेषु विकारेषु शतं संधिजेषु त्रीणि शुक्लजेषु पंच कृष्णजेषु सप्त दृष्टिजेष्वष्टौ सहस्रमधिमंथेषु॥प्रतिदोषं तु वाते सहस्रं पित्ते षट्शतानि कफे पंच स्वस्थकर्मणिच॥ततोऽस्यापांगदेशे शलाकयाऽऽधारद्वारं कृत्वा स्नेहं भाजने स्रावयेत्॥ अधारौ चापनीय कल्केनाक्षिकोशौ प्रमृज्य स्नेहेरितकफोपशांतये विरेचनं यथार्हं धूमं पाययेत्॥ सुखोदकप्रक्षालितमुखं चैनं यथाव्याधि भोजयेत् ॥ आतपाकाशभास्वद्दर्शनानि च परिहरेत् ॥ अनेन विधिना प्रत्यहं वायावेकांतरं रक्तपित्तयोर्द्व्यंतरं कफे स्वस्थे च॥यथादोषोत्कर्षं संसर्गसन्निपातयोः॥ एवमेकाहं त्र्यहं पंचाहं वा कुर्यादातृप्तेर्वा ॥ तृप्तातृप्तातितृप्तलिंगानि तु क्रमात्स्वास्थ्यवातपित्तकफविकारैरादिशेत् ॥ यदा तु सम्यग्योगप्राप्तं तर्पणं भवति तदा तद्विधेष्वेवरोगेषु पुटपाकं विदध्यात् ॥ स त्रिविधः ॥ स्नेहनो लेखनः प्रसादनश्च ॥ तत्र स्नेहनमानूपसाधारणमांसमेदोमज्जवसाभिः स्वादुद्रव्यैश्च क्षीरपिष्टैरूक्षेऽक्षिण प्रयोजयत् ॥ लेखनं जांगलमृगपक्षिमांसयकृद्भिर्मुक्ताप्रवालशंखताम्रायःसमुद्रफेनकासीसस्रोतोजसैंधवादिभिश्च लेखनद्रव्यैर्दधिमस्तुपिष्टैः स्निग्धे ॥ प्रसादनीयं तु जांगलमृगपक्षियकृत्हृदयमज्जवसाभिर्मधुरद्रव्यैश्च स्त्रीस्तन्यक्षीराज्यपिष्टैः ॥ स तु वातपित्तरक्तदृष्टिदौर्बल्यव्रणनाशनः कफ-

---

१ प्रतिसीराजवनिकास्यात्तिरस्करणीप्रसेत्यमरः [ पड्दा ]

विरुद्धः ॥ अथ बिल्वमात्रं वेसवारीकृतं मांसपिंडं तन्मात्रेणैवौषधपिंडेन संसृष्टैरेरंडपटोलपत्रैः स्नेहनादिषु क्रमाद्वेष्टयित्वा कुशमुंजसूत्रान्यतमेन वेष्टयेत् ॥ मृत्प्रलेपनं चात्र द्व्यंगुलोत्सेधं कृत्वा धवधन्वनमधूकन्यग्रोधकाश्मर्यराजादनार्जुननक्तमालपाटलीनामन्यतमैः काष्ठैः शकृता वा गोमहिषयोः पचेत् ॥ अग्निवर्णं चैनमपनीय विगतमृत्सूत्रपत्रं कृत्वा वस्त्रेण पीडयेत् ॥ तेन रसेन सायं तर्पणवत्पूरयेन्नेत्रे ॥ धारयेच्च स्निग्धे शतद्वयं मात्राणां लेखने शतं प्रसादने त्रीणि शतानि ॥ तर्पणवदेव धूमपानं प्रसादनवर्जं ॥ सुखोष्णौ च पूर्वौ ॥ शीतः प्रसादनः पुटपाकस्त्वेकाहं द्व्यहं त्र्यहं वा योज्यः ॥ द्विगुणश्च तर्पणपुटपाकयोः परिहारः ॥ बद्धाक्षश्च मालतीमल्लिकाकुसुमैर्निशां निवसेत् ॥ तथा पक्वातिसारेऽपि पुटपाकस्यायमेव विधिरिति ॥ भवंति चात्र ॥ सेकेंऽजने तर्पणे च पुटपाके च ये गदाः ॥ जायेरन्विधिविभ्रंशाद्यथास्वं तान्प्रसाधयेत् ॥ इति तर्पणपुटपाकविधिर्नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

अथातो यंत्रशस्त्रविधिमध्यायं व्याख्यास्यामः ॥ मनःशरीरबाधकराणि शल्यानि ॥ तेषां नानाविधानां नानाप्रदेशविनिविष्टानामाहरणेऽभ्युपायो यंत्राण्यर्शोभगंदरादिषु च शस्त्रक्षाराग्न्यवचारणे शेषांगरक्षणे च ॥ तथा बस्तिप्रणयनादौ शृंगालाबुघटिकादयो जांबवौष्ठादीनि ॥ अन्यान्यपि चानेकरूपाण्यनेककार्याणि स्वस्थातुरोपकरणानि ॥ अतः कर्मवशात्तेषामियत्ताऽवधारणमशक्यं ॥ अन्ये पुनरेकोत्तरं यंत्रशतमित्याचक्षते ॥ इह तु समासतः षोढा निर्दिश्यंते ॥ स्वस्तिकसंदंशतालनाडीशलाकाख्यान्यनुयंत्राणि च ॥ तत्र स्वस्तिकयंत्राणि कंकसिंहगृध्रकुररादिविविधव्यालमुखान्याकारानुगताभिधानानि ॥ प्रायशो लौहान्यष्टादशांगुलानि ॥ मसूराकारप्रांतैः कीलैरवबद्धानि मुलेंऽकुशवदावृत्तवारंगाण्यस्थिविदष्टशल्योद्धरणार्थानि ॥ तेषां सिंहव्याघ्र-

---

१ अंकुशवदावृत्तं वक्रं वारंगं ग्रहणस्थानं येषांतानि ॥

भुजंगमकरादिमुखानि दृश्यवारंगेषु शल्येषु प्रयोजयेत् ॥ इतरेषु तु यथायोगं व्रणाकारानुरोधेन कंककाककुररादिमुखानि ॥ सनिबंधनो-निर्निबंधनश्च षोडशांगुलौ संदंशौ द्वौ भवतः ॥ तौ त्वङ्मांससिरास्नायु-गतशल्योद्धरणार्थमुपदिश्येते ॥ तथाऽन्यः संदंशः षडंगुलोऽर्द्धांगुलवि-स्तृतो वक्रद्विबाहुरंगुष्ठांगुलिप्रांतसमागमाकृतिः सूक्ष्मशल्याक्षिपक्ष्म व्रणाधिमांसाहरणे ॥ तद्वच्च मुचुंडी सा तु ऋजुश्लक्ष्णा सूक्ष्मदंता सक्तद्विभुजा मूले रुचकनद्धा वलयपीडनाच्छिन्नामशेषगंभीरव्रणा-धिमांसाहरणे ॥ तालयंत्रे अपि द्वे द्वादशांगुले ॥ मत्स्यगलतालकव-देकैतालकद्वितालके[1] कर्णनाडीशल्याहरणार्थे ॥ नाडीयंत्राणि सुषिरा-ण्यनेकप्रकाराण्यनेकप्रयोजनान्यनेकतोमुखान्येकतोमुखानि च भवं-ति ॥ स्रोतोगतशल्यदर्शनाहरणार्थं रोगदर्शनार्थं क्रियासौकर्यार्थमा-चूषणार्थं चेति ॥ तानि स्रोतोद्वारपरिणाहानि यथायोगप्रदीर्घाणि च कुर्यात् ॥ कंठशल्यदर्शनार्थं नाडीं दशांगुलायतां पंचांगुलपरिणाहां ॥ द्विकर्णस्य तु वारंगस्य संग्रहार्थं त्रिच्छिद्रमुखां नाडीं तत्प्रमाणतः कुर्या-त्॥तथा चतुष्कर्णस्य पंचच्छिद्रमुखां ॥ शल्यनिर्घातनीं तु पद्मकर्णि-काकारशीर्षां द्वादशांगुलां त्र्यंगुलसुषिरां॥अर्शोयंत्रं त्रिविधं ॥ तल्लौ-हं दांतं शार्ङ्गं वार्क्षं वा गोस्तनाकारं चतुरंगुलायतं हस्ततलायतमेकं पंचांगुलानि परिणाहेन पुंसां ॥ षडंगुलानि स्त्रीणां ॥ द्विच्छिद्रं दर्श-नार्थमेकच्छिद्रं कर्मणि ॥ तथाहि ॥ सुखेन दर्शितं शस्त्रक्षाराग्न्यनति-क्रमश्च छिद्रं तु त्र्यंगुलायतमंगुष्ठोदरविस्तारं॥यदंगुलमवशिष्टं तस्या-धोऽर्द्धांगुलमुपरि तथाऽर्द्धांगुलोच्छ्रितोवृत्तकर्णिकं॥तृतीयं तु तादृशमे-व शम्याख्यं पार्श्वच्छिद्ररहितं पीडनार्थं॥भगंदरे तु छिद्रादूर्ध्वमोष्ठमप-

---

[1] अत्र तालशब्देन प्रदेशउच्यते ॥ तेन एकतालमेकप्रदेशो यस्यतदेकतालं॥ द्वे ताले प्रदेशौ यस्यतद्वितालकं ॥ एतेन मत्स्यशकलवत्प्रतनु मखैकप्रदेशमेकतालं ॥ मत्स्य शकल-वत्प्रतनुमुखद्विप्रदेशं द्वितालमित्युक्तं ॥ परिणाहस्तु कर्णादिप्रवेशी ज्ञेयइतिहेमाद्रिः

णीय कुर्वीत॥तद्वच्च घ्राणार्शोऽर्बुदयंत्रं नाड्याकारं द्व्यंगुलायतमेकच्छिद्रं प्रदेशिनीपरिणाहं ॥ तथाऽगुलित्राणकमंगुलिप्रवेशनं किंचित्स्थूल-वृत्तौष्ठमूर्ध्वाधश्छिद्रं गोस्तनाकृति चतुरंगुलं दांतं शार्ङ्गं वार्क्षं वा ॥ तत् दृढेन सूत्रेण मणिबंधप्रतिबद्धमास्यविस्रावणे योज्यं ॥ योनि-व्रणदर्शने यंत्रं षोडशांगुलं मध्ये सुषिरं चतुर्भिन्नं चतुःशलाकं सं-चारिण्या मुद्रयोर्ध्वं निबद्धमुत्पलमुकुलवक्त्रं मूले शलाकाऽऽक्रम-णादूर्ध्वविकासि च ॥ नाडीव्रणप्रक्षालनाभ्यंजनयंत्रे षडंगुले ब-स्तियंत्राकारे मुखतोऽकर्णिके मूलमुखयोरंगुष्ठकलायप्रवेशस्रोतसी ॥ वकोदरे नाडीमुभयतोद्वारां पिच्छनाडीं वा युंज्यात् ॥ स्नेहबस्त्यु-त्तरबस्तिप्रधमनधूममूत्रवृद्धिरुद्धमणिकप्रभृतिषु यथास्वमेव च यं-त्राण्युक्तानि ॥ शृंगं तु ह्रस्वमध्यदीर्घमष्टदशद्वादशांगुलायतं त्र्यंगु-[1]लप्रवेशमुखमग्रे सर्षपोपमच्छिद्रं तनुचर्मनद्धं चूचुकाकारं च ॥ तद्वा-तविषरक्तांबुदुष्टस्तन्याचूषणार्थं ॥ श्लेष्मरक्तचूषणार्थस्त्वलाबुः ॥ स द्वादशांगुलदीर्घोऽष्टादशांगुलपरिणाहस्त्रिचतुरंगुलवृत्तसमुच्छ्रितमु-खः परिवेष्टितप्रदीप्तकुशवल्वजपिचुगर्भश्च प्रयोज्यः ॥ तद्वदेव च मानकर्मभ्यां घटी ॥ सा तु गुल्मोन्नमनविलयनार्थं च ॥ शलाका-यंत्राण्यपि नानाकृतीनि नानार्थानि यथायोगदीर्घपरिणाहानि च भवंति ॥ तेषामेषणकर्मणी द्वे गंडूपदमुखे ॥ स्रोतोगतशल्याहरणा-र्थेऽष्टांगुलनवांगुले द्वे मसूरदलमुखे ॥ षट् शंकवः ॥ तेषां व्यूहनार्थौ द्वादशषोडशांगुलौ द्वावहिफणामुखौ ॥ तथा चालनार्थे दशद्वादशांगु-लौ शरपुंखमुखौ॥आहरणार्थे बाडिशमुखौ ॥तथा गर्भशंकुः शंकुतुल्यो ऽष्टांगुलः प्रणताग्रो मूढगर्भाहरणे ॥ तथा सर्पफणाग्रवदेकाग्रवक्त्रं त-दारव्यमश्मर्याहरणार्थं ॥ तथा दंतनिर्घातनं चतुरंगुलं शरपुंखमुखं स्थूलवृत्तप्रांतं ॥ षट् कार्पासकृतोष्णीषाणि विविधव्रणक्लेदक्षारप्र-

---

[1] अष्टांगहृदये तु ॥ त्र्यंगुलास्यं भवेच्छृंगं चूषणेऽष्टादशांगुलमित्येकमेवशृंगमुक्तं

मार्जनक्रियासु ॥ तेषामपि दूरासन्नघ्राणव्रणोपयोगिनी षट्समांगुले द्वे ॥ तद्वदेव कर्णेऽष्टांगुलनवांगुले द्वे ॥ पायौ दशद्वादशांगुले द्वे ॥ कर्णशोधनं स्रुचमुखमश्वत्थपत्राग्रं ॥ तथा क्षाराग्निकर्मार्थं जांबवौष्ठानि द्वादशदशाष्टांगुलानि क्रमाद्व्यंगुलांगुलार्द्धांगुलफलानि ॥शलाकाश्च स्थूलसूक्ष्मदीर्घ-ह्रस्वमध्याः ॥ अंत्रवृद्धावर्द्धेंदुवक्रा मध्योर्ध्वनिर्गतशलाकाग्रहणा ॥नासार्शोर्बुदयोः कोलास्थिदलमात्रमुखा खल्लीतीक्ष्णोष्ठा ॥ क्षारविषौषधप्रणिधानाय च दर्व्यस्तिस्रोऽष्टांगुला दर्व्याकाराः कनीनिकाऽनामिकामध्यमांगुलीनखपरिमाणनिम्नमुखाः ॥ तथांऽजलिकांऽजलिस्थाना ॥ उत्तरबस्त्यंजनादिषु यथायथमेवोपदिष्टानि ॥ अनुयंत्राण्ययस्कांतरज्जुचर्मांतर्वस्त्राश्ममुद्गरपाणिपादतलांगुलिजिव्हादंतनखमुखशाखावालचलोष्मकालपाकहर्षभयानि ॥ एतानि देहे सर्वस्मिन्देहस्यावयवेऽपि वा ॥ संधौ कोष्ठे धमन्यां च यथायोगं प्रयोजयेत् ॥ यंत्रकर्माणि तु निर्घातनपूरणबंधनव्यूहनवर्तनचालनविवरणपीडनमार्गशोधनविकर्षणाहरणव्यंजनोन्नमनविनमनभंजनोन्मथनाचूषणैषणदारणर्जुकरणप्रक्षालनप्रधमनांजनप्रमार्जनानि बाहुल्येन चतुर्विंशतिर्भवंति ॥ निवर्तते साध्ववगाहते च ग्राह्यं गृहीत्वोद्धरते च-यस्मात् ॥ यंत्रेष्वतः कंकमुखं प्रधानं स्थानेषु सर्वेष्वविकारि यच्च ॥ शस्त्राणि षड्विंशतिर्भवंति ॥ तद्यथा ॥ दंतलेखनमंडलाग्रवृद्धिपत्रोत्पलपत्राध्यर्द्धधारमुद्रिकाकर्तरीसर्पवक्रकरपत्रकुशपत्राटामुखांतरमुखशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूचीसूचीकूर्चखजैषणीबडिशनखशस्त्राणि॥ प्रायशश्च तानि षडंगुलानि सुध्मातावर्तितायोघटितान्युत्पलपत्रनीलानि सुग्रहाणि सुरूपाणि सुधाराणि सुसमाहितमुखाग्राण्यकरालानि प्रत्येकं च प्रायो द्विशाणि स्वप्रमाणार्द्धचतुर्थभागफलानि तानि व्याधिदेशवशात्प्रयुंजीत ॥

---

१ शुष्कमलशोधनार्थं

॥ तेषां नामभिरेवाकृतयः प्रायेण यंत्रवद्व्याख्याताः ॥ तत्र द्वयमाद्यं लेखने ॥ वृद्धिपत्रादीनि त्रीणि पाटने चत्वारि भेदने ॥ मंडलाग्रादीन्यष्टौ छेदने ॥ कुशपत्रादीनि पंच प्रच्छाने ॥ कुठारिकादीनि षट् व्यधने ॥ तेषामाराव्रीहिमुखे भेदने छेदने ॥ सूच्यः सीवने ॥ सूचीकूर्चः कुट्टने ॥ खजो मथने ॥ एषण्येषणे भेदने च ॥ बडिशो ग्रहणे ॥ नखशस्त्रमुद्धरणे छेद्यभेद्यलेख्यप्रच्छानेषु च ॥ इतिद्वादशविधे कर्मण्युपयोगः ॥ विशेषतस्तु दंतलेखनं प्रबद्धवच्चतुरस्रमेकधारं दंतशर्करालेखने ॥ मंडलाग्रं प्रदेशिन्यंतर्नखविस्तृतफलं तल्लेखनविच्छेदनयोर्वर्त्मरोगोत्पन्नदंतमांसदुर्निविष्टव्रणगलशुंडिकादिषु प्रयोज्यं ॥ वृद्धिपत्रं क्षुराकारं तत्तून्नते गंभीरे वा श्वयथावृजु सूच्यग्रमिष्टं ॥ विपरीते तु पृष्ठतोऽवनतधारं ॥ अंगुलीशस्त्रकं मुद्रिकानिर्गतमुखं वृद्धिपत्रमंडलाग्रांतधारान्यतमतुल्याद्धांगुलायतधारं प्रदेशिनीप्रथमपर्वप्रमाणार्पणवृत्तमुद्रिकं दृढसूत्रप्रतिबद्धं कंठरोगेषु प्रयुज्यते ॥ कर्तरी त्रिभागपाशा व्रणस्नायुकेशसूत्रच्छेदनार्थं ॥ सर्पवक्रं वक्रमर्द्धांगुलफलं घ्राणकर्णार्शोर्बुदच्छेदनार्थं ॥ करपत्रं दशांगुलं द्व्यंगुलविस्तारं सूक्ष्मदंतं खरधारं सुत्सरुनिबद्धमस्थिच्छेदनार्थं ॥ कुशपत्राटामुखे द्व्यंगुलफले ॥ अंतर्मुखमर्द्धचंद्राकाराण्यर्द्धांगुलफलं॥ कुठारिका पृथुदंडा गोदंताकाराऽर्द्धांगुलफलाऽस्थ्याश्रितसिराव्यधार्था ॥ व्रीहिमुखमध्यर्द्धांगुलफलं मांसलप्रदेशसिराव्यधार्थं वर्ध्मोदरगुल्मविद्रध्यादिव्यधनभेदनार्थं च ॥ शलाकोभयतोमुखी कुरबकमुकुलाग्रा ताम्रमयी लिंगनाशव्यधार्था ॥ आरा चतुरस्राऽर्द्धांगुलवृत्तमुखा तावत्प्रवेशा बहलकर्णपालीव्यधार्था पक्वामशोफसंदेहभेदनार्था च ॥ कर्णव्यधनं त्र्यंगुलायतमंगुलसुषिरं घनं वा यूथिकामुकुलाग्रं ॥ सूच्यस्तिस्रो वृत्ता निगूढदृढपाशाः ॥ तत्र मांसलेष्ववकाशेषु त्र्यंगुला त्र्यस्राग्रा ॥ संध्यस्थिव्रणेष्वल्पमांसेषु च द्व्यंगुला वृत्ता ॥ पक्वामाशय-

योर्मर्मसु च सार्द्धद्व्यंगुला धनुर्वक्रा व्रीहिमुखा च ॥ सूचीकूर्चो वृत्तै-
कमूलोऽग्रे सुनिबद्धसप्ताष्टसूचिकः कुष्ठश्वित्रव्यंगेंद्रलुप्तादिषु ॥ खं-
जस्त्वर्द्धांगुलायतोऽष्टकंटकमुखस्ताम्रो लौहो वा नासाभ्यंतरतः शो-
णितमोक्षणार्थः ॥ एषण्यौ द्वे सुश्लक्ष्णस्पर्शे ॥ तयोरेकाऽष्टांगुला
गतिकोशशल्यस्रावबत्सु व्रणेषु सुषिरान्वेषणे ॥ अन्या सूचीसंस्थाना
क्षारक्तसूत्रप्रतिबद्धा नाडीनां भगंदरगतीनां च भेदने ॥ बडिशो-
ऽत्यवनतमुखः सूचीतीक्ष्णाग्रो ग्रहणे गलशुंडिकामादेः ॥ नख-
शस्त्रमष्टांगुलमेकतोऽश्वकर्णमुखमन्यतोवत्सदंतमुखं सूक्ष्मशल्योद्धृतौ
॥ अनुशस्त्राणि तु जलौकःक्षाराग्निसूर्यकांतकाचस्फटिककुरुविंद-
नखशाकशेफालिकादिखरपत्रसमुद्रफेनशुष्कगोमयादीनि ॥ स्वबु-
द्ध्या च विकल्प्य विविधानि यंत्रशस्त्राणि तत्कर्माणि चोपकल्पये-
त् ॥ हस्तएव चात्र प्रधानतमस्तदधीनत्वाद्यंत्रशस्त्राणां ॥ तत्र
दीर्घन्हस्वस्थूलवक्रतनुवक्रविषमग्राह्यग्राहिशिथिलता इत्यष्टौ यंत्र-
दोषाः ॥ तथाऽऽद्याः पंच कुंठखंडखरधारताश्चेत्यष्टावेव शस्त्रदोषाः ॥
अन्यत्र करपत्रात् ॥ तत्र क्षारेण पायितं शस्त्रं शरशल्यास्थिच्छेदने-
षूदकेन मांसच्छेदने तैलेन पाटनभेदनेषु सिराव्यधस्नायुच्छेदनेषु च
प्रयुंजीत ॥ धारा पुनश्छेदनानामासूरी लेखनानामर्द्धमासुरी व्य-
धनानां विस्रावणानां च कौशिकी ॥ तेषां छेदनभेदनलेखनानां वृं-
तसाधारणे भागे प्रदेशिनीमध्यमांगुष्ठैः सुसमाहितं गृह्णीयात् ॥
वृंताग्रे विस्रावणानि ॥ प्रदेशिन्यंगुष्ठकाभ्यां हस्ततलप्रच्छादितवृं-
ताग्रं व्रीहिमुखं मुखे ॥ मूलेष्वाहरणार्थानि ॥ पाशस्योपरि मध्ये
संदंशं कर्तरीं च ॥ शेषाण्यपि यथायोगं क्रियासौकर्येण ॥ निशा-
नी तु तेषां सुश्लक्ष्णशिलिका माषमुद्गप्रभा ॥ धारासंस्थापनं च
शाल्मलीफलकं ॥ नचाधिगतशास्त्रोऽप्यकृतयोग्यः सुबहुशो वाऽप्य-

१ अकृताभ्यासः

दृष्टकर्मा शस्त्रकर्मणि प्रवर्त्तेत सिरास्नायुममर्मादिन्यासत्वाद्देहस्य ॥ तस्मात्सरोमचर्मपुष्पफलालाबुत्रपुसोदकपंकपूर्णदृतिबस्तिवध्र्म्ममांसपेशिकोत्पलनालादिषु यथार्हमाहरणादियोग्यां कुर्यात् ॥ तथा षट्पार्श्वस्रोतस्यंभोभिः पूर्णेन नेत्रेण बस्तिपीडनयोग्यां ॥ अपिच ॥ पुस्तकारी भिषग्बुभुत्सुः पुरुषं संपूर्णगात्रमविषहतमदीर्घव्याधिपीडितं निष्कृष्टान्त्रमवहंत्यामापगायां मुंजवल्वजवेष्टितं पंजरस्थमप्रकाशे देशे कोथयेत् ॥ तं सम्यक् प्रकुथितं चोद्धृत्यायतदेहं कृत्वोशीरवेणुकूर्चादीनामन्यतमेन शनैः शनैरवघृष्य त्वगादीन् सर्वानेवबाह्याभ्यंतरानंगसिरास्नाय्वादीनवयवानाचार्योपदर्शितेनागमेन चक्षुषा च लक्षयेत् ॥ इति शास्त्रेण यद्दृष्टं दृष्टं प्रत्यक्षतश्च यत् ॥ समागतं तदुभयं भूयो ज्ञानं विवर्द्धयेत् ॥ स्यात्सचांगुलविस्तारः सुघनो द्वादशांगुलः ॥ क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ विन्यस्तपाशः सुस्यूतः सांतरोर्णास्थशास्त्रकः ॥ शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः ॥ ॥ इति यंत्रशस्त्रविधिर्नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अथातो जलौकोविधिमध्यायं व्याख्यास्यामः ॥ ॥ नृपाढ्यभीरुसुकुमारबालस्थविरनारीणामसृग्विस्रावणाय जलौकसो योजयेत् ॥ तास्तु द्विविधाः सविषा निर्विषाश्च ॥ तत्र दुष्टांबुसर्पमंडूकमत्स्यादिशवकोथमूत्रपुरीषजा रक्तश्वेतातिकृष्णतनुस्थूलचपलपिच्छिलाः स्थूलमध्यारोमशाः शक्रायुधवद्विचित्रोर्ध्वराजीचिता वा सविषाः ॥ तद्दंशाद्दाहशोफपाककंडूपिटिकाविसर्पज्वरमूर्च्छाश्विश्रोत्पत्तिः ॥ तत्र विषपित्तरक्तहरां क्रियां कुर्वीत ॥ पद्मोत्पलसौगंधिकादिसुगंधविमलविपुलसलिलशैवालजाःशैवालश्यावा निलोर्ध्वराजयो वृत्ताश्च निर्विषाः ॥ सर्वासां च परं प्रमाणमष्टादशांगुलानि॥ तत्र चतुःपंचषडंगुला नृषु योजयेत् ॥ गजवाजिष्वपराः ॥ ताः सुकुमारास्तनुत्वचो ऽल्पशिरस्का

---

१ भिषग्बुभुत्सुरितिपाठः

च्छ्हदधरकायाश्च स्त्रियः॥ विपरीताः पुमांसोऽर्द्धचंद्राकृतिपुरोवृत्ताश्च॥ तत्र बहुदोषेषु चिरोत्थितेषु चामयेषु पुमांसो योजयितव्याः ॥ स्त्रियो विपरीतेषु॥जलौकसस्त्वार्द्रचर्माद्युपायैर्गृहीत्वा सुरभिपंकगर्भे नवे घटे स्थापयेत् ॥ शृंगाटककसेरुकशालूकशैवालमृणालवल्लूरमृत्स्नापुष्करबीजचूर्णं स्वादुशीतस्वच्छं च तोयमन्नपानार्थे ताभ्यो दद्यात् ॥ लालादिकोथपरिहारार्थमेव च त्र्यहात्र्यहात्पूर्वमन्नपानमपनीयान्यत्प्रक्षिपेत् ॥ पंचाहाच्च तद्विधएव घटांतरे ताः संचारयेत् ॥ तासां तु दुष्टशोणितासम्यग्वमनात्प्रततपातनाच्च मूर्च्छा भवति ॥ तासामंभोभिः पूर्णभाजनस्थानामचेष्टयाऽऽहारानभिलाषेण च ज्ञात्वा ता विवर्जयेत् ॥ इतरास्तु हरिद्रासर्षपकल्कांभसि मुक्तपुरीषा अवंतिसोमे तक्रे वा पुनश्च समाश्वासिता जले सुखोपविष्टस्य सन्निविष्टस्य वा मृद्गोमयचूर्णाभ्यामनुसुखं विरूक्ष्य दंशादेशं योजयेत् ॥ अलगंतीषु क्षीरघृतनवनीतरुधिरान्यतमबिंदून्न्यसेत्प्रच्छेद्वा ॥ अश्वखुरवच्च वक्त्रं निवेश्योन्नतस्कंधा दशंति यदा च शिशुवच्छ्वसंत्याशिरःस्पंदोर्मिवेगैः पिबंति तदा मृदुवाससा प्रच्छादयेत् ॥ सेचयेच्चांभसामल्पाल्पं ॥ यथा च हंसः क्षीरोदकात्क्षीरमादत्ते ॥ तद्वदुत्क्लिष्टे रक्ते जलौकाः प्राग् दुष्टमसृक् ॥ यदा च तद्दंशे तोदः कंडूर्वा तदा शुद्धरक्तरक्षणार्थमपनयेत् ॥ लौल्याच्च दंशममुंचंत्याः क्षौद्रं लवणचूर्णं वा मुखे दद्यात् ॥ पतितां तु तंदुलकंडनोपदिग्धगात्रां तैललवणाक्तमुखीं पुच्छादामुखमनुलोमं शनैः पीडयन् सम्यग्वामयेत् ॥ ततः पूर्ववत्संनिदध्यात् ॥ सप्तरात्रं च ताः पुनर्न पातयेत् ॥ अशुद्धे तु रक्ते मधुना गुडेन वा दंशान्किंचिद्विघट्टयन् स्रावयेत् ॥ स्रुतरक्तस्य च सद्यो दंशं शीताभिरद्भिः प्रक्षाल्य सर्पिःपिचुनाऽवगुंठयेत् ॥ स्थिररक्तं चोत्क्लिष्टशोणितशेषप्रसादनाय कषायमधुरशिशिरैः सघृतैः प्रदेहैः प्रदिह्यात् ॥ तत्र योगादीन् सिराव्यधवदुपलक्षयेत्प्र-

तिकुर्वीत च ॥ दुष्टरक्तापगमाच्छ्वयथुशैथिल्यं दाहरागशूलोपशमश्च ॥ रक्तं तु पित्तेन दुष्टमलाबुघटिकाभ्यां न निर्हरेदग्निसंगाद्वातकफाभ्यां च दुष्टं निर्हरेत् ॥ तथा कफेन न शृंगेण स्कन्नत्वाद्वातपित्ताभ्यां तु दुष्टं निर्हरेत् ॥ अथ प्रच्छाद्याग्रं तनुवस्त्रपटलावनद्धप्रांतेन शृंगेण चूषेत् ॥ तथा प्रदीप्तपिचुगर्भाभ्यामलाबुघटिकाभ्यामिति ॥ भवति चात्र ॥ गात्रं बध्वोपरिदृढं रज्वा पट्टेन वा समं ॥ स्नायुसंध्यस्थिमर्माणि त्यजन्प्रच्छानमाचरेत् ॥ अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ न गाढघनतीर्यग्भिर्न पदे पदमाचरेत् ॥ प्रच्छानेनैकदेशस्थं सुप्तं शृंगादिभिर्हरेत् ॥ ग्रथितं तु जलौकोभिरसृग्व्यापि सिराव्यधैः ॥ प्रच्छानं पिंडिते वा स्यादवगाढे जलौकसः ॥ त्वक्स्थेऽलाबुघटीशृंगं सिरैव व्यापकेऽसृजि ॥ वातादिधाम वा शृंगजलौकोऽलाबुभिः क्रमात् ॥ स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ॥ सतोदकंडूः शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ॥ इति जलौकोविधिर्नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

अथातः सिराव्यधविधिमध्यायं व्याख्यास्यामः ॥ बहवो हि रक्तावसेचनोपायाः प्रागभिहितास्तेषामन्येषां च विरेकादीनामुपक्रमाणां तत्साध्येष्वामयेषु सिराव्यधः प्रधानं ॥ अमुना हि ते समूलाः शोषमायांति केदारसेतुभेदेन शाल्यादयइव ॥ तथाच ॥ सिराव्यधश्चिकित्सार्द्धं संपूर्णं वा चिकित्सितं ॥ शल्यतंत्रे स्मृतो यद्वद्बस्तिः कायचिकित्सिते ॥ यथा रक्तमधिष्ठानं विकाराणां विकारिणां ॥ अन्यत्र हि तथा दूष्यं कर्मेदं प्रथमं ततः ॥ तत्रांबुशारीरमाहाररसारभूतं रसाख्यमविकृतमविकृतेन तेजसा रंजितमिंद्रगोपाकारं च शशशोणितगुंजाफलालक्तकपद्मसुवर्णवर्णं धौतं च विरज्यमानं मधुरमीषल्लवणं स्निग्धमशीतोष्णं गुरु पित्तैकचयकोपोपशमनं सौम्याग्नेयं प्रकृत्या रक्तमाहुस्तदा दूष्यं ॥ दोषमिति केचित् ॥ उभयात्मकमन्ये ॥ तत्रैवं-

विधमेव विधिवदाहारविहाराभ्यासाद्विशुद्धं बलवर्णसुखायुषां योनि॥ इतरथा पुनः शरत्कालस्वभावादेव वा प्रदुष्टमभिष्यंदाधिमंथशुक्रार्मतिमिररक्तराजीशिरस्तोदभेददाहकंडूकर्णरोगमुखपाकपूतिघ्राणास्योपदेहत्वग्गुलमप्लीहविद्रधिवीसर्पज्वररक्तपित्तकुष्ठपिटिकाश्लीपदोपदंशशोफवातशोणितरक्तमेहक्षुद्ररोगाग्निस्वरनाशांगगौरवमादारोचकाम्लोद्गारलवणास्यताक्रोधमोहस्वेदमदमूर्च्छासन्यासकंपतंद्रादीनां॥ ये च शीतोष्णस्निग्धरूक्षाद्यैः सर्वदोषप्रतिपक्षैः सम्यगप्युपक्रांताः साध्या अपि न सिध्यंति ते च रक्तप्रकोपजाः॥ तस्मात्तेष्वत्युद्रिक्तरक्तविस्रावणाय यथास्वं सिरां विध्येत्॥ न तु स्नेहपीतकृतपंचकर्मान्यतमगर्भिणीसूतिकाजीर्णिकामलाक्लीबोनषोडशातीतसप्ततिवर्षाभिघातातिस्रुतरक्तादुष्टरक्तातिस्निग्धास्विन्नातिस्विन्नाक्षेपकपक्षाघातातिसारछर्दिश्वासकासोदररक्तपित्तार्शःपांडुरोगसर्वांगशोफपीडितानां॥ न चाऽग्रधनीयायंत्रितानुत्थिताः सिरा न तिर्यङ्न चातिशीतोष्णवाताभ्रेषु॥ तत्र स्नेहपीतादिषु सम्यग्विद्धा अपि सिरा न स्रवंत्यतिस्रवंति वा॥ सम्यक्स्निग्धस्विन्नस्य पुनर्द्रवीभूता[1] दोषाः शोणितमनुप्रविष्टाः सम्यक् प्रच्यवंते॥ न त्वेवं निषेधो विषसंसृष्टोपसर्गात्ययिकव्याधिषु॥ प्रति रोगे तु व्यधं प्रति विभागः॥ शिरोनेत्ररोगेषु ललाटस्था उपनास्या ऽपांग्या वा॥ कर्णरोगेषु परितः कर्णौ॥ नासारोगेषु नासाग्रे प्रतिश्याये तु नासाललाटस्थाः॥ मुखरोगेषु जिह्वौष्ठतालुहनुगाः॥ जत्रूर्ध्वं ग्रंथिषु ग्रीवाकर्णशंखमूर्द्धगाः॥ अपस्मारे हनुसंधिमध्यगाः॥ उन्मादे तूरोपांगललाटगाः॥ विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनांतरस्थाः॥ चतुर्थके स्कंधाधोगतानामन्यतरपार्श्वाश्रयां॥ तृतीयकेंऽसयोरंतरे त्रिकसंधिमध्यगतां॥ प्रवाहिकायां शूलिन्यां श्रोण्योः समंताद्व्यंगुले॥ निर्दूसोपदंशशुक्रव्यापत्सु मेढ्रे॥ मलगंडऊरुमूलसंश्रितां॥ गृध्रस्यां जानु-

[1] पुनर्द्रवीभूतादितिपाठः

संधेरुपर्यधो वा चतुरंगुले ॥ अपच्यामिंद्रबस्तेरधस्ताद्व्यंगुले ॥ क्रोष्टुकशीर्षसक्थिवातरुजासु गुल्फस्योपरि चतुरंगुले ॥ श्लीपदेषु यथास्वं वक्ष्यते ॥ पाददाहहर्षचिप्पवातशोणितवातकंटकविपादिकापाददारीप्रभृतिषु पादरोगेषु क्षिप्रमर्मण उपरिष्टात् द्व्यंगुले ॥ एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ विशेषतस्तु वामबाह्वाभ्यंतरतो बाहुमध्ये प्लीहोदरे ॥ एवमेव च दक्षिणबाहौ यकृदाख्ये ॥ तथा कासश्वासयोरप्याविशंति ॥ गृध्रस्यामिव विश्वाच्यां ॥ बाहुशोषावबाहुकयोरप्येके ॥ अदृश्यमानासु चैतास्वतिप्रवृद्धव्याधेरन्यस्यन्याभ्युक्तानामपि यथासन्नं व्यधः ॥ प्रागेव चोपकल्पयेच्छयनासनोदकुंभवस्त्रपट्टादि ॥ तथा यथालाभं च तगरैलाशीतशिवकुष्ठपाठाविडंगभद्रदारुत्रिकटुकागारधूमहरिद्रार्कांकुरनक्तमालचूर्णमसृक्स्रावणाय ॥ असृक्स्थापनाय च रोध्रमधुकप्रियंगुपत्तंगगैरिकरसांजनशाल्मलीशंखयवगोधूममाषचूर्णं ॥ वटाश्वत्थाश्वकर्णपलाशबिभीतकसर्जार्जुनधन्वनधातकीसालसारारिमेदतिंदुकत्वगंकुरनिर्यासश्रीवेष्टकमृत्कपालमृणालांजनचूर्णं ॥ क्षौममषीलाक्षासमुद्रफेनचूर्णं वा तथाऽन्यच्चातिस्रुतरक्तव्यापत्प्रतीकारोपकरणं ॥ सज्जोपकरणो हि न वैद्यो मोहमाप्नोति ॥ अथ कृतस्वस्त्ययनमातुरं व्याधिबलसात्म्याद्यपेक्ष्य स्निग्धं जांगलरसं यवागूं च पाययित्वा मुहूर्तमात्रमाश्वासितं पूर्वाह्णेऽपराह्णे वाऽगारातपोष्णबाष्पान्यतमस्विन्नं जानूच्छ्रिते मृदावासने जानुनिहितकूर्परं समस्थितपादं प्रत्यादित्यमुपवेशयेत् ॥ केशांते च प्लोतचर्मवल्कपट्टान्यतमेन बध्नीयात् ॥ ततश्चायतेन वस्त्रांगुष्ठगर्भेण मुष्टिद्वयेनातुरो यथास्वं मन्ये निपीडयेद्दंतैश्च दंतान् गंडौ चाध्मापयेत् ॥ पुरुषश्चैनं पृष्ठतो वस्त्रकृकाटिकांतरन्यस्तवामप्रदेशिनीको नातिगाढं ग्रीवायां परिक्षिप्य वेष्टयन्वस्त्रं प्राणानबाधमानो यंत्रयेत् ॥ इत्येषोऽनर्मुख-

वर्ज्यानां सिराणां व्यधने यंत्रविधिः ॥ ततश्चास्य वैद्योऽगुष्ठनिष्पीडितया मध्यमांगुल्या सिरां ताडयेत् ॥ उत्थितां च स्पंदमानां स्पर्शादभिलक्ष्य वामहस्तेन कुठारिकामूर्ध्वदंडां कृत्वा सिरामध्ये न्यस्य लक्षयित्वा च तथैव मध्यमांगुल्या ताडयेदंगुष्ठोदरेण वा पीडयेत् ॥गूढबहलत्वक्प्रतिच्छन्नायामंगुष्ठापीडनादुन्नममुपलक्षयेत्॥उत्काशनेन क्रोधसंरंभेण चापूर्यते सिराः ॥ अंगुष्ठेन तु नासाग्रमुन्नमय्य व्रीहिमुखेनोपनासिकां विध्येत् ॥ उन्नमितविदष्टाग्रजिव्हस्याधो जिव्हायाः ॥ विवृतास्यस्य तालुनि दंतमूले च ॥ ग्रीवासिरासु स्तनयोरुपरि यंत्रं ॥ उदरोरसोः प्रसारितोरस्कस्योन्नमितशिरसः ॥ बाहुभ्यामालंबमानस्य पार्श्वयोः ॥ उन्नमितमेंढ्रस्य मेंढ्रे ॥ श्रोणीपृष्ठस्कंधेषून्नमितपृष्ठस्यावाकृशिरस उपविष्टस्य ॥ विश्वाचीगृध्रस्योरनाकुंचिते कूर्परे जानुनि वा सुखोपविष्टस्य गूढांगुष्ठबद्धमुष्टेर्व्यधनीयप्रदेशस्योपरि चतुरंगुले प्लोताद्यन्यतमेन बध्वा हस्तसिरां ॥ एवमेकपादं सुस्थितं स्थापयित्वाऽन्यपादमीषत्संकुचितं तस्योपरि निधाय जानुसंधेरधो हस्ताभ्यामागुल्फं निपीड्य पूर्ववद्बध्वा पादसिरां व्यधेत् ॥ तत्रतत्र च तैस्तैरुपायैर्विकल्प्य यंत्रयेत् ॥ तत्र मांसलेष्ववकाशेषु यवमात्रं व्रीहिमुखेन ॥ अतोऽन्यथाऽर्द्धयवमात्रं व्रीहिमात्रं वा ॥ अस्थ्नामुपरि कुठारिकयाऽर्द्धयवमात्रं ॥ सर्वत्र चानुत्तानावगाढमृज्वसंकीर्णं समं मर्माद्यनुपघाति सिरामध्ये शस्त्रमाशु पातयेत् ॥ एकप्रहाराभिहता धारया या स्रवेदसृक् ॥ मुहूर्तं रुद्ध्वा तिष्ठेच्च सम्यग्विद्धेति तां विदुः ॥ अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ॥ सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ॥ सम्यग्विद्धानामपि च सिराणामवहनकारणानि मूर्छा भयं यंत्रशैथिल्यमतिगाढत्वमत्याशितताक्षामत्वं कुंठशस्त्रव्यधो मूत्रितोच्चारितत्वं दुःखिन्नता कफावृतव्रणद्वारता चेति ॥ अथाप्रवृत्तिकारणं यथास्वमुपलक्ष्य प्रतिकुर्यात् ॥ तग-

शादिचूर्णेन च तैललवणप्रगाढेन सिरामुखमवचूर्णयेत् ॥ पृष्ठमध्ये चातुरं पीडयेत् ॥ एवं साधु वहति ॥ सम्यक्प्रवृत्ते तु कफानिलोपशमरक्ताविच्छेदार्थमुष्णलवणतैलबिंदुभिः सिरामुखं सिंचेत् ॥ अग्रे स्रवति दुष्टास्रं कुसुंभादिव पीतिका ॥ सम्यक् स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ यस्य तु स्रवति रक्ते मूर्छा जायते तस्य विमुच्य यंत्रं शीतसलिलार्द्रपाणिस्पर्शेन व्यजनवायुना श्रोत्रसुखेन वचसा समाश्वासयन्नुपशमय्य मूर्छां पुनः स्रावयेत् ॥ पुनःपुनर्मूर्छत्यपरेद्युरुत्र्यहे वा ॥ परमं तु रुधिरावसेचनप्रमाणं प्रस्थः ॥ अतोऽन्यथा व्याधिदेहर्तुबलमपेक्षेत ॥ तत्र फेनिलमरुणं श्यावमच्छं रूक्षमस्कंदि कषायरसं लोहगंधि वेगस्रावि शीतं च रक्तं वातात् ॥ गृहधूमांजनोदककृष्णं पीतं हरितं विस्रं मत्स्यगंधि कटुस्वान्मक्षिकाऽनिष्टमौष्ण्यादस्कंदि सचंद्रकं गोमूत्राभं पित्तात् ॥ कोविदारपुष्पगैरिकोदकपांडु शीतं स्निग्धं स्कंदि घनं पिच्छिलं तंतुमद्व्रणद्वारावसादि लवणरसवसागंधि च कफात् ॥ द्वंद्वसंकीर्णं संसर्गात् ॥ कंसेनीलमाकुलं दुर्गंधं च सन्निपातात् ॥ शुद्धमुक्तं प्राक् ॥ ततः स्रुतरक्तस्य व्यधमनुलोममंगुष्ठेनापरुध्य शनैर्यंत्रमपनीयाश्वासयेत् ॥ सतैलं च प्लोतं सिरामुखे दत्वा बध्नीयात् संवेशयेच्चैनं ॥ अतिष्ठति तु रक्ते सिरामुखं संधातुं पूर्वोक्तैश्चूर्णैरवचूर्ण्यांगुल्यग्रेण पीडयेत् ॥ शाल्मलीपोदकापिच्छांवा व्रणमुखे दत्वा गाढं बध्नीयान्मधूच्छिष्टप्रलिप्तं वा पट्टं ॥ शीतांबुना वा सिंचयेत् ॥ शीतमधुरकषायान्नपानैः सेकप्रदेहप्रवातवेश्मभिर्वा स्कंदनायोपचरेत् ॥ पद्मकादिकार्थं शर्करामधुमधुरं क्षीरमिक्षुरसमेणहरिणाजोरभ्रमहिषवराहाणामन्यतमस्यसिरां विध्वा रुधिरमामं घृतभृष्टं वा पानं दद्यात् ॥ तेनैव वा दर्भपादमृदितेनानुवास-

१ वमने च विरेके च तथा शोणितमोक्षणे ॥ सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणइति २ कंसं कास्यं

येत् ॥ स्निग्धैश्च यूषरसैर्भोजयेत् ॥ व्यधादनंतरं वा पुनस्तामेव सिरां विध्येत् ॥ सर्वथा चानवतिष्ठमाने पाचनाय क्षारं दद्यात् ॥ संकोचयितुं वा सिरामुखं तप्तशलाकया दहेत् ॥ न च क्षणमप्युपेक्षेत ॥ क्षीणरक्तस्य हि वायुर्मर्माण्युपसंगृह्य मूर्च्छासंज्ञानाशशिरःकंपभ्रमम न्यास्तंभापतानकहनुभ्रंशहिध्मापांडुत्वबाधिर्यधातुक्षयाक्षेपकादीन्करोति मरणं वा ॥ प्राणाः प्राणभृतां रक्तं तत्क्षयात् क्षीयतेऽनलः ॥ वर्द्धतेचानिलस्तस्माद्युक्त्या बृंहणमाचरेत् ॥ अशुद्धं तु रक्तमपराह्णेऽन्येद्युर्वा पुनः स्रावयेत् ॥ ततोऽपि शेषं सर्वथा वाऽस्य विस्राव्यरक्तस्य शीतसेकप्रदेहविरेकोपवासस्निग्धमधुरान्नपानैः प्रसादयेत् ॥ मासमात्रं वा स्नेहादिभिरुपचर्य पुनर्विध्येत् ॥ दुर्व्यधातिव्यधकुट्टिततिर्यग्व्यधादेर्व्यधदोषाद्यापदो याः स्युस्ता यथास्वं साधयेदिति ॥ भवति चात्र ॥ उन्मार्गगा यंत्रनिपीडनेन स्वस्थानमायांति पुनर्न यावत् ॥ दोषाः प्रदुष्टा रुधिरं प्रपन्नास्तावद्धिताहारविहारभाक् स्यात् ॥ नात्युष्णशीतं लघुदीपनीयं रक्तेऽपनीते हितमन्नपानं॥ तदा शरीरं ह्यनवस्थितासृगग्निर्विशेषादिति रक्षितव्यः ॥ प्रसन्नवर्णेंद्रियमिंद्रियार्थानिच्छंतमव्याहतपक्तृवेगं ॥ सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदंति ॥ ॥ इति सिराव्यधविधिर्नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ॥ ॥ त्रिविधा गतिः शल्यानामूर्ध्वमधस्तिर्यक्च ॥ सा पुनः प्रत्येकमृजुवक्रभेदेन द्विधा ॥ तत्र श्यामं पिडिकाचितं शोफवेदनावंतं मुहुर्मुहुः शोणितास्राविणं बुद्बुदवदुद्गतं मृदुमांसं च व्रणं सशल्यं विद्यात् ॥ विशेषतस्तु त्वग्गते शल्ये विवर्णः शोफो भवत्यायतः कठिनश्च॥ मांसगते शोफाभिवृद्धिः शल्यमार्गानुपसंरोहः पीडनासहिष्णुता चोषः पाकश्च ॥ पेश्यंतरस्थे शोफवर्जं मांसप्राप्तवत् ॥ सिरागते सिराध्मानं

शूलं च ॥ स्नायुगे स्नावजालाक्षेपणं संरंभश्चोग्ररुक् ॥ स्रोतोगते स्रोतसां स्वकर्मगुणहानिः ॥ धमनीस्थे सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छत्यंगपीडा हृल्लासश्च ॥ अस्थिगते विविधा वेदनाः शोफश्च ॥ संधिगतेऽस्थिवच्चेष्टोपरोधश्च ॥ अस्थिसंधिगतेऽस्थिपूर्णता संघर्षौ बलवांश्च ॥ कोष्ठगते त्वाटोपानाहौ मूत्रपुरीषाहारदर्शनानि च व्रणमुखाद्भवंति ॥ मर्मगते मर्मविद्धवद्यथायथं चोपदिष्टैः परिस्रावैरुवगादिषु शल्यमुपलक्षयेत् ॥ सूक्ष्मगतिषु शल्येष्वेतान्येव लक्षणान्यविस्पष्टानि भवंति ॥ शुद्धदेहानामनुलोमसन्निविष्टान्युपरुह्यंते ॥ दोषप्रकोपव्यायाभिघातेभ्यश्च पुनः प्रचलितानि पुनराबाधयंति ॥ तत्र त्वक्प्रनष्टे स्निग्धस्विन्नायां मृन्माषयवगोधूमगोमयचूर्णमर्दितायां त्वचि यत्र संरंभो वेदना वा भवति यत्र वा स्त्यानं सर्पिर्निहितमाशु विलीयते प्रलेपो वा विशुष्यति तत्र शल्यं जानीयात् ॥ मांसप्रनष्टे स्नेहादिभिः क्रियाभिरातुरमुपपादयेत् कर्शितस्य च शिथिलीभूतमनवबद्धं क्षुभ्यमाणं यत्र संरंभं वेदनां वा जनयति तत्र शल्यं ॥ एवं कोष्ठास्थिपेशीविवरेष्वपि ॥ सिरास्रोतोधमनीस्नावप्रनष्टे खंडचक्रं रथमश्वयुक्तमारोप्यातुरं विषमेऽध्वनि शीघ्रं नयेत् ततः संरंभादिभिर्जानीयात् ॥ संधिप्रनष्टे स्नेहस्वेदोपपन्नान् संधीन् प्रसारणाकुंचनबंधनपीडनैरुपचरन् पूर्ववदवगच्छेत् ॥ अस्थिप्रनष्टे स्निग्धस्विन्नान्यस्थीनि बंधनपीडनाभ्यां भृशमुपचरंस्तद्वदुपलक्षयेत् ॥ मर्मप्रनष्टेऽप्यनन्यभावान्मांसादिभ्यो मर्मणामुक्तं परीक्षणं भवति ॥ सामान्यलक्षणं तूच्छ्रितहस्तिस्कंधाश्वद्रुमारोहणद्रुतयानलंघनप्लवनव्यायामैर्जृंभोद्गारकासक्षवथुष्ठीवनहसनप्राणायामैर्मलशुक्रोत्सर्गैर्वा यत्र संरंभो वेदना वा भवति यत्र वा स्वल्पेऽप्यायासे स्वापो गौरवं घट्टनं शोफो वा स्यात्तत्र शल्यमादिशेत् ॥ समासतश्चतुर्विधं शल्यं भवति वृत्तद्विस्त्रिचतुष्कोणभेदेन ॥ तदवृश्यमानं व्रणसंस्थानादनुमिमीत ॥ सर्व-

शल्यानां तु महतामाहरणे द्वावेवोपायौ प्रतिलोमोऽनुलोमश्च ॥ तत्र प्रतिलोममवाचीनमानयेदनुलोमं पराचीनं ॥ तिर्यग्गतं यतः सुखाहार्यं भवति ततश्छित्त्वोपहरेत् ॥ प्रतिलोममनुत्तुंडितं छेदनीयमुखं च शल्यं न निर्घातयेत् तथा कक्षावंक्षणोरःपर्शुकांतरपतितानि नैव चाहरेत् ॥ विशल्यघ्नममंप्रविष्टं प्रनष्टं वा शोफवेदनापाकविरहितं ॥ अथ हस्तप्राप्यं शल्यं हस्तेनाहरेत् ॥ तदशक्यं यथायथं यंत्रेण ॥ तथाप्यशक्यं शस्त्रेण विशस्य ततो निर्लोहितं व्रणं कृत्वाऽग्निघृतप्रभृतिभिः स्वेदयित्वाऽवदह्य तर्पयित्वा सर्पिर्मधुभ्यां बध्वाऽऽचारिकमादिशेत् ॥ सिरास्नावलग्नं शलाकाग्रेणाभिमोच्यापहरेत् ॥ हृदयेऽभिवर्तमानं शल्यं शीतजलादिभिरुद्वेजितस्यापहरेद्यथामार्गं दुराहरं ॥ अन्यतोऽप्यवबध्यमानं पाटयित्वोपहरेत् ॥ अस्थिविवरप्रविष्टमस्थिविदष्टं वाऽवगृह्य पद्भ्यां पुरुषं यंत्रेणापकर्षयेत् ॥ अशक्यमेवं वा बलवद्भिः सुगृहीतस्य यंत्रेण वा ग्राहयित्वा शल्यं वारंगं प्रतिभुज्य वा धनुर्गुणैरेकतो बध्वाऽन्यतश्च पंचांग्या सुसंयतस्याश्वस्य वक्त्रकटके बध्नीयात् ॥ अथैनमेवं कशया ताडयेद्यथोन्नमयन् शिरो वेगेन शल्यमुद्धरति ॥ दृढां वा वृक्षशाखामवनम्य तस्यां पूर्ववद्बध्वोद्धरेत् ॥ दुर्बलं वारंगं वा कशाभिर्बध्वा ॥ श्वयथुग्रस्तवारंगमुत्पीड्य श्वयथुं ॥ अदेशोत्तुंडितमश्ममुद्गरप्रहारेण विचाल्य यथामार्गमेव ॥ कर्णवतु यंत्रेण विमृदितकर्णं कृत्वा नाडीयंत्रेण वा बहुमुखेन यथास्वमुपसंगृह्य शलाकायंत्रेणानेन वा पूर्ववदाहरेत् ॥ अनुलोममकर्णमनल्पव्रणमुखमयस्कांतेन ॥ पक्वाशयगतं विरेचनेन ॥ वातविण्मूत्रगर्भसंगं प्रवाहणेन ॥ दुष्टवातविषस्तन्यास्यविषाणादिचूषणेन ॥ कंठस्रोतोगते तु शल्ये बिसासंसक्तं सूत्रं कंठे प्रवेशयेत् ॥ अथ तद्गृहीतं विज्ञाय शल्यं सममेव सूत्रं बिसं चाक्षिपेत् ॥ बिसाभावे मृणालेष्वयमेव विधिः ॥ जातुषे तु कंठसक्ते कंठे नाडीं प्रवेशये-

स्तया चाग्नितप्तां सूक्ष्ममुखीं शलाकां ॥ अथ तां गृहीतशल्यां शीताभिरद्भिः परिषिच्य स्थिरीभूतामाहरेत् ॥ अजातुषेष्वेवमेव तप्तां जतुमधूच्छिष्टान्यतरप्रदिग्धां शलाकां ॥ मत्स्यकंटकमन्यद्वा तादृगस्थिशल्यं कंठेऽवलग्नं सूत्रेण सूत्रप्लोतेन वा वेष्टितयांऽगुल्याऽपहरेत्॥ अथवा केशोंदुकं दृढदीर्घसूत्रबद्धं द्रवोपहितं पाययेद्वामयेच्च ॥ वमतश्च शल्यैकदेशसक्तं सूत्रं सहसैवाक्षिपेत् ॥ मृदुना वा दंतधावनकूर्चेनाभिहरेत् ॥ प्रणतो वा प्रणुदेत् ॥ वालोंडे विलग्ने तद्वत्कंटकं ॥ क्षतकंठश्च त्रिफलाचूर्णं मधुघृतसितोपेतमनुकंठयन् लिह्यात् ॥ अपां पूर्णं पुरुषमवाक्शिरसमवपीडयेत्क्षुनुयाद्वामयेच्च भस्मराशौ वा निखन्यादामुखात् ॥ अन्यथा ह्युन्मार्गगाभिरद्भिराध्मानकासश्वासपीनसेंद्रियोपघातज्वरादयः श्लेष्मविकारा मृत्युश्च ॥ तत्र यथास्वं प्रतिकुर्यात्॥ ग्रासशल्यमंबुना प्रवेशयेत् स्कंधे वा मुष्टिनाऽभिहन्यात् ॥ कंठस्थं श्लेष्माणमन्नलवं वा प्रधमनोत्काशनावकाशनैर्निर्वमेत् ॥ सूक्ष्ममक्षिशल्यं लेखनोपधमनवालजलवस्त्रजिव्हाभिरपनयेत् ॥ तथा निर्भुज्य वर्त्म वर्त्मगतमपनीय चोष्णांबुबाष्पस्वेदं समधुमधुकक्वाथेन सर्पिषा च परिषेकं कुर्यात् ॥स्वयमपि च शल्यमश्रुक्षवथुकासोद्गारमूत्रपुरीषानिलैर्नयनादिभ्योंऽगावयवेभ्यः पतति ॥ कीटे कर्णस्रोतःप्रविष्टे तोदो गौरवं भरभरायणं च भवति स्पंदमाने चाभ्यधिकं वेदना ॥ तत्र सल्वणेनांबुना मधुसुक्तेन मद्येन वा सुखोष्णेन पूरणं॥निर्गते च कीटे तद्वत्सर्जनं॥तत्रैव तु मृते पाककोथक्लेदा भवंति ॥ तेषु कर्णस्रावोक्तं कुर्यात्प्रतिनाहोक्तं च॥तोयपूर्णं कर्णं हस्तोन्मथितेन तैलांबुना पूरयेत् पार्श्वावनतं वा कृत्वा हस्तेनाहन्यान्नाडचा वाऽऽचूषेदिति॥भवति चात्र॥ जातुषं हेमरूप्यादिधातुजं च चिरस्थितं॥उष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ विषाणवेणुदार्वस्थिदंतबालोपलानि तु ॥ शल्यानि न विशीर्यंते शरीरे मृन्मयानि च ॥ विषाणवेणवयस्तालदारुशल्यं चिरा-

दपि ॥ प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ॥ शल्ये मांसावगाढे चेत्तद्देशो न विद्यते ॥ ततस्तन्मर्दनस्वेदशुद्धिकर्शनबृंहणैः ॥ तीक्ष्णोपनाहपानान्नघनशस्त्रपदांकनैः ॥ पाचयित्वा हरेच्छल्यं पाटनैषणपीडनैः ॥ शल्यप्रदेशयंत्राणामवेक्ष्य बहुरूपतां ॥ तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथाऽऽहरेत्॥व्रणे प्रसन्ने प्रांतेषु नातिस्पर्शासहिष्णुषु ॥ अल्पे शोफे च तापे च निःशल्यमिति निर्दिशेत् ॥ काय एव परं शल्यं निजदोषमलाविलः ॥ शल्यशल्यं शराद्यं तु विशेषात्तेन चिंत्यते॥ ॥इति शल्याहरणविधिर्नाम सप्तत्रिंशोऽध्यायः॥३७॥

अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ॥ ॥ द्विविधेऽपि हि व्याधावुपायापेक्षे निजआगंतौ वा भेषजविषयातीते शस्त्रकर्म प्रयुज्यते ॥ स चामयः प्रायेण श्वयथुपूर्वको भवति ॥ अतः शोफावस्थस्यैव वातकफपित्तरक्तसंसर्गसन्निपातात्मकतामुपलक्ष्य पाकभयाद्यथास्वमुपवासलेपसेकासृङ्मोक्षकषायघृतपानशोधनानि प्रयुंजीत ॥ तथाप्यनुपशाम्यति प्रविलयनं ॥ अविलीयमाने चोपनाहनं ॥ तत्र शोफस्यामलक्षणमल्पताऽल्पोष्मरुजत्वं त्वक्सवर्णता स्थैर्यं च ॥ पच्यमानस्तु विवर्णो बस्तिरिवाततः संरंभशूलरागदाहोषारुचितृष्णाज्वरारतिस्पर्शासहत्वानिद्रतासमन्वितो विष्यंदयति सर्पिः शोषयति प्रदेहं सर्षपकल्कोपलिप्तइव चिमचिमायते पिपीलिकाभिरिव संसृज्यते पीड्यतइव पाणिना ऽवपाट्यतइवांगुल्या ताड्यतइव दंडेन तुद्यत इव सूचीभिर्भिद्यतइव शक्तिभिश्छिद्यतइव शस्त्रेण दश्यतइव वृश्चिकैर्दह्यतइवाग्निक्षाराभ्यां मथ्यतइवोल्मुकेन ॥पक्वे तु गतवेगत्वं प्रम्लानता त्वक्शिथिलता वलीप्रादुर्भावः पांडुता मध्योन्नततांऽगुल्यवपीडितमुक्ते प्रत्युन्नमनं बस्ताविवोदकस्य पूयस्य संचरणं कंडूसंरंभशूलाद्युपशमश्च ॥ शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ॥ रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ॥ पाकेऽतिवृत्ते सुषिरस्तनु

त्वग्दोषभक्षितः ॥ वल्लीभिराचितः श्यावः शीर्यमाणतनूरुहः॥कफजेषु तु शोफेषु केषुचिद्गंभीरत्वाद्रक्तमेव विपच्यते ॥ ततश्चास्पष्टं पक्वलिंगं भवति ॥ यत्र हि त्वक्सावर्ण्यं शीतशोफताऽल्परुजताऽश्मवच्च घनता न तत्र मोहमुपेयात्तं रक्तपाकमित्याचक्षते ॥ अथैनं सम्यक्पक्वमवधार्य भीरुवृद्धबालदुर्बलक्लीबक्षीणगर्भिणीविषार्दितशस्त्राक्षमेषु पाकोद्धतदोषेषु च पीडितेषु संधिमर्माश्रितेष्वल्पेषु वा शोफेषु तीक्ष्णोष्णद्रव्यैर्दारणं कुर्वीत ॥ इतरेषु पाटनं ॥ आमपाटने सिरास्नायुव्यापादनं शोणितातिप्रवृत्तिर्वेदनाभिवृद्धिरवदरणं क्षतविसर्पो वा स्यात् ॥ तिष्ठन्नंतः पुनः पूयः सिरास्नाय्वसृगामिषं ॥ विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ॥ यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ॥ प्राक् शस्त्राद्भोजयेदिष्टं मद्यं तीक्ष्णं च पाययेत् ॥ न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ अन्यत्र मूढगर्भोदराश्मरीमुखरोगेभ्यः ॥ अथोपहृतयंत्रशस्त्रक्षाराग्निजांबवौष्ठपिचुप्लोतपत्रसूत्रचर्मपट्टमधुस्नेहकषायालेपकल्कसेकोदकुंभीशीतोष्णोदककटाहभ्यजनादिव्रणोपयोगि सर्वोपकरणमास्तृतशयनीयमुपस्थितस्नेहवत्सवदवलंबकपुरुषमिष्टेऽहनि मुहूर्ते च द्रव्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतं भुक्तवंतमातुरं प्राङ्मुखमुपवेश्य संवेश्य च यंत्रयित्वा प्रत्यङ्मुखो वैद्यो मर्मसिरास्नायुसंध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात्सकृदेवाहरेच्छस्त्रमाशु च ॥ महत्स्वपि च पाकेषु द्व्यंगुलं शस्त्रपदमुक्तं ॥द्व्यंगुलांतरं त्र्यंगुलांतरं वा ऽभिसमीक्ष्य विवृते प्रदेशे वामप्रदेशिन्याऽन्वेषित्वा नातिविवृते गंभीरे मांसले चैषण्या विपरीते करीरादिनालेनातिसंवृते सूकरवालेन ॥ यतो गतां गतिं विद्यादुत्संगो यत्र यत्र च ॥ तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयं ॥ आयतं च विशालं च यथादो-

षो न तिष्ठति ॥ शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू ॥ अ-
संमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥ तत्र भ्रूगंडललाटाक्षिकू-
टौष्ठदंतवेष्टमन्याकंठजत्रुकक्षाकुक्षिवंक्षणेषु तिर्यक्छेद इष्टः॥ अन्यत्र
तु सिरास्नायूपघातोऽतिवेदना चिराद्व्रणसंरोहो मांसकंदी च तिर्यक्छे-
दाद्भवंति ॥ ततः शस्त्रमवचार्य शीताभिरद्भिरातुरमाश्वास्य समंता-
त्प्रतिपीड्यांगुल्या व्रणमभिप्रक्षाल्य कषायेण व्रणात्प्लोतेनांभोऽप-
नीय वेदनारक्षोघ्नैर्गुग्गुल्वगुरुसर्जरसवचागौरसर्षपहिंगुलवणनिंबपत्रैः
सघृतैर्व्रणं धूपयित्वा यथास्वमौषधेन मधुघृततिलकल्कैश्च दिग्धां व-
र्तिं प्रणिधाय कल्केन पूरयित्वा नातिभृष्टयवसक्तुभिघृताक्तैभोजनांते-
ऽभसा दक्षिणांगुलीभिः सुमर्दितैरवच्छाद्य घनां कवलिकां दत्वा सव्य-
दक्षिणान्यतरपार्श्वे मृदुमनाविद्धमसंकुचितमृजुपट्टं निवेश्य बध्नीया-
त् ॥ वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद्व्रणान् ॥ सकृदेव परिक्षिप्य
पित्तरक्ताभिघातजान् ॥ शस्त्रक्षतरुजायां तु प्रततायां यष्टीमधुकस-
र्पिषोष्णेन व्रणं सिंचेत् ॥ उदकुंभाच्चापो गृहीत्वा प्रोक्षन् परितो याच-
कार्यपर्णशबर्यादिभिरस्य रक्षां कुर्याद्रक्षोभिभवनिषेधार्थं ॥ तेभ्यश्च
बलिमुपहरेत् ॥ धारयेच्च शिरसा ॥ लक्ष्मीं गुहामतिगुहां जटिलां ब्र-
ह्मचारिणीं ॥ वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ गुग्गुल्वा-
दिभिरेवं शयनासनादि द्विरन्हो धूपयेत् ॥ तथा स्नेहोक्तं दिनचर्योक्त-
माचारमनुवर्त्तेत ॥ विशेषतश्च दिवास्वप्नाद्व्रणे शोफकंडूरागरुक्पूयवृ-
द्धिः ॥ स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलिते स्रुते ॥ शुक्रे व्यवायजान्
दोषानसंसर्गेप्यवाप्नुयात् ॥ भोजयेच्चैनं यथासात्म्यं समातीतशालिष-
ष्टिकयवगोधूमान्यतमं मुद्गमसूराढकीसतीनयूषजांगलरसोपेतं जीवं-
तीसुनिषण्णतंदुलीयकवास्तुकवार्ताकपटोलकारवेल्लकबालमूलकशा-
कयुक्तं दाडिमामलकसैंधवसहितं सर्पिःस्निग्धं लघ्वल्पमुष्णोदकोत्तरं

१ वस्त्रखंडमयीं पालीं

च ॥ एवमस्य सम्यगशितं जरामुपैति ॥ अजीर्णादनिलादीनां विभ्रमो बलवान्भवेत् ॥ ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ नवधान्यमाषकलायकुलत्थनिष्पावशिंबीशीतांबुमद्येक्षुक्षीरपिष्टतिलविकृति शुष्कशाकपिशितहरितकाम्ललवणकटुकक्षारानूपामिषाणि वर्जयेत् ॥ वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणं ॥ वालैशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ न तुदेन्न च कंडूयेच्चेष्टमानश्च पालयेत् ॥ स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ॥ आशावान्व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ॥ पुनश्च तृतीये ऽहनि प्रक्षालनादि पूर्ववद्व्रणकर्म कुर्यात् ॥ द्वितीयदिवसे मोक्षणादादौ विग्रथितो व्रणश्चिरादुपरोहत्युग्ररुजश्च भवति ॥ न च विकेशिकामौषधं वाऽतिस्निग्धरूक्षमतिश्लथगाढमश्लक्ष्णं दुर्न्यस्तं च दद्यात् ॥ अतिस्नेहात्क्लेदः ॥ अतिरौक्ष्याच्छेदो वेदना च ॥ अतिश्लथत्वादपरिशुद्धिः ॥ गाढतया संरंभः ॥ अश्लक्ष्णत्वाद्दुर्न्यासाच्च व्रणवर्त्मोपघर्षणं ॥ व्रणं शोषयते शीघ्रं स्थिता ह्यंतर्विकेशिका ॥ व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ॥ भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ यत्र सीव्यो व्रणस्तत्र चलास्थिशल्यपांशुतृणरोमशुष्करक्तादीन्यपोह्य विच्छिन्नं प्रविलंबि मांसं संध्यस्थीनि च यथास्थाने सम्यक्स्थापयित्वा स्थिते रक्ते यथार्हं सूच्योपहितेन स्नायुसूत्रबालान्यतमेन सीव्येत् ॥ शणाश्मंतकमूर्वातसीनां वा वल्कैः ॥ सीवनविकल्पास्तु समासेन चत्वारः ॥ गोष्फणिका तुन्नसेवन्या वेल्लितकं ग्रंथिबंधनमिति ॥ तेषां नामभिरेवाकृतिर्विभागः प्रदेशवशाच्चोपयोगः ॥ न वाऽतिसन्निकृष्टां विप्रकृष्टामत्यल्पबहुग्राहिणीं वा सूचीं पातयेत् ॥ एवं सम्यक्स्यूतमेवक्ष्य मधुघृतयुक्तैरंजनमधुकनिंबरोध्रप्रियंगुसल्लकीफलक्षौममषीचूर्णैरवकीर्य पूर्ववद्बंधादीन्प्रयोजयेत् ॥ असीव्या वंक्षण-

१ सूत्रवर्ति  २ व्यम्लंविदग्धं तत्रहि विगताम्लरसं भवति

वक्षःकक्षादिषु प्रचलेष्वल्पमांसेषु च वायुर्निर्वाहिणोऽन्तर्लोहितशल्या विषाग्निक्षारकृताश्च व्रणाः ॥ सौन्यास्तु मेदःसमुत्था भिन्नालिखिताः कफग्रंथिरल्पपालीकः कर्णः सद्योव्रणाश्च ॥ शिरोललाटाक्षिकूटकर्णनासागंडौष्ठकृकाटिकाबाहूदरस्फिक्पायुप्रजननमुष्कादिष्वचलेषु मांसवत्सु च प्रदेशेषु ॥ कोशदामोत्संगस्वस्तिकानुवेल्लितमुत्तोलीमंडलस्थगिकायमकखट्वाचीनविबंधवितानगोफणाः पंचांगी चेति पंचदश बंधविशेषाः ॥ तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ तत्र कोशमंगुलीपर्वसु विदध्यात् ॥ दाम संबाधेऽगे ॥ उत्संगं विलंबिनि ॥ स्वस्तिकं संधिकूर्चभ्रूस्तनांतरकक्षाक्षिकपोलकर्णेषु ॥ अनुवेल्लितं शाखासु ॥ मुत्तोलीं ग्रीवामेंढ्रयोः ॥ मंडलं वृत्तेऽगे ॥ स्थगिकामंगुष्ठांगुलिमेंढ्राग्रमूत्रवृद्धिषु ॥ यमकं यमलव्रणयोः ॥ खट्वां हनुशंखगंडेषु ॥ चीनमपांगयोः ॥ विबंधमुदरोरुपृष्ठे ॥ वितानं मूर्द्धादौ पृथुलेऽगे ॥ गोफणं नासौष्ठचिबुकसक्थिषु ॥ पंचांगीं जत्रूर्ध्वमिति ॥ यो वा यस्मिन्प्रदेशे सुनिविष्टो भवति तं तस्मिन्कुर्वीत न तु व्रणस्योपरि ग्रंथिर्बाधकरो यथा स्यात् ॥ बंधस्त्विष्टोऽनिले दुष्टे दृढभग्ने व्रणेषु च ॥ तत्रांत्ययोर्द्विधा बंधः सव्यदक्षिणभेदतः ॥ त्रिविधस्त्वेव सर्वत्र गाढश्लथसमत्वतः ॥ कफवाते घनो गाढः पित्तरक्ते तनुश्लथः ॥ वातपित्ते समो बंधः कफपित्तव्रणेषु च ॥ तथास्फिक्कक्षावंक्षणोरुशिरःसु गाढं बध्नीयात् ॥ शाखावदनकर्णकंठमेंढ्रमुष्कपृष्ठपार्श्वोदरोरःसु समं ॥ अक्ष्णोः संधिषु च शिथिलं ॥ वातश्लेष्मजे तु शिथिलस्थाने समं समस्थाने गाढं गाढस्थाने गाढतरं ॥ तथा शीतवसंतयोस्त्र्यहात्पित्तरक्तजे तु गाढस्थाने समं समस्थाने शिथिलं तत्स्थाने नैव ॥ तथा शरद्ग्रीष्मयोः सायं प्रातः स्यात् ॥ अबध्यमानः पुनर्दंशमशकतृणकाष्ठपांशुशीतवातातपादिसंपर्काद्विविधोपद्रवोपद्रुतो दुष्टतामुपैति ॥ स्नेहश्चात्र न चिरं

१ शिथिलबंधस्थाने

तिष्ठति भेषजमचिराच्छुष्यति कृच्छ्रेण रोहति रूढे च वैवर्ण्यं भवति॥ अपिच ॥ चूर्णितं मथितं भग्नं विश्लिष्टमथ पाटितं ॥ अस्थिस्नायुसिराच्छिन्नमस्थिबंधे न रोहति ॥ उत्थानशयनाद्यासु सर्वेहासु न पीड्यते॥ उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥ समो मृदुररुक् शीघ्रं व्रणः शुद्ध्यति रोहति ॥ स्थिराणामल्पमांसानां रौक्ष्यादनवरोहतां ॥ प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च॥अजीर्णतरुणाच्छिद्रैः समंतात्सुनिवेशितैः ॥ धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदंबजैः ॥ कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनां॥ कर्णिकाश्चोंदुरविषैः क्षारदग्धा विषान्विताः॥ मांसपाके न बंधन्या गुदपाके च दारुणे॥शीर्यमाणाः सरुग्दाहाः शोफावस्था विसर्पिणः ॥ अरक्षया व्रणे यस्मिन्माक्षिका निक्षिपेत्कृमीन् ॥ ते भक्षयंतः कुर्वंति रुजाशोफास्रसंस्रवान् ॥ सुरसादिं प्रयुंजीत तत्र धावनपूरणे ॥ सप्तपर्णकरंजार्कनिंबराजादनत्वचः ॥ गोमूत्रकल्किनो लेपः सेकः क्षारांबुना हितः॥ प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ॥ उत्पद्यमानासु च तासु तास्ववस्थासु दोषादीनपेक्ष्य यथास्वमुपक्रमैरुपक्रमेत् न चैनं त्वरमाणः सांतर्दोषमुपसंरोहयेत् ॥ स ह्यल्पेनाप्यपचारेणांतरुत्संगं कृत्वा भूयो विकुरुते ॥ तस्मात्सुशुद्धं रोपयेत् ॥ रूढेप्यजीर्णव्यायामव्यवायादीन्विवर्जयेत् ॥ मासान्षट् सप्त वा नृणां विधिरेषः प्रशस्यते ॥ इतीदं व्रणमाश्रित्य दिङ्मात्रमुपदर्शितं ॥ उत्तरे विस्तरस्तस्य वक्ष्यते साधनं प्रति ॥ ॥ इति शस्त्रकर्मविधिर्नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अथातः क्षारकर्मविधिमध्यायं व्याख्यास्यामः ॥ ॥ क्षारो हि नानौषधसमवायनिर्वृत्तेः सर्वरसाधिष्ठानं कटुकलवणरसभूयिष्ठस्तीक्ष्णो दहनः पाचनोऽवदारणो विलयनः शोधनो रोपणः कृम्याममेदोविषापहः सर्वशस्त्रानुशस्त्राणां च वरिष्ठश्छेदनभेदनपाटनलेखनकरणात्वतश्च संबाधावकाशजेषु दुःखावचारणीयशस्त्रेषु नासार्शोर्बुदादिषु

शस्त्रेण चासिध्यत्सु दुष्टव्रणेषु बहुशःप्रकोपिषु प्रयुज्यते ॥ स द्विधा बाह्यांतःपरिमार्जनेन ॥ तत्रार्शोर्बुदभगंदरग्रंथिदुष्टव्रणनाडीचर्मकील-वर्त्ममुखरोगकुष्ठकिलासतिलकालकादिषु बहिःपरिमार्जनेन ॥ अंतःप्र-मार्जनेन तु गुल्मगरोदराग्निसादशूलानाहाश्मरीशर्करादिषु ॥ स यथा-स्वमेवोपदेक्ष्यते ॥ न तूभयोऽपि योज्यो भीरुदुर्बलक्षामवातपित्तार्दित-ज्वरातिसारपांडुशिरोहृदयरोगमेहाक्षिपाकतिमिरारोचकातुरकृतवमन-विरेकगर्भिणीगर्भिण्युद्धृतफलयोनिसर्वांगशूलविषमद्यपीतेषु ॥ मर्मसि-रास्नायुसंधितरुणास्थिसेवनीधमनीगलनाभिनखांतरमुष्कशेफःस्रोतः-स्वल्पमांसेषु च देशेष्वक्ष्णोश्चान्यत्र वर्त्मरोगात् ॥ तथाऽतिशीतोष्णवर्ष-दुर्दिनप्रवातेषु च ॥ अथ बहिःपरिमार्जनस्त्रिविधो मध्यो मृदुस्तीक्ष्ण-श्च ॥ तस्य पाकविधिः शरदि शुचिरुपोषितः शुक्लवासाः प्रशस्तेऽहनि प्रशस्तदेशजातं मध्यमवयसमनुपहतं महांतं कालमुष्ककं सुरापलसु-मनोक्षतादिभिश्चतुर्दिशं बलिं दत्वा प्रदक्षिणं चाभ्यर्च्यैनमधिवासयेत् ॥ दैवतेभ्यो नमस्तेभ्यो निवसंतीह ये श्रिताः ॥ गंतुमर्हंत्यसंकुद्धास्त्य-क्त्वेमं वा सपर्ययं ॥ भेषजार्थं ग्रहीष्यामि सर्वप्राणभृतामिमं ॥ वृक्षं न लोभान्न क्रोधाद्ब्राह्मणार्थे विशेषतइति ॥ तथाऽपरेद्युस्तत्र यद्यद्भूतं वैकृतं वा किंचिन्न पश्येत् ॥ ततो युगमात्रमारूढे सवितरि ब्राह्मणान्वाचयित्वा तं पादपं पूर्वाग्रमुत्तराग्रं वा पातयेत् ॥ एवं च पारिभद्रपलाशाश्वकर्णरा-जवृक्षमहावृक्षवृक्षकेंद्रवृक्षवृषास्फोतसप्तच्छदनक्तमालतिल्वककदली बिभीतकाश्वमारकपूतिकचित्रकार्ककाकजंघाऽपामार्गाग्निमंथान्वसं-तोपगृहीतांश्चयवान्सशूकनालांश्चतस्रश्च कोशातकीः सर्वान्समूलफ-लपत्रशाखान् खंडशः कल्पयित्वा नातिशुष्कान् शिलातलस्थान्निवाते पृथक्चयीकृत्य मुष्ककनिचये च सुधाशर्कराः प्रक्षिप्य तिलकुंतलैरा-दीपयेत् ॥ दग्ध्वा च शांतेऽग्नौ पृथक् सुधाशर्कराभस्म कृत्वेतरसर्वक्षार-द्रोणमभ्यधिकमुष्ककं सलिलपलसहस्रेण गवादिमूत्रपलसहस्रेण वा-

लोड्य महता वस्त्रेण परिस्रावयेद्यावदच्छो रक्तस्तीक्ष्णः पिच्छिलश्च जातस्तदा तं क्षारनिष्यंदं गृहीत्वा भस्म विवर्जयेत् ॥ ततः स्नेहपाक विधिना पचेत् ॥ पच्यमाने तु तस्मिंस्ताः सुधाभस्मशर्कराः क्षीरपाकं शंखनाभींश्चायसे पात्रेऽग्निवर्णान् कृत्वा तत्क्षाराच्छकुडवमात्रे निर्वाप्यं तेनैव च सुश्लक्ष्णं पिष्ट्वा प्रतिवापं दद्यात्॥ततश्च सुतरां दर्व्याऽवघट्टयेत्॥यदा च सबाष्पैर्बुद्बुदैः समुत्तिष्ठेत्सांद्रतया च दर्वीप्रलेपी स्यात्तदैनमवनार्यायोघटे यवराशौ सुगुप्तं स्थापयेत्॥एष मध्यमः क्षारः॥मृदौ शर्करादीन्निर्वाप्यापनयेन्न तु पिष्ट्वा क्षिपेत्॥तीक्ष्णे तु दंतीचित्रकलांगलिकापूतीकप्रवालतालपत्रीबिडसर्जिकाकनकक्षीरीहिंगुवचाऽतिविषाः श्लक्ष्णचूर्णीकृता दग्धाश्च शंखशुक्तीः पूर्ववत् प्रतिवापं दद्यात्॥ तांश्च व्याधिबलतः सप्तरात्रादूर्ध्वं प्रयुंजीत ॥ क्षीणजले तु बलाधानार्थं पुनः क्षारजलमावपेत् ॥ तत्र नातितीक्ष्णो नातिमृदुः श्वेतः श्लक्ष्णः शीघ्रः पिच्छिलः शिखरी सुखनिर्वाप्योऽल्परुग्विष्यंदी चेति दश क्षारस्य गुणाः ॥ दशैव च दोषाः ॥ तद्यथा ॥ अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलो विसर्पी हीनौषधो हीनपाकश्चेति ॥ तत्र क्षारकर्मण्युपहरेत्पिचुवर्तिशलाकादर्व्यंजलिकाघृतमधुसुक्ततुषोदकमस्तुक्षीरोदकशीतोपदेहशयनासनादीनि॥अथ क्षारार्हस्योपविष्टस्य संविष्टस्य वाऽऽप्तपरिचारकगृहीतस्य व्याधिं छित्त्वाऽवलिख्य प्रच्छाय वा पिचुप्रोतान्यतरावगुंठितया शलाकया क्षारं पातयेत् ॥ ततो मात्राशतमुपेक्षेत ॥ वर्त्मरोगे तु निर्भुज्य वर्त्मनी पिचुना मधूच्छिष्टेन वा कृष्णभागं प्रच्छाद्य पद्मपत्रतनुः क्षारलेपः ॥ घ्राणजेषु त्वर्शोर्बुदेष्वादित्याभिमुखस्योन्नमय्य नासिकामुपेक्ष्य च पंचाशन्मात्राः ॥ तद्वच्छ्रोत्रजेषु ॥ गुदार्शःसु पाणिना यंत्रद्वारं पिधाय धारयेन्मात्राशतमेव ॥ ततः प्रमार्जनेन प्रमृज्य क्षारं सम्यग्दग्धमवेक्ष्य निर्वापयेत्सर्पिर्मधुभ्यां सुक्ततुषोदकमस्तुक्षीरादिभिश्च ॥ ततः परं शी-

तमधुरैः सघृतैः प्रदिह्यात् ॥ अभिष्यंदीनि भोज्यानि भोज्यानि क्ले-दनाय च ॥ स्थिरमूलत्वात्तु यदि क्षारदग्धं न विशीर्यते ततो धान्या-म्लबीजमधुयष्टिकापुक्तैस्तिलैरालेपयेत्सुवर्णक्षीरीयुतैर्वा त्रिवृद्दिंगसा-रिवाद्भिर्वा ॥ मालतीवृषांकोटनिंबास्फोतपटोलीकरवीरपत्रक्काथो व्र-णे प्रक्षालनं ॥ एषामेवच कल्कक्काथे सिद्धं सर्पिस्तैलं वा रोपणं नाग-पुष्पमंजिष्ठाचंदनतिलपर्णिकासु वा ॥ यथाव्याधिदोषं च व्रणमुपक्र-मेत् ॥ तिलाः समधुका रोपणाश्चास्य पूजिताः ॥ तत्र पक्वजांबवसं-काशमवसन्नमीषद्यथास्वविकारोपशांतौ सम्यग्दग्धं भवति ॥ तद्वि-पर्यये तोदकंडूजाड्यादिभिश्च दुर्दग्धं तत्र पुनः पातयेत् ॥ ऊषादाहरा-गशोफज्वरपाकविसर्पशिरोरोगवातपित्तकोपैरतिदग्धं ॥ अपिच ॥ ने-त्रेऽतियोगाद्वर्त्मनिर्भेदेनेंद्रियभ्रंशः ॥ घ्राणे नासावंशतरुणास्थिदरणं संकोचो गंधाज्ञानं च ॥ तद्वच्छ्रोत्रादिष्वपि च यथास्वं व्यापत् ॥ गु-दे विण्मूत्ररोधोऽतिसारः पुंस्त्वोपघातो गुदविशरणाच्च मृत्युर्वा सर्वदा वा शोफतोदवेदनास्रावाः शकृन्मूत्रविधारणाशक्तिर्वा ॥ तमतिप्रवृत्तमा-शु पूर्वोक्तैरेव निर्वापणैः पुनःपुनर्निर्वापयेत् ॥ अतश्च दात्यमतिप्रमा-णं न सकृदेव दहेदिति ॥ भवति चात्र ॥ अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ॥ ॥ यात्याशु स्वादुतां तस्मादम्लैर्निर्वापये-त्तरां ॥ ज्वरातिसारतृण्मोहमूर्च्छाहृद्वेदनार्तिभिः ॥ कष्टं दहत्यग्निरिव शरीरं क्षारविभ्रमः ॥ पाययेतातियोगेऽतस्तं शीघ्रं सघृतं दधि ॥ सगु-डं वा दधिसरं तैलं वा ससितोपलं ॥ धात्रीफलकपित्थाम्लदाडिमस्व-रसे घृतं ॥ द्विगुणे साधितं पानसेकैः क्षारातिरुग्घरं ॥ दाडिमामलका-म्रातकपित्थकरमर्दकात् ॥ आम्राच्च मातुलुंगाच्च रसं मृद्वग्निना पचेत् ॥ ततो निवृत्तक्षाराय दद्यान्मात्रां यथाबलं ॥ क्षारो निवर्त्तते तेन प्रसादं त्वक्कूचगच्छति ॥ शोणितातिप्रवृत्तौ तु बाह्यांतःशिशिरो वि-धिः ॥ इति क्षारविधिर्नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

अथातोऽग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥ अग्निः क्षारादपि गरीयानौषधशस्त्रक्षारैरसिद्धानां तद्दाहसिद्धेरपुनर्भवाच्च ॥ तत्राग्निकर्म त्वचि मांसे सिरास्नायुसंध्यस्थिषु च प्रयुज्यते ॥ तत्र मशतिलकालकचर्मकीलसरुकूस्तब्धप्रम्लायदंगाभिष्यंदाधिमंथशिरोभ्रूशंखललाटरुजार्दितेषु सूर्यकांतपिप्पल्यजाशकृद्गोदंतशरशलाकाभिस्त्वग्दाहो यथास्वमभिष्यंदादिषु तु भ्रूशंखललाटदेशेषु ॥ ग्रंथ्यर्बुदार्शोभगंदरगंडगंडमालाश्लीपदांत्रवृद्धिदुष्टव्रणगतिनाड्यवगाढपूयलसीकेषु जांबवौष्ठसूचीशलाकाघृतगुडनधुमधुयष्टीतैलवसाहेमताम्रायोरूप्यकांस्यैर्मांसदाहः ॥ सिरास्नायुसंध्यस्थिछेदशोणितातिप्रवृत्तिदंतनाडीश्लिष्टवर्त्मोपपक्ष्मकलगणलिंगनाशासम्यग्व्यधेषु जांबवौष्ठशलाकासूचीमधूच्छिष्टमधुगुडस्नेहैः सिरादिदाहः ॥ न तु दहेच्छिन्नकोष्ठमंतःशोणितमंतःशल्यमनेकव्रणपीडितमुष्णे च काले तथा क्षारानर्हं च ॥ आत्ययिके तु व्याधौ कृतोष्णप्रतीकारस्य पिच्छिलमन्नमशितवतोऽग्निकर्म कुर्यात् ॥ अथ दाहार्हमातुरं कृतस्वस्त्ययनमुपहृतसर्वोपकरणं प्राक्शिरःसंविष्टमाप्तावलंबितं कृत्वा वैद्यो निर्धूमदृहत्स्थिरदीप्तखदिरबदराद्यंगारैरयोघटनप्रकारेण भस्त्रानिलाध्मातैर्व्यंजनेन वोर्ध्वनिर्गच्छज्ज्वालतयाऽऽपादितापाद्यमानभासुराग्निवर्णैर्जांबवौष्ठादिभिर्व्याधिप्रदेशवशाद्वलयार्द्धचंद्रस्वस्तिकाष्टापदबिंदुरेखाप्रतिसारणविकल्पैर्मुहुर्मुहुर्हितोपहिताभिर्वाग्भिरद्भिश्चातुरमाश्वासयन् दहेदासम्यग्दाहलिंगोत्पत्तेः ॥ उच्छूनसुषिरप्रलूनदंतनाडीसजंतुदुष्टव्रणेषु तु स्नेहमधूच्छिष्टगुडैः पूरयित्वा दहेत् ॥ सम्यग्दग्धे च मधुसर्पिषी दद्याच्छीतस्निग्धांश्च प्रदेहान् ॥ सम्यग्दग्धलिंगं पुनः सशब्दं दहनं दुर्गंधित्वं त्वक्संकोचश्च ॥ त्वग्दग्धे कपोतवर्णत्वमल्पशोफरुजता शुष्कसंकुचितव्रणता च ॥ मांसदग्धे कृष्णोन्नतव्रणत्वं स्थिते च रक्ते सलसीका-

स्रुतिः ॥सिरादग्धे कृष्णारुणकर्कशस्थिरव्रणता स्नाय्वादिदग्धे च॥दुर्दग्धातिदग्धयोः प्रमाददग्धवल्लक्षणं चिकित्सितं च ॥प्रमाददग्धं पुनश्चतुर्विधं भवति तुच्छं दुर्दग्धं सम्यग्दग्धमतिदग्धं च ॥ तत्र यद्विवर्णमुष्यतेऽतिमात्रं तत्तुच्छं ॥ यत्रोत्तिष्ठंति स्फोटतीव्रोषादाहरुजाश्चिराच्चोपशाम्यंति तद्दुर्दग्धं ॥ पक्वतालफलवर्णं समास्थितं पूर्वलक्षणयुक्तं च सम्यग्दग्धं ॥ अतिदग्धे तूग्ररुजता धूमायनं मांसप्रलंबनं सिरादिव्यापदो गंभीरव्रणता ज्वरदाहतृण्मूर्च्छाछर्दयः ॥ शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवाः कृच्छ्रेण रोहणं रूढे च विवर्णतेति॥स्नेहदाहस्तु कष्टतरो भवति स हि स्नेहस्य सूक्ष्ममार्गानुसारित्वाद्दूरमनुप्रविशतीति ॥ भवति चात्र ॥ तुच्छस्याग्निप्रतपनं कार्यमुष्णं च भेषजं ॥ स्त्याने रक्ते हिमैर्नोष्मा निष्क्रामति यतो बहिः ॥ वेदना वर्द्धते तेन रुधिरं च विदह्यते ॥ उष्णं निष्क्रामयत्कुर्यादुष्माणं मंदतां रुजः ॥ शीतामुष्णां च दुर्दग्धे क्रियां कृत्वा ततः पुनः ॥ घृतलेपनसेकांस्तु शीतानेवावचारयेत् ॥ सम्यग्दग्धे तवक्षीरीकृष्णाचंदनगैरिकैः ॥ सामृतैः सघृतैर्लेपं कल्कैर्वाऽऽनूपमांसजैः ॥ शांतोष्माणि परं कुर्यात्पित्तविद्रधिसाधनं ॥ अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलं ॥ क्रियां कुर्यात्ततः पश्चाच्छालितंदुलकंडनैः ॥ तिंदुकत्वक्कषायैर्वा पिष्टैः साज्यैः प्रलेपयेत् ॥ गुडूच्याश्छादयेत्पत्रैरथवौपोदकैर्व्रणं ॥ भेषजं चाऽस्य कुर्वीत सर्वं पित्तविसर्पवत् ॥ स्नेहदग्धे भृशतरं तत्र रूक्षं तु योजयेत् ॥ शस्त्रक्षाराग्नयो यस्मान्मृत्योः परममायुधं ॥ अप्रमत्तो भिषक् तस्मात्तान्सम्यगवचारयेत् ॥ इति तंत्रस्य हृदयं सूत्रस्थानं समाप्यते ॥ अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यंते हि सर्वतः ॥ इत्यग्निकर्मविधिर्नाम चत्वारिंशोऽध्यायः॥४०॥

॥ इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टांगसंग्रहे प्रथमं सूत्रस्थानं सपूर्णं ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥ ७॥ ॥७॥

॥ श्री ॥

# अष्टांगसंग्रहे



## शारीरस्थानम् २

श्रीगणेशाय नमः ॥ धन्वंतरये नमः ॥ अथातः पुत्रकामीयं शारीरं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ अथ खलुपुमानेकविंशतिवर्षः कन्यामतुल्यगोत्रामतुल्याभिजनामसंचारिरोगकुलप्रसूतां रूपशीललक्षणसंपन्नामनूनामविनष्टदंतौष्ठकर्णनखकेशस्तनीं मृदुमरोगप्रकृतिमकपिलामपिंगलामहीनाधिकांगीं द्वादशवर्षदेशीयाममरभुजगसरिदचलवृक्षपक्षिनक्षत्रान्यप्रेक्ष्यभीषणकनामान्यनुद्वहंतीमनघामनिंद्यामनिंद्येन विधिनोद्वहेत् ॥ तस्यां षोडशवर्षायां पंचविंशतिवर्षः पुरुषः पुत्रार्थं प्रयतेत ॥ तदा हि तौ प्राप्तवीर्यौ वीर्यान्वितमपत्यं जनयतः ॥ ऊनपंचविंशतिवर्षेणोनषोडशवर्षायामाहितो गर्भः कुक्षिस्थ एव विनाशमाप्नुयादल्पायुर्बलारोग्यविभवो वा स्याद्विकलेंद्रियो वा कृतावाद्ये च रात्रित्रये तथा दुष्टे शुक्रार्तवइति॥ तत्राहारस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते ॥ तत्तु क्षीरइव सर्पिरिक्षुरसइव गुडः शरीरे शुक्रधरां कलामाश्रित्य सर्वांगव्यापितया स्थितं विशेषतश्च मज्जमुष्कस्तनेषु हर्षोदीरितं तु संघट्टनेन हृदयावेशात्पिंडीभूतमंगादंगात्प्रवर्तते तत्सौम्यं स्निग्धं गुरु शुक्लं मधुगंधि मधुरं पिच्छिलं बहु बहलं घृततैलक्षौद्रान्यतमवर्णं च शुक्रं गर्भाधानयोग्यं भवति ॥ तथा रक्तमेव च स्त्रीणां मासे मासे गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमित्याहुः ॥ अतिप्रसंगेनानृतावृतौ वा

तदेवासृग्दरं प्रदरं व्यापदं च रक्तयोनिसंज्ञां लभते ॥ तत्साधने रक्तपित्तचिकित्सितं गुह्यरोगप्रतिषेधं चेक्षेत ॥ वातकफावृतमार्गाणां त्वप्रवर्तमानं पित्तलैरुपचारैस्तत्प्रवर्तमानं सशुक्रमशुक्रं वा जीवरहितं वातलान्यासेवमानाया योषितो गर्भलिंगानि दर्शयद्गुल्मी भवति तत्र गुल्मचिकित्सितमीक्षेत ॥ कदाचिद्वा गर्भइव वातोदरं भवति तद्वातोपशमनैरुपशाम्यति ॥ तदेव कदाचिदार्तवं सौम्यैर्बृंहणात्मभिराहारविहारैः स्तंभितमनुपद्रवमेवोदरं गर्भाधिष्ठितमिव वर्द्धयति ॥ येन तामगर्भां गर्भिणीमाहुर्मूढाः ॥ ततो विपरीतैर्यदृच्छया वा प्रवृत्ते रक्ते गर्भशरीरमपश्यंतो भूतहृतमित्यज्ञा ब्रुवते ॥ यस्मात्संभवत्योजसोऽपहरणं रक्षोभिर्न तु कायस्यानिष्टत्वादशक्तेर्वा ॥ इच्छाशक्त्योर्हि प्रवृत्ते रुपलब्धिर्न च दृश्यते कस्यचिदमानुषैर्देहापहारः ॥ यदि च दृष्टमपि समुल्लंघ्य केचिदतिशयशक्तियुक्ता गर्भस्य शरीराक्षेपे प्रवर्त्तेते तदा कथमिव प्राप्तावसरास्तज्जननीरुपेक्षेरन् ॥ आर्तवं पुनः शशरुधिरलाक्षारसोपमं धौतं च विरज्यमानं शुद्धमाहुः॥ यथाच बालस्य जीर्णस्य वा तरोः पुष्पफलं पुष्पफलस्य वा तद्विधस्य गंधो नोपलभ्यते तथैव नोनषोडशातीतसप्ततिवर्षस्य पुंसः शुक्रसेकादयः ॥ योषितश्चोनद्वादशातीतपंचाशद्वर्षाया रजस्तन्यादय इति ॥ अथ शुद्धशुक्रार्तवमरोगं मिथोऽनुरक्तं मिथुनमुपस्नेह्य विधिवत्संशोध्यास्थापनानुवासनाभ्यामुपाचरेत् ॥ विशेषतस्तु घृतक्षीरवद्भिर्मधुरौषधसंस्कारैः पुरुषं तैलेन नारीं पित्तलैश्च मांसैः॥ एवं हि समानगुणतया शुक्रार्तवमाप्यायते ॥ वातपित्तश्लेष्मकुणपगंधिग्रंथिपूयक्षीणमूत्रपुरीषरेतांसि त्वबीजानि भवंति ॥ तत्र तनु रूक्षं फेनिलमरुणमल्पं विच्छिन्नं सरुजं चिराच्च निषिच्यते वातेन ॥ किंचित्पीतमपिच्छिलमानीलं वा दहदिव प्रवर्तते पित्तेन ॥ मज्जोपसंसृष्टं

१ प्रवृत्तावुपलब्धिरितिपाठः २ माषैरितिपाठः

प्रभूतं विबद्धं चांभसि च किंचिन्मज्जति श्लेष्मणा ॥ कुणपगंध्य-मल्पं रक्तेन ॥ ग्रंथिभूतं वातश्लेष्मभ्यां ॥ पूतिपूयनिभं पित्तश्लेष्मभ्यां ॥ क्षीणं वातपित्ताभ्यां ॥ तदुक्तं ससाधनं प्राक् ॥ मूत्रपुरीषगंधि सन्निपातेन ॥ आर्तवमपि शुक्रवद्दोषैरुपसंसृष्टमबीजमेव ॥ तस्य लिंगं नाम च पूर्ववत् ॥ तेषु कुणपग्रंथिपूयक्षीणरेतांसि कृच्छ्रसाधनानि ॥ मूत्रपुरीषशुक्रार्तवं त्वसाध्यं कुणपग्रंथिपूयार्तवं वा ॥ तत्राद्यांस्त्रीन् शुक्रार्तवदोषान् यथास्वं दोषसाधनेन साधयेत् ॥ गुह्यप्रतिषेधेन चोभयानपि च ॥ वातिके शुक्रदोषे सुक्तसैंधवफलाम्लसिद्धं यवक्षारप्रतिवापं सर्पिःपानं ॥ बिल्वविदारीक्षीरयुक्तमास्थपनं ॥ मधुकभद्रदारुसिद्धं तैलमनुवासनं ॥ क्षीरकुलीररससिद्धं तैलमुत्तरबस्तिः ॥ पैत्तिके कांडेक्षुश्वदंष्ट्रागुडूचीसिद्धं मूर्वामधुकप्रतीवापं सर्पिःपानं ॥ त्रिवृच्चूर्णः सघृतो विरेकः ॥ पयस्याश्रीपर्णीसिद्धं क्षीरयुक्तमास्थापनं ॥ मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च ॥ श्लैष्मिके पाषाणभेदकाश्मंतकामलकक्काथसिद्धं पिप्पलीमधुकचूर्णप्रतीवापं सर्पिःपानं ॥ मदनफलकषायो वमनं ॥ दंतीविडंगचूर्णस्तैललीढो विरेकः ॥ राजवृक्षमदनफलकषायप्रगाढमास्थापनं ॥ मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च वातजेऽप्यार्तवदोषे भार्ङ्गीभद्रदारुसिद्धं सर्पिःपानं ॥ काश्मर्यक्षुद्रसहासिद्धं वा क्षीरं ॥ मधुकशृंगाल[1]विन्नाकल्कं पयःसर्पिःसहितं ॥ प्रियंगुतिलकल्कं वा योनौ धारयेत् ॥ सरलमुद्गपर्णीकषायः प्रक्षालनं ॥ पित्तजे काकोली द्वयविदारीमूलक्काथमुत्पलपद्मकक्काथं मधूकपुष्पकाश्मर्यफलक्काथं वा सशर्करं पिबेत् ॥ श्वेतचंदनक्काथं वा सक्षौद्रं ॥ धवधातकीकल्कं वा ॥ घृतेन वा मधुकमधुरसामृद्वीकाकल्कं ॥ शम्याकगवाक्षीक्षीरं विरेकः ॥ चंदनपयस्याकल्कं योनौ धारयेत् ॥ गैरिकारिष्टकषायः प्रक्षालनं ॥

---

१ सृगालविन्ना ( पिठवण )

श्लैष्मिके कुटजकटुकाऽश्वगंधाक्काथं पिबेत् ॥ समाक्षिकं वा क्षीरिवृक्षप्रवालक्काथं ॥ एतेषामेव वा चूर्णं मधुघृताभ्यां लिह्यात् ॥ मदनफलकषायेण वमनं ॥ तत्कल्कमेव च योनौ धारयेत् ॥ रोध्रतिंदुककषायः प्रक्षालनं बस्तमेषमूत्रं वा ॥ कुणपरेतसि धातुकीपुष्पखदिरार्जुनदाडिमैः सिद्धमसनादिभिर्वा सर्पिः पाययेत् ॥ ग्रंथिरेतसि पाषाणभिदा पलाशभस्मना वा ॥ पूयरेतसि परूषकादिन्यग्रोधादिभ्यां ॥ मूत्रपुरीषरेतसि वायुनाऽतिविक्रते हिंगूशीरचित्रकैरथवा चित्रकवितुन्नकप्रियंगुहिंगुसमंगामृणालसिद्धमेलामोचचूर्णप्रतिवापं ॥ तथा ग्रंथ्यार्तवे पाठात्रिकंटकवृक्षकक्काथं ॥ कुणपपूयार्तवे चंदनक्काथं पिबेत् त्रिफलाकल्कक्कथौ चात्र धारणाचमने ॥ सर्वेषु च शुक्रार्तवदोषेषु स्त्रीपुंसौ स्नेहादिकर्मभिर्विशेषेण चोत्तरबस्तिभिः पुनः पुनरुपाचरेत् ॥ यथास्वं च योनौ कल्कैः पिचुभिश्च ॥ इत्येवं विशुद्धशुक्रार्तवौ पूर्वोक्तं विधिमासेवेतां ॥ ऋतुस्तु दृष्टार्तवो द्वादशरात्रं भवति ॥ षोडशरात्रमित्यन्ये ॥ शुद्धयोनिगर्भाशयार्तवाया मासमपि तु केचित् ॥ तद्वददृष्टार्तवोप्यस्तीत्यपरे ॥ क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधरां ॥ स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियं ॥ पद्मं संकोचमायाति दिनेऽतीते यथा तथा ॥ ऋतावतीते योनिः सा शुक्रं नांतः प्रतीच्छति ॥ मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ ईषत्कृष्णं विगंधं च वायुर्योनिमुखान्नुदेत् ॥ ततः पुष्पदर्शने प्रथमदिवसात्प्रभृति ब्रह्मचारिणी स्नानाद्यलंकाररहिता दर्भसंस्तरशायिनी त्रिरात्रमासीत ॥ पर्णशरावकरतलान्यतमे च यावकं पयसा सिद्धमल्पं कर्शनार्थमश्नीयात् ॥ तीक्ष्णोष्णाम्ललवणानि वर्जयेत् ॥ चतुर्थेऽहन्युद्वर्तिता शीतसलिलस्नाताऽनुलिप्ताऽलंकृता शुक्लमाल्यांबरा कृतमंगलस्वस्त्ययनैवंविधमेव भर्तारं पश्येदनन्यमनाः ॥ तदा हि यादृशमेव पश्यति चिंतयति वा तादृशं प्रसूत इति ॥ ततः स्नाना-

स्पुनरपि गुणवत्पुत्रार्थी चतूरात्रमुपेक्षेत॥ पुष्पदिनात्सप्तरात्रं॥अथाष्ट-म्यां दशम्यां द्वादश्यां वा रात्रौ पुत्रकामः संविशेत् ॥ पंचम्यां सप्त-म्यां नवम्यां वा दुहितृकामः ॥ तासूत्तरोत्तरमायुरारोग्यैश्वर्यसौभा-ग्यबलवर्णेंद्रियसंपदपत्यस्य भवति ॥ अतः परं तूत्तरोत्तरमेवायुरा-दीनां ह्रासः ॥ तत्र युग्मासु रात्रिष्वल्पीभवत्यार्तवमयुग्मास्वाप्या-यते ॥ तस्मात्तासु क्रमात्पुत्रस्य दुहितुश्च जन्म ॥ अतएव चानु-परतार्तवदर्शनां पुत्रार्थी विषमेष्वप्यहस्सु नोपेयात् ॥ यदि त्वाहा-रानुरोधादयुग्मासु शुक्रस्याधिकता युग्मासु च न्यूनता स्यात् ततः पुमान् स्याकृतिर्दुर्बलो हीनांगो वा जायते ॥ स्त्री च पुरुषाकृतिर्दुर्बला हीनांगी वा ॥ एकादशीत्रयोदश्योस्तु नपुंसकं स्यात् ॥ अथोपाध्या-यः पुत्रीयं विधानमाचरेत्॥शूद्रायास्तु मंत्रवर्जितं ॥ यादृशं च पुत्रमा-शासीत तद्रूपवर्णचरितान् जनपदाननुचिंतयेति स्त्री वाच्या ॥ तज्ज-नपदाहारविहारोपचारपरिच्छदांश्चानुविदधीत ॥ कर्मांते च पुमान्मासं ब्रह्मचारी सर्पिःक्षीराभ्यां शाल्योदनमभिप्राश्य नात्याशितः सुखी स्रग्वी सुमनाः प्रीणितांगः शुक्लनिवसनो मौहूर्तिकानुमते रात्रिभागे क-ल्याणानि चिंतयंस्तदभिकामः स्वास्तीर्णं शयनं दक्षिणेन पादेन प्रागा-रोहेत् ॥ तद्विधैव च प्रमदा कर्शितांगी तैलमाषोत्तराहारा पूर्वं वामपादेन पुरुषस्य दक्षिणतः शय्यामधिरोहेत् ॥ तत्र मंत्रं प्रयुंजीत ॥ आहिर-सि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेति ॥ ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाऽश्वि-नौ ॥ भगोऽथ मित्रावरुणौ वीरं दधतु मे सुतमिति ॥ ततः परस्प-रं सान्त्वभिरभिसांत्व्य सहर्षमनुकूलं संवसेतां ॥ पर्याप्ते चैनां शीतो-

---

१ पुष्पदिनात्सप्तरात्रमिति सर्वत्र मूलपाठो दृश्यते ॥ ममतु ततःपुष्पदर्शनदृत्या-रभ्य त्रिरात्रमासीत ॥ ततःस्नानादिप्यारभ्य चतूरात्रमुपेक्षेतेति वाक्यद्वयस्य तात्पर्यं टिप्पणमिति भाति

दकेन सहसा परिषिंचेत् ॥ तत्रात्याशिता क्षुधिता पिपासिता भीता विमनाः शोकार्ता क्रुद्धाऽतिमेदुरा ऽन्यकामाऽन्यवायकामा वा न गर्भं धत्ते विगुणं वा ॥ तथा पुरुषोऽपि नचासावधस्तिष्ठेत् ॥ तथा हि स्त्रीचेष्टः पुमान् जायते पुंचेष्टा वा स्त्री ॥ न च न्युब्जां पार्श्वगतां वा सेवेत ॥ न्युब्जायां वातो बलवान् स योनिं पीडयति ॥ दक्षिणपार्श्वगायाः श्लेष्मा पीडितश्च्युतो ऽपिदधाति गर्भाशयं ॥ वामपार्श्वगायास्तद्वत्पित्तं विदहति रक्तशुक्रे ॥ तस्मादुत्ताना बीजं गृण्हीयात् ॥ तथाहि यथास्थानमेव तिष्ठंति दोषाः ॥ लब्धगर्भां चैनां विदित्वा प्राग्व्यक्तीभावाद्गर्भस्य पुष्ये पुंसवनादि प्रयुंजीत ॥ द्वादशरात्रमित्यन्ये ॥ तत्रापि युग्मदिनेष्विति केचित् ॥ प्रत्यहमित्यपरे ॥ तद्यथा ॥ लक्ष्मणावटशुंगसहदेवाविश्वेदेवानामन्यतमां क्षीरेऽभिषुत्य त्रींश्चतुरो वा बिंदून् दक्षिणे नासापुटे स्वयमासिंचेत्पिचुना वामे तु दुहितृकामा ॥ न चैतान्निष्ठीवेत् ॥ तथा पुष्योद्धृतायाः श्वेतबृहत्या मूलकल्काद्रसं नावयेत् ॥ तद्वच्चोत्पलपत्रं कुमुदपत्रं लक्ष्मणामूलं वटशुंगानि चाष्टौ च नावयेत् ॥ शुक्लमाल्यांबरधरा च नारी पुष्योद्धृताया लक्ष्मणाया मूलकल्कमुदुंबरमात्रं पयसा पिबेत्पुत्रस्योत्पादाय स्थितये च ॥ तद्वद्गौरदंडमपामार्गं जीवकर्षभकौ शंखपुष्पीं मध्यदंडां सहचरं नम्रजीवमग्निजिव्हामष्टौ वा वा वटशुंगानि ॥ पिष्टस्य च पच्यमानस्योष्माणमाघ्राय तद्रसं देहल्यां स्थितां पूर्ववन्नावयेत् ॥ यच्चान्यदपि ब्राह्मणा वृद्धस्त्रियो वा ब्रूयुस्तच्च कुर्यात् ॥ ततः प्रजास्थापनाख्या महौषधीः शिरसा दक्षिणेन च पाणिना धारयेत् ॥ एताभिश्च सिद्धं पयो घृतं वा पिबेत्॥ एताभिरेव पुष्ये पुष्ये स्नायात्सदा चेत्थमालभेत ॥ तथा सर्वासां जीवनीयानामोषधीनां सदोपयोगस्तैस्तैर्विधिभिः॥इतिगर्भस्थापनानि ॥

---

१ असौ पुरुष इति संबधः

सौम्याकृतिवचनोपचारचेष्टाश्च प्रियहितानुवर्तिनः परिचारकास्तथा भर्तेति ॥ पुनश्चैनां मासादुपेयात् ॥ तत्र शुक्के शुक्ले घृतमंडाभे वा गर्भस्य गौरत्वं तैलाभे कृष्णत्वं मध्वाभे श्यामत्वं ॥ तथा क्षीरादिमधुराणामुपयोगान्मातुरुदकविहाराच्च गौरता तिलान्नविदाहिना कृष्णता व्यामिश्राणां श्यामता ॥ देशकुलानुवृत्तितश्च वर्णभेदः॥तथा तेजोधातोरुदकाकाशधातुसंपर्काद्गौरता भूवायुसंपर्कात् कृष्णता सर्वधातुसाम्ये श्यामता॥सत्वविशेषकराणि पुनर्मातापितृसत्वान्यंतर्वत्न्याः श्रुतयश्चाभीक्ष्णं स्वोपचितं कर्म भवति पूर्वाभ्यासश्चेति॥भवंति चात्र॥घृतक्षीरादिनित्यासु मुदितासुकफात्मसु ॥ आर्तवं तिष्ठति चिरं विपरीतास्ततोऽन्यथा॥ निपातादेव गृण्हाति रागं वासो यथाऽमलं ॥ ध्रुवं गर्भतथा बीजं क्षेत्रं बीजमुपस्कृतं ॥ अविरुद्धे ध्रुवं दैवे काले युक्तस्य कर्मणः॥सिद्धिः पुंसवनाद्यस्मात्पूर्वं व्यक्तेः प्रयोजयेत् ॥ जाताश्चैवं रूपवंतो महासत्वाश्चिरायुषः ॥ ऋणान्मोचयितारः स्युः सुपुत्राः पुत्रिणां मताः ॥ दैवताचारशौचादिरता सूते महागुणं ॥ धावत्येवं चाचरितं प्राग्जन्माभ्यासयोगतः ॥ योषितोऽपि स्रवंत्येव शुक्रं पुंसः समागमे ॥ गर्भस्य तन्न किंचित्तु करोतीति न चिंत्यते ॥ ॥ इति पुत्रकामीयो नाम प्रथमोऽध्यायः ॥ १ ॥

अथातो गर्भावक्रांतिशारीरं व्याख्यास्यामः ॥ गते पुराणे रजसि नवे ऽवस्थिते शुद्धे गर्भस्याशये मार्गे च बीजात्मना शुक्रमविकृतमविकृतेन वायुना प्रेरितमन्यैश्च महाभूतैरनुगतमार्तवेनाभिमूर्च्छितमन्वक्षमेव रागादिक्लेशवशानुवर्तिना स्वकर्मचोदितेन मनोजवेन जीवेनाभिसंसृष्टं गर्भाशयमुपयाति ॥ कार्याणां च कारणानुविधायित्वात्तत्स्वभावतां प्रतिपद्यते ॥ ततएव च शुक्रस्य बाहुल्यात्पुमानार्तवस्य

१अंतर्वत्नी तु गर्भिणीत्यमरः २ श्रवणानि

बाहुल्यात्स्त्री तयोः साम्येन नपुंसकं ॥ शुक्रार्तवेऽनिलेन खंडशो भिन्ने यथाविभागमपत्यानामुत्पत्तिः ॥ विकृते वियोन्याकृतीनां ॥ अथ नार्याः सद्योगृहीतगर्भायाश्च लिंगं योन्या बीजग्रहणं तृप्तिर्गौरिमा स्फुरणं शुक्रार्तवयोरननुबंधश्च ॥ तथा प्रहर्षो ग्लानिस्तंद्राऽप्रसादः प्रसेको हृदयव्यथा ग्लानिः पिपासा च ॥ क्रमेण तु व्यक्तगर्भायाः कुक्षिमात्रगौरवं क्षामनेत्रस्वरताऽक्षिरोमसंलुलनं निद्रा जृंभणं मूर्च्छा छर्दिररुचिः पादशोफोऽम्लेऽभिलाषस्तेषु तेषु चोच्चावचेषु भावेष्विति॥तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यंते गर्भेण॥तस्मात्ततः परमार्तवं न दृश्यते ॥ ततस्तदधःप्रतिहतमपरमपरं चोपचीयमानमपरेत्याहुः ॥ जरायुरित्यन्ये ॥ स्थिते तु रक्ते रोमराजी प्रादुर्भवति जरायुशेषं चोर्ध्वमसृक् प्रतिपद्यते ॥ तस्मात्पीनकपोलपयोधरता कृष्णौष्ठचूचुकत्वं च ॥ स्तनाश्रयमेव च कफोपरंजितं स्तन्यतामुपगतं प्रसूतायाः पुनराहाररसेनाप्यायते ॥ तत्र प्रथमे मासे कललं जायते ॥ द्वितीये घनः पेश्यर्बुदं वा तेभ्यः क्रमात्पुंस्त्रीनपुंसकानि॥ तृतीये पंचधा प्ररोहति ॥ तद्यथा ॥ सक्थिनी बाहू शिरश्च ॥ सक्थ्यादिप्ररोहैककालमेव च सर्वांगावयवेंद्रियाणि युगपत्संभवंत्यन्यत्र जन्मोत्तरकालजेभ्यो दंतादिभ्यः क्रमेण तु स्पष्टीभवंति ॥ एषा प्रकृतिः ॥ विकृतिरतोऽन्यथा ॥ यथास्वंच गर्भस्य पुंस्त्रीनपुंसकान्यतमल्लिंगानुरूपा एव भावा मनसि शरीरे च संतिष्ठंते ॥ वैशेषिकल्लिंगसंकरे तु यतो भूयस्त्वं ततोऽन्यतरा भावाः ॥ तद्यथा॥ क्लैब्यं भीरुत्वमवैशारद्यं मोहोऽनवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दवं गर्भाशयबीजभावास्तथा युक्ताश्चापरे स्त्रीकराभावाः ॥ ततो विपरीताः पुंस्कराः ॥ संकीर्णा नपुंसककराः ॥ तदा चास्य चेतना प्रव्यक्ता भवति ॥ ततश्च तत्प्रभृति स्पंदतेऽभिलाषं पंचें-

---

१ गात्रगौरवमिति पाठः २ कफोपचितं चेति पाठः ३ युक्तयाचापरे इति पाठः

द्रियार्थेषु करोति ॥ मातृजं ह्यस्य हृदयं तद्रसहारिणीभिर्धमनीभिर्मातृहृदयेनाभिसंबद्धं भवति ॥ तस्मात्तयोस्ताभिः श्रद्धा संपद्यते॥ तथा च द्विहृदयां नारीं दौर्हृदिनीत्याचक्षते ॥ अन्ये तु पक्षत्रयात्प्रभृत्यापंचमान्मासाद्दौर्हृदकालमाहुः ॥ प्रार्थनायां च तीव्रायां काममहितमप्यस्यै हितोपसंहितं दद्यात् ॥ दौर्हृदविमाननाद्धि वायुः प्रकुपितोऽतःशरीरमनुचरन् गर्भस्य विनाशं वैरूप्यं वा कुर्यात् ॥ लब्धदौर्हृदा तु वीर्यवंतं चिरायुषं च पुत्रं प्रसूते ॥ चतुर्थेऽगप्रत्यंगविभागः प्रव्यक्तो गर्भश्च स्थिरो भवति ॥ पंचमे मनः प्रतिबुद्धतरं भवति मांसशोणितोपचयश्च ॥ षष्ठे केशरोमनखास्थिस्नाय्वादीन्यभिव्यक्तानि बलवर्णोपचयश्च ॥ सप्तमे सर्वांगसंपूर्णता ॥ अष्टमे गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिर्वाहिनीभिर्मुहुर्मुहुरोजः परस्परमाददाते ॥ तस्मात्तदा गर्भिणी मुहुर्मुदिता भवति मुहुर्म्लाना तथा गर्भः ॥ एवं गर्भस्य जन्म व्यापत्तिमत्तदा भवति ॥ ओजसोऽनवस्थितत्वात् ॥ तथाह्यस्य निष्क्रमणोन्मुखस्य परिवर्त्तनादीन्यनुभवत एवौजसा वियोगः ॥ यद्यपि च किंचित्कालमस्योच्छ्वसनं स्यात्तच्छिन्नस्येवांगस्यौजःसंस्कारानुवृत्तिकृतं ॥ जनन्यास्तु स्थिरौजस्कतयैकदेशेन रसे संक्रांते ग्लानिरेवेति ॥ अन्ये पुनराहुः ॥ नैर्ऋतभागत्वात्तत्र गर्भस्य मरणं ॥ तस्मात्प्रसवप्रतिषेधार्थं स्त्री स्नाता शुचिर्ब्रह्मचारिणी देवताराधनपरमा स्यात् ॥ मांसौदनबलिं चात्र निर्वपेत् ॥ तस्मिन्नेकदिवसातिक्रांतेऽपि प्रसवकालमाहुरासंवत्सरात् ॥ अतःपरं विकारी भवति ॥ गर्भस्तु मातुः पृष्ठाभिमुखो ललाटे कृतांजलिः संकुचितांगो गर्भकोष्ठे दक्षिणपार्श्वमाश्रित्यावतिष्ठते पुमान् वामं स्त्री मध्यं नपुंसकं ॥ तत्र स्थितश्च गर्भो मातरि स्वपंत्यां स्वपिति प्रबुद्धायां प्रबुध्यते ॥ परतंत्रवृत्तेश्च गर्भस्य ॥ निषेकात्प्रभृति गर्भाशयोपस्नेहोपस्वेदौ वर्तनं ततो व्यक्तीभवदं-

गमत्यंगस्याऽस्य नाभ्यां प्रतिबद्धा नाडी नाड्यामपरा तस्यां मातृहृदयं ॥ ततो मातृहृदयादाहाररसो धमनीभिः स्यंदमानोऽपरामुपैति ॥ ततः क्रमान्नाभिं ॥ ततश्च स पुनर्गर्भस्य पक्वाशये स्वकायाग्निना पच्यमानः प्रसादबाहुल्याद्धात्वादिपुष्टिकरः संपद्यते ॥ तथा रोमकूपैरुपस्नेहो रसएव च पयोभूतः ॥ अजातस्य साक्षादन्नपानाननुप्रवेशादमलत्वाच्च रसस्य गर्भस्य स्थूलमलासंभवः ॥ जन्मकाले तु प्रसूतिमारुतयोगात्परिवृत्त्याऽवाक्शिरा निष्क्रामत्यनुचापरा च्युता मातृहृदयात्॥एषा प्रकृतिः ॥ विकृतिरतोऽन्यथा ॥ तत्र या दक्षिणं पादं पूर्वमभिहरति दक्षिणश्च यस्या बाहुर्बलवांस्तेन च चेष्टते तत्स्तने च प्राक् पयो दृश्यतेऽत्युन्नततत्कुक्षिपरिमंडलगर्भा पुन्नामदर्शनस्पर्शनप्रश्नदौर्हृदाभिरता पुन्नामधेयांश्च स्वमान् पश्यति प्रसन्नमुखवर्णा तीक्ष्णक्षुदूर्ध्वरोमराजिः पुरुषानभिलाषिणी च सा पुत्रं प्रसूते तद्विपर्यये कन्यां संकरे च नपुंसकं ॥ प्रश्नकाले नारी यल्लिंगमंगं बाह्यद्रव्यं वा परामृशति तल्लिंगमस्या गर्भमादिशेत् ॥ यदा तून्मार्गगो वातो गर्भस्य रसवाहीनि स्रोतांसि शोषयति तदा वातरोगी हीनो जायते ॥ बहूनि वा वर्षाण्युदरे तिष्ठति ॥ यदा स्त्रीपुंसयोः सममर्थो निष्पद्यते ॥ बीजं वा तयोः समांशं संमुखं च ॥ यदा च बीजं भागे दुष्यति तदा द्विप्रकृतिर्द्विरेतो नपुंसकं भवति ॥ यदा स्त्री प्रथमं कृतार्था भवति ततः पुरुषेण पश्चाच्छुक्रमुत्सृष्टं हर्षानवस्थितचेतसः स्त्रिया वातो विगुणीकरोति पुंस्त्ववाहीनि चास्य स्रोतांसि चोपहंति तदा वातेंद्रियं भवति ॥ तन्मैथुने वातमेवोत्सृजति ॥ यदा तु कार्त्स्न्येनोपहंति अनुपघ्नन्नेव वा स्रोतोमुखं पिधत्ते ॥ तदा संस्कारबाह्यं भवति तत्र संस्कारो वाजीकरा बस्तयोऽभ्यवहारश्चेतोहर्षणानि च ॥ तानि हि शुक्रे बलमादधानानि स्रोतांस्यस्या-

१ स्रोतांसि म व्धापयंतीति पाठः ॥

प्यायंतीति ॥ यदाऽल्पबीजोऽल्पबलः पुमानुद्वेगः स्त्रीद्वेषयुक्तो-ऽन्यकामो वा नार्या व्यवायप्रतिघातं करोति तद्विधा वा नारी पुंसः ॥ तदा ऽऽसेक्यं स्त्रीपुंसौ तद्विधौ भवतः तदा वक्रध्वजो भवति तस्य नैव ध्वजस्तभ्यते ॥ यदा पूतियोन्याः स्त्रिया गर्भो भवति ॥ तच्छुक्रास्वादात्ध्वजोच्छ्रायं लभते ॥ यदा पुनरुभावपि तत्सौगंधिकाख्यं योनिध्वजगंधेन बलं लभते ॥ यदा त्वीर्ष्याभिभूतौ मंदहर्षौ संसृज्येते तदेर्ष्यालुरिति संज्ञं ॥ तस्य परं मिथुनीभूतं दृष्ट्वा मैथुनप्रवृत्तिर्भवति ॥ यदा पुरुषस्य गर्भस्य वाय्वग्निदोषाद्वृषणनाशः तदा वायुपिंडकाख्यं भवति ॥ एताः कर्मवैचित्र्यादष्टौ षंढयोनयः संकीर्णाः कथिताः ॥ यदा तु स्त्रियाः शोणितगर्भाशयौ दोषाः किंचित् प्रदूषयंति तदा यो गर्भो भवति तस्य गर्भस्य यस्य यस्य मातृजस्यावयवस्य बीजे बीजांशे वा दोषः प्रकोपमापद्यते तं तमवयवं विकृतिराविशति ॥ यदा ह्यस्याः शोणिताख्ये बीजे गर्भाशयस्थे निर्वर्तकं बीजं प्रदुष्यति तदा वंध्यां जनयति ॥ यदा तस्यावयवस्तदा पूतिप्रजां ॥ तस्या जातं जातं म्रियते ॥ यदा पुनः सोऽवयवः स्त्रीकराणां च शरीरसंश्रयाणामधोगुरुत्वादीनां निर्वर्तका ये बीजांशास्तेषामेकदेशः ॥ तदा स्त्र्याकृतिप्रायामस्त्रियं वार्ता नाम जनयति ॥ तां स्त्रीव्यापदमाचक्षते ॥ एवमेव पुंसो यदा शुक्राख्ये बीजे बीजं प्रदुष्यतीत्यादियोजयेद्वंध्यं पूतिप्रजं तथा पुरुषाकृतिप्रायमपुरुषं तृणापुलिंगा नाम जनयतीत्येतेन मातृजानां पितृजानां चावयवानां विकृतिर्व्याख्यानेन सात्म्यजानां रसजानां सत्वजानां चावयवानां विकृतिर्व्याख्याता भवति ॥ यस्य यस्यांगावयवस्य बीजे बीजांशे वा उत्पत्तिर्भवति तस्य तस्यांगावयवस्य विकृतिरुपजायते ॥ नोपजायतेऽनुपतापात् ॥ यदा च लब्धगर्भाऽन्वक्षमेव वातलान्यासेवते तदाऽस्या वायुः

१ व्यवायप्रतिघातं करोतीति पूर्वेण संबंधः

प्रकुपितः शरीरमनुसर्पन् गर्भाशयेऽवतिष्ठमानो गर्भस्य जडबधिरमूकमिम्मिणगद्गदखंजकुब्जवामनहीनांगाधिकांगत्वान्यन्यं वा वातविकारं करोति ॥ तथा वायुवत्पित्तमपि खलतिपलितश्मश्रुहीनतात्वङ्नखकेशपैंगल्यादीनि ॥ श्लेष्मा तु कुष्ठकिलासससदंतत्वादीनि ॥ त्रिवर्गो मिश्रान्विकारान् ॥ अपिच ॥ दृष्टिभागमप्रतिपन्नं तेजो जात्यंधत्वं तदेव वातानुगतं विकृतरूक्षारुणाक्षं पित्तानुगतं पिंगाक्षं श्लेष्माऽनुगतं शुक्लाक्षं रक्तानुगतं रक्ताक्षमिति ॥ गर्भसमानयोगक्षेमा हि गर्भिणी भवति॥तस्माद्विशेषतस्तां प्रियहिताभ्यां गर्भोपघातकरेभ्यो रक्षेत्॥ यथा यथा च गर्भो वृद्धिमाप्नोति तथा तथा भाराहाररसापचाराच्च स्त्रिया बलक्षयः ॥ तत्रेमे गर्भोपघातकराः ॥ तद्यथा ॥ व्यवायव्यायामकर्शनाभिघातातिमात्रसंक्षोभियानयानरात्रिजागरणदिवास्वप्नवेगविधारणाजीर्णातपाग्निक्रोधशोकभयोत्रासोपवासोत्कटकविषमकठिनासनश्वभ्रकूपप्रपाताप्रियावलोकनश्रवणादयः ॥ समासतः सर्वमतिगुरूष्णतीक्ष्णरूक्षमन्नपानं दारुणाश्च चेष्टाः ॥ तथा ॥ देवतारक्षोऽनुपचयपरिरक्षणार्थं न रक्तानि वासांसि धारयेन्न यानमधिरोहेन्न मद्यमांसमश्नीयात् ॥ यच्चान्यदपि वृद्धस्त्रियो ब्रूयुः ॥ प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कंठमनुवेष्ट्य व्यापत्तिं करोति ॥ विवृतशया नक्तचारिणी चोन्मत्तं जनयति ॥ कलहशीलाऽपस्मारिणं ॥ व्यवायशीला दुर्वपुषमन्हीकं स्त्रैणं वा ॥ शोकनित्या भीरुमपचितमल्पायुषं वा ॥ अभिध्यायिनी[1] परोपतापनमीर्ष्यालुं स्त्रैणं वा ॥ स्तेना त्वायासबहुलमभिद्रोहिणमकर्मशीलं[2] वा ॥ अमर्षणा चंडमौपधिकं वा ॥ स्वप्नशीला निद्रालुमबुधमल्पाग्निं वा ॥ मद्यनित्या तृष्णालुमल्पस्मृतिमनवस्थितं वा ॥ गोधामांसनित्याऽश्मरिणं शनैर्मेहिनं वा ॥ वराहमांसनित्या रक्ताक्षं क्रथनमतिपरुषरोमाणं वा ॥ मत्स्यमांसनि-

---

१ परस्वापहारेच्छावती परगुणासहनशीला वा २ अधर्मशीलंवेतिपाठः

स्या चिरनिमेषं स्तब्धाक्षं वा ॥ मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा ॥ अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा ॥ लवणनित्या शीघ्रवलीपलितं खलतिकं वा ॥ तिक्तनित्या शोषिणमबलमपचितं वा ॥ कटुकनित्या दुर्बलमल्पशुक्रमनपत्यं वा ॥ कषायनित्या श्याममानाहिनमुदावर्तिनं वा ॥ यद्य यद्य यस्य व्याधेर्निदानं तत्तदासेवमानाऽन्तर्वत्नी स्त्री तत्तद्विकारबहुलमपत्यं जनयति ॥ एतेन पितृजा अपि शुक्रदोषा व्याख्याताः ॥ तस्मात्प्रजासंपदमिच्छंतौ साध्वात्मानमुपाचरेतां ॥ विशेषेण नारी ॥ व्याधींश्चास्या मृदुमधुरशिशिरसुखैरौषधाहारविहारैरुपाचरेत् ॥ न चास्या वमनादीनि प्रयोजयेत् ॥ न रक्तावसेचनं केवलं त्वष्टमं मासमुपादायास्थापनमनुवासनं वा ॥ वमनादिसाध्येषु पुनर्विकारेषु मृदुभिस्तदर्थकारिभिर्वोपक्रमेत् ॥ पूर्णमिव तैलपात्रमसंक्षोभयद्गर्भिणीमुपाचरेदिति ॥ भवंति चात्र ॥ इत्यनात्ययिके व्याधौ विधिरत्यधिके पुनः ॥ तीक्ष्णैरपि क्रियायोगैः स्त्रियं यत्नेन पालयेत् ॥ स्त्री हि मूलमपत्यानां स्त्री हि रक्षति रक्षिता ॥ सर्वाश्रमाणां प्रथमं गृहस्थत्वमनिंदितं ॥ जरायुणा मुखे छन्ने कंठे च कफवेष्टिते ॥ वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति ॥ इति गर्भावक्रांतिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातो गर्भोपचरणीयं शारीरं व्याख्यास्यामः ॥ प्रथमे मासि गर्भिणी क्षीरमुपसंस्कृतं मात्रावच्छीतं काले पिबेत् ॥ तस्मिन्नपि चाद्यं द्वादशरात्रं क्षीरोद्भवं सर्पिः शालिपर्णीपलाशाभ्यां शृतं कनकरजतक्कथितशीतोदकानुपानं पिबेत् ॥ स्वादुशीतं द्रवप्रायं सात्म्यं च सायं प्रातराहारयेत् ॥ न चाभ्यंगोद्वर्तनानि सेवेत ॥ यथोक्तानि च दोषकराणि परिहरेदापंचमान्मासात् ॥ विशेषेण द्वितीये मधुरौषधसिद्धं पयः पिबेत् ॥ तृतीये तदेव सर्पिर्मधुभ्यां ॥ चतुर्थेऽक्षमात्रनवनीतयुक्तं ॥ पंचमे क्षीर-

सर्पिः ॥ षष्ठे तदेव मधुरौषधसिद्धं ॥ सप्तमे च ॥ तस्मिंश्च गर्भस्य केशोत्पत्त्या मातुर्विदाहो भवतीति स्त्रियो भाषंते नेति भगवानात्रेयः॥ गर्भोत्पीडनात्तु दोषा हृदयं प्राप्य विदहंति ततः कंडूर्जायते कंड्वा किक्किसं ॥ तत्र कोलोदकेन नवनीतस्य मधुरौपधसिद्धस्य पाणितलमात्रमस्यै दद्यात् ॥ चंदनमृणालकल्कैश्च स्तनोदरं मृद्गीयात् ॥ शिरीषधातुकीसर्षपमधुकचूर्णैर्वा ॥ कुटजार्जकबीजमुस्ताहरिद्राकल्कैर्वा निंबकोलसुरसमंजिष्टाकल्कैर्वा ॥ शशहरिणपुनर्नवामालतीमधुकसिद्धेनांभसा पृषतरुधिरयुक्तया त्रिफलया करवीरपत्रकल्कसिद्धेन च तैलेनाभ्यंगः ॥ परिषेकः पुनर्मालतीमधुकसिद्धेनांभसा ॥ कंडूयनं वर्जयेत् ॥ त्वग्भेदे वैरूप्यपरिहारार्थंस्नानोद्वर्त्तनं चंदनं चशीलयेत् ॥ मधुरं चाहारमल्पमल्पस्नेहलवणमल्पोदकानुपानं भुंजीत ॥ अष्टमे क्षीरयवागूं सर्पिष्मतीं पिबेत् ॥ नेति षंढकाथो गर्भस्य पैंगल्याबाधभयात् ॥ अस्ति पैंगल्याबाधस्तथाप्येवं कुर्वीत ॥ नीरुजं बलवर्णसत्वसंहननसंपदुपेतं ज्ञातीनामग्रगण्यमपत्यं जनयतीति भगवानात्रेयः ॥ बदरोदकेन पललपयोदधिमस्तुतैललवणफलघृतमधुयुक्तेनास्थापयेत् ॥ पुराणविड्विशुद्ध्यर्थं मधुकादिमधुरौषधसिद्धेन च तैलेनानुवासयेदनुलोमनाय वायोः ॥ अनुलोमे हि मारुते सुखमनुपद्रवा प्रसूते ॥ गर्भिणीं तु न्युब्जामास्थापयेदनुवासयेद्वा ॥ तथा ऽस्या विवृतमार्गतया सम्यगौषधमनुप्रविशति ॥ अत ऊर्ध्वं स्निग्धाभिर्यवागूभिर्जांगलरसैश्चोपाचरेदाप्रसवकालादिति भगवान्धन्वंतरिः ॥ नवमे तु ततएवानुवासनतैलात्पिचुं योनौ प्रणयेत् गर्भमार्गाशययोः स्नेहनार्थमिति ॥ अनेन प्रथममासादारभ्य क्रमेण गर्भिण्याः प्रसवकाले गर्भधारिणीकुक्षिकटीपार्श्वपृष्ठं मृदूभवति ॥ वायुश्चानुलोमः संपद्यते ॥ मूत्रपुरीषं च प्रकृतिभूतं जरायुश्च मार्गं प्रतिपद्यते ॥ पुत्रं चेष्टं कल्यमायुष्मंतं सुखिनं सुखेन काले बलवती प्र-

१ कल्यं निरामयं ॥ वार्तो निरामयः कल्य इत्यमरः दक्षमितिपाठः ॥

सूते ॥ बिल्वकार्पासीकंकेणापाटलीपिचुमंदाग्निमंथमांसीवर्धमानकपत्रभंगक्काथेन शीतेन सर्वगंधोदकेन वा गर्भिण्याः प्रत्यहं स्नानमुपदिशेत्॥प्राक् चैवास्या नवमान्मासादपत्हतास्थिशर्कराकपाले प्रशस्ते देशे वास्तुविद्याप्रशस्तं सर्वर्तुसुखमुपत्हतसर्वोपकरणं सन्निहितज्वलनं प्राग्द्वारमुदग्द्वारं वा सूतिकागारं कारयेत् ॥ तत्रानुकूलेषु नक्षत्रादिषु पुण्याहशब्देन गोब्राह्मणवृद्धान्नत्वाऽऽवर्तमाना प्रदक्षिणं प्रविश्य बहुशः प्रसूताभिरनुक्ताभिरविपादाभिः क्लेशक्षमाभिः परिवृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत ॥ स्वल्पेऽपि च विण्मूत्रविबंधे फलवर्तीः प्रणिदध्यात् ॥ तत्रासन्नप्रसवायाः क्लमो ग्लानिर्मुक्तबंधने इवाक्षिणी निष्ठीविका मूत्रपुरीषबाहुल्यं शिथिलकुक्षिताऽधोगुरुत्वमन्नानभिलाषो वेदनोदरत्हृदयकटीबस्तिवंक्षणेषु तोदभेदशूलस्फुरणस्रवणानि च योन्या भवंति ॥ तदनंतरमावीनां प्रादुर्भावो गर्भोदकप्रवाहश्च ॥ अथैनामुपस्थितगर्भां कृतकौतुकमंगलां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तां सघृतां यवागूं पाययेत् ॥ ततः सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूमिशयने शयानामुत्तानामाभुग्नसक्थिपृष्ठामहतवाससोऽशंकनीयाः प्रियदर्शनाः परिणतवयसः प्रजननकुशलाः प्रगल्भाः कृत्तनखाः स्त्रियः सूतिकां सूनृताभिर्वाणीभिराश्वासयंत्यः पर्युपासीरन् ॥ अथास्यै दद्यात्कुष्ठैलालांगलीवचाचव्यचित्रकचिरबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुः ॥ तथा भूर्जपत्र[1]शिंशिपासर्जरसान्यतमधूममंतरांतरा च ॥ पार्श्वपृष्ठकटीसक्थिदेशान्कोष्णेन तैलेनाभ्यज्यानुसुखमस्या मृद्नीयात् ॥एवमवाक् परिवर्तते गर्भः ॥ तस्यलक्षणं॥ विमुच्य हृदयमुदरमाविशति बस्तिशिरोऽवगृण्हाति ॥ त्वरयंत्येनामाव्यः न चेदेवं परिवर्त्तते ततो मुहुर्मुहुर्जृंभणं चंक्रमणं च कारयितव्याऽनंतरोक्तं विधिं॥

१ शैवालमितिप्राचीनपुस्तकेषुपर्यायः

अन्ये तु मुशलेनोलूखलं धान्यपूर्णमाहननीयमित्याहुः॥तत्तु न सम्यक् ॥ दारुणव्यायामवर्जनं हि गर्भिण्याः सततमुपदिश्यते ॥ विशेषतश्च प्रसवकाले प्रचलितसर्वधातुदोषायाः सौकुमार्यत्वान्नार्या मुशलव्यायामेनेरितो वायुरंतरं लब्ध्वा प्राणान् हिंस्यादिति ॥ अथ परिवृत्तगर्भां पर्यंकमेनामारोप्य कुशला स्त्री पादतोऽस्या निषण्णाया योनिमनुलोममनुसुखमभ्यज्य स्फिजौ पादाभ्यां पीडयेत् ॥ योनिं च पुनः पुनः प्रसारयेत् ॥ ब्रूयाच्च सुभगे शनैः शनैः प्रवाहयस्व सुप्रसन्नस्ते मुखवर्णः पुत्रं जनयिष्यतीति ॥ अन्या तु वामकर्णेऽस्या मंत्रमिमं जपेत् ॥ क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः ॥ सगर्भां त्वां सदा पातु वैशल्यं वा दधात्वपि ॥ प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने॥ कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितमिति ॥ तथा ॥ इहामृतं च सोमश्च चित्रभानुश्च भामिनि ॥ उच्चैःश्रवाश्च तुरगो मंदिरे निवसंतु ते ॥ इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुंचतु स्त्रि ॥ तदनलपवनार्कवासवास्ते सह लवणांबुधरैर्दिशंतु शांतिमिति ॥ तथा पराऽनुशिष्यात्॥अनागतायां वेदनायां मा प्रवाहिष्ठाः[1] ॥ अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च गर्भस्य श्वासकासशोषकुब्जतादिकारित्वात् ॥तथा तेषामेव विधारणमिव वेदनायामप्रवाहणमुपघाताय ॥ ततो यथोक्तं कुरुष्व शनैः शनैश्च पूर्वं प्रवाहिष्ठाः ॥ निर्गमे बाढं गर्भस्य योनिमुखप्रतिपत्तौ बाढतरमाप्रसवादिति ॥ तस्यास्तु प्रवाहमानायाः स्त्रियाः शब्दं कुर्युः प्रजाता प्रजाता धन्यं धन्यं पुत्रमिति ॥ तथाऽस्या हर्षेण प्राणा आप्यायंते ॥ गर्भसंगे तु योनिं धूपयेत् कृष्णसर्पनिर्मोकेन पिंडीतकेन वा ॥ बध्नीयाच्च हिरण्यपुष्पीमूलं हस्तपादे ॥ धारयेच्च सुवर्चलां विशल्यां वा ॥अथ प्रसूताया न चेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुपपीड्य

---

१ प्रवाहेथा इतिपाठः

पृष्ठत उपसंगृह्य विधुनुयात् ॥ पार्ष्ण्या वा श्रोणिमाकुट्टयेत् ॥ स्फिजौ वोपसंगृह्य सुपीडितं पीडयेत् ॥ वेण्यांऽगुल्या वा केशवेष्टितया च कंठतालु परामृशेत् ॥ भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत् भूर्जगुग्गुलुभ्यां वा ॥ शालिमूलसिद्धेन वा सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिंबसर्पनिर्मोकैर्धूपयेत् ॥ अनभ्यक्तां वा कटुतैलमिश्रैः कल्कीकृतैर्वा तैलाक्तैरालिंपेत् ॥ गुडनागरकल्केन वा ॥ तदेव वा भक्षयेत् ॥ लांगलीमूलकल्केन वा पाणिमुदरं चालिंपेत् ॥ महावृक्षक्षीरं वा मूर्द्धन्यनुषेचयेत् ॥ कुष्ठतालीसकल्कं बिल्वबिल्वजयूषमैरेयासवसुरामंडान्यतमेन व्योषतीक्ष्णोष्णेन वाऽम्लेन कुलत्थरसेन मधुकपिप्पलीसंपाकेन वा पाययेत् ॥ पिप्पल्येलाकोलविडचव्यचित्रकोपकुंचिकाकल्कं वा ॥ खरस्य वृषभस्य वा जीवतो दक्षिणं कर्णमुद्धृत्य[1] बिल्वबिल्वजयूषादीनामाप्लवनानामन्यतमे प्रक्षिप्य मुहूर्तस्थितमुद्धृत्य तदाप्लवनं पाययेत् ॥ कुष्ठैलाकल्कं वा सुरया ॥ अर्कालर्ककषायं वा सुरोन्मिश्रं ॥ कुष्ठलांगलकीमूलककल्कंवा मद्यमूत्रान्यतरेण ॥ वत्सकादिचूर्णं वा मद्येन ॥ शतपुष्पाकुष्ठमदनहिंगुसिद्धस्य च तैलस्य पिचुं ग्राहयेत् ॥ ततश्चैनामनुवासनकालेऽनुवासयेत् ॥ बिल्वबिल्वजयूषाद्याप्लावनैश्च ॥ फलजीमूतकेक्ष्वाकुधामार्गवकुटजाकृतवेधनहस्तिपर्ण्युपहितैरास्थापयेत्॥सिद्धार्थककुष्ठलांगलकीमहावृक्षक्षीरमिश्रेण वा सुरामंडेन शाल्मलीवृंतानि वा स्विन्नान्यापोथ्य पंचमूलकषाये विमर्दयेत्॥तेन च पूतेन स्नेहवता फलादियुक्तेन यथोक्तास्थापनद्रव्यसिद्धेन कटुतैलेनोत्तरबस्तिं दद्यात् ॥ शिग्रुसुमुखमरिचाजाजिचित्रककल्कक्षीरगोमूत्रसिद्धेन वा कटुतैलेनाऽनुवासयेत् ॥ उमाशाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयात् ॥ स्निग्धेन वा कृत्तनखेन पाणिना नालानुसारतोऽपहरेत् ॥ प्र-

[1] उत्कृत्येतिपाठः

जातायां चेद्बस्तिमूर्द्धोदरेषु शूलं मक्कलाख्यं स्यात् ॥ तत्र यवक्षारचूर्णं सर्पिषा सुखोष्णोदकेन वा पिबेत् ॥ वरणादिं वा सपंचकोलमेलाप्रतीवापं ॥ अथवा वीरतरादिमूषकादिप्रतीवापं ॥ लवणचूर्णं वा वत्सकादिनिर्यूहेण ॥ वत्सकादिं वा मदिरया ॥ अंशुमतीद्वयक्काथेन वा मरिचभद्रदारुकल्कं ॥ भार्ङ्गीनागरदेवदारुकल्कं वोष्णांभसा ॥ पुराणगुडं वा त्रिकटुत्रिजातकधनिकाचूर्णसंसृष्टं भक्षयेत् ॥ तस्याश्चेत्स्वस्थानतो योनिर्भ्रंश्येत् ॥ ततो यस्य कस्यचिच्छोणितेनाभ्यज्य योनिं यथास्थानं कुशला स्त्री निवेशयेत् ॥ निविष्टां चाशोकरोहिणीबर्हिषोशीरप्रियंगुदेवदारुकल्कविपक्केन तैलेन बहुशः स्वेदयेत्पूरयेत् ॥ ब्रूयाच्च गच्छ सुभगे स्वस्थानमिति ॥ तद्वच्चान्यतमा स्त्री जातमात्रमेव बालं बालोपचरणीयेन विधिनोपपादयेत् ॥ तमुपदेक्ष्यते तूत्तरेषु ॥ अथ सूतिकां बलातैलेनाभ्यज्यात् ॥ बुभुक्षितां च पंचकोलचूर्णेन यवान्युपकुंचिकाचव्यचित्रकव्योषसैंधवचूर्णेन वा युक्तामहःपरिणामिनीं यथासात्म्यं स्नेहमात्रां पाययेत् ॥ स्नेहायोग्यां वातहरौषधक्काथं ह्रस्वपंचमूलकथं वा पीतवत्याश्च यमकेनाभ्यज्य वेष्टयेदुदरं वस्त्रेण ॥ तथा न वायुरुदरविकृतिमुत्पादयेदनवकाशत्वात् ॥ जीर्णे तु स्नेहे पूर्वौषधैरेव सिद्धां विदार्यादिगणक्काथेन क्षीरेण वा यवागूं सुस्विन्नां द्रवां मात्रया पाययेत् ॥ प्राक्स्नेहयवागूपानाभ्यां चोभयकालमुष्णोदकेन परिषेचयेत् ॥ एवं त्रिरात्रं पंचरात्रं सप्तरात्रं वाऽनुपाल्य ततो यवकोलकुलत्थयूषेण लघुना चान्नपानेन द्वादशरात्रात्परं जांगलरसादिभिश्च क्रमादाप्याययेदग्निबलादीन्यपेक्ष्य ॥ क्वथितशीतं च तोयं पाययेत् ॥ तथा जीवनीयबृंहणीयमधुरवातहरसिद्धैरभ्यंगोच्छादनपरिषेकावगाहैरन्नपानैश्च हृद्यैरुपाचरेत् ॥ एवं हि गर्भवृद्धिक्षपितशिथिलसर्वशरीरधातुप्रवाहणवेदनाक्लेदरक्तनिस्रुतविशेषशून्यशरीराच्च पुनर्नवीभवत्यतएव च सूति-

काया व्याधिः कृच्छ्रसाध्यो भवत्यसाध्यो वा तस्मात्तां यथोक्तेन विधिना प्रयत्नेनोपचरेत् ॥ एवं साऽध्यर्द्धमासमुपसंस्कृता क्रमेण विमुक्ताहारविहारयंत्रणा विगतसूतिकाभिधाना स्यात् ॥ पुनरार्तवदर्शनादित्येके ॥ इत्याद्यं मासमादाय यावद्गर्भक्षमा पुनः ॥ स्त्री स्यात्तावद्विधिः सर्वः सर्वथा साधु दर्शितः ॥ इति गर्भोपचरणीयो नाम तृतीयोऽध्यायः ॥ ३ ॥

अथातो गर्भव्यापदं शारीरं व्याख्यास्यामः ॥ स्त्री चेदापन्नगर्भा परिहार्याण्यासेवेत ॥ तत्र यस्या बस्तिपार्श्वश्रोणियोनिमुखेषु शूलं पुष्पदर्शनं वा स्यात् ॥ तां मृदुसुखशिशिरास्तरणशयनस्थामीषदवनतशिरसं शीतप्रदेहपरिषेकादिभिरुपाचरेत् ॥ तद्यथा ॥ सहस्रधौतेन सर्पिषाऽधोनाभेः सर्वतः प्रदिह्यात् ॥ मधुकसर्पिषा सुशीतेन पिचुमाप्लाव्य योनिसमीपे स्थापयेत् ॥ गव्येन पयसा मधुकांबुना न्यग्रोधादिकषायेण वा परिषेचयेत् ॥ परिपीततत्स्वरसानि च तैलानि योनौ निधापयेत् ॥ तच्छुंगसिद्धस्य वा क्षीरसर्पिषः पिचुं ॥ अतिस्रवति तु रक्ते ततएवाक्षमात्रं प्राशयेत् ॥ केवलादेव वा क्षीरसर्पिषः ॥ पद्मोत्पलकुमुदकिंजल्कं च समधुशर्करं लेहयेत् ॥ धातकी गैरिकसर्जरसरसांजनचूर्णं वा समधु ॥ न्यग्रोधादित्वक्प्रवालकल्कं वा ॥ शशैणहरिणरुधिरं वा सक्षौद्रं पाययेत् ॥ ऋद्धिविदारीजीवंतीर्वा पयसा ॥ नीलोत्पलासितापक्लोध्रचंदनादि वा तंदुलांबु वा सरसान्यसरेण ॥ गंधप्रियंग्वसितोत्पलशालूकोदुंबरशलादुन्यग्रोधशुंगानि वाऽऽजेन पयसा ॥ कसेरुकमृणालशृंगाटककाश्मर्यपरूषकद्राक्षासारिवाप्रपौंडरीकानंतोत्पलकंदबीजक्वाथेन वा शर्करामधुमधुरेण ॥ शालिपिष्टं जीवनीयशृतं वा क्षीरं ॥ बलाऽतिबलाशालिषष्टिकेक्षुमूलकाकोलीशृतेन च पयसा समधुशर्करेण रक्तशाल्योदनं सुशीतं भोजयेच्छीतवीर्यजांगलरसेन वा ॥ रक्तपित्तक्रियाश्च शोधनवर्ज्याः

प्रयुंजीत ॥ सौम्याश्च मनोनुकूलाः कथाः ॥ अदृष्टशोणितां तु मधुकपयस्यासुरदारुभिः सिद्धं पयः पाययेत् ॥ ताम्रवल्यश्मंतकशतावरी पयस्याभिर्वा ॥ विदार्यादिगणेन वा ॥ श्वदंष्ट्रास्वरसक्षीरसिद्धं वा सर्पिः ॥ पलांडुरससिद्धं वा सक्षौद्रं ॥ अपूर्णत्रिमासायास्तु पुष्पदर्शने गर्भः प्रायो न तिष्ठत्यसंजातसारत्वात् ॥ आमान्वये चोर्ध्वमपि विरुद्धोपक्रमत्वात् ॥ तत्र रूक्षशीतानि प्रयुंजीत ॥ तद्यथा ॥ प्रागुपवासं तथा दुरालभाऽमृतोशीरपर्पटकघनचंदनातिविषाबलाकटुंगधान्याककाथपानं तृणधान्यशालिषष्टिकपेयामशनं च मुद्गादियूषैर्जिते त्वामे स्निग्धशीतानि पूर्ववत् ॥ आमगर्भे तु पतिते मद्यानामन्यतमं सामर्थ्यतः पाययेद्गर्भकोष्ठविशुद्ध्यर्थमर्त्तिविस्मरणार्थं च ॥ अमद्यपां पाचनीयद्रव्योपहिताभिः स्नेहलवणवर्जाभिः सतिलाभिरुद्दालकादियवागूभिरुपाचरेद्यावंतो मासा स्तावंत्यहानीति ॥ ततः प्रीणनैर्बलानुरक्षिभिरस्नेहैराहारैर्दोषधातुक्लेदशुद्धेः ॥ आमगर्भशेषेण हि पुनः पुनः शूलमनुषज्येत ॥ तस्मात्तीक्ष्णैरनवशेषयन्नुपाचरेत् ॥ ततः परं स्नेहपानैर्बस्तिभिराहारैश्च दीपनीयपाचनीयजीवनीयबृंहणीयमधुरवातहरैरिति ॥ यस्याः पुनर्महति जातसारे गर्भे वर्ज्यानामवर्जनात्पुष्पदर्शनं स्यादन्यद्वा योनिस्रवणं ॥ तस्यास्तन्निमित्तं वायुः प्रकुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्यावतिष्ठते ॥ ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभिः प्रतिच्छन्नायां रसस्यासम्यग्वहनाद्गर्भो वृद्धिमनाप्नुवन्नुपविशत्युपशुष्यति वा ॥ तत्र यस्याः कादाचित्कार्तवपरिस्रावादल्पौ च दृश्येते सततं च गर्भः प्रासात्परिमाणादपरिहीयमानएव स्फुरति न च कुक्षिर्विवर्द्धते तमुपविष्टकमित्याचक्षते ॥ यदा तु प्रतिमासमार्तवं प्रत्यहं वा परिस्रवणं नात्यल्पं च तथा परिहीयमाणो गर्भश्चिरात्किंचित्स्पंदते ॥ कुक्षिश्च वृद्धोऽपि च

विहीयते तदुपशुष्ककं नागोदरं च ॥ तौ तु मातुराहारतेजसाऽल्पे-
नाप्यायमानौ यदा पुष्टौ स्यातां तदा वर्षगणैरपि प्रमदा प्रसूयत ए-
व ॥ तत्र वातेनोपविष्टकोपशुष्ककयोर्वायुः प्रतिहन्यते सशब्दं फे-
निलं विच्छिन्नं शकृदुपवेश्यते मूत्रमुपरुध्यते कटीपृष्ठहृदयेषु वेदना
जृंभा निद्रानाशोऽभीक्ष्णं प्रतिश्यायः शुष्ककासः सादः क्ष्वेलते इव
कर्णौ तुद्येते इव शंखौ पिपीलिकाभिरिव संसृज्यते शरीरं परिक्रं-
दन्निव वायुर्भ्रमति कुक्षौ तमइव प्रवेश्यते दुःखेनान्नस्य जरणमह-
रहः परिहानिः स्फुटितविवर्णपरुषत्वक्त्वं च भवति ॥ पित्तेन ताम्र-
हरितमुपवेश्यते धूमकोऽम्लकश्छर्दिर्मूर्च्छा कुक्षिहृदयदाहः पीतरक्त-
गोमूत्राभनेत्रमूत्रनखत्वं काली दुर्बला नित्यशूला च नारी भवति ॥
श्लेष्मणा मधुरास्यत्वमुत्क्लेशः श्लेष्मोद्गमनं भक्तद्वेषः श्वेतहस्तपा-
दनेत्रता कासः श्वासश्च ॥ तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धानां
सर्पिषामुपयोगः ॥ तथा पयसां रसानामामगर्भाणां च गर्भवृद्धिकरः ॥
तथा संभोजनमेतैरेव च घृतादिभिः॥ सुभिक्षाया अभीक्ष्णं यानवाह-
नादिभिः क्षोभणमार्जनजृंभणैरुपपादनं॥अथ विशेषेण वाते पूर्वमेव सैं-
धवोपहितं क्षीरबस्तिं दत्वा शीतोदकस्नातां मृदु शाल्योदनं भोजयेत्॥
ततो विदार्यादिगणसाधितेन सर्पिषा ऽनुवासयेत् ॥ निवातं च सेवेत॥
पित्ते मधुकविदारीनिर्यूहसिद्धं पयः पिबेत् ॥ तिस्रः स्थूलकुक्कुटीर्निस्तु-
षमाषाढकं च क्षीरोदकेनोदूखले संक्षुद्य तद्रसेन सर्पिषा च तित्तिरिक-
पिंजलान्यतररसं साधयित्वा पाययेदुपविष्टकविवर्द्धनार्थमुपशुष्ककबृं-
हणार्थं च ॥ अजासर्पिषा क्षीरेण जीवनीयैश्च संस्कृतां यवागूं पि-
[illegible] पयस्या काकोलीद्वयसुनिषण्णककल्केन पयसा च सर्पिर्वि-
पचेत् ॥ [illegible] क्षीरानुपानमुपयुंजीत ॥ आमगर्भरसेन वाऽश्नी-
यात् ॥ तानेव च तत्र [illegible] येज्जलचरमांसानि च ॥ कफे त्वा-
नूपोदकपिशितोपदंशामच्छसुरां [illegible] गात्रं सप्तरात्रं वा पि-

बेत् ॥ तिलमुद्गमाषलवणबिल्वपत्रैः पंचभिर्घृतपात्रं संयोज्य स्वनुगुप्तं निधापयेत् ॥ ततः प्रातः पिंडं बिल्वमात्रं शृतशीतच्छागदुग्धानुपानं प्राश्नीयात् ॥ अत्रैव वा बदरचूर्णपात्रमपि निदध्यात् ॥ एवमवृद्धौ तीक्ष्णैर्विरेचयेदपरापातनीयैश्च पातयेत् ॥ यस्याः पुनर्वातोपसृष्टस्रोतसि संलीनो गर्भः प्रसुप्तो न स्पंदते तं लीनमित्याहुः ॥ तत्र श्येनोत्क्रोशगोमत्स्यगोधाशिखिकुक्कुटतित्तिरीणामन्यतमस्य रसेन भूरिसर्पिष्केण माषयूषेण मूलकयूषेण वा घृताढ्येन रक्तशाल्योदनं भोजयेत् ॥ सक्तून्वा तिलमाषबिल्वशलाटुयुक्तान् पयसा पाययेत् ॥ मद्यमांसोपदंशं वा मार्द्वीकं ॥ तैलेन चाभीक्ष्णमुदरवंक्षणोरुकटीपार्श्वपृष्ठान्यभ्यंज्यात् ॥ मुहुर्मुहुश्चैनां हर्षयेत् ॥ पूर्वोक्तं चेक्षेत ॥ यस्याः पुनरुदावर्तविबंधः स्यात्तां वातहरस्निग्धान्नपानैरुपाचरेत् ॥ अष्टमे तु मासे मधुरकसिद्धेन तैलेनानुवासयेत् ॥ तदसिद्धौ वीरणशालिकुशकाशेक्षुबालिकावेतसपरिव्याधमूलानां भूतिकानंतकाश्मर्यपरूषकमधुकमृद्वीकानां च पयसाऽर्द्धोदकेनोद्धृत्य रसं तेन पियालबिभीतकमज्जतिलकल्कयुक्तेनेषल्लवणोष्णेन निरूहयेत् ॥ विगतविबंधां च स्नाताशितां सायं तेनैव तैलेनानुवासयेत् ॥ उदावर्तो हि समुपेक्षितः सहसा सगर्भां गर्भिणीमतिपातयेत् ॥ यस्याः पुनरतिमात्रदोषोपचयाद्यथोक्तैर्वा व्यवायादिभिरन्यैर्वा व्याधिभिः पूर्वोपचितेन वा जनन्यपत्ययोः कर्मणा बंधनान्मोच्यते गर्भः फलमिव वृंतात् स मुक्तबंधनो गर्भशय्यामतिक्रम्य यकृत्प्लीहांत्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति ॥ ततः कोष्ठसंक्षोभाद्वायुरपानो मूढः कुक्षिबस्तिपार्श्वोदरयोनिशूलानाहविण्मूत्रसंगानापाद्य गर्भं च्यावयति तरुणं शोणितभावेन ॥ सोऽभिहितः प्राक् ॥ विवृद्धे तु गर्भे स्तब्धं स्तिमितं शीतमश्मगर्भमिवोदरमाभाति ॥ शूलमर्धकमुपजायते न च स्पंदते गर्भो नाड्यः प्रादुर्भवंति न स्रवति योनिरक्षिणीचा-

स्याः संस्वेते तथा भृशमरतिपरीता व्यथतेऽन्यथा चेष्टते ताम्यति भ्राम्यति रोदित्यहर्निशं न स्वपिति प्रत्युच्छ्वासात्कृच्छ्राच्छ्वसित्यति- कष्टं प्राणिति क्षयतीत्येवंविधां स्त्रियं मृतगर्भां विद्यात् ॥ तं तु गर्भं कदाचिदसम्यगपत्यपथमनेकधा प्रतिपन्नं विगुणेन वायुना पीडितं मोहितं च मूढगर्भमित्याहुः ॥ विगुणानिलप्रतिपीडनवैचित्र्यादसं- ख्यगतिं च ॥ समासतस्तु त्रिविधा गतिरूर्ध्वा तिर्यङ्न्युब्जा च ॥ सं- स्थानानि पुनरष्टौ ॥ तान्यत्रैवोत्तरत्र वक्ष्यंते ॥ तेषु सर्वेष्वपि विप- रीतेंद्रियार्थामाक्षेपयोनिभ्रंशसंवरणमक्कल्लश्वासभ्रमाभिपन्नां शीतगा- त्रीं पूत्युद्गारां च वर्जयेत् ॥ न तु क्षणमप्युपेक्षेत गर्भशल्यं ॥ तद्धि निरुच्छ्वासीकृत्याशु जननीं हन्यात् ॥ सचेतनश्च गर्भः शस्त्रेण विदा- र्यमाणो विषममंगानि विक्षिपेत् ॥ तस्मात्तत्संगे सूत्यः प्रयतेरन् पू- र्वोक्तानि च मंत्रौषधानि प्रयुंजीत ॥ त्रिविधस्तु संगो भवति ॥ शि- रस्यंसे जघने वा ॥ मूढगर्भस्य तु जरायुपातनसामान्यं कर्मेत्येके ॥ मंत्रादिकर्माथर्ववेदविहितमित्येके ॥ दृष्टकर्मणा शल्यहर्त्रा शल्या- हरणमित्येके ॥ तत्वतः कष्टतममस्ति शस्त्रकर्म ॥ यतो योनियकृ- त्प्लीहांत्रगर्भाशयादीनां मध्ये ताननुपहिंसताऽस्पर्शवता शस्त्रमवचा- र्यमुत्कर्षणापकर्षणव्यावर्तनोत्कर्त्तनछेदनभेदनपीडनर्जूकरणानि चैके- न पाणिना कार्याणि ॥ तस्मादीश्वरमापृच्छ्य परं च यत्नमास्थाय तद्विद्यसहितस्तमुपक्रमेत् ॥ अक्रियायां ध्रुवं मरणं ॥ तथोदराश्मरी- प्रभृतीनपि ॥ अथोत्तानाया व्याभुग्नसक्थ्या वस्त्रचुंभलोन्नमितकटि- प्रदेशायाश्च धन्वनागमृत्तिकाशाल्मलीपिच्छापूतैरभ्यज्य हस्तं योनिं च गर्भमाहरेत् ॥ तत्र सक्थिभ्यामागतस्यानुलोम्याच्छिन्नमेव॥एक- स्मिन् सक्थ्नि प्रपन्नस्येतरं सक्थि प्रसार्य स्फिग्देशागतस्य स्फिग्देशं प्रतिपीड्योर्ध्वमुत्क्षिप्य सक्थिनी प्रसार्य तिर्यगागतस्य परिवर्त्य वा-

ऽपरार्द्धमुत्क्षिप्य पूर्वार्द्धमपत्यपथं प्रत्यार्जवमानीय पार्श्ववृत्तशिरसोंऽसं प्रतिपीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीय बाहुद्वयं प्रपन्नस्योर्ध्वमुत्पीड्यांऽसौ शिरोमूलमानीय निर्हरेत् ॥ यस्त्वाभुग्नमध्यः पाणिपादशिरोभिर्योनिं प्रतिपद्यते ॥यश्चाभुग्नएवैकेन पादेन योनिं द्वितीयेन पायुं ॥ तौ मूढौ हस्तेनाहर्तुमशक्याविति शस्त्रमवचारयेत् ॥ अथ स्त्रियमाश्वास्य मंडलाग्रेणांगुलिशस्त्रेण वा विदार्य शिरःकपालान्याहृत्य शंकुना गृहीत्वा चुबुके तालुन्युरसि कक्षायां वाऽपहरेत्॥अभिन्नशिरसं वाऽक्षिकूटे गंडे वा ॥ तथांऽससंसक्तस्यांसदेशे बाहुं छित्वा दृतेरिवाध्मातस्य वातपूर्णमुदरमवदार्य निरस्यांत्राणि शिथिलीभूतमाहरेत् ॥ जघनसक्तस्य जघनकपालानि दारयित्वेति ॥ भवंति चात्र ॥ यद्यद्वायुवशादंगं सज्जेद्गर्भस्य खंडशः ॥ तत्तच्छित्वा हरेत्सम्यग्रक्षेन्नारीं च यत्नतः॥ अथापतंतीमपरां पातयेत्पूर्ववद्भिषक् ॥ एवं निर्हृतशल्यां च सिंचेदुष्णेन वारिणा ॥ दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ॥ योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ दीप्यकातिविषारास्नाहिंग्वेलापंचकोलकान् ॥ चूर्णं स्नेहेन कल्कं वा क्वाथं वा पाययेत्तथा ॥ कटुकातिविषापाठाशाकत्वग्हिंगुतेजिनीः ॥ तद्वच्च दोषस्यंदार्थं वेदनोपशमायच ॥ त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत्॥ सायं पिबेदरिष्टं च तथा सुकृतमासवं ॥ शिरीषककुभक्वाथपिचून् योनौ च निक्षिपेत् ॥ उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ॥ पयो वातहरैः सिद्धं दशाहं भोजने हितं ॥ रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ स्वेदाभ्यंगपरा स्नेहान् बलातैलादिकान् भजेत् ॥ ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥ अथ बलातैलमुपदेक्ष्यामः ॥ बलामूलकषायस्य भागाः षट् तावंतएव पयसो यवकोलकुलत्थदशमूलकषायस्य भागो भागश्चतुर्दशस्तैलस्य तत्सर्वमे-

---

१ चतुर्दशः चतुर्दशतमः एको भागइति यावत्

कल्कं कृत्वा श्लक्ष्णचूर्णानि चावाप्य काकोलीक्षीरकाकोलीजीवक-र्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाक्षीरशुक्लामधुकदेवदारुमंजिष्ठा-चंदनसारिवाबलातगरकुष्ठशतावर्यश्वगंधापुनर्नवाशतपुष्पापत्रकत्वक्-सर्जरसशैलेयकवचाऽगुरुकालानुसार्यसैंधवानि शनैर्मृद्वग्निना साधयित्वा सुभाजनेऽनु गुप्तं निदध्यात् ॥ एष भगवतो धन्वंतरेरभिमतस्तैलराजो राज्ञां राजमात्राणां कृशानां सूतिकानां शिशूनामतीतवयसां सुकुमा-राणां महाग्रहगृहीतानां दीर्घरोगक्षपितवपुषां मर्मविद्धपतिताभिहतभ-ग्नविश्लिष्टांगानां दैवोपघाताभिशस्तमनोज्वरपरीतानां पाननावनाभ्यं-गबस्तिषु प्रयोज्यः ॥ तेन बलपौरुषस्मृतिमतिमेधाग्निवीर्यौजांसि वर्द्ध-ते पक्षघाताक्षेपकार्दितादिविविधवातविकारगुल्महिध्माश्वासकासा नि-वर्तंते ॥ अहरहश्चोपयुज्यमानेन षण्मासादंत्रवृद्धिः प्रशममेति ॥ वंध्या च पुत्रं गुणवंतमिच्छया लभतइति ॥ भवंति चात्र ॥ बस्तिद्वारे विप-न्नायाः कुक्षिः प्रस्पंदते यदि ॥ जन्मकाले ततः शीघ्रं पाटयित्वोद्धरे-च्छिशुं ॥ मधुकं शाकबीजं च पयस्या सुरदारु च ॥ अश्मंतकः कृष्ण तिलास्ताम्रवल्ली शतावरी ॥ वृक्षादनी पयस्या च लता सोत्पलसारि-वा ॥ अनंता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ बृहतीद्वयकाश्मर्य-क्षीरिशुंगत्वचो घृतं ॥ पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ शृंगाटकं बिसं द्राक्षा कसेरु मधुकं सिता ॥ सप्तैतान् पयसा योगानर्द्ध श्लोकसमापनान् ॥ क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ॥ कपि-त्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ॥ मूलैः शृतं प्रयुंजीत क्षीरं मासे तथाऽष्टमे॥नवमे सारिवाऽनंतापयस्यामधुयष्टिभिः॥योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ॥ अथवा यष्टिमधुकनागरामरदारुभिः ॥ इति गर्भव्यापन्नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातोऽगविभागं शारीरं व्याख्यास्यामः ॥ सकलमपि शरी-रमंगमित्युच्यते ॥ तच्च पुनः षडंगं शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी

च ॥ नेत्रनाभिगाणिपादादीनि त्वस्य प्रत्यंगानि ॥ महागुणमयेभ्यश्च खपवनतेजोजलभूम्याख्येभ्यो महाभूतेभ्यश्चेतनाधिष्ठितेभ्योऽभिनिर्वृत्तिः ॥ भूतानामेवच दृष्टादृष्टविविधकर्मवशादनेकरूपात्सन्निवेशविशेषादाकृतिप्रमाणस्नेहदीप्तिस्वरादीनां सारूप्यमसारूप्यं वा सूक्ष्मस्थूलतारतम्यभेदभिन्नमतिबहुप्रकारं निष्पद्यते ॥ तत्र सत्वबहुलमाकाशं ॥ रजोबहुलो वायुः ॥ उभयबहुलोऽग्निः ॥ सत्वतमोबहुलमंबु ॥ तमोबहुला भूः ॥ तेषामप्रतिघातश्चलत्वमौष्ण्यं द्रवता काठिन्यमिति क्रमाल्लिंगानि ॥ विशेषतश्च श्रोत्रादिष्विंद्रियेष्ववस्थानं शब्दस्पर्शरूपरसगंधरेकैकप्रवृद्धैरन्वयः ॥ तत्राकाशजानि श्रोत्रं शब्दः खानि विविक्तता च ॥ वायवीयानि स्पर्शनं स्पर्शः प्रश्वासोच्छ्वासादिपरिस्पंदनानि लाघवं च ॥ आग्नेयानि दर्शनं रूपं पित्तमूष्मा पक्तिः संतापो मेधा वर्णो भास्तेजः शौर्यं च ॥ आंभसानि रसनं रसः स्वेदक्लेदवसारसासृक्शुक्रमूत्रादिद्रवसमूहः शैथिल्यं स्नेहश्च ॥ पार्थिवानि घ्राणं गंधः केशनखास्थ्यादिमूर्तिसमूहो धैर्यं गौरवं च ॥ तेषु मातृजानि मृदूनि त्वग्रक्तमांसमेदोमज्जनाभिहृदयामाशयगर्भाशययकृत्प्लीहक्लोमांत्रगुदादीनि ॥ पितृजानि स्थिराणि केशनखास्थिशुक्रसिरास्नाय्वादीनि ॥ आत्मजानि तासु तासु योनिषूत्पत्तिर्मनश्चेतनेंद्रियाणि प्राणापानौ धारणमाकृतिस्वरवर्णविशेषाः कामक्रोधलोभभयहर्षाः धर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाहंकारसुखदुःखायुरात्मज्ञानानि च ॥ सात्म्यजान्यायुरारोग्यमनालस्यमलोलुपत्वमिंद्रियप्रसादस्वरवर्णबीजौजःसंपत्प्रशस्तताः प्रहर्षभूयस्त्वं मेधा बलं च ॥ रसजानि कृत्स्नस्य देहस्य संभवो वृत्तिर्वृद्धिस्तृप्तिरलौल्यं पुष्टिरुत्साहश्च ॥ शुद्धसत्वजानि शौचमास्तिकत्वं कृतज्ञता दाक्षिण्यं व्यवसायः शौर्यं गांभीर्यं बुद्धिर्मेधा स्मृतिः शुक्लधर्मरुचिर्भक्तिरनभिष्वंगस्तमोगुणविपर्ययश्च ॥ राजसानि दुःखबाहुल्या

शौर्यं मात्सर्यममितभाषित्वमहंकारो लोलुपत्वं दंभो मानः क्रोधो हर्षः कामश्च ॥ तामसान्यज्ञानं विषादः प्रमादो निद्राऽऽलस्यं क्षुत्तृष्णा शोको मात्सर्यं विप्रतिपत्तिः पराभिसंधानं सत्वगुणवैपरीत्यं च ॥ तत्र सत्वं मनः ॥ तस्योपप्लवो रजस्तमश्चेति ॥ एवं भूतात्मकं देहमाहुः ॥ तस्य पुनः प्रविभागः ॥ त्वचः कला दोषा धातवो मला बुद्धींद्रियाणि तदधिष्ठानानि कर्मेंद्रियाण्यतींद्रियमाशयाः प्राणायतनानि कंडरा जालानि कूर्चा रज्जुकसीवन्योऽस्थिसंघाताः सीमंता अस्थीन्यस्थिसंधयः स्नायूनि पेश्यः सिरा धमन्यः स्रोतांस्यूष्माणो मर्माणि केशश्मश्रुलोमानि प्रकृतिविकृतिभेदाश्च ॥ तत्रासृजः पच्यमानस्य क्षीरस्येव संतानिकाः षट् त्वचो भवंति॥त्वक्प्रसादादृक्तस्य प्रसादः॥तासामुदकधरा चाद्या ॥ द्वितीयाऽसृक्धरा॥ तृतीया सिध्मकिलासाधिष्ठाना॥ चतुर्थी सर्वकुष्ठाधिष्ठाना ॥ पंचमी पुनरलजीविद्रध्यधिष्ठाना ॥ षष्ठी तु प्राणधरा॥ यस्यां छिन्नायां ताम्यत्यंधमिव च तमः प्रविशति यां चाधिष्ठायारूंषि जायंते पर्वसु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि ॥ अन्ये तु सप्त त्वचो वदंति ॥ तत्र प्रथमा भासिनी नाम या वर्णानामवभासिनी खादीनां च पंचानां छायानां सा व्रीहेरष्टादशभागप्रमाणा ॥ द्वितीया लोहिनी नाम षोडशभागप्रमाणा ॥ तृतीया श्वेता नाम द्वादशभागप्रमाणा ॥ चतुर्थी ताम्रानामाष्टभागप्रमाणा॥ पंचमी वेदिनी नाम पंचभागप्रमाणा॥षष्ठी रोहिणी नाम व्रीहिप्रमाणा ॥ सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा ॥ यस्तु धात्वाशयांतरेषु क्लेदोऽवतिष्ठते यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठइव सारो धातुसारः रसशेषोऽल्पत्वात्कलासंज्ञः ॥ ता धात्वाशयांतरमर्यादाः सप्त कलाः ॥ तासां प्रथमा मांसधरा नाम यस्यां मांसे सिरास्नायुधमनीस्रोतसां भूमाविव पंकोदके बिसमृणालानां प्रताना भवंति ॥ द्वितीया रक्तधरा नाम मां-

सस्याभ्यंतरतस्तस्यां शोणितं विशेषतश्च सिराप्लीहयकृत्सु भवति मांसाच्च क्षतात्क्षतजं वृक्षादिव क्षीरिणः क्षीरं प्रवर्तते ॥ तृतीया मेदोधरा नाम मेदो हि तस्यामुदरेऽण्वस्थिषु च सरक्तं भवति तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलुंगाख्यं च स्थूलास्थिषु तु मज्जा ॥ चतुर्थी श्लेष्मधरा नाम तत्स्थेन हि श्लेष्मणाऽऽश्लेपिताः सर्वसंधयो दृढा भवंति सोपांगाइवाक्षाः ॥ पंचमी पुरीषधरा नाम सा ह्यंत्रामपक्वाशयाश्रिता कोष्ठांतरुंदुकस्थं मलं विभजति ॥ षष्ठी पित्तधरा नाम पक्वामाशयमध्यस्था सा ह्यंतरग्न्यधिष्ठानतयाऽऽमाशयात्पक्वाशयोन्मुखमन्नं बलेन विधार्य पित्ततेजसा शोषयंती पचति पक्वं च विमुंचति ॥ दोषाधिष्ठिता तु दौर्बल्यादाममेव ततोऽसावन्नस्य ग्रहणात्पुनर्ग्रहणीसंज्ञा बलं च तस्याः पित्तमेवाग्न्यभिधानमतः साग्निनोपस्तब्धोपबृंहितैकयोगक्षेमा शरीरं वर्तयति ॥ सप्तमी शुक्रधरा नाम ह्यंगुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाधो मूत्रमार्गमाश्रिता सकलशरीरव्यापिनी शुक्रं प्रवर्तयति ॥ दोषा धातवो मलाश्च प्रागुदिताः ॥ पंच बुद्धींद्रियाणि श्रोत्रं स्पर्शनं दर्शनं रसनं घ्राणं च ॥ तेषां समभागतया क्रमाद्विषयाः शब्दस्पर्शरूपरसगंधाः ॥ पंच बुद्धींद्रियाधिष्ठानानि कर्णौ त्वगक्षिणी जिव्हा नासिके च ॥ पंच कर्मेन्द्रियाणि वाक्पायूपस्थपाणिपादसंज्ञकानि ॥ तान्यपि च वचनोत्सर्गहर्षादानगमनार्थानि ॥ अतींद्रियं तु मनः सर्वार्थैरन्वयात् ॥ तद्योगेन चेंद्रियाणामर्थप्रवृत्तिः ॥ बुद्धिकर्मेन्द्रियोभयात्मकत्वाच्च ॥ सप्ताशयाः क्रमादसृक्कफामपित्तपक्ववायुमूत्राधाराः ॥ स्त्रीणां पित्तपक्वाशययोर्मध्ये गर्भाशयोऽष्टमः ॥ तेषु प्रतिबद्धानि कोष्ठांगानि हृदययकृत्प्लीहफुप्फुसोंदुकवृक्कांत्रादीनि ॥ तत्र समानेनाध्मायमानस्य देहोष्मणा पच्यमानस्य शोणितस्याच्छतो जायते यकृत्प्लीहा च ॥ रक्तफेनात्फुप्फुसं ॥ रक्तकिट्टादुंदुकः ॥ रक्तमेदःप्रसादा-

वृक्कौ॥ रक्तमांसप्रसादादंत्राणि॥ तानि सार्द्धत्रिव्यामानि पुंसां॥ त्रिव्यामानि स्त्रीणां॥ रक्तस्यानिलयोगात्कोलीयं॥ हृदयं पुनः श्लेष्मरक्तप्रसादात्संभवति पद्मकोशसंकाशं सुषिरमधोमुखं॥ तद्विशेषेण चेतनायाः स्थानं सर्वभावानां च चेतनानुगानां॥ तस्य वामपार्श्वे प्लीहा फुप्फुसश्च दक्षिणतो यकृत्क्लोमं च॥ तथा कफरक्तवाहिनां स्रोतसां महाभूतानां च प्रसादादिंद्रियाणि॥ तेष्वपि च नेत्रे श्लेष्मणः प्रसादाच्छुक्लमंडलं तत्पितृजं॥ असृजः कृष्णमंडलं तन्मातृजं मध्ये दृष्टिमंडलं तदुभयात्मकं॥ पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पंच मंडलानि॥ तत्संधयश्चत्वारः॥ द्वौ चापांगकनीनयोः॥ इति ते षट्॥ षट् च पटलानि॥ द्वे वर्त्मनी॥ बाह्यं चाश्रितमग्न्यंभसी द्वितीयं मांसं तृतीयं मेदश्चतुर्थमस्थि तेषां बहलता दृष्टेः पंचमांशेन॥ बंधनगुणास्तु चत्वारः सिराकंडरामेदःकफात्मकाः॥ श्लेष्मा तु परं सर्वसंधिबंधनमित्युक्तं प्राक्॥ नेत्राश्रितं तु तेजो बाह्यतेजसा स्वयोनिना योगाच्छस्त्रमिवाश्मना कर्मण्यं भवति॥ अतियोगादुपहन्यते॥ तच्च वैद्युतवद्वडवामुखवच्चांभोमध्यगमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति॥ मांसासृक्कफप्रसादात्तु जिह्वा जायते॥ मांसासृक्कफमेदःप्रसादाद्वृषणाविति॥ दश प्राणायतनानि मूर्द्धा जिह्वाबंधनं कंठो हृदयं नाभिर्बस्तिर्गुदः शुक्रमोजो रक्तं॥ एषामाद्यानि सप्त पुनर्महामर्मसंज्ञानि॥ षोडश कंडराः तासां द्वे द्वे करचरणेषु चतस्रः पृथक्ग्रीवापृष्ठयोः॥ षोडश जालानि तेषां मांससिरास्नाय्वस्थिजानि चत्वार्येकैकत्र गुल्फे मणिबंधे च परस्परगवाक्षितानि स्थितानि॥ षट् कूर्चा हस्तपादग्रीवामेंढ्रेषु॥ चतस्रो मांसरज्जवः पृष्ठवंशमुभयतः पेशीनिबंधनार्थं तासां द्वे बाह्ये द्वे चाभ्यंतरस्थिते॥ सप्त सीवन्यः ताः पं-

---

१ कुक्ष्यंतरगतौ गोलकौ॥ २ काळीजइति भाषायां ३ क्लोम पिपासास्थानं॥ ४ स्थूलस्नायवः

च शिरसि जिह्वामेहनयोरेकैका ॥ परिहार्याश्च शस्त्रेण ॥ चतुर्दशास्थिसंघाताः तेषामेकैको गुल्फजानुवंक्षणमणिबंधकूर्परकक्षासु त्रिकशिरसोश्च ॥ तद्वत्सीमंताः ते तु पंच शिरसीत्यष्टादश ॥ त्रीणि षष्ट्याऽधिकान्यस्थिशतानि॥तेषां च त्वारिंशच्छतं शाखासु स विंशशतमंतराधौ शतं मूर्द्धनीति ॥ तत्रैकैकस्मिन् सक्थनि पंच पादनखाः प्रत्येकमंगुल्यां त्रीण्यस्थीनि तानि पंचदश ॥ पंचपादशलाकाः तत्प्रतिबंधकमेकं द्वे द्वे कूर्चगुल्फजंघास्वेकैकं पार्ष्णिजानूरुषु ॥ सर्वाणि च नखास्थ्यादीनि सक्थिवद्बाह्वोश्च ॥ चतुर्विंशतिः पर्शुकाः ॥ तावंत्येव तत्स्थालकान्यर्बुदानि च ॥ त्रिंशत् पृष्ठे ॥ अष्टावुरसि ॥ एकैकं भगे त्रिके ॥ नितंबयोश्च द्वे ॥ तद्वदक्षकांसांसफलकेषु ॥ तथा गंडकर्णशंखेषु जत्रुतालुनोश्च॥ त्रयोदश ग्रीवायां चत्वारि कंठनाड्यां द्वे हनुबंधने द्वात्रिंशद्दंताः तद्वदुलूखलानि च त्रीणि नासायां षट् शिरसि ॥ तानि जानुनितंबांसगंडतालुशंखवंक्षणमध्यशिरःसु कपालसंज्ञानि ॥ दशनास्तु रुचकाः ॥ घ्राणकर्णग्रीवाक्षिकोशेषु तरुणानि ॥ पाणिपादपार्श्वपृष्ठेषु वलयानि ॥ शेषाणि नलकानीति ॥ नामानुगताकृतीनि पंच विधान्यस्थीनि ॥ तेषु हि सिराभिः स्नायुभिश्च निबद्धानि मांसानि ॥ दशोत्तरं शतद्वयमस्थिसंधीनां ॥ तेषामष्टषष्टिः शाखासु ॥ एकोनषष्टिरंतराधौ ॥ अशीति रूर्ध्वं ॥ तत्रैकैकस्मिन् सक्थि पादांगुलौ प्रत्येकं त्रयः द्वावंगुष्ठे ॥ ते चतुर्दश ॥ एकैको गुल्फजानुवंक्षणेषु त्रयः कटिकपालेषु ॥ चतुर्विंशतिः पृष्ठवंशे ॥ तद्वत्पार्श्वयोः ॥ अष्टावुरसि ॥ अष्टौ ग्रीवायां ॥ त्रयः कंठनाड्यां ॥ अष्टादश कंठनाडीनिबद्धा हृदययकृत्क्लोमनाडीषु ॥ द्वात्रिंशद्दंतमूलेषु ॥ एकैकः काकलनासामूर्द्धसु ॥ द्वौ द्वौ गंडकर्णशंखवर्त्मनेत्रहनुसंधिषु ॥ द्वावुपरिष्टाद्भ्रुवोः पंच शिरः कपालेषु ॥ तेऽ-

१ तद्वदस्थिसंघातवत्॥गुल्फादिष्वेकैकः॥त्रिके एकः॥पंच शिरसि॥एवमष्टादश सीमंताः॥

गुलिगुल्फजानुमणिबंधकूर्परेषु कोरसंज्ञाः ॥ कक्षावंक्षणदंतमूलेषूलूखलसंज्ञाः ॥ अंसपीठगुदभगनितंबेषु सामुद्गाः ॥ ग्रीवापृष्ठवंशयोः प्रतराः ॥ शिरःकटिकपालेषु तूनसेवनीसंज्ञाः॥हनूभयतो वायसतुंडाः॥ कंठनेत्रहृदययकृत्क्लोमनाडीषु मंडलसंज्ञाः ॥ श्रोत्रशृंगाटकेषु शंखावर्ताः ॥ इत्यस्थिसंधयोऽष्टविधाः ॥ स्नायुपेशीसिराश्रितैस्तु सह सहस्रद्वयं न पुनः शस्त्रप्रणिधाने तेषु वाच्यमस्तीति पृथङ्नोच्यते ॥ नव स्नायुशतानि ॥ तेषां षट्शतानि शाखासु॥ त्रिंशच्छतद्वयमंतराधौ ॥ ऊर्ध्वं सप्ततिः ॥ तत्रैकैकस्मिन्सक्थ्नि पादांगुल्यां प्रत्येकं षट् षट् ॥ तानि त्रिंशत् ॥ दश दश पादतलकूर्चगुल्फेषु ॥ त्रिंशज्जंघायां ॥ दश जानुनि ॥ चत्वारिंशदूरौ ॥ दश वंक्षणे ॥ चत्वारिंशत्कट्यां ॥ विंशतिर्मुष्कमेंढ्रबस्त्यंत्रेषु ॥ अशीतिः पृष्ठे ॥ षष्टिः पार्श्वयोः ॥ अष्टादशोरसि ॥ चत्वार्यक्षकयोः ॥ अष्टावंसयोः ॥ द्वे द्वे मन्याऽवटुनेत्रौष्ठतालुषु ॥ त्रिंशद्ग्रीवायां ॥ त्रीणि जत्रुणि ॥ चत्वारि हन्वोः ॥ पंच जिव्हायां ॥ द्वादशोत्तराधरेषु दंतमांसेषु ॥ षण्मूर्द्धनि ॥ तत्र शाखासु संधिषु च प्रतानवंति ॥ महास्नावानि तु वृत्तानि तानि कंडरासंज्ञानि ॥ बस्त्यामपक्वाशयांत्रेषु सुषिराणि॥ पार्श्वपृष्ठोरःशिरःसु पृथूनि ॥ स्नावबंधनैर्हि संधिषु सुबद्धा तनुर्नौरिव सम्यग्गीहते ॥ तस्मादस्थिसिरादिभ्योऽपि तानि यत्नतो रक्षेत् ॥ यश्च स्नावानि बाह्यान्यभ्यंतराणि च सम्यग्जानाति स गूढमपि शल्यमाहर्तुं समर्थो भवति ॥ पंच पेशीशतानि ॥ तासां चत्वारिशतानि शाखासु ॥ षष्टिरंतराधौ ॥ चत्वारिंशदूर्ध्वं ॥ तत्रैकैकस्मिन् सक्थिनि पादांगुल्यां प्रत्येकं तिस्रः ॥ ताः पंचदश ॥ दश दश प्रपदे पादतले गुल्फे च ॥ तथा पादस्योपरि कूर्चे सन्निविष्टाः ॥ विंशतिर्जंघायां ॥ पंच जानुनि ॥ विंशतिरूरौ ॥ एकैका मेंढ्र-

सेवन्योः ॥ द्वे वृषणयोः ॥ दश स्फिजोः॥तिस्रो गुदे तास्तु वलीसंज्ञाः॥ द्वे बस्तिशिरसि ॥ चतस्र उदरे ॥ नाभ्यामेका ॥ द्वे हृदि आमाशये- च ॥ षट् यकृत्प्लीहोंडुकेषु ॥ पृष्ठे पंचोर्ध्वसनिविष्टाः ॥ दश दीर्घाः पार्श्वयोः ॥ दश वक्षसि ॥ तिस्रोंऽसाक्षकोपरितः ॥ दश ग्रीवायां ॥ अष्टौ गंडयोः ॥ अष्टौ हन्वोः ॥ एकैका गलकाकलजिव्हामूर्द्धसु ॥ द्वे द्वे तालुललाटयोः ॥ नासौष्ठकर्णेषु च ॥ स्त्रीणां तु विंशतिरधिका ॥ तत्र दशस्तनयोः तासां यौवने परिवृद्धिर्भवति ॥ दश योनौ ॥ तासा मभ्यंतराश्रिते द्वे मुखाश्रिते वृत्ते द्वे ॥ तिस्रो गर्भमार्गाश्रयाः॥यस्यां- गर्भ स्तिष्ठति ॥ योनिस्तु शंखनाभ्याकृतिस्त्र्यावर्ता तस्यास्तृतीयआवर्वे पित्तपक्वाशयांतरे रोहितमत्स्यमुखाकारा गर्भशय्या ॥ तस्यां शुक्रार्त- वप्रवेशिन्यस्तिस्रः पेश्यः ॥ ताभिर्हि शरीरे तनुबहलस्थूलाणुपृथुवृत्त- ह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभिः संध्यस्थिसिरास्नावानि प्रच्छा- दितानि॥ सिराधमनीमुखानां त्वणुशो विभज्यमानानामेकोनत्रिंशच्छ- तसहस्राणि नव च शतानि षट्पंचाशानि भवंति ॥ ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततं च ॥ तावंति च केशश्मश्रुलोमानि तासां हि मुखानि तत्प्रतिबद्धान्यतस्तानि ताभिराप्यायंते॥ तैश्च ताः स्वेदमभि- वहंति ॥ तथाऽभ्यंगालेपादिवीर्यं त्वचि विपक्वमंतर्नयंति स्पर्शं च गृ- ण्हंति॥स्रोतांसि पुनरसंख्येयान्येव ॥तथाऽपि तु सिरादीनि यथास्थूलं यथोपयोगं चान्यत्रोपदेक्ष्यंते ॥ इत्येवं परिसंख्याता शरीरे मूर्ति मंतः स्थिरा भावाः॥द्रवास्तु यत्तदनियोगेन च्यवमानंपुरीषमनुबध्नाति तथा मूत्रं रुधिरमन्यांश्च शरीरे धातून्॥यच्च सर्वशरीरगतं बाह्या त्वग्बिभर्ति यच्च त्वगंतरे व्रणगतं लसीकाशब्दवाच्यं यच्चोष्मणाऽनुबद्धं रोमकूपेभ्योऽभि निष्पतत्स्वेदवाच्यं तदुदकं तस्याद्यस्य चाहाररसास्य रसाख्यस्य तथा रक्तस्य शकृतः श्लेष्मणः पित्तस्य मूत्रस्य वसायाः मेदसो मज्ज्ञ्च स्वेन स्वेनांजलिप्रमाणेन यथापूर्वमेकादिसंख्याप्रवृद्धिः ॥ अर्द्धांजलिः

शुक्रस्य ॥ तावदेव मस्तिष्कमोजश्च ॥ स्त्रीणां रजसोऽजलयश्चत्वारः॥ स्तन्यस्य द्वौ ॥ उभयमपि चैतद्रसप्रसादात्मकमिति ॥ समधातोः प-रिमाणमिदं ॥ अतो वृद्धिक्षयौ यथास्वं लक्षणैर्विभावयेदपरांश्चाप.रि-संख्यातान्मूर्तामूर्तान् भावान् ॥ तद्यथा ॥ मांसकर्णादिमलान्वायुबु-द्धिस्मृत्यादींश्च॥धान्वंतरीयाः पुनः पठंति ॥ विलक्षणानि हि शरीराणि नित्यमेव च चला दोषधातुमलाः ॥ तस्मादुदकादीनामपि समत्वं मां-सादिवत्परिमाणतो निर्देष्टुमशक्यं ॥ केवलं स्वास्थ्यमात्रेणानुमानतो लक्षयेदिति ॥ सर्वएव त्ववयवाः परमाणुभेदेनातिसौक्ष्म्यादसंख्येयतां यांति ॥ तेषां संयोगविभागे परमाणूनां कर्मप्रेरितो वायुः कारणं ॥ त-देतदंगमभेदेन भेदतश्च गृह्यमाणं बंधाय मोक्षाय भवतीति ॥ भवति चात्र ॥ इति सर्वावयवज्ञो यो जानाति कलेवरं ॥ अहितेषु स मोहेन न कदाचित्प्रवर्त्तते ॥ इत्यंगविभागो नाम पंचमोऽध्यायः ॥ ५ ॥

अथातः सिराविभागं शारीरं व्याख्यास्यामः॥ दश मूलसिरा हृदय प्रतिबद्धाः सर्वांगप्रत्यंगान्योजो नयंति ॥ तत्प्रतिबद्धा हि शारीरचे-ष्टाः ॥ तास्तु द्व्यंगुलमंगुलमर्द्धांगुलं यवं यवार्द्धं च गत्वा द्रुमपत्रसे-वनीप्रतानवद्भिद्यमानाः सप्त शतानि भवंति ॥ तासां चतुःशती शा-खासु ॥ तत्र षोडशाव्यधनीयाः ॥ षट्त्रिंशं शतमंतराधौ॥ तत्र द्वाविं-शत् ॥ चतुःषष्ट्यधिकं शतमूर्ध्वं तत्रापि पंचाशत् ॥ तासामेकैकस्मि-न्सक्थ्नि शतं॥तत्र न विध्येज्जालधरां ॥ तिस्रश्चाभ्यंतरगाः ॥ द्वात्रिंश-च्छ्रोण्यां गुदमेंढ्राश्रयाः॥तासां द्वे द्वे वंक्षणयोः कटीकतरुणयोश्चेत्यष्टौ शस्त्रतो रक्षेत्॥ षोडश पार्श्वयोः तयोरूर्ध्वगामेकैकां पार्श्वसंधिसंज्ञां॥ चतुर्विंशतिः पृष्ठे॥ तासां पृष्ठवंशमुभयतो द्वे द्वे ऊर्ध्वगामिन्यौ ताश्चल-क्षः ॥ चतुर्विंशतिरुदरे ॥ तासां मेंढ्रस्योपरिरोमराजीमुभयतो द्वे द्वे ता अपि चतस्रः ॥ चत्वारिंशद्वक्षसि ॥ तासां द्वे हृदये ॥ द्वे द्वे च स्त-नमूलस्तनरोहितेषु ॥ एकैकाऽपस्तंभापालापेष्विति ॥ ताश्चतुर्दश ॥

चतुर्विंशतिर्ग्रीवायां ॥ तासां चतस्रोऽष्टौ च मर्मसंज्ञाः ॥ द्वे कृकाटिकयोर्द्वे विधुरयोरिति षोडश शस्त्रेण न स्पृशेत् ॥ हन्वोः षोडश तासां संधिसंबंधिन्यौ द्वे ॥ षोडश जिव्हायां ॥ तासामधो द्वे रसवेदिन्यौ द्वे वाक्प्रवर्तिन्यौ ताश्चतस्रः ॥ चतुर्विंशतिर्नासायां ॥ तासां द्वे गंधवेदिन्यौ तासामेव च तालुन्येकामिति तिस्रः ॥ षट्पंचाशन्नेत्रयोः ॥ तयोरुन्मेषनिमेषक्रिये द्वे द्वे द्वे चापांगयोरिति षट् ॥ नासानेत्रगतास्तु ललाटे षष्टिः ॥ तासां केशांतानुगताश्चतस्रो द्वे चावर्तयोरेका च स्थपन्यामिति सप्त ॥ कर्णयोः षोडश तासां शब्दवाहिन्यौ द्वे ते एव च शंखयोः तासां शंखसंधिगते द्वे ॥ द्वादश मूर्द्धनि ॥ तासामुत्क्षेपयोर्द्वे सीमंतेष्वेकैकामेकामधिपतावित्यष्टौ शस्त्रेण परिहरेत् ॥ तथा क्षुद्रिकाः कुटिलाः संकीर्णा ग्रथिताः संधिषु चाशस्त्रकृत्याः ॥ तासां यथास्वं तुर्यांशविभागेन पंचसप्तत्यधिकं शतकर्मानिलरक्तं वहंति ॥ एष विभागः पित्तश्लेष्मशुद्धरक्तेष्वपि ॥ स्थिता ह्येवं देहमनुगृण्हंति दोषाः ॥ व्यत्ययेन तु पीडयंति ॥ तत्र श्यावारुणाः प्रस्पंदिन्यः सूक्ष्माः क्षणपूर्णरिक्ता वातरक्तं वहंति ॥ नीलपीतासिताः स्पर्शोष्णाः क्षिप्रस्राविण्यः पित्तरक्तं ॥ गौर्यः स्निग्धाः स्थिराः शीताः कंडूमत्यः कफरक्तं॥लक्षणसंकरे संसर्गसन्निपातरक्तं ॥ समा गूढाः स्निग्धा रोहिण्यः शुद्धरक्तमिति ॥धमन्यस्तु चतुर्विंशतिः॥ताभिः कायोऽयमारामइव जलहारिणीभिः केदारइव कुल्याभिरुपस्निह्यति ॥ ताभिश्च नाभिश्चक्रनाभिरारकैरिवावृता ॥ तस्मान्नाभ्यां विशेषेण प्राणा व्यवस्थिताः यतश्च सांऽतरग्न्यधिष्ठानं॥तासां खलु धमनीनां दशोर्ध्वं प्रसृता दशाधश्चतस्रस्तिर्यक् ॥ ततस्ताभिर्यथास्वमंगावयवा धार्यंते आप्यायंते च ॥ तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायंते ॥ ततस्त्रिंशतो मध्ये द्वे द्वे वातपित्तकफरक्तरसान्वहतः ॥ अष्टाभिः शब्दरूपरसगंधा गृह्यंते ॥ द्वाभ्यां द्वाभ्यां भाषते घोषं करो-

ति स्वपिति प्रतिबुध्यते च ॥ द्वे चाश्रु वहतः द्वे च स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रं ॥ अधोगमाः पक्काशयस्था एवं त्रिधा जायंते ॥ तत्र दशाद्याः पूर्ववत् ॥ द्वे वहतोऽन्नमंत्राश्रयेण द्वे तोयं द्वे मूत्रं द्वे शुक्रं वहतो द्वे च मुंचतः ॥ ते एव नारीणामार्तवं ॥ द्वे वर्चोनिरसन्यौ स्थूलांत्रप्रतिबद्धे शेषास्त्वष्टौ तिरश्चीनाः स्वेदमभितर्पयंति ॥ तिर्यग्गामिन्यश्चतस्रो भिद्यमानाः सुबहुधा भवंतीत्युक्तं प्राक् ॥ स्रोतांसि पुंसां नव कर्णौ नेत्रे नासापुटौ मुखं पायुर्मूत्रपथो ऽन्यानि च त्रीणि स्त्रीणां स्तनौ रक्तपथश्च ॥ तथाऽपराण्यंतःस्रोतांसि जीवितायतनानि त्रयोदश प्राणोदकान्नधातुमलानामायतनानि ॥ तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च ॥ तानि क्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगधारणादिभिर्दुष्यंति ॥ ततोऽतिसृष्टं प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसनं॥तत्र श्वासवत्साधनं॥ उदकवाहिनां तालु मूलं क्लोम च॥ तान्यामभयाऽतिपानोष्णशुष्कान्नतृण्निग्रहादिभिर्दुष्यंति ततोऽति तृष्णा मुखशोषः कर्णक्ष्वेडनं तमोदर्शनं च॥तत्र तृष्णोक्तमौषधं ॥ अन्नवाहिनामामाशयो मूलं वामपार्श्वं च ॥तेषां दुष्टौ सर्वं मात्राशितीयोक्तमवगच्छेत् ॥ रसवाहिनां हृदयं मूलं दशधमन्यश्च ॥ रक्तवाहिनां यकृत्प्लीहा च ॥ मांसवाहिनां स्नावानि त्वक्च ॥ मेदोवाहिनां वृक्कौ मांसं च॥ अस्थिवाहिनां जघनं मेदश्च ॥ मज्जवाहिनां पर्वाण्यस्थीनि च ॥ शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च ॥ मूत्रवाहिनां बस्तिर्वंक्षणौ च ॥ शकृद्वाहिनां पक्काशयः स्थूलांत्रं च ॥ स्वेदवाहिनां मेदो रोमकूपाश्च ॥ तेषां दूषणं विविधमहिताहारविहारमुपद्रवान् साधनं च दोषादिविज्ञानीयाद्यथास्वं वृद्धिक्षयलक्षणेन लक्षयेत् ॥ व्यधे तु स्रोतसां भ्रममोहकंपप्रलापाध्मानशूलारुचितृट्छर्दिज्वरातिरुधिरस्रुतिमूत्रपुरीषरोधा मरणं च ॥ तस्मात्स्रोतोविद्धं प्रत्याख्या-

१ धमन्यश्चेतिपाठः ॥

योपाचरेत् ॥ उद्धृतशल्यं च सद्योव्रणविधानेन ॥ तत्र स्रोतसामेव विशेषाः सिरा धमन्यः ॥ अन्येत्वन्यत्वमिच्छंति ॥ सिराधमनीस्रोतसां केवलं परस्परसन्निकर्षात्सदृशकर्मत्वात्सौक्ष्म्याच्च विभक्तकर्मणामप्यविभागइव लक्ष्यते ॥ अपरे पुनराहुः ॥ स्रोतांसि सिरा धमन्यो रसवाहिन्यो नाड्यः पंथानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां नामानीति ॥ तेचावकाशाः ॥ प्रकुपिताः स्थानस्थान्मार्गस्थांश्च धातून्प्रकोपयंति ॥ तेऽपि तान् स्रोतांसि च ॥ स्रोतांसि धातवश्च धातून् ॥ तेषां सर्वेषामेव दूषयितारो दुष्टा दोषाः ॥ ते च प्रायशो दुष्यंत्यग्निदोषात् ॥ तस्मात्तन्निमित्तान्यायुरारोग्यबलोपचयवर्णौजांसि ॥ तत्प्रतिबद्धान्येवच रंजकादीनि भूताग्नयो धात्वग्नयश्च ॥ तथाऽन्नमपि तेनैव पक्वममृततां यात्यपक्वं च विषतां ॥ तत्र पित्तविशेषः पाचकसंज्ञोऽग्निरिति प्रागभिहितः ॥ अन्ये पुनराचक्षते ॥ दोषधातुमलसन्निपातजनितोऽन्तरूष्मा यथानिर्दिष्टाधिष्ठानकर्माऽग्निरिति ॥ स खलु विधिवदभ्यवहृतमन्नजातं प्राणेन वायुना कोष्ठमाकृष्टं द्रवैर्विभिन्नसंघातं स्नेहेन मृदूकृतमभिसंधुक्षितः समानेनामाशयस्थं स्थालीस्थमिवांबुतंदुलमग्निरंतरग्निः पचति ॥ तत्तु सर्वरसमपि पच्यमानमादौ मधुरीभूतं कफं फेनीभूतमुदीरयति ॥ ततो विदग्धमम्लीभूतमामाशयाच्च्यवमानमच्छं पित्तं ॥ प्राप्य च पक्वाशयं कटुकीभूतमनिलं ॥ ततश्चैवं विक्लिन्नआहारे पंच पंचात्मकामहाभूताग्नयो वायुना व्यस्तान्यथास्वं पंचैव भूतगुणानाहारस्थान् पचंति ॥ ते पक्वाः पुनर्यथास्वमेव देहाश्रितांश्च स्वविकारभूतान् भूतगुणानाप्याययंति ॥ एवं च पक्वादाहाराद्द्विविधौषधगर्भादिव स्नेहादच्छः सारभूतो रसाख्यः किट्टाख्यश्च मलोऽभिनिर्वर्तते ॥ ताभ्यां च सारमलाभ्यां तदात्मकानामेव शारी-

रगुणानां धात्वाख्यानां यथास्वं स्रोतांसि पारंपर्येणाव्यवच्छिन्नसंतानमापूर्यंते ॥ स्रोतोभ्यश्च यथाविभागं यथायथमेव धातवः पुष्यंति ॥ उत्तरोत्तरानुप्रवेशेऽपि च पूर्वेषां स्रोतसां यथाकालं सम्यगाहारोपयोगेन परिणामवताप्यायमानानां नापचयो भवति ॥ ततश्च धात्वाख्याः प्रसादमलाः स्वंस्वमेव मानमनुवर्तंते यथावयःशरीरं ॥ तत्राहाररसो व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात्पच्यमानः स्वात्मभावप्रच्युतिसमनंतरमेव प्राप्तरक्तादिधातुसंज्ञकः कालवदस्खलितबलप्रमाणो देहमूर्जयित्वा धातून्धातुमलांश्च पुष्णाति॥ अथान्नकिट्टमच्छं मूत्रं घनं शकृत् ॥ रसस्य सारो रक्तं मलः कफो लसीका च ॥ रक्तस्य सारो मांसं कंडराः सिराश्च मलः पित्तं ॥ मांसस्य सारो मेदस्त्वचो वसा च किट्टं कर्णाक्षिनासिकास्यरोमकूपप्रजननमलाः॥ मेदसः सारोऽस्थिस्नायुसंधयः किट्टं स्वेदः ॥ अस्थ्नः सारो मज्जा किट्टं केशलोमानि नखाः॥मज्जस्तु सारः शुक्रं मलोऽक्षिविट् त्वचां स्नेहः॥ शुक्रस्य सारमोजः॥ अत्यंतशुद्धतया चास्मिन्मलाभावः॥ अन्ये पुनरतएव तस्य नेच्छंति पाकं॥अपरे पुनः शुक्रस्य सारं गर्भमेवामनंति॥ वायुः पुनरग्नेराहारस्य च बह्वल्पतया तस्मात्तस्मान्मूर्च्छनाविशेषादमूर्त्तः शब्दवानीषच्छब्दप्रचुरोऽल्पो वा पंचात्मा कोष्ठे प्रादुर्भवति ॥ एवं च कृत्वा देहेऽन्नमया एव सर्वे भावाः ॥ तेनैव चेदमेवं चिरेण व्याप्तमंतर्बहिः शरीरयंत्रमनवरतप्रवाहेण स्वास्थ्यबलोपचययुक्तं यावत्कर्मोपादानं याप्यते ॥ अन्यथा त्वन्नरसोत्क्षेपणाद्विबद्धस्रोतसा वा यथावदनभिसंधीयमानधातुप्रवाहमंतरा व्यवच्छिद्यते व्याधिभाजनं वा भवति ॥ अन्ये तु वर्णयंति ॥ अभ्यवहृतमात्रस्याहारस्य कंठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य यो य एवांशः कायाग्निनाऽवलीढः पाकमुपनीयते तस्य तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनंतरं समं समस्तधातुषु संवृतासंवृतैः प्रविसृतो विवृतमुखेष्वास्

न्नेषु द्वारैः स्रोतःसु भूयान्प्रथमतरं चान्वेति पर्यायेणेतरेष्वपि ॥ एवमन्नरसएव साक्षात्सर्वधातून् केनचिदेव कालभेदेन पुष्णाति॥न पुनर्धातवो धात्वंतरतां स्वरूपोपमर्देन प्रतिपद्यंतइति ॥ अग्निस्तु बलभेदेन चतुर्विधो भवति समो विषमस्तीक्ष्णो मंदश्च॥तत्र समो यः सम्यगेवोपयुक्तमन्नं सम्यक् पचति॥ विषमो ऽसम्यगप्युपयुक्तं पचति सम्यगपि च न पचति ॥ तीक्ष्णो ऽसम्यगप्युपयुक्तमाशु पचति स एव वर्धमानो ऽत्यग्निर्भवति ॥ मंदस्तु सम्यगप्युपयुक्तमुदरगौरवाध्मानविबंधाटोपांत्रकूजनमुखशोषपायुस्तंभादीन्यामलिंगानि दर्शयित्वा चिरात्पचति ॥ बाह्येनापि च ज्वालांगारात्मकेनाग्निना नैकाकारः सर्वदा पाको भवति किमुतांतराश्रयेणोष्मात्मना समेनापि तस्मात्तं प्रयत्नतो रक्षेत् ॥तत्र प्रवरेण सात्म्येन समं यथास्वमवरेणेतरान् क्रमशः साम्यमापाद्य प्रवरेण परिपालयेद्दोषोपक्रमणीयोक्तेन च वातादिसाधनेन ग्रहणीरोगविहितैश्चौषधव्यायामयोगैरिति ॥ भवति चात्र ॥ स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ॥ स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ आहारश्च विहारश्च यः स्याद्दोषगुणैः समः॥धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ अतिप्रवृत्तिः संगो वा सिराणां ग्रंथयोऽपि वा ॥ विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणं ॥ बिसानामिव सूक्ष्माणि दूरं विप्रसृतानि च ॥ द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ केचिदाहुरहोरात्रात् षडहादपरे परे ॥ मासात्प्रयाति शुक्रत्वमन्नं पाकक्रमादिति ॥ वृष्यादीनि प्रभावात्तु सद्यः शुक्रादि कुर्वते॥ प्रायः करोत्यहोरात्राद्यदन्यदपि भेषजं ॥ समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ॥ पित्ताभिमूर्च्छिते तीक्ष्णो मंदोऽस्मिन्कफपीडिते ॥ शांतेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः ॥ रोगी स्याद्विकृते तस्मात्तं प्रयत्नेन पालयेत् ॥ इति सिराविभागो नाम षष्ठोऽध्यायः ॥ ६ ॥

अथातो मर्मविभागं शारीरं व्याख्यास्यामः ॥ सप्तोत्तरं मर्मशतं ॥ तत्र चतुश्चत्वारिंशच्छाखासु षड्विंशतिरंतराधौ सप्तत्रिंशदूर्ध्वं ॥ अथैकैकस्मिन्सक्थ्नि मध्यमांगुलिमभितो मध्ये पादतलस्य तलहृदयं नाम मर्म तत्र विद्धस्य रुजया मरणं ॥ अंगुष्ठांगुल्योर्मध्ये क्षिप्रं तत्राक्षेपकेण मरणं ॥क्षिप्रस्योपरि द्व्यंगुलउभयतः कूर्चः तत्र पादस्यभ्रमणवेपने भवतः॥गुल्फसंधेरधः कूर्चशिरः तत्र रुजाशोफौ ॥पादजंघयोः संधाने गुल्फः तत्र रुक् स्तब्धसक्थिता जडता वा ॥ पार्ष्णिप्रभृति द्वादशभिरंगुलैर्जंघामध्ये इंद्रबस्तिः तत्र शोणितक्षयान्मरणं ॥ जंघोर्वोः संधाने जानु तत्र खंजता ॥ जानुनस्त्र्यंगुलादूर्ध्वमुभयत आणिः तत्र शोफाभिवृद्धिस्तब्धसक्थिता च ॥ ऊरुमध्ये उर्वी तत्र रक्तक्षयात्सक्थिशोषः ॥ ऊर्व्यास्तूर्ध्वमधो वंक्षणसंधेरूरुमूले लोहिताख्यं तत्र रक्तक्षयात्पक्षाघातः ॥ वंक्षणवृषणमध्ये विटपं तत्र षांढ्यमल्पशुक्रता वा ॥ सक्थिवद्बाह्वोः॥विशेषस्तु गुल्फो मणिबंधस्तथा जानु कूर्परं तयोर्व्यधे कुणिता॥ विटपवच्च कक्षावक्षमध्ये कक्षाधारः तत्र कुणित्वं॥वातवर्चोनिरसनस्थूलांत्रप्रतिबद्धो गुदः तत्र सद्यो मरणं॥अल्पमांसशोणितोऽभ्यंतरतः कट्या धनुर्वक्र एकद्वारोऽधोमुखो बस्तिः तत्रापि सद्यो मरणमश्मरीव्रणादृते ॥तत्राप्युभयतो विद्धे न जीवति एकतो भिन्ने मूत्रस्रावी व्रणो भवति स तु यत्नेनोपक्रांतो रोहति ॥ पक्कामाशयमध्ये नाभिः तत्रापि सद्यो मरणं॥कोष्ठवक्षसोः स्तनयोश्च मध्ये सत्वरजस्तमोधिष्ठानमामाशयद्वारं हृदयं तत्रापि सद्यो मरणं ॥ स्तनयोरधस्तात् द्व्यंगुलमुभयतः स्तनमूले तयोः कफपूर्णकोष्ठस्य मरणं ॥ स्तनचूचुकयोरूर्ध्वं द्व्यंगुलमुभयतः स्तनरोहिते तयोः शोणितपूर्णकोष्ठस्य मरणं ॥ उभयत्रोरसो नाड्यो वातवहे अपस्तंभौ तयोः शोणितपूर्णकोष्ठतया कासश्वासाभ्यां च मरणं ॥ अंसकूटयोरधः पा-

श्वंयोरुपरि भागयोरपालापौ तयोः पूयत्वमापन्नेन रक्तेन मरणं॥पृष्ठवं-
शमुभयतः प्रतिश्रोणीकर्णावस्थनी कटीकतरुणे तयोः शोणितक्षया-
त् पांडुर्विवर्णो हीनरूपो म्रियते ॥ पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमु-
भयतः कुकुंदरौ तयोः स्पर्शाज्ञानमधःकाये चेष्टानाशश्च ॥ श्रोणीक-
र्णयोरुपर्याशयाच्छादनौ पार्श्वांतरप्रतिबद्धौ नितंबौ तयोरधःकाये शो-
फो दौर्बल्यं मरणं च ॥ अधःपार्श्वांतरप्रतिबद्धौ जघनपार्श्वमध्ये ति-
र्यगूर्ध्वं च पार्श्वसंधी तयोः शोणितपूर्णकोष्ठतया मरणं॥ स्तनमूलयो-
रार्जवेनोभयतः पृष्ठवंशं बृहत्यौ तयोः शोणितातिप्रवृत्तिनिमित्तै-
रुपद्रवैर्मरणं ॥ पृष्ठवंशमुभयतो बाहुमूलसंबद्धे अंसफलके त-
योर्बाहुस्वापशोषौ ॥ ग्रीवाबाहुशिरोमध्येंऽसपीठस्कंधबंधनावंसौ त-
योः स्तब्धबाहुता ॥ कंठनाडीमुभयतश्चतस्रो धमन्यः तासां द्वे नी-
ले द्वे मन्ये तासु मूकता स्वरवैकृत्यं रसाग्राहिता वा भवति ॥ ग्री-
वायामुभयतश्चतस्रः सिरा मातृकास्तासु सद्यो मरणं ॥ शिरोग्री-
वयोः संधाने कृकाटिके तयोश्चलमूर्द्धता ॥ कर्णपृष्ठयोरधःसंसृते-
विधुरे तयोर्बाधिर्यं ॥ घ्राणमार्गमुभयतः श्रोत्रमार्गप्रतिबद्धावभ्यंतरतः
फणौ तयोर्गंधाज्ञानं ॥ भ्रुवोः पुच्छांतयोरधोऽक्ष्णोर्बाह्यतोऽपांगौ त-
योरांध्यं ॥ भ्रुवोः पुच्छांतयोरुपर्यनुकर्णं ललाटे शंखौ तयोः सद्यो म-
रणं ॥ भ्रुवोरुपरि निम्नयोरावर्तौ तयोरांध्यं दृष्ट्युपघातो वा ॥ शं-
खयोरुपरि केशांतउत्क्षेपौ तयोः सशल्यः पाकात्पतितशल्यो वा जीवे-
न्नोद्धृतशल्यः ॥ भ्रुवोर्मध्ये स्थपनी तत्रोत्क्षेपवत्॥पंच संधयः शिरसि
तिर्यगूर्ध्वं च सीमंता नाम तेषून्मादभ्रमचित्तनाशैर्मरणं ॥ जिव्हाघ्रा-
णाक्षिश्रोत्रतर्पणीनां सिराणां तालुनि सन्निपातः तासां मुखानि च-
त्वारि शृंगाटकसंज्ञानि तेषु सद्यो मरणं ॥ मस्तकाभ्यंतरउपरिष्टाच्छि-
रासंधिसन्निपातो रोमावर्तः सोऽधिपतिर्नाम तत्रापि सद्यो मरणं भव
तीति ॥ सामान्यलक्षणं पुनर्मर्मणां पीडिते रुजोत्पत्तिर्विषमं च स्पंद-

नं ॥ सामान्येनैव च ॥ देहप्रसुप्तिर्गुरुता संमोहः शीतकामिता ॥ स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणं ॥ अपिच ॥ मरणकारित्वान्मर्म तत्पुनर्मांससिरास्नावास्थिसंधिसन्निपातः ॥ तेन तस्मिन् पीड्यमाने विशेषतः प्राणाबाधः ॥ बाहुल्येन तु निर्देशः ॥ तस्मान्मांसाद्याश्रयतो मर्माणि पंचधा भिद्यंते ॥ तद्यथा ॥ ॥ तलहृदयेंद्रबस्तिगुदस्तनरोहितान्येकादश मांसमर्माणि ॥ उर्वीलोहिताख्यनाभिहृदयस्तनमूलापस्तंभापालापपार्श्वसंधिबृहतीनीलामन्यामातृकाफणापांगस्थपनीशृंगाटकान्येकचत्वारिंशच्छिरामर्माणि॥ क्षिप्रकूर्चकूर्चशिरोविटपकक्षाधराणिबस्त्यंसविधुरोत्क्षेपाः सप्तविंशति स्नावमर्माणि ॥ कटीकतरुणनितंबांसफलकशंखास्त्वष्टावस्थिमर्माणि ॥ गुल्फमणिबंधजानुकूर्परकुकुंद्ररकृकाटिकाऽऽवर्तसीमंताधिपतयो विंशति संधिमर्माणि ॥ पुनश्च पंचधा गुदबस्तिनाभिहृदयमातृकाशंखशृंगाटकाधिपतय एकोनविंशति सद्यः प्राणहराण्याग्नेयत्वात्तेषां सप्तरात्राभ्यंतरं कालः ॥ तलहृदयक्षिप्रेंद्रबस्तिवक्षोमर्मकटीकतरुणनितंबपार्श्वसंधिबृहतीसीमंतास्त्रयस्त्रिंशत्कालांतरप्राणहराणि सौम्याग्नेयत्वात्तेषां पक्षाभ्यंतरं कालः ॥ तेष्वपि तु क्षिप्राणि कदाचिदाशु ॥ उत्क्षेपौ स्थपनी च त्रीणि विशल्यघ्नानि वायव्यत्वात् ॥ शल्यमुखावरुद्धो हि यावदत्र वायुस्तिष्ठति तावज्जीवति ॥ कूर्चजानुकूर्पराण्युर्वीलोहिताख्यविटपकक्षाधरकुकुंदरांसांसफलकनीलामन्याकृकाटिकाविधुरफणापांगावर्ताश्चतुश्चत्वारिंशद्वैकल्यकराणि सौम्यत्वात् ॥ सोमो हि स्थैर्यशैत्याभ्यां प्राणान्धारयति ॥ तान्यपि च कदाचिदभिहतानि मारयंति ॥ कूर्चशिरोगुल्फमणिबंधास्त्वष्टौ रुजाकराण्यग्निवायुसोमगुणबाहुल्यात् ॥ अग्निवायू हि विशेषेण रुजाकरौ॥सोमस्तु प्राणानवलं-

१ सामान्येनैवचेत्यक्षरषट्कं पुस्तकेषु दृश्यते परंत्वधिकं भाति २ अपस्तंभौ स्तनमूले अपालापौ स्तनरोहितेचेत्यष्टौ वक्षोमर्माणि

वतइत्युक्तं ॥ अन्ये त्वाहुः ॥ मांसादीनां पंचानामपि विरुद्धानां समवायाद्विशल्यघ्नानि ॥ एकैकहीनानामल्पानां च क्रमादितराणि स्वभावतएव चान्ये वदंति ॥ प्रतिनियतकर्माणि चंद्रसूर्याय-स्कांतोपलानामिवांबुवन्हिलोहसंश्लेषाः तथा च छिन्नेषु बहुमर्मस्व-पि पाणिपादेषु स्वभावत एव न मृत्युः ॥ अपरे पुनरत्रापि हेतु-माहुः ॥ पाणिपादच्छेदे हि सिराः संकोचमायांति ततोऽल्पास्रवप्र-वृत्तेर्जीवितं मर्मव्यधे त्वतिरक्तस्रुतितो वायुवैकृतेन च मरणं ॥ तस्मा-न्मर्माभिहतस्य तदंगमाशु संधिदेशाच्छेदनीयं ॥ अतिहतानां तु म-र्मणां यथास्वं पूर्वं पूर्वं च कर्म ईषदंते वा हतानामुत्तरमेव ॥ पुन-श्च पंचधा भिद्यते ॥ तद्यथा ॥ उर्व्यः कूर्चशिरांसि विटपे कक्षा-धरे च द्वादश स्वांगुलोन्मितानि ॥ गुल्फौ मणिबंधौ स्तनमूले च षट् द्व्यंगुलानि ॥ जानुनी कूर्परे च चत्वारि त्र्यंगुलानि ॥ कूर्चौ गुदो बस्तिर्नाभिर्हृदयं नीले मन्ये मातृकाः सीमंताः शृंगाटकानि चैको-नत्रिंशत्पाणितलसंमितानि ॥ शेषाणि षट्पंचाशदंगुलदलप्रमाणानि ॥ अन्ये पुनराहुः ॥ व्रीहिप्रमाणानि क्षिप्राणि ॥ कलायप्रमाणाः स्त-नरोहितोत्क्षेपाः ॥ तथाऽन्ये तिलप्रमाणान्यपि मर्माणीच्छंति ॥ भ-वंति चात्र ॥ मर्मव्यापेऽपि देहेऽस्मिन्नायुर्मर्माणि रक्षति ॥ आयु-ष्याण्येव सेवेत सदा तस्माद्विचक्षणः ॥ मर्माभिघातः स्वल्पोऽपि-प्रायशो बाधते तरां ॥ रोगा मर्माश्रयास्तद्वत्प्रक्रांता यत्नतोऽपि-च ॥ विक्षिप्यते भृशं सीदन् शून्यो भ्रमति वेपते ॥ ऊर्ध्वं श्वसि-ति कृच्छ्रेण स्रस्तगात्रो मुहुर्मुहुः ॥ हृदयं दह्यते चास्य नैकस्था-नेऽवतिष्ठते ॥ मर्मोपघातान्मरणमेतैर्लिंगैः समश्नुते ॥ अमर्मविद्धोऽपि नरश्छेदभेदादिपीडितः ॥ अतिनिस्रुतरक्तश्च सद्यस्त्यजति जीवितं ॥ अतोऽन्यथा जीवति तु विद्धः शरशतैरपि ॥ पुण्यवान्नियतायुश्च न कथंचिन्न जीवति ॥ तस्मादाचरमोच्छ्वासाच्चिकित्सेदेव यत्नतः ॥

तद्बंधुमित्रानुमतः प्रत्याख्यायातुरं भिषक् ॥ इति मर्मविभागो नाम सप्तमोऽध्यायः ॥ ७ ॥

अथातः प्रकृतिभेदीयं शारीरं व्याख्यास्यामः ॥ सप्त प्रकृतयो दोषैः पृथक् संसर्गेण साम्येन च भवंति ॥ तत्र शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारविहारयोरेकोऽनेको वा यो दोषो भवत्याधिक्येन तेनामरणाद्विषवल्यामिवोत्पद्यमानस्य कृमेर्विषेण सविषकृमेरिव वृश्चिकादेराशीविषस्येव वा स्वविषेण प्रकृतिर्जायते ॥ तस्मात्तन्मयतया शुक्रार्तवयोर्देहस्य भावितत्वात्प्राकृतत्वाच्च तावता तेन दोषेण न विहन्यते ॥ तद्गुणैरेव चास्य शरीरमुपस्क्रियते ॥ ततश्च तद्गुणप्रतिपक्षैः सहसा न बाध्यते ॥ तस्यां त्ववस्थायां विकृतिमति दोषे उल्बणे[1] नैव गर्भः संभवति ॥ संभवएव वा विपद्यते विकृतो वा भवति ॥ तथा च केचिदाहुः ॥ द्विविधा वातादयः प्राकृता वैकृताश्च ॥ तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः ॥ ते शरीरधारणाद्धातुसंज्ञाः दोषाख्यानां विकृतानां बीजभूतानां मुमूर्षोः स्वरूपाच्चलंति ॥ सर्वेष्वपिच देहसन्निहितेषु प्रकृतावुल्बणेन व्यपदेशः ॥ वैकृतास्तु गर्भादभिनिःसृतस्याहाररसात्[2] संभवंतः प्राकृतेष्वेव रोहंति ते कालादिवशेन स्वप्रमाणवृद्धिक्षययोगाद्देहमनुगृण्हंति दूषयंति च तद्वदोजोऽपि परं हृदयस्थमष्टबिंदुप्रमाणमाधारः प्रासूतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाजः ॥ अथ स्वदोषगुणानुरोधाद्वातप्रकृतिस्तनुरूक्षस्तब्धाल्पांगदंतनखरोमनेत्रस्वरः शीतद्विड्वुद्बद्धपिंडिकः सशब्दसंधिगामी शीघ्रारंभक्षोभग्रहणविस्मरणश्चलधृतिमतिगतिदृष्टिस्वभावसौहार्दः स्तेनोऽनार्यो मत्सर्यजितेंद्रियः प्रियगांधर्वैनिहासहासविलासकलहमृगयोद्यानयात्रः स्निग्धोष्णमधुराम्ललवणान्नपानकांक्षोपशयश्च भवति ॥

१ विकृतदोषोल्बणेनैवेतिपाठः २ मलादितिपाठः

अपिच ॥ अल्पवित्तबलजीवितनिद्रः क्षामवाग्धमनिसंततगात्रः ॥ दुर्भगोऽतिबहुभुक् बहुभाषी नास्तिकः स्फुटितकेशकरांघ्रिः ॥ किंचिदुन्मिषितदृक्सुखसुप्तस्त्रस्यति क्वथति खादति दंतान् ॥ शुष्करूक्षविषमासु सरित्सु व्योम्नि शैलशिखरेषु च याति ॥ पित्तप्रकृतिरुष्णगौरगात्रस्ताम्रनखनयनजिह्वौष्ठपाणिपादतलः शिथिलसंधिबंधमांसः करभकपिलविरलमृदुकेशरोमा मध्यबलायुरल्पशुक्रव्यवायापत्यः शूरोऽभिमानी शीघ्रवलीखलतिपलितपिप्लुव्यंगक्षुत्पिपासो मेधावी दुर्भगः स्वादुतिक्तकषायशीताभिलाषोपशयश्च भवति ॥ अपिच ॥ दयितमाल्यविलेपनमंडनः सुचरितः शुचिराश्रितवत्सलः ॥ विभवसाहसबुद्धिबलान्वितो भवति भीषु गतिर्द्विषतामपि ॥ घर्मद्वेषी स्वेदनः पूतिगंधिर्भूर्युच्चारक्रोधपानाशनेर्ष्यः ॥ सुप्तः पश्येत्कर्णिकारान् पलाशान् दिग्दाहोल्काविद्युदर्कानलांश्च ॥ कफप्रकृतिस्तु दूर्वेंदीवरशरकांडान्यतमवर्णः समसुविभक्तस्निग्धस्थिरसुकुमारश्लिष्टमांससंधिबंधः परिपूर्णचारुगात्रो महाललाटोरुबाहुर्व्यक्तसितासितप्रसन्नायतविशालपक्ष्मलाक्षः सिंहमृदंगघनघोषः क्षुत्पिपासोष्णसहिष्णुर्बह्वोजोबलशुक्रव्यवायापत्यश्चिरशोषमाल्यानुलेपनो दृढप्रच्छन्नवैरः पेशलः सत्यवादी स्मृतिमान्धृतिमानलोलुपो बाल्येप्यरोदनः कटुतिक्तकषायोष्णरूक्षेच्छोपशयश्च भवति ॥ अपिच ॥ अल्पव्याहारक्रोधमेधाशनेहः प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ॥ श्राद्धो गंभीरः स्थूललक्षः क्षमावानार्यो निद्रालुर्दीर्घसूत्री कृतज्ञः ॥ ऋजुर्विपाश्चित्सुभगः सलज्जो भक्तो गुरूणां दृढसौहृदश्च ॥ स्वप्ने सपद्मान्सविहंगमालांस्तोयाशयान् पश्यति तोयदांश्च ॥ उभयलक्षणसंकरे तु संसर्गकृतिः ॥ सर्वगुणसमुदितः समदोषप्रकृतिः ॥ तत्राद्यास्त्रयो नित्यातुराः दोषानुपशयितप्रकृतित्वात् ॥ विशेषतश्च द्वंद्वप्रकृतयः ॥ तेषु हि गुणमिश्रविकारकारिषु क्षुत्पिपासादिष्विवारोग्य-

व्यपदेशः ॥ तस्माद्विपरीतगुणेन विधिना दोषोपक्रमणीयोक्तेन तानुपाचरेत् ॥ समं[1] सर्वरसेन सात्म्येनान्यांश्च यथानुविहितेन च ॥दोषवच्च गुणैरपि सत्वादिभिः सप्त प्रकृतयो भवंति ॥ तास्तदभिनिर्वृत्तैरेव यथोक्तैः शौचादिभिर्जानीयात् ॥ तथा पुनः सप्त प्रकृतयो जातिकुलदेशकालवयोबलप्रत्यात्मसंश्रयाः ॥ दृश्यंते हि पुरुषाणां जात्यादिनियतास्ते ते भावविशेषाः सप्तादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च भेदाग्रमसंख्येयं भवति ॥ शरीरमपि सत्वादीननुरुध्यते सत्वादयोऽपि शरीरं सत्वाद्यसंख्यभेदवशाच्च रूपस्वरचरितानुकरणमप्यनूकशब्दवाच्यमसंख्यभेदंभवति ॥ तदावेशस्त्वनंतरजन्माभ्यासवासनया जन्यते तस्माद्देवमानुषतिर्यक्प्रेतनारकाणां तत्तद्विशेषाणां च यथायथमेवानूकं[2] पुरुषस्यान्वीक्षेत ॥ वयस्त्रिविधं बालं मध्यं वृद्धं च ॥ तत्राषोडशाद्वर्षाद्बालं ॥ आषष्टेर्मध्यमं ततो वृद्धं ॥ तेष्वपि स्तन्याहारोभयवृत्त्या बालं त्रिविधं ॥ तस्मिन् देहप्रमाणवृद्धिः श्लेष्मोद्रेकश्च ॥ तेन बालस्य स्नेहमार्दवसौकुमार्याल्पक्रोधत्वसौभाग्यानि भवंति ॥ मध्यमपि त्रिविधं यौवनं संपूर्णत्वमपरिहानिश्च ॥ तस्मिन् पित्तोद्रेकः तेन दीप्ताग्निता प्रज्ञाधिक्यपरिपाकौ व्यवसायश्च ॥ तत्रात्रिंशतो यौवनमाचत्वारिंशतः सर्वधात्विंद्रियबलवीर्यपौरुषस्मरणवचनविज्ञानप्रश्रयगुणसंपूर्णत्वमतः परमपरिहानिः ॥ वृद्धं तु श्वः श्वः क्षीयमाणधात्विंद्रियादिगुणं वलीखलतिकासश्वासाग्निसादादिभिरभिभूयमानं जीर्णं भवनमिवाभिवृष्टमवसीदति ॥ तस्मिन्मारुतोद्रेकः तेन श्लथासारमांससंध्यस्थिता त्वक्पारुष्यमवनामः कायस्य वेपथुः कासश्वासश्लेष्मसिंघाणकोदीरणं धातुक्षयश्च ॥ अन्ये पुनराहुः ॥ बाल्ये वृद्धिं प्रभामेधात्वक्शुक्राक्षिश्रुतींद्रियं ॥ दशकेषु क्रमाद्यांति मनः

१ समं समधातुं ॥ २ अनूकं स्वभावः ॥

सर्वेंद्रियाणि च ॥ एवं वर्षशतमायुषः प्रमाणं ॥ अस्मिन्काले संति पुनः कर्मविशेषादूनाधिकवर्षशतजीविनो मनुष्याः तेषां यथोक्तैः प्रकृतिविशेषैरायुषः प्रमाणमुपलभ्य वयस्त्रिधा विभजेत् ॥ अपिच ॥ वर्षे वर्षे क्षयं याति नृणां याते शते शते ॥ आयुषो पुण्यबाहुल्याद्यदायन्मानमिष्यते ॥ बलमपि त्रिविधं भवति ॥ सहजं कालकृतं युक्तिकृतं च ॥ तत्र सहजं देहसत्वयोः प्राकृतं ॥ कालकृतमृतुविभागजं वयःकृतं च ॥ युक्तिकृतं पुनराहारविहारोत्थमूर्जस्करं योगजं च ॥ तद्वृद्धिकरास्त्विमे च भावा भवंति ॥ तद्यथा ॥ बलवत्पुरुषे देशे जन्म तद्विधे च काले सुखश्च कालयोगो बीजक्षेत्रगुण शरीराहारसत्वसंपत्तयः स्वभावो यौवनं व्यायामो हर्षश्च ॥ तथा साराण्यष्टौ त्वग्रक्तमांसमेदोस्थिमज्जशुक्रसत्वात्मकान्युत्तरोत्तरवराणि बलमानज्ञानार्थमुपदिश्यंते ॥ अपिच ॥ न मुह्येद्देहमात्रदर्शनादेव भिषगयमुपचयेन महाशरीरत्वाद्वा बलवानयं कृशत्वादल्पशरीरत्वाद्वाऽल्प बलइति ॥ तच्चोभयमप्यन्यथादृष्टं गजसिंहे ॥ तत्र सर्वैः सारैरुपेतो भवत्यतिबलः परमगौरवयुक्तः क्लेशक्षमःसर्वारंभेष्वात्मनि प्रत्याशावान् कल्याणाभिनिवेशी स्थिरशरीरः सुसमाहितगतिः सानुनादस्निग्धगंभीरमहास्वरः सुखैश्वर्यवित्तोपभोगः सन्मानभाग्मंदजरामयः प्रायस्तुल्यगुणविस्तीर्णापत्यो दीर्घायुश्च ॥ तद्विपरीतस्त्वसारः मध्यो मध्यगुणः ॥ प्रमाणं पुनः स्वांगुलैः ॥ पादांगुष्ठप्रदेशिन्यौ द्व्यंगुलायते तिस्रोऽन्याः क्रमेणोत्तरोत्तरं पंचमभागहीनास्तन्नखहीना वा ॥ चतुरंगुलायताः पृथक्प्रपदपादतलपार्ष्णयः षट्पंचचतुरंगुलविस्तृताश्च तुर्दशैवायामेन पादश्चतुर्दशैव परिणाहेन ॥ तथा गुल्फौ जंघामध्यं च ॥ चतुरंगुलोत्सेधः पादः ॥ अष्टादशायामा जंघाऊरुश्च ॥ चतुरंगुलं जानु ॥ त्रिंशदंगुलपरिणाहऊरुः ॥ षडायामौ मुष्कमेंढ्रावष्टपंचपरिणाहौ ॥ षोडशविस्तारा कटी पंचाशत्परिणाहा ॥ दशांगुलं

बस्तिशिरः ॥ द्वादशांगुलमुदरं ॥ दश विस्तारे द्वादशायामे पार्श्वे ॥ द्वादशोत्सेधं त्रिकं ॥ अष्टादशोत्सेधं पृष्ठं ॥ द्वादशकं स्तनांतरं ॥ द्व्यंगुलः स्तनपर्यंतः ॥ चतुर्विंशत्यंगुलविशालं द्वादशोत्सेधमुरः ॥ द्व्यंगुलं हृदयं ॥ अष्टकौ स्कंधौ कक्षे च ॥ षट्कावंसौ ॥ षोडशकौ प्रबाहू ॥ पंचदशकौ प्रपाणी ॥ द्वादशांगुलौ पाणी तत्रापि पंचांगुला मध्यमांऽगुलिः ॥ ततोऽर्द्धांगुलहीने प्रदेशिन्यनामिके ॥ सार्द्धत्र्यंगुलौ कनिष्ठिकांगुष्ठौ ॥ चतुरुत्सेधा द्वाविंशतिपरिणाहा शिरोधरा ॥ द्वादशोत्सेधं चतुर्विंशतिपरिणाहमाननं ॥ पचांगुलमास्यं ॥ चतुरंगुलं पृथक् चिबुकौष्ठनासादृष्ट्यंतरकर्णललाटं॥ त्रिभागांगुलविस्तारा नासापुटमर्यादा ॥ द्व्यंगुलायतमंगुष्ठोदरविस्तृतं नेत्रं ॥ तत्र शुक्लतृतीयांशः कृष्णः कृष्णान्नवमांशा मसूरदलमात्रा दृष्टिः ॥ षडंगुलोत्सेधं द्वात्रिंशत्परिणाहं शिरइति ॥ सर्वं पुनः शरीरमंगुलानि चतुरशीतिः ॥ तदायामविस्तारसमं सममुच्यते ॥ तत्र यथोक्तपरिमाणमिष्टमनिष्टं हीनमधिकं वा ॥ तथाहि ॥ ह्रस्वदीर्घगौरकृष्णरोमारोमस्थूलकृशं चेति ॥ इष्टं च पुनर्महाशिरोदशनवदनहनुस्तनाग्रपृष्ठस्वरमुपचितोरुस्फिक्कटिवक्षोग्रीवातालुकमुभयगुणपाणिपादचुबुककर्णललाटं सूक्ष्मास्थिदंतनखांगुलिपर्वकेशं दीर्घांगुलिसक्थिबाहूच्छ्वासेक्षितनेत्रजिव्हं विस्तीर्णास्याधरौष्ठजिव्हाललाटकर्णपीठवक्षोऽल्पमेंढ्रग्रीवाकेशं स्निग्धत्वक्कचकरजनयनदशनस्वनं स्थिरेंद्रियत्वङ्नखकेशपार्श्वं गंभीरनाभिसंधिस्वरं गूढजत्रुपृष्ठवंशदंतमूलं रक्तनाल्वोष्ठनखनेत्रांतमाताम्रजिव्हाहस्तपादतलं कृष्णकेशभ्रूनेत्रपक्ष्मतारकं शुक्लशुक्लमंडलदशनचरितमुन्नतचित्तस्कंधललाटोदरमुखनखपादं नीचैर्ह्रस्वकर्णस्तननासाग्रचंक्रमणं घनस्कंधकंधरादंतांगुलित्वक्सौहार्दं ॥ ततनुनखमध्यजिव्हं वृत्तस्फिक्ग्रीवानखं समपृष्ठदंतललाटेक्षितं ॥ त-

थाऽनुपूर्ववृत्तावूरू ॥ दक्षिणावर्ता नाभिः ॥ प्रकृष्टांतरौ स्तनौ भ्रुवौ च ॥ कूर्मोन्नतयो नखाः पादौ च ॥ ऋज्वास्यं नासावंशश्च ॥ अनुल्बणे हनू वेषश्च ॥ श्लक्ष्णं तालु जिव्हा च ॥ नातिस्थूलकृशावोष्ठौ देहबंधश्च ॥ सस्पंदं हृदयं शंखौ मन्ये च ॥ सोष्म तालुपादोदरं निःश्वासश्च ॥ पृष्ठतोऽवनतौ रोमशौ च कर्णौ ॥ ईषत्प्रलंबिन्यौ भ्रुवौ ॥ वलिभं सुश्लिष्टसंध्यर्द्धचंद्राकृति ललाटमातपत्रोपमं शिरः ॥ नैकमूला मृदवः केशाः ॥ दृढं गूढं शिरास्थिसंधि ॥ प्रकृतियुक्तानि वातमूत्रपुरीषगुह्यानि हसितरुदितादीनि च चेष्टितानि ॥ तथा स्नातानुलिप्तमधःप्रसृतानुपूर्व्या शुष्यदिष्टं शरीरमिति ॥ भवति चात्र ॥ उत्तरोत्तरसुक्षेत्रं गर्भात्प्रभृति नीरुजं ॥ आयामज्ञानविज्ञानैर्वर्द्धमानं शनैः शुभं ॥ इति सर्वगुणोपेते शरीरे शरदां शतं ॥ आयुरैश्वर्यमिष्टाश्च सर्वे भावाः प्रतिष्ठिताः ॥ अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते ॥ सत्ववांस्तप्यमानस्तु राजसो नैव तामसः ॥ दानशीलदयासत्यब्रह्मचर्यकृतज्ञताः ॥ रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गुणः ॥ इति प्रकृतिभेदीयो नामाष्टमोऽध्यायः ॥ ८ ॥

अथातो विकृतांगविज्ञानीयमध्यायं व्याख्यास्यामः ॥ स्वस्थानामातुराणां वा पुरुषाणां देहांतराभिलाषिणामौषधविषयमतीताः सकलशरीरव्यापिनो दोषा घनाघनाइव[1] वर्षमायुषः क्षयं सूचयंतोऽकस्मात्स्वभावविपर्यासं जनयंति ॥ तत्समासतो रिष्टमित्याहुः ॥ तत्र गौरोऽगौरः श्यामोऽश्यामः कृष्णोऽकृष्णइति देहप्रकृतिवर्णाः ॥ तद्भेदाश्च पद्मगौरादयः ॥ नीलश्यामताम्रहारिद्रशुक्लादयस्तु विकृतयः तत्र प्रकृतिविकृतिवर्णौ युगपदंगेऽगैकदेशे वा मरणाय ॥ एतेन म्लान्युपचयशोकहर्षरौक्ष्यस्नेहादयस्तथा प्रकृतिभेदीयोक्तानां महदुपचयस्नुत्सेदीर्घाणां सर्वेषां च दोषादिविभागेन प्रतिनियतानां

1 वर्षुकाब्दो घनाघनइत्यमरः

भावानामनिमित्ततोऽन्यथात्वमुक्तं भवति ॥ छायास्तु शरीरे पंच॥ तत्र खादमलखवन्नाकाशनीलनिर्मला सस्नेहा सप्रभेव ॥ वातात्पांशुभस्मरूक्षा रजोऽरुणा श्यावा निष्प्रभा स्वेदमलगंधिः ॥ तेजसोद्भुतहुताशविद्युत्तप्ततपनीयरक्ता दृष्टिसुखा ॥ अंभसो वैदूर्येंद्रनीलविमला घना सुस्निग्धा ॥ भुवो रुचिराभा घना स्थिरा स्निग्धा शुद्धा श्यामा श्वेता च ॥ तासां वायव्या विनाशाय क्लेशाय चातिमहते शेषाऽस्तु सुखोदयाः॥सप्त प्रभा रक्ता पीता पांडुरा सिता ऽसिता श्यावा हरिता च ॥ ताः स्निग्धा विकाशिन्योऽमलाः शुभाः विपरीतास्त्वशुभाः ॥ तयोर्विशेषः ॥ छाया वर्णमाक्रामत्यासन्ना च लक्ष्यते पंचभूतात्मिका च॥प्रभा तु वर्णं प्रकाशयति विप्रकृष्टाल्लक्ष्यते तेजःप्रभैव च ॥ यस्य दृष्टौ प्रतिच्छायामयी कुमारिका न दृश्यते स परासुः ॥ यस्यातपादर्शादिष्वकस्मात्प्रतिच्छाया छिन्ना भिन्ना हीनाऽधिकाऽऽकुला नष्टा जिह्माऽवाक्शिरा विशिरा द्विशिरा विस्तृताऽन्यथा वा विकृता वा दृश्यते ॥ यस्य ललाटं न स्विद्यति ॥ यस्य केशलोमान्यनभ्यक्तान्यभ्यक्तवद्दृश्यंते ॥ नयने चातिप्रविष्टे निर्गते विस्तृते संक्षिप्ते संक्षिप्तभ्रुणी विनतभ्रुणी जिह्मे विषमे विभ्रांतदर्शने हीनदर्शने नकुलाभे कपोताभे अलातवर्णे नीलादिविकृतवर्णे अतिचले स्तब्धस्रस्ते प्रस्रुते अत्युन्मिषिते अतिनिमिषिते लुलितपक्ष्मणी वा ॥ नासिका वा ऽतिविवृताऽतिसंवृता कुटिला स्फुटिता पिटिकाचिता शुष्का वा स गतायुः ॥ यस्याधोऽधरोष्ठो यात्युत्तरौष्ठश्चोर्ध्वमुभौ वा पक्वजंबूनीलौ ॥ दंता वाऽतिरूक्षास्ताम्राः श्यामाः पंकिलाः पुष्पिताः सशर्करा वा सहसा वा पतंति ॥ जिव्हा वा जिह्मा स्तब्धा सुप्ताऽवलिप्ता गुर्वी श्यावा शूना शुष्का विसर्पिणी कंटकाचितेव वा ॥ यस्य गंडललाटहनुबंधनानि स्थानाच्युतानीव स्रस्तानि यस्य न धत्ते शिरः शिरोधरां पृष्ठं वा स्वभारं ॥ हनू वा पिंडमास्यस्थं ॥

यस्योत्क्षिप्तं मेढ्रमतिनिःसृतौ वा वृषणावतो विपर्ययो वा ॥ यस्य मूत्रमत्युष्णं ॥ यस्य विषदोषाद्विना खेभ्यः सरोमकूपेभ्यो रक्तं प्रवर्तते ॥ यस्यानिमित्तमंगान्यतिलघून्यतिगुरूणि वा स्युः स मुमूर्षुः ॥ यस्यैकोऽनेको वा स्वरो गद्गदाव्यक्तक्षामदीनो वा सहसोपलभ्यते ॥ यो वा विवक्षुर्मुह्यति ॥ यस्य वदतो भृशमूर्ध्वमुरो रुजति ॥ यस्योच्छ्वासोऽतिदीर्घोऽतिह्रस्वः पूतिगंधिः सुगंधिर्वा ॥ यस्यांगुल्य आयम्यमाना न स्फुटेयुः यस्यान्योऽन्योऽपि श्रुतगतमूत्रणादिषु स्वभावातीतः शब्दः ॥ यस्येष्टोऽनिष्टो वा माल्यफलचंदनकुणपादिगंधो देहमुखमलव्रणवस्त्रादिषु ॥ यस्य शरीरं वैरस्यात्सौरस्याद्वाऽत्यर्थं यूकामक्षिकादयस्त्यजंति भजंति वा ॥ यस्य सततोष्मस्वंगावयवेषु शैत्यं शीतेषु वा कुमुदोत्पलानुकार्यतिशैत्यमतिस्वेदोऽतिस्तंभो विगतमांसशोणितष्विव च स्रंसः ॥ यस्य च योगोऽतियोगो वा शरीरे युगपन्महाभूतानां दृश्यते सर्वे ते कालपक्वा इति ॥ भवति चात्र ॥ यस्यापूर्वाः सिरालेखा बालेंद्वाकृतयोऽपि वा ॥ ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ॥ पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ प्लवते प्लवमानस्य षण्मासास्तस्य जीवितं ॥ हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ सस्नेहं मूर्ध्नि धूमो वा मासांतं तस्य जीवितं ॥ मूर्ध्नि भ्रुवोर्वा कुर्वंति सीमंतावर्तका नवाः ॥ मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ॥ यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशं ॥ आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति ॥ उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ॥ भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ मूत्रं पुरीषं निष्ठ्यूतं शुक्रं चाप्सु निमज्जति ॥ निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः ॥ रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमा-

दिशेत् ॥ अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ॥ ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवंक्षणं ॥ शर्म चानधिगच्छंतं बुद्धिमान् परिवर्जयेत् ॥ यो जातशीतपिटकः शीतांगो वा विदह्यते ॥ उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ यस्य रज्जुरिव छाया कंठे सक्तोपलक्ष्यते ॥ अवश्यं कृष्यते जंतुः सोऽचिराद्यमकिंकरैः ॥ इति विकृतांगविज्ञानीयो नाम नवमोऽध्यायः ॥ ९ ॥

अथातो विकृतेहाविज्ञानीयं शारीरं व्याख्यास्यामः ॥ घनीभूतमिवाकाशमाकाशमिव यो घनं ॥ अमूर्तमिव मूर्तं च मूर्तं वाऽमूर्तवत्स्थितं ॥ तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ॥ अनेत्ररोगश्चंद्रं च बहुरूपमलांछनं ॥ जाग्रद्रक्षांसि गंधर्वान्प्रेतानन्यांश्च तद्विधान् ॥ रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति ॥ सप्तर्षीणां समीपस्थां यो न पश्यत्यरुंधतीं ॥ ध्रुवमाकाशगंगां वा न स पश्यति तां समां ॥ मेघतोयौघनिर्घोषवीणापणववेणुजान् ॥ शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा॥निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनं॥तद्वद्गंधरसस्पर्शान्मन्यते यो विपर्ययात् ॥सर्वशो वा न यो यश्च दीपगंधं नजिघ्रति॥विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः॥यः पांशुनेव कीर्णांगो योऽंग घातं न वेत्ति वा ॥ अंतरेण तपस्तीव्रं योगं वा विधिपूर्वकं ॥ जानात्यतींद्रियं यश्च तेषां मरणमादिशेत् ॥ जिव्हा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ खगा वा मूर्ध्नि लीयंते यस्य तं परिवर्जयेत् ॥ निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ हीयते बलतः शश्वद्योन्नमश्नन्हितं बहु ॥ योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ॥ यो वाऽल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ॥ दीर्घमुच्छ्वस्य यो ह्रस्वं निश्वस्य परिताम्यति ॥ ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पंदते भृशं ॥ शिरो विक्षिपते कृ-

च्छ्राद्योऽचयित्वा प्रपाणिकौ ॥ यो ललाटस्रुतस्वेदः श्लथसंधानबंधनः ॥ उत्थाप्यमानः संमुह्येद्यो बली दुर्बलोऽपि वा ॥ उत्तानएव स्वपिति यः पादौ विकरोति च ॥ शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ ॥ उत्तरौष्ठं परि.लिहन्नुद्गारांश्च करोति यः ॥ यमभिद्रवति छाया कृष्णा पीताऽरुणाऽपि वा ॥ भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ वशगाः सर्वएवैते विज्ञेयाः समवर्तिनः ॥ ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलं ॥ उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः ॥ योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥ बलिं ब.लिभुजो यस्य प्रणीतं नोपभुंजते ॥ निर्निमित्तं च यो मेधां शोभामुपचयं श्रियं ॥ प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयं ॥ गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥ यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ॥ भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकं ॥ षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ मत्तवद्गतिवाक्कंपमोहा मासान्मरिष्यतः ॥ नश्यत्यज्ञाननृषडहात्केशलुंचनवेदनां ॥ न याति यस्य चाहारः कंठं कंठामयादृते ॥ प्रेष्याः प्रतीपतो यांति प्रेताकृतिरुदीर्यते ॥ यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ॥ वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशं ॥ चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः ॥ यैः पुरा रमते भावैररतिस्तैर्न जीवति ॥ कथयेन्न च पृष्टोऽपि दुःश्रवं मरणं भिषक् ॥ गतासोर्बंधुमित्राणां न चेच्छेत्तं चिकित्सितुं ॥ यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ॥ घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ अ.रिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितं ॥ अरिष्टे रिष्टविज्ञानं न च रिष्टेप्यनैपुणात् ॥ चरकस्येति वचनं सुश्रुतेन तु पठ्य-

---

१ परिलिहन्फूत्कारांश्चेतिपाठः  २ यःपुमानणुज्योतिःस्तोकदृक् ॥ केचित्तु-ल्पतेजा इत्याहुः तथा अनेकाग्रो व्याकुलचेताः॥

ते ॥ ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः ॥ रसायनतपोदान-
तत्परैश्च निवार्यते ॥ कृष्णात्रेयो द्विधा रिष्टं स्थिरास्थिरविभेदतः ॥
दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ तद्दोषाणां शमे शा-
म्येत्स्थाप्यवश्यं तु मृत्यवे ॥ आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठि-
तं ॥ रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ ॥ इति विकृतेहा-
विज्ञानीयो नाम दशमोऽध्यायः ॥ १० ॥

अथातो विकृतव्याधिविज्ञानीयमध्यायं व्याख्यास्यामः ॥ स-
र्वैर्यथास्वं हेतुप्राग्रूपरूपैरतिमात्रैर्यस्य व्याधिरुत्पद्यते व्याधितस्य वा
यस्याशु मुखे पिप्लुव्यंगलेखातिलकालकाः करजरदनेषु वा पुष्पाण्यु-
दरे वा नानावर्णाः सिराः यस्य शुष्यतो नेत्रोपदेहो वर्त्मनासिकान्य-
तरश्वयथुर्वर्त्मस्रंसो वा यस्य क्षीणस्य क्षुत्तृष्णा वा हृद्यैर्बहुभिरप्य-
न्नपानैर्न शाम्यति यस्य सफेनमसृक् प्रसिच्यते कुक्षिशूलं च
उरसो वा यस्य श्लेष्मा नीलपीतलोहितो बहुशश्च यस्य बलवा-
न् ग्रीवावमर्दो जिह्वाशोफः कंठास्यगुदपाकश्च यस्यामाशयोत्था प-
रिकर्तिकाऽतितृष्णा शकृद्भेदश्च यस्य पक्वाशयोत्था परिकर्तिकाऽतितृ-
ष्णाऽतिमात्रश्च गुदग्रहः यस्यामपक्वाशयान्यतरमाश्रित्य संज्ञां च ह-
त्वा वायुः कंठे घुर्घुरकं करोति यस्य क्षीणस्य तृष्णाभिवृद्धिर्हृदि शू-
लं च तथा हिध्मारक्तातिसारौ वाऽऽध्मानातीसारौ वा भृशं स-
तृष्णौ स परासुरिति ॥ भवति चात्र ॥ ज्वरो निहंति बलवान्
गंभीरो दीर्घरात्रिकः ॥ सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलं ॥
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनं ॥ संशुष्ककासः पूर्वाह्णे
योऽपराह्णेऽपि वा भवेत् ॥ बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥
रक्तपित्तं भृशं रक्तं कृष्णमिंद्रधनुःप्रभं ॥ ताम्रहारिद्रहरितं रूपं र-
क्तं प्रदर्शयेत् ॥ रोमकूपप्रविसृतं कंठास्यहृदये सजत् ॥ वाससो रं-
जनं पूति वेगवच्चातिभूरि च ॥ वृद्धं पांडुज्वरच्छर्दिकासशोफातिसा-

रिणं ॥ कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनं ॥ यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनं ॥ छर्दिर्वेगवती मूत्रशकृद्गंधिः सचंद्रिका ॥ सास्र विट्पूयरुक्कासश्वासवत्यनुषंगिणी ॥ तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं विचेतनं ॥ मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननं ॥ अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनं ॥ हृत्पार्श्वांगरुजाछर्दिपायुपाकज्वरातुरं ॥ अतीसारो यकृत्पिंडमांसधावनमेचकैः ॥ तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ॥ मस्तुलुंगमषीपूयवेसवारांबुमाक्षिकैः ॥ अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः ॥ कर्बुरः प्रस्रवन्धातून्निष्पुरीषोऽथवाऽतिविट् ॥ तंतुमान्मक्षिकाक्रांतो राजीमांश्चंद्रकैर्युतः ॥ शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनं ॥ स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयन् ॥ सतृट्कासज्वरछर्दिदाहानाहप्रवाहिकः ॥ अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितं ॥ मेहस्तृड्दाहपिटिकामांसकोथातिसारिणं॥ पिटिका मर्महृत्पृष्ठस्तनांसगुदमूर्द्धगाः ॥ पर्वपादकरस्था वा मंदोत्साहं प्रमेहिण ॥ सर्वं च मांससंकोथदाहतृष्णामदज्वरैः ॥ विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ गुल्मः पृथुपरीणाहो घनः कूर्मइवोन्नतः ॥ सिरानद्धो ज्वरछर्दिहिध्माऽऽध्मानरुजान्वितः ॥ कासपीनसहृल्लासश्वासातीसारशोफवान् ॥ विण्मूत्रसंग्रहश्वासशोफाहिध्माज्वरभ्रमैः ॥ मूर्च्छाछर्द्यतिसारैश्च जठरं हंति दुर्बलं ॥ शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचं ॥ विरेचनहृतानाहमानह्यंतं पुनः पुनः ॥ पांडुरोगः श्वयथुमान् पीताक्षिनखदर्शनं ॥ तंद्रादाहारुचिच्छर्दिमूर्च्छाऽऽध्मानातिसारवान् ॥ अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरं ॥ नारीं शोफो मुखाद्धंति कुक्षिगुह्यादुभावपि ॥ राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणं ॥ ज्वरातिसारौ शोफांते श्वयथुर्वा तयोः क्षये ॥ दुर्बलस्य विशेषेण जायंतेऽनाय देहिनः ॥ श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिंडिके ॥ सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ आननं हस्त

पादौ च विशेषाद्यस्य शुष्यतः ॥ शूयंते वा विना देहात्स मासाद्याति पंचतां ॥ उदरी यश्च शोफी वा स्वं न पश्यति मेहनं॥यस्य वा जठरोन्मामात्परिधानं न तिष्ठति ॥ वीसर्पः कासवैवर्ण्यज्वरमूर्च्छांगभंगवान् ॥ भ्रमास्यशोफहृल्लासदेहसादातिसारवान् ॥ कुष्टं विशीर्यमाणांगं रक्तनेत्रं हतस्वरं ॥ मंदाग्निं जंतुभिर्जुष्टं हंति तृष्णातिसारिणं ॥ वायुः सुप्तत्वचं भुग्नं कंपशोफरुजातुरं ॥ वातास्रं मोहमूर्च्छायमदास्वमज्वरान्वितं ॥ शिरोग्रहारुचिश्वाससंकोचस्फोटकोथवत् ॥ शिरोरोगारुचिश्वासमेहविड्भेदतृड्भ्रमैः ॥ घ्नंति सर्वामयाः क्षीणस्वरधातुबलानलं ॥ वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥ गुल्मी मेही च तान् क्षीणान्विकारेऽल्पेऽपि वर्जयेत् ॥ बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ यस्यातुरस्य लक्ष्यंते त्रीन् पक्षान्न स जीवति ॥ वाताष्ठीलाऽतिसंवृद्धा तिष्ठंती दारुणा हृदि॥तृष्णयाऽनुपरीतस्य सद्यो मुष्णाति जीवितं ॥ शैथिल्यं पिंडिके वायुर्नीत्वा नासां च जिह्मतां ॥ क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितं ॥ नाभीगुदांतरं गत्वा वंक्षणौ वा समाश्रयन् ॥ गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ॥ मलान्बस्तिशिरोनाभि विबध्य जनयन् रुजं॥कुर्वन् वंक्षणयोः शूलं तृष्णां भिन्नपुरीषतां ॥ श्वासं वा जनयन् वायुर्गृहीत्वा गुदवंक्षणौ ॥ वितत्यपर्शुकाग्राणि गृहीत्वोरश्च मारुतः ॥ स्तिमितस्याततात्क्षस्य सद्यो मुष्णाति जीवितं ॥ सहसा ज्वरसंतापस्तृष्णामूर्च्छाबलक्षयः ॥ विश्लेषणं च संधीनां मुमूर्षोरुपजायते ॥ गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशं ॥ लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितं ॥ प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ॥ उत्पद्याशु विनश्यंति न चिरात्स विनश्यति ॥ मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः॥ अंतर्वक्त्रा किणाभाश्च विस्फोटा देहनाशनाः ॥ कामलाऽक्ष्णोर्मुखं-

पूर्णे शंखयोर्मुक्तमांसता ॥ संत्रासश्चोष्णतांऽगे च यस्य तं परिवर्ज-
येत् ॥ अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयं ॥ चंदनोशीरमदिरा-
कुणपध्वांक्षगंधयः॥ शैवालकुक्कुटशिखाकुंकुमालमषीप्रभाः॥अंतर्दाहा
निरूष्माणः प्राणनाशकरा व्रणाः ॥ यो वातजो न शूलाय स्यान्न
दाहाय पित्तजः ॥ कफजो न च पूयाय मर्मजश्च रुजे न यः ॥ अ-
चूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते॥रूपं शक्तिध्वजादीनां सर्वां-
स्तान् वर्जयेद्व्रणान् ॥ विण्मूत्रमारुतवहं कृमिणं च भगंदरं ॥ घट्टयन्
जानुना जानु पादावुद्यम्य पातयन्॥योऽपास्यति मुहुर्वक्त्रमातुरो न स
जीवति ॥ दंतैश्छिंदन्नखाग्राणि तैश्च केशांस्तृणानि वा ॥ भूमिं का-
ष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ हृष्टलोमा सांद्रमूत्रः शुष्ककका-
सी ज्वरी च यः ॥ मुहुर्हसन्मुहुः क्ष्वेडन् शय्यां पादेन हंति यः ॥ मु-
हुश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ ऊर्ध्वश्वासं गतोष्माणं शू-
लोपहतवंक्षणं ॥ शर्म चानाधिगच्छंतं बुद्धिमान्परिवर्जयेत् ॥ विका-
रा यस्य वर्द्धंते प्रकृतिः परिहीयते ॥ सहसा सहसा तस्य मृत्युर्हरति
जीवितं ॥ यमुद्दिश्यातुरं वैद्यः संपादयितुमौषधं ॥ यतमानो न श-
क्नोति दुर्लभं तस्य जीवितं ॥ विज्ञातं बहुशः सिद्धं विधिवच्चाव-
चारितं ॥ न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितं ॥ भ-
वेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ अकस्माद्गंधवर्णादेः
स्वस्थोऽपि न स जीवति ॥ निवाते सेंधनं यस्य ज्योतिश्चाप्युपशा-
म्यति ॥ आतुरस्य गृहे यस्य भिद्यंते वा पतंति च ॥ अतिमात्र-
ममत्राणि दुर्लभं तस्य जीवितं ॥ यं नरं सहसा रोगो दुर्बलं परि-
मुंचति ॥ संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ इति विकृ-
तव्याधिविज्ञानीयो नामैकादशोऽध्यायः ॥ ११ ॥

अथातो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ॥ निर्दिष्टं रि-
ष्टमातुराश्रयं ॥ दूतस्यापि तु जातिवेषभाषाचेष्टितदेशकाला वैद्य-

स्य च तत्संगमसंकल्पप्रस्थानप्रयाणप्रवेशा ग्रहचारो पूर्वसंभवः स्वप्नदर्शनानि च रोगिणः शुभाशुभं सूचयंति ॥ तत्रातुराद्वर्णोत्तमोऽन्याश्रमः पाखंडः षंढो मुंडी जटिलः स्त्री व्याधितो ऽनेको जीर्णविवर्णमलिनच्छिन्नार्द्रैकवसनः पंकतैलदिग्धो रक्तमाल्यानुलेपनो विकृतांगरूपकर्मा खरोष्ट्रमहिषवाहनो विक्लवः श्वसन् रुदन् निष्ठुरोऽमंगलाभिधायी दूरादाव्हयमानस्तृणलोष्टतुषांगारभस्मतुषसीसास्थिकेशशिरोललाटनासिकाऽऽस्यदंतजिव्हाग्रीवानखाऽनामिकांऽगुलिस्तनजठरनाभिपृष्ठकटीमेहनजंघाकपालपल्लोपलमुशलशूर्पोपानन्मार्जनीशस्त्रवस्त्रांतदशाकार्पासभग्नच्युतस्पृक्काष्ठयष्टितुलारज्जुपाशचर्मवेणुरिक्तभाजनस्नेहभाजनधरः पादाभ्यां भुवं मुंचन् विलिखन् गृहीत्वा पक्वं फलमसारं वा तद्विधमन्यद्वा विकारतुल्यगुणे च देशे काले वा दूतो वैद्यमुपसर्पन्नशुभः ॥ तद्यथा ॥ घृतोदकादिद्रवसमीपस्थमतिशीतस्तब्धः प्रत्युषसि श्लेष्मामयेऽशुभः पित्तामये तु शुभः ॥ तथा सेतुभंगे छर्दिमेहातिसारादिष्वशुभः सेतुबंधे तु शुभः ॥ तथा मध्यान्होभयसंध्यार्द्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकाऽऽर्द्राऽऽश्लेषामघामूलपूर्वासु चाशुभो यश्च वैद्यं सुप्तं नग्नं च भूमौ शयानमभ्यक्तं मुक्तकेशं दक्षिणाभिमुखं विक्लवं छिंदंतं भिंदंतमर्माग्निपितृकार्यप्रवणमशस्तं चिंतयंतं कथयंतं चोपतिष्ठति यो वा दिशं याम्यां प्रति कृत्वांऽजलिं विषमैकपादस्थः यस्मिन् व्याधिताश्रयं कथयति दूते भिषगशुभमिंद्रियार्थमुपलक्षयेत् संकल्पयेद्वा तं च नानुयायात् ॥ अतोऽन्यथा पुनः करुणापेशलेन मनसा सौमनस्यवता मातापितृसमेनातुरस्यात्यंतमारोग्यमाश्वासनेन प्रयातव्यं ॥ प्रस्थानगमनप्रवेशेषु दधिमधुघृतस्रजपुष्पाक्षतोदुंबराश्वत्थमुक्तामणिछत्रदूर्वांकुशादर्शकन्याध्वजस्यंदनाष्टापदाक्षनृपश्रीतरु-

---

१ अष्टापदःसारिफलं ॥ अक्षःपाशः ॥

भद्रपीठानि सस्यानि मत्स्या हया हंसश्चाषो वृषः केसरी दक्षिणावर्त-
शंखाब्जसिद्धार्थका रोचना स्वस्तिकस्तोरणं कीचका वेणवो वरुणम-
धुमदसिक्तगंडगजस्तोयलंबोऽबुदः पूर्णकुंभो हरिद्राऽद्रिरिंद्रः फलान्या-
र्द्रं मांसं सितं चामरं गौः सवत्साऽगना पुत्रिणी मानुषं वर्धमानं सहस्रं
नराणां प्रयुक्तानि यानानि धन्वंतरिर्वामनो ब्राह्मणो भूमिरभ्युद्धृता
सिद्धमन्नं वराहश्च तोयोत्थितस्त्रिनयनमधुसूदनस्कंदपद्मासना लो-
कपालाः सुराः खं दिशोऽग्निः सरांसि स्रवंत्यः समुद्रा मखा मारुतो
ज्योतिषं धर्मशास्त्राणि तीर्थानि काव्यं धर्मार्थकामाश्रितं वालखि-
ल्यादयो वेदवाक्यं निधिः कौस्तुभः कांचनं मणिभद्रः सुमेरुः प्रि-
यंगुः प्रदीपो वचामोदकौ दितिरदितिररुंधती बुद्धिः सावित्र्युमाऽऽ-
काशगंगा शची देवसेना सुधा शांतिर्लक्ष्मीः सरस्वत्यपत्यक्षमा स्व-
स्तिशब्दो वषट्कार ॐकारपुण्याहधर्मक्रियाश्चैतदष्टोत्तरं मंगलानां
शतं दर्शनात्स्पर्शनात्कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिशंत्युत्त-
मां ॥ अपिच ॥ पुन्नामानः पक्षिणो वामाः शुभाः शिवाश्यामापिं-
गलाकोकिलारलाछुछुंदरीसूकरीगृहगोधिकैकशफाश्च स्त्रीनामानः प्र-
दक्षिणाः शिखिभल्लूकश्रीकंठश्चेति न गजाजकपयश्च प्रवेशे तु विपरी-
ताः सर्वत्र च दक्षिणाद्वा मगमनमनिष्टं श्वशृगालयोः विपरीतं मृ-
गविहंगयोः ॥ सर्वथा ऽपि दर्शनं भरद्वाजचाषभासनकुलानां ॥ शशस-
र्पाजाऽविगोधाजाहकसूकराणां तु कीर्तनमिष्टं न दर्शनं विरुतं च
विपरीतमृक्षवानरयोः ॥ सर्वमपि त्वनिष्टं सरटकुक्कुटबिडालोलूका-
नां ॥ तथा ग्रंथ्यर्बुदादिषु छेदशब्दइष्टो गुल्मोदरादिषु भेदशब्दोऽ-
तिसाररक्तपित्तादिषु रुद्धशब्दोऽश्मर्युदावर्तादिषु प्रवर्त्तनशब्दइति ॥
एवमन्येपि ध्वनयो योज्याः ॥ सर्वत्रैव च स्थिरस्थावरंवर्धमानत्राता-

---

२ दक्षिणावर्तशंखस्तु यस्य सद्मनि तिष्ठति ॥ मंगलानि प्रवर्त्तंते तस्य लक्ष्मी स्व-
यंवरेत्यनूपविवेके ॥ २ वरुणमधु वारुणीसुरा ३ अपत्यक्षमाइत्यत्राक्षमालेतिपाठः

ऽचलध्रुवक्षेमशिवादयः शब्दा अन्या वादित्रस्वराश्च श्रेष्ठाः॥क्षुतहतः पतिताक्रोशप्रहारच्छेदभेददाहहाहाप्रतिषेधादिशब्दाः प्रतिषिद्धाः प्रतिषिद्धायां दीप्तायां च दिशि क्रूराः पक्षिमृगध्वनयो वृक्षे वा रूक्षशुष्के सवल्लिकंटके तद्विधे वा देशे दर्शनं च तृणपललकाष्ठभारकर्परकलोष्टादीनां कंटकोर्ध्वपादयानशयनासनादिभग्नोपस्कररिक्तकुंभमद्यवसातैलगर्भिणीश्वपाकव्यसनीमृतानां च प्रवेशे चातुरगृहात्पूर्वोक्तमांगल्यनिर्गमः प्रविष्टस्य तु भिषजः न सत्कारो लाभतुष्टिस्तुतयश्च शुभाशुभा आतुरस्य वक्रानुवक्राग्रहा गर्हितस्थानस्थाः केतुशनिराहुभिर्जन्मर्क्षाभिभवो गृहदारशयनासनवाहनमणिरत्नोपकरणेषु वा गर्हितलक्षणप्रादुर्भावश्चिकित्साप्रतिषेधाय॥ स्वप्नस्तु स्वयमन्येन वा दृष्टः शुभाशुभहेतुः स सप्तविधो दृष्टः श्रुतोऽनुभूतः प्रार्थितः संकल्पितो भाविको दोषजश्च॥ तत्राद्यः पंचविधोऽफलः तथा यथास्वप्रकृतिर्विस्मृतो दिवाऽतिह्रस्वोऽतिदीर्घो नातिसुप्तदृष्टश्च पूर्वरात्रेऽल्पं चिराच्च फलं करोति॥ गोसर्गे महत्सद्यश्च॥ निद्रया च पुनरनुपहतः प्रतीपैर्वा वचोभिर्दानयमनियमादिभिर्वा॥ तत्र यः प्रेतैः सह मद्यं पिबन् शुना ऽऽकृष्यते स हन्यते ज्वरेण॥यो लाक्षारक्ताभमंबरं पश्यति यो वा रक्तदेहमाल्यवस्त्रो हसन्नार्या ह्रियते स रक्तपित्तेन॥ यो याम्यां दिशं खरोष्ट्रमहिषवराहान्यतमेन स यक्ष्मणा॥ यस्य कंटकीनी लता वंशस्तालो वा हृदि जायते स गुल्मेन॥ यस्य शिरसि स शिरोरोगेण वा शिरश्छेदनेन॥ यस्य नग्नस्याज्यावसिक्तस्याग्निमनर्चिषं जुव्हतो जायंते पद्मान्युरसि स कुष्ठेन॥ यश्चंडालैः सह स्नेहं पिबति स प्रमेहेण॥ यो रक्षोभिः सह नृत्यन्नप्सु मज्जति स उन्मादेन॥ यो मत्तः सोऽपस्मारेण॥ यश्चंद्रसूर्ययोरुपरागं पश्यति तस्य नेत्ररोग उपजायते॥ यस्तयोः पतनं तस्य नेत्रविनाशः॥ यः शष्कुलीरपूपान्वाऽभ्यवहृत्य प्रतिबुद्धश्छर्दयति

यस्य शिरसि लतादयो जायंते वयांसि च निलीयंते मौढ्यं वा भवति यो गृध्रोलूककाकाद्यैः प्रेतपिशाचरक्षोद्रविडांध्रस्त्रीचंडालाद्यैर्वा परिचर्यंते दक्षिणाभिमुखं वा स्त्रिया नृत्यंत्या ऽऽकृष्यते वायसादिभिर्वा स्वयं वा दिग्वासा याति शून्याटवीं वा कपिरथेन प्रेतैः प्रव्रजितैर्वा परिष्वज्यते मग्नो वा रक्तां स्रजं धारयति पंकदिग्धो हसति नृत्यति वा वेत्रवंशकंटकतृणगहने संसृज्यते पतति वा पांशुप्रधानायां भुवि वल्मीकभस्मश्मशानश्वभ्रायतनेषु वा पंककूपकलुषोदकेषु वा मज्जति स्रोतसा वा न्हियते रक्तकुसुमवनांभूमिं गुहामंधकाराचितां पापकर्मालयं संबाधं जननीं वा प्रविशति मत्स्येन वा ग्रस्यते श्मश्रुकर्म च यो गात्रवृद्धिं विवाहं चानुभवति शैलप्रासादाग्रात्पतत्यारोहति वा यूपपुष्पाढ्यशाल्मलीकिंशुककोविदारपारिभद्रकान् यो वा पराजीयते वध्यते छर्दयति विरिच्यते हृष्यति लभते वा हिरण्यलोहलवणतैलपिण्याककार्पासानश्नाति पक्वान्नं पिबति मद्यं स्नेहं वा ऽभ्यज्यते निर्भर्त्स्यते वा कुपितैः पितृभिः चंद्रार्कताराडीपदेवतानेत्रदशनान्यतमान्नश्यतो वा पश्यति वक्रं वा बाहुं नगं वा विभिद्यमानं पुरुषान् वा नग्नान्कषायवाससोऽसौम्यान्दंडपाशहस्तान् कृष्णान् रक्ताक्षान् स्त्रियं वा कृष्णां शुक्लदशनां दीर्घकेशस्तनीं कालरात्रिरूपां ते व्याधिताः पंचतामाप्नुवंति ॥ स्वस्थास्तु जीवितसंदेहमिति ॥ भवंति चात्र ॥ मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ॥ दृश्यंते दारुणाः स्वप्ना विनाशाभिमुखात्मभिः ॥ अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥ पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ साधून् यशस्विनो वन्हिमिद्धं स्वच्छान् जलाशयान् ॥ कन्यां कुमारकान् गौरान् शुक्लवस्त्रान्सुतेजसः ॥ नराशनं दीप्ततनुं समंताद्रुधिरोक्षितः ॥ यः पश्येल्लभते यो वा छत्रादर्शविषामिषं ॥ शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलं ॥ शैलप्रासादसफलवृक्षासिंहनरद्विपान् ॥

आरोहेद्गोऽश्वयानं च तरेन्नदन्हृदोदधीन् ॥ पूर्वोत्तरेण गमनमगम्यागमनं मृतिं ॥ संबाधान्निःसृतिः स्पर्शस्तारकाचन्द्रभास्वतां ॥ रोदनं पतितोत्थानं द्विषतां चावमर्दनं ॥ यस्य स्यादायुरारोग्यं वित्तं स बहुशोऽश्नुते ॥ पितृदेवद्विजातीनां क्रुद्धभीतकृशात्मनां ॥ मलिनांबरपुष्पाणां दर्शनं न प्रशस्यते॥ तेषामेव तु तुष्टानां शुद्धपुष्पांबरात्मनां॥ दर्शनं शस्यते स्वप्ने तैश्च संभाषणं शुभं ॥ दृष्ट्वा स्वप्नान् दारुणान् शोभनान्वा प्रातः स्नातः सर्षपानाग्निवर्णान् ॥ हुत्वा सावित्र्या सर्पिषाऽऽक्तांस्तिलान्वा पूतः पापैर्मुच्यते व्याधिभिश्च ॥ मंगलाचारसंपन्नः परिवारस्तथाऽऽतुरः ॥ श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ सत्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ॥ चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणं ॥ इत्यत्र जन्ममरणं यतः सम्यगुदाहृतं ॥ शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ॥ इति दूतादिविज्ञानीयो नाम द्वादशोऽध्यायः ॥ १२ ॥

इतिश्री वैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टांगसंग्रहे द्वितीयं शारीरस्थानं संपूर्णं ॥ २ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥

॥ श्री ॥

# अष्टांगसंग्रहे



## निदानस्थानम् ३

श्रीगणेशाय नमः ॥ अथातः सर्वरोगनिदानं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ पुरा कृतयुगे विगतरागद्वेषादिद्वंद्वा जितलोभक्रोधश्रमक्लमालस्यभया निष्परिग्रहाः पुरुषा बभूवुः ॥ तेषां पुण्यबलेन पृथिव्यादीनां सर्वगुणसमुदायाविचिंत्यरसवीर्यादिसमुदितानि सस्यान्योषधयश्चासन् ॥ ते तानि जितेंद्रियत्वात्काले मात्रया चोपयुंजानाः सत्यार्जवानृशंस्यादिगुणयोगाच्च सरसदृश्यतेजसो रूपाकृतिप्रमाणप्रसादोपचयसंहननसत्वसारसंपन्ना दीर्घायुषो नीरुजश्च बभूवुः ॥ अश्याति तु कृतयुगे युगस्वभावात्क्रमेण परिहीयमाणसर्वगुणेषु पृथिव्यादिषु शरीरगुणेषु च धर्मातिक्रमात्पुरुषेष्ववश्यंभाविनो निरपेक्षरूक्षाभिरुपेक्षिता देवताभिर्ज्वरादयः प्रादुरभूवन्॥ इति सर्वरोगाणां सामान्यतः संभवः ॥ ज्वरस्तु स्थाणुशापात्प्राचेतनसतामुपगतस्य प्रजापतेः क्रतौ भागमपरिकल्पयतस्तद्विनाशार्थं पूर्वजन्मामानितया रुद्राण्या प्रेरितस्य पशुपतेर्दिव्यमब्दसहस्रं परिरक्षितवतः क्रोधमतिचिरकालसंभृतो व्रतांते रोषाग्निः किंकररूपेण किल पिंडितमूर्तिर्वीरभद्रनामा भस्मप्रहरणस्त्रिशिरोऽक्षिबाहुपादः पिंगललोचनो दंष्ट्री शंकुकर्णः कृष्णतनुरुत्तमांगान्निश्चचार ॥ स देवीविनिर्मितया सह भद्रकाल्या प्रतिरोमकूपमभिनिःसृतैर्विविधविकृताकृतिभिरनंतैर्भयानकवाक्यक्रियावपुर्भिरनुचरैः परिवृतश्चतुर्युगांत-

---

१ गात्रं वपुः संहननमित्यमरः

करांभोदसहस्रनिनदोऽनुनादयन् रोदसी ज्वालागर्भेण परितः कलकलारावेण महाभूतसंप्लवकारिणा विधाय दानववधमश्वमेधाध्वरविध्वंसाज्ञां च प्रांजलिर्विज्ञापयामास शिवं ॥ शिवीभूतोऽसि देवदेव देवैः पितामहप्रभृतिभिर्जगतः पित्रा च धात्राऽभिष्टूयमानः संप्रत्यहं किं करवाणीति ॥ तं शूली क्रोधमादिदेश ॥ यस्मात्त्रिदशैरप्यजय्यो मम क्रोधो व्रतविघ्नं चिकीर्षुर्दैत्यसैन्यं च दक्षश्च दक्षहव्यं त्वया जीर्णमतो जगतोऽस्य सस्थावरस्य ज्वरयिता ज्वरो भवान् भवतु॥ त्वं हि सर्वरोगाणां प्रथमः प्रवरो जन्ममरणेषु तमोमयतया महामोहः प्राग्जन्मनो विस्मारयिताऽपचारांतरेषु चोष्ममयत्वात्संतापात्मा द्वयेष्वपि भुवो ज्वरो भवेति ॥ सोऽयमेवमुमापतिनाऽनुगृहीतो नानानामभिः सर्वतोऽनुभुवि विचरति ॥ तद्यथा ॥ पाकलो[1] गजेष्वभितापो वाजिष्वलर्कः कुक्कुरेष्विंद्रमदो जलजेषु ज्योतिरोषधीषु चूर्णको धान्येष्वप्सु नीलिका भूमावूषो मानुषेषु ज्वरइति ॥ तत्सहजाश्चारोचकांगमर्दशिरोव्यथाभ्रमक्लमग्लानितृष्णासंतापादयः ॥ तत्संतापाच्च रक्तपित्तं ॥ तत्रैव च यज्ञे क्रोधभयाभिभूतानां परितो विद्रवतां लंघनप्लवनाद्यैर्देहविक्षोभणैर्गुल्मविद्रधिवृद्धिजठरादयो हविःप्राशान्मेहकुष्ठार्शःशोफातिसारादयो भयोत्त्रासशोकाशुचिसंस्पर्शैरुन्मादापस्मारग्रहादयो रोहिण्यतिसंगाच्छेषदुहितृसंभोगकृताच्च प्रजापतिक्रोधान्नक्षत्रराजस्य राजयक्ष्मा तत्सहोद्भवाश्च कासश्वासादयः॥सोऽपि हि न विना ज्वरेणाऽनुबध्नातीति ॥सकलोऽपि रोगग्रामो ज्वरपूर्वको ज्वरशब्दवाच्यश्च॥ज्वरस्तमो विकार आतंकः पाप्मा गदो व्याधिराबाधो दुःखमामयो

---

१ ग्रंथांतरेतु ॥ पाकलः स तु नागानामभितापस्तु वाजिनां ॥ गवामीश्वरसंज्ञश्च मानवानां ज्वरो मतः ॥ अजावीनां प्रलापाख्यः करभे चालसो भवेत् ॥ हारिद्रो महिषाणां तु मृगरोगो मृगेषु च ॥ पक्षिणामभिघातस्तु मत्स्येष्विंद्रमदो मतः ॥ पक्षाघातः पतंगानां व्यालेष्वक्षिकसंज्ञकइति ॥

यक्ष्मा रोग इत्यनर्थांतरं॥तत्र रुजतीति रोगः॥तस्योपलब्धिर्निदानपूर्वरूपरूपोपशयसंप्राप्तिभिः॥तत्र निदानं वाय्वादिप्रकोपः॥तस्य पुनरहिताहारविहारसेवा ॥ निदानपर्यायास्तु हेतुर्निमित्तमायतनं कारकः कर्ता कारणं प्रत्ययः समुत्थानं मूलं योनिरिति ॥ पूर्वरूपं नाम येन भाविव्याधिविशेषो ज्ञायते न तु दोषविशेषस्तदुत्पत्स्यमानस्य व्याधेरल्पत्वादव्यक्तं रूपं ॥ स्पष्टं पुनारूपं ॥ तस्य शब्दांतराणि लिंगमाकृतिर्लक्षणं चिन्हं संस्थानं व्यंजनमिति ॥ उपशयो[3] हेतुव्याधिविपरीतैर्विपरीतार्थकारिभिश्चौषधाहारविहारैः[4] सुखानुबंधः ॥ स हि व्याधिसात्म्यसंज्ञः ॥ तद्विपरीतोऽनुपशयः[5] ॥ एतेन देशकालौ व्याख्यातौ ॥ संप्राप्तिः[6] पुनरेवं दुष्टो दोषस्तेन चैवमारब्धो व्याधिः ॥ तत्पर्याया जातिरागतिर्निर्वृत्तिर्निष्पत्तिरिति ॥ सा संख्याविकल्पप्राधान्यबलकालविशेषैर्भिद्यते ॥ तत्र संख्या तावदष्टौ ज्वरास्त्रिविधं रक्तपित्तं पंच कासा इति ॥ विकल्पः समवेतानां दोषाणामंशांशकल्पना ॥ प्राधान्यं व्याधीनामनुबंध्यनुबंधभेदात्तरतमयोगाद्वा ॥ दोषाणां बलविशेषो हेत्वादिकात्स्न्यावयवविभावनया ॥ काल विशेषः पुनर्दोषाणामृत्वहोरात्राहारसमयनियतः प्रकोपइति ॥ एतावतैवसमासतः कथितो निदानार्थः ॥ विस्तरेण तु यथास्वं प्रतिरोगमुपदेक्ष्यते ॥ अथ तिक्तकटुकषायरूक्षलघुशीतविष्टंभिविरूढकतृणधान्यकलायचणककरीरतुंबकलिंगचिर्भिटबिसशालूकजांबवतिंदु-

---

१ निर्दिश्यते व्याधिरनेनेति निदान ॥ निश्चित्य दीयते प्रतिपाद्यते व्याधिरनेनेति वा ॥ निशब्दो निश्चये ॥ तथा च निर्निश्चयनिषेधयोरिति ॥ लोकेऽपि अद्य ते निदानं करिष्यामीत्युक्ते निश्चयं करिष्यामीत्यवगम्यते ॥ निदानमितिकरणे ल्युट् ॥ तेन व्याधिनिश्चयकरणमात्रनिदानमितिनिदानादिपंचकसामान्यलक्षणं ॥ निदानशब्दोऽयं निदानविशेषे हेतौ च प्रतीयते॥ यथा तृणशब्दस्तृणविशेषे तृणजातौ च ॥ २ उत्पन्नव्याधिबोधकमेव लिंगं रूपमिति लक्षणं ३ संक्षेपतस्तूपशयलक्षणं॥औषधादिजनितसुखानुबंधउपशयइति ४ निदान समानधर्मिणोऽपि प्रभावात्प्रशमकारिणः ॥ ५ औषधादीनां दुःखकरउपयोगोऽनुपशयइत्यर्थः ॥ ६ दोषेतिकर्तव्योपलक्षितं व्याधेर्जन्म संप्राप्तिः ॥

कहीनशुष्कप्रमिततृषिताशनक्षुधितांबुपानासृक्क्षयविरेचनादिकर्मातियोगवेगविधारणोदीरणरात्रिजागरणप्रवातव्यवायव्यायामबलवद्युद्धनिग्रहातिखरचापकर्षणात्युच्चविषमलंघनाध्वाऽध्ययनधावनसलिलतरणाभिघातदम्यगोवाजिगजनिग्रहाश्मशिलालोहकाष्ठोत्क्षेपविक्षेपभ्रमणचालनगाढोच्छादनपराघातनादिसाहसभयशोकोत्कंठादिभिरतिसेवितैर्ग्रीष्मवर्षापराण्हापररात्राहारपरिणामांतेषु च वायुः प्रकोपमापद्यते ॥ कट्वम्ललवणक्षारोष्णतीक्ष्णविदाहिशुक्तशांडाकीमद्यमूत्रमस्तुदधिधान्याम्लतैलकुलत्थमाषनिष्पावतिलान्नलट्वाकुठेरकादिवर्गाम्राम्रातकाम्लीकापीलुभल्लातकास्थिलांगलिकामरिचातपाग्निरजोधूमक्रोधेर्ष्याऽजीर्णमैथुनोपगमादिभिर्वर्षाशरन्मध्यंदिनार्द्धरात्राहारविदाहकालेषु च पित्तं ॥ मधुराम्ललवणस्निग्धगुरुशीतपिच्छिलाभिष्यंदिनवान्नपिष्टपृथुकस्थूलभक्ष्यशष्कुल्यामक्षीरकिलाटमोरटकूर्चिकापिंडकपीयूषेक्षुरसफाणितगुडापूपपिशितमोचखर्जूरभव्यनालिकेरनिशांबुपानात्यंबुपानातिसंतर्पणभुक्तमात्रदिवास्वप्नकालातिस्वप्नकायवाङ्मनोव्यापारानारंभानुपधानशयनावश्यायहर्षच्छर्दिविघातविरेचनाद्ययोगादिभिः शिशिरवसंतपूर्वाण्हप्रदोषभुक्तमात्रेषु च श्लेष्मा ॥ द्वयसंसर्गात्संसर्गः ॥ सर्वेषां तु मिश्रीभावात्तथाऽनशनात्यशनाध्यशनसमशनविषमाशनविरुद्धाशनसंकीर्णाशनव्यापन्नांबुमद्यमंदकदधियावकयत्रसुरापिण्याकाममूलकसर्षपशुष्कशाकवल्लूरकृशापिशितलकुचामफलमृत्तिकाभ्यवहारान्नपरिवर्त्तर्तुव्यापदसात्म्यौषधिगंधाघ्राणविषपिटकाविषगराभ्यवहारानार्तवदुर्दिनग्रहपीडाग्रहावेशपुरोवातपर्वतोपश्लेषरसायनस्नेहस्वेदविरेचनादिमिथ्यायोगेभ्यः पापानां च कर्मणामभ्यासात्पूर्वकृतानां च परिणामात्स्त्रीणां विषमप्रस-

---

१ लट्वा कौसुंभं शाकं २ स्विन्नयवाः ३ वल्लूरं शुष्कमांसं ॥ ४ अन्नस्य परिवर्तो विनियमः ॥ परिवर्त्तो विनियमे इति मेदिनीकरः

वात्प्रसूतानां च मिथ्योपचारात्सन्निपातः ॥ इति सामान्यतः सर्वेषु रोगेषु दोषप्रकोपहेतुरुक्तइति ॥ भवति चात्र ॥ प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ आधानजन्मनिधनप्रत्यरख्यविपत्करे[1] ॥ नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥ ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तते ॥ भरणीषु च पंचाहात्सप्ताहात्कृत्तिकासु च ॥ त्रिःसप्तरात्रादथवा रोहिण्यामष्टरात्रतः ॥ एकादशाद्वा दिवसान्मृगे षण्नवरात्रयोः ॥ पंचाहान्मृत्युरार्द्रायां त्रिपक्षे संशयोऽथवा ॥ पुनर्वसौ प्रवृत्तस्तु ज्वरोऽपैति त्रयोदशात् ॥ दिवसात्सप्तविंशाहाद्द्व्यहात्सप्ताहतोऽथवा ॥ पुष्याश्लेषासु मरणं चिरेणाऽपि मघासु तु ॥ अवश्यं स्वास्थ्यमाप्नोति द्वादशाहान्न चेन्मृतः ॥ फाल्गुन्योःपूर्वयोर्मृत्युरन्ययोस्तु दिनेऽष्टमे॥नवमे ह्येकविंशे[2] वा ज्वरः सौम्यत्वमृच्छति ॥ हस्तेऽन्हि[3] सप्तमे शांतिश्चित्रायामष्टमेऽथवा[4] ॥ पुनश्चित्रागमे स्वातौ दशाहादथवा त्रिभिः ॥ पक्षैर्मृत्युं विशाखासु द्वाविंशेऽहनि निर्दिशेत् ॥ नवमेऽन्हि न चेच्छांतिर्मैत्र्ये[5] मृत्युस्ततः परं ॥ ज्येष्ठायांपंचमे मृत्युरूर्ध्वं वा द्वादशात्सुखं॥ स्वास्थ्यं दशाहान्मूले न त्रिःसप्ताहेऽथवा गते ॥ पूर्वाषाढासु नवमे ततोऽन्यासु तु मासतः॥अष्टाभिरथवा मासैर्नवभिर्वा भवेच्छिवं॥आज्येष्ठाहाद्धनिष्ठासु द्वादशाद्वारुणेषु तु ॥ षडहे द्वादशाहे वा मृत्युर्भद्रपदासु तु ॥ उत्तरासु द्विसप्ताहात्प्रशमो रेवतीषु च ॥चतूरात्रेऽष्टरात्रे वा क्षेममित्याह हारितः ॥ इति सर्वरोगनिदानं नाम प्रथमोऽध्यायः॥१॥

अथातो ज्वरनिदानं व्याख्यास्यामः ॥ अष्टाभिः कारणैर्ज्वरः संजायते मनुष्याणां पृथक्दोषैः संसृष्टैः सन्निपतितैरागंतुना च ॥

---

१ आधानं जन्मतो यद्दशमं नक्षत्रं निधनं सप्तमी तारा प्रत्यरः पंचमी तारा विपत्करं तृतीयातारा २ चैकविंशेवेतिपाठः ३ हस्तेनेतिपाठः ४ भवेदितिपाठः ५ मैत्र्ये अनुराधायां

तत्र यथोक्तैः प्रकोपनविशेषैः प्रकुपिता दोषाः प्रविश्यामाशयमूष्मणा मिश्रीभूयाममनुगम्य रसस्वेदवाहीनि स्रोतांसि पिधाय पित्तं तु द्रवत्वात्तमिव जलमनलमुपहृत्य सर्वेऽपि च दोषाः पक्तारं स्वस्थानाद्बहिर्निरस्य सह तेन सकलमपि शरीरमभिसर्पंति ॥ तत्संपर्काल्लब्धबलेन स्वेनोष्मणा नितरां देहोष्माणमेधयंतोऽतःस्रोतोमुखपिधानात्स्तंभमादधाना बहिरपि स्वेदमपहरंतः सर्वेंद्रियाणि चोपतापयंतो ज्वरमभिनिर्वर्तयंति ॥ तस्येमानि पूर्वरूपाणि मुखे वैरस्यमन्नानभिलाषो गुरुगात्रत्वमालस्यमल्पप्राणता गतिस्खलनं निद्राधिक्यमरतिरसूया हितोपदेशेषु प्रद्वेषो बालेषु मधुरेषु च भक्ष्येष्वम्ललवणकटुकाभिनंदनमविपाकोऽगमर्दश्चक्षुषो राकुलत्वं साश्रुता जृंभा विनामः क्लमो रोमहर्षः शब्दानलांबुशीतवातच्छायातपेष्वकस्मादिच्छाद्वेषौ च ॥ तदनंतरं व्यक्तीभावो ज्वरस्येति ॥ भवति चात्र ॥ आगमापगमक्षोभमृदुता वेदनोष्मणां ॥ वैषम्यं तत्र तत्रांगे तास्ताः स्युर्वेदनाश्चलाः ॥ पादयोः सुप्तता स्तंभः पिंडिकोद्वेष्टनं श्रमः ॥ विश्लेषइव संधीनां सादऊर्वोः कटिग्रहः ॥ पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरं ॥ छिद्यंतइव चास्थीनि पार्श्वगानि विशेषतः॥हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः॥स्कंधयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः॥ अशक्तिर्भक्षणे हन्वोर्जृंभणं कर्णयोः स्वनः ॥ निस्तोदः शंखयोर्मूर्ध्नि वेदना विरसास्यता॥कषायास्यत्वमथवा मलानामप्रवर्त्तनं ॥ रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ॥ प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः ॥ कंठोष्ठशोषस्तृट् शुष्कौ छर्दिकासौ विषादिता ॥ हर्षो रोमांगदंतेषु वेपथुः क्षवथोर्ग्रहः ॥ भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ॥ युगपद्यासिरंगानां प्रला-

---

१ प्रतोदेनेव ॥ २ अरोचकेन वक्त्रस्थमपि न भुंक्ते अश्रद्धया केवलं नाभिलषति मुखस्थं भक्षयत्येवेति विशेषः ॥

पः कटुवक्त्रता ॥ नासाऽस्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ॥ विड्भ्रंशः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ रक्तकोठोद्भवः पीतहरितत्वं त्वगादिषु ॥ स्वेदो निःश्वासवैगंध्यमतितृष्णा च पित्तजे ॥ विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ॥ प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ हृल्लासश्छर्दनं कासः स्तंभः श्वैत्यं त्वगादिषु॥ अंगेषु शीतपिटकास्तंद्रोदर्दः कफोद्भवे ॥ काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥ निदानोक्तानुपशयो विपरीतोपशायिता ॥ यथास्वलिंगसंसर्गे ज्वरः संसर्गजोऽपि च ॥ शिरोर्तिमूर्च्छावमिदाहमोहकंठास्यशोषारतिपर्वभेदाः ॥ उन्निद्रतातृड्भ्रमरोमहर्षा जृंभाऽतिवाक्त्वं च चलात्सपित्तात् ॥ तापहान्यरुचिपर्वशिरोरुक्पीनसश्वसनकासविबंधाः ॥ शीतजाड्यतिमिरभ्रमतंद्राः श्लेष्मवातजनितज्वरलिंगं ॥ शीतस्तंभस्वेददाहाव्यवस्था तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः ॥ मोहस्तंद्रा लिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ॥ तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ॥ गीतनर्तनहास्यादिविकृतेहाप्रवर्त्तनं॥ साश्रुणी कलुषे भुग्ने रक्ते लुलितपक्ष्मणी ॥ अक्षिणी पिंडिका पार्श्वमूर्द्धपर्वास्थिरुक् श्रमः॥ सस्वनौ सरुजौ कर्णौ कंठः शूकैरिवावृतः॥ परिदग्धा खरा जिव्हा गुरुस्रस्तांगसंधिता॥ रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतितृट् ॥ कोठानां श्यावरक्तानां मंडलानां च दर्शनं ॥ हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाऽल्पशोऽति वा ॥ स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता॥ दोषपाकश्चिरात्तंद्रा प्रततं कंठकूजनं॥सन्निपातमभिन्यासं तं ब्रूयाच्च हतौजसं॥ वायुना कफरुद्धेन पित्तमंतः

---

१ स्वेदो घर्मागमनं प्रायेण सामदोषेण स्रोतसां निरोधात्सर्वज्वरेषु घर्मनिरोधः अत्र तु पित्तस्य तैक्ष्ण्यात्ज्वरप्रभावात्स न भवति ॥

प्रपीडितं ॥ व्यवायित्वाच्च सौक्ष्म्याच्च बहिर्मार्गं प्रवर्त्तते ॥ तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ॥ दोषे विबद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥ असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥ अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितं ॥ त्वचि कोष्ठे ऽथवा दाहं विदधाति पुरोऽनु वा ॥ तद्वद्वातकफौ शीतं दाहादिर्दुस्तरस्तयोः॥ शीतादौ तत्र पित्तेन कफे स्यंदितशोषिते ॥ शीते शांतेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ॥ दाहादौ पुनरंते स्युस्तंद्रास्वेदवमिक्लमाः ॥आगंतुरभिघाताभिषंगशापाभिचारतः॥चतुर्द्धाऽत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ श्रमाच्च तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ॥ सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरं ॥ग्रहावेशौषधिविषक्रोधभीशोककामजः ॥ अभिषंगाद्ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ओषधीगंधजे मूर्च्छा शिरोरुक् श्वयथुः क्षवः ॥ विषान्मूर्च्छाऽतिसारास्यश्यावतादाहहृद्ग्रहाः ॥ क्रोधात्कंपः शिरोरुक् च प्रलापो भयशोकजे॥ कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥ ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ॥ कोपः कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ॥ सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ तत्राभिचारकैर्मंत्रैर्हूयमानस्य तप्यते ॥ पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ॥ सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः ॥ इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः ॥ शारीरो मानसः सौम्यस्तीक्ष्णोऽतर्बहिराश्रयः ॥ प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ॥ पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥ दाहः पित्तयुते मिश्रं मिश्रेंऽतःसंश्रये पुनः ॥ ज्वरेऽधिकं विकाराः स्युरंतःक्षोभो मलग्रहः ॥ बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ वर्षाशरद्वसंतेषु वाताद्यैः प्राकृतः क्रमात् ॥ वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ॥ एकमार्गक्रियारंभ-

व्यनिवृत्तेर्माहात्म्ययात् ॥ वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरं ॥ कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः ॥ तत्प्रकृत्या विसर्गाच्च तत्र नानशानाद्भयं ॥ कफो वसंते तमपि वातपित्तं भवेदनु ॥ बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः॥ सर्वथा विकृतिज्ञाने प्रागसाध्यउदाहृतः ॥ ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ॥ न प्रवृत्तिर्न विट्जीर्णा न क्षुत्सामज्वराकृतिः ॥ ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ॥ मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणं ॥ जीर्णताऽऽमविपर्यासात्सप्तरात्रं च लंघनात् ॥ ज्वरः पंचविधः प्रोक्तो मलकालबलाबलात् ॥ प्रायशः सन्निपातेन भूयसा व्यपदिश्यते ॥ संततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः ॥ तापयंतस्तनुं सर्वां तुल्यदूष्यादिवर्द्धिताः ॥ बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः ॥ संततं निष्प्रतिद्वंद्वा ज्वरं कुर्युस्सुदुसहं ॥ मलं ज्वरोष्मा धातून्वा स शीघ्रं क्षपयेत्ततः ॥ सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्याऽपि वा क्रमात् ॥ वातपित्तकफैः सप्त दश द्वादश वासरान्॥ प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ॥ इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ॥ द्विगुणा सप्तमी यावन्नवम्येकादशी तथा ॥ एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते ॥ कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनां ॥ अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलं॥ सप्रत्यनीको विषमं कुर्याद्वृद्धिक्षयान्वितः ॥ सूक्ष्मसूक्ष्मतरास्येषु दूरदूरतरेषु च ॥ दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ याति देहं च नाशेषं भूयिष्ठं भेषजेऽपि च ॥ क्रमोऽयं तेन विच्छिन्नसंतापो लक्ष्यते ज्वरः॥ विषमो विषमारंभक्रियाकालानुषंगवान् ॥ यथोत्तरं मंदगतिर्मंदशक्तिर्यथा यथा॥कालेनाप्नोति सदृशान्सरसादींस्तथा तथा ॥ दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण वा ॥ भूमौ स्थितं जलैः सिक्तं कालमेव प्रती-

क्षते॥ अंकुराय यथा बीजं दोषबीजं रुजे तथा ॥ वेगं कृत्वा विषं य द्वदाशये लीयतेऽबलं ॥ कुप्यत्याप्तबलं भूयः काले दोषविषं तथा ॥ एवं ज्वराः प्रवर्त्तंते विषमाः सततादयः ॥ दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन् बली ॥ निवर्त्तते पुनश्चैष प्रत्यनीकबलाबलः ॥ क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेव लीयते लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनाद-धाति सः ॥ अतिलीनोऽतिमंदत्वाद्भवत्यन्हि न पंचमे ॥ आसन्न-विवृतास्यत्वात्स्रोतसां रसवाहिनां ॥ आशु सर्वस्य वपुषो व्याप्तिर्दो-षेण जायते ॥ संततः सततस्तेन विपरीतो विपर्ययात् ॥ दोषो र-क्ताश्रयः प्रायः करोति सततं ज्वरं ॥ अहोरात्रस्य स द्विः स्या-त्सकृदन्येद्युराश्रितः ॥ तस्मिन्मांसवहानाडीर्मेदोनाडीस्तृतीयके ॥ ग्रा ही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ॥ सपृष्ठस्यानिलकफात्स-चैकाहांतरः स्मृतः ॥ चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ॥ म-ज्जस्थएवेत्यपरे प्रभावं स तु दर्शयेत् ॥ द्विधा कफेन जंघाभ्यां-प्रथमं शिरसो ऽनिलात् ॥ गंभीरधातुचारित्वात्सन्निपातेन संभवात् ॥ तुल्योच्छ्रायाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥ अस्थिमज्जोभ-यगते चातुर्थिकविपर्ययः ॥ त्र्यहात् द्व्यहं ज्वरयति दिनमेकंतु मुं-चति ॥ बलाबलेन दोषाणामन्नचेष्टादिजन्मना ॥ ज्वरः स्यान्मन-सस्तद्वत्कर्मणश्च तदा तदा॥ उत्क्लेशो गौरवं दैन्यं भंगोंऽगानां विजृंभ णं॥अरोचको वमिः सादः सर्वस्मिन् रसगे ज्वरे ॥रक्तनिष्ठीवनं तृष्णार क्तोष्णपिडिकोद्गमः॥ दाहरागभ्रममदप्रलापा रक्तसंश्रिते ॥ तृड्ग्लानिः सृष्टवर्चस्त्वमंतर्दाहो भ्रमस्तमः ॥ दौर्गंध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते ॥ स्वेदोऽतितृष्णा वमनं स्वगंधस्यासहिष्णुता ॥ प्रला-पो ग्लानिररुचिरस्थिस्थे त्वस्थिभेदनं ॥ दोषप्रवृत्तिरूर्ध्वाधः श्वासां-गाक्षेपकूजनं ॥ अंतर्दाहो बहिः शैत्यं श्वासो हिध्मा च मज्जगे ॥

तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता ॥शुक्रप्रवृत्तिर्मृत्युश्च जायते शु-
क्रसंश्रये ॥ उत्तरोत्तरदुःसाध्याः पंचात्रांत्यौ तु वर्जयेत् ॥ प्रलिंपन्नि-
व गात्राणि श्लेष्मणा गौरवेण च ॥ मंदज्वरप्रलेपस्तु स शीतः स्या-
त्प्रलेपकः ॥ नित्यं मंदज्वरो रूक्षः शीतः कृच्छ्रेण सिध्यति ॥ स्तब्धां-
गः श्लेष्मभूयिष्ठो भवेद्वातबलासकः ॥ हरिद्राभेकवर्णाभस्तद्वर्णं यः
प्रमेहति ॥ स वै हारिद्रको नाम ज्वरभेदोंऽतकः स्मृतः ॥ कफवातौ
समौ यस्य हीनपित्तस्य देहिनः ॥ तीक्ष्णो वाँ यदि वा मंदो जायते
रात्रिगो ज्वरः ॥ दिवाकरापीतबले व्यायामाच्च विशोषिते ॥ शरीरे नि-
यतं वाताज्ज्वरः स्यात्पूर्वरात्रिकः ॥ आमाशये यदा दुष्टे श्लेष्मपि-
त्ते व्यवस्थिते ॥ तदाऽर्द्धं शीतलं देहे त्वर्द्धं चोष्णं प्रजायते ॥ काये
पित्तं यदा दुष्टं श्लेष्मा चांते व्यवस्थितः ॥ उष्णत्वं तेन देहस्य शी-
तत्वं करपादयोः ॥ धातून्प्रक्षोभयन्दोषो मोक्षकाले विलीयते ॥ ततो-
नरः श्वसन्स्विद्यन्कूजन्वमति चेष्टते॥ वेपते प्रलपत्युष्णैः शीतैश्चांगैर्ह-
तप्रभः॥विसंज्ञो ज्वरवेगार्त्तः सक्रोधइव वीक्षते॥सदोषशब्दं च शकृद्द्रवं
सृजति वेगवत् ॥ देहो लघुर्व्यपगतक्लममोहतापः पाको मुखे करणसौ-
ष्ठवमव्यथत्वं ॥ स्वेदः क्षवः प्रकृतियोगि मनोऽन्नलिप्सा कंडूश्च मूर्ध्नि
विगतज्वरलक्षणानि ॥ इति ज्वरनिदानं नाम द्वितीयोऽध्यायः ॥२॥

अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः ॥ भृशोष्णतीक्ष्णक
ट्वम्ललवणातिविदाहिभिः ॥ कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः॥
कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्च्छितं ॥ ते मिथस्तुल्यरूपत्वमा
गम्य व्याप्नुतस्तनुं ॥ पित्तं रक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥ गंधव
र्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ प्रभवत्यसृजः स्थानात्प्लीहतो यकृत
श्च तत् ॥शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः॥ छर्दिश्छर्दितबीभ
त्स्यं कासः श्वासो भ्रमः क्लमः ॥ लोहलोहितमत्स्यामगंधास्यत्वं स्वर

---

१ द्वंगबलासकइतिपाठः २ इदंज्वरमोक्षकालक्षणं

क्षयः ॥ रक्तहारिद्रहरितवर्णता नयनादिषु ॥ नीललोहितपीतानां वर्णा नामविवेचनं ॥ स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन् भविष्यति ॥ ऊर्ध्वं नासाक्षिकर्णास्यमेंढ्रयोनिगुदैरधः ॥ कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥ ऊर्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनं ॥ बह्वौषधं च पित्तस्य विरेको हि वरौषधं ॥ अनुबंधी कफो यश्च तत्र तस्यापि शुद्धिकृत् ॥ कषायाः स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिताः॥ किमु तिक्ताः कषाया वा ये निसर्गात्कफापहाः ॥ अधो याप्यं चलाद्यस्मात्तत्प्रच्छर्दन साधनं ॥ अल्पौषधं च पित्तस्य वमनं न वरौषधं ॥ अनुबंधी चलो यस्य शांतयेऽपि न तस्य तत् ॥ कषायाश्च हितास्तस्य मधुरा एव केवलं ॥ कफमारुतसंसृष्टमसाध्यमुभयायनं ॥ अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ न हि संशोधनं किंचिदस्त्यस्यप्रतिलोमगं ॥ शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितं ॥ एवमेवोपशमनं सर्वशो नास्य विद्यते ॥ संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितं ॥ तत्र दोषानुगमनं सिरास्रइव लक्षयेत् ॥उपद्रवांश्च विकृतिज्ञानतस्तेषु चाधिकं ॥ आशुकारी यतः कासः स एवातः प्रचक्षते ॥ पंच कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरं ॥ तेषां भविष्यतां रूपं कंठे कंडूररोचकः ॥ शूकपूर्णाभकंठत्वमस्वास्थ्यं हृदयस्य च ॥ कषायविदलासात्म्यपट्वम्लमधुरोषणैः ॥रूक्षशीतगुरुस्निग्धक्लेदिपर्युषिताशनैः ॥ धारणोदीरणायासराव्यहःस्वप्नजागरैः ॥ अन्यैश्च तद्विधैर्धातुक्षयावरणकारिभिः ॥ क्रुद्धः प्रतिहतोऽपाने यदाऽपानः प्रपद्यते ॥ ऊर्ध्वं रसस्य स्वस्थाने तिष्ठाहुरुपपद्यते ॥ उदानेन सजंस्तत्र कंठे चानु प्रपूर्य च ॥ वाहिनीर्गलमूर्द्धस्थास्ततोंगान्युत्क्षिपन्निव ॥ क्षिपन्निवाक्षिणी पृष्ठमुरःपार्श्वे च पीडयन् ॥ विवृतत्वान्मुखेनैति भिन्नकांस्यो-

१ तिष्ठत्याशूपपद्यते ॥ इतिपाठः

पमध्वनिः ॥ यस्मात्तस्मात्स वर्णौजोबलमांसक्षयावहः ॥ हेतुभेदात्प्रतीघातभेदो वायोः सरंहसः ॥ यद्रुजाशब्दवैषम्यं कासानां जायते ततः ॥ कुपितो वातलैर्वातः शुष्कोरःकंठवक्त्रतां ॥ हृत्पार्श्वोरःशिरःशूलमोहक्षोभस्वरक्षयान् ॥ करोति शुष्कं कासं च महावेगरुजास्वनं ॥ सोंऽगहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वा ऽल्पतां व्रजेत् ॥ पित्तात्पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमकोऽम्लकः ॥ प्रततं कासवेगेन ज्योतिषामिव दर्शनं ॥ कफादुरोल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ॥ कंठोपलेपसदनपीनसच्छर्द्यरोचकाः ॥ रोमहर्षो घनास्निग्धश्वेतश्लेष्मप्रवर्त्तनं ॥ युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलं ॥ उरस्यंतःक्षते वायुः पित्तेनानुगतो बली ॥ कुपितः कुरुते कासं कफं तेन सशोणितं ॥ पीतं श्यावं च शुष्कं च ग्रथितं कुथितं बहु ॥ ष्ठीवेत्कंठेन रुजता विभिन्नेनेव चोरसा ॥ सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ पर्वभेदज्वरश्वासतृष्णावैस्वर्यकंपवान् ॥ पारावतइवाकूजन् पार्श्वशूली ततोऽस्य च ॥ क्रमाद्वीर्यं रुचिः पक्ता बलं वर्णश्च हीयते ॥ क्षीणस्य सासृङ्मूत्रत्वं स्याच्च पृष्ठकटिग्रहः ॥ वायुप्रधानाः कुपिता धातवो राजयक्ष्मिणः ॥ कुर्वंति यक्ष्मायतनैः कासं ष्ठीवेत्कफं ततः ॥ पूतिपूयोपमं पीतं विस्रं हरितलोहितं ॥ लुप्येते इव पार्श्वे च हृदयं पततीव च ॥ अकस्मादुष्णशीतेच्छा बव्हाशित्वं बलक्षयः ॥ स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ॥ ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवंति च ॥ इत्येषः क्षयजः कासः क्षीणानां देहनाशनः ॥ याप्यो वा बलिनां तद्वत्क्षतजोऽभिनवौ तु तौ ॥ सिध्येतामपि सामर्थ्यात्साध्या दोषैः पृथक् त्रयः ॥ मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च ॥ कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ॥ भवंत्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत्॥इति रक्तपित्तकासनिदानं नाम तृतीयोऽध्यायः ॥३॥

अथातः श्वासहिक्कानिदानं व्याख्यास्यामः॥कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वादोषकोपनैः ॥ आमातिसारवमथुविषपांडुज्वरैरपि॥रजोधूमानिलैर्मर्मघातादतिहिमांबुना ॥ क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पंचमः ॥ कफोपरुद्धगमनः पवनो विष्वगास्थितः ॥ प्राणोदकान्नवाहीनि दुष्टः स्रोतांसि दूषयन्॥ उरःस्थः कुरुते श्वासमामाशयसमुद्भवं॥ प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ॥ आनाहः शंखभेदश्च तत्रायासातिभोजनैः ॥ प्रेरितः प्रेरयेत्क्षुद्रं स्वयं संशमनं मरुत् ॥ प्रतिलोमं सिरा गच्छन्नुदीर्य पवनः कफं ॥ परिगृह्य शिरोग्रीवमुरःपार्श्वे च पीडयन् ॥ कासं घुर्घुरकं मोहमरुचिं पीनसं तृषं ॥ करोति तीव्रवेगं च श्वासं प्राणोपतापिनं॥प्रताम्येत्तस्य वेगेन निष्ठ्यूतांऽते क्षणं सुखी ॥ कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति ॥ उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्तिमान् ॥ विशुष्कास्यो मुहुःश्वासी कांक्षत्युष्णं सवेपथुः ॥ मेघांबुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते स याप्यस्तमकः साध्यो नवो वा बलिनो भवेत् ॥ ज्वरमूर्च्छायुतः शीतैः शाम्येत्प्रतमकस्तु सः ॥ छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः ॥ सस्वेदमूर्च्छः सानाहो बस्तिदाहनिरोधवान् ॥ अधोदृग्विप्लुताक्षश्च मुह्यन् रक्तैकलोचनः ॥ शुष्कास्यः प्रलपन् दीनो नष्टच्छायो विचेतनः ॥ महता महता दिनो नादेन श्वसिति क्रथन् ॥ उद्धूयमानः संरब्धो मत्तर्षभइवानिशं ॥ प्रनष्टज्ञानविज्ञानो विभ्रांतनयनाननः ॥ वक्षः समाक्षिपन् बद्धमूत्रवर्चा विशीर्णवाक् ॥ शुष्ककंठो मुहुर्मुह्यन्कर्णशंखशिरोऽतिरुक् ॥ दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यधः ॥ श्लेष्मावृतमुखस्रोताः क्रुद्धगंधवहार्दितः ॥ ऊर्ध्वदृग्वीक्षते भ्रांतमक्षिणी परितः क्षिपन् ॥ मर्मसु छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ एते सिध्येयुरव्यक्ता

१ समंताद्देहं व्याप्य स्थितः

व्यक्ताः प्राणहरा ध्रुवं ॥ श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रयाः ॥ हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ॥ गंभीरा च मरुत्त- त्र त्वरयाऽयुक्तिसेवितैः ॥ रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडितः करोति हिध्मामरुजां मंदशब्दां क्षवानुगां ॥ शमं सात्म्यान्नपानेन या प्रयाति च साऽन्नजा ॥ आयासात्पवनः क्रुद्धः क्षुद्रां हिध्मां प्रवर्त्तये- त् ॥ जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा ॥ वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवं ॥ चिरेण यमलैर्वेगैराहारे या प्रवर्त्तते ॥ परिणा- मोन्मुखे वृद्धिं परिणामे च गच्छति ॥ कंपयंती शिरोग्रीवमाध्मातस्या ति तृष्यतः ॥ प्रलापच्छर्द्यतीसारनेत्रविप्लुतिजृंभिणः ॥ यमला वेगिनी हिध्मा परिणामवती च सा ॥ स्तब्धभ्रूशंखयुग्मस्य सास्रविप्लुतचक्षु- षः ॥ स्तंभयंती तनुं वाचं स्मृतिं संज्ञां च मुष्णती ॥ रुंधती मार्ग- मन्नस्य कुर्वतीमर्मघट्टनं ॥ पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्त्तते ॥ महामूला महावेगा महाशब्दा महाबला ॥ पक्वाशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्त्तते ॥ तद्रूपा सा मुहुः कुर्याज्जृंभामंगप्रसारणं ॥ गं- भीरेणाऽनुनादेन गंभीरा तासु साधयेत् ॥ आद्ये द्वे वर्जयेदंत्ये सर्व- लिंगां च वेगिनीं ॥ सर्वाश्च संचितामस्य स्थविरस्य व्यवायिनः ॥ व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ सर्वेऽपि रोगा नाशा- य न त्वेवं शीघ्रकारिणः ॥ हिध्माश्वासौ यथा तौ हि मृत्युकाले कृ- तालयौ ॥ इति श्वासहिध्मानिदानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातो राजयक्ष्मादिनिदानं व्याख्यास्यामः ॥ अनेकरोगानुगतो बहुरोगपुरोगमः ॥ राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः ॥ न- क्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा ॥ यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ देहौषधक्षयकृतेः क्षयस्तत्संभवाच्च सः ॥ रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ साहसं वेगसंरोधः शु- क्रौजःस्नेहसंक्षयः ॥ अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ तै-

रुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः ॥ शरीरसंधीनाविश्य तान् सिराश्च प्रपीडयन् ॥ मुखानि स्रोतसां रुध्वा तथैवाति विवृत्य वा ॥ सर्पन्नूर्ध्वमधस्तिर्यक् यथास्वं जनयेद्गदान् ॥ रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः ॥ प्रसेको मुखमाधुर्यं सदनं वन्हिदेहयोः ॥ स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणं ॥ मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः ॥ पाण्योरवेक्षा पादास्यशोफो ऽक्ष्णोरतिशुक्लता ॥ बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनं ॥ स्त्रीमद्यमांसप्रियता घृणित्वं मूर्द्धगुंठनं ॥ नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ॥ पतंगकृकलासाहिकपिश्वापदपक्षिभिः ॥ केशास्थितुषभस्मादिराशौ समधिरोहणं ॥ शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽभसः ॥ ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहां ॥ पीनसश्वासकासांसमूर्द्धस्वररुजोऽरुचिः ॥ ऊर्ध्वं विड्भ्रंशसंशोषावधश्छर्दिस्तु कोष्ठगे ॥ तिर्यक्स्थे पार्श्वरुग्दोषे संधिगे भवति ज्वरः ॥ रूपाण्येकादशैतानि जायंते राजयक्ष्मिणः ॥ तेषामुपद्रवान्विद्यात्कंठोध्वंसमुरोरुजं ॥ जृंभांगमर्दनिष्ठीववन्हिसादास्यपूतिताः ॥ तत्र वाताच्छिरःपार्श्वशूलमंसांगमर्दनं ॥ कंठोत्ध्वंसः स्वरभ्रंशः पित्तात्पादांसपाणिषु ॥ दाहोऽतिसारोऽसृक्छर्दिर्मुखगंधो ज्वरो मदः ॥ कफादरोचकश्छर्दिः कासो मूर्द्धांगगौरवं ॥ प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवन्हिता ॥ दोषैर्मंदानलत्वेन सोपलेपैः कफोल्बणैः ॥ स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ॥ कुर्वन्नगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥पच्यते कोष्ठएवान्नमन्नपक्तैव चास्य यत् ॥ प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये ॥ रसोऽप्यस्य न रक्ताय मांसाय कुतएव तु ॥ उपष्टब्धः स शकृता केव-

·१ अमत्रंपात्रं

लं वर्त्तते क्षयी ॥ लिंगेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमं ॥ वर्जयेत्साधयेदेवं सर्वेष्वपि ततोऽन्यथा ॥ दोषैर्व्यस्तैः समस्तैश्च क्षयात्षष्ठश्च मेदसा ॥ स्वरभेदो भवेत्तत्र क्षामो रूक्षश्चलः स्वरः ॥ शूकपूर्णाभकंठत्वं स्निग्धोष्णोपशयोऽनिलात् ॥ पित्तात्तालुगले दाहः शोषउक्तावसूयनं ॥ लिंपन्निव कफात्कंठं मंदः खुरखुरायते ॥ स्वरो विबद्धः सर्वैस्तु सर्वलिंगः क्षयात्कषेत् ॥ धूमायतीव चात्यर्थं मेदसा श्लेष्मलक्षणः ॥ कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरंत्यं च वर्जयेत् ॥ अरोचको भवेद्दोषैर्जिव्हाहृदयसंस्थितैः ॥ सन्निपातेन मनसः संतापेन च पंचमः ॥ कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ॥ सर्वोत्थे विरसं शोकक्रोधादिषु यथामलं ॥ छर्दिर्दोषैः पृथक् सर्वैर्द्विष्टैरर्थैश्च पंचमी ॥ उदानो विकृतो दोषान्सर्वानप्यूर्ध्वमस्यति ॥ तासूत्क्लेशास्यलावण्यप्रसेकारुच्ययोऽग्रगाः ॥ नाभिपृष्ठं रुजन्वायुः पार्श्वे चाहारमुत्क्षिपेत् ॥ ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ॥ शब्दोद्गार युतं कृष्णमच्छं कृच्छ्रेण वेगवत् ॥ कासास्यशोषहृन्मूर्द्धस्वरपीडाक्लमान्वितः ॥ पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकं ॥ सासृगम्लं कटूष्णं च तृण्मूर्च्छादाहतापवत् ॥ कफात्स्निग्धं घनं शीतं श्लेष्मतंतुगवाक्षितं ॥ मधुरं लवणं भूरिप्रसक्तं लोमहर्षणं ॥ मुखश्वयथुमाधुर्यतंद्राहृल्लासकासवत् ॥ सर्वलिंगा मलैः सर्वै रिष्टोक्ता या च तां त्यजेत् ॥ पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ॥ वातादीनेव विमृशेत्कृमितृष्णाऽऽमदौर्हृदे ॥ शूलवेपथुहृल्लासैर्विशेषात्कृमिजां वदेत् ॥ कृमिहृद्रोगलिंगैश्च स्मृताः पंचैव हृद्गदाः ॥ तेषां गुल्मनिदानोक्तैः समुत्थानैः समुद्भवः ॥ वातेन शूल्यते ऽत्यर्थं तुद्यते स्फुटतीव च ॥ भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ॥ अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥ वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ॥ पित्ता-

तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽम्लकः क्लमः ॥ छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ॥ श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥ कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः ॥ सर्वलिंगं त्रिभिर्दोषैः क्रमिभिः श्यावनेत्रता ॥ तमःप्रवेशो हृल्लासः शोषः कंडूः कफस्रुतिः हृदयं प्रततं चात्र क्रकचेनेव दीर्यते ॥ चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणं ॥ वातात्पित्तात्कफात्तृष्णा सन्निपाताद्रसक्षयात् ॥ षष्ठी स्यादुपसर्गाच्च वातपित्ते तु कारणं सर्वासु तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ॥ सर्वदेहभ्रमोत्कंपतापहृद्दाहमोहकृत् ॥जिव्हामूलगलक्लोमतालुतोयवहाः सिराः ॥ संशोष्य तृष्णा जायंते तासां सामान्यलक्षणं ॥ मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ॥ कंठौष्ठजिव्हाकार्कश्यं जिव्हानिष्क्रमणं क्लमः ॥ प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमयाः ॥ मारुतात्क्षामता दैन्यं शंखतोदः शिरोभ्रमः ॥ गंधाज्ञानास्यवैरस्य श्रुतिनिद्राबलक्षयाः ॥ शीतांबुपानाद्वृद्धिश्च पित्तान्मूर्च्छाऽऽस्यतिक्तता॥रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः ॥ कफो रुणद्धि कुपितस्तोयवाहिषु मारुतं ॥ स्रोतःसु सकफस्तेन पंकवच्छोष्यते ततः ॥ शूकैरिवाचितः कंठो निद्रा मधुरवक्त्रता ॥आध्मानं शिरसो जाड्यं स्तैमित्यछर्द्यरोचकाः॥आलस्यमविपाकश्च सर्वैः स्यात्सर्वलक्षणा ॥ आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ॥ उष्णाक्लांतस्य सहसा शीतांभो भजतस्तृषं ॥ ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात्पित्तजैव सा ॥ या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ॥ स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ॥ या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ ॥ इति राजयक्ष्मादिनिदानं नाम पंचमोऽध्यायः ॥ ५ ॥

---

१ स्नेहजेतिपाठः

अथातो मदात्ययादिनिदानं व्याख्यास्यामः ॥ तीक्ष्णोष्णरूक्ष सूक्ष्माम्लव्यवाय्याशुकरं लघु ॥ विकाषी विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ तीक्ष्णादयो विषेप्युक्ताश्चित्तोपप्लाविनो गुणाः ॥ जीवितांताय जायंते विषे तूत्कर्षवृत्तितः ॥ तीक्ष्णादिभिर्गुणैर्मद्यं मंदादीनोजसो गुणान् ॥ दशभिर्दश संक्षोभ्य चेतो नयति विक्रियां ॥ आद्ये मदे द्वितीये च प्रमादायतने स्थितः ॥ दुर्विकल्पहतो मूढः सुखमित्यधिमुह्यते ॥ मध्यमोत्तमयोः संधिं प्राप्य राजसतामसः ॥ निरंकुश इव व्यालो न किंचिन्नाचरेज्जडः ॥ इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदं ॥ एकोऽयं बहुमार्गाया दुर्गतेर्दैशिकः परं ॥ निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः ॥ मरणादपि पापात्मा गतः पापतरां दशां ॥ धर्माधर्मं सुखं दुःखमर्थानर्थं हिताहितं ॥ यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः ॥ सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ॥ अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनं ॥ नाति माद्यंति बलिनः कृताहारा महाशनाः ॥ स्निग्धाः सत्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ॥ मेदःकफाधिका मंदवातपित्ता दृढाग्नयः ॥ विपर्ययेऽति माद्यंति विस्रब्धाः कुपिताश्च ये ॥ मद्येन चाम्लरूक्षेण साजीर्णे बहुनाऽति वा ॥ वातात्पित्तात्कफात्सर्वैश्चत्वारः स्युर्मदात्ययाः॥ सर्वेऽपि सर्वैर्जायते व्यपदेशस्तु भूयसा॥ सामान्यं लक्षणं तेषां प्रमोहो हृदये व्यथा ॥ विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरो ऽरुचिः ॥ शिरः पार्श्वास्थिरुक्कंपो मर्मभेदस्त्रिकग्रहः ॥ उरोविबंधस्तिमिरं कासः श्वासः प्रजागरः ॥ स्वेदोऽतिमात्रं विष्टंभः श्वयथुश्चित्तविभ्रमः ॥ प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनं ॥ विशेषाज्जागरश्वासकंपमूर्द्धरुजो ऽनिलात् ॥ स्वप्ने भ्रमत्युत्पतति प्रेतैश्च-

सह भाषते ॥ पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ॥ देहो हरित-हारिद्रो रक्तनेत्रकपोलता ॥ श्लेष्मणा छर्दिहृल्लासनिद्रोदर्दांगगौरवं ॥ सर्वजे सर्वलिंगत्वं मुक्त्वा मद्यं पिबेत्तु यः ॥ सहसा ऽनुचितं चान्यत्तस्य ध्वंसकविक्षयौ ॥ भवेतां मारुतात्कष्टौ दुर्बलस्य विशेषतः ॥ ध्वंसके श्लेष्मनिष्ठीवः कंठशोषोऽतिनिद्रता ॥ शब्दासहत्वं तंद्रा च विक्षयेंऽगशिरोतिरुक् ॥ हृत्कंठरोगः संमोहः कासतृष्णावमिज्वराः ॥ निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥ विकारैः स्पृश्यते[1] तेन न स शारीरमानसैः ॥ रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ॥ मदमूर्च्छायसन्यासा यथोत्तरबलोत्तराः ॥ मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ॥ सक्तानल्पद्रुताभाषश्चलस्खलितचेष्टितः ॥ रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ॥ पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ स्वल्पसंबद्धवाक् पांडुः कफाद्ध्यानपरोऽलसः ॥ सर्वात्मा सन्निपातेन रक्तात्स्तब्धांगदृष्टिता ॥ पित्तलिंगं च मद्येन विकृतेहास्वरांगता॥ विषे कंपोऽति निद्रा च सर्वेभ्योऽभ्यधिकस्तु सः॥लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु ॥ अरुणं नीलकृष्णं वा खं पश्यन्प्रविशेत्तमः॥शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः॥कार्श्यं श्यावाऽरुणा छाया मूर्च्छाये मारुतात्मके॥पित्तेन रक्तं पीतं वा नभः पश्यन्विशेत्तमः ॥ विबुध्येत च सस्वेदो दाहतृट्तापपीडितः॥भिन्नविट् पीतनीलाभो रक्तपीताकुलेक्षणः ॥ कफेन मेघसंकाशं पश्यन्नाकाशमाविशेत् ॥ तमश्चिराच्च बुध्येत सहृल्लासः प्रसेकवान् ॥ गुरुभिः स्तिमितैरंगैरार्द्रचर्मावनद्धवत् ॥ सर्वाकृतिस्त्रिभिर्दोषैरपस्मारइवापरः ॥ पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ दोषेषु मदमूर्च्छायाः गतवेगेषु देहिनां ॥ स्वयमेवोपशाम्यंति सन्यासो नौषधैर्विना ॥ वा-

[1] स्पृश्यते जातु नेतिपाठः

ग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ॥ संन्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ कुर्वंति तेन पुरुषः काष्ठीभूतो मृतोपमः ॥ म्रियेत शीघ्रं शीघ्रं चेन्न चिकित्सा प्रयुज्यते ॥ अगाधे ग्राहबहुले सलिलौघइवानटे ॥ सन्यासे विनिमज्जंतं नरमाशु निवर्तयेत् ॥

॥ इति मदात्ययादिनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥

अथातोऽर्शोनिदानं व्याख्यास्यामः ॥ अरिवद्विशसंतीत्यर्शांसि ॥ तानि पुनः सुबहुप्रकाराणि सुबहूपद्रवाणि च पायुमेंढ्रादिसंश्रया मांसकीलाः ॥ समासतस्तु द्विविधान्यर्शांसि सहजानि जन्मोत्तरकालजानि च ॥ पुनश्च द्विविधानि शुष्काण्यार्द्राणि च ॥ सर्वेषां पुनरधिष्ठानं मेदोमांसत्वक्स्थूलांत्रप्रतिबद्धोऽर्द्धपंचांगुलो गुदः ॥ तस्मिन्पूर्वमुक्ता वलीसंज्ञास्तिस्रः पेश्योऽध्यर्द्धांगुलाः ॥ ताः प्रवाहिणी विसर्जनी संवरणी च ॥ रोमांतेभ्योऽध्यर्द्धयवं गुदौष्ठमाहुः ॥ प्रथमा तु गुदौष्ठादंगुलमात्रे ॥ तत्र सहजानां गुदवलीबीजोपतसिशायतनं ॥ तस्यां द्विविधो हेतुर्मातापित्रोरपचारो दैवं च ॥ ताभ्यां सन्निपातप्रकोपः ॥ तस्मात्तान्यसाध्यानि ॥ एतेन कुलजाः सर्वे विकारा व्याख्याताः ॥ विशेषतस्तु सहजानि दुर्दर्शनपरुषपांडूपचितदारुणान्यंतर्मुखानि बहुबलवदुपद्रवोपद्रुतानि च भवंति ॥ अथेतराणि षड्विधानि पृथग्दोषैः संसृष्टैः सन्निपतितैः शोणितेन च ॥ तत्र वातश्लेष्मोत्तराणि शुष्काणि रक्तपित्तोत्तराण्यार्द्राणीति ॥ दोषप्रकोपहेतुस्तु प्रागुक्तः ॥ स हि यदा मलोपचयमादधाति पुनश्चोत्कटकविषमकठिनासनसेवनादुद्भ्रांतयानोष्ट्रादिप्रयाणादतिव्यवायाद्बस्तिनेत्रासम्यक्प्रणिधानादिना गुदक्षणनादभीक्ष्णं शीतांबुसंस्पर्शाच्चैललोष्ठतृणादिसंघर्षात्प्रततातिनिर्वाहणाद्वातमूत्रपुरीषवेगोदीरणादुदीर्णवेगविधारणात्स्त्रीणां चामगर्भभ्रंशाद्गर्भोत्पीडनाद्विषमप्रसूतेरेवंविधैश्चापरैः प्रकुपितो वायुरपानस्थं मलमुपचितमधोगमा-

साद्य गुदवलीष्वाधत्ते ततस्तास्वभिषण्णास्वर्शांसि संभवंति ॥ तेषांपूर्व-रूपाणि कृच्छ्रात्पक्तिरंत्रकूजनमुद्गारबाहुल्यमम्लकोऽन्नाश्रद्धा वि-ष्टंभोऽश्मगर्भाभनाभित्वमाटोपोऽधस्तात्कृच्छ्रेण सशब्दं वायोः प्रवृत्ति-र्बहुमूत्रत्वमल्पपुरीषता गुदपरिकर्तः सक्थिसदनमक्ष्णोः श्वयथुरवि-मलेंद्रियत्वमालस्यं तंद्रा कार्श्यं दौर्बल्यमाशंका ग्रहणीदोषशोषो-दरपांडुरोगगुल्मेषु ॥ जातेषु चैतानि लिंगानि प्रव्यक्ततराणि भवं-ति ॥ तैः खल्वधोमार्गोपरोधाद्वायुरपानो निवर्त्तमानः समानव्यानो-दानप्राणान् पित्तश्लेष्माणौ च प्रकोपयन्ननलमुपमृद्गाति ॥ अथ सर्वएवार्शसो भवत्यतिकृशो विवर्णः क्षामो दीनः प्रचुरविबद्धवातमू-त्रपुरीषोऽश्मरीशर्करावाननियतविबद्धमुक्तामपक्वविभिन्नशुष्कवर्चा-स्तथांऽतरांतराऽऽमश्वेतपांडुहरितपीतरक्तारुणतनुसांद्रपिच्छिलोपवे-शी नाभिवंक्षणोद्देशप्रचुरपरिकर्तिकान्वितः सगुदशूलप्रवाहिकापरिह-र्षप्रमोहोऽल्पशुक्रप्रजोऽल्पभुक् शिरासंततगात्रः क्रोधनो दुरुपचारः कासश्वासतृष्णापीनसारोचकपाणिपादवदनाक्षिकूटश्वयथुक्षवथुवेप-थुवमथुपरीतस्तैमिरिकः शिरःशूली क्षामभिन्नस्वरः कर्णरोगी स-ज्वरः सांगमर्दः सर्वपर्वास्थिशूलोंऽतरांतरा हृदयकुक्षिपार्श्वपृष्ठब-स्तित्रिकग्रहोपतप्तः प्रध्यानपरः परमलसश्च ॥ तत्र वातोल्बणानि शुष्कम्लानकठिनपरुषरूक्षश्यावारुणानि तीक्ष्णस्फुटितमुखानि वि-षममध्यानि कदंबपुष्पतुंडिकेरिकाकर्कंधूसिद्धार्थकबिंबीखर्जूरफल-प्रमाणानि वक्राणि मिथो विसदृशानि कटीपार्श्वादिष्वधिकवेदनानि सशूलोदावर्त्तकराणि गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्ये-व कृष्णत्वङ्नखनयनवदनमलाश्च भवंति ॥ पित्तोल्बणानि नीलाग्राणि रक्तापीतकृष्णानि मृदुशिथिलानि स्पर्शासहानि विस्रगंधीनि तनूनि तनुरक्तस्राविणि दाहपाकवंति ज्वरमोहारुचिकराणि यकृत्प्रकाशानि

१ अभिषण्णासु प्रक्लिन्नासु

शुकजिह्वाजलौकोवक्त्रसदृशानि यवमध्यानि प्रक्लिन्नानि भिन्नपीतवर्चांसि हारिद्रत्वङ्नखादिकराणि च ॥ श्लेष्मोल्बणानि महामूलानि स्थिरस्निग्धपांडुवृत्तोपचितानि गुरुस्तब्धश्लक्ष्णपिच्छिलानि सुप्रसुप्तानि स्पर्शक्षमाणि करीरपनसास्थिगोस्तनाकाराण्यतिमात्रोत्थानप्रवाहिकावंक्षणानाहनाभिपरिकर्त्तिकाहृल्लासप्रसेककासश्वासपीनसारुचिच्छर्दिकृच्छ्रमूत्रप्रमेहशीतज्वरशोफशिरोगौरवेंद्रियोपलेपाग्नि - मार्दवक्लैब्यामविकारप्रबलानि न भिद्यंते न स्रवंति कंडूबहुलानि सश्लेष्मवसाप्रकाशमलोपवेशीनि शुक्लत्वङ्नखादिकराणि च ॥ लक्षणसंकरात्संसर्गसन्निपातजानि विभजेत् ॥ रक्तोल्बणानि तु वटप्ररोहविद्रुमकाकणंतिकाभानि[1] पित्तवल्लक्षणानि च तथा गाढपुरीषप्रतिपीडितान्यत्यर्थं दुष्टमुष्णमसृक् सहसा विसृजंति ॥ तस्यातिप्रवृत्तौ रक्तक्षयोपद्रवा[2] भवंतीति ॥ भवति चात्र ॥ मुद्गकोद्रवजूर्णाव्हकरीरचणकादिभिः ॥ रूक्षैः संग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥ अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ पुरीषं वातविण्मूत्रसंगं कुर्वीत दारुणं ॥ तेन तीव्ररुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ॥ आध्मानमुदरावेष्टो हृल्लासः परिकर्तनं ॥ बस्तौ च सुतरां शूलं गंडश्वयथुसंभवः ॥ पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः॥ हृद्रोगग्रहणीदोषमूत्रसंगप्रवाहिकाः ॥ बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः ॥ ते ते च वातजा रोगा जायंते भृशदारुणाः ॥ दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ॥ वाताभिभूतकोष्ठानां तैर्विनाऽपि स जायते ॥ सहजानि त्रिदोषाणि यानि चाभ्यंतरे वलौ ॥ जायंतेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥ द्वंद्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥

---

१ काकणंतिका गुंजा  २ रक्तेऽम्लशिशिरप्रीतिसिराशैथिल्यरूक्षताइति रक्तक्षयजा विकाराः ॥

कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च॥अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ मेंढ्रादिष्वपि वक्ष्यंते यथास्वं नाभिजानि तु ॥ गंडूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ व्यानो गृहीत्वा श्लेष्माणं करोत्य र्शस्त्वचो बहिः ॥ कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ वातेन तोदः पारुष्यं पित्तादसितरक्तता ॥ श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ॥ तान्याशु हि गुदं बध्वा कुर्युर्बद्धगुदोदरं ॥ ॥ इत्यर्शोनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

अथातोऽतीसारग्रहणीरोगनिदानं व्याख्यास्यामः ॥ दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ॥ अतीसारः स सुतरां जायते ऽत्यंबुपानतः ॥ कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ॥ मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥ विस्रंसयत्यधो धातून्हत्वा तेनैव चानलं ॥ व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ॥ प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः ॥ तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ॥ आध्यानमविपाकश्च तत्र वातेन विज्जलं ॥ अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ॥ रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः ॥ तथा दग्धगुडाभासं सपिच्छापरिकर्त्तिकं ॥ शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्ठनन् ॥ पित्तेन पीतमसितं हारिद्रं शाद्वलप्रभं ॥ सरक्तमतिदुर्गंधं तृण्मूर्च्छास्वेददाहवान् ॥ सशूलं पायुसंतापपाकवान् श्लेष्मणा घनं ॥ पिच्छिलं तंतुमच्छ्वेतं स्निग्धमामं कफान्वितं ॥ अभीक्ष्णं गुरु दुर्गंधं विबद्धमनुबद्धरुक् ॥ निद्रालुरलसोऽन्नद्विडल्पाल्पं सप्रवाहिकं ॥ सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुरूदरः ॥ कृतेऽप्यकृतसंज्ञश्च सर्वात्मा सर्वलक्षणः ॥ भयेन क्षोभिते चित्ते सपित्तो द्रा-

वयेच्छकृत् ॥ वायुस्ततोऽतिसार्येत क्षिप्रमुष्णं द्रवं प्लवं ॥ वातपित्तसमं लिंगैराहुस्तद्वच्च शोकतः ॥ अतिसारः समासेन द्विधा सामो निरामकः ॥ सासृङ्निरस्रस्तत्राऽद्ये गौरवादप्सु मज्जति ॥ शकृद्दुर्गंधमाटोपविष्टंभार्तिप्रसेकिनः ॥ विपरीतो निरामस्तु कफात्पक्केऽपि मज्जति ॥ अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ॥ तस्य स्यादग्निविध्वंसकरैरन्यस्य[1] सेवितैः ॥ सामं शकृन्निरामं वा जीर्णे येनातिसार्यते ॥ सोऽतिसारोऽतिसरणादाशुकारी स्वभावतः ॥ सामं सान्नमजीर्णेऽन्ने जीर्णे पक्कं च नैव वा ॥ अकस्माद्वा मुहुर्बद्धमकस्माच्छिथिलं मुहुः ॥ चिरकृद्ग्रहणीदोषः संचयाच्चोपवेशयेत् ॥ स चतुर्द्धा पृथक्दोषैः सन्निपाताच्च जायते ॥ प्राग्रूपं तस्य सदनं चिरात्पचनमम्लकः॥प्रसेको वक्त्रवैरस्यमरुचिस्तृड्भ्रमौ क्लमः ॥ आनद्धोदरता छर्दिः कर्णक्ष्वेडांत्रकूजनं ॥ सामान्यलक्षणं कार्श्यं धूमकस्तमको ज्वरः ॥ मूर्च्छाशिरोरुग्विष्टंभः श्वयथुः करपादयोः ॥ तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ॥ पार्श्वोरुवंक्षणग्रीवारुजाऽभीक्ष्णं विसूचिका ॥ रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकर्तिका ॥ जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ वातहृद्रोगगुल्मार्शःप्लीहपांडुत्वशंकितः ॥ चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ पुनः पुनः सृजेद्वर्चः पायुरुक्श्वासकासवान् ॥ पित्तेन नीलं पीताभं पीताभः सृजति द्रवं ॥ पूत्यम्लोद्गारहृत्कंठदाहारुचितृडर्दितः ॥ श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥ आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ॥ हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु॥उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणं॥ भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्त्तनं॥ अकृशस्यापि दौर्बल्यं सर्वजे स-

---

[1] अन्यस्य अनतिसारिणोऽपि अग्निविध्वंसकरैर्वह्निमांद्यहेतुभिरन्नपानैः शीलितै र्ग्रहणीरोगः स्यात् ॥

र्वसंकरः ॥ सिराविभागे ये चोक्ता विषमाद्यास्त्रयो ऽग्नयः ॥ तेऽपि स्युर्ग्रहणीदोषाः समस्तु स्वास्थ्यकारणं ॥ वातव्याध्यश्मरीकुष्ठमेहो-दरभगंदराः ॥ अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ॥ इत्य-तीसारग्रहणीनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥

अथातो मूत्राघातनिदानं व्याख्यास्यामः ॥ विंशतिर्मूत्राघाता भवंति॥ तद्यथा ॥ वातपित्तकफसन्निपातकृच्छ्राणि वातपित्तश्लेष्म-शुक्राश्मर्यो वातबस्त्यष्ठीलाकुंडलिकामूत्रातीतजठरोत्संगग्रंथिशुक्र-विड्घातोष्णवातमूत्रक्षयावसादाश्चेति ॥ तत्र वातबस्त्यादयो नव वा-तोल्बणाः ॥ ततो द्वौ वातपित्तोल्बणौ ॥ अंत्यः कफपित्तोल्बणः ॥ सर्वेषां पुनर्मूत्ररोगाणामधिष्ठानं बस्तिः ॥ स मर्मस्वभिहितः प्राक् ॥ स चाधोमुखोऽपि मूत्रवहनाडीषु सूक्ष्ममुखसहस्रनिस्यंदेन मूत्राख्ये-नाविरतं नवो घटइवाप्सु निमग्नमुखोऽपि पार्श्वेभ्योऽम्भसा पूर्यते तैरेव च स्रोतोभिर्वातादयोऽपि दुष्टाः प्रविश्य बस्तिं यथास्वमाघाता-न्प्रमेहांश्च जनयंति ॥ तत्राल्पशो मुहुर्मुहुर्बस्तिमेढ्रवंक्षणेषु तीव्रशूलः कृच्छ्रान्मूत्रयति वातकृच्छ्रे ॥ सदाहं सरुजं पीतं कृष्णं रक्तं वा पित्त कृच्छ्रे ॥ बस्तिमेढ्रयोर्गौरवं शोफो मूत्रं च सपिच्छं मेहति कफकृ-च्छ्रे ॥ सर्वलक्षणः सन्निपातकृच्छ्रे॥ स च कृच्छ्रतमः॥यदा तु वायुर्ब-स्तिमुखमावृत्य सपित्तं सकफं सशुक्रं वा मूत्रं परिशोषयति तदा क्रमेण गोरिव पित्ताद्गोरोचना मणिकस्येव स्वच्छादपि जलात्सपंक-ताऽश्मर्यभिनिर्वर्त्तते ॥ सर्वा च सा श्लेष्माश्रया ॥ अथास्याः पूर्व-रूपाणि ज्वरो बस्त्याध्मानमरुचिर्मूत्रकृच्छ्रं बस्तिशिरोमुष्कशेफसां वेदना बस्तगंधित्वं मूत्रस्येति ॥ सामान्यलिंगानि तु नाभिबस्तिसेव-नीषु मेहतो तथा मार्गनिरोधने वेदना मूत्रधारासंगस्तद्व्यपाये च गो-मेदकप्रकाशमनाविलमसिकतं सुखं मूत्रं विसृजति ॥ तत्संक्षोभणाच्च

सरुधिरं ॥ धावनलंघनादिभिश्चास्य विविधा वेदना भवंति ॥ यथैव पक्वाशयात्स्रस्तेन शकृताऽधिष्ठिते बस्तौ मूत्रं न प्रवर्तते तथाऽश्मर्यापि ॥ तत्र वायुना बस्तिसेवनीमेहनेषु तीव्रवेदनार्दितो दंतान् खादति नाभिं पीडयति मेंढ्रं मृद्नाति मुहुर्मुहुर्वेपथुमान् कृच्छ्रात्सवातं शकृद्विमुंचति विशीर्णधारं च मूत्रयत्यश्मरी चास्य श्यावा परुषा विषमा कदंबपुष्पवत्कंटकाचिता भवति ॥ पित्तेन पच्यमान इव दह्यते बस्तिः ॥ अश्मरी च सरक्ता पीतावभासकृष्णा भल्लातकास्थिसंस्थाना ॥ श्लेष्मणा भिद्यते निस्तुद्यतइव गुरुः शीतश्च बस्तिरश्मरी च श्वेता महती कुक्कुटांडप्रतिमा मधुवर्णा वा भवति ॥ प्रायेणैतास्तिस्रोऽश्मर्यो बालानां जायंते तेषामेव चाल्पबस्तित्वादल्पमांसोपचयत्वाच्च सुखग्रहणाहरणाः ॥ महतां तु शुक्राश्मरी शुक्रनिमित्ता भवति ॥ मैथुनविघाताच्छुक्रमुपस्थितमनिरस्यमानं विमार्गगमनिलो विगृह्य वृषणयोरंतरे संहरति संहृत्योपशोषयति ततः शुष्कमश्मरी भवति ॥सा शुक्रमार्गमावृणोति मूत्रकृच्छ्रं बस्तिवेदनां वृषणयोश्च श्वयथुमुत्पादयति उत्पन्नमात्रायां च शुक्रं निरेति ॥पीडितमात्रे च तस्मिन्नवकाशे विलीयतइति ॥ अश्मर्येव तु वायुनाऽणुशो विभिन्ना शर्करेत्युच्यते ॥अनुलोमे च मारुते सा सिकतेव मूत्रेण सह च्यवते ॥ वायुस्तु मूत्रवेगरोधाद्बस्तिमुखमावृणोति ततो मूत्रसंगं वेदनां कंडूं च करोति॥कदाचिच्च बस्तिं स्वस्थानात्प्रच्याव्य गर्भमिवोद्वृतं स्थूलं परिप्लुतं च कुरुते तत्र च शूलस्पंदनदाहोद्वेष्टनानि बिंदुशश्च मूत्रस्रवणं पीडिते च बस्तौ धारया प्रवृत्तिः॥अयं द्विविधोऽपि वातबस्तिः कृच्छ्रसाध्यः॥तयोरपि द्वितीयोऽनिलप्रबलः कृच्छ्रसाध्यतरः॥बस्तिविण्मार्गांतरे वायुर्घनोन्नतं तीव्ररुजमचलमष्ठीलाभं ग्रंथिं करोति तेनानिलविण्मूत्रसंगो भवत्याध्मानं च सा वाताष्ठीला ॥ विगुणो वायुर्बस्तौ कुंडलीभूतस्तीव्रशूलस्तंभगौरवान्वितो मूत्रमाविश्याल्पशो वा प्रवर्त्तयन् भ्रम-

ति सा वातकुंडलिका॥मूत्रमतिवेलं विधार्य विमुच्यमानं न प्रवर्त्तते वाहमानस्य तु कृच्छ्रादल्पं प्रवर्त्तते तन्मूत्रातीतं॥मूत्ररोधादपानो वायुर्नाभेरधस्तात्तीव्ररुजमाध्मानं मलसंगं च कुर्वन्नुदरमभिपूरयेत्तन्मूत्रजठरं॥मारुतेनाक्षिप्तं छिद्रवैगुण्येन वा मूत्रयतो मूत्रमल्पं बस्तौ नाले मणौ वा स्थित्वा तच्छेषगुरुमेढ्रस्य सरुजमरुजं वा शनैःस्रवेत्स मूत्रोत्संगः॥ बस्तिद्वारेऽल्पो वृत्तः शीघ्रसंभवोऽश्मरीतुल्यलिंगो मूत्रग्रंथिः ॥ मूत्रितस्य व्यवायगमनाद्वातोद्धतं स्वस्थानाच्युतं शुक्रं मेहतो मूत्रस्य प्राक् पश्चाद्वा भस्मोदकसंकाशं प्रवर्त्तते तन्मूत्रशुक्रं ॥ वायुना पीडितं शकृन्मूत्रस्रोतः प्रपद्यते ततो विड्गंधि विट्संसृष्टं च कृच्छ्रान्मूत्रयति स विड्वातः ॥ अत्यध्वाऽऽतपोष्णभोजनादिभिः पित्तं प्रवृद्धमनिलेरितं बस्तिमेढ्रं गुददाहं कुर्वन्बस्तिहारिद्ररक्तं सरक्तं वा मूत्रं कृच्छ्रात्प्रवर्त्तयेत्स तूष्णवातः॥ वातपित्तं बस्तिमाश्रित्य मूत्रं सशूलदाहं क्षपयति स मूत्रक्षयः ॥ पित्तं श्लेष्मोभयमपि वा वातेन बस्तौ मूत्रं संहन्यते ततो मूत्रं सदाहं रक्तं पीतं श्वेतं सांद्रं कृच्छ्रात्प्रवृत्ति शुष्कं च शंखरोचनान्यतरचूर्णवर्णं सर्ववर्णयुक्तं वा भवति स मूत्रावसादः ॥ इति विस्तरतः प्रोक्ता रोगा मूत्रावसादजाः॥ निदानलक्षणैरूर्ध्वं वक्ष्यंतेऽतिप्रवृत्तिजाः ॥ इति मूत्राघातनिदानं नाम नवमोऽध्यायः ॥ ९ ॥

अथातः प्रमेहनिदानं व्याख्यास्यामः ॥ विंशतिः प्रमेहा भवंति ॥ कफादुदकेक्षुसांद्रसुरापिष्टशुक्रसिकताशीतशनैर्लालाप्रमेहा दश ॥ पित्तात्क्षारकालनीलहारिद्रमांजिष्ठशोणितमेहाः षट्॥ वाताद्वसामज्जहस्तिमधुमेहाश्चत्वारइति ॥ तेषां च यत्किंचिदाहारविहारजातं श्लेष्ममेदोमूत्रजननं स हेतुः ॥ तत्र वातपित्तमेदःक्लेदमांसशुक्ररसैरन्वितो बस्तिगतः श्लेष्मा प्रमेहान् जनयति॥ तैः कफशोणिताभ्यां च युक्तं पित्तं ॥ तैर्वसालसीकामज्जौजोभिश्च वायुः ॥ त्रयाणामपि दोषाणां श्लेष्मा प्रमेहेषु प्रायः प्राक् प्रकोपमापद्यते श्लेष्माधिष्ठानत्वान्मूत्रस्य

तद्वृद्धेश्च मेदएव तेन प्रथमं दूष्यतेऽत्यंतसहामत्वात् ॥ तदनंतरं क्लेदादयः ॥ ततः श्लेष्मादिक्षये पित्तं प्रबलीभवच्छोणितमपिदूषयति ॥ तत्क्षयेऽपि वायूरसादीन्धातून् शरीरस्य परस्परं सारभूतानवस्तिमाकृष्य मूत्रेण सह विसृजति ॥ तस्मात्कफपित्तवातजाः क्रमेण साध्ययाप्यासाध्याः ॥ तथा पित्तजाः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्च ॥ वातजाः पुनः क्षीणेषु धातुषु महात्ययिकतया विरुद्धोपक्रमत्वाच्च॥ मेदसि तु नातिदुष्टे पित्तजा अपि साध्यतां गच्छेयुः॥ धातुसंपर्कात्पुनः सर्वमेहेषु मूत्रमाविलं भूरि च भवति ॥ दोषदूष्याणां चोत्कृष्टापकृष्टसंयोगेन मूत्रवर्णरसस्पर्शगंधविशेषाद्वर्णानामिव शुक्लकृष्णादीनां शबलकल्माषादयः प्रमेहाणां भेदा भवंति ॥ तेषां पूर्वरूपाण्यतिवृद्धिर्नखानां जटिलीभावश्च केशानां माधुर्यमास्यस्य तालुकंठशोषः पिपासा मलाधिक्यं बहिःकाये कायछिद्रेषु च शीतेच्छा स्नेहः स्वेदः सुप्तता चांगेषु पाणिपाददाहोऽतिमाधुर्यात्पिपीलिकोपसर्पणं विस्रगंधता च मूत्रशरीरयोः शुक्लता च मूत्रे श्वासो निद्रा तंद्रालस्याप्रहर्षाश्च ॥ तत्र शीतं श्वेतमगंधमच्छमुदकमिवोदकमेही मेहति ॥ इक्षुरसमिवातिमधुरं शीतमीषत्पिच्छिलाविलमिक्षुमेही ॥ पर्युषितं सांद्रीभवत्सांद्रमेही ॥ सुरातुल्यमुपरिप्रसन्नमधः सांद्रं सुरामेही ॥ हृष्टरोमा पिष्टमिव सांद्रसितं च पिष्टमेही ॥ शुक्राभं शुक्रमिश्रं वा शुक्रमेही ॥ सरुजं ससिकतमिव सिकतामेही ॥ मधुरमतिशीतं शीतमेही ॥ मंदं शनैः शनैः शनैर्मेही ॥ पिच्छिलं तंतुबद्धमिव लालावल्लालामेही ॥ वर्णगंधरसस्पर्शैस्तु क्षारोपमं क्षारमेही ॥ उष्णं मषीकालं कालमेही ॥ सफेनमच्छमम्लं चाषपक्षनीलं नीलमेही ॥ कटुकं सदाहं हरिद्राप्लुतमिव हारिद्रमेही ॥ विस्रं मंजिष्ठोदकवर्णं मंजिष्ठमेही ॥ विस्रमुष्णं लवणं शोणितसंकाशं शो-

---

१ वायुर्वसादीनितिपाठः २ पर्युषितं रात्रिस्थितं घनीभवेत ॥

जिनमेही ॥ वसामिश्रं वसां वा वसामेही ॥ मज्जामिश्रं मज्जानं वा मज्जमेही ॥ सलसीकं मधुरमवेगं लसीकयैव च विबद्धमनुबद्धमजस्रं मत्तइव हस्ती स्रवति हस्तिमेही ॥ सफेनमच्छमोजःस्निग्धमधुरं तद्रौक्ष्याद्वायुः कषायत्वेनोपसृजति तेन कषायमधुरोपेतं मध्विव मेहति मधुमेही ॥ स तु द्विधा कैश्चिदिष्यते ॥ धातुक्षयेणानिलप्रकोपाद्दोषावरणेन वा ॥ तदावृतो हि वायुराहारप्रसादमादाय मुहुर्मुहुरनिमित्तं दोषलिंगानि वृद्धिक्षयौ चाविर्भावयत्कृच्छ्रसाध्यं मधुमेहं प्रवर्त्तयति ॥ सर्वएव चोपेक्ष्यमाणा मधुमेहत्वमायांति ॥ तस्मात्सर्वेऽपि मधुमेहशब्देनोच्यंते यतश्च सर्वेष्वपि प्राङ्मध्विव मधुरं मेहति मधुरश्चास्य देहो भवतीति ॥ तत्र प्रतिश्यायः शरीरशैथिल्यमरोचकाविपाकौ प्रसेकश्छर्दिर्निद्रा कासश्च श्लेष्मजानामुपद्रवा भवंति ॥ वृषणावदरणं बस्तिमेढ्रतोदोऽम्लिका पिपासा ज्वरो दाहो मूर्च्छाऽतीसारः पांडुरोगश्च पित्तजानां ॥ हृद्ग्रहो लौल्यमनिद्रता कंपः शूलं बद्धपुरीषत्वं शोषः कासः श्वासश्च वातजानां ॥ अथैवमस्य मेदःक्लेदादिभिरभिष्यन्नदेहस्य दोषैरनुगतधातोः प्रमेहाभिवृद्धौ मांसलेष्ववकाशेषु संधिषु मर्मसु च प्रदेशविशेषाश्रयात्प्राणापहारिण्यो भूयः कष्टतमोपद्रवा दश पिटिका जायंते सुतरां चाधःकाये ॥ तदभिमुखा हि प्रमेहिणां दोषाः ॥ तद्यथा ॥ शराविका कच्छपिका जालिनी पुत्रिणी विदारिका सर्षपिका मसूरिका ऽलजी विनता विद्रधिश्च ॥तत्र श्यावा क्लेदवेदनायुक्ता निम्नमध्योन्नतौष्ठा शरावसंस्थानप्रमाणा शराविका॥महामूला ऽवगाढार्तितोदा श्लक्ष्णा कच्छपपृष्ठनिभा कच्छपिका॥ महाशया ऽतितोदा स्तब्धा स्निग्धस्राविणी सूक्ष्मच्छिद्रा मांससिराजालावृता जालिनी ॥ महती पिडिकाभिरल्पाभिराचिता पुत्रिणी ॥ कठिना विदारिकंदवद्वृत्ता विदारिका ॥ शीघ्रपाका महावेदना सर्षपाकृतिप्रमाणा तद्विधाभिश्च पि-

ड्डिकाभिश्चिता सर्षपिका ॥ मसूराकारप्रमाणा मसूरिका ॥ त्वचमुत्थानादिव दहति स्फोटैरावृता विसर्पति रक्तकृष्णा तृण्मोहज्वरकरी दाहभूयिष्ठाऽतिकष्टा चालजी ॥महती नीलाऽवगाढरुक्क्लेदा पृष्ठोदरान्यतराधिष्ठाना विनता विनता॥ विद्रधिस्तु वक्ष्यते पृथगेव ॥तासामाद्याः पंचातिबलश्लेष्ममेदःसंभवेन मूलव्याध्येकरूपत्वात्तद्वृद्धिकारित्या दुःसाध्याः ॥ न त्वितराः पित्तोल्बणतयाऽल्पकफमेदोभवात्॥ प्रमेहवशाच्च पिडकासु यथास्वं दोषोद्रेको भवतीति ॥ भवति चात्र ॥ प्रमेहेण विनाऽप्येता जायंते दुष्टमेदसः ॥ तावच्च नोपलक्ष्यंते यावद्वस्तुपरिग्रहः ॥ हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितं ॥ यो मूत्रयेन्न तं मेहं रक्तपित्तं च तद्विदुः ॥ दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्विविधो विचारः ॥ संपूरणाद्वा कफसंभवः स्यात्क्षीणेषु दोषेष्वनिलात्मको वा ॥ सपूर्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः ॥ साध्या न ते पित्तकृतास्तु याप्याः साध्यास्तु मेदो यदि नातिदुष्टं ॥
॥ इति प्रमेहनिदानं नाम दशमोऽध्यायः ॥ १० ॥

अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः ॥ भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः ॥ जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ दुष्टत्वङ्मांसमेदोस्थिस्नावासृक्कंडराश्रयः ॥ यः शोफो बहिरंतर्वा महामूलो महारुजः ॥ वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः ॥ दोषैः पृथक् समुदितैः शोणितेन क्षतेन च ॥ बाह्योऽत्र तत्र तत्रांगे दारुणो ग्रथितोन्नतः ॥ आंतरो दारुणतरो गंभीरो गुल्मवद्घनः ॥ वल्मीकवत्समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत् ॥ नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवंक्षणे ॥स्याद्वृक्कयोरपाने च वातात्तत्रातितीव्ररुक् ॥ श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः ॥ व्यधच्छेदभ्रमानाहस्यंदसर्पणशब्दवान् ॥ रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान्॥ क्षिप्रोत्थानप्रपाकश्च पांडुः कंडूयुतः कफात् ॥ सोत्क्लेशशी-

तकस्तंभजृंभारोचकगौरवाः ॥ चिरोत्थानविदाहश्च संकीर्णः सन्निपा-
ततः ॥ सामर्थ्याच्चात्र विभजेद्बाह्याभ्यंतरलक्षणं ॥ कृष्णस्फोटावृतः
श्यावस्तीव्रदाहरुजाज्वरः॥पित्तलिंगोऽसृजा बाह्यः स्त्रीणामेव तथांऽ-
तरः ॥ शस्त्राद्यैरभिघातेन क्षते वाऽपथ्यकारिणः ॥ क्षतोष्मा वायु-
विक्षिप्तः सरक्तं पित्तमीरयन् ॥ पित्तासृग्लक्षणं कुर्याद्विद्रधिं भू-
र्युपद्रवं ॥ तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ नाभ्यां हिध्मा भ-
वेद्बस्तौ मूत्रकृच्छ्रेण पूति च ॥ श्वासो यकृति रोधस्तु प्लीन्म्युच्छ्वा-
सस्य तृट् पुनः ॥ गलग्रहश्च क्लोम्नि स्यात्सर्वांगप्रग्रहो हृदि ॥ प्रमो-
हस्तमकः कासो हृदयोद्घट्टनं व्यथा ॥ कुक्षिपार्श्वांतरांसार्तिः कु-
क्षावाटोपजन्म च ॥ सक्थ्नोर्ग्रहो वंक्षणयोर्वृक्कयोः कटिपृष्ठयोः ॥
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनं ॥ आमपक्वविदग्धत्वं तेषां
शोफवदादिशेत् ॥ नाभेरूर्ध्वं मुखात्पक्वाः प्रस्रवंत्यधरे गुदात्॥ उभा-
भ्यां नाभिजो विद्याद्दोषं क्लेदाच्च विद्रधौ ॥ यथास्वं व्रणवत्तत्र वि-
वर्ज्यः सन्निपातजः ॥ पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽतर्बहिरेव वा॥
पक्वश्चांतः स्रवन् वक्त्रात्क्षीणस्योपद्रवान्वितः ॥ एवमेव स्तनसिरा
विवृताः प्राप्य योषितां ॥ सूतानां गर्भिणीनां वा संभवेच्छ्वयथुर्घनः
॥ स्तने सदुग्धे ऽदुग्धे वा बाह्यविद्रधिलक्षणः ॥ नाडीनां सूक्ष्म-
वक्त्रत्वात्कन्यानां तु न जायते ॥ क्रुद्धो रुद्धगतिर्वायुः शोफशू-
लकरश्चरन् ॥ मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः ॥
प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ दोषास्रमेदोमूत्रांत्रैः
स वृद्धिः सप्तधा गदः ॥ मूत्रांत्रजावप्यनिलाद्धेतुभेदस्तु केव-
लं ॥ वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ पक्वोदुंबरसंका-
शः पित्ताद्दाहोष्मपाकवान् ॥ कफाच्छीतो गुरुः स्निग्धः कंडूमा-
न्कठिनोऽल्परुक् ॥ कृष्णस्फोटावृतः पित्तलिंगवृद्धिश्च रक्ततः ॥ क-
फवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ मूत्रधारणशीलस्य मूत्रजः स

तु गच्छतः ॥ अंभोभिः पूर्णदृतिवत्क्षोभं याति सरुङ्मृदुः ॥ मूत्रकृच्छ्रमधः स्याच्च वलयं फलकोशयोः॥ वातकोपिभिराहारैः शीततोयावगाहनैः ॥ धारणेरणभाराध्वविषमांगप्रवर्त्तनैः ॥ क्षोभणैः क्षुभितोऽन्यैश्च क्षुद्रांत्रावयवं यदा ॥ पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ कुर्याद्वंक्षणसंधिस्थो ग्रंथ्याभं श्वयथुं तदा ॥ उपेक्षमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तंभवतीं स वायुः ॥ प्रपीडितोऽतः स्वनवान्प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः ॥ अंत्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः॥रूक्षकृष्णारुणसिरातंतुजालगवाक्षितः ॥ गुल्मोऽष्टधा पृथग्दोषैः संसृष्टैर्निचयं गतैः ॥ आर्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ अथ यो ज्वरातिसारादिभिर्वमनादिभिर्वा कर्मभिः कर्शितो वातलान्याहारयत्याहाराभिलाषी वा शीतमुदकं पिबत्यन्नपानानंतरं वा लंघनप्लवनव्यवायपानयानादीन् देहविक्षोभिणः सेवतेऽनुदीर्णां वा छर्दिमुदीरयत्युदीर्णान्वा वातादीन्निश्वासोच्छ्वासौ वा निगृण्हात्यस्नेहपूर्वं वा वमनविरेचने करोति तथा कर्शितएवातिविदाहिनोऽभिष्यंदिनो वा निषेवते तस्य यथास्वं वातप्रधानाः प्रकुपिताः दोषाः पृथक् संसृष्टाः समस्ताः सरक्ता वा महास्रोतोऽनुप्रविश्यावृत्योर्ध्वमधश्च मार्गं शूलमुपजनयंतो गुल्ममभिनिर्वर्त्तयंति ॥ यतश्च तस्मिन् शूलविद्धइव व्यथ्यतेऽतिवेदनार्दितः कृच्छ्रोच्छ्वासस्तस्माच्छूलमित्युच्यते ॥ तत्रातिकर्शनात्कफपित्ताभ्यां वा मार्गरोधाल्लब्धाश्रयो वायुरुत्प्लुतो रौक्ष्यात्कठिनीभूतः स्वाशये स्वतंत्रः परतंत्रो वा पित्तश्लेष्माशये स्पर्शोपलभ्यः पिंडितत्वादमूर्तोऽपि मूर्त्ततामिवोपगतो ग्रंथिरूपेणावतिष्ठमानो गुल्मसंज्ञां लभते ॥ तस्य पंच स्थानानि बस्तिर्नाभिः पार्श्वे हृदयं च ॥ अथास्य पूर्वरूपाणि सदनमग्निशरीरयोररुचिः सौहित्यासहिष्णुताकुक्षिशूलात्याध्मानमुद्गिरणं बहुशो विदग्धेऽन्ने छर्दिराटोपो मलस्याप्रादुर्भावो प्रवृत्तिश्च ॥ तत्र वातात्सूच्येव शंकुनेव व्यधो मन्याशिरःशंखशूल-

ज्वरांगमर्दप्लीहाटोपांत्रकूजोदावर्तोच्छ्वासोपरोधमुखशोषस्तब्धगात्रता वायुकालेषूपद्रववृद्धिर्विषमाग्निता कृष्णारुणपरुषत्वङ्नखादित्वं गुल्मश्चास्य चलत्वाद्वायोरनियतस्थानसंस्थानोदयप्रलयाल्पमहारुजः पिपीलिकापरिगतइव तोदस्फुरणबहुलो विस्तारयतीव स्वदेशं चर्मइव कदाचित्कदाचित्संकोचयतीव हर्षयतीव रोमाणि वेदनातिप्रवृत्तौ तु सर्वस्मिन्नपि देहे प्रायो बस्त्याश्रयश्च भवति॥पित्ताद्दाहो धूमकोऽम्लक स्तृष्णा ज्वरः स्वेदो विड्भेदो मूर्च्छा शीतोपशयता हरितहारिद्रत्वं गुल्मश्चास्य तप्तायःपिंडइव तमवकाशं दहति दूयते धूमायत ऊष्मायते शिथिलइव व्रणइवास्पर्शसहो निर्लोमा प्रायो नाभ्याश्रयश्च ॥ कफात् स्तैमित्यमरोचकाविपाकौ हृदयोपलेपः शीतज्वरस्तृप्तिः सदनं कासो हृल्लासः पीनसो निद्राऽऽलस्यं नखादिषु शुक्लता गुल्मश्च सुप्तस्थिरगुरुकठिनावगाढोऽल्परुक् प्रायो हृत्पार्श्वाश्रयश्च ॥ संसृष्टलिंगः संसर्गात्स त्रिविधः ॥ सर्वलिंगनिचयेन च यो गुल्मः सोऽसाध्यः ॥ रक्तगुल्मस्तु गर्भकोष्ठार्त्तवोपगमनवैशेष्यात्पारतंत्र्यादवैशारद्यादपचारानुरोधाच्च स्त्रिया एव भवति ॥ तत्र यदा सा ऋतुमती नवप्रसूता योनिरोगिणी वा वातलान्यासेवते तदाऽस्या वायुः कुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि ॥ तदुपरुध्यमानं मासे मासे कुक्षिमभिनिर्वर्त्तयति गर्भलिंगानि च हृल्लासतंद्रांऽगसाददौर्हृदस्तन्यदर्शनादीनि ॥ वायुसंसर्गात्पुनः पित्तैकप्रकोपतया च वातपित्तगुल्मरूपाणि क्रमाच्छूलस्तंभदाहातीसारादीनि गर्भाशये च सुतरां शूलं तथा योन्या दौर्गंध्यमास्रावं च करोति ॥ गुल्मश्च न गर्भइवांगैः पिंडितएव तु चिरेण सशूलं स्पंदते ॥ गुल्मएव च वर्द्धते न कुक्षिः ॥ स्वदोषाधिष्ठानश्च सर्वो भवति गुल्मः ॥ तस्माच्चिरेण नैव पाकमेति

॥ भृशदुष्टरक्ताश्रयत्वात्तु विद्रधिः शीघ्रपाको भवतीति ॥ भवति चात्र॥ गुल्मेऽतराश्रये बस्तिकुक्षिहृत्प्लीहवेदना ॥ अग्निवर्णबलभ्रंशो वेगानां चाप्रवर्त्तनं ॥ अतो विपर्ययो बाह्ये कोष्ठांगेषु तु नातिरुक्॥ वैवर्ण्यमवकाशस्य बहिरुन्नतताऽधिकं ॥ साटोपमत्युग्ररुजमाध्मानमुदरे भृशं ॥ ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ॥ घनोष्ठीलोपमो ग्रंथिरष्ठीलोर्ध्वसमुन्नतः ॥ आनाहलिंगस्तिर्यक् च प्रत्यष्ठीला तदाकृतिः ॥ पक्वाशयाद्गुदोपस्थं वायुस्तीव्ररुजः प्रयन् ॥ तूनी प्रतूनी तु भवेत्स एवातो विपर्यये ॥ उद्गारबाहुल्यपुरीषबंधतृप्त्यक्षमत्वांत्रविकूजनानि ॥ साटोपमाध्यानमपक्तिशक्तिमासन्नगुल्मस्य वदंति चिन्हं ॥ ॥ इति विद्रधिवृद्धिगुल्मनिदानं नामैकादशोऽध्यायः ॥११॥

॥ अथात उदरनिदानं व्याख्यास्यामः ॥ रोगाः सर्वेऽपि मंदेऽग्नौ सुतरामुदराणि तु ॥ अजीर्णान्मलिनैश्चान्नैर्जायंते मलसंचयात्॥ऊर्ध्वाधो धातवो रुध्वा वाहिनीरंबुवाहिनीः ॥ प्राणाग्न्यपानान्संदूष्य कुर्युस्त्वङ्मांससंधिगाः ॥ आध्माप्य कुक्षिमुदरमष्टधा तच्च भिद्यते ॥ पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः ॥ नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः ॥ स्युः प्रेतरूपाः पुरुषा भाविनस्तस्य लक्षणं ॥ क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते ॥ जीर्णाजीर्णं न जानाति सौहित्यं सहते न च ॥ क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते ॥ वृद्धिर्विशोऽप्रवृत्तिश्च किंचिच्छोफश्च पादयोः ॥ रुग्बस्तिसंधौ ततता लघ्वल्पैर्भोजनैरपि ॥ राजीजन्म वलीनाशो जठरे जठरेषु तु ॥ सर्वेषु तंद्रा सदनं मलसंगोऽल्पवन्हिता ॥ दाहः श्वयथुराध्मानमंते सलिलसंभवः ॥ सर्वं त्वतोयमरुणमशोफं नातिभारिकं ॥ गवाक्षितं सिराजालैः सदा गुडगुडायते ॥ ना-

---

१ तथाचागमः ॥ मांसशोणितभूयस्त्वात् पाकं गच्छति विद्रधिः ॥ मांसशोणितहीनत्वाद्गुल्मः पाकं न गच्छतीति ॥

भिमंत्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ मारुतो हृत्कटीनाभि-पायुवंक्षणवेदनाः ॥ सशब्दो निश्चरेद्वायुर्विड्बद्धो मूत्रमल्पकं ॥ नातिमंदोऽनलो लौल्यं न च स्याद्विरसं मुखं ॥ तत्र वातोदरे शोफः पाणिपन्मुष्कसंधिषु ॥ कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनं-शुष्ककासोऽगमर्दोऽधो गुरुता मलसंग्रहः ॥ श्यावारुणत्वगादित्वम-कस्माद्वासवृद्धिमत् ॥ सतोदभेदमुदरं तनुकृष्णसिराततं ॥ आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥ वायुश्चात्र सरुक्शब्दो वि-चरेत्सर्वतो गतिः ॥ पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्य-ता ॥ भ्रमो ऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ पीतताम्रसि-रानद्धं सस्वेदं सोष्म दह्यते ॥ धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ श्लेष्मोदरेऽगसदनं स्वापः श्वयथुगौरवं ॥ निद्रोत्क्लेशारुचि-श्वासकासशुक्लत्वगादिताः ॥ उदरं स्तिमितं स्निग्धं[1] शुक्लराजीततं महत् ॥ चिराभिवृद्धिकठिनं शीतस्पर्शं गुरुस्थिरं ॥ त्रिदोषकोपनै-स्तैस्तैः स्त्रीदत्तैश्च रजोमलैः॥ गरदूषीविषाद्यैश्च सरक्ताः संचिता मलाः ॥कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितं॥कुर्युस्त्रिलिंगमुदरं शीघ्रपाकं सुदारुणं॥बाधते तच्च सुतरां शीतवाताभ्रदर्शने॥अत्याशितस्य संक्षोभाद्यानपानातिचेष्टितैः ॥ अतिव्यवायकर्माध्ववमनव्याधिकर्शनैः ॥वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्द्धते॥शोणितं वा रसादिभ्यो विवृद्धं तं विवर्द्धयेत्॥सोष्ठीलेवातिकठिनः प्रोन्नतः कूर्मपृष्ठवत्॥क्रमेण-वर्द्धमानश्च कुक्षावुदरमावहेत् ॥ श्वासकासपिपासास्यवैरस्याध्मानरु-ग्ज्वरैः॥पांडुत्वकृच्छर्दिमूर्च्छार्तिदाहमोहैश्च संयुतं ॥अरुणाभं विवर्णं वा नीलहारिद्रराजिमत्॥ उदावर्त्तरुगानाहैर्मोहतृड्दहनज्वरैः॥गौरवारु-चिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥ प्लीहवद्दक्षिणात्पार्श्वात्कुर्याद्य-कृदपि च्युतं॥पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे॥दुर्नामभिरुदावर्त्तै

[1] श्लक्ष्णमति पाठः । कोमलस्पर्शमित्यर्थः

रन्नैर्वांत्रोपलेपिभिः॥वर्चःपित्तकफान् रुध्वा करोति कुपितोऽनिलः ॥ अपानो जठरं तेन स्युर्दाहतृड्ज्वरक्षवाः ॥ श्वासकासोरुसदनं शिरोहृन्नाभिपायुरुक्॥ मलसंगोऽरुचिः श्छर्दिरुदरं मूढमारुतं ॥स्थिरं नीलारुणसिराराजिनद्धमराजि वा ॥ नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ अस्थ्यादिशल्यैः सान्नैश्चेद्भुक्तैरत्यशनेन वा ॥ भिद्यते पच्यते चांत्रं तच्छिद्रैश्च स्रवन् बहिः ॥ आमएव गुदादेति ततोऽल्पाल्पः स विड्रसः ॥ तुल्यः कुणपगंधेन पिच्छिलः पीतलोहितः ॥ शेषश्चापूर्य जठरं जठरं घोरमावहेत् ॥ वर्द्धते तदधो नाभेराशु चैति जलात्मतां ॥ उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः ॥ छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे ॥ प्रवृत्तस्नेहपानादेः सहसाऽऽमांबुपायिनः ॥ अत्यंबुपानान्मंदाग्नेः क्षीणस्यातिकृशस्य वा ॥ रुध्वांऽबुमार्गानिनिलः कफश्च जलमूर्च्छितः ॥ वर्द्धयेतां तदेवांबु तत्स्थानादुदराश्रितौ ॥ ततःस्यादुदरं तृष्णागुदस्रुतिरुजान्वितं ॥ कासश्वासारुचियुतं नानावर्णसिराततं ॥ तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु ॥ दकोदरं महत्स्निग्धं स्थिरमावृत्तनाभि तत्॥उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः॥ पाकाद्द्रवा द्रवीकुर्युः संधीन् स्रोतोमुखान्यपि॥स्वेदस्तु बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ॥तदेवोदकमाप्याय्यपिच्छां कुर्यात्तदा भवेत्॥गुरूदरंस्थिरं वृत्तमाहतं च सशब्दवत्॥मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति ॥ तदनूदकजन्मास्मिन् कुक्षिवृद्धिस्ततोऽधिका ॥ सिरांतर्द्धानमुदकजठरोक्तं च लक्षणं ॥ वातपित्तकफप्लीहसन्निपातोदकोदरं ॥ कृच्छ्रं यथोत्तरं पक्षात्परं प्रायोऽपरे हतः ॥ सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितं ॥ जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतं ॥ बलिनस्तदजातांबु यत्नसाध्यं नवोत्थितं ॥ ॥ इत्युदरनिदानं नाम द्वादशोऽध्यायः ॥ १२

१ बद्धक्षतोदरे

अथातः पांडुरोगकामलाशोफविसर्पनिदानं व्याख्यास्यामः ॥ पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ॥ तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितं ॥ धमनीर्दश संप्राप्य व्याप्नुवत्सकलं वपुः ॥ श्लेष्मत्वग्रक्तमांसानि प्रदूष्यांतरमाश्रितं ॥ त्वङ्मांसयोस्तत्कुरुते त्वचि वर्णान् पृथग्विधान् ॥ पांडुहारिद्रहरितान्पांडुत्वं तेषु चाधिकं॥ यतोऽतः पांडुरित्युक्तः स रोगस्तेन गौरवं ॥ धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेंद्रियः ॥ मृद्यमानैरिवांगैर्ना द्रवता हृदयेन च ॥ शूनाक्षिकूटः सदनः कोपनः ष्ठीवनो ऽल्पवाक् ॥ अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ॥ सन्नसक्थिज्वरी श्वासी कर्णक्ष्वेडी श्रमी भ्रमी ॥ स पंचधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ प्राग्रूपमस्य हृदयस्पंदनं रूक्षता त्वचि ॥ अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवन्हिता ॥ सादः श्रमो ऽनिलात्तत्र गात्ररुक् तोदकंपनं ॥ कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता ॥ शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्द्धरुक् ॥ पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ तृट्स्वेदमूर्च्छाः शीतेच्छा दौर्गंध्यं कटुवक्त्रता ॥ वर्चोभेदोऽम्लको दाहः कफाच्छुक्लसिरादिता ॥ तंद्रालवणवक्त्रत्वरोमहर्षस्वरक्षयाः ॥ कासश्छर्दिश्च निचयान्मिश्रलिंगोऽतिदुःसहः ॥ मृत्कषायाऽनिलं पित्तमूषरा मधुरा कफं ॥ दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च ॥ स्रोतांस्यपक्वैवापूर्य कुर्याद्रुध्वा च पूर्ववत् ॥ पांडुरोगं ततः शूननाभिपादास्यमेहनः ॥ पुरीषं कृमिवन्मुंचेद्भिन्नं सासृक्कफं नरः ॥ यः पांडुरोगी सेवेत पित्तलं तस्य कामलां ॥ कोष्ठशाखाश्रयां पित्तं दग्ध्वाऽसृङ्मांसमावहेत् ॥ हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तथा ॥ दाहाविपाकतृष्णावान् भेकाभो दुर्बलेंद्रियः ॥ भवेत्पित्तोल्बणस्यासौ पांडुरोगादृतेऽपि च ॥ उपेक्षया च शोफाढ्या सा कृच्छ्रा कुंभकामला ॥ हरितश्यावपीत-

त्वं पांडुरोगे यदा भवेत् ॥ वातपित्ताक्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः ॥ तंद्रा बलानलभ्रंशो लोढरं तं हलीमकं ॥ अलसश्चेति शंसंति तेषां पूर्वमुपद्रवाः ॥ शोफप्रधानाः कथिताः सएवातो निगद्यते ॥ पित्तरक्तकफान् वायुर्दुष्टो दुष्टान् बहिःसिराः ॥ नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयं ॥ उत्सेधं संहतं शोफं तमाहुर्निचयादतः ॥ सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकं ॥ दोषैः पृथक् द्वयैः सर्वैरभिघाताद्विषादपि ॥ द्विधा वा निजमागंतुं सर्वांगैकांगजं च तं ॥ पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः॥ सामान्यहेतुः शोफानां दोषजानां विशेषतः॥व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतं॥अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलं ॥ लवणक्षारतीक्ष्णोष्णशाकांबुस्वप्नजागरं॥मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनं ॥ पदातेर्मार्गगमनं यानेन क्षोभिणाऽपि वा ॥ श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ विसूच्यलसकच्छर्दिगर्भवीसर्पपांडवः ॥ अन्ये च मिथ्योपक्रांतास्तैर्दोषा वक्षसि स्थिताः॥ ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वंति मध्यगाः ॥ सर्वांगगाः सर्वगतं प्रत्यंगेषु तदाश्रयाः ॥ तत्पूर्वरूपं दवथुः सिरायामोऽगगौरवं ॥ वाताच्छोफश्चलो रूक्षः खररोमाऽरुणासितः ॥ संकोचस्पंदहर्षार्तितोदभेदप्रसुप्तिमान् ॥ क्षिप्रोत्थानशमः शीघ्रमुन्नमेत्पीडितस्तनुः ॥ स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ॥ त्वक्च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ॥ पीतरक्तासिताभासः पित्तादाताम्ररोमवान् ॥ शीघ्रानुसारप्रशमो मध्ये प्राक् जायते तनुः ॥ सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः ॥ शीताभिलाषी विड्भेदी गंधी स्पर्शासहो मृदुः ॥ कंडूमान् पांडुरोमत्वक्कठिनः शीतलो गुरुः ॥ स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राछर्द्यग्निसादकृत् ॥ आक्रांतो नोन्नमेत्कृच्छ्रशमजन्मा निशाबलः ॥ स्रवेन्नासृक्चिरात्पिच्छां कुशशस्त्रादिविक्षतः ॥स्पर्शोष्णकांक्षी च कफाद्यथास्वं द्वंद्वजास्त्रयः॥ संकराद्धेतुलिंगानां निचयान्निचयात्मकः ॥

अभिघातेन शस्त्रादिछेदभेदक्षतादिभिः ॥ हिमानिलोदध्यनिलैर्भल्लात-कपिकच्छुजैः॥रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्॥भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ विषजः सविषप्राणिपरिसर्पण-मूत्रणात् ॥ दंष्ट्रादंतनखापातादविषप्राणिनामपि ॥ विण्मूत्रशुक्रोपहत-मलवद्वस्त्रसंकरात् ॥ विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ मृदु-श्चलोऽवलंबी च शीघ्रो दाहरुजाकरः ॥ नवोऽनुपद्रवः शोफः साध्यो ऽसाध्यः पुरेरितः॥स्याद्विसर्पोऽभिघातांतैर्दोषैर्दूष्यैश्च शोफवत्॥अधि-ष्ठानं च तं प्राहुर्बाह्यांतरुभयाश्रयात् ॥ यथोत्तरं च दुःसाध्यास्तत्र दोषा यथायथं ॥ प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः देहे शीघ्रं-विसर्पंति तेंऽतरंतःस्थिता बहिः ॥ बहिस्था द्वितये द्विस्था विद्यात्तत्रां-तराश्रयं ॥ मर्मोपतापात्संमोहादयनानां विघट्टनात् तृष्णातियोगा-द्वेगानां विषमं च प्रवर्त्तनात् ॥ आशु चाग्निबलभ्रंशादतो बाह्यं विप-र्ययात् ॥ तत्र वातात्परीसर्पो वातज्वरसमव्यथः॥ शोफस्फुरणनिस्तो-दभेदायामार्तिहर्षवान् ॥ पित्ताद्द्रुतगतिः पित्तज्वरलिंगोऽतिलोहितः॥ कफात्कंडूयुतः स्निग्धः कफज्वरसमानरुक् ॥ स्वदोषलिंगैश्चीयंते सर्वे-स्फोटैरुपेक्षिताः ॥ ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणं ॥ वा-तपित्ताज्ज्वरच्छर्दिमूर्च्छाऽतीसारतृड्भ्रमैः ॥ अस्थिभेदाग्निसदनतम-कारोचकैर्युतः ॥ करोति सर्वमंगं च दीप्तांगारावकीर्णवत् ॥ यं यं देशं विसर्पश्च विसर्पति भवेत्स सः॥शांतांगारासितो नीलो रक्तो वाऽऽशु च चीयते॥अग्निदग्धइव स्फोटैः शीघ्रगत्वाद्द्रुतं च सः॥ मर्मानुसारी वीस-र्पः स्याद्वातोऽतिबलस्ततः ॥ व्यथेदंगं हरेत्संज्ञां निद्रां च श्वासमीर-येत्॥हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना॥क्वचिच्छर्मारति-ग्रस्तो भूमिशय्यासनादिषु ॥ चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भ-वां ॥ दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्पउच्यते ॥ कफेन रुद्धः पव-नो भित्त्वा तं बहुधा कफं ॥ रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमां-

सर्गं ॥ दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनां ॥ ग्रंथीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वरां ॥ श्वासकासातिसारास्य शोषहिध्मावमिभ्रमैः ॥ मोहवैवर्ण्यमूर्च्छांगभंगाग्निसदनैर्युतां ॥ इत्ययं ग्रंथिवीसर्पः कफमारुतकोपजः ॥ कफपित्ताज्ज्वरस्तंभो तंद्रानिद्राशिरोरुजः ॥ अंगावसादविक्षेपप्रलापारोचकभ्रमाः ॥ मूर्च्छाऽग्निहानिर्भेदोऽस्थ्नां पिपासेंद्रियगौरवं ॥ आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ प्रायेणामाशये गृण्हन्नेकदेशं नचातिरुक् ॥ पिडकैरवकीर्णोऽतिपीतलोहितपांडुरः ॥ मेचकाभोऽसितः स्निग्धो मलिनः शोफवान् गुरुः ॥ गंभीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥ पंकवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ॥ शवगंधिश्च वीसर्पं कर्दमाख्यमुशंति तं ॥ सर्वजो लक्षणैः सर्वैः सर्वधात्वभिसर्पणः ॥ बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ विसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितं ॥ स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितं ॥ पृथग्दोषैस्त्रयः साध्या द्वंद्वजाश्चानुपद्रवाः ॥ असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रांतमर्मकाः ॥ शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगंधयः॥ ॥ इति पांडुकामलाशोफविसर्पनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथातः कुष्ठक्रिमिनिदानं व्याख्यास्यामः ॥ मिथ्याहारविहारेण विशेषेण विरोधिना ॥ साधुनिंदावधान्यस्वहरणाद्यैश्च सेवितैः ॥ पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः ॥ सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषं॥दूषयंतिश्लथीकृत्य निश्चरंतस्ततो बहिः॥त्वचः कुर्वंति वैवर्ण्यं दुष्टाः कुष्ठमुशंति तत् ॥ कालेनोपेक्षितं यस्मात्सर्वं कुष्णाति तद्वपुः ॥ प्रपद्य धातून् व्याप्यांतः सर्वान्संक्लेद्य चावहेत् ॥ सस्वेदक्लेदसंकोथान्क्रमीन्सूक्ष्मान्सुदारुणान् ॥ लोमत्वक्स्नायुधमनीस्तरुणास्थीनि यैः क्रमात् ॥ भक्षयेच्छ्वित्रमस्माच्च कुष्ठबाह्यमुदाहृतं ॥ कुष्ठानि सप्तधा दोषैः पृथग्द्वंद्वैः समागतैः ॥ सर्वेष्वपि त्रिदोषेषु

व्यपदेशोऽधिकत्वतः ॥ वातेन कुष्ठं कापालं पित्तादौदुंबरं कफात् ॥
मंडलाख्यं विचर्ची च ऋक्षाख्यं वातपित्तजं ॥ चर्मैककुष्ठकिटिभ-
सिध्मालसविपादिकाः ॥ वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ॥
पुंडरीकं सविस्फोटं पामा चर्मदलं तथा ॥ सर्वैः स्यात्काकणं पूर्वं
त्रिकं दद्रुसकाकणं ॥ पुंडरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु ॥ अति-
श्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ॥ दाहः कंडूस्त्वचि स्वापस्तोदः
कोठोन्नतिर्भ्रमः ॥ व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनं॥ रोमहर्षोऽसृजः कार्ष्ण्यं
कुष्ठलक्षणमग्रजं ॥ कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ वि-
स्तृतासमपर्यंतं हृषितैर्लोमभिश्चितं ॥ तोदाढ्यमल्पकंडूकं कापालं
शीघ्रसर्पि च ॥ पक्कोदुंबरताम्रत्वक्रोमगौरसिराचितं ॥ बहलं बहल-
क्लेदरक्तं दाहरुजाधिकं ॥ आशूत्थानावदरणक्रिमि विद्यादुदुंबरं ॥
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगं ॥ अन्योन्यसक्तमुत्सन्नं
बहुकंडूस्रुतिक्रिमि ॥ श्लक्ष्णपीताभपर्यंतं मंडलं परिमंडलं॥ सकंडूपि-
डिका श्यावा लसीकाढ्या विचर्चिका ॥ परुषं तनु रक्तांतमंतः श्यावं
समुन्नतं ॥ सतोददाहरुक्क्लेदं कर्कशैः पिडकैश्चितं ॥ ऋक्षजिह्वाकृ-
ति प्रोक्तमृक्षजिह्वं बहुक्रिमि ॥ हस्तिचर्मखरस्पर्शं चर्मैकाख्यं महाश्र-
यं ॥ अस्वेदं मत्स्यशकलसन्निभं किटिभं पुनः ॥ सूक्ष्मं किणखर-
स्पर्शं कंडूमत्परुषासितं ॥ सिध्मं रूक्षं बहिः स्निग्धमंतर्घृष्टं रजः कि-
रेत् ॥ श्लक्ष्णस्पर्शं तनुश्वेतताम्रं दौग्धिकपुष्पवत् ॥ प्रायेण चोर्ध्व-
काये स्याद्गंडैः कंडूयुतैश्चितं ॥ रक्तैरलसकं पाणिपाददार्यो विपादिकाः॥
तीव्रार्त्यो मंदकंड्वश्च सरागपिडिकाचिताः ॥ दीर्घप्रताना दूर्वावदतसी-
कुसुमच्छविः ॥ उत्सन्नमंडला दद्रूः कंडूमत्यनुषंगिणी ॥ स्थूलमूलं
सदाहार्ति रक्तश्यावं बहुव्रणं॥शतारुः क्लेदजंत्वाढ्यं प्रायशः पर्वजन्म च॥

रक्तांतमंतरा पांडुकंडूदाहरुजान्वितं॥ सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः॥घनभूरिस्लसीकासृक्प्रायमाशु विभेदि च॥पुंडरीकं तनुत्वगिभश्चितं स्फोटैः सिताऽरुणैः॥विस्फोटं पिडिकाः पामा कंडूक्लेदरुजाधिकाः॥ सूक्ष्माः श्यावारुणाः बह्व्यः प्रायः स्फिक्पाणिकूर्परे॥सस्फोटमस्पर्शसहं कंडूरुक्क्लेददाहवत् ॥ रक्तं दलच्चर्मदलं काकणं तीव्रदाहरुक् ॥ पूर्वं रक्तं च कृष्णं च काकणंतीफलोपमं ॥ कुष्ठलिंगैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ॥ दोषभेदीयविहितैरादिशेल्लिंगकर्मभिः ॥ कुष्ठेषु दोषोल्बणतां सर्वदोषोल्बणं त्यजेत् ॥ रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयं ॥ याप्यं मेदोगतं कृच्छ्रं पित्तद्वंद्वास्रमांसगं ॥ अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ॥ तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ॥ स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः ॥ पाणिपादाश्रिताः स्फोटाः क्लेदः संधिषु चाधिकं ॥ कौण्यं गतिक्षयोऽगानां दलनं स्याच्च मेदसि ॥ नासाभंगोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ॥ क्षते च कृमयः शुक्रे स्वदारापत्यबाधनं ॥ यथापूर्वं च सर्वाणि स्युर्लिंगान्यसृगादिषु ॥ कुष्ठैकसंभवं श्वित्रं किलासं दारुणं च तत् ॥ निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयं ॥ वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥ सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ सकंडु च क्रमाद्रक्तमांसमेदःसु चादिशेत् ॥ वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरं ॥ अशुक्ररोमाबहलमसंसृष्टं मिथो नवं ॥ अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ गुह्यपाणितलौष्ठेषु जातमप्यचिरंतनं ॥ वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ स्पर्शैकाहारशय्यादिसेवनात्प्रायशो गदाः ॥ सर्वे संचारिणो नेत्रत्वग्विकारा विशेषतः ॥ कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यंतरभेदतः ॥ बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥ नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ॥ तिलप्रमाणसंस्थानवर्णाः केशांबराश्रयाः ॥ ब-

कुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः ॥ द्विधा ते कोठपिडकाकंडूगंडान्प्रकुर्वते ॥ कुष्ठैकहेतवोऽतर्जाः श्लेष्मजास्तेषु चाधिकं ॥ मधुरान्नगुडक्षीरदधिसुक्तनवौदनैः ॥ शकृज्जा बहुविट्धान्यपर्णशाकोल्लकादिभिः ॥ कफादामाशये जाता वृद्धाः सर्पंति सर्वतः ॥ पृथुवध्रनिभाः केचित्केचिद्गंडूपदोपमाः ॥ रूढधान्यांकुराकारास्तनुदीर्घास्तथाऽणवः॥ श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ अंत्रादा उदरावेष्टा हृदयादा महाकुहाः ॥ कुरवो दर्भकुसुमाः सुगंधास्ते च कुर्वते ॥ हृल्लासमास्यस्रवणमविपाकमरोचकं ॥ मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ रक्तवाहिसिरास्थाना रक्तजा जंतवोऽणवः ॥ अपादवृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥ केशादा लोमविध्वंसा लोमद्वीपा उदुंबराः ॥ षट् तेकुष्ठैककर्माणः सहसौरसमातरः ॥ पक्वाशये पुरीषात्था जायंतेऽधोविसर्पिणः ॥ वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ॥ तदाऽस्योद्गारनिःश्वासविड्गंधानुविधायिनः ॥ पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ ते पंच नाम्ना कृमयः ककेरुकमकेरुकाः॥ सौसुरादाः सलूनाख्या लेलिहा जनयंति च ॥ विड्भेदशूलविष्टंभकार्श्यपारुष्यपांडुताः ॥ रोमहर्षाग्निसदनगुदकंडूर्विनिर्गमात् ॥ ॥ इति कुष्ठकृमिनिदानं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अथातो वातव्याधिनिदानं व्याख्यास्यामः ॥ सर्वार्थानर्थकरणे विश्वस्यास्यैककारणं ॥ अदुष्टदुष्टः पवनःशरीरस्य विशेषतः ॥ स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ॥ स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरंतकः ॥ तददुष्टौ प्रयत्नेन यतितव्यमतः सदा॥ तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतं ॥ समासाद्व्यासतो दोषभेदीये नाम धाम च ॥ प्रत्येकं पंचधा चारो व्यापारश्चेह वैकृतं ॥

१ अस्यकृमिरोगिणः ॥

तस्योच्यते विभागेन सनिदानं सलक्षणं ॥ असंख्यमपि संख्यायै यदशीत्या पुरेरितं ॥ धातुक्षयकरैर्वायुः क्रुध्यत्यतिनिषेवितैः ॥ चरन्स्रोतस्सु रिक्तेषु भृशं तान्येव पूरयन् ॥ तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वा ऽऽवरणं बली ॥ तत्र पक्वाशये क्रुद्धः शूलानाहांत्रकूजनं ॥ मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहं ॥ करोत्यधरकाये च तांस्तान्कृच्छ्रानुपद्रवान् ॥ आमाशये तृड्वमथुश्वासकासविसूचिकाः ॥ कंठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः ॥ श्रोत्रादिष्विंद्रियवधं त्वचि स्फुटनरूक्षते ॥ रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णतां ॥ अरूंष्यन्नस्य विष्टंभमरुचिं कृशतां भ्रमं ॥ मांसमेदोगतो ग्रंथींस्तोदाढ्याक्कर्कशान् श्रमं ॥ गुर्वंगं चातिरुक्स्तंभं मुष्टिदंडहतोपमं ॥ अस्थिस्थः सक्थिसंध्यस्थिशूलं तीव्रं बलक्षयं ॥ मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं स्तब्धतां रुजं ॥ शुक्रस्य शीघ्रमुत्सर्गं संगं विकृतिमेव वा ॥ तद्वद्गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते ॥ तत्स्थः स्नावस्थितः कुर्याद्गृध्रस्यायामकुब्जताः ॥ वातपूर्णदृतिस्पर्शं शोफं संधिगतोऽनिलः ॥ प्रसारणाकुंचनयोः प्रवृत्तिं च सवेदनां ॥ सर्वांगसंश्रयस्तोदभेदस्फुरणभंजनं ॥ स्तंभनाक्षेपणस्वापसंध्याकुंचनकंपनं ॥ यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ॥ तदांगमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ॥ अधःप्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रिताः ॥ नाडीः प्रविश्य हृदयं शिरःशंखौ च पीडयन् ॥ आक्षिपत्परितो गात्रं धनुर्वच्चास्य नामयेत् ॥ कृच्छ्रादुच्छ्वसिति स्तब्धस्तमीलितदृक्ततः ॥ कपोतइव कूजेच्च निःसंज्ञः सोऽपतंत्रकः ॥ स एव चापतानाख्यो मुक्ते तु मरुता हृदि ॥ अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥ गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ॥ अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥ मन्ये संस्तभ्य वातोंऽतरुपेत्य धमनीर्यदा ॥ व्याप्नोति सकलं देहं जत्रुरायम्यते

तदा ॥ अंतर्धनुरिवांगं च वेगैः स्तंभं च नेत्रयोः ॥ करोति जृंभां दशनं दशनानां कफोद्गमं ॥ पार्श्वयोर्वेदनां वाक्यहनुपृष्ठकटिग्रहं ॥ अंतरायामइत्येष बाह्यायामश्च तद्विधः ॥ देहस्य बहिरायामात्पृष्ठतो न्हियते शिरः ॥ उरश्चोत्क्षिप्यते तत्र कंधरा चावमृध्यते ॥ दंतौष्ठास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता ॥ बाह्यायामं धनुःकंपं ब्रुवते वेगिनं च तं ॥व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ॥ व्यायच्छंति तनुं दोषाः सर्वामापादमस्तकं ॥ तृष्यतः पांडुगात्रस्य व्रणायामः स वर्जितः ॥ गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकेषु तु ॥ जिन्हातिलेखनाच्छुष्कभक्षणादभिघाततः ॥ कुपितो हनुमूलस्थः स्रंसयित्वा ऽनिलो हनू ॥ करोति विवृतास्यत्वमथवा संवृतास्यतां ॥ हनुस्रंसः स तेन स्यात्कृच्छ्राच्चर्वणभाषणं ॥ वाग्वाहिनीसिरासंस्थो जिन्हां स्तंभयते ऽनिलः ॥ जिन्हास्तंभः स तेनान्नपानवाक्येष्वनीशता ॥ शिरसा भारहरणादतिहास्यप्रभाषणात् ॥ उत्रासवक्रक्षवथुखरकार्मुककर्षणात् ॥ विषमादुपधानाच्च कठिनानां च चर्वणात् ॥ वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ॥ वक्रीकरोति वक्त्रार्द्धमुक्तं हसितमीक्षितं ॥ ततोऽस्य कंपते मूर्द्धा वाक्संगः स्तब्धनेत्रता ॥ दंतचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ॥ गंधाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ॥ निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनं ॥ जत्रोरूर्ध्वं रुजास्तीव्राः शरीरार्द्धेऽधरेऽपि वा ॥ तमाहुरर्दितं केचिदेकायाममथापरे ॥ रक्तमाश्रित्य पवनः कुर्यान्मूर्द्धधराः सिराः ॥ रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिराग्रहः ॥ गृहीत्वाऽर्द्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥पक्षमन्यतरं हंति संधिबंधान्विमोक्षयन्॥कृत्स्नोऽर्द्धकायस्तस्य स्यादकर्मण्यो विचेतनः॥ एकांगरोगं तं केचिदन्ये पक्षवधं विदुः ॥ सर्वांगरोगं

१ शिरोग्रहमितिपाठः

तद्वच्च सर्वकायाश्रये ऽनिले॥शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ॥कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः॥आमबद्धायनः कुर्यात्संस्तभ्यांगं कफान्वितः ॥ असाध्यं हतसर्वेहं दंडवद्दंडकं मरुत् ॥ अंसमूलस्थितो वायुः सिराः संकोच्य तत्रगाः ॥ बाहुप्रस्पंदितहरं जनयत्यवबाहुकं ॥ तलं प्रत्यंगुलीनां या कंडरा बाहुपृष्ठतः ॥ बाहुचेष्टापहरिणी विश्वाची नाम सा स्मृता ॥ वायुः कट्यां स्थितः सक्थ्नः कंडरामाक्षिपेद्यदा ॥ तदा खंजो भवेज्जंतुः पंगुः सक्थ्नोर्द्वयोरपि ॥ कंपते गमनारंभे खंजन्निव प्रयाति यः ॥ कलायखंजं तं विद्यान्मुक्तसंधिप्रबंधनं ॥ शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ॥ जीर्णाजीर्णे तथाऽयाससंक्षोभस्वप्नजागरैः ॥सश्लेष्ममेदःपवनमाममत्यर्थसंचितं ॥ अभिभूयेतरं दोषमूरूचेत्प्रतिपद्यते ॥ सक्थ्यस्थीनि प्रपूर्यांतः श्लेष्मणा स्तिमितेन तत् ॥ तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ परकीयाविव गुरू स्यातामतिभृशव्यथौ ॥ ध्यानांगमर्दस्तैमित्यतंद्राच्छर्द्यरुचिज्वरैः ॥ संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ॥ तमूरुस्तंभमित्याहुराढ्यवातं तथा परे ॥ वातशोणितजः शोफो जानुमध्ये महारुजः ॥ ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥ रुक्पादे विषमे न्यस्ते श्रमाद्वा जायते यदा ॥ वातेन गुल्फमाश्रित्य तमाहुर्वातकंटकं ॥ पार्ष्णिं प्रत्यंगुलीनां या कंडरा मारुतार्दिता ॥ सक्थ्युत्क्षेपं निगृण्हाति गृध्रसीं तां प्रचक्षते ॥ विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विते ॥ हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ॥ पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥ विशेषतश्चंक्रमिते पाददाहं तमादिशेत् ॥ इति वातव्याधिनिदानं नाम पंचदशोऽध्यायः ॥१५॥

१ विश्वाचीचोक्ता बाहुचेष्टाऽपहारिणीत्यादिना ग्रंथेन गृध्रसीचाधुनैवोक्ता ते द्वे तीव्ररुजान्विते खल्लीति भण्येते ॥

अथातो वातशोणितनिदानं व्याख्यास्यामः ॥ विदाह्यन्नं विरुद्धं च तत्तथाऽसृक्प्रदूषणं ॥ भजतां विधिहीनं च स्वप्नजागरमैथुनं ॥ प्रायेण सुकुमाराणामचंक्रमणशीलिनां ॥ अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ॥ तादृशेनासृजा रुद्धः प्राक् तदेव प्रदूषयेत् ॥ आढ्यरोगं खुडं वातबलासं वातशोणितं ॥ तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥ विशेषाद्यानयानाद्यैः प्रलंबौ तस्य लक्षणं ॥ भविष्यतः कुष्ठसमं तथा सादः श्लथांगता ॥ जानुजंघोरुकट्यंसहस्तपादांगसंधिषु ॥ कंडूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ भूत्वा भूत्वा प्रणश्यंति मुहुराविर्भवंति च ॥ पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति ॥ त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ कालांतरेण गंभीरं सर्वान्धातूनभिद्रवत् ॥ कंड्वादिसंयुतोत्ताने त्वक् ताम्रा श्यावलोहिता ॥ सायामा भृशदाहोषा गंभीरे ऽधिकपूर्वरुक् ॥ श्वयथुर्ग्रथितः पाकी वायुः संध्यस्थिमज्जसु ॥ छिंदन्निव चरत्यंतर्वक्रीकुर्वंश्च वेगवान् ॥ करोति खंजं पंगुं वा शरीरे सर्वतश्चरन् ॥ वाते ऽधिकेऽधिकं तत्र शूलस्फुरणतोदनं ॥ शोफस्य रूक्षकृष्णत्वश्यावतावृद्धिहानयः ॥ धमन्यंगुलिसंधीनां संकोचोऽगग्रहोऽतिरुक् ॥ शीतद्वेषानुपशयौ स्तंभवेपथुसुप्तयः ॥ रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ॥ स्निग्धरूक्षैः शमं नैति कंडूक्लेदसमन्वितः ॥ पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदः सतृट् ॥ स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता ॥ कफे स्तैमित्यगुरुता सुप्तिस्निग्धत्वशीतताः ॥ कंडूर्मंदा च रुग्द्वंद्वसर्वलिंगं च संकरे ॥ एकदोषानुगं साध्यं नवं याप्यं द्विदोषजं ॥ त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च ॥ रक्तमार्गं निहत्याशु शाखासंधिषु मारुतः ॥ निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् ॥ वायौ पंचात्मके प्राणो रौ-

क्षयव्यायामलंघनैः ॥ अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ कुपितश्चक्षुरादीनामुपघातं प्रवर्त्तयेत् ॥ पीनसार्दिततृट्कासश्वासादींश्चामयान् बहून् ॥ उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः ॥ गुरुभारातिरुदितहासाद्यैर्विकृतो गदान् ॥ कंठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान् ॥ कुर्याच्च गलगंडादींस्तांस्तान्जत्रूर्ध्वसंश्रयान् ॥ व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः ॥ विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान् ॥ सर्वांगरोगनिस्तोदरोमहर्षांगसुप्तताः ॥ कुष्ठं वीसर्पमन्यांश्च कुर्यात्सर्वांगगान् गदान् ॥ समानो विषमाजीर्णशीतसंकीर्णभोजनैः ॥ करोत्यकालशयनजागराद्यैश्च दूषितः ॥ शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् ॥ अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः ॥ यानयानासनस्थानचंक्रमैश्चातिसेवितैः ॥ कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान् ॥ मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥ सर्वं च मारुतं सामं तंद्रास्तैमित्यगौरवैः ॥ स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥ कटुरूक्षाभिलाषेण तद्विधोपशयेन च ॥ युक्तं विद्यान्निरामं तु तंद्रादीनां विपर्ययात् ॥ वायोरावरणं चातो बहुभेदं प्रचक्षते ॥ लिंगं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ॥ शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकं ॥ लंघनायासरूक्षोष्णकामता च कफावृते ॥ रक्तावृते सदाहार्तिस्त्वङ्मांसांतरजा भृशं ॥ भवेच्च रागी श्वयथुर्जायंते मंडलानि च ॥ मांसेन कठिनः शोफो विवर्णः पिडिकास्तथा ॥ हर्षः पिपीलिकानां च संचारइव जायते ॥ चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ॥ आढ्यवातइति ज्ञेयः सकृच्छ्रो मेदसाऽऽवृते ॥ स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनंदति ॥ सूच्येव तुद्यतेऽत्यर्थमंगं सीदति शूल्यते ॥ मज्जावृते विनमनं जृं-

भणं परिवेष्टनं ॥ शूलं च पीड्यमानेन पाणिभ्यां लभते सुखं ॥ शुक्रावृतेऽतिवेगो वा न वा निष्फलताऽपि वा ॥ भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले ॥ मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत् ॥ विडावृते विबंधोऽधः स्वे स्थाने परिकृंतति ॥ व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ॥ सर्वधात्वावृते वायौ श्रोणिवंक्षणपृष्ठरुक् ॥ विलोमो मारुतोऽस्वास्थ्यं हृदयं पीड्यतेऽपि च ॥ भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राणआवृते ॥ विदग्धेऽन्ने च वमनमुदानेऽपि भ्रमादयः ॥ दाहोंतरूर्जाभ्रंशश्च दाहो व्याने तु सर्वगः ॥ क्लमोंऽगचेष्टाभंगश्च ससंतापः सवेदनः ॥ समानऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ॥ दाहश्च स्यादपाने तु मले हारिद्रवर्णता ॥ रजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ॥ श्लेष्मणात्वावृते प्राणे सादस्तंद्रा रुचिर्वमिः ॥ ष्ठीवनं क्षवथूद्गारनिःश्वासोच्छ्वाससंग्रहः ॥ उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ॥ बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः ॥ गुरुतांऽगेषु सर्वेषु स्खलितं च गतौ भृशं ॥ समानेऽतिहिमांगत्वमस्वेदो-मंदवन्हिता ॥ अपाने सकफं मूत्रशकृतः स्यात्प्रवर्तनं ॥ इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ प्राणादयस्तथाऽन्योन्यमावृण्वंति यथाक्रमं ॥ सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥ निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः ॥ हृद्रोगो मुखशोषश्च प्राणेनोदानआवृते ॥ उदानेनावृते प्राणे वर्णौजोबलसंक्षयः ॥ दिशाऽनया च विभजेत्सर्वमावरणं भिषक् ॥ स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणां ॥ प्राणादीनां च पंचानां मिश्रमावरणं मिथः ॥ पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ॥ मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥ तारतम्यविकल्पाच्च यात्याब

१ ऊर्जायाः बलस्य भ्रंशः विनाशः

त्तिरसंख्यतां ॥ तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ शनैः शनैश्चोपशयाद्गूढामपि मुहुर्मुहुः ॥ विशेषाज्जीवितं प्राणउदानो बलमुच्यते ॥ स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ॥ आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ॥ प्रयत्नेनापि दुःसाध्या भवेयुर्वाऽनुपक्रमाः ॥ विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ॥ भवंत्युपद्रवास्तेषामावृतानामुपेक्षणात् ॥ ॥ इति वातशोणितनिदानं नाम षोडशोऽध्यायः ॥ १६ ॥ इतिश्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टांगसंग्रहे तृतीयं निदानस्थानं संपूर्णं ॥३॥ ७ ॥

॥ श्री ॥

# अष्टांगसंग्रहे

चिकित्सास्थानम् ४

॥ श्रीगणेशाय नमः ॥ अथातो ज्वरचिकित्सितं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ आमाशयस्थो हत्वाग्निं सामो मार्गान्पिधापयन् ॥ विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लंघनं ॥ प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन् ॥ बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः ॥ लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ॥ स्वास्थ्यं क्षुत्तृड्रुचिः पक्तिर्बलमोजश्च जायते ॥ तत्रोत्क्लिष्टे समुत्क्लिष्टे कफप्राये चले मले ॥ सहृल्लासप्रसेकान्नद्वेषकासविसूचिके ॥ सद्योभुक्तस्य संजाते ज्वरे सामे विशेषतः ॥ वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥ श्वासातिसारसंमोहहृद्रोगविषमज्वरान् ॥ पिप्पलीभिर्युतान् गालान्कलिंगैर्मधुकेन वा ॥ पीत्वोष्णतोयेन वमेन्मध्वंबु लवणांबु वा ॥ पटोलनिंबकर्कोटवेत्रपत्रजलानि वा ॥ पेयां मंडं रसं चेक्षोर्मद्यं कल्पोदितानि वा ॥ वमनानि प्रयुंजीत बलकालविभागवित् ॥ कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणं ॥ दोषाणां समुदीर्णानां पाचनाय शमाय च ॥ आमेन भस्मनेवाग्नौ च्छन्नेऽन्नं न विपच्यते ॥ तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ॥ तृष्यन्नल्पाल्पमुष्णांबु पिबेद्वातकफज्वरे ॥ तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ॥ उदीर्य चाग्निं स्रोतांसि मृदूकृत्वा विशोधयेत् ॥ लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनं ॥ निद्राजाड्यारुचिहरं प्राणानामव-

१ स्रोतांसि २ लंघनस्याविशेषोक्तावुपवासं प्रकल्पयेदिति वचनादत्रोपवासो गृह्यते.

लंघनं ॥ विपरीतमतः शीतं दोषसंघातवर्द्धनं ॥ उष्णमेवंगुणत्वेऽपि युंज्यान्नैकांतपित्तले ॥ उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥ विषमद्योत्थिते ग्रीष्मे क्षतक्षीणे ऽस्रपित्तिनि ॥ घनचंदनशुंठ्यंबुपर्पटोशीरसाधितं ॥ शीतं तेभ्यो हितं तोयं पाचनं तृट्ज्वरापहं ॥ ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना ॥ तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकं ॥ स्नानाभ्यंगप्रदेहांश्च परिशेषं च लंघनं ॥ अजीर्णइव शूलघ्नं सामे तीव्ररुजि ज्वरे ॥ न पिबेदौषधं तद्धि भूयएवाममावहेत् ॥ आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ॥ सोदर्दपीनसश्वासे जंघापर्वास्थिशूलिनि ॥ वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत् ॥ स्वेदमूत्रशकृद्वातान्कुर्यादग्नेश्च पाटवं ॥ स्नेहोक्तमाचारविधिं सर्वतश्चानुपालयेत् ॥ लंघनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ॥ मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ॥ शुद्धवातक्षयागंतुजीर्णज्वरिषु लंघनं ॥ नेष्यते तेषु हि हितं शमनं यन्न कर्शनं ॥ तत्र सामज्वराकृत्या जानीयादविशोषितं ॥ द्विविधोपक्रमज्ञानमवेक्षेत च लंघने ॥ युक्तं लंघितलिंगैस्तु तं पेयाभिरुपाचरेत् ॥ यथास्वौषधसिद्धाभिर्मंडपूर्वाभिरादितः ॥ षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ॥ तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥ ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ॥ वातमूत्रपुरीषाणां दोषाणां चानुलोमिकाः ॥ स्वेदनाय द्रवोष्णत्वान्मृदुत्वात्तृट्प्रशांतये ॥ आहारभावात्प्राणाय सरत्वाल्लाघवाय च ॥ ज्वरघ्ना ज्वरसात्म्यत्वात्तस्मात्पेयाभिरादितः ॥ उपक्रमेज्ज्वरान्सर्वान्नृते मद्यसमुत्थितान् ॥ प्राग्लाजपेयां सुजरां सशुंठीधान्यपिप्पलीं ॥ ससैंधवां तथाम्लार्थी तां पिबेत्सहदाडिमां ॥ सृष्टविड्बहुपित्तो वा सशुंठीमाक्षिकां हिमां ॥ बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधितां ॥ पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीं ॥ ह्रस्वेन पं-

चमूलेन हिध्मारुक्श्वासकासवान् ॥ पंचमूलेन महता कफार्तो यव-साधितां ॥ विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृतां ॥ यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीं ॥ चविकापिप्पलीमूलद्राक्षाऽऽमलकनागरैः ॥ कोष्ठे विबद्धे सरुजि पिबेत्तु परिकर्तिनि ॥ कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृतां ॥ अस्वेदनिद्रस्तृष्णार्त्तः सिताऽऽमलकनागरैः ॥ सिताबदरमृद्वीकासारिवामुस्तचंदनैः ॥ तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुतां ॥ कुर्यात्पेयौषधैरेव रसयूषादिकानपि ॥ मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ॥ ग्रीष्मे तयोर्वाऽधिकयोस्तृट्छर्दिदाहपीडिते ॥ ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छंति तेषु तु ॥ द्राक्षादाडिमकाश्मर्यपथ्यापीलुपरूपकैः ॥ समधूकैः सबदरैः सक्षौद्रैः ससितोपलैः॥ ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणं ॥ पिबेत्ससूक्ष्मरजसस्ततो जीर्णे तु तर्पणे ॥ यवाग्वां चौदनं क्षुद्वानश्नीयाद्धृष्टतंदुलं ॥ दकलावणिकैर्यूषैरसैर्वा मुद्गलावजैः ॥ इत्ययं षडहो नेयो बलं दोषं च रक्षता ॥ ततः पक्वेषु दोषेषु लंघनाद्यैः प्रशस्यते ॥ कषायो दोषशेषस्य पाचनः शमनोऽथवा ॥ तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे ॥ पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ॥ नवज्वरे मलस्तंभात्कषायो विषमज्वरं ॥ कुरुतेऽरुचिहृल्लासहिध्माऽऽध्मानादिकानपि ॥ न च्यवंते न पच्यंते कषायस्तंभिता मलाः ॥ तिर्यग्गता विमार्गा वा वर्द्धयंत्यपि च ज्वरं ॥ बद्धामकफवातत्वाच्छूलानाहादिकानपि ॥ सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ॥ केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥ तीव्रज्वरपरीतस्य दोषवेगोदयो यतः ॥ दोषेऽथवाऽतिनिचिते तंद्रास्तैमित्यकारिणि ॥ अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरं ॥ यदा ज्वरो मृदुर्देहो लघुः प्रचलिता मलाः ॥ अचिरज्वरितस्यापि योजयेद्भेषजं तदा ॥ मुस्तया पर्पटं युक्तं शुंठ्या दुःस्पर्शयाऽपि वा ॥ पाक्यं शीतकषायं वा पाठोशीरं सवालकं ॥

पिबेत्तद्वच्च भूनिंबगुडूचीमुस्तनागरं ॥ यथायोगमिमे योज्याः कषाया दोषपाचनाः ॥ ज्वरारोचकतृष्णाऽऽस्यवैरस्यापक्तिनाशनाः ॥ पाठेंद्रयवभूनिंबमुस्तपर्पटकामृताः ॥ जयंत्यामामतीसारं ज्वरं च समहौषधाः ॥ दुरालभाऽमृतामुस्तनागरं वातजे ज्वरे ॥ अथवा पिप्पलीमूलगुडूचीविश्वभेषजं ॥ कनीयः पंचमूलं वा पित्ते क्षौद्रसमन्विताः ॥ कलिंगमुस्तकटुका मुस्तपर्पटकं तथा ॥ सधन्वयासभूनिंबं वत्सकाद्यो गणः कफे ॥ अथवा वृषगांगेयीशृंगबेरदुरालभाः ॥ रुग्विबंधानिलश्लेष्मयुक्ते दीपनपाचनं ॥ अभयापिप्पलीमूलशम्याककटुकाघनं ॥ कलिंगकाः पटोलस्य पत्रं कटुकरोहिणी ॥ पटोलं सारिवा मुस्ता पाठा कटुकरोहिणी ॥ पटोलनिंबत्रिफलामृद्वीकामुस्तवत्सकाः ॥ किराततिक्तममृता चंदनं विश्वभेषजं ॥ धात्रीमुस्तामृता क्षौद्रमर्द्धश्लोकसमापनाः ॥ पंचैते संततादीनां पंचानां शमना मताः ॥ पटोलेंद्रयवारिष्टभद्रमुस्तामृताऽभयाः ॥ सारिवादितयं पाठा त्रायंती कटुरोहिणी ॥ पटोलारिष्टमृद्वीकाशम्याकत्रिफलाविषं ॥ चंदनोशीरधान्याब्दगुडूचीविश्वभेषजं ॥ देवदारु स्थिरा शुंठी वासा धात्री हरीतकी ॥ पंच पंचज्वरान् घ्नंति योगा मधुसितोत्कटाः ॥ सगुडाः सारिवाद्राक्षाशताव्हाकणरेणुकाः ॥ काश्मर्यसारिवाद्राक्षात्रायमाणाऽमृतागुडाः ॥ शतपुष्पावचाकुष्टदेवदारुहरेणुकाः ॥ शर्करामधुसंयुक्ताः समांसीमुस्तधान्यकाः ॥ कृष्णापुनर्नवाद्राक्षाशताव्हागुडसारिवाः ॥ शालिपर्णीबलाद्राक्षासारिवाछिन्नसंभवाः ॥ आरग्वधो बला रास्ना काश्मर्यं मधुकं गुडः ॥ शतावरी छिन्नरुहा स्वरसो वा गुडान्वितः ॥ सकृष्णजीरकसितानागरश्चामृतारसः ॥ वातज्वरं जयंत्याशु केवलो वाऽमृतारसः ॥ भार्ङ्गीसरलगांगेयीदारुकुष्ठैलवालुकं ॥ कोष्णं घृतगुडोपेतं पिबेद्वा वातजे ज्वरे ॥ पटोलादिगुडूच्यादी सूत्रोक्तौ पित्तजे ज्वरे ॥ अंजनादिः सकाश्मर्यः सारिवादिः सशर्करः ॥ सिताम-

धुककाश्मर्यशीतोशीरपरूषकं ॥ गुडूचीसारिवारोध्रं कमलोत्पलशर्कराः ॥ द्राक्षाऽभयातिक्तघनशम्याकफलपर्पटं ॥ श्यामापर्पटदुःस्पर्शातिक्तातिक्तसितावृषाः ॥ शर्करातिक्तकटुक त्रायमाणाबिभीतकं॥ गुडूच्यामलकैर्युक्तः केवलो वाऽपि पर्पटः ॥ कषायो वा हिमस्तिक्ताद्राक्षामधुकनिंबजः ॥ पित्तज्वरघ्नी तिक्ता वा श्लक्ष्णपिष्टा सशर्करा॥ कफजे ऽतिविषोशीरपटोलमरिचक्षपाः ॥ समूर्वद्वयवह्नीपिकुष्टनिंबवचागुडाः ॥ सप्तच्छदामृतानिंबस्फूर्जातं माक्षिकान्वितं॥ निशात्रिकटुकं तिक्तानागपुष्पकलिंगकाः ॥ सारिवाऽतिविषाकुष्ठदुःस्पर्शामुस्तगुग्गुलु ॥ परूषं त्रिफला तिक्ता बीजं वृषकजं घनं ॥ नागरत्रिफलामुस्तामूर्वापाठाः समाक्षिकाः ॥ संसर्गसन्निपातेषु मिश्रानेतान्विकल्पयेत् ॥ गोकंटकबलादर्भाः ससिता वातपित्तजे ॥ द्राक्षाऽऽमलकभूनिंबाः सगुडूचीशठीगुडाः ॥ त्रायंतीसारिवाद्राक्षाकाश्मर्यच्छिन्नजागुडाः ॥ द्राक्षामसूरत्रायंतीगुडूचीसारिवाबलाः ॥ द्राक्षामधूकमधुकरोध्रकाश्मर्यसारिवाः ॥ मुस्तामलकह्रीबेरपद्मकेसरपद्मकं ॥ मृणालचंदनोशीरनीलोत्पलपरूषकं ॥ फांटो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ॥ युक्तो मधुसितालाजैर्जयत्यनिलपित्तजं ॥ ज्वरं मदात्ययं छर्दिं मूर्छां दाहं श्रमं भ्रमं ॥ ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ॥ कफवाते वचातिक्तापाठाऽऽरग्वधवत्सकाः ॥ पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः॥व्याघ्रीशुंठ्यमृताक्काथः पिप्पलीचूर्णसंयुतः॥वातश्लेष्मज्वरश्वासकासपीनसशूलजित् ॥ पथ्याकुस्तुंबरीमुस्तशुंठीकट्तृणपर्पटं ॥ सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिंगुमत् ॥ कफवातज्वरष्ठीवकुक्षिहृत्पार्श्ववेदनाः ॥ कंठामयास्यश्वयथुकासश्वासान्नियच्छति ॥ आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ॥ तथा तिक्तावृषोशीरत्रायंतीत्रिफलाऽमृताः ॥ पटोलातिविषानिंबमूर्वाधन्वयवासकाः ॥ वृषपुष्पच्छदरसः शर्करामाक्षिकान्वितः ॥ पित्तश्लेष्मज्वरं हंति सासृक्पित्तं

सकामलं ॥ अनंताविश्वभैषज्यकटुकातोयतोयदाः ॥ ज्वरतृड्भ्रमसं मोहधूमकाम्लकनाशनाः ॥ सन्निपातज्वरेऽव्याघ्रीदेवदारुनिशाघनं॥ पटोलपत्रनिंबत्वक्त्रिफलाकटुकायुतं ॥ मुस्तापर्पटकं पथ्या मृद्वीका कटुरोहिणी ॥ त्रायंतीकणतन्मूलद्राक्षापथ्यामधूलिकाः ॥ त्रिफलोशीरषड्ग्रंथायष्टिमधुबलाघनाः ॥ नागरं पौष्करं मूलं गुडूची कंटकारिका ॥ सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ॥ मधूकपुष्पमृद्वीकात्रायमाणापरूषकं ॥ सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमं ॥ कषायं तं पिबन्काले ज्वरान्सर्वानपोहति ॥ जात्यामलकमुस्तानि तद्वद्धन्वयवासकं ॥ बद्धविट् कटुकाद्राक्षात्रायंतीत्रिफलागुडान् ॥ जीर्णौषधोऽन्नं पेयाद्यमाचरेच्छ्लेष्मवान्न तु ॥ पेया कफं वर्द्धयति पंकं पांसुषु वृष्टिवत् ॥ श्लेष्माभिष्पन्नदेहानामतः प्रागपि योजयेत् ॥ यूषान्कुलत्थचणककलायादिकृतान् लघून् ॥ रूक्षांस्तिक्तरसोपेतान्हृद्यान् रुचिकरान् पटून् ॥ रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः ॥ श्लेष्मोत्तरे वीततुषास्तथा वाटीकृता यवाः ॥ ओदनस्तैः स्रुतो द्वित्रिः प्रयोक्तव्यो यथायथं ॥ दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः ॥ मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ॥ कारवेल्लककर्कोटबालमूलकपर्पटैः ॥ वार्ताकनिंबकुसुमपटोलफलपल्लवैः ॥ अत्यंतलघुभिर्मांसैर्जांगलैश्च हिता रसाः ॥ व्याघ्रीपरूषतर्कारीद्राक्षाऽऽमलकदाडिमैः ॥ संस्कृताः पिप्पलीशुंठीधान्यजीरकसैंधवैः ॥ सितामधुभ्यां प्रायेण संयुता वा कृताकृताः ॥ अनम्लतक्रसिद्धानि रुच्यानि व्यंजनानि च ॥ अच्छान्यनलसंपन्नान्यनुपानेऽपि योजयेत् ॥ तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः ॥ कषायपानपथ्यान्नैर्दशाह इति लंघिते ॥ सर्पिर्दद्यात्कफे मंदे वातपित्तोत्तरे ज्वरे ॥ पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा ॥ दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत् ॥ लं-

---

१ मृष्टविदलीकृताइत्यर्थः

घनादिक्रमं तत्र कुर्यादाकफसंक्षयात् ॥ सज्वरं ज्वरमुक्तं वा दिनांते भोजयेल्लघु ॥ श्लेष्मक्षयविवृद्धोष्माबलवाननलस्तदा ॥ यथोचितेऽथवा काले देशसात्म्यानुरोधतः ॥ प्रागल्पवह्निर्भुंजानो न ह्यजीर्णेन पीड्यते ॥ इति ज्वरचिकित्सितं नाम प्रथमोऽध्यायः ॥ १ ॥

अथातो जीर्णज्वरचिकित्सितं व्याख्यास्यामः ॥ देहधात्वबलत्वेन ज्वरो जीर्णोऽनुवर्तते ॥ रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ॥ वमनस्वेदकालांबुकषायलघुभोजनैः ॥ यः स्यादतिबलो धातुः सहचारी सदागतिः ॥ तस्य संशमनं सर्पिर्दीप्तस्येवांबु वेश्मनः ॥ वातपित्तजितामग्र्यं संस्कारं चानुरुध्यते ॥ सुतरां तद्यतो दद्याद्यथास्वौषधसाधितं ॥ विपरीतं ज्वरोष्माणं जयेत्पित्तं च शैत्यतः ॥ स्नेहाद्वातं घृतं तुल्ययोगसंस्कारतः कफं ॥ पूर्वं कषायाः सघृताः सर्वे योज्या यथामलं ॥ त्रिफलापिचुमंदत्वङ्मधुकं बृहतीद्वयं ॥ समसूरदलं क्वाथः सघृतो ज्वरकासहा ॥ निदिग्धिकातामलकीत्रायमाणाकलिंगकैः ॥कृष्णांऽशुमत्यतिविषाकटुकासेव्यचंदनैः ॥ धात्रीबिल्वघनद्राक्षासारिवाभिश्च साधितं ॥ हंति सद्यो घृतं जीर्णज्वरं कासं हलीमकं ॥ अरुचिं विषमं वह्निं यक्ष्माणं च नवोत्थितं ॥ वासागुडूचीत्रिफलात्रायमाणायवासकान् ॥ क्वाथे क्षीरे च विपचेज्ज्वरघ्नं कल्किनैर्घृतं ॥ पिप्पलीमुस्तमृद्वीकाचंदनोत्पलनागरैः ॥ दुरालभाबलामुस्तात्रायंतीनिंबपर्पटान् ॥ पंचमूलं कनीयश्च क्वाथयित्वा घृतं पचेत् ॥ सक्षीरं कल्किनैर्द्राक्षामेदाऽऽमलकपुष्करैः ॥ शठीतामलकीयुक्तैस्तच्च ज्वरहरं परं ॥ क्षयकासशिरःपार्श्वहृच्छूलांसाभितापनुत् ॥ कुलत्थकोलत्रिफलादशमूलयवान् पचेत् ॥ द्विपलान्सलिलद्रोणे पूते पिष्ट्वाऽक्षकान् क्षिपेत् ॥ पंचकोलकसमाव्हवयस्थानिंबतुंबरु ॥ शठीपुष्करमूलार्कमूलप्रतिविषावचाः ॥ किरातं तिक्तकं मुस्तं कर्कटाख्यां दुरालभां ॥ नक्तमालमुभे पाठे कटुकाशिग्रुतेजनीः ॥ सोमवल्कह्रिर-

जनीकंटकीकंटकारिकाः ॥ पटोलहिंगु गोजिव्हा केंबुकं मदनाज्जटां॥ लवणानि पलांशानि क्षारानर्द्धपलान्वितान् ॥ प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित् ॥ त्दृत्प्लीहग्रहणीगुल्मकासश्वासार्शसां हितं ॥ दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमं ॥ मंजिष्ठाऽनिविषापथ्यावचानागररोहिणीः॥ देवदारु हरिद्रां च द्रोणेऽपां पालिकान् पचेत् ॥ क्वाथेऽस्मिन्साधयेत्पिष्टैर्घृतप्रस्थं पिचून्मितैः ॥ शृंगबेरकणाहिंगुद्विक्षारपटुपंचकैः ॥ तत्कफात्दृतसर्वोत्थज्वरिणाममृतोपमं ॥ वर्ध्महिध्माऽरुचिश्वासकासपांडुविकारिणां ॥ गलग्रंथिप्रमेहार्शःप्लीहापस्मारशोफिनां ॥ उदावर्त्तपरीतानां मंदाग्निक्रिमिकोष्ठिनां ॥ गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च ॥ मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ जीर्णे घृते च भुंजीत मृदुमांसरसौदनं॥पलं ह्यलं दोषहरं परं तच्च बल्यप्रदं ॥ कफपित्तहरा मुद्गकारवेल्लादिजा रसाः॥प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे॥शूलोदावर्त्तविष्टंभजनना ज्वरवर्द्धनाः॥ नशाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनं॥ शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत् ॥ आमाशयगते दोषे बलिनः पालयन्बलं ॥ संतर्पणोत्थे वमनं पिप्पलीलवणांबुना॥ शर्करामाक्षिकांभोभिर्दाहतृष्णोल्बणे ज्वरे ॥ पक्के तु शिथिले दोषे ज्वरे वा विषमद्यजे ॥ मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ॥ ससितामधुभिर्दद्याद्योषाद्यं वा विरेचनं ॥ द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीं ॥ रसमामलकानां वा घृतभृष्टं ज्वरापहं ॥ लिह्याद्वात्रिवृतश्चूर्णं कृष्णात्रिफलयोस्तथा ॥ सर्पिर्मधुभ्यां त्रिफलां पिबेद्द्राक्षारसेन वा ॥ आरग्वधं वा पयसा मृद्वीकानां रसेन वा ॥ त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ सघृतं त्रिफलाक्वाथं सर्पिषा वा विना शृतं ॥ पयोनुपानमुष्णं वा मृद्वीकास्वरसं पिबेत् ॥विरिक्तानां च संसर्गी मंडपूर्वा यथाक्रमं ॥ च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत

१ रसाशनमिति पाठः २ बलमिति पाठः

मलं सदा ॥ पक्कोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः ॥ अति-
प्रवर्तमानं वा पाचयन्संग्रहं नयेत् ॥ आमसंग्रहणे दोषा दोषोपक्रम-
ईरिताः ॥ पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥ प्रसुप्तं कृष्णसर्पं
स कराग्रेण परामृशेत् ॥ ज्वरक्षीणस्य न हितं वमनं न विरेचनं ॥ का-
मं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥ क्षीरोचितस्य प्रक्षीणश्ले-
ष्मणो दाहतृड्वतः ॥ क्षीरं पित्तानिलार्त्तस्य पथ्यमप्यतिसारिणः ॥
तद्धपुर्लंघनोत्तप्तं प्लुष्टं वनमिवाग्निना ॥ दिव्यांबु जीवयेत्तस्य ज्वरं
चाशु नियच्छति ॥ संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ॥
विभज्य काले युंजीत ज्वरिणं हंत्यतोऽन्यथा ॥ पयः सशुंठीखर्जूरमृ-
द्वीकाशर्कराघृतं ॥ शृतशीतं मधुयुतं तृड्दाहज्वरनाशनं ॥ तद्वद्द्राक्षा-
बलायष्टीसारिवाकणचंदनैः ॥ चतुर्गुणेनांभसा वा पिप्पल्या वा शृतं
पिबेत् ॥ कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् ॥ मुच्यते
ज्वरितः पीत्वा पंचमूलीशृतं पयः ॥ शृतमेरंडमूलेन बालबिल्वेन वा
ज्वरात् ॥ धारोष्णं वा पयः पीत्वा विबंधानिलवर्चसः ॥ सरक्तपि-
च्छातिसृतेः सतृट्शूलप्रवाहिकात् ॥ सिद्धं शुंठीबलाव्याघ्रीगोकंट-
कगुडैः पयः ॥ शोफमूत्रशकृद्वातविबंधज्वरकासजित् ॥ वृश्चीवबिल्व-
वर्षाभूसाधितं ज्वरशोफनुत् ॥ शिंशिपासारसिद्धं च क्षीरमाशु ज्वराप-
हं ॥ निरूहस्तु बलं वन्हिं विज्वरत्वं मुदं रुचिं ॥ दोषे युक्तः करोत्या-
शु पक्के पक्काशयं गते ॥ पित्तं वा कफपित्तं वा पक्काशयगतं हरेत् ॥ स्रं-
सनं त्रीनपि मलान्बस्तिः पक्काशयाश्रयान् ॥ प्रक्षीणकफपित्तस्य त्रि-
कपृष्ठकटीग्रहे ॥ दीप्ताग्नेर्बद्धशकृतः प्रयुंजीतानुवासनं ॥ पटोलनिंब-
च्छदनकटुकाचतुरंगुलैः ॥ स्थिराबलागोक्षुरकमदनोशीरवालकैः ॥ प-
यस्यर्द्धोदके क्वाथं क्षीरशेषं विमिश्रितं ॥ कल्कितैर्मुस्तमदनकृष्णाम-
धुकवत्सकैः॥ बस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनं ॥ चतस्रः पर्णि

मर्यष्टीफलोशीरनृपद्रुमान् ॥ क्वाथयेत्कल्कयेद्यष्टीशताह्वाफलिनीफ-
लं॥ मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः ॥ त्रायमाणाऽमृतायष्टी-
मदनांशुमतीद्वयैः॥सबलाचंदनद्रुषैर्जांगलैश्चमृगद्विजैः॥क्वाथे कृतेक्षिपे-
त्पिष्ट्वाफलयष्टीकणाघनं॥ स सद्यो ज्वरहा बस्तिः साज्यक्षौद्रः ससैंध-
वः॥ आम्रादीनां त्वचं शंखं चंदनं मधुकोत्पलं ॥ स्वर्णगैरिकमांजिष्ठा-
मृणालांजनपद्मकं ॥ क्षीरेण कल्कितं बस्तिं शीतं समधुशर्करं॥दाह-
ज्वरहरं दद्यात्सिद्धं तैश्चानुवासनं ॥ जीवंतीं मदनं मेदां पिप्पलीं मधुकं
वचां॥ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीं॥ पिष्ट्वा क्षीरं जलं
सर्पिस्तैलं चैकत्र साधितं ॥ ज्वरेऽनुवासनं दद्याद्यथास्नेहं यथाबलं ॥
चंदनागुरुकाश्मर्यपटोलमदनोत्पलैः ॥ पटोलारिष्टमदनगुडूचीमधुकै-
रपि ॥ ये च सिद्धिषु वक्ष्यंते बस्तयो ज्वरनाशनाः ॥ शिरोरुग्गौरव-
श्लेष्महरमिंद्रियबोधनं॥ जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनं॥ स्ने-
हिकं शून्यशिरसो दाहार्त्तौ पित्तनाशनं॥ धूमगंडूषकवलान्यथादोषं च
कल्पयेत् ॥ प्रतिश्यायास्यवैरस्यशिरःकंठामयापहान् ॥ अरुचौ मातु-
लुंगस्य केसरं साज्यसैंधवं ॥ धात्रीद्राक्षासितानां वा कल्कमास्येन धा-
रयेत्॥ यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान् ॥ अभ्यंगालेपसे-
कादीन्ज्वरे जीर्णे त्वगाश्रिते॥कुर्यादंजनधूपांश्च तथैवागंतुजेऽपि तान्॥
दाहे सहस्रधौतेन सर्पिषाऽभ्यंगमाचरेत् ॥ सूत्रोक्तैश्च गणैस्तैस्तैर्मधुरा-
म्लकषायकैः ॥ दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः ॥ शीतवी-
र्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत् ॥ तैलं सक्षीरमभ्यंगात्सद्यो दाह-
ज्वरापहं ॥ चंदनं मधुकं काला द्राक्षा मधुरसा निशा ॥ तत्सिद्धं पूर्वव-
त्तैलं दाहज्वरहरं परं ॥ शिरोगात्रं च तैरेव नातिपिष्टैः प्रलेपयेत् ॥ त-
त्क्वाथेन परीषेकमवगाहं च योजयेत् ॥ तथाऽऽरनालसलिलक्षीरशुक्त-
घृतादिभिः ॥ कपित्थमातुलुंगाम्लविदारीरोध्रदाडिमैः ॥ बदरीपल्लवो-
त्थेन फेनेनारिष्टकस्य वा ॥ कर्पूरपद्मकोशीरकालीयांबुदचंदनैः ॥ मुं-

गप्रियंगुशैवालकमलोत्पलकर्दमैः ॥ वेत्राग्रशेध्रपुंड्राह्वैशारनालेनकल्कितैः॥ लेपा न्यस्तैः समस्तैर्वा दाहघ्ना वर्णकारिणः ॥ धात्रीत्वक्पत्रनलदशंखन्याग्रनखोत्पलैः ॥ चंदनांजनमुस्तैश्च सवृक्षाम्लाम्लवेतसैः ॥ सजीवकैः समधुकैः सपलाशैः सदाडिमैः ॥ बीजपूररसक्षौद्रशुक्तयुक्तैः प्रलेपितैः ॥ शिरस्यंगे च तृट्छर्दिदाहमोहशिरोरुजः ॥ नश्यंति गंडाः पिडकाः प्रलापश्च ज्वरार्तिजः ॥ गौरामलककल्कश्च साम्लः साज्यश्च तद्गुणः ॥ मधूकमधुकोदीच्यनीलोत्पलमधूलिकाः ॥ जयंति मधुसर्पिर्भ्यां लीढा दाहज्वरभ्रमान् ॥ कासासृक्पित्तवीसर्पश्वासहिध्मावमीरपि ॥ वम्यं च वामयेदाशु शीतेन मधुवारिणा ॥ यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः ॥ तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः ॥ वल्लकी मधुरं गीतं चंद्रिका हर्म्यमस्तकं ॥ हरंति दाहं दाराश्च हरिचंदनशीतलाः ॥ दाहं मंदानिलोद्धूताः कुल्याः सलिलमालिनः ॥ चलत्प्रवालांगुलिभिस्तर्जयंति महाद्रुमाः ॥ वाचः शिशूनामव्यक्ता योषितां मदनातुराः ॥ दाहं निर्भर्त्सयंत्याशु सज्जनानां च सूनृताः ॥ रुचिभेदानुरोधेन नानाशक्तिसमन्वितः ॥ दाहशीतज्वरहरः कांतकांतांगसंगमः ॥ दाहशीतव्युपशमे तास्ततोऽपनयेत्पुनः ॥ वीर्योष्णैरुष्णसंस्पर्शैस्तगरागुरुकुंकुमैः ॥ कुष्ठस्थौणेयशैलेयसरलामरदारुभिः ॥ नखरास्नापुरवचाचंडैलाद्वयचोरकैः ॥ पृथ्वीकाशिग्रुसुरसाहिंस्राध्यामकसर्षपैः ॥ दशमूलामृतैरंडद्वयपत्तूररोहिषैः ॥ तमालपत्रभूतीकसल्लकीधान्यदीप्यकैः ॥ मिशिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः ॥ अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् ॥ कथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः ॥ तेनाभ्यज्यात्सुखोष्णेन तैः प्रपिष्टैश्च लेपयेत् ॥ कवोष्णैस्तैः परीषेकमवगाहं च कल्पयेत् ॥ केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः ॥ कुंकुमागुरुकस्तूरीनखैलासुरदारुभिः ॥ शैलेयचंडात्वङ्मुस्तरास्नाकपिवचान्वयैः ॥ पृथक्प्रदेहाः सर्वैर्वा शीतघ्ना दृढकल्कि-

ता: ॥ यवचूर्णं घृताभ्यक्तं पचेत्क्षीरे चतुर्गुणे ॥ दर्वीप्रलेपनं लेपं ज्वरार्तस्य प्रयोजयेत् ॥ आरग्वधादिवर्गं च पानाभ्यंजनलेपने ॥ धूपानगुरुजान् यांश्च वक्ष्यंते विषमज्वरे ॥ अग्न्यनग्निकृतान्स्वेदान्स्वेदि भोजनभेषजं ॥ संसर्गबलयोगे च वातश्लेष्मनिबर्हणं ॥ गर्भभूवेश्मशयनं कुथकंबलरल्लकान् ॥ निर्धूमदीप्तैरंगारैर्हसंतीश्च हसंतिकाः ॥ मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ॥ भजेत्प्रकंपंस्तद्युक्तान्यच्चान्यदपि पित्तलं ॥ अजाज्याः सगुडं कल्कं सगुडं वाऽमृतारसं ॥ रसं वार्ताकफलजं पिबेद्वा मधुसंयुतं ॥ मधुकागुरुकौंतीनां कल्को व्याघ्रनखस्य च ॥ मद्येन पीतः सक्षौद्रस्तीव्रशीतज्वरापहः ॥ आनाहे कालवित्कुर्यात्क्रियामलसकोदितां ॥ पिप्पलीपिप्पलीमूलयवानीचव्यसाधितां ॥ यवागूं पाययेच्चैवमनिलस्यानुलोमनीं ॥ सोपद्रवोऽपि चेदेवं ज्वरः शीतो न शाम्यति ॥ अभ्युदीर्णे ऽनिलकफे स्वस्थाने पित्तधाम्नि वा ॥ तक्रानुपानं त्रपुसं भक्षयित्वाऽनलं भजन् ॥ आस्वेदसंभवात्तिष्ठेत्प्रावृतस्तद्वदातपं ॥ ततो विमृदितः स्नातो युक्ताशी स्याद्गते ज्वरे ॥ शमंतो पित्तवृत्थ्यैव प्रपद्येते स्वधाम च ॥ निवर्तते ततः शीघ्रं वातश्लेष्मोद्भवो ज्वरः ॥ स्वर्जिकाकुष्ठमंजिष्ठालाक्षामूलनिशौषधैः ॥ सतक्रैः साधितं तैलमभ्यंगाद्दाहशीतजित् ॥ वमनैश्च विरेकैश्च बस्तिभिश्च यथाक्रमं ॥ ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान्संसृष्टैः सन्निपतितैरेकानेकोल्बणैः समैः ॥ ज्वरान्दोषैः क्रमापेक्षी यथोक्तैरोषधैर्जयेत् ॥ वर्द्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ॥ कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ॥ निद्रानिवारणोपायः सन्न्यासाभिहितो हितः ॥ सन्निपाते विशेषेण दारुणोऽयमुपद्रवः ॥ सन्निपातज्वरस्यांते कर्णमूले सुदारुणः ॥ शोफः संजायते येन कश्चिदेव विमुच्यते ॥ रक्तावसेचनैः शीघ्रं सर्पिः पानैश्च तं जयेत् ॥ प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥ शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न

शाम्यति ॥ शाखानुसारी तस्याशु मुंचेद्वाह्वोः क्रमाच्छिरां ॥ अयमेव विधिः कार्यो विषमेऽपि यथायथं ॥ ज्वरे विभज्य वातादीन्यश्चानंतरमुच्यते ॥ पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ॥ त्रिचतुःपंचशः क्वाथा विषमज्वरनाशनाः ॥ योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलीं पृथक् ॥ तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा ॥ लंघनं बृंहणं वापि ज्वरागमनवासरे ॥ प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतं ॥ जीर्णंतद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलं ॥ कल्याणकं पंचगव्यं तिक्ताख्यं वृषसाधितं ॥ पंचगव्यस्य महतो विधिना पंचमाहिषं ॥ पंचाजं चतुरौष्ट्रं च सिद्धं सिद्धघृतं तथा ॥ कटुरोहिणिमंजिष्ठापृथुग्रंथिकचित्रकैः॥ पाठात्वगुसाह्विनिशैः पंचगव्यस्य पंचसु ॥ प्रस्थेषु संयुतैः सेव्यं विषमज्वरजित्परं ॥ वाक्स्वरस्मृतिमेधाग्निबलारोग्यविबंधकृत् ॥ कोलाग्निमंथत्रिफलाक्वाथे दध्ना घृतं पचेत् ॥ तिल्वकावापमेतच्च विषमज्वरनाशनं ॥ गुडक्षीरघृतक्षौद्रसिताकृष्णाः खजाहताः ॥ विषमज्वरहृद्रोगक्षतकासक्षयापहाः ॥ सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजं ॥ मांसं मेद्योष्णवीर्यं च सहान्नेन प्रकामतः ॥ सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत् ॥ सर्पिषो महतीं मात्रां पीत्वा प्रच्छर्दयेत्पुनः ॥ नीलिनीमजगंधां च त्रिवृतां कटुरोहिणीं ॥ पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ आस्थापनं वा तदहर्दद्यात्स्विन्नस्य यापनं ॥ पयसा वृषदंशस्य शकृद्वा तदहः पिबेत् ॥ मस्तुना वा वृषशकृत्सुरया वा ससैंधवं ॥ मनोह्वा सैंधवं कृष्णा तैलेन नयनांजनं ॥ योज्या हिंगुसमा व्याघ्री वसा नस्ये ससैंधवा ॥ पुराणसर्पिः सिंहस्य वसा तद्वत्ससैंधवा ॥ पलंकषा निंबपत्रं वचा कुष्ठं हरीतकी ॥ सर्षपाः सयवाः सर्पिर्धूमो विड्वा बिडालजा ॥ पुरध्यामवचास

१ क्षयचिकित्सितोक्तं २ उन्मादप्रतिषेधोक्तं ३ अपस्मारप्रतिषेधोक्तं ४ कुष्ठचिकित्सितोक्तं ५ रक्तपित्तचिकित्सितोक्तं

जैर्निंबार्कागुरुदारुभिः ॥ धूमो ज्वरेषु सर्वेषु प्रयोक्तव्योऽपराजितः॥ स हृद्वेवाव चाभद्रानाकुलीभिः प्रयोजयेत् ॥ धूपनोद्दर्तनालेपान्सर्वज्वरनिबर्हणान् ॥ धूपनस्यांजनोत्त्रासा ये चोक्ताश्चित्तवैकृते ॥ दैवाश्रयं च भैषज्यं ज्वरान्सर्वानपोहति ॥ विशेषाद्विषमान्प्रायस्ते ह्यागंत्वनुबंधजाः ॥ यथास्वं च सिरां विध्येदशांतौ विषमज्वरे ॥ रसंसंस्थे तु सर्वस्मिन्कुर्याद्वमनलंघने ॥ सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते ॥ तीक्ष्णान् विरेकान्मांसस्थे मेदोघ्नं मेदसि स्थिते ॥अस्थिस्थे वातशमनमभ्यंगस्वेदमर्दनं ॥ ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च ॥ केवलानिलवीसर्पविस्फोटाभिहतज्वरे ॥ सर्पिः पानं हिमालेपसेकमांसरसाशनं ॥ कुर्याद्यथास्वमुक्तं च रक्तमोक्षादिसाधनं ॥ ग्रहोत्थे भूतविद्योक्तं बलिमंत्रादिसाधनं ॥ औषधीगंधजे पित्तविषघ्नैर्विषजिद्विषे ॥ इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च ॥ हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् ॥ क्रोधजो याति कामेन शांतिं क्रोधेन कामजः॥ भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां नथेतरौ ॥ शापाथर्वणमंत्रोत्थे विधिर्दैवव्यपाश्रयः ॥ ते ज्वराः केवलाः पूर्वं व्याप्यंतेऽनंतरं मलैः ॥ तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत् ॥ न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विना कृतः ॥ कथास्त्रिवर्गसंयुक्ता रुङ्निद्रादिविनोदिनीः ॥ शस्ता विचित्राः शृणुयान्न प्रेतव्याधिताश्रयाः ॥ ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत् ॥ त्यजेदाबललाभाच्च व्यायामस्नानमैथुनं ॥ गुर्वसात्म्यविदाह्यन्नं यच्चान्यज्ज्वरकारणं ॥ न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्तथा ॥ निवृत्तो हि ज्वरः शीघ्रं व्यापादयति दुर्बलं ॥ सद्यःप्राणहरो यस्मात्तस्मात्तस्य विशेषतः ॥ तस्यां तस्यामवस्थायां कुर्यात्तत्तद्भिषग्जितं ॥ मनोऽभिरामा विषया वचनं ल्हादि दक्षिणं ॥ करुणार्द्रं मनः

१ अत्र मज्जस्थशुक्रस्थयोरसाध्यत्वात्तत्र चिकित्सा नोक्ता २ सर्वान्नीनस्तु सर्वान्नभोजीत्यमरः

शुद्धं सर्वज्वरनिषूदनं ॥ मातरं पितरं देवान्वैद्यान्विप्रान् हरं हरिं ॥ पूजयेच्छीलयेद्दानदमसत्यदयार्जवान् ॥ धारयेच्च शुचिर्मूर्ध्नी मणिरत्नमहौषधीः ॥ आर्यावलोकितं चार्यां शबरीमपराजितां ॥ प्रणमेदार्यतारां च सर्वज्वरनिवृत्तये ॥ जपं तथागतोष्णीषं सर्वव्याधिचिकित्सितं ॥ आगंतुदोषसहजैः सर्वरोगैर्विमुच्यते ॥ ॥ इति जीर्णज्वरचिकित्सितं नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः ॥ ऊर्ध्वगं बलिनो वेगमेकदोषानुगं नवं ॥ रक्तपित्तं सुखे काले साधयेन्निरुपद्रवं ॥अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगं ॥ शांतं शांतं पुनः कुप्यन्मार्गान्मार्गांतरं च यत् ॥ अतिप्रवृत्तं मंदाग्नेस्त्रिदोषं द्विपथं त्यजेत् ॥ ज्ञात्वा निदानमयनं मलावनुबलौ बलं ॥ देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् ॥ लंघनं बृंहणं चादौ शोधनं शमनं तथा ॥ संतर्पणोत्थं बलिनोबहुदोषस्य साधयेत् ॥ उर्ध्वमार्गं विरेकेण वमनेन त्वधोगतं ॥ शमनैर्बृंहणैश्चान्यल्लंघ्यबृंह्यानपेक्ष्य च ॥ ऊर्ध्वे प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ॥ उपवासश्च निःशुंठीषडंगोदकपायिनः ॥ अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः॥ ऊर्ध्वगे तर्पणं योज्यं पेया पूर्वमधोगते ॥ अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ॥ धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ॥ त्रिवृत्तात्रिफलाधात्रीत्रायंत्यारग्वधाभयाः ॥ गवाक्षीक्षुरसक्षीरद्राक्षाक्षौद्रसितोत्कटाः ॥ यथास्वं कल्पविहिता विरेकार्थं प्रयोजयेत् ॥ त्रिवृच्छ्यामाकषाये[illegible] कल्केन च सशर्करं ॥ साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः ॥ त्रिफलात्रिवृताश्यामापिप्पलीशर्करामधु ॥ मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः ॥ त्रिवृत्समसिता तद्वत्पिप्पलीपादसंयुता ॥ वमनं फलसंयुक्तं तर्पणं ससितामधु ॥ ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकं ॥

१ पर्णशबरीमितिपाठः

फलैंद्रयवगांगेयीमधुकं वा समाक्षिकं ॥ क्षीरं वा रसमिक्षोर्वा शुद्धस्यानंतरो विधिः ॥ यथास्वं मंथपेयादिः प्रयोज्यो रक्षता बलं ॥ मंथो ज्वरोक्तो द्राक्षादिः पित्तघ्नैर्वा फलैः कृतः ॥ मधुखर्जूरमृद्वीकापरूषकसितांभसा ॥ मंथो वा पंचसारेण सघृतैर्लाजसक्तुभिः ॥ दाडिमामलकाम्लो वा मंदाग्न्यम्लाभिलाषिणः ॥ कमलोत्पलकिंजल्कपृश्निपर्णीप्रियंगुकाः ॥ उशीरं शाबरं रोध्रं शृंगबेरं कुचंदनं ॥ ह्रीबेरधातकीपुष्पबिल्वमध्यदुरालभाः ॥ अर्द्धार्द्धैर्विहिताः पेया वक्ष्यंते पादयोगिकाः ॥ भूनिंबसेव्यजलदाश्चंदनांबुप्रियंगवः ॥ शालिपर्ण्या युता मुद्गाः पृश्निपर्ण्या मसूरिकाः ॥ तुवर्या वाऽतिबलया बलया वा हरेणवः ॥ तत्कषाये हिताः पेया मांसपेयास्तथा रसाः ॥ अनम्लाः किंचिदम्ला वा सघृतक्षौद्रशर्कराः ॥ शूकशिंबीभवं धान्यं शाकं मांसं च शस्यते ॥ अन्नस्वरूपविज्ञाने यदुक्तं लघुशीतलं ॥ पूर्वोक्तमंबुपानीयं पंचमूलेन वा शृतं ॥ लघुना शृतशीतं वा मध्वंभो वा फलांबु वा ॥ पद्मकाद्युत्पलादी च सारिवादिं च कल्पयेत् ॥ अन्नपाने गणं तद्वद्दशकं दाहनाशनं ॥ कफानुगे यूषशाकं मारुतानुगते रसं ॥ अभीरोरंकुरैर्लावाः सह मुद्गाः पटोलजैः ॥ मकुष्टा धन्वयासोत्थैरस्रपित्ते परं मताः ॥ शशः सवास्तुकः शस्तो विबंधे तित्तिरिः पुनः॥उदुंबरस्य निर्यूहे साधितो मारुतेऽधिके ॥प्लक्षस्यबर्हिणस्तद्वन्न्यग्रोधस्य तु कुक्कुटः॥बिसोत्पलमृणालानां वर्तकक्रकरौ हितौ॥वार्तीरोंऽभोजनाला‑नामश्वत्थस्य कपिंजलः॥यत्किंचिद्रक्तपित्तस्य निदानं तच्च वर्जयेत्॥ वासारसेन फलिनीमृद्रोध्रांजनमाक्षिकं ॥पित्तासृक् शमयेत्पीतं निर्यासो वाऽटरूषकात् ॥ शर्करामधुसंयुक्तः ॥ केवलो वा शृतोऽपि वा ॥ वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधं ॥ वासारसेन भूनिंबकटुकाशर्कराः पिबेत् ॥ तेनैव वा क्षौद्रयुतं पद्मकेसरपद्मकं ॥ सरोध्रनाग‑

१ महाकषायसंग्रहोक्तंपद्मकलाजाशीरमित्यादि

कुसुमशाद्वलोत्पलवास्तुकं ॥ लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतां र-
सं ॥ पथ्या रजन्यहिंस्रा वा पलांडुं तद्वदेव वा ॥ फलिनीरोध्रखदिर-
शाल्मलीकोविदारजं ॥ शिरीषशेलुककुभसिंदुवारातिमुक्तकं ॥ पला
शयूथिकाशिग्रुमधूकासनजन्म च ॥ मधुना चूर्णितं पुष्पमेकत्र पृथगे
व वा ॥ पुष्पैरेभिः प्रपक्कं च सक्षौद्रं माहिषं घृतं ॥ लिह्यात्क्षौद्रेण प-
थ्यां वा किंजल्कं कमलस्य वा ॥ लाजाः शृंगाटकं मुक्तां खर्जूरं कृ-
ष्णमृत्तिकां ॥ क्षीरवृक्षांकुरान् द्राक्षां तवक्षीरीं सितोपलां ॥ गैरिकं-
मधुकं रोध्रं शंखं शंबुकमंजनं ॥ तंदुलीयकमूलं वा बीजं वा वास्तुको-
द्भवं ॥ पटोलमालतीनिंबचंदनद्वयपद्मकं ॥ रोध्रो वृषस्तंदुलीयः कृ-
ष्णा मृन्मदयंतिका ॥ शतावरी गोपकन्या काकोल्यौ मधुयष्टिका ॥
रक्तपित्तहराः क्काथास्त्रयः समधुशर्कराः ॥ सक्षौद्रं ग्रथिते रक्ते लिह्या-
त्पारावताच्छकृत् ॥ अतिनिस्रुतरक्तो वा क्षौद्रेण रुधिरं पिबेत् ॥ जां
गलं भक्षयेद्वाजमांसं पित्तयुतं यकृत् ॥ रोध्रकालीयकोशीरफलिनीशं
खगैरिकं ॥ पटोलपत्रं दुःस्पर्शा समंगा सारिवा लता ॥ त्वग्जंबुवेतसा
श्वत्थद्वयाह्वोदुंबरार्जुनात् ॥ किराततिक्तक्रमुकमुस्ताकट्फलपद्मकं ॥
प्रपौंडरीकह्रीबेरकमलोत्पलपर्पटं ॥ चंदनेन पृथग्युक्तं समस्तं वा सश-
र्करं ॥ फांटीकृतं शृतं शीतं चूर्णं वा तंदुलांभसा ॥ पीतमाशु जयत्यस्रं
तृड्दाहतमकानपि ॥ चंदनोशीरनलदलाजमुद्गकणायवैः ॥ बलाजले
पर्युषितैः कषायो रक्तपित्तहा ॥ प्रसादश्चंदनांभोजसेव्यमृद्भृष्टलोष्टजः
॥ सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित् ॥ तद्वदच्छः सितारो
ध्रमधुकोशीरचंदनान् ॥मृच्छामासारिवामुस्तधातकीयष्टिकान्वितान्॥
वैदूर्यमुक्तामृच्छंखगैरिकामलकोदकं ॥ मधूदकं रसं चेक्षोः पिबन्जय
ति शोणितं ॥ आपोथ्य वा नवे कुंभे प्लावयेदिक्षुगंडिकाः ॥ स्थितं त-
द्रुममाकाशे रात्रिं प्रातः स्रुतं जलं ॥ मधुमद्विकचांभोजकृतोत्तंसं च

तद्गुणं॥त्रपुसीमूलकल्कं वा सक्षौद्रं तंदुलांबुना ॥ पिबेत्करंजबीजं वा तेन क्षौद्रसितायुतं ॥ रोध्रचंदनयष्ट्याह्वं तेन यष्ट्याह्वमेव वा ॥ नीलोत्पलं सितायष्टीमधुकं पद्मकेसरं ॥ छिन्नोद्भवा च शीतोऽयं कषायो रक्तपित्तजित् ॥ ये च पित्तज्वरे प्रोक्ताः कषायास्तांश्च योजयेत्॥ कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ॥ रक्तपित्ते न चेच्छाम्येत्त त्र वातोल्बणे पयः ॥ युंज्याच्छागं शृतं तद्वद्गव्यं पंचगुणेऽम्भसि ॥ पंचमूलेन लघुना शृतं वा ससितामधु ॥ जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः॥पृथक् पृथक् शृतं शीतं सघृतं सितयाऽथवा ॥ क्षीरेण वमनीपुष्पं मधुकं मधुशर्करां॥गोकंटकाभीरुशृतं पर्णिनीभिस्तथा पयः॥हंत्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगं ॥ विण्मार्गगे विशेषेण हितं मोचरसेन तु॥ वटप्ररोहैः शुंगैर्वा शुंठ्युदीच्योत्पलैरपि ॥ रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत् ॥ पीत्वा कषायान्पयसा भुंजीत पयसैव तु॥कषाययोगैरेभिर्वा विपक्कं पाययेद्घृतं ॥ समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि॥ पक्त्वाऽष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितं ॥ पित्तगुल्मज्वरश्वासकासहृद्रोगकामलाः ॥ तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ॥ पलाशवृंतस्वरसे तद्गर्भं च पचेद्घृतं ॥ सक्षौद्रं तच्च रक्तघ्नं तद्वद्वत्सकसाधितं॥ रोध्रोत्पलसमंगाभिस्तथैव त्रायमाणया ॥ लाजगोधूममधुकसिताचूर्णं पयोद्रवं ॥ घृतेनोत्कारिकां कृत्वा खादेत्पित्तास्रवारिणीं ॥ रक्ते सपिच्छे सकफे ग्रथिते कंठमार्गगे ॥ लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजं ॥ मृणालांभोजकिंजल्कश्यामासनमधूकजं ॥ तद्वत्पृथक्पृथक्क्षारं घृतं क्षीरेण साधयेत् ॥ पिष्टैरभीरुकाकोलीमेदाद्राक्षाम्लदाडिमैः ॥ फलपूरकमूलेन विदार्या मधुकेन च ॥ तद्विबंधज्वरानाहशूलकासास्रपित्तजित् ॥

१ कारणानुविधायित्वात्कार्याणां तत्स्वभावतेत्युक्तत्वाद्रक्तपित्ते उत्पलनालजक्षारप्रयोगो युक्तएव.

पंचभिः पंचमूलैश्च सिद्धमाज्यं तदर्थकृत् ॥ गुदागमे विशेषेण शोणिते बस्तिरिष्यते ॥ मधुकांजनमंजिष्ठामृणालोत्पलगैरिकैः॥ सुवर्णरोध्रकालीयसमंगाऽऽम्रांबुचंदनैः ॥ सौगंधिकसिताशंखैः पिष्टैर्मधुघृतान्वितैः ॥ क्षीरेणास्थापयेदेनं स्नानं च शिशिरांभसा ॥ क्षीरेणैवाशयेच्छालींस्ततो मधुकसर्पिषा ॥ कालेऽनुवासयेदेवमतिसारेऽपि दुस्तरे ॥ जीर्णेऽसृक्प्रबले कुर्याद्विरेके चातियोगिनि ॥ विदार्यादिगणेनेष्टं शृतं वाऽऽस्थापने पयः ॥ सक्षौद्रशर्करासर्पिः सर्पिश्चैवानुवासने ॥ मूत्राशयस्थं शमयेद्रक्तमुत्तरबस्तिभिः ॥ ईदृशैरेव तद्वच्च प्रदरेऽपि विधिः स्मृतः ॥ छेदभेदादिभिश्चातिप्रवृत्ते शुद्धशोणिते ॥ विशेषात्प्रदरस्योक्तं योनिरोगेषु चौषधं ॥ घ्राणगे रुधिरे शुद्धे नावनं चानुसेचयेत् ॥ कषाययोगान्पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान् ॥ क्षीरादीन् ससितांस्तोयं केवलं वा हितं जलं ॥ रसो दाडिमपुष्पाणामाम्रास्थ्नः शाद्वलस्य च ॥ कल्पयेच्छीतवर्गं च प्रदेहाभ्यंजनादिषु ॥ यच्च पित्तज्वरे प्रोक्तं बहिरंतश्च भेषजं ॥ रक्तपित्ते हितं तच्च क्षतक्षीणाहितं च यत् ॥ इति रक्तपित्तचिकित्सितं नाम तृतीयोऽध्यायः ॥ ३ ॥

अथातः कासचिकित्सितं व्याख्यास्यामः ॥ केवलानिलजं कासं स्नेहैरादावुपाचरेत् ॥ वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥ लेहैर्धूमैस्तथाऽभ्यंगस्वेदसेकावगाहनैः ॥ बस्तिभिर्बद्धविड्वातं सपित्तं तूर्ध्वभक्तकैः ॥ घृतैः क्षीरैश्च सकफं जयेत्स्नेहविरेचनैः ॥ गुडूचीकंटकारीभ्यां पृथक् त्रिंशत्पलाद्रसे ॥ प्रस्थः सिद्धो घृताद्वातकासहृद्वन्हिदीपनः ॥ क्षाररास्नावचाहिंगुपाठायष्ट्याव्हधान्यकैः ॥ द्विशाणैः सर्पिषःप्रस्थं पंचकोलयुतैः पचेत्॥दशमूलस्य निर्यूहे पीतो मंडानुपायिना ॥ सश्वासकासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ॥काश्मर्यत्रिफलाव्योषशठीद्राक्षापरूषकं ॥ द्वे पाठे देवदार्वृद्धिस्वगुप्ताऽग्निकगोक्षुरु ॥ व्याघ्री तामलकी मेदा काकनासा शतावरी ॥ विदारी च घृतप्रस्थः कर्षांशैस्तैर्विपाचि-

तः ॥ क्षीरेण च जयत्याशु ज्वरकासहलीमकान् ॥ गुल्मारुचियकृत्प्लीहशिरोहृत्पार्श्ववेदनाः ॥ कामलार्शोऽनिलाष्ठीलाक्षतशोफक्षयांश्च सः ॥ द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ॥ पलोन्मिता द्विकुडवं कुलत्थं बदरं यवं ॥ तुलार्द्धं चाजमांसस्य तेन साध्यं घृताढकं ॥ समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ॥ प्रयुक्तं वातरोगेषु पाननावनबस्तिभिः ॥ पंचकासांश्छिरःकंपं योनिवंक्षणवेदनां ॥ सर्वांगैकांगरोगांश्च सप्लीहोर्ध्वानिलान्जयेत् ॥ विदार्यादिगणक्वाथकल्कसिद्धं च कासजित् ॥ अशोकबीजक्षवकजंतुघ्नांजनपद्मकैः ॥ सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृताप्लुतं ॥ लिह्यात्पयश्चानुपिबेदाजं कासातिपीडितः ॥ विडंगं नागरं रास्नापिप्पलीहिंगुसैंधवं ॥ भार्ङ्गिक्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥ सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ॥ दुरालभां शृंगबेरं शठीं द्राक्षां सितोपलां ॥ लिह्यात्कर्कटशृंगीं च कासे तैलेन वातजे ॥ दुःस्पर्शां पिप्पलीं मुस्तं भार्ङ्गिं कर्कटकीं शठीं ॥ पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ॥ तद्वत्सकृष्णां शुंठीं च सभार्ङ्गीं तद्वदेव च ॥ पिबेत्कृष्णां च कोष्णेन सलिलेन ससैंधवां ॥ मस्तुना ससितां शुंठीं दध्ना वा कणरेणुकां ॥ पिबेद्वदरमज्जां वा मदिरादधिमस्तुभिः ॥ अथवा पिप्पलीकल्कं घृतभृष्टं ससैंधवं ॥ कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत् ॥ हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥ ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान् ॥ रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धिनान् ॥ यवानीपिप्पलीबिल्वमध्यनागरचित्रकैः ॥ रास्नाऽजाजीपृथक्पर्णीपलाशशठिपौष्करैः ॥ सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ॥ कटीहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशिनीं ॥ दशमूलरसे तद्वत्पंचकोलगुडान्वितां ॥ पिबेत्समतिलां पेयां क्षैरेयीं वा ससैंधवां ॥ मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैंधवां ॥ वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः ॥ कंटकार्याः फलं पत्रं बालं शुष्कं च मूलकं ॥

स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥ दधिमस्त्वारनालांबुफलाम्लमदिराः पिबेत् ॥ पित्तकासे तु सकफे वमनं सर्पिषा हितं ॥ तथा मदनकाश्मर्यमधूकक्वथितैर्जलैः ॥ फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥ पित्तकासे तनुकफे त्रिवृतां मधुरैर्युतां ॥ युंज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥ हृतदोषो हिमं स्निग्धं स्वादु संसर्जनं भजेत् ॥ घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितं ॥ पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधं ॥ लाजामृतफलाद्राक्षात्वक्क्षीरीपिप्पलीसिताः ॥ दुःस्पर्शा कर्कटी शुंठी शठी द्राक्षा फल्गु शिवा ॥ निदिग्धिका मूलफलं वटबीजं रसांजनं ॥ खर्जूरं पिप्पली वांशी श्वदंष्ट्राचेति पंच ते ॥ घृतक्षौद्रयुता लेह्याः श्लोकार्द्धैर्पित्तकासिनां ॥ पयोनुपानां शृंगीं वा लिह्यात्साज्यसितामधुं ॥ लेहः पित्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः ॥ सकफे साब्दमरिचः सघृतः सानिले हितः ॥ मृद्वीकार्द्धशतं त्रिंशत्पिप्पलीः शर्करापलं ॥ लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसं ॥ त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ॥ लाजमुस्तशठीरास्नाधात्रीफलबिभीतकैः ॥ शर्कराक्षौद्रसर्पिर्भिर्लेह्यो हृद्रोगकासहा ॥ पिप्पल्यामलकीद्राक्षालाजलाक्षासितोपलाः ॥ संचूर्ण्य पक्वाः पयसा लिह्यात्क्षौद्राष्टभागिकाः ॥ विदारीक्षुमृणालानां रसान् क्षीरं सितोपलां ॥ पिबेत् क्षौद्रेण संयोज्य पित्तकासमपोहति ॥ मधुरैर्जांगलरसैर्यवश्यामाककोद्रवाः ॥ मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः ॥ शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥ शर्करांभोऽनुपानार्थं द्राक्षेक्षुस्वरसः पयः ॥ काकोलीबृहतीमेदाद्वयैः सवृषनागरैः ॥ पित्तकासे रसक्षीरपेयायूषान्प्रकल्पयेत् ॥ द्राक्षां कणां पंचमूलं तृणाख्यं च पचेज्जले ॥ तेन क्षीरं शृतं शीतं पिबेत्समधुशर्करं ॥ साधितां तेन पेयां वा सुशीतां मधुनान्वितां ॥ शठीह्रीबेरबृहतीशर्कराविश्वभेषजं ॥

पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्च्छितं ॥ महिष्यजावीगोक्षीरधात्री फलरसैः समैः ॥ सर्पिः सिद्धं पिबेत्तद्वन्मधुरेण गणेन वा ॥ क्वाथीकृते-नेक्षुरसं क्षीरयुक्तेन साधितं ॥ सशर्करं पिबेत्प्रातर्लिह्याद्वा माक्षिकान्वि-तं ॥ क्षीरिवृक्षांकुरक्काथे पक्कं क्षीरसमं घृतं ॥ पाययेत् पित्तकासार्तं म-धुना वाऽवलेहयेत् ॥ मेदां विदारीं काकोलीं स्वयंगुप्ताफलं बलां ॥ शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभां ॥ कल्कीकृत्य पचेत्सर्पिः क्षी-रेणाष्टगुणेन तत् ॥ पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥ लिह्या-द्वा चूर्णमेतेषां कषायमथवा पिबेत् ॥ कफकासी पिबेदादौ सुरकाष्ठा-त्प्रदीपितान् ॥ स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितं ॥ स्निग्धं विरेच-येदूर्ध्वमधो मूर्ध्नि च युक्तितः ॥ तीक्ष्णैर्विरेकैर्बलिनं संसर्गीं चास्य यो-जयेत् ॥ यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः ॥ कासमर्दकवार्ताक-व्याघ्रीक्षारकणान्वितैः ॥ धान्वबैलरसैः[1] स्नेहैस्तिलसर्षपनिंबजैः॥ दशमू-लांबु घर्मांबु मद्यं मध्वंबु वा पिबेत् ॥ मूलैः पौष्करशम्याकपटोलैः सं-स्थितं निशां ॥ पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ॥ पिप्प-ली पिप्पलीमूलं शृंगबेरं बिभीतकं ॥ देवदार्वभया मुस्तं पिप्पली वि-श्वभेषजं ॥ गुडूची पिप्पली भार्ङ्गी शृंगी कर्कटकस्य च ॥ व्योषदा-रुविडंगानि त्रिफलाशर्कराबलाः ॥ निदिग्धिकाया मूलत्वङ्मरिचैः स-ह योजिताः ॥ शिखिकुक्कुटपिच्छानां मषी क्षारो यवोद्भवः ॥ विशा-ला पिप्पली मुस्तं त्रिवृता च मधुद्रवाः ॥ कफकासहरा लेहाः सप्त श्लोकार्द्धयोजिताः ॥ मधुना मरिचं लिह्यान्मधुनैव च जोंगकं ॥ पृ-थग्रसांश्च मधुना व्याघ्रीवार्ताकभृंगजान् ॥ कासघ्नस्याश्वशकृतः सुर सस्यासितस्य च ॥ देवदारुशठीरास्नाकर्कटाख्या दुरालभाः ॥ पिप्प-ली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥ मधुतैलयुतावेतौ लेहौ वा तानुगे कफे ॥ विडंगं सैंधवं हिंगु कुष्टं व्योषं मनःशिलां ॥ कासे श्वा-

१ जांगलबिलेशयरसैः

से च हिध्मायां लिह्यात्क्षौद्रघृतप्लुतं ॥ गुडक्षारोषणकणादाडिमं श्वासकासजित् ॥ क्रमात्पलद्वयार्द्धाक्षकर्षार्द्धाक्षपलोन्मितं ॥ द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयं ॥ रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥ पाठाशुंठीशठीमूर्वागवाक्षीपिप्पलीघनं ॥ पिष्ट्वा घर्मांबुना हिंगुसैंधवाभ्यां युतं पिबेत् ॥ तद्वन्मुस्ताशठीशुंठीनागरातिविषाऽभयाः ॥ पिबज्ज्वरोक्तं पथ्यादि सशृंगीकं च पाचनं ॥ अथवा दीप्यकत्रिवृद्विशालाघनपौष्करं ॥ सकणं कथितं मूत्रे कफकासी जलेऽपि वा ॥ तैलभृष्टं च वैदेहीकल्काक्षं ससितोपलं ॥ पाययेत्कफकासघ्नं कुलत्थसलिलाप्लुतं ॥ सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरं ॥ चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ॥ दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ॥ पुष्कराव्हशठीबिल्वसुरसाव्योषहिंगुभिः ॥ पेयाऽनुपानं तत्सर्वं वातश्लेष्मामयापहं ॥ निर्गुंडीपत्रनिर्याससाधितं कासजिद्घृतं ॥ घृतं रसे विडंगानां व्योषगर्भं च साधितं ॥ पुनर्नवशिवाटिकासरलकासमर्दामृतापटोलबृहतीफणिज्जकरसैः पयः संयुतैः ॥ घृतं त्रिकटुना च सिद्धमुपयुज्य संजायते न कासविषमज्वरक्षयगुदांकुरेभ्यो भयं ॥ समूलफलपत्रायाः कंटकार्या रसाढके ॥ घृतप्रस्थं बलाव्योषविडंगशठिदाडिमैः ॥ सौवर्चलयवक्षारमूलामलकपौष्करैः ॥ वृश्चीवबृहतीपथ्यायवानीचित्रकर्द्धिभिः ॥ मृद्वीकाचव्यवर्षाभूदुरालंभाऽम्लवेतसैः ॥ शृंगीतामलकीभार्ङ्गीरास्ना गोक्षुरकैः पचेत् ॥ कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ॥ कंटकार्यास्तुलां क्षुण्णां पक्त्वाद्रोणेंऽभसः पचेत् ॥ तेनाढकेन क्वाथस्य घृतं प्रस्थं पिचून्मितैः ॥ रास्नादुःस्पर्शषड्ग्रंथापिप्पलीद्वयचित्रकैः ॥ सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ॥ कासश्वासकफष्ठीवहिध्माऽरोचकपीनसान् ॥ पचेद्व्याघ्रीतुलां क्षुण्णां वहेऽपामाढकस्थिते ॥ क्षिपेत्पूते तु संचूर्ण्य व्योषरास्नामृताग्निकान् ॥ शृंगीभार्ङ्गीघनग्रंथिधन्व-

यासान् पलार्द्धकान् ॥ सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ॥ मत्स्यंडिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ॥ दर्वीलेपिनि शीते च पृथक्द्विकुडवं क्षिपेत् ॥ पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ॥ लेह्योऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ॥ त्रिफलापिप्पलीपाठासारिवाबृहतीद्वयं ॥ मरिचं पद्मकं मुस्तमुशीरं चाक्षसंमितं ॥ पक्त्वा जलाढके पादशेषे क्षीरपलाष्टकं ॥ दत्वा गुडस्य च पलं पचेदादर्विलेपनात् ॥ लेहः कफोल्बणं कासं सर्वमेव नियच्छति ॥ साधितं क्षीरमेभिर्वा तिलक्षौद्रयुतं पिबेत् ॥ शमनं च पिबेद्धूमं शोधनं बहुले कफे ॥ मनःशिलालमधुकमांसीमुस्तेंगुदीत्वचः ॥ धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु ॥ निष्ट्यूतांते गुडयुतं कोष्णं धूमो निहंति सः ॥ वातश्लेष्मोत्तरान्कासानचिरेण चिरंतनान् ॥ प्रपौंडरीकं मधुकं शार्ङ्गेष्टाऽलं मनःशिलां ॥ मरिचं पिप्पलीं द्राक्षामेलां सुरसमंजरीं ॥ कृत्वा वर्तिं पिबेत्धूमं क्षौमचैलानुवर्तिनीं ॥ घृताक्तामनु च क्षीरं पिबेत्तद्वद्गुडांबु वा ॥ नेपालीतालमरिचद्राक्षांजनकुटन्नटैः ॥ उशीररोहिषफलद्रविडीवंशलोचनैः ॥ पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते ॥ कार्पासास्थ्यश्वगंधा च धूमः कासविनाशनः ॥ कोशातकीफलान्मध्यैः पिबेद्वा समनःशिलैः ॥ तमकः कफकासे तु स्याच्चेत्पित्तानुबंधजः ॥ पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ कफानुबंधे पवने कुर्यात्कफहरां क्रियां ॥ पित्तानुबंधयोर्वातकफयोः पित्तनाशिनीं ॥ वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूक्षणं ॥ कासे कर्म सपित्ते तु कफजे तिक्तसंयुतं ॥

॥ इति कासचिकित्सितं नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातः क्षतक्षयकासचिकित्सितं व्याख्यास्यामः ॥ ॥ उरस्यंतः क्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ॥ क्षीरेण शालीन् जीर्णेऽद्यात् क्षीरेणैव सशर्करान् ॥ पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुतां ॥

भिन्नविट् तु समुस्तातिविषापाठां सवत्सकां ॥ लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयं गणं सितां ॥ त्वक्क्षीरीं संमितं क्षीरे पक्त्वा-दीप्तानलः पिबेत् ॥ इक्ष्वारिकाबिसग्रंथिपद्मकेसरचंदनैः ॥ शृतं पयो मधुयुतं संधानार्थं पिबेत्क्षती ॥ यवानां चूर्णमामानां क्षीर सिद्धं घृतान्वितं ॥ ज्वरे दाहे सिताक्षौद्रसक्तून्वा पयसा पिबेत् ॥ कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितं ॥ गुडोदकं वा कथितं सक्षौद्रमरिचं हिमं ॥ चूर्णमामलकानां वा क्षीरे पक्वं घृतान्वितं ॥ रसा-यनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः ॥ मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ॥ त्रिजातमर्द्धकर्षांशं पिप्पल्यर्द्धपलं सिता ॥ द्राक्षामधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितं ॥ मधुना गुटिका घ्नंति ता वृष्याः पित्तशोणितं ॥ का-सश्वासारुचिच्छर्दिमूर्च्छाहिध्मामदभ्रमान् ॥ क्षतक्षयस्वरभ्रंशप्लीहशो-फाढ्यमारुतान् ॥ रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि॥रक्तेऽति-वृद्धे छागं वा जांगलं वा पिबेदसृक् ॥ वर्षाभूशर्करारक्तशालितंदुलजं रजः ॥ रक्तष्ठीवी पिबेत्सिद्धं द्राक्षारसपयोघृतैः ॥ मधूकमधुकक्षीरसि-द्धं वा तंदुलीयकं ॥ यथास्वमार्गविसृते रक्ते कुर्याच्च भेषजं ॥ पिप्प-लीमधुकं पिष्टं कार्षिकं ससितोपलं ॥ प्रास्थिकं गव्यमाजं च क्षीरमि-क्षुरसं तथा ॥ यवगोधूममृद्वीकाचूर्णमामलकाद्रसः ॥ तैलं च प्रसृ-तांशानि तत्सर्वं मृदुनाऽग्निना ॥ पचेल्लेहं घृतक्षौद्रयुतः स क्षतकासनुत् ॥ श्वासहृद्रोगकासघ्नो हितो वृद्धाल्परेतसां ॥ मूढवातस्त्वजामेदः सु शाभृष्टं ससैंधवं ॥ क्षामः क्षीणः क्षतोरस्को मंदनिद्रोऽग्निदीप्तिमान् ॥ शृतक्षीरसरेणाद्यात्सघृतक्षौद्रशर्करं ॥ शर्करायवगोधूमं जीवकर्षभकौ मधु ॥ शृतक्षीरानुपानं वा लिह्यात्क्षीणक्षतः कृशः ॥ क्रव्यात्पिशितनि र्यूहं घृतभृष्टं पिबेच्च सः ॥ पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्द्धनं ॥

न्यग्रोधोदुंबराश्वत्थप्लक्षशालप्रियंगुभिः ॥ तालमस्तकजंबूत्वक्पियालैश्च सपद्मकैः ॥ साश्वकर्णैः शृतात्क्षीराद्दध्याज्जातेन सर्पिषा ॥ शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेंद्रियः ॥ वातपित्तार्दितेऽभ्यंगो गात्रभेदे घृतैर्मतः ॥ तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना ॥ हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ॥ कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥ यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमे घृतं ॥ पयस्यापिप्पलीवांशीकल्कैः सिद्धं क्षते हितं ॥ घृतं वाऽष्टगुणे क्षीरे कोललाक्षारसान्वितं ॥ कल्कैः कट्वंगदार्वीत्वग्वत्सकत्वक्फलैर्घृतं ॥ जीवनीयो गणः शुंठीवरीवीरा पुनर्नवा ॥ बला भार्ङ्गीस्वगुप्तर्द्धिशठीतामलकीकणाः ॥ शृंगाटकं पयस्या च पंचमूलं च यल्लघु ॥ द्राक्षाऽक्षोडादि च फलं मधुरस्निग्धबृंहणं ॥ तैः पचेत्सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः ॥ क्षीरधात्रीविदारीक्षुछागमांसरसान्वितं ॥ प्रस्थार्द्धं मधुनः शीते शर्कराऽर्द्धतुलारजः ॥ पलार्द्धकं च मरिचत्वगेलापत्रकेसरं ॥ विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथाऽनलं ॥ अमृतप्राश इत्येतन्नराणाममृतं घृतं ॥ सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥ नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ॥ स्त्रीप्रसक्तान् कृशान्वर्णस्वरहीनांश्च बृंहयेत् ॥ कासहिध्माज्वरश्वासदाहतृष्णाऽस्रपित्तनुत् ॥ पुत्रदं छर्दिमूर्च्छाहृद्योनिमूत्रामयापहं ॥ श्वदंष्ट्रोशीरमंजिष्ठाबलाकाश्मर्यकत्तृणं ॥ दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥ पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे ॥ कल्कैः स्वगुप्ताजीवंतीमेदर्षभकजीवकैः ॥ शतावर्यर्द्धिमृद्वीकाशर्कराश्रावणीबिसैः ॥ प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ॥ धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद्घृतं ॥ पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥ पृथगष्टपलं क्षौद्रशर्कराभ्यां च मिश्रयेत् ॥ समसक्तु क्षतक्षीणरक्तगुल्मेषु त-

द्धितं ॥ धात्रीफलविदारीक्षुजीवनीयरसाद्घृतात् ॥ गव्याजयोश्च पय सोः प्रस्थं प्रस्थं विपाचयेत् ॥ सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत्त तः ॥ यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहं ॥ वयःस्थापनमायुष्यं मांसशुक्रबलप्रदं ॥ घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत्॥ लीढं निर्वापयेत्पित्तमल्पत्वाद्धंति नानलं॥आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ क्षामक्षीणकृशांगानामेतान्येव घृतानि तु ॥ त्वक्क्षीरीपिप्पलीलाजचूर्णैः पानानि योजयेत् ॥ सर्पिर्गुडान्समध्वंशान्कृत्वा दद्यात्पयोऽनु च ॥ रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ बला विदारी ह्रस्वं च पंचमूलं पुनर्नवा ॥ पंचानां क्षीरिवृक्षाणां शुंगा मुष्ट्यंशकास्तथा ॥ एषां कषाये द्विक्षीरे विदार्या रजसांऽशके ॥ जीवनीयैः पचेत्पिष्टैरक्षमात्रैर्घृताढकं ॥ सितापलानि पूते च शीते द्वात्रिंशदावपेत् ॥ गोधूमापिप्पलीवांशीचूर्णं शृंगाटकस्य च ॥ समाक्षिकं कौडविकं तत्सर्वं खजमूर्च्छितं ॥ स्त्यानं सर्पिर्गुडान्कृत्वा भूर्जपत्रेण वेष्टयेत् ॥ तान्जग्ध्वा पालिकान् क्षीरं मद्यं त्वनु पिबेत्कफे ॥ शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥ रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ॥ शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥ सशर्कराशृते क्षीरघृततैलाढकत्रये ॥ चूर्णीकृताः क्षिपेत्पकसांद्रे दशपलाः पृथक् ॥ द्राक्षाऽऽत्मगुप्तावर्षाभूसमंगाऽभीरुपीप्पलीः ॥ तद्वद्विदार्यामलके प्रस्थार्द्धं विश्वभेषजं ॥ यष्ट्याव्हसौवर्चलयोर्द्विपलं मरिचस्य च ॥ क्षामः क्षीणः क्षतः शुष्यंस्तान् खादेत्पालिकैर्गुडैः ॥ तथा सद्यो रसादीनां वृध्या पुष्टिं समश्नुते ॥ गोक्षीराद्धाढकं सर्पिःप्रस्थमिक्षुरसाढके ॥ रसाद्विदार्याः कुडवं रसात्प्रस्थं च तैत्तिरात् ॥दद्यात्सिध्यति तस्मिंस्तु पिष्टानिक्षुरसैरिमान् ॥ मधूकपुष्पं कुडवं कुडवं च प्रियालतः ॥ पलद्वयं तवक्षीर्याः खर्जूराणि च त्रिंशतिः ॥ पृथग्बिभीतकान्मज्ज्ञः पिप्पल्याश्च चतुर्थिकान् ॥ त्रिंशत्पलानि खंडाच्च मधुकात्पाणिमा

निकां ॥ तथाऽर्द्धपलिकान्यत्र जीवनीयानि दापयेत् ॥ सिद्धे द्विकुडवं क्षौद्राच्छीते दत्वा च मोदकान् ॥ कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥ वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ॥ क्षीणौजःस्वरशुक्रेषु योनिदोषेषु संस्रवे ॥ मृतप्रजासु वंध्यासु हिता गर्भस्य च स्रुतौ ॥ वीतत्वगस्थिकूष्मांडतुलां स्विन्नां पुनः पचेत् ॥ घट्टयन्सर्पिषःप्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ॥ खंडाच्छतं कणाशुंठ्योर्द्विपलं जीरकादपि ॥ त्रिजातधान्यमरिचं पृथगर्द्धपलांशकं ॥ अवतारितशीते च दत्वा क्षौद्रं घृतार्द्धकं ॥ खजेनामथ्य च स्थाप्यं तन्निहंत्युपयोजितं ॥ कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ॥ उरःसंधानजननं मेधास्मृतिबलप्रदं ॥ अश्विभ्यां निर्मितं हृद्यं कूष्मांडकरसायनं ॥ पिबन्नागबलामूलस्यार्द्धकर्षादिवर्द्धितं ॥ पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥ एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परं ॥ मंडूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च ॥ पादशेषं जलद्रोणे पचेन्नागबलातुलां ॥ तेन क्वाथेन तुल्यांशं घृतं क्षीरं च साधयेत् ॥ पलार्द्धिकैश्चातिबलाबलायष्टिपुनर्नवैः ॥ प्रपौंडरीककाश्मर्यपियालकपिकच्छुभिः ॥ अश्वगंधासिताऽभीरुमेदायुग्मत्रिकंटकैः ॥ काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकैः ॥ मृणालबिसखर्जूरशृंगाटककसेरुकैः ॥ एतन्नागबलासर्पिः पित्तरक्तं क्षतक्षयं ॥ जयेत्तृड्भ्रमदाहांश्च बलपुष्टिकरं परं ॥ वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनं ॥ उपयुज्य तु षण्मासाद्वृद्धोऽपि तरुणायते ॥ शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च ॥ संयुतं वा शृतं क्षीरं पिबेत्कासज्वरापहं ॥ फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे घृतं ॥ स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परं ॥ सक्तूनां वस्त्रपूतानां मंथं क्षौद्रघृतान्वितं ॥ यावन्न सात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः ॥ जीवनीयोपसिद्धं वा जांगलं घृ-

१ यवान्नसात्म्यइतिपाठः

तभर्जितं ॥ रसं प्रयोजयेत्क्षीणो बृंहणार्थं सशर्करं ॥ गोमहिष्यश्व-नागाजैः क्षीरैर्मांसरसैस्तथा ॥ यवान्नं भोजयेद्यूषैः फलाम्लैर्वा घृताप्लुतैः ॥ दीप्तेऽग्नौ विधिरेष स्यान्मंदे दीपनपाचनः ॥ यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे ॥ दशमूलं स्वयंगुप्तां शंखपुष्पीं शठीं बलां ॥ हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ भार्ङ्गीपुष्करमूलं च द्विपलांशान्यवाढकं ॥ हरीतकीशतं चैकं जले पंचाढके पचेत् ॥ यवस्वेदे कषायं तं पूतं तच्चाभयाशतं ॥ पचेद्गुडतुलां दत्वा कुडवं च पृथग्घृतात् ॥ तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥ लेहे द्वे चाभये नित्यमतः खादेद्रसायनात् ॥ तद्वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनं ॥ पंच कासान्क्षयं श्वासं सहिक्कं विषमज्वरं ॥ मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥ अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनं ॥ दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयं ॥ पाठाऽश्वगंधाऽपामार्गस्वगुप्तातिविषाऽमृताः ॥ बालबिल्वं त्रिवृद्दंतीमूलं पत्रं च चित्रकात् ॥ पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात् ॥ बोटस्थविरभल्लातविकंकतशतावरीः ॥ पूतिकरंजशम्याकचंद्रलेखासहाचरं ॥ सौभांजनकनिंबत्वगिक्षुरं च पलांशकं ॥ पथ्यासहस्रं सशतं यवानां चाढकद्वयं ॥ पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ॥ पूते क्षिपेत्सपथ्यांच तत्र जीर्णगुडात्तुलां ॥ तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः ॥ अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च ॥ शीते प्रस्थद्वयं क्षौद्रात्पिप्पलीकुडवं क्षिपेत् ॥ चूर्णीकृतं त्रिजाताच्च त्रिपलं निखनेत्ततः ॥ धान्ये पुराणकुंभस्थं मासं खादेच्च पूर्ववत् ॥ रसायनं वसिष्ठोक्तमेतत्पूर्वगुणाधिकं ॥ स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते ॥ पालिकं सैंधवं शुंठीं द्वे च सौवर्चलात्पले ॥ शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥ कुडवांशानि वृक्षाम्लं दाडिमं पत्रमार्जकात् ॥ एकैकां

मरिचाजाज्योर्धान्यकाद्दे चतुर्थिके ॥ कृत्वा चूर्णमतो मात्रामन्न पानेषु योजयेत् ॥ रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासनुत् ॥ एकां षोडशिकां धान्याद्वे द्वे चाजाजिदीप्यकात् ॥ ताभ्यां दाडिमवृक्षाम्लाद्विर्द्विः सौवर्चलात्पलं ॥ शुंठ्याः कर्षं दधित्थस्य मध्यात्पंच पलानि च ॥ तच्चूर्णं षोडशपलैः शर्करया विमिश्रयेत् ॥ खांडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ॥ विधिश्च यक्ष्मपित्तास्रविहितः शस्यते क्षते ॥ निवृत्ते क्षतदोषे तु कफे वृद्धउरःशिरः ॥ दाल्यते कासिनो यस्य स ना धूमान्पिबेदिमान् ॥ द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते ॥ वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः ॥ मनःशिलापलाशाजगंधात्वक्क्षीरनागरैः ॥ तद्वदेवानुपानं तु शर्करेक्षुगुडोदकं ॥ पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुंगया ॥ ससर्पिष्कं पिबेत्धूमं तित्तिरिप्रतिभोजनं ॥ क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्द्धनं ॥ बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनं ॥ शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ॥ तिल्वकस्य कषायेण विदारीस्वरसेन च ॥ सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनं॥पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान् ॥ घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ विदारीभिः कदंबैर्वा तालसस्यैश्च साधितं ॥ घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ शूने सवेदने मेंढ्रे पायौ सश्रोणिवंक्षणे ॥ घृतमंडेन लघुनाऽनुवास्यो मिश्रकेण वा ॥ जांगलैः प्रतिभुक्तस्य वर्तकाद्या बिलेशायाः ॥ क्रमशः प्रसहास्तद्वत्प्रयोज्याः पिशिताशिनः ॥ औष्ण्यात्प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयंति ते ॥ कफं शुद्धैश्च तैः पुष्टिं कुर्यात्सम्यग्वहन् रसः ॥ चविकात्रिफलाभार्ङ्गीदशमूलैः सचित्रकैः ॥ कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ शृतैर्नागरदुःस्पर्शापिप्पलीशठिपौष्करैः ॥ पिष्टैः कर्कटशृंग्या च समैः सर्पिर्विपाचयेत् ॥ सिद्धेऽस्मिंश्चूर्णितौ क्षारौ पंचैवलवणानि च॥ दत्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ॥ कासमर्दाभयामुस्तपाठाकट्फल-

नागरैः ॥ पिप्पल्या कटुरोहिण्या काश्मर्या सुरसेन च ॥ अक्षमात्रै-र्घृतप्रस्थं क्षीरद्राक्षारसाढके ॥ पचेच्छोषज्वरप्लीहसर्वकासहरं पिबेत् ॥ वृषव्याघ्रीगुडूचीनां पत्रमूलफलांकुरात् ॥ रसकल्कैर्घृतं पक्कं हंति कासज्वरारुचीः ॥ द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतं ॥ पिबेदुपरि भक्तस्य यवक्षारयुतं नरः ॥पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतं ॥ एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनां ॥ स्युर्दोषबद्धकंठोरःस्रोतसां च विशुद्धये ॥ हरीतकीर्यवक्काथस्याढके विंशतिं पचेत् ॥ स्विन्ना मृदित्वा तास्तस्मिन्पुराणात्षट्पलं गुडात् ॥ पिप्पल्या द्विपलं कर्षं मनोह्वाया रसांजनात् ॥ दत्वाऽर्द्धाक्षं पचेद्भूयः स लेहः श्वासकासजित् ॥ श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ॥ श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा ॥ एरंडपत्रक्षारं वा व्योषतैलगुडान्वितं ॥ लेहयेत्क्षारमेवं वा सुरसैरंडपत्रजं ॥ लिह्यात्त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा ॥ चित्रकस्त्रिफलाऽजाजीकर्कटाख्याकटुत्रिकं ॥ द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्याद्द्याद्गुडेन च ॥ पाठामधुकजीवंतीत्वक्क्षीरीत्रिफलाघनं ॥ शठीद्विबृहतीद्राक्षापिप्पल्येलावितुन्नकं ॥ सारिवापुष्करजटाकर्कटाख्यारसांजनं ॥ पुनर्नवा लोहरजस्त्रायमाणा यवानिका ॥ ऋद्धिस्तामलकी भार्ङ्गी विडंगं धन्वयासकं॥ क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥ सर्वकासान्जयेल्लीढं तच्चूर्णं मधुसर्पिषा ॥ पद्मकं त्रिफला व्योषं विडंगं देवदारु च ॥ बला रास्ना च तच्चूर्णं समस्तं समशर्करं ॥ खादेन्मधुघृताभ्यां वा लिह्यात्कासहरं परं ॥ तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करं ॥ पथ्याशुंठीघनगुडैर्गुटिकां धारयेन्मुखे ॥ सर्वेषु कासश्वासेषु केवलं वा बिभीतकं ॥ कल्के तिल्वकपत्राणां घृतभृष्टे सशर्करे ॥ पेयोत्कार्यथवाच्छर्दितृष्णाकासातिसारजित् ॥ गौरसर्षपगंडीरविडंगव्योषचित्रकान् ॥ साभयान्साधयेत्तोये यवागूस्तेन चांभसा ॥ ससर्पिर्लवणा कासे हिध्माश्वासे सपीनसे ॥ पां-

द्वामये क्षये शोफे कर्णशूले च शस्यते ॥ कंटकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ॥ सगौरामलकः साम्लः सर्वकासभिषग्जितं ॥ वातघ्नौषधनिःक्वाथे क्षीरं यूषान् रसानपि॥ वैष्किरान्प्रतुदान्बिलान्दापयेत्क्षतकासिने॥क्षतकासे च ये धूमाः सानुपाना निदर्शिताः॥क्षयकासे च ते योज्या वक्ष्यते यच्च यक्ष्मणि॥बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनं॥ व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ॥ सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ॥ यथादोषबलं तस्य सन्निपातहितं हितं ॥ इति क्षतक्षयकासचिकित्सितं नाम पंचमोऽध्यायः ॥ ५ ॥

अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः ॥ श्वासहिध्मायतस्तुल्यहेत्वाद्याः साधनं ततः ॥ तुल्यमेव तदार्त्तं च पूर्वं स्वेदैरुपाचरेत् ॥ स्निग्धैर्लवणतैलाक्तं स्रोतःसु ग्रथितः कफः ॥ तैर्लीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ॥ भवेत्खेषु मृदुत्वं च मारुतस्यानुलोमता ॥ स्विन्नं च भोजयेदन्नं स्निग्धमानूपजैरसैः ॥[1]दध्युत्तरेण वा दद्यात्ततोऽस्मै वमनं मृदु ॥ विशेषात्कासवमथुहृद्ग्रहस्वरसादिने ॥ पिप्पलीसैंधवक्षौद्रयुक्तं वाताविरोधि यत् ॥ निर्हृते[2] सुखमाप्नोति सकफे दुष्टविग्रहे॥स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥ ध्मानोदावर्त्ततमके मातुलुंगाम्लवेतसैः ॥ हिंगुपीलुबिडैर्युक्तमन्नं स्यादनुलोमनं ॥ ससैंधवं फलाम्लं वा कोष्णं दद्याद्विरेचनं ॥एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ॥ तस्मात्तन्मार्गशुद्ध्यर्थमूर्ध्वाधः शोधनं हितं ॥उदीर्यते भृशतरं मार्गरोधाद्वहज्जलं ॥ यथा तथाऽनिलस्तस्य मार्गमस्माद्विशोधयेत् ॥ अशांतौ कृतसंशुद्धे धूमैर्लीनं मलं हरेत् ॥ हरिद्रापत्रमैरंडमूलं लाक्षां मनःशिलां ॥ सदेवदार्वेलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ॥तां घृताक्तां पिबेत्धूमं यवान्वा घृतसंयुतान् ॥ मधूच्छिष्टं सर्जरसं

१ दधिसरेण २ दुष्टो विग्रहः शरीरं येन तस्मिन्कफे निर्हृते सति स कृतवमनः सुखमाप्नोतीतियोजना

घृतं वा गुरु वा ऽगुरु॥ चंदनं वाऽऽजशृंगं वा वालान्वा स्नायु[2] वा गवां॥ ऋक्षगोधाकुरंगैणचर्मशृंगखुराणि वा ॥ गुग्गुलुं वा मनोह्वां वा सालनिर्यासमेव वा ॥ सल्लकीं गुग्गुलुं लौहं पद्मकं च घृतप्लुतं ॥ अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणं॥ स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः॥ उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ॥ उरः कंठं च मृदुभिः सामे त्वामविधिं[4] चरेत् ॥ अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ॥ स्निग्धैरसाद्यैर्नात्युष्णैरभ्यंगैश्च शमं नयेत्॥ अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ॥ वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥ कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ॥ क्षीणक्षतातिसारासृक्पित्तदाहानुबंधजान्॥ मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ॥ कुलत्थदशमूलानां क्वाथे स्युर्जांगला रसाः ॥ यूषाश्च शिग्रुवार्ताककासघ्नवृषमूलकैः॥ पल्लवैर्निंबकुलकबृहतीमातुलुंगजैः ॥ व्याघ्रीदुरालभाशृंगीबिल्वमध्यत्रिकंटकैः॥ सामृताग्निकुलत्थैश्च यूषः स्यात्क्वथितैर्जलैः ॥ तद्वद्द्राक्षा[5]बृहत्यादिबलामुद्गैः सचित्रकैः ॥ पेया च चित्रकाजाजीशृंगीसौवर्चलैर्हिता ॥ दशमूलेन वा कासश्वासहिध्मारुजापहा ॥ दशमूलशठीरास्नाभार्ङ्गीबिल्वर्द्धिपौष्करैः ॥ कुलीरशृंगीचपलातामलक्यमृतौषधैः ॥ पिबेत्कषायं जीर्णेऽस्मिन् पेयां तैरेव साधितां ॥ शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥ कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशांतये ॥ सक्तून्वाऽर्कांकुरक्षीरभावितानां समाक्षिकान् ॥ यवानां दशमूलादिनिष्क्वाथलुलितान् पिबेत् ॥ अन्नेन भोजयेत्क्षारहिंग्वाज्यबिडदाडिमान् ॥ सपुष्करशठीव्योषमातुलुंगाम्लवेतसान् ॥ दशमूलस्य वा क्वाथमथवा देवदारुणः ॥ पिबेद्वा वारुणीमंडं हिध्माश्वासी पिपा-

---

१ ऋक्षं २ स्नावजान् गवामिति पाठोऽष्टांगहृदये ॥तत्र स्नावजान् गलकंबलजान् वाला नित्यरुणदत्तव्याख्या ३ कृष्णागुरु ४ लंघनपाचनादिकं ५ द्राक्षेतिपाठः

मितः ॥ पिप्पलीपिप्पलीमूलपथ्याजंतुघ्नचित्रकैः ॥ कल्कितैर्लेपिते रूढे निक्षिपेत्घृतभाजने ॥ तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित् ॥ पाठां मधुरसां दारु सरलं च निशि स्थितं ॥ सुरामंडेऽल्पलवणं पिबेत् प्रसृतिसंमितं ॥ शिरीषकुंदकदलीकुसुमं पिप्पली युतं ॥ तंदुलांबुप्लुतं हिध्माश्वासकासहरं परं ॥ आरनालेन वा पिष्टं मातुलुंगरसान्वितं ॥ हिंगुसौवर्चलकणाकोलमुद्गजलेन वा ॥ कोष्णेन भार्ङ्गीं शुंठीं च क्षारं वा मरिचान्वितं ॥ स्वक्वाथपिष्टां लुलितां बाष्पिकां पाययेत वा ॥ स्वरसः सप्तपर्णस्य पुष्पाणां वा शिरीषतः ॥ हिध्माश्वासे मधुकणायुक्तः पित्तकफानुगे ॥ उत्कारिका तुगाकृष्णामधूलीघृतनागरैः ॥ पित्तानुबंधे योक्तव्या पवने त्वनुबंधिनि ॥ श्वाविच्छशामिषकणाघृतशल्यकशोणितैः ॥ सुवर्चलारसव्योषसर्पिर्भिः सहितं पयः ॥ अनु शाल्योदनं पेयं वातपित्तेऽनुबंधिनि ॥ चतुर्गुणांबुसिद्धं वा छागं सगुडनागरं ॥ पिप्पलीमूलमधुकगुडगोऽश्वशकृद्रसान् ॥ हिध्माभिष्यंदकासघ्नाँल्लिह्यान्मधुघृतान्वितान् ॥ गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसं ॥ समध्वेकैकशो लिह्याद्बहुश्लेष्माऽथवा पिबेत् ॥ चतुष्पाच्चर्मरोमास्थिखुरशृंगोद्भवां मषीं ॥ तथैव वाजिगंधाया लिह्याच्छ्वासी कफोल्बणः ॥ क्षारं वा त्रिफलापाठाबृहतीफलकुंभिजं ॥ मुक्ताप्रवालवैदूर्यशंखसौगंधिकांजनं ॥ मसारगल्लस्फटिककाचैलालवणद्वयं ॥ अपामार्गफलं ताम्रमयो रूप्यं शणात्फलं ॥ ज्योतीरसश्च तल्लिह्यादयो वैकं मधुद्रवं ॥ शठीपुष्करधात्रीर्वा पौष्करं वा कणान्वितं ॥ गैरिकांजनकृष्णां वा स्वरसं वा कपित्थजं ॥ रसेन वा कपित्थस्य धात्रीसैंधवपिप्पलीः ॥ घृतक्षौद्रेण वा पथ्याविडंगोषणपिप्पलीः ॥ लिह्याद्वा पिप्पलीद्राक्षापथ्याशृंगीदुरालभाः॥ घृतमाक्षिकतैलैर्वा त्र्यूषणं क्षारसंयुतं ॥ पिप्पलीक्षौद्रयुक्तौ वा रसौ धात्रीकपित्थयोः

१ मसारः मरकतरत्नं २ ज्योतीरसः रत्नविशेषः

॥ सितोपला त्वामलकी द्राक्षा गोऽश्वशकृद्रसः ॥कोललाजमधुद्राक्षा-पिप्पलीनागराणि वा ॥ गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा ॥ पिबेद्रसांबुमद्याम्लैर्लेहौषधरजांसि वा ॥ जीवंतीमुस्तसुरसत्वगेलाद्वयपौष्करं ॥ चंडातामलकीलोहभार्गीनागरवालकं ॥ कर्कटाख्याशठीकृष्णा-नागकेसरचोरकं ॥ उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करं॥पार्श्वरुग्ज्वर-कासघ्नं हिध्माश्वासहरं परं॥ जीवंती चोरकः शृंगी पौष्करं सुरसः शठी ॥ पिप्पलीत्वग्बिडक्षारशुंठीहिंग्वम्लवेतसं ॥ एला तामलकी भार्गी वृ-क्षाम्लं चेति चूर्णितं ॥ रसेन मातुलुंगस्य मद्येन हविषाऽथवा ॥ लीढं प्रयुक्तमथवा केवलं चोपयोजितं ॥ हिध्माश्वासविबंधार्शःकासहृ-त्पार्श्वशूलनुत् ॥ शठी तामलकी भार्गी चंडा वालकपौष्करं॥शर्कराऽष्ट-गुणं चूर्णं हिध्माश्वासहरं परं ॥ तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ॥ लशुनस्य पलांडोर्वा मूलं गृंजनकस्य वा ॥ चंदनाद्वा रसं दद्यान्ना-रीक्षीरेण नावनं ॥ सशर्करां पिप्पलीं वा मधुकं वा मधुद्रवं ॥ स्तन्ये-न मक्षिकाविष्ठामलक्तकरसेन वा ॥ ससैंधवं घृताक्तं वा सिद्धं स्तन्येन वा घृतं ॥ कल्कितैर्मधुरद्रव्यैस्तत्पिबेन्नावयेत वा ॥ सकृदुष्णं सकृच्छी-तं व्यत्यासात्ससितं मधु ॥ तद्वत्पयस्तथा सिद्धमधोभागौषधैर्घृतं ॥ कणासौवर्चलक्षारवयस्थाहिंगुचोरकैः ॥ सकायस्थैर्घृतं मस्तु दशमूल-रसे पचेत् ॥ तत्पिबेज्जीवनीयैर्वा लिह्यात्समधु साधितं ॥ तेजोवत्यभ-या कुष्टं पिप्पली कटुरोहिणी ॥ भूतीकं पौष्करं मूलं पलाशश्चित्रकः शठी ॥ पटुद्वयं तामलकी जीवंती बिल्वपेशिका ॥ वचा पत्रं च ता-लीसं कर्षांशैस्तैर्विपाचयेत् ॥ हिंगुपादैर्घृतप्रस्थं पीतमाशु निहंति तत् ॥ शाखानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः ॥ सिद्धं वा पुरमंजिष्ठा-लाक्षासर्जरसैः पिबेत् ॥ सपद्मकमनोह्वालैर्घृतप्रस्थं पिचून्मितैः ॥ व-त्सकादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥ सपंचलवणं सर्पिः श्वासका-सानपोहति ॥ हिंस्राविडंगपूतीकत्रिकटुत्रिफलाग्निकैः ॥ कोलमात्रै-

घृतप्रस्थं पाचयेत्सलिलाढके ॥ क्षीरप्रस्थद्वयोपेतं तत्कासश्वासपीनसान् ॥ अर्शांस्यरोचकं गुल्मं क्षयं हिध्मां च नाशयेत् ॥ सैंधवार्द्धांशयुक्तं वा पुराणं पाययेद्घृतं ॥ धान्वंतरं वृषघृतं दाधिकं हपुषादि वा ॥ शीतांबुसेकः सहसा त्रासविक्षेपभीशुचः ॥ हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनं ॥ यत्किंचित्कफवातघ्नमुष्णं वातानुलोमनं ॥ तत्सेव्यं प्रायशो यच्च सुतरां मारुतापहं ॥ वातकृद्वा कफहरं कफकृद्वाऽनिलापहं ॥ कार्यं नैकांगिकं ताभ्यां प्रायः श्रेयोऽनिलापहं ॥ सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ॥नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्शने ॥ शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥ कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः ॥ ॥ इति श्वासहिध्माचिकित्सितं नाम षष्ठोऽध्यायः ॥ ६ ॥

अथातो राजयक्ष्मचिकित्सितं व्याख्यास्यामः ॥ बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनं ॥ ऊर्ध्वाधो यक्ष्मिणः कुर्यात्सस्नेहं यन्न कर्शनं॥ पयसा फलयुक्तेन मधुरेण रसेन वा सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ वमेद्विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ॥ शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥ द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान् ॥ शुद्धकोष्ठस्य युंजीत विधिं बृंहणदीपनं ॥ हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥ शालिषष्टिकगोधूमयवमुद्गं समाक्षिकं ॥ लघुमच्युतवीर्यं च सुजरं बलकृच्च यत् ॥ आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोषजित् ॥ काकोलूकवृकद्वीपिगवाश्वनकुलोरगं॥गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितं ॥ ज्ञातं जुगुप्सितं तद्धि छर्दिषे नबलौजसे ॥ मृगाद्याः पित्तकफयोः पवने प्रसहादयः ॥ वेसवारीकृताः पथ्या रसादिषु च कल्पिताः॥भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथं॥

१ प्रमेहोक्तं २ रक्तपित्तोक्तं ३ गुल्मोक्तं ४ उदरोक्तं ५ अत्रारुणदत्तः समोषितमिनिपठित्वावर्गोषितमिनित्याख्याति ६ छद्मनाउपसंहितं काकादयस्तिनिर्यादिव्याजेनदेयाइत्यर्थः

रसिका मृदवः स्निग्धाः पटुद्रव्याभिसंस्कृताः॥हिता मौलककौलत्थास्त-द्यूषाश्च साधिताः॥ सपिप्पलीकं सयवं सकुलत्थं सनागरं ॥ सदाडिमं सामलकं स्निग्धमाजरसं पिबेत् ॥ तेन षड्विनिवर्तंते विकाराः पीनसाद यः ॥ कोलदाडिमनिर्यासपिष्टयाऽस्थिविहीनया ॥ द्राक्षया स्वच्छधा न्याम्लप्लुतालोडितकल्कया ॥कार्यः सौवर्चलव्योषपत्रैलादीप्यकान्वि तः ॥ समाक्षिकः सकर्पूरः सलवंगः सकेसरः ॥ चंद्रकाख्यो यथार्था-ख्यः शोषहाऽग्निरुचिप्रदः ॥ शुक्ताम्रधात्रीस्वरसैर्द्राक्षायाः कल्पितं प लं ॥ गुडषट्पलसंयुक्तं युक्तं श्लक्ष्णैश्च कार्षिकैः ॥ वृक्षाम्लधान्यद्र-विडीराजिकादाडिमोषणैः ॥ पलेन नागपुष्पस्य किंचित्सौवर्चलेन च॥ ससेव्यपत्रत्वक्तोयः सुरसारसमूर्छितः॥ भूरिभूस्तृणको रागः कल्प्यो रुच्यः समाक्षिकः ॥ पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनं ॥ पि-त्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः ॥ सिद्धं वा पंचमूलेन ताम-लक्याऽथवा जलं ॥ पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा॥ कल्पये च्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान् ॥ दशमूलेन पयसा सिद्धं मां-सरसेन वा ॥ बलागर्भं घृतं योज्यं क्रव्यान्मांसरसेन वा॥ सक्षौद्रं पय-सा सिद्धं सर्पिर्दशगुणेन वा ॥ जीवंतीं मधुकं द्राक्षां फलानि कुटजस्य च ॥ पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलां ॥ नीलोत्पलं तामल कीं त्रायमाणां दुरालभां ॥ कल्कीकृत्य घृतं पक्वं रोगराजहरं परं ॥ दु रालभां गोक्षुरकं चतस्रः पर्णिनीर्बलां ॥ भागान्पलोन्मितान्कृत्वा पलं पर्पटकस्य च ॥ पचेद्दशगुणे तोये दशभागावशेषिते ॥ पूते तस्मिन्घृत प्रस्थं क्षीरद्विगुणितं पचेत् ॥ गर्भं दत्वा शठीकृष्णाभूनिंबोत्पलसारिवाः ॥ त्रायंतीं पौष्करं मूलं सपत्रं त्रिफलां फलं ॥ कुटजाच्च जयेत्सद्धि शिरःपार्श्वांसवेदनां ॥ तृष्णां छर्दिमतीसारकासदाहभ्रमज्वरान् ॥ घृ-तं खर्जूरमृद्वीकामधुकैः सपरूषकैः ॥ सपिप्पलीकं वैस्वर्यकासश्वास-ज्वरापहं ॥ दशमूलशृतात्क्षीरात्सर्पिर्यदुदियान्नवं ॥ सपिप्पलीकं स-

क्षौद्रं तत्परं स्वरबोधनं ॥ शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहं ॥ पंचभिः पंचमूलैर्वा शृताद्यद्दधियाहृतं ॥ पंचानां पंचमूलानां रसे क्षीरचतुर्गुणे ॥ सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः समकं बलं ॥ पंचकोलयवक्षारषट्पलेन पचेद्घृतं ॥ प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्धि शोधनं॥गुल्मज्वरोदरप्लीहग्रहणीपांडुपीनसान्॥कासश्वासाग्निसदनश्वयथूर्ध्वानिलान्जयेत्॥रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ॥जीवंतीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतं ॥ अश्वगंधाशृतात्क्षीराद्घृतं च ससितापयः॥ साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥ तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः॥साधयेत्सर्पिषः प्रस्थं वातपित्तामयापहं॥मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ॥ कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित्॥ यष्टीबलागुडूच्यल्पपंचमूलतुलां पचेत् ॥ शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद्घृतात् ॥ धात्रीविदारीक्षुरसत्रिपात्रे पयसोऽर्मणे ॥ सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतं॥ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितं ॥ मूर्वाहरिद्राखदिरक्काथं सर्पिः शकृद्रसं ॥ गोगजाजाऽविहयजं पयस्तुल्यान् दश द्रवान् ॥ स्वादुस्कंधं त्रिकटुकं कल्कितं देवदारु च ॥ पचेत्तत्त्वाशु शोषघ्नं तद्द्वासावरीघृतं ॥ द्विपंचमूलवरणयवबिल्वपुनर्नवाः ॥ करंजबोटस्थविरकुलत्थबदराग्निकाः ॥ भल्लातकं च तत्काथे षड्गुणे साधयेद्घृतं ॥ गर्भं दत्वा स्नुहीक्षीरं शुक्लाख्यां चैव सैंधवं ॥ हरीतकीं च तच्छोषशोफमेदोदरापहं ॥ यवाग्वा वा पिबेन्मात्रां लिह्याद्वा मधुरान्वितं ॥ सिद्धानां सर्पिषामेषां दद्याद्दन्नेन वा सह ॥ एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान् ॥ सारानरिष्टगायत्रीसालबीजकसंभवान् ॥ भल्लातकं विडंगं च पृथगष्टपलोन्मितं ॥ सलिले षोडशगुणे षोडशांशस्थितं पचेत् ॥ पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन्पलानि षट् ॥ तवक्षीर्याः क्षिपेत्त्रिंशत्सितायाः

१ बिलेशयपसहमांसपलशतं

द्विगुणं मधु ॥ घृतात्रिजातत्रिपलं ततो लीढं खजाहतं ॥ पयोनुपानं तत्प्राह्ले रसायनमयंत्रणं ॥ मेध्यं चक्षुष्यमायुष्यं दीपनं हंति चाचिरात् ॥ मेहगुल्मक्षयव्याधिपांडुरोगभगंदरान् ॥ ये च सर्पिर्गुडाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते ॥ खर्जूरपिप्पलीद्राक्षापथ्याशृंगीदुरालभाः॥ त्रिफलापिप्पलीमुस्तशृंगाटीगुडशर्कराः ॥ वीरा शठी पुष्कराख्या सुरसा शर्करा गुडः ॥ नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः ॥ विडंगसारश्चविका त्र्यूषणं च विचूर्णितं ॥ अर्द्धश्लोकैः स्मृता लेहाः पंचैते क्षौद्रसर्पिषा ॥ स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणाः क्रमात् ॥ चूर्णिता भक्षयेल्लिह्यात्पूर्ववद्वा तथागुणाः ॥ तिलमाषाश्वगंधा वा माक्षिकाजघृतद्रुताः ॥ पूर्वोक्तेष्वेव रोगेषु वातरोगेषु पूजिताः ॥ विशेषात्स्वरसादेऽस्य नस्यधूमादि योजयेत् ॥तत्रापि वातजे कोष्णं पिबेदुत्तरभक्तिकं॥ कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतं॥साधितं कासजित्स्वर्यं सिद्धमार्तगलेन वा॥ बदरीपत्रकल्कं वा घृतभृष्टं ससैंधवं ॥ तैलं वा मधुकद्राक्षापिप्पलीकृमिनुत्पलैः ॥ हंसपद्याश्च मूलेन पक्कं नस्तो निषेचयेत् ॥ सुखोदकानुपानं च ससर्पिष्कं गुडौदनं ॥ अश्नीयात्पायसं चैवं स्निग्धं स्वेदं च योजयेत् ॥ पित्तोद्भवे पिबेत्सर्पिः शृतशीतपयोऽनुपः ॥ क्षीरिवृक्षांकुरक्काथकल्कसिद्धं समाक्षिकं ॥ अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसं ॥ बलाविदारिगंधाभ्यां विदार्या मधुकेन च ॥ सिद्धे सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमं ॥ प्रपौंडरीकं मधुकं पिप्पली बृहती बला ॥ साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परं॥लिह्यान्मधुरकाणां च चूर्णं मधु घृताप्लुतं ॥ वरीं बलां पयस्यां वा काकोलीमधुके तथा ॥ एवमस्यानुपशमे ललाटे व्यधयेच्छिरां ॥ पिबेत्कटूनि मूत्रेण कफजे रूक्षभोजनः ॥ कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतं ॥ व्योषक्षाराग्निचविका

१ घृताद्विगुणं द्वौ भस्थावित्यर्थः

भार्ङ्गीपथ्यामधूनि वा ॥ यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत् ॥ भुक्त्वाऽद्यात्पिप्पलीं शुंठीं तीक्ष्णं वा वमनं भजेत् ॥ शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह ॥ पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ विचित्रमन्नमरुचौ हितैरुपहितं हितं ॥ बहिरंतर्मृजा चित्तनिर्वाणं हृद्यमौषधं ॥ द्वौ कालौ दंतपवनं भक्षयेन्मुखशोधनैः ॥ कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥ तालीसपत्रवटकाः सकर्पूरसितोपलाः॥ शशांककिरणाख्याश्च भक्ष्या रुचिकराः परं ॥ वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ॥ हरेणुकृष्णाकृमिजिद्द्राक्षासैंधवनागरात् ॥ एलाभार्ङ्गीयवक्षारहिंगुयुक्ताद्धृतेन वा ॥ छर्दयेद्वा वचांभोभिः पित्ताच्च गुडवारिभिः ॥ लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकं ॥ कफाद्वमेन्निंबजलैर्दीप्यकारग्वधांबु च ॥ पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः ॥ पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥ त्रिकटुत्रिफलाशत्रियवक्षारं मधुप्लुतं ॥ प्रातराहारकाले च युंजीत मुखधावनं ॥ बिडं सौवर्चलं कुष्टमजाजीमरिचं सिता ॥ धात्र्येलापद्मकोशीरपिप्पलीचंदनोत्पलं ॥ रोध्रं तेजोवती पथ्या यवक्षारं कटुत्रयं ॥ आर्द्रदाडिमनिर्यासः साजाजीसितशर्करः ॥ सतैलमाक्षिका युक्ताश्चत्वारः कवलग्रहाः ॥ चतुरोऽरोचकान् हन्युरेकदोषसमस्तजान् ॥ कारव्यजाजीमरिचद्राक्षावृक्षाम्लदाडिमं ॥ सौवर्चलगुडक्षौद्रं सर्वारोचकनाशनं ॥ एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधं॥ भागवृद्धं क्रमाच्चूर्णं निहंति सशर्करं ॥ प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान् ॥ यवानीतिंतिडीकाम्लवेतसौषधदाडिमं ॥ कृत्वा कोलं च कर्षांशं सितायाश्च चतुःपलं ॥ धान्यसौवर्चलाजाजीवरांगं चार्द्धकार्षिकं ॥ पिप्पलीनां शतं ह्येकं द्वे शते मरिचस्य तु ॥ चूर्णमेतत्परं रुच्यं हृद्यं ग्राहि हिनस्ति च ॥विबंधकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ॥ तालीसपत्रं मरिचं नागरं पिप्पली कणा ॥ यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥ तद्वच्चं

दीपनं चूर्णं कणाऽष्टगुणशर्करं ॥ कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्व-शूलजित् ॥ पांडुज्वरातिसारघ्नं मूढवातानुलोमनं ॥ तालीसपत्रचवि-कामरिचानां पलं पलं ॥ कृष्णातन्मूलयोर्द्वे द्वे पले शुंठीपलत्रयं ॥ च तुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितं ॥ तत्र त्रिंशत्पलं दत्वा क्वथि-तादमलाद्गुडात् ॥ कुर्वीतमोदकानक्षसंमितांस्तेऽपि तद्गुणाः ॥ अर्का मृताक्षारजले शर्वरीमुषितैर्यवैः ॥ प्रसेके कल्पितान्सक्तून् भक्षांश्चा द्याद्बली वमेत् ॥ कटुतिक्तैस्तथाशूल्यं भक्षयेज्जांगलं पलं ॥ शुष्कां श्च भक्षान्मुद्गयूषश्च णकादिरसानुपः ॥ श्लेष्मणोऽतिप्रसेकेन वायुः श्ले-ष्माणमस्यति ॥ कफप्रसेकं तं विद्यात्स्निग्धोष्णैरेव निर्जयेत् ॥ पीनसे-ऽपि क्रममिमं वमथौ च प्रयोजयेत् ॥ विशेषात्पीनसेऽभ्यंगान्स्ने-हान्स्वेदांश्च शीलयेत् ॥ स्निग्धानुत्कारिकापिंडैः शिरःपार्श्वगलादिषु॥ लवणाम्लकटूष्णांश्च रसान्स्नेहोपसंहितान् ॥ शिरोंऽसपार्श्वशूलेषु यथादोषविधिं चरेत् ॥ औदाकानूपपिशितैरुपनाहाः सुसंस्कृताः ॥ शस्यंते सचतुःस्नेहाः शिरःपार्श्वांसशूलिनां ॥ लेपश्च नतयष्ट्या-ह्वशताह्वाकुष्ठचंदनैः ॥ बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलं ॥ प-लंकषा देवदारु चंदनं मधुकं घृतं ॥ कृष्णगंधा बला वीरा विदारी सपु-नर्नवा ॥ अभीरुयष्टिमधुकं पयस्या कत्तृणं घृतं ॥ इत्यर्द्धयोगैश्चत्वारः प्रदेहाः परिकीर्तिताः ॥ शस्ताः संसृष्टदोषाणां शिरःपार्श्वांसशूलिनां ॥ नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः ॥ तैलान्यभ्यंगयोगीनि ब-स्तिकर्म तथा परं ॥ शृंगाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ॥ प्रदेहः सघृतैश्चेष्टः पद्मकोशीरचंदनैः ॥ दूर्वामधुकमंजिष्ठाकेसरैर्वा घृताप्लुतैः ॥ चंदनाद्येन तैलेन शतधौतेन सर्पिषा ॥ अभ्यंगः पयसा सेकः शस्तश्च मधुकांबुना ॥ प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते ॥ तस्याति-

१ वचादिसिद्धतैलेनेत्यष्टांगहृदये पाठः

सारग्रहणीविहितं हितमौषधं ॥ सनागरानिंद्रयवान्पाययेत्तंदुलांबुना ॥ जीर्णेषु तेषु पेयां च चांगेरीतक्रदाडिमैः ॥ पाठानिंबयवानीनां चूर्णं तक्रेण वा पिबेत् ॥ सुरया वा प्लुतं पाठां सनागरदुरालभां ॥ जंब्वाम्र-बिल्वमध्यं वा सकपित्थं सनागरं ॥ पेयामंडेन योगैश्च पाठाद्यैः कारये-त्त्रिभिः ॥ समूप्यवाँन्यान्सस्नेहान्साम्लान्सलवणान् खलान्॥वेतसार्जु-नजंबूनां मृणालीकृष्णगंधयोः ॥ श्रीपर्ण्या मातुलुंगस्य धातक्या दाडि-मस्य च ॥ चांगेर्या मदयंत्याश्च यूथिकायाश्च पल्लवैः ॥ कालविदुम्बि-कायाश्च चुक्रिकायाश्च योजयेत् ॥ खलान्दधिसरोपेतान्ससर्पिष्कान्स-दाडिमान् ॥ रोचनान्दीपनान्दद्यादतीसारहरान्परान् ॥पुरीषं यत्नतो र-क्षेच्छुष्यतो राजयक्ष्मिणः ॥ सर्वधातुक्षयार्तस्य बलं तस्य हि विड्बलं ॥ ज्वरादिष्वपि कुर्वीत विकारेषु यथामयं ॥ बह्वामयसमूहो हि यक्ष्मा ऽलः सोऽतिदुःसहः ॥ अजां वा पर्युपासीत षण्मासानुटजे वसन् ॥ त-त्पयोमूत्रविड्वृत्तिपरिषेकप्रघर्षणं ॥ ताभिः परिवृतः स्वप्यात्तच्छकृद्रे-णुसंस्तरे ॥ एतद्रसायनं श्रेष्ठं रोगराजस्य नाशनं ॥ अजाशकृद्रसक्षीर दधिमूत्रैः शृतं घृतं ॥ सपंचपटु पंचाजं क्षयी क्षीरानुपः पिबेत् ॥ मां-समेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च ॥ अविधारीतवेगस्य यक्ष्मा न लभतेऽतरं ॥ सुरां समंडां मार्द्वीकमरिष्टं सीधुमाधवान् ॥ यथार्हम-नुपानार्थं पिबन्मांसानि भक्षयेत् ॥ स्रोतोविबंधमोक्षार्थं बलौजःपुष्टये च तत् ॥ स्नेहक्षीरांबुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ॥ उत्तीर्णं मिश्रक-स्नेहैः पुनराक्तं सुखैः करैः॥ मृद्नीयात्सुखमासीनं सुखं चोद्वर्तयेत्परं॥ जीवंतीं शतवीर्यां च विकसां सपुनर्नवां ॥ अश्वगंधमपामार्गं तर्कारीं मधुकं बलां ॥ विदारीं सर्षपान् कुष्टं तंदुलानतसीफलं ॥ माषांस्तिलां श्च किण्वं च सर्वमेकत्र चूर्णयेत् ॥ यवचूर्णं त्रिगुणितं दध्ना युक्तं स-माक्षिकं ॥ एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदं ॥ गौरसर्षपकल्केन स्ना नीयौषधिभिश्च सः ॥ स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ॥ गंध

माल्यादिकां भूषामलक्ष्मीनाशनीं भजेत् ॥ सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतीः ॥ बस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता ॥ दैवव्यपाश्रयं तत्तदथर्वोक्तं च पूजितं ॥ इष्ट्या यया च चंद्रस्य राजयक्ष्मा पराजितः ॥ पुरोहितः प्रयुंजीत वेदोक्तां तां जितात्मनः ॥ ॥ इति राजयक्ष्मचिकित्सितं नाम सप्तमोऽध्यायः ॥ ७ ॥

अथातश्छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः ॥ आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः ॥ लंघनं प्रागृते वायोर्वमनं तत्र योजयेत् ॥ बलिनो बहुदोषस्य वमतः प्रततं बहु ॥ ततो विरेकं क्रमशो हृद्यं मद्यैः फलांबुभिः ॥ क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः॥ शमनं चौषधं रूक्षदुर्बलस्य तदेव तु॥ परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते ॥ उपवासास्तथा यूषा रसाः कांबलिकाः खलाः॥ शाकानि लेहा भोज्यानि रागपानकखांडवाः ॥ भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणं ॥ गंधाः सुगंधयो गंधफलपुष्पान्नपानजाः॥ भुक्तमात्रस्य सहसा मुखे शीतांबुसेचनं ॥ हंति मारुतजां छर्दिं सर्पिः पीतं ससैंधवं ॥ किंचिदुष्णं विशेषेण सकासहृदयद्रवां ॥ व्योषत्रिलवणाढ्यं वा सिद्धं वा दाडिमांबुना ॥ सशुंठीदधिधान्येन शृतं तुल्यांबु वा पयः॥ व्यक्तसैंधवसर्पिर्वा फलाम्लो वैष्किरो रसः ॥ स्निग्धं च भोजनं शुंठीदधिदाडिमसाधितं ॥ कोष्णं सलवणं चात्र हितं स्नेहविरेचनं ॥ पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ॥ सर्पिर्वा तैल्वकं योज्यं वृद्धं च श्लेष्मधामगं ॥ ऊर्ध्वमेव हरेत्पित्तं स्वादुतिक्तैर्विशुद्धिमान् ॥ पिबेन्मंथं यवागूं वा लाजैः समधुशर्करं ॥ मुद्गजांगलजैरद्याद्व्यंजनैः शालिषष्टिकं ॥ मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ॥ मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशां ॥ द्राक्षारसं रसं वै क्षौगुडूच्यंबु पयोऽपि वा ॥ जंब्वाम्रपल्लवोशीरवटाश्वत्थांकुरोद्भवः ॥

१ पिबेन्मंथमत्यष्टांगहृदये पाठः

काथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति ॥ छर्दिं ज्वरमतीसारं मूर्च्छां तृष्णां च दुर्जयां ॥ धात्रीरसेन शीतं वा पिबेन्मुद्गदलांबु वा ॥ कोलमज्जासितालाजमक्षिकाविट्कणांजनं ॥ कोलास्थिमज्जास्रोतोजलाजोत्पलरजांसि वा ॥ लिह्यात्क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा ॥ पिबेच्छीतांबुना शालिस्वर्णगैरिकजं रजः ॥ पिष्टं वा चंदनं द्राक्षामांसीसेव्यांबुगैरिकं ॥ शालितंदुलतोयेन पिबेद्वा ससितामधु ॥ मधूकमधुकद्राक्षाकमलामलकांबुदं ॥ ससारिवापरूषाख्यं मूर्वां वा माक्षिकान्वितां ॥ मधुकमात्मगुप्तां वा शीतं धात्रीरसेन वा ॥ कफजायां वमेन्निंबकृष्णापिंडीतसर्षपैः ॥ युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ॥ आरग्वधादिनिर्यूहं शीतं क्षौद्रयुतं पिबेत् ॥ त्रिफलाकणाचव्याद्वा पेयां पत्रैः करंजजैः॥ मंथान् यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः॥कफघ्नमन्नं हृद्यं च रागाः सार्जकभूस्तृणाः ॥लीढं मनःशीलाकृष्णामरिचं बीजपूरकात् ॥ स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ॥समुस्तां मधुना शृंगीकोलाम्लं वा सजांबवं॥तद्वद्विडंगत्रिफला विडंगपरिपेलवं॥तद्वद्दुरालभां खादेत्कपित्थं त्र्यूषणेन वा॥अनुकूलोपचारेण याति द्विष्टार्थजा शमं॥कृमिजा कृमिहृद्रोगगदितैश्च भिषग्जितैः॥ यथास्वं परिशेषाश्च तत्कृताश्च तथाऽऽमयाः॥ त्वरमाणो जयेच्छर्दिं प्रसक्तामनुबंधिनीं॥कोष्ठाश्रया महामर्मपीडाकरतरा हि सा॥नचान्नेन विना कायस्तन्मयो वर्ततेऽपिच ॥धातुक्षयोऽतिवमथोः समीरणसमीरणात्॥नियतं जायते तस्माद्द्रुतमत्र प्रयोजयेत् ॥ प्रच्छर्दनातियोगोक्तं क्रमं स्तंभनबृंहणं ॥ सर्पिर्गुडान् रसान्क्षीरं घृतं कल्याणजीवनं ॥ धान्वंतरं त्र्यूषणं वा दोषदेहानुरोधतः॥हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ॥ पिबेत्सुखोष्णं सबिडं गुल्मानाहार्तिजिच्च तत् ॥ तैलं च लवणैः सिद्धं समूत्राम्लं तथागुणं ॥ बिल्वरास्नायवान्कोलं देवदारु पुनर्नवां ॥ कु-

१ शीतंचंदनं ॥ तथाचरकः ॥ धात्रीरसेनोत्तमचंदनंवेति २ पिंडीतं मदनफलं

स्तथान्पंचमूलं च पक्त्वा तस्मिन्पचेज्जले ॥ तैलं तन्नावने पाने ब-स्तौ च विनियोजयेत् ॥ शुंठीवयस्थालवणकायस्थाहिंगुपौष्करैः ॥ पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्घृतं ॥ सौवर्चलस्य द्विपले प-थ्यापंचाशदन्विते ॥ घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मनुत् ॥ दाडिमं कृष्णलवणं हिंगु शुंठ्यम्लवेतसं ॥ अपतंत्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमं॥पुष्कराव्हशठीशुंठीबीजपूरजटाभयाः॥पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः ॥ विकर्तिकाशूलहराः क्वाथः कोष्णश्च तद्गुणः ॥ यवानीलवणक्षारवचाजाज्यौषधैः कृतः ॥ सपूतिदारुबीजाव्हपला-शशठिपौष्करैः ॥ पंचकोलशठीपथ्यागुडबीजाव्हपौष्करं ॥ वारुणीक-ल्कितं भृष्टं यमके लवणान्वितं ॥ हृत्पार्श्वयोनिशूलेषु खादेद्गुल्मो-दरेषु च ॥ स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च ॥ लघुना पंचमूलेन शुंठ्या वा साधितं जलं ॥ वारुणीदधिमंडं वा धान्याम्लं वा पिबेत्तृषि ॥ सायामस्तंभशूलामे हृदि मारुतदूषिते ॥ क्रियैषा स-द्रवायामप्रमोहे तु हिता रसाः ॥ स्नेहाढ्यास्तित्तिरिक्रौंचशिखिवर्तक-दक्षजाः॥बलातैलं सहृद्रोगः पिबेद्वा सुकुमारकं॥यष्ट्याव्हशतपाकं वा महास्नेहं तथोत्तमं ॥ रास्नाजीवकजीवंतीबलाव्याघ्रीपुनर्नवैः ॥ भार्ङ्गी-स्थिरावचाव्योषैर्महास्नेहं विपाचयेत् ॥ दधिपादं तथाम्लैश्च लाभतः स निषेवितः ॥ तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः ॥त्र्यूषणं त्रि-फला पाठा मधूकं मधुकं त्रुटिः ॥ पंचमूलं लघु बले मेदे ऋद्धिः श-तावरी ॥ कंटकारी तामलकी जीवकं चाक्षसंमितैः ॥ तैः पचेत्सर्पिषः प्रस्थं दध्नः प्रस्थेन माहिषात् ॥ युक्तं सिद्धं च मधुना तन्निहंति नि-षेवितं ॥ हृत्पार्श्वग्रहणीरोगश्वासकासहलीमकान् ॥ दीप्तेऽग्नौ सव्य-वायामे हृद्रोगे वातिके हितं ॥ क्षीरं दधि गुडः सर्पिरौदकानूपमामि-षं ॥ एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ॥ शेषेषु स्तंभजाड्या-मसंयुक्तेऽपि च वातिके ॥ कफानुबंधे तस्मिंस्तु रूक्षोष्णामाचरेत्क्रि-

र्यां ॥ पैत्ते द्राक्षेक्षुनिर्यासमिताक्षौद्रपरूषकैः ॥ युक्तो विरेको हृद्यः स्यात्क्रमः शुद्धे च पित्तहा ॥ क्षतपित्तज्वरोक्तं च बाह्यांतःपरिमार्जनं ॥ कट्वीमधुककल्कं च पिबेत्ससितमंभसा ॥ श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ॥ बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितं ॥ सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनं ॥ प्रपौंडरीकमधुकबिसग्रंथिकसेरुकाः ॥ सशुंठीशैवलास्ताभिः सक्षीरं विपचेद्घृतं ॥ शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ॥ बस्तिं च दद्यात्सक्षौद्रं तैलं मधुकसाधितं ॥ कफोद्भवे वमेत्स्विन्नः पिचुमंदवचांभसा ॥ कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ॥ पिबेच्चूर्णं वचाहिंगुलवणद्वयनागरात् ॥ सैलायवानककणायवक्षारात्सुखांबुना ॥ फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा ॥ पुष्कराह्वाभयाशुंठीशठीरास्नावचाकणात् ॥ क्वाथं तथाऽभयाशुंठीमाद्रीपीतद्रुकट्फलात् ॥ क्वाथे रोहितकाश्वत्थखदिरोदुंबरार्जुने ॥ सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः ॥ सुखोदकानुपानस्य लेहः कफविकारहा ॥ श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान्पिबेत् ॥प्रयोजयेच्छिलाह्वं वा ब्राह्मं वाऽत्र रसायनं॥तथाऽमलककलेहं वा प्राशं वा ऽगस्त्यनिर्मितं॥स्याच्छूलं यस्य भुक्तेऽन्ने जीर्यत्यल्पं जरांगते॥शाम्येत्सकुष्ठकृमिजिल्लवणद्वयतिल्वकैः॥सदेवदार्वतिविषैश्चूर्णमुष्णांबुना पिबेत् ॥ यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैः पुनः ॥ जीर्यत्यन्ने तथा मूलैस्तीक्ष्णैः शूले सदाऽधिके ॥ प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये ततः ॥ तस्यानुलोमनं कार्यं शुद्धिलंघनपाचनैः ॥ कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये ॥ तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ॥ सर्वासु शीतो बाह्यांतस्तथा शमनशोधनः ॥ दिव्यांबु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणं ॥ निर्वापितं तप्तलोष्टकपालसिकतादिभिः ॥ सशर्करं वा क्वथितं पंचमूलेन वा जलं ॥ शरपूर्वेण मंथश्च प्रशस्तो लाजसक्तुभिः ॥ वाट्यश्चामयवैः शीतः शर्क-

शर्कराक्षिकान्वितः ॥ यवागूः शालिभिस्तद्वत्कोद्रवैश्च चिरंतनैः ॥ शीते च शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनं ॥ हिमांबुपरिषिक्तस्य पयसा ससितामधु॥रसैश्चानम्लल्लवणैर्जांगलैर्घृतभर्जितैः ॥मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥ नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसे ॥ नारिक्षीरेण वा घृष्टमुष्ट्रास्थि ससितं हितं ॥ निर्वापणाश्च गंडूषाः सूत्रस्थानोदिता हिताः ॥ दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ अट्टहासरौद्रदादीनां दर्शनं स्मरणादि च ॥ तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥ रसाश्च बृंहणाः शीता विदार्यादिगणांबु च ॥ पित्तजायां सितायुक्तः पक्वोदुंबरजो रसः ॥ तत्क्वाथो वा हिमस्तद्वत्सारिवादिगणांबु वा ॥ तद्विधैश्च गणैः शीतकषायान् ससितामधून् ॥ मधुरैरौषधैस्तद्वत्क्षीरिवृक्षैश्च कल्पितान् ॥ बीजपूरकमृद्वीकावटवेतसपल्लवान् ॥ मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतं ॥ अपाकं शर्कराछिन्नरुहारोध्रांजनांबु वा ॥ कार्पासीफलकल्कं वा ससितक्षीरभोजनः ॥ ज्वरोदितं वा द्राक्षादि पंचसारांबु वा पिबेत् ॥ कफोद्भवायां वमनं निंबप्रसववारिणा ॥ बिल्वाढकीपंचकोलदर्भपंचकसाधितं॥ जलं पिबेद्रजन्यां वा सिद्धं सक्षौद्रशर्करं ॥ मुद्गयूषं च सव्योषपटोलीनिंबपल्लवं ॥ यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत् ॥ सर्वैरामाच्च तद्धंत्री क्रियेष्टा वमनं तथा ॥ त्र्यूषणारुष्करवचाफलाम्लोष्णांबुमस्तुभिः ॥ अन्नात्ययान्मंडमुष्णं हिमं मंथं च कालवित् ॥ तृषि श्रमान्मांसरसं मंथं वा ससितं पिबेत् ॥ आतपात्ससितं मंथं यवकोलजसक्तुभिः ॥ सर्वाण्यंगानि लिंपेच्च तिलपिण्याककांजिकैः ॥ शीतस्नानात्तु मद्यांबु पिबेत्तृड्वान् गुडांबु वा ॥ मद्याद्र्धजलं मद्यं स्ना-

---

१ प्लक्षोदुंबरज इति पाठः २ सन्निपातेनामाच्च जातायां तृषि तद्धंत्री सन्निपातघ्नी आमघ्नी च क्रिया इष्टा ३ अन्नविरहात्तृष्णायां सत्यां ४ उष्णाभितप्तस्य शीतस्नानात्तृषि जातायां लघ्वाशिति भोजनं

तोऽम्ललवणैर्युतं ॥ स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिरं पयः॥ स्नेहा दुष्णांब्वजीर्णात्तु जीर्णान्मंडं पिपासितः ॥ पिबेत् स्निग्धान्नतृषितो हिमस्पर्द्धि गुडोदकं॥गुर्वाद्यन्नेन तृषितः पीत्वोष्णांबु तदुल्लिखेत्॥क्षय जायां क्षयहितं सर्वं बृंहणमौषधं ॥ कृशदुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ॥ क्षीरं च सोर्ध्ववातायां क्षयकासहरैः शृतं ॥ रोगोपसर्ग- जातायां धान्यांबुससितामधु ॥ पाने प्रशस्तं सर्वा च क्रिया रोगाद्य- पेक्षया ॥ तृड्वान्पूर्वामयक्षीणो न लभेत जलं यदि ॥ मरणं दीर्घरोगं वा प्राप्नुयात्त्वरितं ततः ॥ सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत्पु- रा ॥ तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुं ॥ ॥ इति छर्दिहृद्रोगतृष्णाचिकित्सितं नामाष्टमोऽध्यायः॥ ८ ॥

॥ अथातो मदात्ययादिचिकित्सितं व्याख्यास्यामः ॥ यं दोषम- धिकं पश्येत्तस्यादौ प्रतिकारयेत् ॥ कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥ पित्तमारुतपर्यंतः प्रायेण हि मदात्ययः॥ हीनमिथ्याति- पीतेन यो व्याधिरुपजायते ॥ समपीतेन तेनैव स मद्येनोपशाम्यति॥ मद्यस्य विषसादृश्याद्विषं तूत्कर्षवर्तिभिः॥ तीक्ष्णादिभिर्गुणैर्योगाद्वि- षांतरमपेक्षते ॥ तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥ मद्ये- नान्नरसक्लेदो विदग्धः क्षारतां गतः ॥ यान्कुर्यान्मदतृण्मोहज्वरांतर्दा हविभ्रमान् ॥ मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतःसु मारुतः ॥ सुतीव्रा वेदना याश्च शिरस्यस्थिषु संधिषु ॥ जीर्णाममद्यदोषस्य प्रकांक्षालाघवे सति ॥ यौगिकं विधिवद्युक्तं मद्यमेव निहंति तान् ॥ क्षारो हि- याति माधुर्यं शीघ्रमम्लोपसंहितः ॥ मद्यमम्लेषु च श्रेष्ठं दोषविष्यं दनादलं ॥ तीक्ष्णोष्णाद्यैः पुराप्रोक्तैर्दीपनाद्यैस्तथागुणैः ॥ सात्म्य- त्वाच्च तदेवास्य धातुसाम्यकरं परं ॥ सप्ताहमष्टरात्रं वा कुर्यात्पाना- त्ययौषधं ॥ जीर्यत्येतावता पानं कालेन विपथाश्रितं ॥ परं ततोऽनुब- ध्नाति यो रोगस्स्यत भेषजं ॥ यथायथं प्रयुंजीत कृतपानात्ययौषधं

॥ तत्र वातोल्बणे मद्यं दद्यात्पिष्टकृतं युतं ॥बीजपूरकवृक्षाम्लकोल-दाडिमदीप्यकैः ॥ यवानीहपुषाऽजाजीव्योषत्रिलवणार्द्रकैः ॥ शूल्यै-र्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभिः ॥ उष्णास्निग्धाम्ललवणा मद्यमां-सरसा हिताः ॥ आम्राम्रातकपेशीभिः संस्कृता रागखांडवाः ॥ गोधू-ममाषविकृतिर्मृदुश्चित्रा मुखप्रिया ॥ आर्द्रिकाऽऽर्द्रककुल्माषसुक्त-मांसादिगर्भिणी ॥ सुरभिर्लवणा शीता निर्गदा चाच्छवारुणी ॥ स्व-रसो दाडिमात्क्वाथः पंचमूलात्कनीयसः ॥ शुंठीधान्यात्तथा मस्तुसु-क्तांभोऽच्छाम्लकांजिकं ॥ अभ्यंगोच्छादनं स्नानमुष्णं प्रावरणं घनं ॥ घनश्चागुरुजो धूमः पंकश्चागुरुकुंकुमः ॥ कुचोरुश्रोणिशालिन्यो यौ-वनोष्णांगयष्टयः ॥ हर्षेणालिंगने युक्ताः प्रियाः संवाहनेषु च ॥ पि-त्तोल्बणे बहुजलं शार्करं मधु वा युतं ॥ रसैर्दाडिमखर्जूरभव्यद्राक्षा-परूषकैः ॥ सुशीतं ससितासक्तु योज्यं तादृक् च पानकं ॥ स्वादुव-र्गकषायैर्वा युक्तं मद्यं समाक्षिकं ॥ शालिषष्टिकमश्नीयाच्छशाजैण-कपिंजलैः ॥ सतीनमुद्गामलकपटोलीदाडिमैरपि ॥ कफपित्तं समुत्क्लि-ष्टमुल्लिखेत्तृड्विदाहवान् ॥ पीत्वांबु शीतं मद्यं वा भूरीक्षुरससंयुतं ॥ द्रा-क्षारसं वा संसर्गी तर्पणादिः परं हितः॥तथाऽग्निर्दीप्यते तस्य दोषशेषा-न्नपाचनः॥कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च॥ तृष्णायां सविदा-हायां सोत्क्लेशे हृदयोरसि ॥ गुडूचीभद्रमुस्तानां पटोलस्याथवा रसं ॥ सनागरं योजयेत तित्तिरिप्रति भोजनं ॥ तृष्यते चातिबलवद्वातपित्ते समुद्धते॥दद्याद्द्राक्षारसं पानं शीतं दोषानुलोमनं॥जीर्णेऽद्यान्मधुराम्ले-न छागमांसरसेन च ॥ तृष्यल्पशः पिबेन्मद्यं मदं रक्षन्बहूदकं॥मुस्त-दाडिमलाजांबु जलं वा पर्णिनीशृतं ॥ पटोल्युत्पलकंदैर्वा[1] स्वभावादेव वा हिमं ॥ मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते॥यः शुष्कगल-

[1] पाटल्युत्पलकंदैरितिपाठः

ताल्वोष्ठौ जिह्वां निष्कृष्य चेष्टते ॥ पाययेत्कामतोऽम्भस्तं निशीथपवनाहतं ॥ कोलदाडिमवृक्षाम्लचुक्रिकाचुक्रिकारसः ॥ पंचाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥ दाहं प्रकुरुते घोरं विव्हलो येन मुह्यति॥तृष्णामोहपरीतस्य तस्य दाहज्वरापहं ॥ विधिं यथोक्तं युंजीत बाह्यांतः परिमार्जनं॥ प्राभातमारुतोद्धूताः प्रालेयजलवर्षिणः ॥ स्मर्यमाणा अपि घ्नंति दाहं मलयपादपाः॥ मुक्ताकलापाः शशिरश्मिशुभ्रा मृणालपत्रप्रभवा विचित्राः ॥ सेकावगाहाः सजला जलार्द्रा वाताः सुशीता मणयो महार्हाः ॥ आलिंजराः[1] पद्मपुटापिधानाः प्रवालवर्णा हिमवारिपूर्णाः॥ परिस्रवंतो दृतयो महांतः पुत्राः प्रिया दर्पणमंडलानि ॥ नार्यश्च नीलोत्पलकर्णपूरा मध्यं वयः किंचिदिव स्पृशंत्यः ॥ मनोनुकूला हरिचंदनार्द्रास्तृड्दाहमूर्च्छादवथून्जयंति ॥ करेणुकाभिः परिवारितेन विक्षोभणं वारणयूथपेन ॥ आस्फालनं शीकरवर्षणं च सिंधोः स्मरन्दाह तृषोरगम्यः ॥ सरिद्ध्रदानां हिमवद्दरीणां चंद्रोदयानां कमलाकराणां॥मनोरमाऽन्याऽपि कथा प्रवृद्धा दाहं च तृष्णां च निहंति सद्यः॥ लाजोत्पलोशीरकुचंदनांबु शीताभिधानं मधुशर्कराढ्यं ॥ मद्योद्भवां पित्तकृतां च तृष्णां सदाहशोषां विनिहंति पीतं ॥ प्रियंगुपत्रप्लवरोध्रसेव्यह्रीबेरकालीयकनागपुष्पैः ॥ शीतांबुपिष्टैर्नवकर्परस्थैस्तृड्दाहहा सर्वशरीरलेपः ॥ अशाम्यत्यथवा दाहे रसैस्तृप्तस्य जांगलैः ॥ शाखाश्रयां यथान्यायं रोहिणीं व्यधयेच्छिरां ॥ उल्लेखनोपवासाभ्यां विजयेत कफोल्बणं ॥ तृषितोऽम्बु पिबेच्छीतं मुस्तया पर्पटेन वा ॥ स्थिराशुंठीबलोदीच्यदुःस्पर्शान्यतमेन वा ॥ सिद्धमेतच्च सर्वेषु पानदोषेषु शस्यते ॥ निरामं क्षुधितं काले पाययेद्बहुमाक्षिकं ॥ शार्करं मधु वा जीर्णमरिष्टं सीधुमेव वा ॥ रूक्षतर्पणसंयुक्तं यवानीनागरा-

---

१ अलिंजरः स्यान्मणिकदृत्यमरः ( डेरा माठ इति प्रसिद्धः )

न्वितं ॥ यूषेण यवगोधूमं तनुनाऽल्पेन भोजयेत् ॥ उष्णाम्लकटुति-
क्तेन कौलत्थेनाल्पसर्पिषा॥ शुष्कमूलकजैश्छागैरसैर्वा धन्वचारिणां ॥
साम्लवेतसवृक्षाम्लपटोलीव्योषदाडिमैः ॥ प्रभूतशुंठीमरिचहरितार्द्र-
कपेशिकं ॥बीजपूररसाद्यम्लं भृष्टनीरसवर्तितं॥ करीरकरमर्दादिरोचि-
ष्णुबहुशालनं ॥ प्रव्यक्ताष्टांगलवणं विकल्पितविमर्दकं ॥ यथाग्निभ-
क्षयन्मांसं माधवं निगदं पिबेत्॥ सितासौवर्चलाजाजितिंतिडीकाम्ल-
वेतसं ॥ त्वगेलामरिचार्द्धांशमष्टांगलवणं हितं ॥ स्रोतोविशुध्द्यग्नि-
करं कफप्राये मदात्यये ॥ कटुस्कंधयुतां चैतां मृद्वीकां निष्कुलीकृ-
तां ॥ रसेन मातुलुंगस्य कल्पयेद्दाडिमस्य वा ॥ तथा क्षौद्रयुतो रागः
कृतो रोचनदीपनः ॥ सौवर्चलैलामरिचदीप्यकाजाजिचोरकान् ॥ का-
श्च्या कल्पयेच्चैवं सुक्तं मत्स्यंडिकान्वितं ॥ आम्रामलकपेशीभिः कु-
र्याद्रागान् पृथक् पृथक्॥धान्यसौवर्चलाजाजीकारवीमरिचान्वितान् ॥
सगुडान्मद्यसुक्तेन व्यक्ताम्लान्मरिचोत्कटान् ॥ रूक्षोष्णोद्वर्तनोद्घर्षस्ना
नभोजनलंघनैः॥सकामाभिः सह स्त्रीभिर्युक्त्या जागरणेन च ॥ मदा-
त्ययः कफप्रायः शीघ्रं समुपशाम्यति ॥यदिदं कर्मनिर्दिष्टं पृथग्दोष-
बलं प्रति॥सन्निपाते दशविधे तच्छेषेऽपि विकल्पयेत्॥त्वङ्नागपुष्प-
मगधामरिचाजाजिधान्यकैः ॥पलूषकमधूकैलामुराह्वैश्च सितान्वितैः॥
सकपित्थरसं हृद्यं पानकं शशिबोधितं ॥ मदात्ययेषु सर्वेषु पेयं रुच्या-
ग्निदीपनं ॥ तद्वद्दाडिममृद्वीकाकणाकाश्मर्यद्राक्षभिः॥सबीजपूरकरसै-
र्बिडसौवर्चलान्वितं ॥ फलैर्वा विविधैरम्लं सचित्रचूर्णशर्करं ॥ कर्बुदा-
रांकुरद्राक्षालाक्षावर्षाभुजीरकैः ॥ मधूकयष्टीत्वक्कृष्णाकेसरं श्लक्ष्णचू-
र्णितं ॥ पिबेदालोड्य दुग्धेन सूक्ष्मतांतवगालितं ॥ नाविक्षोभ्य मनो
मद्यं शरीरमविहन्य वा ॥ कुर्यान्मदात्ययं तस्मादिष्यते हर्षणी क्रि-
या ॥ सेव्याः सर्वेंद्रियसुखा धर्मकल्पद्रुमांकुराः ॥ विषयातिशयाः ६

१ बहु प्रभूतं शालनं हरितकं यस्मिन्

च शराः कुसुमधन्वनः ॥ संशुद्धिशमनाद्येषु मददोषः कृतेष्वपि ॥ न-
चेच्छाम्येत्कफे क्षीणे जाते दौर्बल्यलाघवे ॥ तस्य मद्यविदग्धस्य वा
तपित्ताधिकस्य च ॥ ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥ म-
द्यक्षीणस्य हि क्षीरं पीतमाश्वेव पुष्यति ॥ ओजस्तुल्यगुणैः सर्वैर्विप
रीतं च मद्यतः ॥ पयसा विहृते रोगे बले जाते निवर्त्तयेत् ॥ क्षीरप्रयो
गं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥ न विक्षयध्वंसकोत्थैः स्पृशेतो-
पद्रवैर्यथा ॥ तयोस्तु स्याद्धृतं क्षीरं बस्तयो बृंहणाः शिवाः ॥ अभ्यं-
गोच्छादनस्नानान्यन्नपानं च वातजित् ॥युक्तमद्यस्य मद्येन न व्या-
धिरुपजायते ॥ अतोऽस्य वक्ष्यते योगो यः सुखायैव केवलं ॥ आ
श्विनं या महत्तेजो बलं सारस्वतं च या ॥ दधात्यैंद्रं च या वीर्यं प्र-
भावं वैष्णवं च या ॥ अस्त्रं मकरकेतोर्या पुरुषार्थो बलस्य या ॥ सौ-
त्रामण्यां द्विजमुखे या हुताशे च हूयते ॥ या सर्वौषधिसंपूर्णान्मथ्य-
मानात्सुरासुरैः ॥ महोदधेः समुद्भूता श्रीशशांकामृतैः सह ॥ मधुमाध
वमैरेयसीधुगौडासवादिभिः ॥मदशक्तिमनुघ्नंती या रूपैर्बहुभिः स्थि
ता ॥ यामासाद्य विलासिन्यो यथार्थं नाम बिभ्रति ॥ कुलांगनाऽपि
यां पीत्वा नयत्युद्धतमानसा ॥ अनंगालिंगितैरंगैः क्वापि चेतो मुनेर-
पि ॥ तरंगभंगभ्रुकुटीतर्जनैर्मानिनीमनः ॥ एकं प्रसाद्य कुरुते या द्व-
योरपि निर्वृतिं ॥ यथाकामं भटावासिपरिद्दष्टाप्सरोगणे ॥ तृणवत्पुरु-
षा युद्धे यामासाद्य त्यजंत्यसून् ॥ यां शीलयित्वाऽपि चिरं बहुधा ब-
हुविग्रहां ॥ नित्यं हर्षातिवेगेन तत्पूर्वामिव सेवते॥ शोकोद्वेगारतिभयै-
र्यां दृष्ट्वा नाभिभूयते ॥ गोष्ठीमहोत्सवोद्यानं न यस्याः शोभते वि-
ना ॥ स्मृत्वा स्मृत्वा च बहुशो वियुक्तः शोचते यया ॥ अप्रसन्नाऽ-
पि या प्रीत्यै प्रसन्ना स्वर्गएव या ॥ अपींद्रं मन्यते दुस्थं हृदयस्थि-
तया यया ॥ अनिर्देश्यसुखास्वादा स्वयं वेद्यैव या परं ॥ इति चित्रा
स्ववस्थासु प्रियामनुकरोति या ॥ प्रियातिप्रियतां याति यत्प्रिय-

१ यां शीलयित्वेत्यादिः सर्वोऽपि ग्रंथः प्रियायामपि योज्यः

स्यविशेषतः ॥ या प्रीतिर्या रतिर्या वाग्या पुष्टिरिति च स्तुता ॥ देवदानवगंधर्वयक्षराक्षसमानुषैः ॥ पानप्रवृत्तौ सत्यां तु तां सुरां विधिना पिबेत् ॥ संभवंति च ये रोगा मेदोनिलकफोद्भवाः ॥ विधियुक्तादृते मद्यात्ते न सिध्यंति दारुणाः ॥ अस्ति देहस्य साऽवस्था यस्यां पानं निवार्यते॥ अन्यत्र मद्यान्निगदाद्विविधौषधसंभृतात्॥आनूपं जांगलं मांसं विधिनाऽप्युपकल्पितं ॥ मद्यं सहायमप्राप्य सम्यक्परिणमेत्कथं ॥ सुतीव्रमारुतव्याधिघातिनो लशुनस्य च ॥ मद्यमांसवियुक्तस्य प्रयोगः स्यात्कियान्गुणः ॥ निगूढशल्याहरणे शस्त्रक्षाराग्निकर्मणि ॥ पीतमद्यो विसहते सुखं वैद्यविकत्थनां ॥ अनलोत्तेजनं रुच्यं शोकश्रमविनोदनं ॥ न चातःपरमस्त्यन्यदारोग्यबलपुष्टिकृत् ॥ रक्षता जीवितं तस्मात्पेयमात्मवता सदा ॥ आश्रितोपाश्रितहितं ॥ परमं धर्मसाधनं॥स्नातः प्रणम्य सुरविप्रगुरून् यथास्वं वृत्तिं विधाय च समस्तपरिग्रहस्य ॥ आपानभूमिमथ गंधजलाभिषिक्तामाहारमंडपसमीपगतां श्रयेत ॥ स्वास्तृतेऽथ शयने कमनीये भृत्यमित्ररमणीसमवेतः ॥ स्वं यशः कथकचारणसंघैरुद्धतं निशमयन्नतिलोकं ॥ विलासिनीनां च विलासशोभि गीतं सनृत्तं कलतूर्यघोषैः ॥ कांचीकलापैश्चलकिंकिणीकैः क्रीडाविहंगैश्च कृतानुनादं ॥ मणिकनकसमुत्थैराजतैर्विचित्रैः सजलविविधलेखक्षौमवस्त्रावृतांगैः ॥ अपि मुनिजनचित्तक्षोभसंपादिनीभिश्चकितहरिणलोलप्रेक्षिणीभिः प्रियाभिः ॥ स्तननितंबकृतादतिगौरवादलसमाकुलमीश्वरसंभ्रमात् ॥ इति गतं दधतीभिरसंस्थितं तरुणचित्तविलोभनकार्मणं॥यौवनासवमत्ताभिर्विलासाधिष्ठितात्मभिः ॥ संचार्यमाणं युगपत्तन्वंगीभिरितस्ततः ॥ तालवृंतनलिनीदलानिलैः शीतलीकृतमतीव शीतलैः ॥ दर्शनेऽपि विदधद्दशानुगं स्वादितं किमुत चित्तजन्मनः ॥ चूतरसेंदुमृगैः कृतवासं मल्लिकयोज्ज्वलया च सनाथं ॥ स्फाटिकशुक्तिगतं सतरंगं कांतमनं-

गमिवोद्वहदंगं ॥ तालीसाद्यं चूर्णमेलादिकं वा हृद्यं प्राश्यं प्राग्वयःस्थापनं वा ॥ तत्प्रार्थिभ्यो भूमिभागे सुमृष्टे तोयोन्मिश्रं दापयित्वा ततश्च ॥ धृतिमान्स्मृतिमान्नित्यमनूनाधिकमाचरन् ॥ उचितेनोपचारेण सर्वमेवोपपादयन् ॥ जितविकसितासितसरोजनयनसंक्रांतिवर्द्धितश्रीकं ॥ कांतामुखमिव सौरभहृतमधुपगणं पिबेन्मद्यं ॥ पीत्वैवं चषकद्वयं परिजनं सन्मान्य सर्वं ततो गत्वाऽऽहारभुवं पुरः सुभिषजो भुंजीत भूयोऽन्न च ॥ मांसापूपघृताद्रकादिहरितैर्युक्तं ससौवर्चलैर्द्विस्त्रिर्वा निशि चाल्पमेव वनितासंसर्गणार्थं पिबेत् ॥ रहसि दयितामंके कृत्वा भुजांतरपीडनात्पुलकिततनुं जातस्वेदां सकंपपयोधरां ॥ यदि सरभसं सीधूद्गारं न पाययते कृती किमनुभवति क्लेशप्रायां तदा गृहतंत्रतां ॥ वरतनुवक्त्रसंगतिसुगंधितरं सरकं द्रुतमिव पद्मरागमणिभासवरूपधरं ॥ भवति रतिश्रमेण च मदः पिबतोऽल्पमपि क्षयमत ओजसः परिहरन् स शयीत परं ॥इत्थं युक्त्या पिबन्मद्यं न त्रिवर्गाद्धि हीयते ॥असारसंसारसुखं परमं चाधिगच्छति ॥ ऐश्वर्यस्योपभोगोऽयं स्पृहणीयः सुरैरपि॥अन्यथा हि विपत्सु स्यात्पश्चात्तापेंधनं धनं॥उपभोगेन रहितो भोगवानिति निंद्यते॥निर्मितोऽतिकदर्योऽयं विधिना निधिपालकः ॥ तस्माद्यवस्थया पानं पानस्य सततं हितं ॥ जित्वा विषयलुब्धानामिंद्रियाणां स्वतंत्रतां ॥ विधिर्वसुमतामेष भविष्यद्वसवस्तुये॥ यथोपपत्ति तैर्मद्यं पातव्यं मात्रया हितं ॥ यावद्दृष्टेर्न संभ्रांतिर्यावन्न क्षोभ्यते मनः ॥ तावदेव विरंतव्यं मद्यादात्मवता सदा ॥ अभ्यंगोद्वर्त्तनस्नानवासधूपानुलेपनैः ॥ स्निग्धोष्णैर्भावितश्चान्नैः पानं वातोत्तरः पिबेत् ॥ शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलैः ॥ पैत्तिको भावितैश्चान्नैः पिबन्मद्यं न सीदति ॥ उपचारैरशिशिरैर्यवगोधूमभुक् पिबेत् ॥ श्लैष्मिको धन्वजैर्मांसैर्मद्यं मरिचकैः सह ॥ तत्र वाते हितं मद्यं

१ उपभोगं विना भोगवानिति लोकैरुच्यमानो गर्ह्यते

प्रायः पैष्टिकगौडिकं ॥ पित्ते मांभोमधु कफे मार्द्वीकारिष्टमाधवं ॥प्राक् पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ॥ वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छति ॥ मदेषु वातपित्तघ्नं प्रायो मूर्च्छा[1]सु चेष्यते॥ सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ॥ शीताः प्रदेहा मणयः सेका व्यजनमारुताः ॥ सिताद्राक्षेक्षुखर्जूरकाश्मर्यस्वरसाः पयः ॥ सिद्धं मधुरवर्गेण रसा यूषाःसदाडिमाः ॥ षष्टिकाः शालयो रक्ता यवाः सर्पिश्च जीवनं ॥ कल्याणकं[2] महातिक्तं[3] षट्पलं[4] पयसाऽग्निकैः ॥ पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः ॥ त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ॥ प्रसक्तवेगेषु हितं मुखनासावरोधनं ॥ पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनं ॥ मृणालबिसकृष्णा वा लिह्यात्क्षौद्रेण साभयाः ॥ दुरालभां वा मुस्तं वा शीतेन सलिलेन वा ॥ पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरं ॥ धात्रीफलरसे सिद्धं पथ्याक्काथेन वा घृतं ॥ कुर्यात्क्रियां यथोक्तां च यथादोषबलोदयं ॥ पंचकर्माणि शस्तानि तथा रक्तावसेचनं ॥ सत्वस्यालंबनं ज्ञानमगृद्धिर्विषयेषु च ॥ मदेष्वतिप्रवृद्धेषु मूर्च्छायेषु च योजयेत् ॥ तीक्ष्णं संन्यासविहितं विषघ्नं विषजेषु च ॥ आशु प्रयोज्यं संन्यासे सुतीक्ष्णं नस्यमंजनं ॥धूमप्रधमनं तोदः सूचीभिश्च नखांतरे॥केशानां लुंचनं दाहो दंशो दशनवृश्चिकैः ॥ कटुम्लगालनं वक्रे कपिकच्छ्वघर्षणं॥उत्थितो लब्धसंज्ञश्च लशुनस्वरसं पिबेत्॥खादेत्सव्योषलवणं बीजपूरककेसरं ॥लघ्वन्नं कटुतीक्ष्णोष्णमद्यात्स्रोतोविशुद्धये॥विस्मापनैः संस्मरणैःप्रियश्रवणदर्शनैः ॥पटुभिर्गीतवादित्रशब्दैर्व्यायामशीलनैः॥स्रंसनोल्लेखनैर्धूमैः शोणितस्यावसेचनैः ॥उपाचरेत्तं प्रततमनुबंधभयात्पुनः॥ तस्य संरक्षितव्यं च मनः प्रलयहेतुतः ॥ ॥ इति मदात्ययादिचिकित्सितं नाम नवमोऽध्यायः ॥ ९ ॥

---

[1] मदमूर्च्छायेच [2] उन्मादप्रतिषेधोक्तं [3] कुष्ठचिकित्सितोक्तं [4] राजयक्ष्मचिकित्सोक्तं [5] चित्रकः

अथातोऽर्शसां चिकित्सितं व्याख्यास्यामः ॥ अथ खलु बलवंत मर्शोभिरुपद्रुतं यथार्हस्नेहोपस्निग्धस्विन्नमनिलवेदनावृद्धिशमनार्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवंतं शुचिं कृतस्वस्त्ययनं मुक्तविण्मूत्र-मव्यथं समे शुचौ विविक्ते देशे साधारणे व्यभ्रे काले शय्यायां समे फलके वा प्रत्यादित्यगुदमन्यस्योत्संगे निषण्णपूर्वकायमुत्तानमुन्नत-कटीकं यंत्रणशाटकेन परिक्षिप्तग्रीवासक्थिसंधिमलज्जार्हैराप्तपरिचार कैः सुपरिगृहीतं कृत्वा ततोऽस्मै घृताभ्यक्तगुदाय घृताभ्यक्तं यं-त्रमृज्वनुसुखं शनैः पायौ प्रणिदध्यात् ॥ प्रवाहणप्रविष्टं चार्शोऽ-भिवीक्ष्य पिचुप्लोतयोरन्यतरेणावगुंठितया शलाकयोत्पीड्य यथो-क्तविधिनाऽग्निक्षाराभ्यामुपाचरेत् सम्यङ्निर्वापयेच्च ॥ महांति वा प्राणवतश्छित्त्वा दहेत् ॥ छत्राकाराण्यूर्ध्वं विस्तृतानि क्षारसूत्रेण ब-ध्वा ततो यंत्रमपनीयोत्थाप्यातुरं स्वभ्यक्तगुदजघनवंक्षणं यथाकाल-मुष्णोदककोष्ठे शीतोदककोष्ठे वाऽवगाहयेत् ॥ ततो निवातमागारं प्र वेश्याचारिकमुपदिशेत् ॥ सावशेषं पुनर्दाहयेत् ॥एवं सप्तरात्रात्सप्तरा-त्रादेकैकमुपक्रमेत् ॥ बहुषु तु प्राग्दक्षिणं ततो वामं वामात्पृष्ठाग्रजं॥ एकाहं सर्वाणि दहतोऽतियोगोक्तो दोषः ॥ तत्र शुष्काण्यग्निना क्षा-रेण वा साधयेत् ॥ क्षारेणैव मृदुनाऽऽर्द्राणि ॥ एष सर्वत्र दोषेष्वर्शसां दहनविकल्पः ॥ तृतीये तु गुदवलौ प्रत्याख्यायोपचरेन्नवेत्येके ॥ अ-थ सम्यग्दग्धे वातानुलोम्यमन्नाभिरुचिरग्नेर्दीप्तिर्लाघवमिंद्रियप्रसादो यथोक्तोपद्रवनिवृत्तिर्बलवर्णोपपत्तिश्च ॥ असम्यग्दाहे तु क्षाराग्निक-र्मणोर्विधिमीक्षेत ॥ बस्तिवेदनायां कुष्ठशतपुष्पादेवदारुसुरभिपुनर्न-वाऽगुरुकल्केन नाभेरधः सर्वमालिंपेत्॥मूत्रपुरीषप्रतीघाते वरणालंबुषै-रंडपुनर्नवाश्वदंष्ट्रासुरभीसुषवीकषायं सुखोष्णं स्वभ्यक्तपृष्ठकटीवंक्ष-णगुदस्य परिषेकेऽवगाहे वा योजयेत् ॥ क्षीरं सस्नेहं तैलमेव वा ॥ द

१ उष्णोदकोपचारीस्यादित्यादिकं

न्धेषु चार्शस्सु शकृच्छैथिल्यार्थं त्रिवृद्दन्तीकोपोदकाचुंचुपर्णीशाकयुक्तमश्नीयात् ॥ अनिलानलरक्षणोत्तेजनार्थं देहपुष्टये च स्नेहादीन्सम्यगासेवेत ॥ संशोधनाः प्रलेपाद्याः कषायैस्तैलयुक्तयः ॥ व्रणाधिकारमालोच्य योक्तव्या हतनामसु ॥ अथानवचारणीयशस्त्रक्षाराग्निर्वांतकफोल्बणानि दोषपूर्णत्वान्निर्गतानि संस्तम्भकंडूशोफशूलानि क्षारचित्रककुष्टबिल्वमूलकसिद्धेन तैलेन कृष्णाहिबिडालोष्ट्रजलौकःसूकरवसाभिर्वाऽभ्यज्य पिंडेन स्वेदयेद्द्रवस्वेदेन वा ॥ धूपयेच्च सघृतशमीपत्रार्कमूलमानुषकेशाहिनिर्मोकबिडालचर्मभिः ॥ कुंजरवराहष्ट्रपशकृत्सक्तुसर्जरसैर्वा ॥ सुरसाबृहतीपिप्पल्यश्वगंधाभिर्वा ॥ अरिष्टशिग्रुपत्रकुलत्थगवादनीभिर्वा ॥ प्रदिह्याच्च स्नुहीक्षीरयुक्तेन हरिद्राचूर्णेन ॥ गोमूत्रपिष्टैर्वा कुक्कुटशकृन्निशापिप्पलीगुंजामूलैः॥गोपित्तपिष्टाभिर्वा दंतीचित्रकसुवर्चिकाभिः॥सुधाक्षीरपिष्टैर्वा गुडकृष्णासैंधवकुष्टशिरीषबीजैः ॥ तद्वच्च गजास्थितुत्थभल्लातकलांगलीकुलीरशृंगीवचाऽभयाहिंगुकुष्टबिल्वशिग्रुमूलकशीजनिंबाश्वमारपत्रपीलुमूलैः ॥ बस्तमूत्रपिष्टैर्वा गुडागंडार्कक्षीरतुंबप्रसवकरंजैः ॥ पिप्पल्यादिभिर्वाऽनुवासनद्रव्यैः ॥ एभिर्हि प्रदिग्धान्यर्शांसि दुष्टमसृक् संचितं पिच्छां च विमुच्य प्रशाम्यंति ॥ एभिश्च तैलान्यभ्यंगार्थमुपकल्पयेत् ॥ तथा कासीससैंधवालपिप्पलीकुष्टशुंठीविडंगविदारीलांगलीकरवीरार्कस्वर्णक्षीरीदंतीचित्रकालर्कसुधापयोभिस्तैलं चतुर्गुणं मूत्रं विपक्कमप्रदूषयद्गुदमभ्यंगात्क्षारवदर्शांसि शातयति॥तैलाभ्यक्तं वा पायुप्रदेशं पक्वेष्टिकाशकलैस्तीक्ष्णकोटिभिरग्निवर्णैर्माहिषीमूत्रनिर्वापितैर्निष्पीडयन् द्विकालं सप्तदिनानि स्वेदयेत् ॥ अनंतरं च यथोक्तेनावगाहनेन॥ततो गते

---

१ अर्शःसु २ पिंडस्वेदो मनिनोक्तः॥तिलमाषकुलत्थान्नघृततैलामिषोदनैः ॥ पायसैः कृशरैर्मांसैः पिंडस्वेदान्प्रयोजयेदिति ॥

सप्तरात्रे पूतिकरंजपल्लवकल्केन ससैंधवेन सस्नुहीपयसा वर्तिं कृत्वा नातिशुष्कां गुदे विदध्यात्॥कृतविण्मूत्रं चावगाहयेत्स्थापयेत्प्रातः सायं चैष विधिः प्रत्यहमेकांतरे वा यावत्त्रिरात्र ततो देवदालीक्षारहरीतकीः शीलयेत्॥एवमर्शांसि शीर्यंते ॥ अथ हरीतकीपाकविधिः ॥ सजालमूलं जीमूतकमंतर्धूमं दहेत्॥तस्य भस्मनाऽर्द्धाढकं गोमूत्रपात्रद्वयेनैकविंशतिकृत्वो गालयेत् ॥ ततस्तेन क्षारमूत्रेण कुटजचित्रकव्याधिघातकचूर्णप्रसृतत्रयान्वितेन पथ्याशतद्वयमाघनीभावात्पचेत् ॥अवतीर्णे च तमवलेहं व्योषरजःप्रसृतयुक्तं घृतभाविते भाजने निदध्यात् ॥ स लेहः सावलेहविजयाद्वयोपयोगमभ्यस्यमानो गुदजठरजघनवंक्षणगरशूलानाहगुल्मपांडुरोगाश्मरीशर्कराश्वासकासान्निबर्हयति ॥ सदा च पत्रभंगोदकेन कोष्णेनांबुना वा शौचमाचरेत् ॥ प्रवर्तमानं च रुधिरमुच्छूनकठिनेष्वर्शस्सु जलौकोभिः सूचीकूर्चेन वा प्रवर्तयेत् ॥ अग्निसादे गुदशोफशूलार्तौ च हिंग्वर्द्धकर्षं सौवर्चलयवक्षारेंद्रयवपिप्पलीनां पृथक्कर्षं मूर्वार्द्धपलं पाठाद्विपलं शुंठीद्विपलं चैकत्र चूर्णितमुष्णांबुसर्पिर्मद्याद्यैरुपयोज्यं ॥ त्रिलवणादिचूर्णं वा ॥ हिंग्वतिवचाकुष्ठस्वर्जिकाक्षारबिडलवणानि वा द्विगुणोत्तरोत्तराणि ॥ प्राणदां वा तक्रानुपानां सगुडां ॥ प्रातः प्राक्भक्तं वा निरन्नो वा तक्रमहरहरमितं जीर्णे वा तक्रे सायं तक्रपेयां सैंधवयुक्तां पिबेत् ॥ तक्रेणैव वा लाजसक्तूनवलिह्यात् ॥ पीलूनि वा तक्रानुपानानि प्रातः पक्षं पक्षार्द्धं वा प्रयोजयेत् ॥ कटुकिकामूलकल्कं वा प्रातस्तक्रेण ॥ शुंठीचित्रकपुनर्नवाक्वाथसिद्धं वा क्षीरं गोमूत्रपरिस्रुते वा बहुकृत्वोऽजामूत्रकक्षार उषिता हरीतकीः ॥ गोमूत्रार्द्धद्रोणसिद्धं वा क्षौद्रवदभयाशतं ॥ वासिष्ठहरीतकीर्वा ॥ भल्लातकानि वा रसायनोपदेशेन ॥ पुनर्नवामलंबुषां वा शोफोक्तविधिना ॥ गुडार्द्रकं वा ॥ सक्तुमंथं वा भल्लातकचूर्णयुक्तं नातिलवणं तक्रेण ॥ तक्रेण वाऽऽषाढकार्तिकमार्गशीर्षाणां मासा

मामन्यतमस्मिन्पुष्ययोगे समुद्धृतं चित्रकं ॥ अथवा मस्तुयूषक्षीर-घृततैलान्यतमेन चित्रकमूलक्काथावलेहं वा समधुगुडं तक्राशी शील-येत् ॥ कलशे वा ततश्चित्रकमूलत्वक्कल्कलिप्तशुष्के जातं दधि काल शेयं वा पानभोजनेषु ॥ एवं भार्ङ्ग्यास्फोतगुडूचीपंचकोलकेषु तक्रक ल्पः ॥ घृतघटे वा हपुषोपकुंचिकाधानकाजमोदाजाजीशठीकारवीय वानीचित्रकपिप्पलीमूलचूर्णासुतं जातं तक्रं॥तक्रमेव वाऽतिमंदवह्निः सप्ताहमर्द्धमासं मासमपि वा कालापेक्षया रूक्षं सस्नेहमम्लं वा सान्नम नन्नं वा शीलयेत् ॥ ततस्तक्रसिद्धानि क्रमशोऽर्शोघ्नलघुदीपनीयद्रव्य धान्यपिशितशाकोपकल्पितानि पेयायूषरसव्यंजनानि ॥ तक्रं हि पर-ममौषधमनिलकफातंकानां विशेषाज्जठराश्रितानां ॥ तत्रापि विशेषे-ण दुर्नाम्नां ॥ न हि तद्विहतान्यर्शांसि पुनः प्ररोहंति ॥ भूमावपि त-न्निषिच्यमानमहरहः समूलमुच्छिन्नत्ति तृणजातमाश्वपिच शैवालं॥ तद्विशोधिते पुनर्देहे स्रोतःसूपचीयमानोऽन्नरसः पुष्टिबलवर्णौजसामा शु वृद्धये संपद्यते॥मद्यपश्च सेवेत चव्यचित्रकाजाजीचूर्णानुविद्धं म-धु गौडं वा ॥ सौवर्चलहपुषान्वितां वा सुरां ॥ अभयापलाष्टकं द्विगुणा मलकमिंद्रवारुणीपलपंचकं द्विगुणं कपित्थमध्यं रोध्रविडंगैलवालुकपि प्पलीमरिचानि द्विपलांशानि जर्जरितान्युदकभारे विपाच्य पादशेषरसं पूतशीतं गुडतुलाद्वयेन धातकीप्रस्थेन वा पलाष्टकेन च संयोज्य घृत-भाजनेऽर्द्धमासस्थितं प्रातरन्नकाले चोपयुंजीत ॥ अयमभयारिष्टो-ऽर्शोग्रहणीपांडुहृद्रोगकामलायक्ष्मविषमज्वरप्लीहगुल्मोदरश्वयथुकुष्ठ क्रिमिग्रंथ्यर्बुदघ्नोऽग्निरुचिवर्णकरश्च ॥ दंतीचित्रकत्रिफलादशमूलानि पालिकान्युदकद्रोणे साधयित्वा पादशेषे शृतशीते तस्मिन् गुडतुलां धातकीकुडवं च प्रक्षिप्य घृतभाजने मासमुषितो दंत्यरिष्टः समानः पूर्वेण॥दुरालभायाः प्रस्थमभयाऽऽमलकवृषपाठाचित्रकदंतीमहौषधा-नां प्रत्येकं द्विपलमंभसो द्रोणे पूर्ववत्सिद्धं पूतशीतं शर्करातुलयोन्मि-

श्रं मधुघृतप्रियंगुपिप्पलीचविकाकल्कलिप्ते घृतकुंभे पक्षं निधापये त् ॥ अयं दुरालभारिष्टः समानः पूर्वेण ॥ नवामलकपलशतं पिप्पली नागपुष्पकुडवद्वयं पालिकानि चव्यचित्रकक्रमुकरोध्रपाठामरिचविडं-गमंजिष्ठैलवालुकपिप्पलीमूलान्यर्द्धपलांशानि दार्वीशलाह्वेंद्राह्वासारि-वाद्वयमुस्तकुष्ठान्यैकध्यं जलद्रोणद्वयेऽर्द्धावशेषं साधयेत् ॥ स रसः पूतशीतः समद्राक्षास्वरसः सितापलशतद्वयेन क्षौद्रार्द्धप्रस्थेन पृथक्का-र्षिकेण च त्वगेलारोध्रकुटन्नटांबुसेव्यक्रमुककेसरचूर्णेन युक्तो घृतप्र-लिप्ते गुडशर्कराधूपिते घृतकुंभे प्रक्षिप्य पक्षमुपेक्षितोऽयमामलकारि-ष्टः समानः पूर्वेण ॥ अकालवलीपलितस्वरलीनशमनश्च ॥ गुग्गु-लुपलचतुष्टयमामलकप्रस्थं धातकीप्रस्थमभयाशतं गुडपलशतद्वयं पालिकानि च पंचकोलकाजमोदचतुर्जातककट्फलमुस्तमरिचानि दशपलिकानि च खंडद्राक्षादाडिमानि सर्वमैकध्यमंभसाऽऽप्लाव्यालो-ड्य च पुराणे जतुशृते द्रोणक्षमे भाजने निषिच्य स्थापयेत् ॥ गंधव-र्णरसोपपन्नं चासवमभिसमीक्ष्य तं कुंभमिक्षुरसस्य पूरयेत् ॥ एष षण्मासस्थितो गुग्गुलुप्राशः समानः पूर्वेण ॥ अमद्यपो वा पिबेच्छृत-शीतमल्पमुदकं शृतं वा धान्यनागराभ्यां वा ॥ लघुना पंचमूलेन पंच कोलकाजाजिकारव्येडगजशौंडिबिल्वशलाटुपाठातुंबरुधान्यकैर्वा॥ ए-भिश्च फलाम्लान्यतमाम्लान् स्निग्धान् पेयायूषरसादीनूकुर्यात् ॥ एभि रेव च घृतं साधयेत् ॥ पिबेद्वा मस्तुधान्याम्लं मधुसुक्तोदकं वा ॥ पूतिकरंजत्वक्पलशतद्वयं शुष्कमुदकद्रोणे क्राथयेत् ॥ पादावशेषे च तस्मिन् पूतशीते गुडपलान्यशीतिर्व्योषार्द्धप्रस्थचूर्णं च दत्वा यवपल्ले-घृतकुंभस्थं मासं निधापयेत् ॥ एतत्करंजसुक्तमभ्यस्यमानमत्यमनल जननमर्शोगुल्मानाहप्लीहगरोदरघ्नं च॥पीलुतुलां तुल्यगुडां मस्तुनस्त-क्रस्य वा द्रोणेऽभिषुणुयात् ॥ तत्र पालिकानामभयाऽतिविषापाठा-मुस्तकटुकादेवदारुहिंस्राजीरकारुष्करचव्याजमोदैला चित्रकगजपि-

प्पली व्योषविडंगशताह्वाहरेणुचिरबिल्वत्वकुष्टकुटजबीजत्रिवृत्पिप्पलीमूलोपकुंचिकानां चूर्णं क्षिप्त्वा पूर्ववन्निहितमधिकगुणं पूर्वस्मात् ॥ सुतक्षितानामिक्षुगंडिकानां द्रोणमुदकद्रोणेन घृतभाविते भाजनेऽभिषुणुयात् ॥ आवपेच्चात्र जर्जरीकृता यवानीयवानककुस्तुंबरीपृथ्वीका पृथक्कुडवांशास्तथा द्विपलोन्मिताश्चतेजोवतीपंचकोलकाजाजीजीरकह्यकारवीः क्षौद्रकुडवं च ॥ ततो दशरात्रेण संजातस्तस्मान्मात्रां सौवर्चलार्द्रकभूस्तृणैः सुरभीकृतां भुंजानः पिबेत् ॥ तत्पुनश्चात्र पानीयं प्रक्षिपेदिक्षुगंडिकादिं च संभारं ॥ तद्गंडीराख्यं कांजिकवरं रुचिकरमग्निदीपनमर्शोग्रहणीविकारोदरगरकृमिगुल्ममदात्ययपांडुरोगघ्नं ॥ रूक्षकोष्ठश्चार्शसो नागरक्षारकृष्णाजाजीधान्यकारविगर्भं फलाम्लं सफाणितं सर्पिः पिबेत् ॥ गुल्मोक्तानि वा घृतानि ॥ किंशुकक्षारोदकेन वा विपक्वं व्योषगर्भं ॥ पाठामरिचपंचकोलकक्षारयवानीकुस्तुंबरुहरीतकीबिल्वबिडसैंधवगर्भं चतुर्गुणेन दध्ना सर्पिर्विपक्वं प्रवाहिकागुदभ्रंशपिच्छास्रावानाहगुल्मपायुपार्श्ववंक्षणवेदनाग्रहणीदोषहृद्रोगमूत्रकृच्छ्रघ्नं ॥ पिप्पलीपाठानागरगोक्षुरकाणां त्रिपालिकानां निर्यूहे गंडीरमरिचपंचकोलकान्यर्द्धपलिकानि कल्कीकृत्य षड्गुणेन दध्नो चत्वारिंशत्पलानि तुल्यचांगेरीरसानि पाचयेत् ॥ तत्सर्पिः समानं पूर्वेण ॥ शोफोदरकासहिध्माघ्नं च ॥ बद्धवर्चांसि चार्शांस्युदावर्तवदुपाचरेत् ॥ भिन्नवर्चांस्यतीसारवत् ॥ अतिप्रवृत्तरक्तानि रक्तपित्तातिसारवत् ॥ अशुद्धं च कालबलापेक्षी स्रवद्रुधिरमुपेक्षेत ॥ उभौ च तत्रानुबध्येते श्लेष्माऽनिलो वा ॥ तत्र पित्तश्लेष्मोल्बणं पाचनदीपनद्रव्यैरुपेक्षया च संशोध्य शमयेत् ॥ पित्तानिलोल्बणमंतर्बहिरूर्ध्वमधश्च यथाभिस्नेहैः ॥ केवलपित्तोल्बणमुष्णकाले विशेषतश्च दुर्बलस्य स्तंभनैः ॥ अथ श्लेष्मोल्बणे कुटजत्वग्विश्वभेषजक्वाथं पिबेत् ॥ तंडुलोदकेन वा कुटजत्वक्कल्कानिर्विषारसांजनानि सक्षौद्राणि ॥ कुटजत्वक्पलश

तमार्द्र दिव्यांबुना क्राथयेत् ॥ मुक्तरसे च पूते तस्मिन् पालिकान् सुश्लक्ष्णपिष्टान् प्रियंगुसमंगामोचरसान् कुटजबीजं त्रिपलं च प्रक्षिप्य मृद्वग्निना पुनः साधयेदादर्वीप्रलेपात् ॥ अयमवलेहश्छगलीक्षीरेण पेयामंडेन वा सहाजक्षीरभुजः प्रयुक्तो रक्तजान्यर्शांस्यतीसारं रक्तपित्तं चोर्ध्वमधो वा प्रवृत्तमपहरति ॥ कुटजत्वक्पलशतमुदकद्रोणेऽष्टभागशेषं साधयेत् ॥ परिस्राव्य च तदुदकं च कल्कीकृतैर्व्योषरसांजनमोचरसमुस्तधातुकीफलबिल्वशलाटुदाडिमशलाटुत्वक्समंगा-रोध्रद्वयैः पलांशैः पलैश्च कुटजत्वचो दशभिस्तथा विंशत्या घृतस्य गुडस्य च त्रिंशता संसृष्टमधिश्रयेत् ॥ अथावलेहतां गतमवतारितं सप्ताहमर्द्धमासं वा धान्यमध्ये सुगुप्तं निहितमुपयुक्तमाशु सर्वाशोग्रहणीदोषश्वासकासानपोहति॥मोचरससमंगातिलरोध्रचंदननीलोत्पलानि वा छागपयसा पिबेत्॥ शूले तु बिल्वयवानीनागररसांजनबिल्वदुरालभावत्सकबीजानामन्यतमेनापि युक्तं पाठाचूर्णेन शीतेन कोष्णेन पयसा तक्रेण वा ॥ शूले रक्तातिप्रवृत्तौ च रोध्रधातुकीकुटजत्वगिंद्रयवकेसरनीलोत्पलकल्कसिद्धं सर्पिर्निदिग्धिकासिद्धं वा ॥ वातोल्बणे तु रक्ते बलाबालबिल्वत्रिफलाहस्तिपिप्पलीन्यग्रोधकरंजपत्रमधुकतिंदुकोत्पलैः कार्षिकैर्घृतप्रस्थमजाक्षीरे दशगुणे पचेत्॥तत्परं रक्तार्शोघ्नं ॥ पाठारोध्रवन्हिवरोत्पलचव्यचंदनसमंगाऽतिविषाबिल्वधातकीमधुकदेवदारुदार्वीत्वङ्मुस्तमांसीनागरयवक्षारचित्रककल्केन चांगेरीस्वरसेन च साधितं सर्पिर्दोषत्रयघ्नमर्शोतिसारप्रवाहिकाबस्त्यानाहगुदभ्रंशपिच्छास्रुतिग्रहणीपांड्वामयज्वरमूत्रकृच्छ्रारोचकदुर्नामशूलेषु योज्यं ॥ बलादार्व्यंवाक्पुष्पीगोक्षुरकपृश्निपर्णीनामश्वत्थोदुंबरन्यग्रोधप्लक्षबदरीवेतसप्रवालानां च द्विपलोन्मितानां कषायेण जीवंतीकटुकापंचकोलेंद्रयवदेवदारुशाल्मलीपुष्पवीरचंदनांजनकट्फलमुस्तश्यामास्थिराऽतिविषासमंगाव्याघ्रीमोचरसबिल्वकमलोत्पलकिंजल्कानां चा-

र्द्धकर्षोन्मितानां कल्केन चांगेरीमुनिषण्णकस्वरसप्रस्थाभ्यां च घृतप्रस्थं पाचयेत् ॥ तत्समानं पूर्वेण ॥ रक्तस्तंभनाय च शीताभ्यंगप्रदेहसेकावगाहादीन् प्रयुंजीत् ॥ तदशांतौ यथोदितानि घृतानि कवोष्णानि प्राग्भक्तानि पाययेत् ॥ कवोष्णानेव च घृततैलक्षीररसकानथवा स्निग्धोष्णैर्मांसरसैर्भोजयित्वा घृतमंडेन कोष्णेनानुवासयेत् ॥ शीतवीर्यद्रव्यसिद्धेन वा यथास्वं स्नेहेन शाल्मलीपुष्पयवासककुशकाशमूलन्यग्रोधोदुंबराश्वत्थशुंगा द्विपलांशाः क्षीरप्रस्थेन त्रिगुणोदकेन साधयित्वा क्षीरावशेषमवतारयेत् ॥ स निर्यूहः शाल्मलीनिर्यासममंगाचंदनोत्पलेंद्रयवप्रियंगुपद्मकेसरकल्कगर्भो घृतक्षौद्रशर्करोपेतः पिच्छाबस्तिर्गुदभ्रंशप्रवाहिकारक्तस्रुतिज्वरघ्नः॥अपिच॥लाजैः पेया पीता चुक्रीकाकेसरोत्पलैः सिद्धा ॥ हंत्याशु रक्तरोगं तथा बलापृश्निपर्णीभ्यां॥ह्रीबेरबिल्वनागरनिर्यूहे साधितां सनवनीतां ॥ वृक्षाम्लदाडिमाम्लामम्लीकाम्लां सकोलाम्लां ॥ गृंजनकसुरासिद्धां दद्याद्यमकेन भर्जितां पेयां ॥ रक्तातिसारग्रहणीप्रवाहिकाशोफनिग्रहिणीं ॥ काश्मर्यामलकानां सकच्छुराणां खलान् फलाम्लांश्च ॥ गृंजनकशाल्मलीनां दुग्धीकाचुक्रिकाणां च ॥ न्यग्रोधशृंगिकानां खलांस्तथा कोविदारपुष्पाणां ॥ दध्नः सरेण सिद्धान् दद्याद्रक्ते प्रवृत्तेऽति ॥ सिद्धं पलांडुशाकं तक्रेणोपोदकां सबदरां च ॥ रुधिरस्रुतौ प्रदद्यान्मासुरसूपं सतक्राम्लं ॥ पयसा शृतेन यूषैः सतीनमुद्गाढकीमसूराणां ॥ भोजनमद्यादम्लैः शालिश्यामाककोद्रवजं ॥ शशहरिणलावमांसैः कपिंजलैणेयकैः सुसिद्धैश्च ॥ शालीनद्यान्मधुरैरम्लैरीषत्समरिचैर्वा ॥ दक्षशिखितित्तिरिरसैर्द्विककुल्लोपाकजैश्च मधुराम्लैः ॥ अद्यादतिसरतिवहेष्ववशः स्वनिलोल्बणशरीरः ॥ छगलीपयः प्रयुक्तं निहंति रक्तं सवास्तुकरसश्च ॥ धन्वविहंगमृगाणां रसो निरम्लः कदम्लो वा ॥ रसखलशाकयवागूसंयुक्तः केवलोऽथवा जयति ॥ रक्तमनिवर्तमानं वातं च पलांडुरुपयु-

क्तः ॥ छागांतराधि तरुणं सरुधिरमुपसाधितं बहुपलांडु ॥ व्यत्यासा-न्मधुराम्लं विट्शोणितसंक्षये योज्यं॥नवनीततिलाभ्यासात्केसरनवनीतशर्कराभ्यासात्॥दधिसरमथिताभ्यासादर्शांस्युपयांति रक्तवाहीनि॥ नवनीतघृतं छागं छागं मांसं सषष्टिकः शालिः ॥ तरुणश्च सुराभंडस्तरुणीव सुरा जयत्यस्रं॥प्रायेण वातबहुलान्यर्शांसि भवंत्यतिस्रुते रक्ते॥दुष्टेऽपिऽहि कफपित्ते तस्मादनिलोऽधिकं जेयः ॥ दृष्ट्वा शोणितपित्तं प्रबलं कफवातरूपमल्पं च॥शीताः क्रियाः प्रयोज्या यथेरिताः पित्तरोगेष्विति॥उदावर्ते तु दोषविलयनाय शीतज्वरघ्नैर्लाभ्यक्तस्विन्नस्यश्यामात्रिवृत्पिप्पलीनिकुंभनीलिनीचूर्णं गोमूत्रपरिभावितंद्विगुणलवणगुडेन करांगुष्ठाकारां वर्तिं कृत्वा घृताभ्यक्तगुदस्य गुदे वातविण्मूत्रानुलोमनार्थं निदध्यात्॥पिप्पलीमदनफलसर्षपागारधूमैर्वा समूत्रगुडैः तुंबीकरघाटकणासिद्धार्थकसैंधवजीमूतकैर्वा॥एतेषामेव वा चूर्णं नाड्या प्रधमेत् ॥ तद्विघाते त्वानुलोमिकौषधतैलमूत्राम्ललवणक्षारयुक्तं सुतीक्ष्णमास्थापनं दद्यात् ॥ त्रिफलात्रिकटुत्रिलवणदंतीचित्रकभल्लातकानि जर्जरितानि सस्नेहमूत्राणि शरावद्वयकोष्ठे घृतलिप्ते गोमयाग्निना विपचेत् ॥ स कल्याणकाख्यः क्षारः क्षीरमांसरसाशिना घृतेन पीतोऽन्नपाने वा प्रणीतोऽर्शोगुल्मपांडुहृद्रोगोदावर्तग्रहणीमूत्रविबंधाश्मरीकृमिश्वयथुहिध्माश्वासकासशूलानाहप्लीहमेहापहः ॥ वैरेचनिकमूलफलानि सहिंस्राऽर्कमूलदशमूलगुडाद्वीपपुनर्नवानि सर्वैश्च तुल्यानि पंचलवणानि क्षारः पूर्ववत्कृतः कांकायनोक्तोऽधिकगुणः पूर्वस्मात् ॥ हिंगुपाठाव्यूषणत्रिफलाकटभीबिल्वमध्यायोरजः कटुकापंचकोलकमुस्तकुष्ठक्षारद्वयमुष्कमधुकोग्रगंधाविडंगमूर्वाजमोदद्वयवगुडूचीदेवदारूणि कार्षिकाणि ॥ पृथक्पलांशानि पंचलवणान्यैकध्यमापोथ्य घृततै-

---

१ शीतज्वरघ्नतैलेनि ॥ तगरागुरुकुंकुमादिद्रव्यसाधितं तैलं॥ २ आतुरहस्तांगुष्ठसदृशीं

लकुडवेन दधिकुडवेन च संयोज्य कल्याणकविधिना दग्धो महाक्षार-स्तत्तुल्यः ॥ सर्वगरविषनिवर्हणश्च ॥ प्राग्भक्तं वा विचरेद्घृतगुडयव-क्षारान् ॥ दाडिमरसं वा सयवानीपाठमहौषधलवणगुडतक्रं यमकस्ने-हभृष्टान् वा सक्तुयुक्तकरंजप्रसवान् दधिदाडिमाम्लबदरतिंतिडीकमातु-लुंगलवणसुरां यमकसंस्कृतां ॥त्रिवृद्दंतीगुडचित्रकचांगेरीबालमूलक-लोणीकासुवर्चलोपचिंचुपर्णीवीरावास्तुकपल्लवांस्तथा दक्षशिखिश्वा-विद्गोधामार्जारोष्ट्रलोपाककूर्मशल्यकमांसान्मांसरसान् यवप्रायं चान्नं भोजनार्थे ॥ पानार्थे तु सपिप्पलीचूर्णं गौडमच्छसुरां सलवणानास-वांश्च दीपनीयवातहरान् आरनालं मस्तु वा संस्कृतं ॥ अनुबंधे तु भूयो मदिरामस्तुमूत्रयुक्तं विरेकं पिप्पलीघृतभृष्टां सगुडां हरीतकीं सकुंभां वा द्विविधोपक्रमणीयोदितान्वा तर्पणप्रयोगान् त्रिवृच्चूर्णं वा त्रिफलारसानुविद्धमभयामलकान् विडंगान्वा समत्रिवृतस्तुल्यगुडान् माणिभद्रकाख्यान्मिश्रकस्नेहं सुकुमारकं नीलिनीघृतं वा कल्पो-दितानि वा विरेचनान्यवचारयेत् ॥ गुदाशये हि दोषेऽपहृते व्याधयो-ऽपि तज्जाः प्रशाम्यंति ॥ रूक्षतया च विड्वातविबंधेन शुष्कोदावर्त-संभवः ॥ तस्मात्तत्राशुतरं स्नेहनमनुवासनं विदध्यात् ॥ पिप्पलीम-दनबिल्ववचामधुकशतपुष्पाशठीकुष्ठपुष्करमूलद्वीपिदेवदारुभिः श्ल-क्ष्णपिष्टैर्द्विगुणपयस्तैलं सिद्धमर्शोगुदभ्रंशशूलवंक्षणानाहगुदशोफो-त्थानबाहुल्यप्रवाहिकापिच्छास्रावोरुकटीपृष्ठदौर्बल्यवैवर्ण्यमूत्रकृच्छ्र-निषूदनं वातमूत्रशकृत्पित्तश्लेष्मानुलोमकरं च ॥ वातानुलोम्ये हि सति ध्रुवमनलो याति दीप्तिमर्शांसि चांतः संकोचमिति ॥ भवं-ति चात्र ॥ अर्शांसि क्षारशस्त्राग्निलेपाभ्यंगैरुपाचरेत् ॥ दृश्या-न्यदृश्यानि पुनः सदांऽतःपरिमार्जनैः ॥ अल्पकालोत्थितेष्वल्पालिंग-दोषेषु चौषधं ॥ नात्युच्छ्रितेषु मृदुषु क्षारोऽस्रस्रुतिमत्सु च ॥ उच्छ्रि

तेष्वल्पमूलेषु शस्तं शस्त्रं कुनामसु॥युक्तेषु स्थैर्यकाठिन्यकार्कश्यैः शस्त्रपावकौ ॥ योज्यौ महत्सु वा क्षारः पातयित्वा विकुट्य वा ॥ सूचीकूर्चेन तद्वच्च बडिशं तेषु शस्त्रकं ॥ अतिस्थूलातिदीर्घे च यंत्रके मर्मघट्टनं ॥ अणुच्छिद्रे महद्रूपमेकदेशे विशिष्यते ॥अतिच्छिद्रेऽधिकेरूपादवतीर्णप्रवाहणात् ॥ स्थूलांत्रमपि हि स्यात्तु यथोक्तं योजयेदतः ॥ शुष्केषु भल्लातकमग्र्यमुक्तं भैषज्यमार्द्रेषु तु वत्सकत्वक् ॥ सर्वेषु सर्वर्तुषु कोलशेयमर्शःसु बल्यं च रुजापहं च ॥ भित्त्वा विबंधाननुलोमनाय यन्मारुतस्याग्निबलाय यच्च॥तदन्नपानौषधमर्शसेन सेव्यं विवर्ज्यं विपरीतमस्मात् ॥अर्शोतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूताः ॥ सन्नेऽनले संति न संति दीप्ते रक्षेदतस्तेषु विशेषतोऽग्निमिति ॥ इत्यर्शश्चिकित्सितं नाम दशमोऽध्यायः ॥ १० ॥

अथातोऽतिसारचिकित्सितं व्याख्यास्यामः ॥ प्रायेण ह्यतिसारोऽग्निमुपहत्य प्रागामाधिष्ठानो भवति ॥ तस्मादनिलजमप्यामपाचनार्थमादौ लंघनेनोपक्रमेत् ॥ तत्र शूलानाहप्रसेकार्त्तं लवणांबुनोष्णेन वामयेत् ॥ तत्र नामे पूर्वं संग्रौहि प्रयुंजीता।विबद्धे वा मले स्तिमिते ॥ ध्मातगुरुसरुजकोष्ठः प्राणदामुष्णांबुनोपयुंजित ॥ सव्योषां वा धान्याम्लोक्तकथितां वाऽन्यद्वा स्रंसनदीपनमौषधं ॥ अपिच ॥ विशुद्धस्रोतसो ह्यस्य दोषशेषे प्रवाहिते ॥ सुखं संग्रहणं कर्तुं पाचनैः स्तंभनेन वा ॥ मध्यमदोषस्तु विशोषयेत् ॥ मागधिकानागरवचाभूतीकधनिकाहरीतकीनां क्वाथं पिबेत् ॥ जलजलदबिल्वपेशिकाशुंठीधानकानां वा वचादिवर्गं वा कथितं चूर्णितं वा ॥ तद्वद्वचाऽभयाविडंगपाठाशुं-

१ अर्शःसु २ तक्रं ३ अपिशब्दात्कदाचित्कफादिजे सुतरां लंघनं हितमिति द्योतयति ॥ ४ लंघनशब्देनोपवासएव गृह्यते ॥ ५ संग्रहण भेषजं पूर्वमामातिसारे न योज्यं ॥ पूर्वग्रहणेन पश्चादीषदामातिसारे दीयमानं युज्यतएवेति द्योतयति॥ सामे दोषेऽतिसारकारिणि प्रथममपि भेदनमौषधं दातुं विशिष्टायामवस्थायां समानकार्यमपि कदाचिदतिसारिणो गुणाय संपद्यते नातीसारप्रतिपक्षभूतमपिच संग्रहणमौषधं ६ लंघयेत्

ठीबिडलवणानि वा ॥ मुस्तापिप्पलींद्रयवपाठातेजोवतीर्वा ॥ विडं-
गाभयाकणलवणपंचकानि वा ॥ पिप्पलींद्रयवपाठाशुंठीर्वा ॥ सरक्ते
तु प्रवृत्तआमे गजपिप्पलीं सशर्करामधुमधुरां ॥ अल्पदोषं पुनरुपवा-
सयेत् ॥ पानं त्वतिसारिणोऽम्बु वचाऽतिविषाभ्यां क्वथितं शुंठ्यति-
विषाभ्यां मुस्तपर्पटकाभ्यां नागरधान्यकाभ्यां वा ॥ क्षुद्वतस्तु लघु-
पंचमूलपंचकोलहस्तिपिप्पलीबलाबिल्वपाठाहिंगुधानकाजीरकशठी-
गंधपलाशहपुषायवानीतिंतिडीकदाडिमबिडसैंधवैरन्नपानं यवाग्वादि
कल्पयेत् ॥ बिल्वशलाटुहरीतकीपिप्पलीमूलैर्मूढवातस्य ॥ अंशुमती
द्वयबलाबिल्वशलाटुभिः कफपित्तोल्बणस्य ॥ पिबेच्च तृषितः प-
टपूतं तक्रं ॥ मधुसुराधान्याम्लयवागूमंडान्यतमं वा ॥ एष क्र-
मोऽनिलकफघ्नो दीपनः पाचनो रोचनः संग्राही बल्यश्च ॥ पक्वदोषेऽ-
पि तु योऽतिसार्यते बहुशोऽनिलेन विबद्धं सपिच्छं सफेनं सशूलपरि-
कर्तिकं सरोमहर्षं निष्पुरीषं तां प्रवाहिकां विंबिसीमिति चाचक्षते ॥
तत्रोदावर्तोपदिष्टांस्तेनैव विधिना संस्कृतांश्छागपिशितरसान्दद्यात् ॥
यूषांश्च वर्चःक्षये तृष्यतो जीरकयवमुद्गमाषतिलकृतान् ॥ समेन वा
तिलबालबिल्वयोः कल्केन दधिसरस्नेहयुक्तं खलकं ॥ चित्रकशृंगबे-
रपूतीकरंजबिल्वाजमोदैर्वा॥तक्रदाडिमतैलाजसैंधवोपेतमजिताख्यं॥
शठीतिंतिडीकबिडदाडिमक्षारपंचकोलमरिचत्रिफलाधातकीधनिका
पाठाऽजमोदाजाजीजीरककपित्थजंब्वाम्रास्थिभिर्वा तुल्यभागैः षड्गु-
णबिल्वमध्यैर्गुडमुद्गरसस्नेहदधिसिद्धमपराजिताख्यं खलकं दीपनं पा-
चनं रुच्यं ग्राहि विंबिसिनाशनं ॥ दधिसरं वा सगुडदाडिमं यमकभृष्टं
॥यमकभृष्टान्वा सशुंठीचूर्णान् सक्तून् माषान्वा सुसिद्धान् घृतमंडोप-
सेवनान्मरिचोपदंशान् ॥ छागमेषयोर्वाऽन्तराधिरसं दाडिमाम्लधान्य-
नागरोपेतं स्नेहविपक्वं व्यंजनं पाचनं च ॥ तद्वत्सुरां यमकसिद्धां पिबे
द्वा ॥ शुंठीबदरचूर्णं दधिघृततैलक्षौद्रफाणितोपेतं हिंगुदाडिममही-

षधोपकुल्याचूर्णं वा घृतक्षौद्रोष्णांबुमद्यान्यतमेन लिह्याद्वा रोध्रबिल्व शलाटुगुडांस्त्रिकटुकोत्कटांस्तैलेन ॥ पाचनं पाथःक्वाथसिद्धं वा शाल्योदनं घृततैलक्षौद्रयुक्तं दध्ना खजाहतदधिसरानुपानमश्नीयात् ॥ अपिच ॥ दीपनं पाचनं रुच्यं दधि वातहरं परं ॥ यद्दधि च हंत्यस्माच्चिरोत्थामपि बिंबिसीं ॥ एरंडबिल्वयवगोक्षुरकल्कसिद्धां पथ्यां लिहन्मधुयुतामथवा गुडेन ॥ कृच्छ्रप्रवृत्तमतिशूलमसृग्विमिश्रं हन्यात्सुशीघ्रमतिसारमुदीर्णवेगं ॥ तृष्णोल्बणस्तु सरक्तपिच्छोपवेशी पानान्नविरतो धारोष्णं क्षीरमाकांक्षं पिबेत् ॥ घृतं वा गंधर्वहस्तमूलेनाथवा बिल्वशलाटुभिः ॥ तदेव वाऽल्पतृष्णः सगुडं तैलं घृतेन वा पयसा सक्षौद्रेण वाऽऽस्थापनं दद्यात् ॥ अथवा पिच्छाबस्तिमनुवासनं च वातघ्नं वा पित्तघ्नं वा गुदभ्रंशे शूले चाम्लबदरचांगेरीरसदधिक्षारनागरकल्केन शृतमम्लं सर्पिर्निराममातुरं पाययेत् ॥ मरिचपंचकोलकाजाजीधनिकाबिडदाडिमगर्भं वा पूर्ववदम्लमनुवासयेद्वा दशमूलसिद्धेन स्नेहेन पिप्पल्यादिना वा ॥ गुदं चाभ्यंगपूर्वं स्वेदेन मृदुभूतं प्रवेशयेत् ॥ सच्छिद्रेण चास्य चर्मणा गोष्फणाबंधं कुर्यात् ॥ मूषिकमनंत्रं कृत्वा महापंचमूलकषायं च क्षीरेण विपचेत् ॥ तेन पयसा वातहरकल्कप्रतिवापं तैलं पाचयेत् ॥ तदभ्यंजनेन पानेन च सकृच्छ्रमपि गुदभ्रंशं साधयति ॥ पित्तातिसारमपि साममादौ तीक्ष्णवर्ज्यैरौषधैर्वातातिसारवत्पाचयेत् ॥ तृष्णायां ससारिवाभूनिंबं ज्वरविहितमंभः षडंगमवचारयेत् ॥ उपोषितस्य चान्नकाले गुरुह्स्वपंचमूलबलाद्वयशूर्पपर्ण्यादिमृदुमधुरतिक्तकदीपनद्रव्यनिर्यूहयुक्तान्कालविन्मंडपेयासुक्तयूषरसादीनीषदम्लाननम्लान्वा कवोष्णान्सुशीतान्वा सक्षौद्रान् ॥ अनुबंधे तु मूर्वाऽतिविषेंद्रयवहरिद्रारसांजनानि क्वथितानि पिबेत् ॥ केवलं वा वृक्षकबीजं ॥ पाठागुडूचीकटुकाकिराततिक्त-

१ पाचनक्काथसिद्धं वेति पाठो भाति

क्तानि वा हरिद्रादिगणं वा वत्सकबीजातिविषाबिल्वांबुमुस्तानि वा॥ तंदुलोदकेनवाऽतिविषावृक्षकत्वकूफलानि सक्षौद्राणि चंदनोशीरशुंठी-रोध्रनीलोत्पलानि वा॥नागरोत्पलधातकीपुष्पदाडिमत्वचो वा॥कमलो-त्पलरोध्रमोचरससमंगातिलान्वा॥ मधुकशृंगबेरदीर्घवृंतत्वचो वा मधु-युक्ताः॥शर्करापद्मकेसरमुस्तपयस्याचंदनानि वा ॥ शाल्मलीवृंतकृतं वा शीतकषायं मधुरोपेतं ॥ मधुकप्रियंगुकट्वंगत्वग्दाडिमांकुरकल्केन वा॥दधियुतां यवागूं खलकं वा ॥बिल्वकपित्थजंब्वाम्रास्थिभिर्वा मधु-युक्तान्वा रोध्रांबष्ठाप्रियंग्वादिगणान् क्वाथादिषु पृथक्कल्पितान् श्यामादिकषायं वा॥ शूलार्तस्तु रूक्षकोष्ठो घृतं सक्षारं पिबेत् ॥ क्षीरं वा बृहतीबलांशुमतीकच्छुरामूलसिद्धं ॥ मधुककट्वंगाजमोदशर्करा-वचूर्णितं सतैलक्षौद्रं क्षीरमेव वा धारोष्णं बलवान्विबद्धमलो विरेकार्थं ॥ त्रिफलाचूर्णयुक्तं वा पलाशफलक्वाथसिद्धं वा पयः पीत्वा पयएव कवोष्णमनुपिबेत् ॥ एवमेव च त्रायमाणाशृतं ॥ ततो निःसृते शकृति पुराणेऽतिसारः शांतिमेति ॥ स्रुतदोषस्य संसर्जनकाले शूलं चेदनुव-र्त्तते॥ ततो बिल्वमधुकशताह्वाद्वयगर्भं सक्षीरं तैलचतुर्गुणं सर्पिर्विपा-च्यानुवासनं दद्यात् ॥ ततः सम्यक्कृतायामपि संसर्ग्यामतीसारानुबं-धे पिच्छाबस्तयो योज्याः ॥शाल्मलीवृंतान्यार्द्रदर्भैर्वेष्टयित्वा कृष्णमृ-दाऽवलिप्य गोमयाग्निना स्वेदयेत् ॥ शुष्कायां मृदि स्विन्नानि ज्ञात्वा वृंतान्युलूखले समापोथ्य तेषां मुष्टिसंमितं पिंडं क्षीरप्रस्थे विमर्दयेत्॥ ततस्तेन पयसा पूतेन सघृतं तैलेन मधुकल्कयुक्तेनास्थापयेत् ॥ प्र-त्यागते च स्नातः पयसा कच्छुराशृतेन सजांगलरसैर्वाऽश्नीयात् ॥ एष पिच्छाबस्तिः पित्तरक्तातिसारग्रहणीगुल्मशोषज्वरान्विरेचनास्था पनातियोगं च शमयति ॥ चिरोत्थितं त्वतिसारमवेदनं पक्कमप्यशा-म्यंतं पुटपाकैरुपाचरेत् ॥ अरलुत्वक्कल्कं काश्मर्यपत्रप्रच्छन्नं पुटपा-

१ अल्पया मात्रया निरूहाख्यो बस्ति. पिच्छाबस्तिः ॥ २ पलप्रमाणं

कविधिना पाचयेत्तद्रसं शीतं मधुयुतं पिबेत्॥वटादित्वक्प्ररोहकल्कानप्येवं कल्पयेत् ॥ अथवा तित्तिरिमपनीतांत्रपिच्छं न्यग्रोधादेर्वल्कलस्य प्ररोहाणां वा कल्केन पूरयित्वा पूर्ववत्पुटपाकं कुर्यात्॥ ततस्तस्माद्रसमादाय सिताक्षौद्रसंयुक्तं पाययेत् ॥ एतेन सर्वे जांगलसत्वा व्याख्याताः ॥ यस्तु पित्तातिसारी पित्तलान्यासेवते तस्य पित्तमतिवृद्धं रक्तातिसारं तृड्दाहमोहज्वरशूलपाकांश्च करोति ॥ तत्र क्षीरमाजं न्यग्रोधादिप्रसवसृतं सितामधुयुक्तमाहारे गुदप्रक्षालने च विदध्यात् ॥ तद्विधं वा सर्पिः सपयस्कं पिबेत् ॥ क्षीरोत्थं वा सर्पिः क्षीरानुपानं कपिंजलरसाशी क्षीराशी वा लिह्यात् ॥ शल्लकीपियालतिनिशशाल्मलीप्लक्षत्वक्संसृष्टं वा क्षौद्रक्षीरं वा पिबेत् ॥ यष्टीरोध्रसारिवाभिर्वा शृतं शीतं समधु ॥ तद्वत्कृष्णातिलसमंगोत्पलयष्टीमधुभिः शशकपिंजलपारावततंदुलीयमुद्गकाश्मर्यबीजादिरसांश्च सेवेत॥ घृतभृष्टं वा रक्तमाजं मार्गं वा ॥ पूर्वोक्तान्वा पुटपाकान् मधुककृष्णमृत्तिकाशंखकल्कं वा सरुधिरं पिबेत् ॥ तंदुलोदकेन तेन वा समाक्षिकं फलिनीकल्कं मंथं वा ससिताक्षौद्रचंदनं ॥ एते हि प्रयोगा तृष्णादिप्रशमना रक्तातियोगघ्नाश्च ॥ वातोत्तरस्तु शतावरीघृतं लिह्यात्सशर्करं वा नवनीतं पिच्छिलस्वरससाधितं वा सर्पिर्लाक्षापिप्पलीशृंगबेरकटुकेंद्रयवदार्वीत्वग्भिर्वा घृतं सिद्धं पेयामंडेन पीतमतीसारं त्रिदोषमपि धारयति ॥ यदा पुनर्वायुना विद्धा सशोणितमल्पाल्पं सफेनं कृच्छ्रादुपवेश्यते तदा पूर्वोक्तं पिच्छाबस्तिं दद्यात् ॥ मधुरौषधसिद्धेन च सर्पिषाऽनुवासयेत् ॥ प्रायेण हि दुर्बलगुदा गुदाश्रयामयिनो भवंति॥ विशेषतश्चिरकालातिसारिणः ॥ अतिसारातिप्रवृत्तौ च स्थानबलवृद्धो वायुः पित्तमनुबलमवाप्य दुर्जयतरो भवति ॥ तस्मात्तेषामभीक्ष्णशोऽनुवासनं प्रयुंजीत॥ गुददाहे पुनः पटोलमधुकमधूकक्षीरिवृक्ष कषायेण सघृतशर्कराक्षौद्रेण क्षीरेण वा गुदं सिंचेत् ॥ शतधौतादिघृ-

तैश्च पिचूनभ्यंगार्थं दद्यात् ॥ पटोलादीनामेव च कल्केन सघृतेन प्रदिह्यात् ॥ तच्चूर्णैर्धातकीरोध्रमाषचूर्णेन च पायुद्वारमवचूर्णयेत् ॥ एवमेव च शूलिनं वातहरतैलप्रदेहैरुपाचरेत् ॥ यः पुनरेवमपि पित्तलान्येवासेवते स शीघ्रं गुदवलीषु पक्कासु व्यापद्यते ॥ श्लेष्मातिसारं प्रागेव नितरामामपाचनार्थं लंघनेन साधयेत् ॥ अनुबंधे च पिबेत्कषायं मुस्ताभयाशुंठीबिल्वशलाटूनां वचाविडंगभूतिकधनिकादेवदारुणां वा पाठाऽतिविषाकुष्टचव्यकटुरोहिणीनां वा चित्रकपिप्पलीद्वयपिप्पलीमूलानां वा सुखांबुना वा हिंग्वाद्यमलसकोक्तं ॥ पथ्यासैंधवशुंठीचूर्णं वा लिह्याद्वा त्रिकटुचूर्णं क्षौद्रशर्करोपेतं कपित्थं क्षौद्रेण वा कट्फलं पिप्पलीर्वा पूर्ववच्च॥ सर्वं वातपित्तामरक्तसंसर्गमपेक्ष्य यथायथमुपकल्पयेत् ॥ सशूलप्रवाहिकस्य च निरामस्य वातेऽधिके वचाबिल्वकपिप्पलीकुष्टशताह्वाकल्कयुक्तं सलवणं पिच्छाबस्तिमनुवासनं च कोष्णेन बिल्वतैलेन बहुशो वचादिगर्भेण वा तैलेनेति ॥ भवति चात्र-
॥ स्वस्थाने मारुतोऽवश्यं वर्द्धते कफसंक्षयात्॥स वृद्धः सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥ भीशोकाभ्यामपि मरुच्छिघ्रं कुप्येत्ततस्तयोः ॥ कार्या क्रिया वातहरा हर्षणाश्वासनानि च ॥ यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्तते ॥ दीप्ताग्नेर्लघुकोष्ठस्य जितस्तस्योदरामयः ॥ आमस्य पाको मलसंग्रहोऽनु न संग्रहे रुग्गुदनाभिजन्मा ॥ विलंघनैर्ग्राहिभिरीरणघ्नैः क्रमेण तैस्तैर्विधिभिर्विधेयः ॥ न रिक्तकोष्ठस्य पुरीषबंधो न रूक्षकुक्षेः सुहितस्य नाति ॥ पित्तास्रतोऽन्यत्र न चातिशीतैरत्युष्णतीक्ष्णैर्न कदाचिदेव ॥ खलरसदाधिका यमकदाडिमसारकृता दधि सगुडं पयो सिततिलाश्च सुजर्जरिताः ॥ सलवणमारुतघ्नगणसाधिततैलमलं घृतमपि वा प्रवाहणकृतां विजयेत रुजं ॥ यवानीपिप्पलीमूलचतुर्जातकनागरैः ॥ मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः ॥ वृक्षाम्लधातकीपुष्पबिल्वदाडिमदीप्यकैः ॥ त्रिगुणैः

षड्गुणसितैः कपित्थाष्टगुणैः कृतैः ॥ चूर्णोऽतिसारग्रहणीक्षयगुल्मगलामयान् ॥ कासश्वासाग्निदाहार्शःपीनसारोचकान् जयेत् ॥ पलोन्मितां नवक्षीरीं चातुर्जातं द्विकार्षिकं ॥ यवानीधान्यकाजाजीग्रंथिव्योषं पलांशकं ॥ पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः ॥ गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ॥ इत्यतिसारचिकित्सितं नामैकादशोऽध्यायः ॥ ११ ॥

अथातो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः ॥ ग्रहणीसमाश्रयं दोषमादावेव यथास्वमजीर्णानुसारतो मात्राशितीयोक्तविधानेनोपक्रमेतातीसारविधिना चामपाचनार्थं च पिबेन्मुस्तातिविषाविश्वभेषजक्वाथं तच्चूर्णं वा सुखोष्णोदकेन तेन वा शुंठीं तद्वद्वचादिवर्गं ससैंधवं वारुणीमंडेन वा त्रिलवणादिचूर्णं वा ॥ सप्रवाहे वा वर्चसि चूर्णीकृतान् बिडलवणयुक्तान् बिल्वमध्यनागरचित्रकान्दाडिमांभसा ॥ सकफे चातिमात्रआमशूलेऽलसकोक्तं हिंग्वादिमुष्णांभसा पिबेत् ॥ छर्दिशूलहृद्रोगेषु तु मरिचाजाजिसौवर्चलाभयाः ॥ सपित्तकफे चामे कटुकेंद्रयवपाठापिप्पलीपिप्पलीमूलवचाऽभयानागराणि क्वथितानि ॥ भोजनकाले च पंचकोलकपरिगृहीतं पटु लघु दीपनीयं पेयादिकमुपकल्पयेत् ॥ पेयां वा नागरातिविषाभ्यां तक्रदाडिमवृक्षाम्लाम्लां ॥ पाने च तक्रमस्त्वारनालमदिरारिष्टानतीसारनिर्दिष्टं चांबु यवानीपथ्याऽऽमलकमरिचानि त्रिपलिकानि लवणपंचकं च पलांशमेकतश्चूर्णयित्वा कंसे सद्योमथितस्य सुनुयात् ॥ ततो व्यक्ताम्लकटुकं जातं पिबेत्॥एष तक्रारिष्टः परं दीपनोऽर्शोगुल्मजठरश्वयथुकृमिप्रमेहहरः॥ अपिच॥ ग्रहणीदोषिणां तक्रं दीपनग्राहिलाघवात्॥पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपनं ॥ कषायोष्णविकाषित्वाद्रूक्षत्वाच्च कफे हितं ॥वाते स्वाद्वम्लसांद्रत्वात्सद्यस्कमविदाहि तत् ॥ तस्मात्तक्रप्रयोगा ये जठराणां तथाऽर्शसां ॥ विहिता ग्रहणीदोषे सर्वशस्तान्प्रयोजयेत् ॥

दाडिमकपित्थवृक्षाम्लाम्लिकानां पृथक्पृथक्कुडवं॥लवणपंचकात्कु-
डवं त्र्यूषणात्त्रिपलं शर्करापलाष्टकं चैकध्यं चूर्णितमन्नपाने प्रणीतम-
जीर्णारुचिश्वासकासप्लीहगुल्मग्रहणीत्वक्पांडुरोगघ्नं॥परिपक्वामं च वा-
तग्रहणीरोगिणमग्निसंधुक्षणार्थं सर्पिः पाययेत्॥ द्विपंचमूलपंचकोलस
स्लसुरदारुसुरभिगजपिप्पलीशणबीजयवकोलकुलत्थान्मस्तुनाऽऽरना
लेन वा पाचयेत् ॥ तेन पादावशेषेण पंचलवणद्विक्षाराम्लबदरयुक्तं
सर्पिर्विपक्वमथवा सैंधवव्योषक्षारद्वयपंचकोलाभयारास्नाऽजाजीग्रंथि-
कशठीविडंगगर्भमार्ङ्कमातुलुंगकोलाम्लीदाडिमस्वरसशुष्कमूलकका-
थमस्तुतक्रशुक्तप्रसन्नासौवीरकतुषोदकारनालोपेतं परमग्निदीपनम-
ग्निघृताख्यं ॥ अथवा चव्यचित्रकपाठातेजोवतीपिप्पलीमूलानि कु-
डवोन्मितानि मुस्तद्विकुडवमास्फोतजातिनिंबसप्तच्छदाश्वमारकक-
र्कोटकपटोलपल्लवानां च मुष्टिमुष्टिमंतर्नखमुदकद्रोणे पक्त्वा पादाव-
शेषमवतारयेत्॥ अर्द्धपलोन्मितां चात्र कल्कितां दद्यादतिविषां भ-
ङ्गां च द्विपलांशं सैंधवबिडं यवक्षारं च मागधिकायाश्चतुष्पलं पात्रंच
घृतस्य त्वेतदगस्त्यनिर्मितमलमनलजननं ॥ उद्दीपिते तु किंचिदनले
विबद्धमलमास्थापयेत्॥ततो जिते मातरिश्वनि स्वस्तदोषमेरंडजतैलेन
तिल्वकसर्पिषा वा क्षारवता मिश्रकस्नेहेन वा विरेचयेत्॥कृतसंसर्गक्रमं
च बद्धवर्चसमनुवासयेत् ॥ वातहरदीपनीयाम्लद्रव्यसिद्धेन तैलेन ॥
ततः पुनरपि लब्धान्नभोजनः सर्पिरेव यथाग्निबलमल्पशोऽवचारयेत्॥
अग्निघृतं च छर्दिविबंधशूलश्वासकासिनः सबीजपूरकरसं॥अभ्यंगार्थं
च तैलमग्निघृतौषधैः साधयेत् ॥ अनिलकफसंसर्गे तु चूर्णमेषामौष-
धानामुष्णोदकेन पिबेत्॥ पित्तदुष्टायां तु ग्रहण्यां स्वस्थानगतमुत्क्लि-
ष्टं द्रवमनलनिर्वापणं पित्तमास्थापनेन वमनेन वा निर्हरेत्॥तिक्तलघु-
द्रव्यैश्च कृतसंसर्जनस्य दोषशेषशमनार्थं मधुनाऽवलेह्यमुष्णांबुना पि-

बेत् ॥ मद्येन वा प्रणयेत् ॥ मूर्वाकिराततिक्तकपर्पटकवचाचंदनमुस्त-त्रिकटुकत्रायमाणायवानीकालिंगत्वक्फलकटुरोहिणीदेवदारुदार्वी-त्वक्पद्मकोशीरारिष्टपटोलपत्रातिविषासौराष्ट्रीत्वगेलामधुशिग्रुबीजचूर्णं ॥ एतद्धि ग्रहणीदोषशूलातिसारपांडुहृद्रोगगुल्मज्वरप्रमेहकामला-मुखरोगारोचकनिबर्हणं ॥ भूनिंबत्रिकटुकमुस्तेंद्रयवाः समाश्चित्रक-भागौ द्वौ कुटजत्वग्भागाश्च षोडश सर्वमेकत्र चूर्णितं सगुडशीतोदकं पीतं समानं पूर्वेण ॥ नागररसांजनातिविषाधातकीघनपाठाकलिंगत्व ग्बीजबिल्वकटुकाः सक्षौद्रास्तंदुलांबुपीताः पित्तग्रहणीविकारं र-क्तातिसारमर्शांसि सप्रवाहिकं गुदशूलं च व्यपोहति ॥ ततश्चैवं श-मितपित्तोद्रेकस्याग्नेः स्थिरीकरणाय सर्पिः पूर्वोक्तं मूर्वादिक्काथेन सा-रिवास्फोतसप्तपर्णाटरूषकेंद्रयववीराभूनिंबधान्यन्यग्रोधाश्वत्थोदुंबरप्ल-क्षोपकुल्यानीलोत्पलगर्भसिद्धं पाने युंजीत ॥ कुष्ठोक्तं वा तिक्तकं ॥ श्लेष्मदुष्टायां पुनर्ग्रहण्यां मागधिकासिद्धार्थकल्कतीक्ष्णेन मदनफल-कषायेण पुनःपुनर्वामयेत् ॥ अभ्यातुर्हि प्रवृद्धस्तेजो निर्वापयति ततः कृतपेयादिक्रमस्य लवणक्षाराम्लकटुकोत्कटैर्यथोक्तैरन्नपानौषधैरनल-मुत्तेजयेत् ॥ मंजिष्ठाचित्रकारुष्करकृमिघ्नमधूकपुष्पाणि क्रमाद्विकुड-वाढकाढकार्द्धद्रोणद्रोणांशान्यपां द्रोणत्रये क्काथयेत् ॥ द्रोणशेषश्च पू-तशीतः स निर्यूहो मधुद्विप्रस्थवांश्चंदनोशीरसूक्ष्मैलाऽगुरुरूषितं जतुशू-तं घृतकुंभमध्युषितो मासमासवः॥ सर्वदोषघ्नोऽग्निजननो बृंहणः शो-षकुष्ठकिलासप्रमेहानाहगुल्मपांडुहृद्रोगजिच्च ॥मधूकपुष्पाणां स्वरसो-ऽर्द्धावशेषक्कथितः क्षौद्रपादयुक्तः सर्वथा समानः पूर्वेण ॥ अनेन द्रा-क्षेक्षुकाश्मर्यफलस्वरसासवा व्याख्याताः ॥ दशमूलवीरात्रिफलाजीव-कर्षभकाणां पृथक्पंचपलान् भागानपां वहे पक्त्वा पादशेषे रसे शी-तीभूते गुडतुलाद्वयं दद्यादर्द्धकुडवं च माक्षिकात्तत्प्रमाणांश्च चूर्णिता-न्मुस्तप्रियंगुमंजिष्ठामधुकविडंगप्लवशाबररोध्रान् ॥ एषोऽर्द्धमासस्थितो

मूलासवोऽयं समानः पूर्वेण ॥ महावृक्षकांडचतुष्पलं द्विगुणार्ककांड-लवणत्रयत्रिपलं पक्ववार्ताककुडवं चित्रकपलद्वयं चांतर्धूमं दग्ध्वा वार्ताकरसेन गुलिकाः कुर्यात्॥ता भोजनोत्तरं भक्षिता ग्रहणीदुर्नामविसूचिकालसककासश्वासपीनसप्लीहपांडुश्वयथुमेहारोचकगुल्महराः॥ दशमूलार्कमूलदंतीत्रिवृच्चित्रकास्फोतपाठारास्नास्नुहीकांडानां पृथग्दशपलान्भागान्कपाले दग्ध्वा क्षारमुदकद्रोणैश्चतुर्भिः क्वाथयेत्॥पादावशेषमेव कथितावतारितं गुडपलशतोन्मिश्रमधिश्रयेत् ॥ घनीभवति च तस्मिन् सुश्लक्ष्णरजसां दृश्चिकालीवचायावशूकानां त्रिंशत्पलान्यावपेत्त्रिंशतमेव चाभया व्योषचित्रकाणां द्विपलं च पृथक्हिंग्वम्लवेतसयोः कर्षं ततोऽक्षमात्रा गुलिकाः कृत्वा यथाबलमुपयुक्ताः समानाः पूर्वाभिरधिका वा ॥ अर्शोविहितांश्च क्षारतक्रारिष्टान् घृतान्यन्नपानं च सेवेत ॥ षट्पलं भल्लातकघृतं वा धान्वंतरं च॥सन्निपाते तु पंचकर्माणि कुर्याद्यथावस्थं वा ग्रहणीचिकित्सितमिति ॥ भवति चात्र ॥ प्रसेके श्लैष्मिकेऽल्पाग्नेर्दीपनं रूक्षतिक्तकं ॥ योज्यं कृशस्य व्यत्यासात्स्निग्धरूक्षं कफोदये ॥ क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतं ॥ दीपनं बहुपित्तस्य तिक्तं मधुरकैर्युतं ॥ स्नेहाम्ललवणैर्युक्तैर्बहुवातस्य शस्यते ॥ स्नेहमेव परं विद्याद्दुर्बलानलदीपनं ॥ नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि ॥ मलं नाम कफे क्षीणे मंदाग्निर्योऽतिसार्यते ॥ स पिबेत्सर्पिषो मात्रां दीपनीयौषधैर्युतां ॥ प्रसेको मार्गमापन्नः स्वं समानोऽनिलस्तया ॥ अग्नेः समीपचारित्वादाशु प्रकुरुते बलं ॥ पुरीषं यस्तु कृच्छ्रेण कठिनत्वाद्विमुंचति ॥ सघृतं लवणैर्युक्तं नरो-

---

१ राजयक्ष्मोक्तं पंचकोलयवक्षारेत्यादिकं ॥ २ गुल्मोक्तंभल्लातकाद्विपलमित्यादिकं ॥ ३ प्रमेहोक्तंदशमूलशठीत्यादि ४ चकाराद्दुदरोक्तमन्यभयाघृतं हरीतकीसूक्ष्मरजइत्यादिकं ॥ ५ श्लेष्मजप्रसेकलक्षणं श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यतीत्यादि राजयक्ष्मचिकित्सायामुक्तं.

ऽन्नावग्रहं पिबेत् ॥ रौक्ष्यान्मंदेऽनले सर्पिस्तैलं वा दीपनैः पिबेत् ॥ क्षारचूर्णासवारिष्टान्मंदे स्नेहातिपानतः ॥ उदावर्त्तात्तु योक्तव्या निरूहस्नेहबस्तयः ॥ दोषातिवृत्त्या मंदेऽग्नौ संशुद्धोऽन्नविधिं चरेत् ॥ व्याधिमुक्तस्य मंदेऽग्नौ सर्पिरेव तु दीपनं ॥ अध्वोपवासक्षामत्वैर्यवाग्वा पाययेद्घृतं ॥ अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ दीर्घकालप्रसंगात्तु क्षामक्षीणकृशान्नरान् ॥ प्रसहानां रसैः साम्लैर्भोजयेत्पिशिताशिनां ॥ लघूष्णकटुशोधित्वैर्दीपयंत्याशु तेऽनलं ॥ मांसोपचितमांसत्वात्परं च बलवर्द्धनाः ॥ स्नेहासवसुरारिष्टचूर्णक्काथहिताशनैः ॥ सम्यक्प्रयुक्तैर्देहस्य बलमग्नेश्च वर्द्धते ॥ दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभिः ॥ सस्नेहैर्जायते तद्वदाहारैः कोष्ठगोऽनलः ॥ नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ॥ यथा निरिंधनो वन्हिरल्पो वाऽतींधनात्ततः ॥ यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगं ॥ प्रवृद्धं वर्धयत्यग्निं तदाऽसौ सानिलोऽनलः ॥ पक्त्वाऽन्नमाशु धातूंश्च सर्वानोजश्च संक्षिपन् ॥ मारयेत्स्यात्स ना स्वस्थो भुक्ते जीर्णे तु ताम्यति ॥ तृट्कासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसंभवाः ॥ तमत्यग्निं गुरुस्निग्धमंदसांद्रहिमस्थिरैः ॥ अन्नपानैर्नयेच्छांतिं दीप्तमग्निमिवांबुभिः ॥ मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ निरिंधनोऽतरं लब्ध्वा यथैनं न विपादयेत् ॥ कृसरां पायसं स्निग्धं पैष्टिकं गुडवैकृतं ॥ अश्नीयादौदकानूपपिशितानि भृतानि च ॥ मत्स्यान् विशेषतः श्लक्ष्णान् स्थिरतोयचराश्च ये ॥ आविकं सुभृतं मांसमद्यादत्यग्निवारणं ॥ पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत् ॥ गोधूमचूर्णं पयसा बहुसर्पिः पिबेत्प्लुतं ॥ आनूपरसयुक्तान्वा स्नेहांस्तैलविवर्जितान् ॥ श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनं ॥ असकृत्पित्तहरणं पायसं प्रतिभोजनं ॥ य-

---

१ अन्नेनावग्रहः सहसोर्ध्वकायगमनप्रतिबंधोऽवष्टंभोयस्यतदेवंघृतंपीत्वाऽन्नंभोक्तव्यमित्यर्थः ॥ २ मध्यभक्तघृतमित्यर्थः ॥ ३ स्थिरः ४ शमीखदिरादिभिः ५ अतिमेदुरं.

त्किंचिद्गुरु मेध्यं च श्लेष्मकारि च भोजनं ॥ सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥ आहारमग्निः पचति दोषानाहारवर्जितः ॥ धातून् क्षीणेषु दोषेषु जीवितं धातुसंक्षये[1] ॥ एतत्प्रकृत्यैव विरुद्धमन्नं संयोगसंस्कारवशेन चेदं ॥ इत्याद्यविज्ञाय यथेष्टचेष्टाश्चरंति यत्साऽग्निबलस्य शक्तिः ॥ तस्मादग्निं पालयेत्सर्वयत्नैस्तस्मिन्नष्टे याति नाशमेव ॥ दोषैर्ग्रस्ते ग्रस्यते रोगसंघैर्युक्ते[2] तु स्यान्नीरुजो दीर्घजीवी ॥ अग्निमूलं बलं पुंसां बलमूलं च जीवितं ॥ एष सारश्चिकित्साया यदग्नेः परिरक्षणं ॥ इति ग्रहणीदोषचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

अथातो मूत्राघातचिकित्सितं व्याख्यास्यामः ॥ वातान्मूत्रकृच्छ्रे वातहरतैलाभ्यक्तगात्रस्याधोनाभेः सर्वमंगं पिंडेन सेकावगाहैश्च वातघ्नैः कुंभीस्वेदेन च स्वेदयेत्॥बलादशमूलैरंडमूलपुनर्नवाशतावरीत्वश्रीवपत्तूरपाषाणभेदककोलकुलत्थयवक्काथेन कल्केन च तैलं सर्पिः सूकरर्क्षवसालवणपंचकोपेतं सिद्धं पानाय दद्यात्॥तान्येव चौषधान्यन्नपाने पिंडोपनाहस्वेदयोश्च तैल[3]फलस्नेहाम्लै[4]र्युक्तानि कल्पयेत् ॥ प्रसन्नां च सौवर्चलाढ्यां पिबेत् ॥ पित्तजे शीतसेकावगाहप्रदेहान् प्रयुंजीत ॥ तृणपंचमूलश्वदंष्ट्राऽभीरुविदारीकसेरुकक्काथं शीतं समधुशर्करं पिबेत् ॥ तद्वच्च कंडेरकमूलं कमलोत्पलविदारीशृंगाटकेन वा द्राक्षारसेन वा॥ त्रपुसकुसुंभैर्वारुबीजत्वषकुंकुमकल्कं सर्वमूत्राघातघ्नं ॥ मधुककार्वैर्वारुबीजानि वा तंदुलधावनेन ॥ समाक्षिकं वा दार्वीमामलकरसेन ॥ मृद्वीकाकल्कं वा पर्युषितांभसा ॥ कफजे यथास्वं स्वेदो वमनं कटुतीक्ष्णोष्णक्षारमन्नपानं यवान्नं तक्रं च पिबेत् ॥ मद्येन सूक्ष्मैलाकामलकरसेन वा मधुयुतां वा कदलीरसेन कैडर्यकरसेन वा सितिवारक-

---

१ धातुक्षये जीवितं पचति नाशयतीत्यर्थः ॥ २ युक्ते स्वस्थे सति ३ नारिकेलाक्षोडादीनितैलफलानि ॥ ४ अम्लास्तक्रारनालादयः ॥

बीजं वा तक्रेण ॥ प्रवालचूर्णं वा तंदुलांबुना ॥ धवकुटजकरंजामृतकेंबुकैलाऽऽरग्वधसप्तच्छदक्काथं वा शीतं सक्षौद्रं तत्सिद्धां वा यवागूं ॥ कंटकारिकास्वरसं वा समाक्षिकं ॥ व्योषैलागोक्षुरकसारसास्थीनि वा मधुमूत्रयुक्तानि ॥ पाटलीक्षारं वा सप्तकृत्वः परिस्रुतं तैलयुक्तं ॥ तिलपाटलीपारिभद्रयावशूकक्षारोदकानुविद्धां वा त्वगेलोषकचूर्णयुक्तां प्रसन्नां ॥ तिलादीनां वा पृथक्क्षारं गुडोपदंशमद्यात् ॥ तीक्ष्णोष्णद्रव्यसिद्धं च तैलं पानाभ्यंगार्थं ॥ सन्निपातात्मके वातादीनां स्थानानुपूर्व्या यथासन्नं प्रतिकुर्वीत यथोल्बणं वा ॥ सर्वेषु वा समसितं यवक्षारं भक्षयेत् ॥ अपिच ॥ एलाश्मभेदकशिलाजतुपिप्पलीनां चूर्णानि तंदुलजलालुलितानि पीत्वा ॥ तद्वद्गुडेन सहितान्युपयुज्यमानान्यासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ एलोपकुल्यामधुकाश्मभेदकौंतीश्वदंष्ट्रावृषकोरुबूकैः ॥ क्काथं पिबेच्छर्करयाऽवगाढं कृच्छ्रे सदाहे सरुजे विबंधे॥ हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानां ॥ क्काथं पिबेदश्मजतुप्रगाढं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥अश्मर्यामप्यचिरोत्थितायां वातबस्त्यादिषु च यथादोषमिदमेव चाचरेत् ॥ पाषाणभेदकवसुकवशीराश्मंतकशतावरीश्वदंष्ट्राबृहतीद्वयकपोतवंकाबलाऽतिबलाकेंबुको शीरगुच्छवृक्षादनीभल्लुकवरण - यवकोलकुलत्थशाकफलकतकफलक्काथे सर्पिरूषकादिप्रतीवापं विपाच्य पीतमाशुवाताश्मरीं भिनत्ति ॥ एभिरेव च द्रव्यैः कषायक्षारान्नपानानि कल्पयेत् ॥ सिंहीव्याघ्रीगोक्षुरकोरुबूकमूलकल्को मधुरेण दध्ना पीतः सप्ताहादश्मरीं भिनत्ति॥शिग्रुमूलककल्केन च दधिलवणयमकसिद्धो यूषः ॥ वीरतरादिगुंद्रोत्कटपत्तूरवाराहीपाठापाटलिशिरीषशालिमूलविदारीद्विपुनर्नवाक्काथे त्रपुसकुसुंभैर्वारुबीजमधुकशिलाजतु

१ आदिशब्देन वातकुंडलिकादयो गृह्यंते ॥ २ वशीरं सामुद्रलवणं ॥ ३ कपोतवंका सुवर्चला ॥ ४ भल्लुकः स्योनाकः ॥

प्रतीवापं सर्पिर्विपाच्य पीतमाशु पित्ताश्मरीं भिनत्ति ॥ पूर्ववच्च कषायादीनेभिः कल्पयेत् ॥ वरणादिभद्रदार्व्यादिगुग्गुल्वेलाद्वयकुष्ठमरिचचित्रकमुस्तासुराह्वयैः कल्कीकृतैः साधितमूषकादिप्रतीवापं सर्पिः श्लेष्माश्मरीं भिनत्ति ॥ इति समानं पूर्वेण ॥ मस्तुना बहुशः पाटलीभस्म गालयित्वा विसर्जयेत् ॥ ततस्तन्मस्तु गृहीत्वा कुलत्थैः सह क्राथयेत् ॥ तं क्राथं गोक्षुरकमूलैलात्रपुसकुरंटकबीजपाषाणभेदकचूर्णं क्षौद्रेण लीढ्वाऽनुपिबेत् ॥ तथा शीघ्रमश्मरीं भिंद्यात् ॥ च्यवते चसा॥ अश्मरीभेदजानां घृताक्तानामंतर्धूमदग्धानां क्षारं च ग्राम्यपशुशकृत्क्षारं च गोमूत्रेण बहुकृत्वो गालयित्वा तमच्छमग्नौ साधयेत् ॥ घनीभवति च तस्मिन् त्र्यूषणोषकादिचूर्णं दद्यात् ॥ दर्वीप्रलेपि चावतारयेत् ॥ एष क्षीराशिनः क्षारावलेहोऽश्मरीं भिनत्ति पातयति च ॥ शर्करातिलकदलीयवापामार्गपलाशक्षारोऽविमूत्रेण पीतः समानः पूर्वेण ॥ कतकपत्रक्राथो[1] हिंगुक्रौंचास्थियुक्तः पाटलीकरवीरक्षारश्च ॥ क्रौंचोष्ट्रगर्दभास्थिश्वदंष्ट्राकदंबमूलतालपत्रिकाऽजमोदनागरचूर्णश्च सुरामंडोष्णोदकान्यतरप्रयुक्तः ॥ चिंचुकांकोलशाकेंदीवरफलक्राथश्च ॥ सुखोष्णो गुडयुक्तस्तु भृंगकंटकबीजचूर्णश्च समाक्षिकोऽविक्षीरयुक्तः ॥ कपोतवंकामूलं च सुरया तत्सिद्धं वा पयोऽश्मरीवेदनार्तः पिबेत् ॥ सिद्धं वाऽभयास्थिभिः पुनर्नवेन वा ॥ शेषेष्वपि च मूत्राघातेष्वतएव चिकित्सां विभजेत् ॥ ह्रस्वपंचमूलेन वा द्विगुण कंटकेन साधितं तोयं पयो वा केवलं घृतमिश्रं वा पिबेत् ॥ सर्वमूत्रा घातघ्नं ॥ गोक्षुरकंटकारिकाकृतां वा सफाणितां यवागूं ताम्रचूडरससिद्धां वा वीरतरादिक्राथेन वा ॥ तद्भावितं वा शिलाजतु ॥ वाजिरासभान्यतरशकृद्रसं वा दुरालभास्वरसं वा ककुभकषायं वा ॥ मूर्वाऽभयामुस्तदेवदारुमधुककल्कं वा ॥ वारुणीक्षीरोष्णोदकान्यतमेन त्रि-

1 कतकबीजचूर्णइतिपाठः

फलाकल्कं वा ससैंधवं सुखांभसा केवलमेव वा ॥ बिभीतकबीजं सुरया विहंगपिशितोपदंशं ॥ निर्गदमदिरामंडमार्द्वीकमासवान्वा विविधान् पिबेत् ॥ पीतमद्यश्च शीघ्रवेगेन वाजिना रथेन वा यायात् ॥ एवमश्मरी शर्करा च प्रच्यवते ॥ सर्वेषु च मूत्राघातेषु विशेषतोऽश्मरीशर्करासु वीरतरादिः सर्वथा प्रयोज्यः ॥तिल्वकस्य घृतं च विरेकार्थे बस्तिकर्म चाभीक्ष्णं विशेषेणोत्तरबस्तिः ॥तत्र श्यामादिरद्धैर्व्यवहितो गोमूत्रसिद्धो निरूहः॥बिल्वादिमूलैश्च सुरासौवीरकादिसिद्धैस्तृणपंचमूलश्वदंष्ट्राशृतक्षीरवांश्च ॥ त्रपुसैर्वारुकखराश्वाबीजर्षभकयवानीकल्पितः ॥ पीतदारुसिद्धं तैलमनुवासनं ॥ शतावरीगोक्षुरकबृहतीद्वयगुडूचीपुनर्नवोशीरमधुकद्विसारिवाश्रेयसीरोध्रतृणपंचमूलकषाये क्षीरचतुर्गुणं बलावृक्षकखराश्वोपकुंचिकावत्सकत्रपुसैर्वारुबीजशितिवारकमधुकषड्ग्रंथाशताह्वाऽश्मभेदमदनहपुषाकल्कगर्भं तैलमुत्तरबस्तिस्तद्विशुद्धस्रोतसा च पुनः शुक्राश्मर्यां शुक्राशयशोधनार्थं बलस्थेन पुंसा वृष्याणां मांसानां कुक्कुटमांसस्य तृप्तेनानुकूलाः प्रकर्षप्रियाः प्रमदा यथाकाममासेव्या इति॥ क्रियाभिराभिः सिद्धाभिर्नचेच्छांतिस्ततो भिषक् ॥ इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ॥ अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥ निश्चितस्यापि वैद्यस्य बहुशः सिद्धकर्मणः ॥ अथातुरमुपस्निग्धमपकृष्टदोषमीषत्कर्शितमभ्यक्तस्विन्नशरीरमभुक्तवंतं कृतमंगलस्वस्तिवाचनमुपकल्पितसंभारमाश्वास्य ततो बलवंतमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषं तस्योत्संगे सुनिषण्णपूर्वकायमुत्तानं वस्त्रचुंभलोपविष्टं संकुचितजानुकूर्परमितरेण पुंसा सह बद्धं सूत्रैः शाटकेन वा ॥ ततोऽस्य स्वभ्यक्तनाभिदेशं वामपार्श्वे विमृद्य मुष्टिनाऽवपीडयेत् ॥ अधो नाभेर्यावदश्मर्यधः प्रतिपन्ना ततस्तैलाभ्यक्ते कृत्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायानुसेविन्याऽऽसाद्य च प्रयत्नबलाभ्यामश्मरीं मेढ्रगुदयोरंतरमानी

य निर्वलीकमनायतमविषमं च बस्तिं सन्निवेश्य भृशमुत्पीडयेदंगुलीभ्यां यावद्ग्रंथिरिवोन्नतं शल्यं भवति ॥ ततः सेवन्याः सव्ये पार्श्वे सेवनीं यवमात्रं मुक्त्वा विदध्याच्छस्त्रमश्मरीप्रमाणेन दक्षिणतो वा क्रियासौकर्यहेतोरित्येके ॥ यथा न भिद्यते च्यूर्ण्यते वा तथा प्रयतेत॥ तच्चूर्णमल्पमप्यवस्थितं पुनःपरिवृद्धिमेति ॥ तस्मात्समग्रामग्रवक्रेणा[1] ददीत॥स्त्रीणां बस्तिः पार्श्वगतो गर्भाशये सन्निविष्टः॥तस्मात्तासामुत्संगवदधः शस्त्रं पातयेत्॥ अतोऽन्यथा खल्वासां मूत्रस्रावी व्रणो भवति ॥ पुरुषस्य च मूत्रप्रसेकक्षणनात् ॥ अश्मरीनिमित्तमेकतो भिन्नबस्तिः सिध्यति ॥ क्रियाभ्यासाच्छास्त्राभिहितच्छेदान्निष्पंदपरिवृद्धत्वाच्च शल्यस्येति ॥ न तु द्विधाभिन्नबस्तिरश्मरीमानपि ॥ उद्धृतशल्यं तूष्णोदकद्रोण्यामवगाह्य स्वेदयेत् ॥ तथा बस्तिरसृजा न पूर्यते ॥ पूर्णे तु क्षीरिवृक्षकषायं पुष्पनेत्रेण विदध्यात् ॥ स हि तथा बस्तिगतमश्मरीचूर्णं रक्तं च निर्हरति ॥ मूत्रशुध्यर्थं च गुडसौहित्यं कारयेत् ॥ उत्थाप्य चैनं मधुघृताभ्यक्तव्रणं मूत्रविशोधनद्रव्यसिद्धां यवागूं सघृतां पाययेदुभयकालं त्रिरात्रं ॥ त्रिरात्रादूर्ध्वं गुडप्रगाढेन पयसा मृदुमोदनमल्पं भोजयेदादशरात्रात्[2] ॥ अत ऊर्ध्वं फलाम्लैर्जांगलरसैः व्रणं च क्षीरिवृक्षकषायेण प्रक्षाल्य रोध्रमधुकमंजिष्ठाप्रपौंडरीककल्केन लेपयेत् द्वादशरात्रं चैनमप्रमत्तः स्वेदयेत् ॥ एतेष्वेव च हरिद्रायुतेषु तैलं विपक्कं व्रणाभ्यंजनं॥ सप्तरात्राच्च स्वमार्गमप्रतिपद्यमाने मूत्रे यथोक्तमग्निना व्रणं दहेत् ॥ स्वमार्गप्रतिपन्ने चोत्तरबस्त्यास्थापनानुवासनैर्मधुरप्रायैरुपचरेत् ॥ यदृच्छया च मूत्रमार्गप्रतिपन्नामंतरासक्तां शुक्राश्मरीं शर्करां वा स्रोतसाऽपहरेत् ॥ विदार्य वा नाडीं बडिशेनोद्धरेत् ॥ रूढव्रणश्च वर्षमंगनाऽश्वनगनागर-

१ सर्पफणवदग्रवक्रेण यंत्रेण ॥ २ दशरात्रमितिपाठः

थद्रुमान्नारोहेत् ॥ नाप्सु प्लवेत भुंजीत वा गुरूणि ॥कर्मणि तु मूत्रवहशुक्रवहमुष्कस्रोतोमूत्रप्रसेकसेवनीयोनिगुदबस्तयोऽष्टौ परिहर्तव्याः ॥ तत्र मूत्रवहच्छेदान्मूत्रपूर्णबस्तेर्मरणं ॥ शुक्रवहच्छेदान्मरणं क्लैब्यं वा ॥ मुष्कस्रोतसोरुपघातात्ध्वजभंगः ॥ मूत्रप्रसेकच्छेदनान्मूत्रस्रवणं ॥ सेवनीयोनिच्छेदाद्रुजाप्रादुर्भावः ॥ गुदबस्तिविद्धस्य सद्यो मरणमुक्तं प्रागिति ॥ भवति चात्र ॥ मर्माण्यमून्यविज्ञाय स्रोतोजानि शरीरिणः ॥ शस्त्रपाणिर्ध्रुवं हंति साहसात्केवलो यथा ॥ ॥ इति मूत्राघातचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथातः प्रमेहचिकित्सितं व्याख्यास्यामः ॥ प्रायेण हि प्रमेहिणोऽभिष्यन्नदेहत्वादुपहताग्नेर्भक्ष्यादिपंचविधमप्यन्नमुपयुक्तं मूत्राय मेदसे च विपरिणमते ॥ तस्मादस्य तेजोधातुविवृद्धये क्लेदमेदःप्रशमनाय बलिनः संशोधनादि प्रयुंजित ॥ दुर्बलस्य तु संशमनानि ॥ सर्वस्य च बद्धमूत्राण्यमेदस्कराणि बृंहणान्यग्निबलजननानि चान्नपानानि ॥ बलं हि विधिनोपचितमशेषामयक्षयाय संप्रवर्तते ॥ अथ शोधनार्हं प्रमेहिणमादावेव बिभीतकसर्षपेंगुदीकरंजनिंबनिकुंभान्यतमतैलेन त्रिकंटकादिना वा यथास्वसिद्धेन स्नेहेन प्रियंग्वादिशृतेन वा हविषा स्नेहयित्वा कल्पविहितैः प्रयोगैर्वामयेद्विरेचयेच्च ॥ ततो जातबलं मुस्तामरदारुनागरप्रतिवापेन सुरसादिकषायेण स्थापयेत् ॥ पित्तोत्तरं न्यग्रोधादिकषायेण ॥ ततश्च जांगलरसैः क्रमेण संतर्पयेत् ॥ अत्यपतर्पणेन हि प्रमेहिणो विशेषेण मूत्रकृच्छ्रबस्तिमेढ्रशूलगुल्मातिकार्श्यभ्रमादीनां संभवः ॥ ततोऽनुबंधरक्षणार्थं शमनार्हस्य च शमनमवचारयेत् ॥प्रातः सर्वप्रमेहेषु हरिद्रां मधुयुक्तामामलकरसेन पिबेत् ॥ अथवा शालसप्तपर्णकुटजकपित्थकंपिल्लकबिभीतकरोहितककुसुमानि तच्चूर्णं वा क्षौद्रेण लिह्यात् ॥ हरीतकीचूर्णं वा पिबेद्वा त्रिफलामुस्तादेवदारुहरिद्राक्काथं ॥ असनचित्रकत्रिफलादार्वीकलिंग-

कानां वा सक्षौद्रं ॥ तद्वद्गुडूच्याः स्वरसमामलकानां वा ॥ विशेषतस्तु कफमेहेषु कट्फलमुस्तारोध्राभयानां समाक्षिकं कषायं ॥ तगरविडंगद्विहरिद्राणां वा ॥ चंदनागुरुकुष्ठदेवदारूणां वा ॥ पाठाग्निमंथचविकात्रिफलानां वा ॥ पित्तप्रमेहेषु रोध्रसेव्यार्जुनचंदनानां निंबामृतामलकपटोलानां वा ॥ शिरीषसर्जार्जुनकेसराणां वा ॥ फलिनीकमलोत्पलकिंशुकानां वा ॥ कुटजोत्पलकंटंकटेरीणां वा ॥ तेष्वपि च विशेषेण पिबेदुदकमेहादिषु क्रमात्कषायं पारिजातकस्य वैजयंत्याः सप्तच्छदस्यारिष्टस्य निशायाः ककुभचंदनयोश्चित्रकस्य पाठाजोंगकयोः खदिरस्य त्रिफलाऽऽरग्वधयोश्च मधुयुतं पिबेच्च ॥ सिकतामेहे हिंगुप्रवालकैलालवणानि मद्येन मूत्रेण क्षारोदकेन वा ॥ क्षारमेहादिषु त्रिफलाया असनादेर्न्यग्रोधादेः शामाकस्य चंदनमंजिष्ठयोः गुडूचीतिंदुकास्थिकाश्मर्यखर्जूराणां च मधुयुक्तं ॥ शोणितमेहे मदयंतीपत्रकल्कं च सक्षौद्रं शीतांबुना ॥ वातजेष्वपि यापनार्थं कफपित्तोल्बणेषु पिबेत्कषायं ॥ तत्र वसामेहेऽग्निमंथस्य ॥ मज्जमेहेऽमृताचित्रकयोः कुष्ठकुटजपाठाकटुरोहिणीकल्कमिश्रं ॥ हस्तिमेहे हस्तिसूकरोष्ट्रास्थिक्षारं ॥ मधुमेहे कदरखदिरपुरकषायं ॥ कफानुगतेषु तु वसादिमेहेषु यथास्वकषायेण साधितानि तैलानि ॥ पित्तानुगतेषु च घृतानि यमकं वा प्रयुंजीत ॥ एतेन शेषेष्वपि मेहेषु स्नेहविकल्प उक्तो वेदितव्यः ॥ तथा कषायसंसृष्टकैः स्नेहैः कफपित्तमूत्रमेदसामनिलस्य चोपशमो भवति ॥ त्रिकंटकातिविषाभल्लातकरोध्रवचापिचुमंदघननिशाऽजमोदार्जुनाश्मंतकपटोलसोमवल्कमंजिष्ठापद्मकचंदनागुरुभिश्च स्नेहो विपक्वः सर्वमेहघ्नः ॥ दशमूलहरीतकीदेवदारुकरंजद्वयद्विवर्षाभूदंतीभूमिकदंबभल्लातकशठीपुष्करमूलार्कमूलसुहीमूलवरुणमूलपिप्पलीमूलानि प्रत्येकशो दशपलोन्मितानि य-

---

१ कटंकटेरी दारुहरिद्रा २ टाहाकल इति भाषायां ३ मल्लिका (मोगरा)

बकोलकुलत्थप्रस्थत्रयं चाष्टगुणेऽम्भसि साधयित्वा पादशेषं कषायमवतारयेत्॥तेन चवि डंगकंपिल्लकभार्ङ्गीरोहिषचविकापिप्पलीद्वयत्रिवृन्निचुलविश्वभेषजप्रतीवापं घृतप्रस्थं विपचेत्॥एतद्धान्वंतरं सर्पिः सर्वप्रमेहपिटिकाकुष्ठविषशोफार्शोगुल्मविद्रधिप्लीहजठरश्वासकासवर्ध्मपांडुरोगवातशोणितोन्मादापस्मारहरं ॥ आहारं च यवविकृतिप्रायं मध्वामलकोपेतमाहारयेत् ॥ यथायथं प्रमेहघ्नौषधिनिर्यूहैः सुबहुशो यवान्भावयित्वा सक्तुमंथान् यूषधानागृंजनवाटयादीन्विविधांश्च लघून्भक्ष्यानुपकल्पयेत् तद्वद्गोधूमान् यवांश्च खरजठरस्थितैश्च यवैर्वा ॥ यवो हि बद्धमूत्रो मेदःपित्तकफहरः स्थैर्यकरश्च ॥ तथा शालिषष्टिकं तृणधान्यानि मुद्गादयस्तिक्तानि शाकानि जांगलानि च पिशितानि शूल्यानि परिशुष्काणि प्रदिग्धानि भृष्टचणकोपदंशानि विविधानुपानान्युपयुंजीत ॥ रोध्रदूर्वाशठीविडंगत्रिफलापुष्करमूलचतुर्जातकक्रमुकचविकायवानीश्यामाभार्ङ्गीद्वि विशालाभूनिंबनागरचित्रकपिप्पलीमूलकटुरोहिणीकुष्ठपाठेंद्रयवातिविषाप्लवनखमरिचानि कर्षांशान्यपां कलशे विशृत्य तुर्यशेषे रसे पूते जतुशृतपुराणघृतभाजनस्थेऽर्द्धभागेन मधु निधाय पक्षमुपेक्षितोऽयं रोध्रासवः॥ स मेहकुष्ठकिलासस्थौल्यारोचकक्रिमिपांडुरोगार्शोग्रहणीदोषान्निहंति ॥ दशमूलदंतीत्रिवृच्छ्यामाश्रेयसीचित्रकपुनर्नवासुधाधवैकैषिकागंडीरगुडूचीनां पृथक् पंचविंशतिपलान् भागांस्त्रिफलाढकं सलिलद्रोणैर्दशभिः पादशेषं निर्यूहमवतारयेत् ॥ तस्मिन् पूतशीते शुचिभाजनस्थे पुराणगुडतुलाद्वयं गोमूत्राढकमयोरजोऽर्द्धाढकं मागधिकाप्रस्थं कुटजार्जुनकुष्ठक्रमिघ्नवचाचित्रकपलानि च द्वादश प्रतिवापं दत्वा मासं स्थापयेत् ॥ एष मूत्रारिष्टः समानः पूर्वेण ॥ असनादिद्रव्याणि पृथग्विंशतिपलान्यंभसो घटाष्टके क्वाथयेत्॥ चतुर्थस्थितं परिस्रुतं सुशीतं गुडपलशतद्वयेन मध्वर्द्धाढकेन श्लक्ष्णपिष्टेन पृथक्पलांशेन वत्सकादिना संयोज्य सक्षौद्रे-

ण पिप्पलीचूर्णेनांतः प्रलिप्ते जतुभृते घृतकुंभे आवाप्य यवपल्ले निधापयेत् ॥ तत्र च तनूनि खदिरांगारप्रतप्तानि तीक्ष्णलोहपत्राणि बहुशो निमज्जयेदालोहविलयनाच्च ॥ त्रींश्चतुरो वा मासानयं विधृतो लोहारिष्टः पूर्वस्मादधिकगुणः ॥ सीधुमधुमाधवान्यपि च निगदानि पिबेत् ॥ निवृत्तमद्यस्तु सारोदकं दर्भांभो मधुकपित्थतिंदुकमरिचानुविद्धानि पानकानि रागखांडवांश्च सार्षपिकान्यनुपानानि च तद्विधानि॥ उष्ट्राश्वतरखरपुरीषचूर्णानुविद्धं चास्मै दद्यादशनं ॥ मुस्तामृतागंडीरद्विहरिद्रासारिवाद्विदर्भवर्षाभूद्वित्रिकंटकव्योषफल्गुरोहिषपल्लवश्यामासुरदारुकालाविडंगपाठाकांपिल्लकभार्ङ्गीनिदिग्धिकादंतीचित्रककटुकैरंडमूलानि समान्यैकध्यं चूर्णयित्वाऽयश्चूर्णं द्विगुणं श्लक्ष्णमावाप्यमद्यानुपानं मधुनाऽवलिह्यात् ॥ पिबेद्वा सुखोदकेन त्रिफलांभसा वा ॥ तेन मेहप्लीहहलीमकपांडुरोगश्वयथुदुर्नामगुल्मोदराणि शीघ्रमुपशाम्यंति ॥ द्विविधोपक्रमणीयोक्तांश्चातिस्थौल्यादिगदयोगांश्च शीलयेत् ॥ प्रवृद्धमेहः प्रगाढव्यायामोद्वर्तनस्नानविलेपनानि च रूक्षाभिरोषधीभिः ॥ अधनस्तु छत्रपादत्रविरहितो मुनिवृत्तिर्योजनशतमधिकं वा गच्छेत् ॥ श्यामाकनीवारामतिंदुककपित्थाश्मंतकफलमूलाहारो वा मृगैः सह वसेत् ॥ गोभिर्वा तन्मूत्रशकृद्वृत्तिः परिभ्रमेत्॥तडागानि वा खनेत् ॥ कृशं त्वतिविरुद्धैर्बृंहयेत् ॥ शराविकाद्यास्तु पिटिका अपक्वाः शोफवदुपाचरेत् पक्वाश्च व्रणवत् ॥ पूर्वरूपेष्वेव तु तासां पाने वनस्पतिकषायं बस्तमूत्रं चोपदिशंति ॥ तीक्ष्णं च संशोधनं ॥ दुर्विरेच्या हि मधुमेहिनो भवंति ॥ मेदोऽभिव्याप्तदेहत्वात् ॥ तैलं च व्रणशोषणार्थमेलादेः कुर्वीत ॥ आरग्वधादेः कषायमुद्वर्तने ॥ असनादेः परिषेचने ॥ वत्सकादेः पानभोजनेषु ॥ पाठाचित्रकशार्ङ्गेष्टाक्षुद्राबृहती सारिवासोमवल्कसप्तपर्णारग्वधकुटजमूलचूर्णं मधुनाऽवलिह्यात्प्रवाप्तं वा ॥ असनादिवर्गस्य वा कषायं परिगृह्य परिस्राव्य च पुनः प्रियं-

ग्वामलकरोध्रदंतीकृष्णायस्ताम्रचूर्णावापं च दर्वीप्रलेपिनमवतारयेत् ॥ तं यथाबलमवलिह्यात् ॥ यद्यथास्वं च प्रमेहघ्नौषधानिर्यूहैस्तद्भावित-शिलाजतुतुल्योपयुक्ता सर्वमेहान्सपिटिकानपकर्षतीति ॥ भवति चात्र ॥ मागध.मधुकं रोध्रं कुष्टमेलाहरेणवः ॥ समंगा धातकीपुष्पं सारिवा रजनीद्वयं ॥ प्रियंगवः सर्जरसः पद्मकं पद्मकेसरं ॥ मातुलुंगस्य पत्राणि मधूच्छिष्टं ससैंधवं ॥ तैस्तैलं सिद्धमभ्यंगाच्छोधयेद्रोपयेत च ॥ दुष्टारुःपिटकागंडगंडमालाभगंदरान् ॥ पिटिकाः साधयेच्छीघ्रं ता ह्यसून् घ्नंति मेहिनः ॥ अनुशेषानपि भिषग्यथाबलमुपद्रवान् ॥ सर्वजान्वा महामर्मसंश्रयादनुषंगतः ॥ सुबहूपद्रवत्वाच्च प्रमेहो दारुणो गदः ॥ इति प्रमेहचिकित्सितं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अथातो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः ॥ सर्वमेव विद्रधिमामं शोफविधिना यथादोषमुपाचरेत् ॥ प्रथमं शोणितमपहरेत् ॥ पाकाभिमुखं चोपनाह्य पक्कं पाटयित्वा व्रणवच्चिकित्सेत् ॥ आभ्यंतरे तु विद्रधौ वरणादिक्काथमूषकादिप्रतीवापं पिबेत् ॥आभ्यामेव च वर्गाभ्यां विरेचनद्रव्यैश्च पानाय सर्पिः प्रकल्पयेत् ॥ आस्थापनमनुवासनं च ॥ मधुशिग्रुं च पानभोजनलेपनेषु ॥ शिलाह्वयं वा कल्पविधिनोपयुंजीत गुग्गुलुं वा ॥ यथादोषं च सर्वशो गुल्मवदुपक्रमेत् ॥ त्रिफलामधुकपिचुमंदकटुकापटोलानि शाणांशानि त्रिवृत्त्रायमाणाकर्षं मसूरपलं चैकध्यमष्टगुणेऽम्भसि साधयित्वा तं रसं घृतमूर्च्छितं॥तेन विद्रधिगुल्मज्वरदाहशूलतृष्णाहृद्रोगभ्रमारतिमूर्च्छारक्तपित्तकामलाकुष्ठवीसर्पाः प्रशाम्यंति ॥ त्रायमाणाप्रस्थक्काथे मुस्तकटुकातामलकीत्रायमाणाचंदनदुरालभाजीवंतीवीरोत्पलैः पालिकैर्घृतप्रस्थं क्षीरामलकरसप्रस्थद्वयोपेतं विपक्कं समानं पूर्वेण ॥ द्राक्षामधुकखर्जूराभीरुविदारीपरूषकत्रिफलाक्काथे क्षीरेक्षुधात्रीस्वरससमेतमभयागर्भं सर्पिर्वि-

---

१ मतत्तमितिपाठः

पाचयेत् ॥ तच्छीतं मधुशर्करापादयुक्तं समानं पूर्वेण ॥ भृशं च शृंगादिभिः शोणितमवसेचयेत् ॥ यथासन्नं बाहुमध्ये वा सिरां व्यधेत् ॥ पच्यमानं च कोष्ठगतं बहिरुन्नतमुपनाहयेत् ॥ तत्रैव पिंडिते शूले तत्पार्श्वपीडनेन लब्धसुप्तौ शस्त्रकर्मविधिनिर्दिष्टैश्च चिन्हैः पक्वमुपलक्ष्य भित्वा व्रणवत्साधयेत् ॥ आभ्यंतरएव च पक्वमूर्ध्वमधो वा प्रवृत्तं पूयमुपद्रवान् परिरक्षन्नुपेक्षेत दशाहमात्रं ॥ असम्यग्वहति वा क्लेदे तन्निर्वापणार्थमम्लमुराम्लासवमैरेयोष्णोदकान्यतमेन वरणादिं मधुशिग्रुं वा पिबेत् ॥ तन्मूलैर्वा कृतां यवागूं यवकोलकुलत्थयूषेण वाऽश्नीयात् ॥ ऊर्ध्वं च दशाहात्तिल्वकघृतेन त्रायमाणाघृतेन वा यथाबलं विशोधयेत् ॥ विशुद्धश्च तिक्तकमल्पमल्पं सर्पिर्मधुनोपेतमुपयुंजीत ॥ यथा च नोपैति पाकं तथा प्रयतितव्यं ॥ शीघ्रविदाहित्वाद्धि तस्य विद्रधिरिति संज्ञा ॥ पक्वे पुनर्दैविकी सिद्धिराशुकारितया सर्वामयेभ्यो विद्रधेः ॥ सति च मेहे प्रमेहचिकित्सितमीक्षते ॥ स्तनविद्रधिमपि व्रणविशोधनेनोपचरेत् ॥ पच्यमानं यथेष्टभोजनेन पाचयेत् ॥ न पुनरुपनाहयेत् ॥ उपनद्धो हि स्तनो मृदुमांसतया शीघ्रमेव सद्यः कोपमवाप्यावदीर्येत ॥ पक्वे च पुनः स्तनविद्रधिं स्तन्यवाहिनीः सिराः सचूचुकं च कृष्णमंडलं परिहरंश्छस्त्रेणोपक्रमेत ॥ सर्वासु चामविदग्धपक्वव्रणावस्थासु स्तनं विनिर्दुहीत दंतादिविद्रधीनामपि यथास्वमेव वक्ष्यते लक्षणं साधनं च ॥ वृद्धौ तु मारुतजे त्रिवृत्स्निग्धमातुरं स्विन्नं च मिश्रकसुकुमारकतिल्वकैरंडकोशाम्रफलस्नेहानामन्यतमेन विरेचयेत् ॥ ततोऽनिलघ्नक्वाथकल्कैर्निरूहयेत् ॥ निरूढं च मांसरसेनाशितं यष्टीमधुकतैलेनानुवासयेत् ॥ स्वेदप्रलेपोपनाहांश्च प्रयुंजीत ॥ पक्वं च भित्वा व्रणमिव चिकित्सेत् ॥ पित्तवृद्धिं पित्तशोफवत् पक्वं च पित्तव्रणवत् ॥ कफवृ

१ तन्निर्वहणार्थमिति पाठो भाति २ मिश्रकस्नेहो गुल्मचिकित्सितोक्तः ३ सुकुमारकस्तु अस्मिन्नेवाध्याये वक्ष्यमाणः

द्धिमपि कफशोफवत् ॥ पिबेच्च पीतदारुकषायं मूत्रेण॥ कफग्रंथिवच्च स र्वं विम्लापनवर्जमाचरेत्॥ पक्वं च पाटितं श्लेष्मव्रणवत्॥ रक्तजं पित्तवृद्धिवत्॥ प्रततं चात्र रक्तमपहरेत्॥ मेदोवृद्धिं गवादिकरीषतुषकिण्वसुरसादिभिरुष्णरूक्षैर्मूत्रयुक्तैः स्वेदयित्वा पुनस्तद्विधैरेव सुखोष्णैः सोत्सेधं लेपयेत् ॥ तद्वच्छिरोविरेकद्रव्यैर्वा ॥ स्विन्नं चैव फलसेवनीं परिहरन् वृद्धिपत्रेण विदार्यापनीय च मेदः कासीससैंधवमाक्षिकैः प्रतिसार्य सीव्येत् ॥ ततः सुमनोग्रंथिकमनःशिलैलाभल्लातकैस्तैलमभ्यंगार्थं कुर्यात् ॥ आमव्रणसंधानाच्च स्नेहस्वेदौ ॥ मूत्रवृद्धिं स्निग्धैः स्वेदयित्वा व स्त्रपट्टेन वेष्टयेत् ॥ ततोऽधस्तात्सेवन्या दकोदरवद्व्रीहिमुखेन विध्वा नाड्या स्रावयेत् ॥ ततः स्थगिकाबंधं कुर्यात् ॥ व्रणे च शोधनरोपणानि ॥ अंत्रवृद्धिं फलकोशमसंप्राप्तं वातवृद्धिवदुपचरेत् ॥ पुनर्नवपलशतं दशपलानि च पृथक्दशमूलपयस्याऽश्वगंधाशतावर्यैरंडमूलान्यपां वहेऽष्टांशावशेषं साधयेत् ॥ पूतशीते च तस्मिन्निर्यूहे त्रिंशद्गुडपलान्येरंडतैलप्रस्थं घृतद्विप्रस्थं क्षीरद्विप्रस्थं कल्कीकृतानि च द्विपलिकानि द्राक्षानागरपिप्पलीपिप्पलीमूलयवानीयवक्षारचित्रकमधुकसैंधवान्यावाप्यैकध्यं विपचेत् ॥ एतत्सर्वयंत्रणास्त्रपरिक्लेशनेन सुकुमाराख्यं सुकुमाराणां नारीणां क्षीणरेतसामप्रजानामल्पाग्नीनां च कामतोऽन्नपाने वा प्रयुक्तमलक्ष्मीघ्नं कांतिकरं बल्यं बृंहणं वयःस्थापनं वर्ध्मविद्रधिप्लीहगुल्मोदावर्त्तशोफोदरार्शोमेढ्रयोनिरोगेषु महावातव्याधिषु परममौषधं ॥ गंधर्वहस्तमूलतुलां यवाढकं नागरार्द्धकुडवं च सलिलद्रोणे पादशेषं पचेत् ॥ तेन द्विगुणक्षीरेणैरंडतैलप्रस्थं साधयेत् ॥ कल्कपिष्टं चात्र दद्यात्पुनर्गंधर्वहस्तमूलकुडवं शुंठीपलं च ॥ एतद्गंधर्वहस्ततैलं तुल्यं पूर्वेण ॥ भवति चात्र ॥ यायाद्वर्ध्म न चेच्छांतिं स्नेहरेकानुवासनैः ॥ बस्तिकर्म पुरः कृत्वा वंक्षणस्थं ततो दहेत् ॥ अग्निना मार्गरोधार्थं मरुतोऽर्द्धेंदुवक्रया ॥ अंगुष्ठस्योपरि स्नाव पीतं तंतुसमं च

यत् ॥ उत्क्षिप्य सूच्या तत्तिर्यक् दहेच्छित्त्वा यतो गदः ॥ ततोऽन्य-पार्श्वेऽन्ये त्वाहुर्दहेद्वाऽनामिकांगुलेः ॥ गुल्मेऽन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ॥ कनिष्ठिकानामिकयोर्विश्वाच्यां तु यतो गदः ॥ शंखोपरि च कर्णांते त्यक्त्वा यत्नेन सेवनीं ॥व्यत्यासाच्च सिरां विध्येदंत्रवृद्धिनिवृत्तये ॥ ॥ इति विद्रधिस्तनविद्रधिवृद्धिचिकित्सितं नाम पंचदशोऽध्यायः ॥ १५ ॥

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ॥ गुल्मो हि वातादृते न संभवति॥तस्मात्तेषु सर्वेष्वपि प्रथमं स्नेहस्वेदौ वातहरौ॥स्नेहस्वेदोपसंहितं मृदु विरेचनं तद्विधान् बहुशो बस्तीनम्लमधुरलवणांश्च रसान् युक्त्याऽवचारयेत्॥मारुते हि विजितेऽल्पेनापि यत्नेन शक्यमन्योऽपि दोषो गुल्मेषु नियंतुं॥अथ वातोत्तरे रूक्षबद्धमरुच्छक्तमातुरं तीव्ररुजमनिलव्याधिविहितमन्यतमतैलं पाययेत् ॥अथवा विडंगपंचकोलकमरिचत्रिफलाधान्यगर्भं सपयः सर्पिर्विपक्वमनेनैव वा कल्केन दशमूलक्वाथोपहितं राजयक्ष्मविहितं वा षट्पलं॥ हिंगुधानकाम्लवेतससौवर्चलैलाबिडशठीदाडिमयवक्षारचित्रकाजगंधाऽजमोदाजाजीपुष्करमूलवचात्रिटुकसुरसैर्वा दधियुक्तं हपुषामरिचबाष्पिकासैंधवदीप्यकाजाजीपंचकोलकैः कोलमूलकदाडिमरसदधिक्षीरवत्सर्पिःसिद्धं सिद्धं शूलविबंधहिध्माऽऽध्मानप्लीहहृद्रोगग्रहणीहतनामकृमिवर्ध्मपांडुक्षयश्वासकासयोनिरोगोदरज्वरारोचकेषु ॥ शुंठीपलं पिप्पलीपलमध्यर्द्धं धानकात्कुडवं दाडिमं द्विकुडवं घृतपलानि विंशतिः क्षीरं चैकध्यं विपचेत् ॥ एतत्सर्पिः समानं पूर्वेण ॥ लशुनस्य विगतत्वचस्तुलां प्रत्येकं पंचपलिकं महापंचमूलमष्टगुणेऽभसि साधयेत् ॥ तेन क्वाथेन तदर्द्धांशैश्च पृथक् सुरादधिमस्तुधान्याम्लदाडिमरसैः हिं-

---

१ अन्यैराचार्यैः

गुडविकासैंधवत्रिफलाऽमरदारुभिश्चार्धपलिकैः प्रस्थोन्मितं घृतं शृतं समानं पूर्वेण ॥ वर्षाभूद्वयदशमूलाश्वगंधासुषवीच्छिन्नरुहाभार्ङ्गीरास्नैरंडबलाकालाशठीपुष्करमूलगंधपलाशान्द्विपलांशान्प्रस्थं प्रस्थं च यवमाषकोलकुलत्थानां जलद्रोणे पादावशिष्टं विपाचयेत् ॥ तेन पृथक् समातुलुंगदाडिमाम्लानकरसशुक्ततुषोदकारनालं घृतप्रस्थं दध्याढकोपेतं वचाकारवीशताह्वाद्विक्षारत्रिलवणत्रिकटुकरास्नाकुंभनिकुंभयवानीयवानकहिंस्राऽम्लवेतसनीलिनी फलविडंगदाडिमाहिंगुपाषाणभेदकोषकत्रषकहपुषाभार्ङ्गीश्वदंष्ट्रात्रपुसैर्वारुबीजाजाजीसारिवोपकुंचिकाग्रंथिककुस्तुंबरीतुंबरुफलमूर्वाचित्रकसुरसागजपिप्पलीगर्भं साधयेत् ॥ द्राधिकारव्यमेतत्सर्पिः समानं पूर्वेण ॥ मूत्रघातोन्मादापस्मारवातव्याधिहरं च ॥ पिबेद्वा व्योषषड्ग्रंथाक्रमिघ्न कटुकाचित्रकसौवर्चलाभयायवक्षारैर्दशांशैः क्षीरयुक्तं साधितं सर्पिः ॥ क्षीरायोग्याय च सुरामदिरामस्तुदधिसरदाडिमरसानामन्यतमं विदध्यात् ॥ अभ्यंगपूर्वं चैवं सदा स्वेदयेत् ॥ स्नेहस्वेदौ हि सम्यक् प्रयुक्तौ स्रोतसां मार्दवमुपजनय्यानिलं जित्वा च विबंधमाशु गुल्ममपकर्षतः॥तत्र हृदयजे विशेषेण स्नेहपानमिच्छंति ॥ बस्तिजे बस्तिमुभयं नाभिपार्श्वाश्रये विबंधानिलवर्चसश्च दीप्ताग्नेः स्निग्धोष्णानि बृंहणानि चान्नपानानि पुनः पुनश्च स्नेहपाननिरूहानुवासनानि कफपित्तानुरक्षिणा प्रयोज्यानि ॥ अन्यथा कफो वृद्धस्तंद्रागौरवारुचिहल्लासाग्निसादान्कुर्यात् ॥ तमुल्लेखयेत् ॥ तत्कृतेषु च शूलानाहविबंधेष्वनंतरोक्तानां घृतानामौषधैश्चूर्णवर्तिगुलिकाक्वाथान्कोलदाडिममातुलुंगसुरामंडतक्रमस्तुधान्याम्लोष्णोदकानामन्यतमेन प्रकल्पयेत् ॥अपिच॥त्रिलवणहपुषाऽजमोदाजगंधावचाहिंगुपाठोपकुंचीशठीजीरकाजाजीकुस्तुंबरीबाष्पिकाकारवितुंबुरुस्वर्जिकायावशूकमार्द्रकरसेनासकृद्भावितं यः पिबेत्प्रातराहारकालेऽथवा मासमात्रं हिताशी नरः ॥ द्रुतमशिशिरवा-

रिणाऽजाजीपौष्करं वा ॥ दाडिमं तिंत्तिडीकं विडंगानि भार्ङ्गी वरी वेत सोऽम्लो मिशिमरिचगजकर्णाभयापंचकोलानि कोलानि कुंभा निकुंभा विशाला यवानी सुराह्वं च तत्सर्वमेकत्र सुश्लक्ष्णचूर्णीकृतं बीजपूरकरसेन मद्येन तक्रेण मूत्रेण कोलांभसा मस्तुना पेयया सर्पिषोष्णेन दुग्धेन कौलत्थेन यूषेण वा क्षारनिश्च्योलिततोयेन वा दाडिमाद्वा रसेनात्मवानेभिरेवौषधैः साधितं वा घृतं ॥हृदयगुदकटीयकुक्षीहृगुह्याश्रितं तस्य शूलं प्रणश्येत् ॥ तथा गुल्मविष्टंभदुर्नामकृच्छ्रोदराध्मानहिध्माविबंधाः सवर्ध्मारुचिश्वासकासाः ॥ प्रपक्तुं च शक्तो भवेत्पावकः प्राश्यमानानि पाषाणचूर्णान्यपि ॥ अभयापलद्वयमम्लवेतसपलद्वयं पालिकान् वचाविश्वभेषजत्रिवृद्दंतीचित्रकशठीपुष्करजटायावशूकान् कार्षिकान्मरिचाजाजीसैंधवोपकुंचिकाशितिवारकयवानीधातकीपुष्पविडंगान् हिंगुत्रिकर्षं च चूर्णितं पूर्ववद्भावितं पीतं समानं तेन ॥ यवानीशतपुष्पानागकेसरवचामुस्तव्योषपाठागुग्गुलुत्रिवृन्नागजपिप्पलीतालीसैलाऽपामार्गद्रवंतीनिदिग्धिकामूलानां भागो भागश्चाम्लवेतसस्य तत्सूक्ष्मरजीकृतं मातुलुंगदाडिमबदररससीधुसुरोष्णसलिलान्यतमपीतं शूलगुल्मवर्ध्मानाहोदरकोष्ठस्तैमित्याशोऽश्मरीमूत्रग्रहकटीपृष्ठग्रहग्रहोन्मादापस्मारस्कंदशुक्राग्निसादानपनयति॥ तिलकुंतलपलाशसर्षपयवनालमूलकबीजानामंतर्धूमदग्धानां क्षारं गोजाविमहिषीखरहस्तिमूत्रैर्बहुकृत्वो गालयेत् ॥ तत्तच्छं शीतं शुंठीसैंधवक्षामिश्रचूर्णप्रतीवापमधिशृत्य लेहीभूतमाददीत ॥ तत्तैलयुक्तं समानं पूर्वेण ॥ महौषधदेवदारुदंतीत्रिवृत्पाठाक्षारद्वयत्रिफलोपकुंचिकाचविकाद्वीपिपिप्पलीद्वयपिप्पलीमूलसर्पसुगंधाकुष्ठकटुरोहिणीनामर्द्धपलिकान् भागान् पलं पलं च पंचानां लवणानामेकत्रचूर्णयित्वा दध्ना त्रिवृतेन चालोड्य कलशोदरेऽतर्धूमं पाचयेत्॥ तमग्निवर्णं च कलशमपनीय क्षारमाददीत ॥ एष क्षारागदो भेडविहितः समानः

पूर्वेण ॥ सर्पमूषिकदष्टगरापस्मारोन्मादाश्मरीयोनिशुक्रदोषांश्च साधयति ॥ पित्तं च विरुद्धमंतःसंतापं जनयति ॥ तत्रैरंडतैलं सपयस्कं विरेचनार्थं च पिबेत् ॥ सकफस्तु वारुणीमंडमिश्रं ॥ अत्युद्रिक्तपित्तस्त्रिफलां त्रायमाणां वा क्षीरेण ॥ विरिक्तस्यापि संतापानुवृत्तौ रक्तमवसेचयेत् ॥ विड्विबंधे चोदावर्तक्रमं कुर्यात् ॥ लुंचिततिलपलद्वयं शुंठ्यर्द्धपलं च पिष्टं गुडपलोपेतमुष्णेन पयसा पिबेत् ॥ तद्वातगुल्मोदावर्त्तयोनिशूलानपोहति ॥ तथा क्षीरशृतेन महापंचमूलेन शिलाह्वयं लशुनं तु क्षीरेण सिद्धं पीत्वा गुल्मोदावर्त्तगृध्रसीहृद्रोगविद्रधिशोषविषमज्वरान् जयति ॥ बृहतीद्वयबिल्वगोक्षुरकैरंडमातुलुंगीमूलपाषाणभेदक्वाथः सयवशूको गुल्मशूलहरः ॥ माषपर्णीमुद्गपर्णीसहदेवाह्रस्वपंचमूलैरंडेक्षुबालिकानिर्यूहो यवक्षारोपेतः सर्वकोष्ठशूलघ्नः ॥ देवदारुनागरैरंडमूलपौष्करमूलानां क्वाथः सर्वशूलघ्नः ॥ पौष्करमूलदुरालभायवशुंठीनां वा ॥ तैलारनालमूत्रमदिरायावशूकाश्चैकत्र पीता गुल्मोदरानाहप्लीहहराः॥स्वेदांश्च विविधान्पुनः पुनर्योजयेत्॥स्रंसनार्थी नीलिनीफलचूर्णयुक्तानि पूर्वेषूक्तानि हवींषि पिबेत्॥अथवा रामठस्यैको भागः सैंधवस्य त्रयो नवैरंडतैलस्य सप्तविंशतिर्लशुनस्वरसस्य तदैकध्यं कृत्वा पीतमुदरगरगुल्मवर्ध्मप्लीहशूलहरं ॥ नीलिनीबलाव्याघ्रीकटुकाफलत्रिकटुकरास्नाकृमिघ्नानि पालिकान्यपामाढके साधयित्वाऽष्टभागशिष्टमवतारयेत् ॥तेन स्नुहीक्षीरपलप्रतीवापं दधिसमं सर्पिः प्रस्थं पचेत् ॥ तत्पेयामंडेन सह रसाशिना नीलिनीघृतं पलमात्रया पीतं गुल्मप्लीहकुष्ठश्वित्रजठरव्यंगशोफज्वरपांडुरोगोन्मादानपकर्षति ॥ दुर्विरेको हि सर्वएव गुल्मी मारुताभिभूतकोष्ठत्वात् ॥ तस्मात्सुस्निग्धमेनं स्नेहविरेकैर्वा शोधयेत् ॥ पित्तगुल्मे तु स्निग्धोष्णेन जाते स्रंसनार्थं मधुना कंपिल्लकमवलिह्यात् ॥ द्राक्षाऽभयारसं वा सगुडं पिबेत् ॥ कल्पोदितानि वा विरेचनानि युंजीत ॥ रूक्षोष्णसमुद्भूते पुनः संश-

मार्थं तिक्तकं वासाघृतं वा पिबेत् ॥ अथवा तृणपंचमूलक्काथेन जीवनीयकल्केन च सिद्धं सर्पिः ॥ तथा न्यग्रोधादिगणेन तृणपंचमूलादिभिर्वा पृथक्साधितं क्षीरं ॥ रूक्षोष्णजेऽपि चात्ययिके सामान्यतो वा समुत्पन्ने विद्रधिविहितानां त्रिफलादिक्काथत्रायमाणाघृतद्राक्षाशृतानामन्यतमं पिबेत् ॥ क्षीरं वा त्रायमाणाशृतं कोष्णं पीत्वा क्षीरमेव सुखोष्णमनुसुखं पिबेत् ॥ पक्काशयस्थे वा गुल्मे क्षीरबस्तिभिः सतिक्तैः संशोधयेत् ॥ शीतद्रव्यसिद्धैश्च स्नेहैरभ्यंजयेत् ॥ मणिकनकरजतताम्रभाजनानि च शिशिरवारिपूर्णानि गुल्मदेशस्योपरि धारयेन्मुक्तावलीश्च सुशीताः ॥ एवमसिद्धौ विदाहपूर्वरूपेषु चासृक् स्रावयेत् ॥ स्रुतरक्ते च जांगलरसैर्लब्धबलमतिशेषनाशाय पुनः सर्पिरभ्यासयेत् ॥ विद्रधिवच्च विदह्यमानमुपनाहयेत् ॥ पर्यागतमपि तद्वदुपलक्ष्य तथैव सर्वथोपचरेत् ॥ श्लेष्मगुल्मिनं प्रागेव विधिवद्वामयेदवम्यमुपवासयेत् ॥ लंघितस्योष्णकटुतिक्तदीपनं संसर्गमाचरेत् ॥ तथा स्वेदनानि वातगुल्मोक्तादीनि च घृतानि द्विगुणहिंगुक्षाराम्लवेतसानि ॥ दशमूलक्काथव्योषदाडिमहिंगुयवक्षारबिडसैंधवयुक्तं सर्पिः सिद्धं श्लेष्मगुल्मघ्नं ॥ भल्लातकपलद्वयं लघुपंचमूलं च पालिकमुदकाढके प्रपाचयेत् ॥ प्रस्थशेषे तस्मिन्क्षीरप्रस्थे च सर्पिःप्रस्थं हिंगुविडंगशठीबिडसैंधवक्षाररास्नानागरपिप्पलीपड्ग्रंथामधुकचित्रकैः कार्षिकैर्विपचेत् ॥ एतद्भल्लातकघृतं कफगुल्मप्लीहकासश्वासग्रहणीपांडुरोगघ्नं ॥ षट्पलं वा द्विगुणक्षीरं क्षीररहितं मस्तुदधिकांजिकार्द्रकरसाढकद्वयोपेतं साधयित्वा प्रयुंजीत ॥ हिंगुहरीतकीपुष्करमूलशुंठीसैंधवबिडश्यामायवक्षारतुंबुरुचूर्णो यवक्काथाप्लुतः सर्पिर्भृष्टो भक्षितः शूलगुल्मकाठिन्यघ्नः ॥ ततोऽस्य सर्वमंगं गुल्मं च साध्मानं सविबंधं कठिनमुन्नतं गूढमांसं स्थिरं महावास्तुं च बहुधा बहुशश्च स्वेदयेत् ॥ स्निग्धस्विन्नशरीरस्य च शिथिलतां गते गुल्मे यथोक्तां घटिकां त्याजयेत् ॥ संगृ-

हीने च गुल्मे घटीमपनयेद्विंघाद्वा ॥ ततो हृदयमर्म च वर्जयन् गुल्मं विमार्गाजपदादर्शान्यतमेन वस्त्रांतरितं प्रपीडयन् प्रमृज्यात् ॥ ततः साल्वणादिभिः सुखोष्णैर्लेपयित्वा लोहपात्रैः स्वेदयेत् ॥ एवममुना क्रमेण स्थानादपसृते शिथिलीभूते गुल्मे विरिक्तस्नेहवतो दशमूलिकांश्च बस्तीन् विदध्यात् ॥ नीलिनीघृतमेतद्द्विगुणप्रमाणं पाययेत् ॥ उदरोक्तानि च सर्पींषि च त्रिफलाकुंभनिकुंभदशमूलानां षोडशांशावशिष्टं क्वाथं घृतमेरंडतैलं क्षीरं चैकतः साधयेत् ॥ अयं मिश्रकस्नेहः कफगुल्मवातविड्विबंधोदावर्तप्लीहोदरयोनिशूलान्यपकर्षति ॥ पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैरेरंडतैलहविषोः प्रस्थौ षड्गुणे पयसि पचेत् ॥ अयमपि मिश्रकस्नेहो गुल्मानां स्रंसनो वृद्धिविद्रधिगुल्मवातव्याधिषु च परममृतं ॥ दंत्याः पलानि पंचविंशतिस्तावंत्येव चित्रकस्य तावंत्यएव हरीतक्यः सर्वमेकत्र सलिलकलशेऽष्टांशावशिष्टं साधयित्वा पूत्वा च तस्मिन् ता हरीतकीः पंचविंशतिश्च गुडपलानि तैलार्द्धकुडवं चूर्णीकृतं त्रिवृताकुडवमर्द्धपलोन्मितां मागधिकां महौषधं च प्रक्षिपेत् ॥ ततो मृद्वग्निना लेहीभूतेऽवतारिते शीते च तैलसमं मधु कर्षांशं च चतुर्जातकचूर्णं मिश्रयेत् ॥ एता दंतीहरीतक्यः सावलेहाः पंचविंशत्यहोभिर्भक्ष्यमाणा गुल्मार्शःश्वयथुकुष्ठकामलारोचकग्रहणीपांडुहृद्रोगोत्क्लेशप्लीहोदरविषमज्वरानपघ्नंति॥हृद्यं च सुखं च विरेचनं॥गुडक्षीरभावितं वा त्रिवृताचूर्णं सर्पिर्मधुभ्यामवलिह्यात् ॥गुग्गुलुं वा गोमूत्रेण पिबेत्॥ तेन वा श्यामात्रिवृत्कुष्ठदंतीगुग्गुलुक्षारहरीतकीपीलुरसं वा समसर्पिर्लवणं मूत्रबस्तिं वा ॥ क्षारांश्च तांस्तांस्तत्र तत्रोक्तान् क्षीररसस्निग्धाहारो द्व्यहमेकाहं विश्रम्य प्रयुंजीत ॥ क्षारो हि श्लेष्माणं स्निग्धस्थिरमधुरमाशयाच्छिंदन्क्षरयति ॥ कफरुद्धमार्गशुद्ध्यर्थं विविधांश्चूर्णलवणतक्रारिष्टासवानवचारयेत् ॥ पिप्प-

१ विमार्गो दारुमयः शलाकृतिर्वस्तुविशेषश्चर्मकारसंबंधी तेन.

लोमपिप्पलीमूलसैंधवाजाजीचित्रकचूर्णयुक्तां च जीर्णसुरां॥ अपिच॥ वमनैर्लंघनैः स्वेदैः सर्पिःपानैर्विरेचनैः ॥ बस्तिभिर्गुलिकाचूर्णक्षारारिष्टासवैरपि ॥ श्लेष्मिकः कृतमूलत्वाद्यदि गुल्मो न शाम्यति ॥ तदा दाहं हृते रक्ते कुर्यादंते शरादिभिः ॥ अथ वस्त्रांतरितं सपर्यंतं गुल्मनिचयं प्रदीप्तेन शरलोहाग्निमंथतिंदुककाष्ठानामन्यतमेन नाभिबस्तिहृदयांत्ररोमराजीः परिहरन्नातिगाढं परामृशेत् ॥ ततः कषायस्वादुशीतैरग्निवेगमुपशाम्य व्रणोपक्रमं कुर्वीत ॥ व्यामिश्रदोषे तु व्यामिश्रमिदमेव यथोक्तं विदधीत ॥ रक्तगुल्मे पुनरतीतप्रसवकालाया योषितः स्नेहस्वेदपूर्वं स्नेहविरेचनं वितरेत् ॥ पलाशक्षारोदकसिद्धं च यमकं गुल्मभेदनाय तीक्ष्णोष्णं च विधिं ॥ एवमभिद्यमाने योनिविरेचनार्थं क्षारेण महावृक्षक्षीरेण वा युक्तं पललं ताभ्यां वा भावितान्कटुकमत्स्यांस्तत्पित्तभावितान्वा वराहपित्तभावितान्वा नक्तकानधोभागिकद्रव्यभावितान्वा सगुडक्षारकिण्वं वा बस्तिं च सक्षारक्षीरमूत्रेण दाशमूलिकमुत्तरबस्तिं च योजयेत् ॥ प्रवृत्तं तु रक्तं रसोदनाशिन्या उपेक्षेत ॥ अतिप्रवृत्तं रक्तपित्तोपक्रमेण साधयेत् ॥ सर्वेषु चान्नपानस्वरूपज्ञो गुल्मेष्वाहारमग्निबलापेक्षी युंजीत ॥ आनाहादिष्वप्यामशुद्धवातोदावर्तानुरोधेन गुल्मवत्प्रतिकुर्यादिति ॥ भवति चात्र ॥ मंदेऽग्नौ वर्द्धते गुल्मः प्रदीप्ते तु प्रशाम्यति ॥ शमप्रकोपौ दोषाणां सर्वेषां यत्तदाश्रयौ ॥ इति गुल्मचिकित्सितं नाम षोडशोऽध्यायः ॥ १६ ॥

अथात उदरचिकित्सितं व्याख्यास्यामः ॥ सर्वमेवोदरमतिमात्रदोषसंचयानुबंधेन स्रोतोमुखनिरोधाद्व्याकुलानिलतया यत्प्रजायते तस्मादभीक्ष्णमुदरी विरेचनान्युपयुंजीत ॥ मूत्रक्षीरान्यतरयुक्तमेरंडतैलमहरहर्मासमेकं द्वौ वा॥क्षीराहारो वा गव्यं माहिषं वा मूत्रं ॥उष्ट्रीक्षीरवृत्तिर्वाऽऽसीत॥शोफशूलानाहतृण्मूर्च्छापरीतो विशेषेण पयोऽनु-

पानां गोमूत्रेण प्राणदां पिबेत् ॥ पिप्पलीसहस्रं वा स्नुहीक्षीरभावितं सेवेत ॥ तद्भावितेन वा कृष्णाऽभयाचूर्णेन कासरगुग्गुलुं ॥ सैंधवाजमोदयुक्तं वा निंबतैलं ॥ अथवाऽऽर्द्रकरसानुविद्धं सिद्धं वा॥हरीतकीचूर्णप्रस्थयुक्तमाढकं घृतस्यांगारेष्वभिविलाप्य खजेनाभिमंथ्यानुगुप्तं यवपल्ले मासं वासयेत् ॥ततश्चोद्धृत्य परिस्राव्य हरीतकीक्वाथाम्लदधिप्रतीवापं विपाचयेत् ॥अथवा गव्ये पयसि महावृक्षक्षीरमावाप्य विपाच्य शीतीभूतमभिमथ्य तन्नवनीतं महावृक्षक्षीरेणैव सह साधयेत् ॥ अथवा चविकाचित्रकदंत्यतिविषाकुष्ठसारिवाविडंगत्रिफलाकटुरोहिणीद्विहरिद्राशंखिनीत्रिवृद्दीप्यकानर्द्धकार्षिकान् राजवृक्षफलमज्जाद्विपलं महावृक्षक्षीरद्विपलं गोमूत्रक्षीरघृतत्रिकुडवं चैकध्यं पाचयेत् ॥ एतानि तिल्वकचतुर्थानि सर्पींषि पीतान्युदरगुल्मविद्रध्यष्ठीलाऽऽनाहकुष्ठोन्मादापस्मारान्निघ्नंति ॥ यावशूकपंचकोलषट्पलेन वा मस्तुदशमूलक्वाथाढकद्वये च सिद्धं सर्पिःप्रस्थं योजयेत् ॥ यवकोलकुलत्थपंचमूलकषायेण च सुरासौवीरकयुक्तं सर्पिः॥ सर्पिःपानस्रस्ते च दोषे बलवान् विरेचनार्थं मूत्रासवारिष्टसुराः स्नुहीक्षीरयुक्ताः शीलयेत् ॥ विरेचनद्रव्यकषायं नागरदेवदारुप्रगाढं त्रिलवणादिचूर्णं वा द्विगुणानुलोमनद्रव्यं ॥ पटोलमूलरजनीविडंगत्रिफलाः कर्षांशाः कंपिल्लकनीलिनीफलत्रिवृतानां क्रमाद्द्वित्रिचतुर्भिः कर्षैर्युक्ताश्चूर्णयित्वा मूत्रेण पिबेत् ॥जीर्णे च पेयाऽनुपो रसोदनाशी वा स्यात् ॥ ततः षडात्रं सव्योषणं पयसाऽश्नीयात् ॥ ततः सप्तमेऽहनि पुनश्चूर्णं पिबेत् ॥ अनेन विधिना चूर्णमिदमुदराणि जातोदकान्यपि निबर्हयति ॥ गुल्मभेदनानि च प्रयुंजीत ॥ वमनविरेचनशिरोविरेचनवत्सकादिवचादिहरिद्रादिवर्गद्रव्याणि पृथक् पालिकानि श्लक्ष्णकल्कितानि लवणानि च वज्रवृक्षक्षीरप्रस्थं च प्रक्षिप्य मूत्रगणैर्मृद्वग्निना घट्टयन् विपाचयेदविदग्धकल्कं च तत्सिद्धमवतार्य शीतीभूतमंगुष्ठमात्रां गुलिकां वर्तयित्वा य-

थाबलं त्रिचतुरो मासानुपयोजयेत् ॥ एषा मूत्रवर्तिर्महारोगकासश्वासपीनसप्रसेकश्वयथुगुल्मपांडुरोगकृमिणकोष्ठारोचकाविपाकोदावर्तेषु च परमगदं ॥ कृतविरेचनश्च क्षामदेहोऽतरांऽतरा क्षीरमौष्ट्रकं गव्यमाजं वा व्योषयुक्तं शीलयेत् ॥ दोषशेषविजयाय च शीलयेच्चविकानागरं क्षीरेण पिष्टं ॥ सुरदारुचित्रकं वा मुरंगीं वा पुनर्नवां वा ॥ त्रिफलादंतीरोहितकनिर्यूहं वा व्योषक्षारोपेतं सस्नुहीक्षीरघृतयुक्तं पुराणमन्नं तक्रमरिष्टांश्च तांस्तान्क्षीरं च दंतीचित्रकविडंगचविकात्रिकटुकोपेतं तुल्यार्द्रकरसं वा क्षीरं शीलयेत् ॥ पिप्पलीवर्द्धमानं वा सेवेत ॥ शिलाजतु वा क्षीराशी गुग्गुलुं वा ॥पुनः पुनश्च स्नेहयेद्विरेचयेच्च॥ आत्ययिकांस्तु स्नेहविरेकैरेवोपक्रमेत् ॥ सलिलं च वर्जयेत् ॥ आनाहोदावर्तयोर्यथास्वं प्रतिकुर्वीत ॥ वातकृतेषु तु पार्श्वशूलोपस्तंभहृद्ग्रहेषु बिल्वक्षारांभसा तैलं पाययेत् ॥ स्योनाकाग्निमंथतिलकुंतलकदल्यपामार्गान्यतमक्षारेण वा विपक्कं तैलं ॥ कफे पित्ते वा वातेनावृते ताभ्यां वाते बलवान्वातगुल्मोक्तप्रक्रमेणैरंडतैलं पिबेत् ॥ लिंपेच्च जठरमुदरिणां शिग्रुपलाशार्काश्वकर्णगजपिप्पलीदेवदारुभिर्मूत्रपिष्टैः सुखोष्णैः ॥ वृश्चिकालीकुष्ठषड्ग्रंथाद्विपुनर्नवधान्यनागरपंचमूलक्काथैर्मूत्रैश्च परिषेचयेत् ॥ प्रततमेव च स्वेदयेत् ॥ विरिक्तस्य चास्य सदा म्लानमुदरं साल्वणादिभिरुपनद्धं घनेन वाससा वेष्टयेत्॥ एवमेनमनवकाशो वायुर्न पुनराध्मापयति ॥ तथाऽपि पुनः सुविरिक्तस्याध्मानेऽम्ललवणान्सुस्निग्धान्निरूहान् दद्यात् ॥ सोपस्तंभे तु-वायौ तीक्ष्णोष्णान् ॥ अथ वातोदरिणं विदार्यादिसिद्धेन सर्पिषोपस्नेह्य स्वेदितांगं तिल्वकघृतेन बहुशोऽनुलोमयेत् ॥ कृतायां च संसर्ग्यां बलार्थं क्षीरमवचारयेन्निवर्तयेच्च प्रागुत्क्लेशात्क्रमेण॥ततो यूषरसादिभिर्मदाम्ललवणैः समिद्धानलमुदावर्तिनं पुनः स्निग्धस्विन्नमास्था

पयेद्विदार्यादिकाथेन चित्रकफलतैलप्रगाढेन तीक्ष्णाधोभागिकद्रव्य युक्तेन वा दाशमूलिकेन ॥ दीप्ताग्निं च विबद्धमलमस्थिसंधित्रिकपार्श्वादिशूलस्फुरणाक्षेपयुक्तं रूक्षमनुवासयेद्वातहराम्लसिद्धाभ्यां तिलोरुबूकतैलाभ्यां ॥ भोजयेच्चैनं जांगलरसेन विदार्यादिशृतेन वा पयसा ॥ सरलमधुशिग्रुमूलकबीजस्नेहांश्च पानाभ्यंजनेन शूलघ्नान् ॥ स्वेदयेच्चाभीक्ष्णं जठरं ॥ अविरेच्यस्य तु पयःसर्पिर्यूषरसबस्त्यभ्यंगसम भक्तौषधैः संशमयेत् ॥ पित्तोदरिणं मधुरकविपक्केन सर्पिषोपस्नेह्य श्यामात्रिवृत्त्रिफलाविपक्केनानुलोम्य मधुघृतसिताढ्येन न्यग्रोधादिनिर्यूहेणास्थापयेदनुवासयेच्च ॥ दुर्बलं तु प्रागेवानुवास्य क्षीरबस्तिभिः शोधयेत् ॥ संजातबलाग्निं च स्निग्धं पुनः क्षीरेण सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥ सातलात्रायमाणाभ्यां वाऽऽरग्वधेन वा ॥ सश्लेष्मणि पित्ते समूत्रेण ॥ सवाते तिक्तघृतान्वितेन पयसा पुनर्विरेचयेत् ॥ बस्तिकर्म चाचरेत् ॥ एभिरेवच्च क्षीरैर्विदार्यादिशृतेन वा भोजयेत् ॥ पायसेन चोपनाहयेदुदरं ॥ श्लेष्मोदरिणं वत्सकादिसिद्धेन सर्पिषोपस्नेह्य स्नुहीक्षीरविपक्केनानुलोम्य कटुक्षारयुक्तैः कफहरैराहारैः संसर्जयेत् ॥ त्रिकटुमूत्रतैलप्रगाढेन मुष्ककादिक्काथेनास्थापयेदनुवासयेच्च ॥ कुलत्थयूषेण व्योषवता क्षीरेण वा भोजयेत् ॥ स्त्यानकफोदरं क्षारमरिष्टांश्च तीक्ष्णान्वा पाययेत् ॥ सततं च स्वेदयेत्किण्वसर्षपमूलकबीजकल्कैर्जठरमुपनाहयेत् ॥ सन्निपातिकमुदरं प्रत्याख्याय चिकित्सेत् ॥ सर्वमेवेत्येके ॥ सर्वस्य सर्वात्मकत्वात्कच्छ्रतमत्वाच्च ॥ दोषोद्रेकतस्तु प्रतिकुर्वीत ॥ सप्तलाशंखिनीनिर्याससिद्धेन च सर्पिषा विरेचयेन्मासमर्द्धमासं वा ॥ महावृक्षक्षीरमूत्रसिद्धेन वा ॥ अथवाऽजगंधाऽजशृंगीदंतीद्रवंतीनागदंतीस्वादुकंटकपुनर्नवसरलवृश्चिकालीमूषिकपर्णीमहासहाक्षुद्रसहावृक्षादनीभार्ङ्गीगृध्रनखीतंदुलीयकदाडिममातुलुंगमूल-

१ पेयाद्यन्नैरुपक्रमेत् ॥

क्वाथेन मदनफलैलाकुष्ठकुटिलरास्नाकल्कगोमूत्रसंसृष्टेन सैंधवलवणि-तेन स्निग्धेनास्थापयेत् ॥ तथा चानुपशाम्यति निचयात्मके सर्वत्र-च जठरे ज्ञातीनापृच्छ्य मद्येनाश्वमारकगुंजाकाकादनीमूलकल्कं पाययेत् ॥ पानभोजनेषु वा विषं निक्षिपेत् ॥ इक्षुगंडिकां वा भक्षये त्कृष्णसर्पेण दंशयित्वा वल्लीफलानि मूलकं वा॥ एवं ह्यस्य दोषसंघातः स्थिरो लीन उन्मार्गगो विषेणाशु प्रमाथिना विभिन्नो बहिः प्रवर्तते ॥ तेनागदतां [१]व्रजति भवांतरं वा ॥ हृतदोषं च शीतांबुपरिषिक्तं क्षीरं यवागूं वा पाययेत् ॥ततस्त्रिवृद्वास्तुकमंडूकपर्णीकालशाकयवशा-कानामन्यतमं स्वरसेन साधितमनम्ललवणस्नेहं स्विन्नास्विन्नमनन्न-भुङ्मासमेकमश्नीयात् ॥ तत्स्वरसमेव च तृषितः पिबेत् ॥ ततः शा-कैर्निर्हृतदोषे परतो दुर्बलाय करभीक्षीरं पाययेत्॥प्लीहोदरे यथादोष-मुपस्निग्धस्विन्नस्य दध्ना भुक्तवतो वामबाहौ सिरां विध्येत् ॥ रुधिर-स्पंदनार्थं च पाणिना प्लीहानं विमर्दयेत् ॥ पुनश्च स्नेहपीतं विशुद्धदेहं समुद्रशुक्तिक्षारं पयसा पाययेत् ॥ हिंगुसुवर्चिकां वा ॥ पलाशक्षारो-दकेन वा यवक्षारं ॥ पारिजातकेक्ष्वाकपामार्गक्षारं वा ॥ तैलसंसृष्टं शोभांजनकनिर्यूहं वा ॥ पिप्पलीचित्रकसैंधवयुक्तमम्लस्रुतं वा बिड-मागधिकापूतिकरंजक्षारं ॥ अग्निसादे तु त्रिलवणादिमरिष्टांश्च पिबेत् ॥घृतं च षट्फलं महाषट्पलं रोहितकषट्पलं वा॥रोहितकत्वक्पलानि पंचविंशतिः कोलप्रस्थद्वयं च तोये क्वाथयेत् ॥ तेन क्वाथेन तथा पा-लिकैः पंचकोलैस्तैः सर्वैश्च तुल्यया रोहितकत्वचा कल्कीकृतैर्घृतप्र-स्थं साधयेत् ॥ तत्परं प्लीहहितं ॥ रोहितकत्वचः खंडशः कल्पिता ह-रीतकीश्च तोये मूत्रे वा सप्तरात्रमासुनुयात् ॥ स रसः प्लीहगुल्मोदरकृ-मिकासकामलाऽर्शांसि साधयति ॥ एवमनुपशाम्यत्यप्राप्तपिच्छोदके वातकफोल्बणे गुल्मविधिनाऽग्निकर्म कुर्यात् ॥पित्तोल्बणे तु जीवनी-

१ मंभःस्तंवेतिपाठः

यघृतक्षीरबस्तिविरेचनानि प्रयुंजीत॥ पुनः पुनश्च रुधिरमवसेचयेत् ॥ यकृदाख्येऽप्ययमेव क्रियाविभागः ॥ बद्धोदरे स्विन्नाय सतैललवणमूत्रतीक्ष्णं निरूहमनुवासनं च दद्यात् ॥ स्रंसनानि चान्नान्युदावर्तहराणि च ॥ तीक्ष्णं च विरेचनं यच्च किंचिद्वातघ्नं ॥ छिद्रोदरे स्नेहवर्जं कफोदरवदाचरेत् ॥ दकोदरे तु पूर्वमुदकदोषहरणार्थं रूक्षतीक्ष्णौषधान्नमूत्रान्निर्यूहचूर्णक्षारान्कफघ्नानि दीपनीयानि चान्नपानानि योजयेत् ॥ एवमसिद्धौ बद्धछिद्रदकोदरेष्वश्मर्यामिव सुहृदां प्रकाश्य शस्त्रमवचारयेत् ॥ तत्र बद्धछिद्रोदरयोः स्निग्धस्विन्नस्याधोनाभेश्चतुरंगुलाद्वामतोऽपहायोदरं पाटयित्वा चतुरंगुलप्रमाणमंत्राणि निष्कास्य निरीक्ष्य बद्धगुदस्यांत्रप्रतिरोधकरं वालं मलोपलेपमश्मानं चापहरेत् ॥ परिस्राविणि शल्यमुद्धृत्यांत्रपरिस्रावं विशोध्य छिद्रं मर्कोटकैर्दंशयेत् ॥ लग्नेषु च शिरःसु कायमपनयेत् ॥ ततो मधुघृताभ्यामभ्यज्यांत्राणि यथास्थानं स्थापयित्वा बाह्यं व्रणमुदरस्य सीव्येत् ॥ यष्टीमधुकमिश्रया च कृष्णमृदा व्रणमभिलिप्य बध्नीयात् ॥ अथवा निवातमागारं प्रवेश्य क्षीरवृत्तिं स्नेहद्रोण्यां वासयेत् ॥ दकोदरेषु सर्वेषु च जातोदकेषु जठरेषु वातहरतैलाभ्यक्तस्योष्णोदकस्विन्नस्यासैः सुपरिगृहीतस्य कक्ष्यांतपटवेष्टितोदरस्यानाभेर्वामतश्चतुरंगुलमपहाय व्रीहिमुखेनांगुष्ठोदरमात्रमवगाढं विध्वा नाडीं निधाय दोषोदकमर्द्धमात्रमासिंचेत् ततो नाडीमपोद्धृत्य तैललवणेनाभ्यज्य व्रणविधिनोपचरेत् ॥ सहसा हि सर्वस्मिन् निःस्राविते तृष्णा ज्वरोऽगमर्दोऽतीसारः श्वासः कासः पाददाहो वा जायते पूर्यते च सुतरां ॥ अतस्तृतीयचतुर्थपंचमषष्ठाष्टमद्वादशषोडशवासराणामन्यतममंतरं कृत्वा दोषोदकमल्पशो विस्रावयेत्॥ निस्रुते निस्रुते च दोषोदके विमृद्योदरमाविककौशेयचर्मणामन्यतमेन गाढतरं वेष्टयेत् ॥ तथा नाध्मापयति वायुः ॥ लंघयित्वा च यवागूं सस्नेहलवणां मात्रया पाययेत् ॥ततः परं षण्मासा-

न्क्षीरवृत्तिर्भवेत्॥ततो मासत्रयं क्षीरपेयां पिबेत्॥अन्यच्च॥मासत्रयम लवणमल्पक्षीरं श्यामाकं कोरदूषं वा भुंजीतेति॥भवति चात्र॥प्रयतो वत्सरेणैवं विजयेत जलोदरं ॥ वर्ज्येषु[1] यंत्रितो दिष्टे नात्यदिष्टे यतेंद्रियः॥सर्वमेवोदरं ॥ प्रायो दोषसंघातजं यतः ॥ अतो वातादिशमनी क्रिया सर्वा प्रशस्यते॥वन्हिर्मंदत्वमायाति दोषैः कुक्षौ प्रपूरिते॥तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ॥सपंचमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ भावितानां गवां मूत्रे षष्टिकानां च तंदुलैः ॥ यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरं ॥ पिबेदिक्षुरसं चानु जठराणां निवृत्तये ॥स्वं स्वं स्थानं व्रजंत्येषां वातपित्तकफास्तथा ॥ अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ॥ गुडतैलकृतं शाकं वारि पानावगाहयोः॥आयासादिदिवास्वप्नयानपानानि च त्यजेत् ॥नात्यच्छसांद्रमधुरं पाने तक्रं प्रशस्यते ॥ सकणालवणं वाते पित्ते सोषणशर्करं ॥ यवानीसैंधवाजाजीमधुव्योषैः कफोदरे ॥ त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ॥ मधुतैलवचाशुंठीशताव्हाकुष्टसैंधवैः ॥ प्लीह्नि बद्धे तु हपुषायवानीपटुजाजिभिः ॥ सकृष्णामाक्षिकं छिद्रे व्योषवत्सलिलोदरे ॥ गौरवारोचकानाहमंदवन्ह्यतिसारिणां ॥ तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ प्रयोगाणां च सर्वेषामनु क्षीरं प्रयोजयेत्॥ स्थैर्यकृत्सर्वधातूनां बल्यं दोषानुबंधहृत्॥ भेषजापचितांगानां क्षीरमेवामृतायते॥ इत्युदरचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथातः पांडुरोगचिकित्सितं व्याख्यास्यामः ॥ पांड्वामयिनमादौ[2] कल्याण[3]पंचगव्य[4]तिक्तक[5]कानामन्यतमं सर्पिः पाययेत् ॥ दाडिमसारकु-

१ वर्ज्येष्वाहारविहारादिष्वम्ललवणादिषु यंत्रितः स्यात् ॥ दिष्टे कथितेऽन्नपानादौ वा ऽतियंत्रितः स्यात् ॥ अदिष्टेऽकथिते पुनरन्नपानादौ जितेंद्रियः स्यात ॥ अलोलुपेन तन्नभक्षितव्यमित्यर्थः २ आदावित्यनेनैतद्गमयति अस्मिन्व्याधौ प्राधान्येन पित्तचिकित्सा कार्या तदनुवातकफयोः ॥ तथाच पित्तस्यैवैतद्व्याधिकर्तृत्वे प्राधान्यं ॥ अतएव निदाने ऽभ्यगीष्ट पित्तप्रधानाइत्यादि ॥ ३ उन्मादप्रतिषेधोक्तं ४ पंचगव्यं घृतमपस्मारोक्तं ॥ ५ तिक्तकघृतं कुष्ठचिकित्सोक्तं

द्रवं धान्यकार्द्धकुडवं पिप्पल्यष्टमिकाशुंठीचित्रकयोश्च पलं पलमेकतः कल्कीकृत्य तोयाढके विंशतिपलं घृतस्य सिद्धं हृत्पांडुरोगगुल्मप्लीहार्शःश्वासकासमूढवातवातकफार्तिहरमग्निदीपनं वंध्यानां संमतं दुःखप्रसविनीनां च ॥ दुरालभाचंदनपटोलत्रायमाणाकिराततिक्तरोहिणीघर्नानिशाद्वयेंद्रयवदेवदारुपर्पटकाजमोदैः कार्षिकैः क्षीराढके घृतप्रस्थं साधयेत् ॥ पांडुरोगकामलारक्तपित्तज्वरदाहासृग्दरविस्फोटश्वयथुभगंदरार्शोघ्नं ॥ स्निग्धं चैनं तीक्ष्णैर्वामयेत् ॥ पुनश्च स्निग्धं मूत्रयुक्तं गव्यं माहिषं वाऽर्द्धमासं पयः पाययेत् ॥ मागधिकाशृतं वा ॥ मूत्रसिद्धां वा त्रिफलां ॥ सप्ताहं मूत्रेण वा हरीतकीः कल्किताः स्वर्णक्षीरीभद्रदारुनागरश्यामात्रिवृन्मूलानि तेनैव वा क्वथितानि ॥ तैर्वा शृतं पयः ॥ वत्सकबीजविशालाकुष्ठकटुकादारुमुस्तानां समा भागा मूर्वाभागद्वयमतिविषाभागार्द्धं च चूर्णितं सुखांबुना पीत्वाऽनु क्षौद्रमवलिह्यात् ॥ तथा पांडुकामलाज्वरारुचिगुल्मानाहामवातरक्तपित्तकासश्वासानपोहति ॥ त्रिकटुकक्कालतिललोहैर्वा माक्षिकधातुतुल्यैर्माक्षिकेन वटकान्कृत्वा तक्रानुपानान् पांडुरोगी भक्षयेत् ॥ त्रिफलाव्योषघनाग्निविडंगभागा नव नव चायसचूर्णभागा मधुघृताभ्यां तक्रेणोष्णोदकेन वोपयुक्ता हृत्पांडुरोगकामलाकुष्ठशोफप्रमेहहराः ॥माक्षिकधातुचविकादारुदार्वीषड्ग्रंथिकांस्त्रिफलादीन च नव विचूर्ण्य चूर्णाद्द्विगुणं सुश्लक्ष्णं पृथङ्मंडुरं ततो गोमूत्रं सर्वतोऽष्टगुणं पक्त्वा तस्मिन्प्रक्षिप्य पचेत् ॥ अनंतरं च वटकान्कुर्यात् ॥ ते तक्रानुपानमभ्यस्ताः परमौषधं पांड्वामयिनां शोफार्शःकुष्ठकामलामेहप्लीहाढ्यवातकफार्तानां च ॥ शिलाजतुताप्यरूप्यायोमलाः पृथक् पंचपलिकास्त्रिफलादयश्च विगतघनाः पलांशाः श्लक्ष्णरजसः सितोपलायाः पलाष्टकयुक्ताः क्षौद्रद्रुता योगराजः ॥ कुलत्थादिधान्यानशितो यथाग्न्यभ्यवहृतः समानः पूर्वेण॥यक्ष्मविषमज्वराजरककासश्वासापस्मारहर-

श्च ॥ त्रिफलाकुटजफलघनपटोलपिचुमंदमहौषधकषायैर्मासमर्द्धमासं वा भावितान्यष्टौ शिलाह्वयपलानि सितायाश्च तावंत्युपकुल्यातवक्षीरीधात्रीफलकर्कटशृंग्यः पृथक् पलांशा निदिग्धिकाफलमूलयोः पलं त्रिजातत्रिकर्षं च क्षौद्रत्रिपलयुक्तं वटकान् वर्त्तयेत् ।। तेदाडिमांबुक्षीररससलिलसुरासवान्यतमानुपाना वज्राभिधाना वज्रमिवानंतरोक्तान् रोगान् दारयंति ॥ हृद्रोगगलरोगगरोदरासृग्दरभंगदरगुल्मवर्ध्मशुक्रमूत्रदोषांश्च ॥ द्राक्षापिप्पलीप्रस्थद्वयं शर्करार्द्धतुलां तवक्षीरीनागरमधुकानि च द्विपलिकानि चूर्णयित्वाऽऽमलकरसद्रोणे प्रक्षिप्य मृद्वग्निना पचेत् ॥ लेहीभूते च शीते च तस्मिन्मधुप्रस्थमावपेत् त्रिसुगंधिकस्य कर्षत्रयं च चूर्णीकृत्य दर्व्या परिघट्य जातिपुष्पादिवासिते मृद्भांडे निदध्यात्॥ अयं द्राक्षालेह उपयुज्यमानः पांड्वामयहृद्रोगकामलाहलीमकज्वरगुल्मोदरशोफोदावर्तादीनपरानपि विरेकसाध्यान् व्याधीन्प्रसह्य वायुरिवाभ्राण्यपहरति ॥ भोजनं तु सात्म्यतः शालियवगोधूममुद्गजांगलमांसानि पयो घृतं वृषपटोलवेत्रपर्पटकशाकं द्राक्षादाडिमखर्जूरामलकानि पानमनु पंचमूलसिद्धं वारि वाताधिके॥ घनह्रीबेरशुंठीसाधितं पित्तोत्तरे ॥ श्लेष्मण्यरिष्टसीधुमार्द्वीकासवाः ॥ सर्वत्र वा तक्रं ॥ बीजकसारप्रस्थं वरायाः पलानि पंचविंशतिः पंच द्राक्षाया लाक्षायाः सप्त जलद्रोणे पक्त्वा पादशेषं तेभ्यो रसमादाय पूतशीतेऽस्मिंश्छर्करातुलां मधुप्रस्थं कर्षांशानि च चूर्णितानि व्योषव्याघ्रनखोशीरक्रमुकैलवालुकुष्ठमधुकानि निक्षिप्य घृतभाजने सर्वमैकध्यं यवपल्ले ग्रीष्मे दशरात्रं विंशतिरात्रं शीते स्थापयेत् ॥ अयं बीजकसारारिष्टः पांडुकामलामेहहृद्रोगवातशोणितविषमज्वरारोचककासश्वासार्शांसि हरति ॥ गंडीरतरोः समूलपुष्पशाखस्य तुलामाहरेत् ॥ अर्द्धतुलां दशमूलस्य त्रिफलायाः पृथगर्द्धप्रस्थं कुटजत्वचश्चकुडवा-

१ उपकुल्यापिप्पली ॥ २ निदिग्धिका कंटकारी

शान् मुस्तारुष्करकृमिघ्नेंद्रयवान् पालिकान् पाठादंतीमधुरसाराम्राशठीचित्रकान् मृद्वीकाप्रस्थं च षोडशगुणपादशेषमंभसि विपाच्य रसमाददीत ॥ तं पूतशीतं सितोपलातुलाद्वयेन चूर्णप्रस्थेन च युक्तं मागधिकार्द्धप्रस्थेन श्लक्ष्णपिष्टेन ग्रंथिकपलेनार्द्धपलिकैश्च मरिचविडंगैलवालुकैः प्रलिप्ते घृतकुंभे निधापयेत् ॥ मासमात्रं स्थितोऽयं गंडीरारिष्टोऽधिकगुणः पूर्वस्मात् ॥ ग्रंथ्यर्बुदकृमिहृच्च ॥ अथवा चव्यकुष्टप्रलिप्ते भाजने मस्तुद्रोणं गुडतुलां पिप्पलीप्रस्थं त्रिफलाप्रस्थत्रयं विडंगप्रस्थत्रयं कुडवांशांश्च मरिचपरूषकद्राक्षाकाश्मर्यफलेंद्रयवान् द्विपलिकानि च दंतीचित्रकभल्लातकानि चूर्णितानि प्रक्षिपेत् ॥ ततो यवपल्लस्थं पक्षमुपेक्ष्य यथाबलं पिबेत्॥एष मस्त्वरिष्टः पांडुरोगमेहमेदोऽर्शोग्रहणीप्लीहशोफोदरभगंदरहरः परमं चाग्निदीपन इति ॥ भवति चात्र ॥ पांडुरोगप्रशांत्यर्थं विहितं यच्चिकित्सितं ॥ विकल्पमेतद्विदुषा पृथग्दोषबलं प्रति ॥ स्नेहप्रायं पवनजे तीक्ष्णं शीतं तु पैत्तिके ॥ श्लेष्मिके कटुरूक्षोष्णं विमिश्रं सान्निपातिके ॥ मृदं निर्घातयेत्कायात्तीक्ष्णैः संशोधनैः पुरः ॥बलाधानानि सर्पींषि शुद्धकोष्ठेऽनु योजयेत्॥व्योषबिल्वत्रिरजनीत्रिफलाद्विपुनर्नवं ॥मुस्तान्ययोरजः पाठा विडंगं देवदारु च॥वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतं ॥ सर्वान्प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ तद्वत्केसरयष्ट्याह्वपिप्पलीक्षीरशाद्वलैः ॥ मृद्दूषणाय तल्लौल्ये वितरेद्भाविता मृदं ॥ विडंगेनातिविषया पाठया निंबपल्लवैः ॥ वार्ताकैः कटुरोहिण्या कौटजैर्मूर्वयाऽथवा ॥ मृद्भेदभिन्नदोषानुगमाद्योज्यं च भेषजं ॥ कामलायां तु पित्तघ्नं पांडुरोगाविरोधि यत् ॥ पथ्याशतरसे पथ्यावृंतार्द्धशतकल्कितः ॥ प्रस्थः सिद्धो घृताद्गुल्मकामलापांडुरोगनुत् ॥ दंतीचतुष्पलरसे पिष्टैर्दंतीशलाटुभिः ॥ घृतप्रस्थः शृतस्तद्वत्प्लीहश्वयथुजिच्च सः ॥ पुराणसर्पिषः प्रस्थो द्राक्षाऽर्द्धप्रस्थसाधितः ॥ कामला-

गुल्मपांड्वर्तिज्वरमेहोदरापहः ॥ हरिद्रात्रिफलानिंबबलामधुकसाधितं॥ सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमं ॥ गोमूत्रद्विगुणे दार्वीकल्कार्द्ध-पलसाधितः ॥ दार्वीपंचपलक्काथे कल्कः कालीयकेपरः ॥ माहिषात्स-र्पिषः प्रस्थः पूर्वः पूर्वे परः परे* ॥ सिद्धं कालीयकक्काथे सनिशं वोदरे-स्थितं ॥ आरग्वधं रसेनेक्षोर्विदार्यामलकस्य वा ॥ सत्र्यूषणं बि-ल्वमात्रं पाययेत्कामलापहं ॥ पिबेन्त्रिकुंभकल्कं वा द्विगुणं शीतवारि-णा ॥ कुंभस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ॥ सशर्करां त्रिभंडीं वा गवाक्षीं वा प्रयोजयेत् ॥ त्रिफलाया गुडूच्या वा दार्व्या निंबस्य वा र-सं ॥ प्रातः प्रातर्मधुयुतं कामलार्ताय योजयेत् ॥ तिलपिष्टनिभं य-स्तु कामलावान्सृजेन्मलं ॥ कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ॥ कफसंमूर्च्छितो वायुर्यदा-पित्तं बहिः क्षिपेत् ॥ हारिद्रनेत्रमूत्रत्वक् श्वेतवर्चास्तदा नरः ॥ भवे-त्साटोपविष्टंभो गुरुणा हृदयेन च ॥ दौर्बल्याल्पाग्निपार्श्वार्तिहिध्मा-श्वासारुचिज्वरैः ॥ क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ रसै-स्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ॥ शुष्कमूलकजैर्यूषैः कुल-त्थोत्थश्च भोजयेत् ॥ भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते ॥ सबीजपूरकरसं लिह्याद्व्योषं तथाऽऽशयं ॥ स्वं पित्तमेति तेनास्य श-कृदप्यनुरज्यते ॥ वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ निवृत्तो-पद्रवस्यास्य कार्यः कामलिको विधिः ॥ गोमूत्रेण पिबेत्कुंभकाम-लावांश्छिलाजतु ॥ मासं माक्षिकधातुं वा किट्टं वाऽथ हिरण्यजं॥ गु-डूचीस्वरसक्षीरसाधितेन हलीकमी ॥ महिषीहविषा स्निग्धा पिबेद्धा-त्रीरसेन तु ॥ त्रिवृतां तद्विरिक्तोऽद्यात्स्वादुपित्तानिलापहं ॥ द्राक्षा-लेहं च पूर्वोक्तं सर्पींषि मधुराणि च ॥ यापनान्क्षीरबस्तींश्च शील-येत्सानुवासनान् ॥ मार्द्वीकारिष्टयोगांश्च पिबेद्युक्त्याऽग्निवृद्धये ॥

कौंसिकं वाऽभयालेहं पिप्पलीं मधुकं बलां॥ पयसा च प्रयुंजीत यथा-
दोषं यथाबलं ॥ पांडुरोगेषु कुशलः शोफोक्तं च क्रियाक्रममिति ॥
इति पांडुरोगचिकित्सितं नामाष्टादशोऽध्यायः ॥ १८ ॥

अथातः श्वयथुचिकित्सितं व्याख्यास्यामः ॥ श्वयथुषु दोषजेषु
सर्वेषु सर्वसरेष्वामानुबद्धेषु लंघनपाचनशोधनान्यादौ योजयेत् ॥ स्ने-
हजेषु विरूक्षणान्यौषधानि ॥ विरूक्षणोत्थेषु स्नेहनानि ॥ तत्रामजेषु
लंघितवतो लघ्वन्नमशितस्य भद्रदारुनागरमरिचप्रतिविषाविडंगेंद्रय-
वानुष्णांबुना ॥ नागरदेवदारुपथ्यावर्षाभ्वो वा ॥ पंचकोलकाजाजी-
निदिग्धिकामुस्तपाठारजनीर्वा ॥ मूत्रवृत्तिर्वा नवायसं वा ॥ गुरुभि-
न्नपुरीषस्तु तक्रं सव्योपसौवर्चलक्षौद्रं ॥ गुडहरीतकीं वा शीलयेत् ॥
इतरस्त्रिवृत्त्र्यूषणकटुरोहिण्ययश्चूर्णानि त्रिफलाक्काथेन ॥ व्योषयव-
क्षारायोरजांसि वा ॥ बिभीतककल्कं वा तंदुलांबुना ॥ गुग्गुलुं वा गो-
मूत्रेण॥हरीतकीं वा तुल्यगुडां वा शुंठीपुनर्नवकषायानुपानां ॥ आर्द्र-
कं वा तुल्यगुडमर्द्धपलाभिवृद्धं पंचपलप्रकर्षं प्रयुंजीत ॥ मासमयं प्र-
योगः शोफशोषार्शःश्वासकासप्रसेकपीनसालसकाग्निसादगुल्मोदरप्र-
मेहपांडुकामलामनोविकारानपहरति ॥ आर्द्रकरसं वा शालिक्षीराहारः
पिबेत् ॥ निवृत्तामदोषः शृतानि पयांसि सर्पींषि च ॥ त्रिकटुकैरंड-
श्यामामूलैः सिद्धं क्षीरं॥महौषधमुरंगीभ्यां वा ॥ वर्षाभूमयूरकपंचको-
लैर्वा ॥ कुंभनिकुंभव्योषाग्निकैर्वा ॥ करभीक्षीरवृत्तिर्वा स्यात् ॥ गो-
मूत्रं महिषीमूत्रं वा सक्षीरं क्षीराशनः पिबेत् ॥ दाडिमयवानीयवानक-
धनिकापाठाऽम्लवेतसमरिचपंचकोल बिल्वफलयावशूकानक्षमात्रान्स
लिलाढके विपाच्य तत्कषायेण घृतप्रस्थं साधयेच्छोफार्शोगुल्ममेहा-
ग्निसादहरं॥अर्शोविहितविधिना चित्रकदध्नो नवनीतमाददीत ॥ चि-
त्रकमूलगर्भं सचित्रककल्कतक्रसिद्धं समानं पूर्वेण ॥ यथादोषोच्छ्रा-

१ कासचिकित्सितोक्तं प्रस्थोन्मिते यवक्काथे विंशतिर्विजयाइत्यादिशीलयेत् ॥

थं च धान्वंतरं कल्याणकं पंचगव्यं तिक्तं महातिक्तमुदरोक्तानि वा तिल्वकचतुर्थानि घृतानि पाययेत् ॥ दशमूलक्काथकंसं पथ्याशतं गुडतुलोन्मिश्रमधिश्रयेत् ॥ लेहीभूते तत्र त्रिकटुकत्रिजातकयवक्षारचूर्णं प्रक्षिपेत्क्षौद्रार्द्धप्रस्थं च ॥ एता दशमूलहरीतक्योऽतिप्रवृद्धमपि श्वयथुमुदरज्वरारोचकाविपाकपांडुरोगगुल्मभेहश्वासकासकार्श्यामवातास्लपित्तान् समूत्रशुक्रदोषांश्च निघ्नंति ॥ शठीपुष्करमूलकारवीचित्रकाजाजीजीवंतीबिल्वमध्यक्षारवृक्षाम्लैर्दशमूलेन च परिगृहीतानि घृततैलभृष्टानि पेयादीन्यन्नान्यल्पस्नेहलवणान्युपकल्पयेत् ॥ स्पर्शसुखांश्चाभ्यंगप्रदेहसेकान् ॥ शैलेयस्थौणेयकश्रीवेष्टकागुरुदेवदारुहरेणुकाकुष्टध्यामकपद्मकमांसीमागधिकावन्यधान्यतालीसपत्रकचतुर्जातकपलाशांबुदांबुप्रियंगुस्पृक्कानखैः श्लक्ष्णपिष्टैस्तैलमभ्यंगं पचेत् ॥ तैश्च प्रदेहं कुर्यात् ॥ सर्षपसौवर्चलसैंधवशार्ङ्गेष्टाभिश्च ॥ केवलैर्वाऽक्षमज्जाभिः ॥ विशेषतश्चैकांगजेषु पुनर्नवाहिंस्राकोशातकीकरवीरकिंशुकातिविषर्द्धिवृद्धिमूषिककर्णीहस्तिकर्णनलिकानाकुलीमूलकाक्कादनीशालत्रिफलादेवदारुरोध्रतालपर्णीदशपत्रिकाजयंतीभिः प्रलेपः ॥ मूलकतोयेन कवोष्णेन वृक्षकार्कनक्तमालनिंबवर्षाभूक्काथेन वा स्नानं ॥ अथानिलजे श्वयथौ त्रिवृतमेरंडतैलं चार्द्धमासं पिबेत् ॥ एरंडतैलमेव च विड्वातसंगे प्राग्भक्तं पयसा रसैर्वा ॥ वातहराभ्यंगस्वेदोपनाहांश्च कुर्यात् ॥ विशेषेण चैकांगगे मातुलुंगाग्निमंथशुंठीदेवदार्वहिंस्राप्रलेपः ॥ पित्तजे न्यग्रोधादिसिद्धं सर्पिः पिबेत्तिक्तं वा ॥ मूर्च्छाऽरतितृड्दाहेषु क्षीरं तदेव तु स्रंसनार्थी मूत्रयुग्मं[1] ॥ अभयाऽमरदारुमधुककटुकादंतीचंदनवेतसपटोलमूर्वादार्वीत्रायमाणोपकुल्याविशालाक्काथः ससर्पिरुपयुक्तः श्वयथुविषमज्वरदाहपपासार्तिसंतापसन्निपातानुपशमयति ॥ घृतक्षीरक्षीरिवृक्षवेतसमंजिष्ठाम्र

१ मूत्रयुक्तामातपाठोभाति

णालचंदनादिभिः शीतवीर्यैः कल्पयेदभ्यंगादीन् ॥ कफोत्थे त्वारग्व धादिसाधितं तैलं पिबेत् ॥ क्षारमूत्रतक्रासवारिष्टांश्च ॥ भल्लातकचित्रकविडंगबृहतीफलानि पृथांग्द्विप्रस्थशान्यच्छधान्याम्लद्रोणे गोमयाग्निना त्रिभागशेषमवतारयेत् ॥ तत्पूतशीतं मस्तुकलशेन सितोपलातुलया च युक्तमग्निकमागधिकाकल्कलिप्ते दृढे भांडे समावाप्य वैहायसे सुगुप्तं स्थापयेत् ॥ ततो दशाहस्थितोऽयमुपयुक्तो भल्लातकारिष्टः शोफोदरार्शोभगंदरग्रहणीक्रमिकुष्ठमेहकार्श्यकिक्कसान् सत्वरमपनयति ॥ त्रिफलामरिचद्राक्षापिप्पलीकाश्मर्यफलानां प्रत्येकं शतं गुडतुलामुदकद्रोणं मधूपलिप्तभाजनस्थं सप्ताहमुष्णे काले द्विसप्ताहं शीते धारयेत् ॥ अयमष्टशतारिष्टः समानः पूर्वेण ॥ पुराणपिण्याककृष्णाशिग्रुत्वगतसीसिकतामूत्रपिष्टाः सुखोष्णाः प्रलेपे दद्यात् ॥ एकांगगे तु कालासरलाजशृंग्यजगंधाऽश्वगंधैकेषीकाशुंठीकुलत्थतर्कारीकुष्टार्जकचित्रकजलमूत्राणि स्नाने ॥ चंडागुरुणी विलेपने ॥ संसर्गसन्निपातयोर्यथादोषोदयमिदमेव साधनं ॥ एकदेशाश्रये च श्वयथौ यथासन्नं वमनादीनि रक्तावसेचनं च कुर्वीतेति ॥ भवति चात्र ॥ प्रायोऽभिघातादनिलः सरक्तः शोफं सरागं प्रकरोति तत्र ॥ विसर्पनुन्मारुतरक्तनुच्च कार्यं विषघ्नं विषजे च कर्म ॥ ग्राम्याब्जानूपं पिशितमबलं शुष्कशाकं तिलान्नं गौडं पिष्टान्नं दधि सलवणं निर्जलं[1] मद्यमम्लं ॥ धानावल्लूरं समशनमथो गुर्वसात्म्यंविदाहि स्वप्नं रात्रौ श्वयथुगदवान्वर्जयेन्मैथुनं च ॥ इति श्वयथुचिकित्सितं नामैकोनाविंशोऽध्यायः ॥ १९ ॥

अथातो विसर्पचिकित्सितं व्याख्यास्यामः ॥ ॥ पूर्वरूपेष्वेव सर्वविसर्पाणां लंघनं रूक्षणं सिरामोक्षमुल्लेखनं च कुर्यात् ॥ न तु क्वचिदपि स्नेहनं ॥ निरामेषु क्षीणकफेषु च शीतवीर्याणि सर्पींषि तिक्तक-

१ विज्जलपितिपाठः

त्रायमाणाऽमृतादीनि पाने दद्यात् ॥ तत्र मदनेंद्रयवपटोलपिचुमंद-
मधुकेक्षुरसान्वमनेऽवचारयेत् ॥ द्राक्षात्रिवृत्त्रिफलात्रायमाणाविरेचने
॥ मुस्तदेवदारुकुष्ठशताह्वावाराहीधान्यकृष्णगंधाऽश्वगंधावंशार्तगलान्
लेपसेकेषु ॥ अनिले ह्रस्वपत्रवल्लीकंटकपंचमूलानि च ॥ पित्ते तु-
कमलोत्पलशैवलपंकदूर्वामृणालकशृंगाटकसेरुकशर्कराह्रीबेरचंदनमु-
क्तामणिगैरिकपयस्याप्रपौंडरीकमधुकपद्मकघृतक्षीराणि न्यग्रोधादि
च ॥ श्लेष्मण्यजगंधाऽश्वगंधाकालैकैषिकागुडचोचरास्नावचाशीतशिवं
द्रपर्णीगोमूत्राणि वरणादिं च ॥ संसर्गे यथादोषबलं विकल्पयेत् ॥
तत्र कफस्थानाश्रिते सामे पित्तस्थानगते च रूक्षा विशीताः प्रले-
पपरिषेकाः ॥ पित्ते नवाः सुशीताः सघृता वस्त्रांतरिताः क्षणे क्षणे
चापनीयाऽन्ये प्रयोज्याः ॥ द्वंद्वजेषु यथायथं दोषान् चिकित्सेत्॥विशे-
षेणाग्निविसर्पे महातिक्तकं पिबेत् ॥ ग्रंथिविसर्पे रक्तपित्तसंसर्गमवे-
त्य प्राग्लंघनादीनि विरेचनांतानि शमनांतानि च शमनानि योजये
त् ॥ ततो वातश्लेष्महरं कर्म ॥ शूले च तदा स्निग्धाम्लोष्णाभिरु-
त्कारिकाभिर्ग्रंथीनामुपनाहं ॥ वातकफविसर्पोक्तैश्च समस्तैरेव वा-
सिद्धेन तैलेन तोयेन वा परिषेकः ॥ लिंपेद्वा शुष्कमूलकस्य कल्केन
नक्तमालत्वचा वा ॥ बिभीतकेन वा विजयाऽक्षनागबलाऽग्निमंथभू-
र्जग्रंथिवंशपत्राणां वा ॥ दंतीचित्रकमूलत्वक्कासीसार्कस्नुहीक्षीरभल्ला
तकास्थिभिरुष्णैर्लेपः शिलामपि भिनत्ति ॥ दीर्घकालप्रसक्ते तु ग्रंथौ
त्रिफलां प्रयुंजीत ॥ मधुपिप्पलीर्वा ॥ मुस्तासक्तुभल्लातकानि वा ॥
सीधुमधुशार्करान्वा ॥ मातुलुंगरसानुविद्धां मदिरां वा ॥ गिरिजजतु-
वा गुल्मभेदनं वा तप्तलोहोपलादिपीडनं ॥ जत्रूर्ध्वगते तीक्ष्णधूमवम
नानि च ॥ तथाप्यभेदे क्षारेणाग्निना वा दहेत् ॥ पाटयित्वा वा शस्त्रे-
ण परिशोधयेत् ॥ विदग्धं वा रक्त ,नीयापनीय पुनः पुनः स्वेदयेत्॥
एवं पर्यायेण रक्तपित्ते वातश्लेष्मणि चोत्तिष्ठेत ॥ सर्वस्मिन् विसर्पे-

पर्यागते विदारिते च व्रणवत्तैलं च ॥ दार्वीविडंगकंपिल्लकैर्ग्रंथिव्रणं साधयेत् ॥ कर्दमके शीघ्रतरं सुतरां च वमनादीनि कृत्वा पुनर्जलौकोभिरसृगवसेचयेत् ॥ असृक्प्रक्लेदाद्धि त्वङ्मांससिरास्रावसंक्लेदो भवति ॥ पिबेच्च कषायं घनपटोलपिचुमंदानां मुस्तोशीरामलकसारिवाणां चंदनोत्पलयोः पटोलादिवर्गस्य वा घृतमिश्रं वा दार्वीत्वकृतिक्तापटोलयष्ट्याह्वारिष्टमसूरत्रिफलात्रायमाणानां॥ विरेचनार्थं च त्रिवृच्चूर्णं सर्पिषा पयसा द्राक्षारसेन घर्मांभसा वा पाययेत् ॥ त्रायमाणाशृतं वा पित्तोद्धत्ते क्षीरमिति ॥ भवति चात्र श्रेष्ठाऽस्रस्रुतिरेवात्र विसर्पो ह्यसृगाश्रयः ॥ यच्च नास्रावसंसृष्टो रक्तपित्तेन जायते ॥ न घृतं बहुदोषाय देयं यन्न विरेचयेत्॥ तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत् ॥ ॥ इति विसर्पचिकित्सितं नाम विंशोऽध्यायः ॥ २० ॥

अथातः कुष्ठचिकित्सितं व्याख्यास्यामः ॥ पूर्वरूपेष्वेव कुष्ठिनं स्नेहपानेनोपक्रमेत ॥ तत्र वातोत्तरे मेषशृंगीशार्ङ्गेष्टैरंडगुडूचीद्विपंचमूलसिद्धं तैलं घृतं वा पानाभ्यंगयोर्विदध्यात् ॥ पित्तोत्तरे वाऽश्वकर्णककुभपलाशपिचुमंदमधुकरोध्रसमंगासिद्धं सर्पिः ॥ अथवा पटोलपिचुमंददार्वीदुरालभातिक्तरोहिणीपाठापर्पटकत्रायमाणानां पालिकान् भागान् जलाढकद्वयेऽष्टभागशेषं क्वाथयेत् ॥ तेन कार्षिकैश्चंदनोपकुल्यामुस्तत्रायंतींद्रयवभूनिंबैः कल्कितैः सर्पिषो द्वादशपलं साधयेत् ॥ एतत्तिक्तकं सर्पिः कुष्ठविसर्पविस्फोटगंडगंडमालाश्वयथुपिडकारक्तपित्तदुर्नामवातशोणितकामलापांड्वामयोन्माददाहतृड्भ्रमकंडूदुष्टनाडीगुल्ममदतिमिरव्यंगश्वित्रापस्मारभगंदरोदरप्रदरज्वरगरविद्रधिग्रहणीहृद्रोगानपहरति ॥ सप्तच्छदकटुकाऽतिविषाशम्याकपाठाभूनिंबमुस्तत्रिफलोशीरपटोलपर्पटकपिप्पलीद्वयद्विरजनीद्विसारिवाचंदनदुरालभायष्टकवचाशतावरीविशालाकुटजबीजवृषमूर्वागुडूचीभूनिंबनिंबत्रायमाणाकटुकगर्भं द्विगुणामलकरसमष्टगुणांबु सर्पिर्विपक्वं म-

ह्यातिक्तकाख्यं घृतमधिकगुणं पूर्वस्मात् ॥ गुग्गुलुं पंचतिक्तं वा पिबेत् ॥ कफोत्तरे शालिपियालशम्याकारिष्टसप्तपर्णचित्रकमरिचवचाकुष्टैः साधितं ॥ अथवा बृहतीद्वयकाकमाचीशुकनासाक्काथे मरिचविडंगशिग्रुजातिदेवदारुक्षवकहरिद्राऽभयाकल्केन वाजिमूत्रेण च सिद्धं सर्पिः ॥ सर्वेषु च भल्लातकतुवरकसिद्धार्थकान्यतमतैलं ॥ भल्लातकपथ्याकृमिघ्नसिद्धं वा हविः ॥ ततः स्निग्धस्य यथादोषं यथासन्नं च संशोधनादि प्रयुंजीत ॥ सिरां च बलापेक्षी विध्येदेकां द्वे तिस्रः चतस्रः पंच वा ॥ अंतराऽतरा च पुनः पुनः स्नेहं पिबेत् ॥ दुर्बलं च शून्यकोष्ठं कुष्ठिनं वायुरभिभवति ॥ वमने त्वस्य मधुककुटजबीजनिंबपटोलपल्लवानि विदध्यात् ॥ कुंभनिकुंभत्रिफला विरेचने माणिभद्रवटकांश्च ॥ पटोलविशालयोर्मूलं त्रिफला च पृथक्त्रिभागोनत्रिशाणाः[1] कटुकात्रायमाणे शाणांशे शुंठ्यास्त्रिभागोनः शाणः तदेतत्पलमेकध्यं सलिले विपाच्य पाययेत् ॥ ऊर्ध्वाधो विरिक्तश्च जीर्णे जांगलरसेनाश्नीयात् ॥ एवमेतत्षड्रात्रप्रयोगात्परं पित्तकफशोफकुष्ठदुष्टनाडीव्रणार्शोभगंदरग्रहणीपांडुहलीमककामलाविषमज्वरहृद्बस्तिवेदनाप्रमुभयानुलोमनं वा ॥ ब्राह्मीरससाधितं सर्पिः पिबेत् ॥ आवर्तकीतुलां सलिलार्मणेऽष्टांशशिष्टां विपाच्य तेन निर्यूहेण तन्मूलैश्च घृतप्रस्थं साधयेत् ॥ ततो मात्रामेकाहांतरं पिबेत् ॥ ऊर्ध्वाधोविरिच्यमानस्तृषितः शीतलवणमारनालं जीर्णस्नेहश्च तेनैव कोद्रवौदनमश्नीयात् ॥ अनेन कुष्ठश्वित्रापचीभगंदरनाडीव्रणाखुविषाणि सिध्यंति ॥ मेध्यं चैतत्पुंसवनं च ॥ दार्वीपटोलबृहतीसेव्यमदननिंबकृतमालयवेन्द्रयवैः सस्नेहैरास्थापनं ॥ एभिरेवच विपक्वः स्नेहोऽनुवासनार्हस्यानुवासनं ॥ दंतीमरीचफणिज्जकार्द्रककरंजबीजपिप्पलीविडंग-

१ पृथक्प्रत्येकं त्रिभागेन ऊनस्तृतीयः शाणो येषां ते पटोलादयः पंच पृथक्त्रिभागापचितत्रिशाणा इत्यर्थः ॥ षट्धानकाः शाणः ॥

सैंधवैरूर्ध्वजत्रुगते कुष्ठे कृमिषु च ॥ शिरोविरेकः सूत्रस्थानोक्तैः वैरेचनिकधूमश्च ॥ ततः सर्वतो विशुद्धस्यांतर्बहिः शमनानि प्रयुंजीत ॥ खदिरकदरतिनिशासनशिरीषशिंशपाशाकसर्जार्जुनजंबूकरवीरधवामलकीमुष्ककक्षवकबदरीबब्बूलनिंबकरंजकदंबमधूकसारान् सार्द्रान् कृतमालनिचुलपटोलांकोल्लबलाबिल्वकुटजकटभीपारिभद्रकसहचरगृध्रनखीवरुणवर्धमानार्कशोभांजनकाटरूषकशतावरीश्वदंष्ट्रारिमेदाश्वकर्णश्रीपर्णीस्वयंगुप्ताऽग्निमंथेंद्रवारुणीकाकोदुंबरिकामेषशृंगीटुंटुकगुडूचीवर्षाभूश्रेयसीबृहतीद्वयरोहिणीमूर्वाशार्ङ्गेष्टामूलानि च शकलयित्वा पृथक् त्रिंशत्पलिकानि च संक्षुद्य महति कटाहेऽष्टगुणेनांभसा क्वाथयेत् ॥ अष्टभागशेषं निर्यूहमवतार्य परिस्राव्य च तस्मिन् सर्पिषः पलशतत्रयं विपचेत् ॥ ईषदवशेषकषाये च द्विदलीकृतारुष्करसहस्रत्रायमाणमावाप्य पुनः पाचयेत् ॥ विगतस्वरसाण्यरुष्कराण्यपास्य तस्मिन्स्नेहे चूर्णितानि प्रक्षिपेद्व्याधिघातकव्योषनाकुलीमार्कवार्कैकाकादनीतगरकटुकाकुंभबिल्वाहिंगुविडंगचित्रकातिविषामुस्तेंद्रयवेंद्रवारुणीरूप्यमललोहकांतरसांजनाभ्रकशुकनासादेवदाली त्रिफलालांगुलकी विशालाकुंभनिकुंभवचावाराहीवनमालामहाद्रुमकर्कोटकीप्रपुन्नाटसोमपर्णीनाकुलिकाद्वयपटोलीजातीपल्लवताप्यकारवेल्लीकाकोलीकंदकसप्तच्छदशार्ङ्गेष्टोत्पलसारिवागुग्गुलुशिलाजतुमूर्वाकुस्तुंबरीजीरकद्वयपाठेंदुरखावत्रकंदहरिद्राद्वयलवणपंचकानि प्रत्येकं त्रिपलिकानि शृंगीविषपलं चैकं ॥ ततो दर्व्या समंतादाघट्य गुप्तं भूमौ धान्ये वा मासं निखनेत् ॥ अथ कृतसंशुद्धिस्स्वस्त्ययनः कुष्ठी प्रातस्ततो मात्रामुपयुंजीत॥ जीर्णे च यथेष्टमाहारं॥ तेनास्य पूर्वमंगानि तुद्यंते भिद्यंते शूयंते स्फुरंति स्फुटंति च ततः सप्तरात्रात्पुनः स्वस्था भवंति ॥ अपिच ॥ योगराजमवलिह्य समस्तं संज्ञयैव कथितोत्तम-

१ गृध्रनखी बदरीविशेषः २ वर्धमान एरंडः

शक्तिं ॥ हंति कुष्ठमतिपातितगात्रं स्नायुजालपरिशेषमशेषं ॥ श्वासाग्निसादारुचिकासयक्ष्मगुल्माढ्यवातग्रहणीप्रमेहान् ॥ शोफं कृमीन् पांडुगदं जरां च निवर्त्तयत्येष रसायनाख्यः ॥ त्रिफलादशमूलमूर्वामुस्तसप्तच्छददारुनिंबत्वग्गवाक्षीचित्रकमंजिष्ठाव्योषचूर्णं नवगुणैः सक्तुभिर्युक्तं सक्षौद्रं शीलयेत् ॥ अथवा क्षुण्णान्यवान्निस्तुषान् रात्रौ गोमूत्रपर्युषितानह्नि किलिंजे शोषयेदेवं सप्ताहं भावयेच्छोषयेच्च ॥ ततस्तान्सक्तून्कृत्वा भल्लातकप्रपुन्नाटावल्गुजचित्रकविडंगमुस्तचूर्णं चतुर्भागयुक्तानसनादिकषायेण पाययेत् ॥ एवमसनादिक्काथपीतानामारग्वधादिकषायपीतानां वा गोजीर्णकानां वा यवानां सक्तूनरुष्कराग्निमंथचूर्णमिश्रान्खदिरासनसाररोहितकगुडूचीनामन्यतमस्य कषायेण दाडिमाम्लवेतसाम्लेन सैंधवलवणेन सितामधुमधुरेणालोड्य पाययेत् ॥ एष सक्तुमंथकल्पः ॥ यावकांश्च भक्ष्यानपूपपूर्णकोशशाष्कुलीप्रभृतीन् कुर्यात् ॥ यवैश्च गोधूमैश्च सुरां कल्पयेत् ॥ पलाशक्षारभावितशालितंदुलपिष्टेन क्षारोदकेनैव स्वेदितेन प्रियंगुगजपिप्पलीचित्रककेंबुकैलवालुकपरिपेलवरोध्रमरीचविडंगचूर्णमिश्रेण नवे चैनं भाजने जतुशृते क्षौद्रपिप्पलीलिप्ते स्थापयेत्॥ततो गंधरसोपपन्नां कुष्ठिने पातुं दद्यात् ॥ खदिरशिंशपासारमुत्तमवारुणीं ब्राह्मीं कोशवतीं च स्वकषायकल्केन विपचेत् ॥ तेन क्काथेन तंदुलान्भावयेत् ॥ पिष्टं च स्वेदयेत् ॥ अभिषुणुयाच्च पूर्ववत् ॥ त्रिवृच्छ्यामाऽग्निमंथसप्तच्छदकोलाकेंबुकशंखिनीतिल्वकत्रिफलापलाशशिंशपानां रसमादाय पलाशद्रोण्यामभ्यासिच्य खदिरांगारतप्तमयःपिंडमेकविंशतिवारान्निर्वाप्य ततस्तं रसमासिच्य स्थाल्यां गोमयाग्निना साधयेत् सिध्यति चावपेत्पिप्पलीचूर्णस्य भागं द्वे मधुनस्तावद्घृतस्य ॥ ततश्चतुर्भागावशिष्टेऽवतीर्णे भूयोऽग्नितप्तमयःपिंडं तस्मिन्प्रक्षिपेत् ॥ प्र-

शांतं च लोहपात्रे स्वनुगुप्तं दद्यात् ॥ इयमयस्कृतिर्दुःसाधनमपि कुष्ठं मेहं वा साधयति स्थूलं कर्शयति पांडुशोफमपहंति सन्नमग्निमुद्धरति ॥ विशेषेण राजयक्ष्मिणामुपदिश्यते वर्षशतायुश्चैनामुपयुज्य पुरुषो भवति ॥ असनादिक्काथमासिच्य पलाशद्रोण्यामयोघनैस्तप्तैः संयोज्य निर्वाप्य च कृतसंस्कारे कलशे प्रक्षिप्य वत्सकादिं प्रतिवाप्य क्षौद्रं च सुगुप्तं मासं निधायोपयुंजीत ॥ एवं न्यग्रोधादिष्वारग्वधादिषु चायस्कृतीर्विदध्यात् ॥ खदिरसुरदारुसारक्काथप्रस्थं क्षौद्रप्रस्थं मत्स्यंडिकाप्रस्थं लोहचूर्णार्द्धप्रस्थं त्रिफलाचतुर्जातकमरिचानि च कार्षिकाणि प्रक्षिप्यायसे भांडे मासस्थितं तदुपयोजयेत् ॥ रसायनप्रयोगेण च लोहतुलां तुवरकास्थीनि भल्लातकान्यलंबुषामवल्गुजं गुग्गुलुमर्शोविहितविधानेन वा चित्रकमिति ॥ भवंति चात्र ॥ किलासकुष्ठग्रहणीप्रमेहस्थूलत्वदुर्नामभगंदरेषु ॥ पांडुत्वशूनत्वकफामयेषु मंथादियोगान्विदधीत सामे ॥ शाल्यो यवगोधूमाः कोरदूषाः प्रियंगवः ॥ मुद्गा मसूरास्तुवरी तिक्तशाकानि जांगलं ॥ त्रिफलारुष्करारिष्टक्षौद्रयोजितभावितं ॥ धात्रीखदिरनिंबांबु रसं मुद्गपटोलजं ॥ मद्यान्यौषधगर्भाणि मथितं चेंदुराजिमत् ॥ अन्नपानं हितं कुष्ठे नत्वम्ललवणौषधं ॥ दधिदुग्धगुडानूपतिलमाज्यं त्यजेत्तरां॥ तुलार्द्धनिंबपंचांग्यास्तथा खदिरसारतः ॥ हरीतकीदलतुला भल्लातकतुला दश ॥ कृष्णाविडंगकुडवं चैकध्यं विपचेज्जले॥ कषायं तं परिस्राव्य निदध्यात्ताम्रभाजने ॥ षण्मासांतरितं कुष्ठैः कृमिमेहैर्विमुच्यते ॥ निंबारिष्ट इति ख्यातो वरुणेनैष निर्मितः ॥कटुकापटोलमूलोत्तमावचानिंबरात्रिमंजिष्ठानां ॥ संशीलितः कषायस्तथाऽऽमयान् श्लेष्मपित्तबहुलान्हंति॥ वातोत्तरांस्तु सर्पिर्विपाचितं क्वथितकल्कितैश्च कटुकाद्यैः ॥ खदिरारिष्टगुडूचीसुरतरुदार्वीश्च कल्पयेत्पृथगेवं ॥ शीतः कषायः खदिरस्य पीतः सक्षौद्रताक्ष्यों हरति प्रसह्य ॥ त्वक्कंठरोगापचिकुष्ठमेहान्बलाहका-

न्वायुरिव प्रचंडः ॥ सर्पिर्मधुभ्यां त्रिफलारसेन विडंगकल्केन च संप्र-युक्तः ॥ कुष्ठं कषायः खदिरस्य हंति तिष्ठन् कषायं मनसीव धर्मः॥ख-दिरस्य लूनशिरसो मूले खातस्य मध्यमं मूलं ॥ छित्वाऽधोऽयःकुंभं रससंग्रहणाय निदधीत ॥ लिप्तान्कृष्णमृदेंधनैश्च निचितादादीपिताद्व-ह्निना तस्माच्चश्च्यवते रसः स सहितः क्षौद्राज्यधात्रीरसैः ॥ पीतः कु-ष्ठभगंदरोदरगतीर्मेहास्रपांडून् जयेत्प्रस्थस्तस्य जरां च भोज्यमिह तु त्याज्यं च भल्लातंवत् ॥ योज्यं खदिरवन्निंबशिंशपारग्वधासनं ॥रोहि तकं सुराह्वं च खदिरोदकपायिनः ॥ दार्वीरसांजनं वा गोमूत्रेण प्रबाध-ते कुष्ठं ॥ अभया प्रयोजिता वा मासं सव्योषगुडतैला ॥ दार्वीकलिंग-कटुकाऽतिविषाऽग्निपाठा मूत्रेण सूक्ष्मरजसोधरणप्रमाणाः ॥पीता जयं-ति गुदजोदरगुल्मकुष्ठकोष्ठानिलाढ्यपवनग्रहणीप्रमेहान् ॥लाक्षादंती-मधुरसवराह्वीपिपाठाविडंगप्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषं ॥ र-क्ता निंबः सुरतरुकृतं पंचमूल्योश्च चूर्णं पीत्वा मासं जयति हितभुग्ग-व्यमूत्रेण कुष्ठं॥ दशपलमरिष्टपल्लवकुसुमजटात्वक्पलं यथाकालं॥ प्र-त्याहरेत्समस्तं कृतमालतरोश्च तत्तद्वत्॥संचूर्ण्य वस्त्रपूतं रसे प्लुतं खा-दिरेऽनले शुष्कं ॥चित्रकघनभल्लातकगोक्षुरकमहौषधत्रिफलाः ॥लो-हविडंगावल्गुजसितोपलाः पलसमा रजीकृत्य ॥ सप्ताहमेकतस्तद्रसेन भृंग्यास्ततो भाव्यं॥ अथ पीतमक्षमात्रं घृतेन दुग्धेन कोष्णसलिलैर्वा ॥ अचिरात्करोति वह्निं मतिं स्मृतिं पाटवं मेधां ॥ कृमिकुष्ठगंडपांडुप्र-मेहवक्त्रामयारुचिच्छर्दीः ॥ अपचीभगंदरस्थौल्यदुष्टनाडीव्रणव्यं-गं॥कफपित्तजान्विकारान्विशेषतः सुविषमान्निवर्त्तयति॥वर्षाद्विषग-रकृत्या नित्याभ्यासेन खरुतिपलितानि॥त्रिकटूत्तमातिलारुष्करराज्य-माक्षिकसितोपलाविहिता॥गुलिका रसायनं स्यात् कुष्ठजिच्च वृष्या च ससम॥चंद्रशकलाभिरजनीविडंगतुवराब्ध्यारुष्करत्रिफलाभिः॥वट-का गुडांशकृताः समस्तकुष्ठं विनाशयंत्यभ्यस्ताः ॥ विडंगभल्लातकवा-

कुचीनां सद्वीपिवाराहिहरीतकीनां ॥ सलांगलीकृष्णतिलोपकुल्या गुडेन पिंडी विनिहंति कुष्ठं ॥ पथ्याकलिंगकपलाशफलेंदुराजीभल्लातकास्थिचतुरंगुलचित्रकार्कैः ॥ सावर्त्तकीकृमिहरैः क्रमवर्द्धितांशैर्मूत्रेण तुल्यतुवरैर्वटका गदघ्नाः ॥ शशांकलेखा सविडंगसारा सपिप्पली वा सहुताशमूला ॥ सायोमला सामलका सतैला कुष्ठानि कृच्छ्राणि निहंति लीढा॥भूनिंबत्रिफलापद्मपद्मकातिविषाकणाः ॥मूर्वापटोलीद्विनिशापाठातिक्तेंद्रवारुणीः ॥ सकलिंगवचास्तुल्या द्विगुणाश्च यथोत्तरं ॥ लिह्याद्दंतीत्रिवृद्धात्रीचूर्णिता मधुसर्पिषा ॥ कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधं ॥ वराकणाविडंगान्वा लिह्यात्तैलाज्यमाक्षिकैः ॥ खदिरशकलचूर्णं क्षौद्रसर्पिर्विमिश्रं सगिरिजतुविडंगं मात्रया सेवमानः ॥ लघुमितहितभोजी ब्रह्मचारी जितात्मा श्वयथुकिटिभकोठश्वित्रकुष्ठानि हन्यात् ॥ खदिरासनसारस्य तुलां द्रोणेऽभसः क्षिपेत् ॥ अष्टमेऽहनि तत्तोयं पचेदादर्विलेपनात् ॥ त्रिफलार्द्धतुलाचूर्णं तत्पादेन तु बाकुची ॥ तदर्द्धं द्वीपिनो मूलं तद्वत् ब्राह्मीं[1] समार्कवां ॥ लोहकृमिघ्नद्विप्रस्थं क्षिप्त्वा तद्वटकीकृतं ॥ कुष्ठमेहग्रहण्यर्शोभगंदरिषु पूजितं ॥ लांगलीत्रिफलालोहचूर्णं दशपलं पृथक् ॥ गुटिकात्रिशतं कुर्याद्भृंगराजरसाप्लुतं॥छायाशुष्कां च तत्रार्द्धगुटिकां भक्षयेत्पुरः॥जीर्णे रसेन रूक्षेण पेयां पूर्वं च भोजयेत्॥यंत्रितो ब्रह्मचर्याद्यैः क्रमेण गुलिकामपि ॥ खादेत्परस्तान्मासस्य भवेत्कामचरः क्रमात् ॥ एवं सर्वाणि कुष्ठानि जयत्यतिबलान्यपि ॥ धीमेधास्मृतियुक्तश्च नीरुक् जीवेत्समाःशतं ॥ वासाऽमृतानिंबवरापटोलव्याघ्रीकरंजोदककल्कपक्वं ॥ सर्पिर्विसर्पज्वरकामलास्रकुष्ठापहं वज्रकमामनंति ॥ त्रिफलात्रिकटुत्रिकंटकारीकटुकाकुंभनिकुंभराजवृक्षैः ॥ सवचाऽतिविषाऽग्निकैः सपाठैः पिचुभागैर्नववज्रदुग्धमुष्ट्या ॥ पिष्टैः सिद्धं सर्पिषः प्रस्थमे-

1 ब्राह्मीतिपाठः

भिः क्रूरे कोष्ठे स्नेहनं रेचनं च ॥ कुष्ठश्वित्रप्लीहवध्मांश्मगुल्मान् ह-
न्यात्कृच्छ्रांस्तन्महावज्रकाख्यं ॥ यतेर्लेहीतकवसा क्षौद्रजातीरसा-
न्विता ॥ कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका ॥ मूत्रैर्विनीता त्रि-
फलारसे वा सिद्धा घृते वांऽभसि केवले वा ॥ रसायनं पथ्यभुजो-
हरिद्रा निहंति पांड्वामयकुष्ठमेहान् ॥ पिबेदमृतवल्या वा स्वरसं यं-
त्रपीडितं ॥ मेध्यं तत्कुष्ठमेहार्शश्छर्दिवातास्रनाशनं ॥ स्थिरकठि-
नमंडलानां कुष्ठानां पोटलैर्हितः स्वेदः ॥ स्विन्नोत्सन्नं विलिखेत्कुष्ठं
तीक्ष्णेन शस्त्रेण ॥ रुधिरागमार्थमथवा शृंगालाबूभिरपहरेद्रक्तं ॥ प्र-
च्छेदल्पं कुष्ठं विरेचयेद्वा जलौकोभिः ॥ ये लेपाः कुष्ठानां युज्यंते नि
र्हृतास्रदोषाणां ॥ संशोधिताशयानां सद्यः सिद्धिर्भवति तेषां ॥ येषु
न शस्त्रं क्रमते स्पर्शेंद्रियनाशनेषु कुष्ठेषु ॥ तेषु निपात्यः क्षारो रक्तं दो
षं च विस्राव्य ॥ लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च ॥ पी
तागदस्य कार्यो विषैः समंत्रागदैश्चानु ॥ स्तब्धानि सुप्तसुप्तान्यस्वेदन-
कंडुलानि कुष्ठानि ॥ कूर्चैर्दंतीत्रिवृताकरवीरकरंजकुटजानां ॥ जात्य
र्कनिंबजैर्वा पत्रैः शस्त्रैः समुद्रफेनेन ॥ घृष्टानि गोमयैर्वा ततः प्रदेहैः
प्रदिह्यानि ॥ आरग्वधः सैडगजः करंजो वासा गुडूची मदनं हरिद्रे ॥
श्र्याह्वः सुराह्वः खदिरो धवश्च निंबो विडंगं करवीरकश्च ॥ ग्रंथिश्च भू-
र्जो लशुनः शिरीषः सलोमशो गुग्गुलुकृष्णगंधे ॥ फणिज्जको वत्सक-
सप्तपर्णपीलूनि कुष्ठं सुमनःप्रवालाः ॥ वचा हरेणुस्त्रिवृता निकुंभो भ
ल्लातकं गैरिकमंजनं च ॥ मनःशिलाले गृहधूमएला कासीसरोध्रार्जु-
नमुस्तसर्जाः॥ इत्यर्द्धरूपैर्विहिताः षडेते गोपित्तपीताः पुनरेव पिष्टाः॥
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णाःप्रदेहा बहुशः प्रयुक्ताः ॥ कुष्ठानि कृ-
च्छ्राणि नवं किलासं सुरेंद्रलुप्तं किटिभं सदद्रुं ॥ भगंदरार्शांस्यपचीं
सपामां हन्युः प्रयुक्ता न चिराज्नराणां ॥ निंबं हरिद्रे सुरसं पटोलं कु-
ष्ठाश्वगंधे सुरदारु शिग्रुः ॥ ससर्षपं तुंबरुधान्यवन्यं चंडा च चूर्णानि

श्रमानि कुर्यात् ॥ तैस्तक्रयुक्तैः प्रथमं शरीरं तैलाक्तमुद्वर्त्तयितुं यतेत ॥ तथाऽस्यकंडूपिडकाः सकोठाः कुष्ठानि शोफाश्च शमं व्रजंति ॥ मुस्तामृतासंगकटंकटेरीकासीसकंपिल्लककुष्ठरोध्राः॥गंधोपलः सर्जरसं विडंगं मनःशिलाले करवीरकत्वक् ॥ तैलाक्तगात्रस्य कृतानि चूर्णान्येतानि दद्यादवचूर्णनार्थं ॥ दद्रूः सकंडूः किटिभानि पामा विचर्चिकाचेति तथा न संति ॥ गंडे महावृक्षभवे निलीनः स्विन्नः कुकूले पुटपाकयुक्त्या ॥ विचर्चिकां सर्षपपिंडकल्को निहंति लज्जामिव रागवेगः ॥ मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः ॥ तथाकरंजप्रपुनाटबीजं कुष्ठान्वितं गोसलिलेन पिष्टं ॥ गुग्गुलुमरिचविडंगैः सर्षपकासीसमुस्तसर्जरसैः ॥ श्रीवेष्टकालगंधैर्मनःशिलाकुष्ठकंपिल्लैः ॥ उभयहरिद्रासहितैश्चार्किकतैलेन मिश्रितैरेभिः ॥ दिनकरकरातितप्तैः कुष्ठं घृष्टं च नष्टं च ॥ मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसं ॥ तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे ॥ तेनालिप्तं सिध्मं सप्ताहाद्घर्मसेविनोऽपैति ॥ मासान्नवं किलासं स्नानेन विना विशुद्धस्य ॥ मयूरकं मंजरितं समूलं दग्ध्वा परिस्राव्य च सप्तकृत्वः ॥ तेनांभसा कंगुलिनोत्थतैलं सिद्धं परं सिध्मनिबर्हणाय ॥ वायसजंघामूलं वमनीपत्राणि मूलकाद्बीजं ॥ तक्रेण सौमवारे लेपः सिध्मापहः सिद्धः॥जीवंती मंजिष्ठा दार्वी कंपिलकःपयस्तुत्थं ॥ एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः ॥ देयः समधूच्छिष्टो विपादिका तेन शाम्यतेऽभ्यक्ता ॥ चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च ॥ सप्तपर्णकरंजार्कमालतीकरवीरजं ॥ मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि ॥ करंजबीजद्विनिशाव्योषैडगजसर्षपाः॥वरा वेल्लं च तैस्तैलं सगोमूत्रैर्विपाचितं ॥ कुष्ठदुष्टव्रणग्रंथिगंडमालाभगंदरान् ॥ विशेषाद्धालकफजान् हंत्यभ्यंगेन वज्रकं ॥ एरंडताक्ष्र्यघननीपकदंबभार्गीकपिल्लवेल्लफलिनीसुरवारुणीभिः ॥ निर्गुंडधरुष्करसुराह्वसुवर्णक्षु-

ग्धाश्रीवेष्टगुग्गुलुशिलाहरितालबिल्वैः ॥ तुल्यं स्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रं ॥ अतिशयितवज्रकगुणं श्वित्रार्शोग्रंथिमालाघ्नं ॥ कनकक्षीरीशैलाभार्ङ्गीदंत्याः फलानि मूलंच ॥ जातिप्रवालसर्षपलशुनविडंगं करंजत्वक् ॥ सप्तच्छदार्द्रपल्लवमूलत्वक्निंबचित्रकास्फोताः ॥ गुंजैरंडकबृहतीमूलकसुरसार्जकफलानि ॥ कुष्टं पाठा मुस्तं षड्ग्रंथा तुंबरुर्वचा मूर्वा ॥ एडगजकुटजशिग्रुत्र्यूषणभल्लातकक्षवकाः ॥ हरितालमवाक्पुष्पी तुत्थं कंपिल्लकोऽमृतासंगः ॥ सौराष्ट्रीकासीसं दार्वीत्वक्स्वर्जिकालवणं ॥ एतैस्तैलं तैलं कटुतैलं वा चतुर्गुणे मूत्रे ॥ करवीरमूलपल्लवतोयेन विपाचीतं जयति ॥ कटुकालाबुन्यस्तं नित्याभ्यंगेन वातकफकुष्टं ॥ दद्रूमंडलकोठक्रिमिपामविचर्चिकाः सुतरां ॥ सिक्थकतुत्थकगुग्गुलुसिंदुररसांजनैः कटुकतैलं ॥ पामाकिटिभविचर्चिषु साधितमभ्यंजने श्रेष्ठं ॥ शैलेयकंपिल्लकपर्दिकाख्यसुराष्ट्रजासर्जरसोपलानि ॥ शिला च चूर्णो नवनीतयुक्तः कुष्ठे स्रवत्यभ्यधिकं प्रशस्तः ॥ एडगजकुष्ठसैंधवसिद्धार्थविडंगकांजिकैर्लिप्तं ॥ क्रिमिपामसिध्मदद्रूमंडलकुष्ठं शमं याति ॥ लाक्षाव्योषं प्रपुनाटं च बीजं सश्रीवेष्टाः कुष्ठसिद्धार्थकाश्च ॥ तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो दद्रूघ्नो मूलकोत्थं च बीजं ॥ दूर्वाऽभयासैंधवचक्रमर्दकुठेरकाः कांजिकतक्रपिष्टाः ॥ त्रिभिः प्रलेपैरपि बद्धमूलां दद्रूं च कंडूं च विनाशयंति ॥ मनःशिलात्वक्कुटजं सकुष्टं सलोमशः सैडगजः करंजः ॥ ग्रंथिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥ पलाशनिर्दाहरसेन वाऽपि कर्षोन्मितान्याढकसंमितेन ॥ दर्वीप्रलेपं प्रवदंति लेपमेतत्परं कुष्ठनिषूदनाय ॥ एलाचित्रकनिंबं वृषकं कुरुविंदनागरार्कं च ॥ चूर्णीकृतमप्ताहं भावयितव्यं पलाशस्य ॥ क्षारेण गवां मूत्रशृतेन तेनास्य मंडलान्याशु ॥ भिद्यंते विलं यंति च लिप्तान्यर्काभितप्तानि ॥ मांसी मरिचं लवणं रजनी तगरं सुधा गृहाधूमः ॥ मूत्रं पित्तं क्षारः सपलाशः

कुष्ठनुल्लेपः ॥ मुस्तं त्रिफला मदनं करंज आरग्वधः कलिंगयवाः ॥ दार्वी सप्तपर्णा स्नानं सिद्धार्थकं नाम ॥ एष कषायो वमनं विरेचनं वर्णकस्तथोद्वर्षः ॥ त्वग्दोषकुष्ठशोफप्रबाधनः पांडुरोगघ्नः ॥ करवीरनिंबकुटजाच्छम्याकाचित्रकाच्च मूलानां ॥ मूत्रे दार्वीलेपः क्वाथो लेपेन कुष्ठघ्नः ॥ श्वेतकरवीरमूलं कुटजकरंजात्पलं त्वचो दार्व्यः ॥ सुमनः प्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ शैरीषी त्वक्पुष्पं कार्पास्या राजवृक्षपत्राणि ॥ पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥ दार्वी रसांजनस्य च निंबपटोलस्य खदिरसारस्य ॥ आरग्वधवृक्षकयोस्त्रिफलायाः सप्तपर्णस्य ॥ इति षट् कषाययोगाः कुष्ठघ्नाः सप्तमश्च तिनिशस्य ॥ स्नाने पाने च हितास्तथाऽष्टमश्चाश्वमारस्य ॥ आलेपनं प्रघर्षणमवचूर्णनमेत एव च कषायाः ॥ तैलघृतपाकयोगैश्चेष्यंते कुष्ठशांत्यर्थं ॥ सर्षपकरंजकोशातकानि तैलान्यथेंगुदीनां च ॥ कुष्ठेषु हितान्याहुस्तैलं श्रेष्ठं च खदिरसारस्य ॥ शीताः प्रदेहसेकास्तिक्तं सर्पिः सिराविरेकश्च ॥ विशरणदाहक्लेदे विस्फोटे चर्मदलने च ॥ शीर्णनखरोममांसः कृमिमानन्नांभसी त्यजेत्कुष्ठी ॥ सद्योदुग्धं दुग्धं षण्मासात्कारभं जयेत्समधु ॥ एडगजः सविडंगो मूलान्यारग्वधस्य कुष्ठानां॥ उद्दालनश्च दंता गोश्च वराहोष्ट्रदंताश्च ॥ रजनीद्वयं कृमिघ्नं प्रपुनाटं राजवृक्षमूलं च ॥ कुष्ठोत्सादनमग्र्यं सपिप्पलीपाकलं योज्यं ॥ शिवत्राणां सविशेषं योक्तव्यं सर्वतो विशुद्धानां ॥ उत्सन्नेषु च लेपाः सवर्णकरणास्तथाऽभ्यंगाः ॥ पक्षात्पक्षाच्छर्दनान्यभ्युपेयान्मासान्मासाच्छोधनान्यप्यधस्तात् ॥ शुद्धिर्मूर्ध्नि स्यात्त्रिरात्रात्त्रिरात्रात्षष्ठे षष्ठे मास्यसृङ्मोक्षणं च ॥ यो दुर्वांतो दुर्विरिक्तोऽथवा स्यात्कुष्ठी दोषैरुद्धतैर्बाध्यतेऽसौ ॥ निःसंदेहं यात्यसाध्यत्वमेवं तस्मात्कृच्छ्रान्निर्हरेदस्य दोषान् ॥ व्रतदमशमसेवात्यागशीलाभियोगो द्विजगुरुसुरपूजा सर्वसत्त्वेषु मैत्री ॥ जिनेजिनसुततारा[1]भास्कराराधनानि प्रकटितमलपापं कुं-

१ शिवशिवसुत इतिपाठो ऽष्टांगहृदये

ष्ठमुन्मूलयंति ॥ ॥ इति कुष्ठचिकित्सितं नामैकविंशोऽध्यायः ॥२१॥

अथातः श्वित्रक्रिमिचिकित्सितं व्याख्यास्यामः ॥ कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वं ॥ श्वित्रमतस्तच्छांत्यै यतेत दीप्ते यथा भवने ॥ मद्यंत्या सन्नायस्या सुरभ्या प्रग्रहस्य च ॥ शतं पलानां प्रत्येकं वरायास्त्वाढकत्रयं ॥ व्याघ्रीवल्हिकमाचीवत्सकखदिरार्कमूलदंतीद्वयत्रा: ॥ सनिशाद्वया दशपला: क्राथेऽमीषां क्षिपेत्पिष्ट्वा ॥ बीजं करंजेंगुदिशिग्रुनिंबाव्हीलीसनीलोत्पलचंद्ररेखाः ॥ श्यामाकिरातं कटुकत्रयं च पंचाढकं तत्र च पंचगव्यात् ॥ शमयत्यचिरेण घृतं मृदुहुतवहसाधितं महानीलं ॥ न किलासमेव केवलमपि च व्रणगुह्यरोगवल्मीकान् ॥उन्मादापस्मारावर्शोविद्रधिशिरोरोगान् ॥ गलगंडगुल्मगंडानर्बुदशोफप्रमेहगलरोगान् ॥ सविसर्पशोषपवनव्याधीन्विषमज्वरान् हन्यात् ॥ संशोधनं विशेषात्पीतस्नेहस्य योजयेदनु च ॥ श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥ तं पीत्वाऽभ्यक्ततनुर्यथाबलं सूर्यपादसंतापं॥सेवेद्विरिक्तश्च त्र्यहं त्र्यहं पिपासुः पिबेत्पेयां ॥श्वित्रेंऽगे ये स्फोटा जायंते कंटकेन तान् भिंद्यात्॥स्फोटेषु विस्रुतेषु प्रातः प्रातः पिबेत्पक्षं॥ मलयूमसनप्रियंगुं शतपुष्पां चांभसा समुत्क्वाथ्य॥पालाशं वा क्षारं यथाबलं फाणितोपेतं ॥ वितुषावल्गुजबीजाच्चूर्णं गोवारिभावितादृहुशः ॥ मूलक्वाथेन पिबेत्कलितरुक्तमालमदनफल्गूनां ॥ पीते किलासी तिलतैलदिग्धो दिने दिने स्यादविपादसेवी ॥ जीर्णे च तक्रास्नुनकोद्रवाशी स्फोटोद्भवायैष विधिस्त्रिरात्रं ॥ विध्वाऽन्येद्युः स्फोटकान्कंटकैस्तान्*वस्तीसोभिघृष्याशुकवर्त्या॥लिंपेत्कामं लेपनाद्वेदनायां लेपे योज्यःशंखनाभिर्जलेन॥व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रककुष्टैः ॥ कोलतुल्यगुलिकाऽर्द्धविषांशाः श्वित्रकुष्ठशमनो वर-

१ मलयमितिपाठः

लेपः ॥ गव्यं मूत्रं चित्रकव्योषयुक्तं सर्पिः कुंभे संस्थितं क्षौद्रमिश्रं ॥ पक्षादूर्ध्वं श्वित्रिणा पेयमेतत्कार्यं चास्मै कुष्ठदृष्टं विधानं॥ मार्कवमथवा खादेद्धृष्टं तैलेन लोहपात्रस्थं ॥ बीजकशृतं च दुग्धं तदनु पिबेच्छ्वित्रनाशाय ॥ पूतीकार्कव्याधिघातस्नुहीनां मूत्रैः पिष्टाः पल्लवा जातिजाश्च ॥ घ्नंत्यालेपाच्छ्वित्रदुर्नामदद्रूपामाकोठान्दुष्टनाडीव्रणांश्च ॥ द्वैपं दग्धं चर्म मातंगजं च श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ॥ पूतिः कीटो राजवृक्षोद्भवेन क्षारेणाक्तः श्वित्रमेकोऽपहंति ॥ अक्षतैलद्रुता लेपः कृष्णसर्पोद्भवा मषी ॥ शिखिपित्तं तथा दग्धं ह्रीबेरं वा तदाप्लुतं ॥ उपोषितायान्नकालांस्त्रीन्श्वेतकृकवाकवे ॥ यष्ट्याह्वकुष्ठैडगजबीजचूर्णं घृतान्वितं ॥ दद्यात्तस्यपुरीषेण स्विन्नमुद्दाल्यलेपयेत् ॥ मासं हंत्याशु तच्छ्वित्रं विशेषाद्गुल्यसंश्रितं॥ लेपः पटुवेल्लशिखाकासीसं रोचनाकनकपुष्पी ॥ गोपित्तयुक्तमथवा चपलांजनयुग्मलोहरजः ॥काकोदुंबरिकावासावल्गुजचित्रकाः सगोमूत्राः॥कदलीक्षारयुतं वा खरास्थिदग्धं सगोरुधिरं ॥ नीलोत्पलं सकुष्ठं ससैंधवं हस्तिमूत्रपिष्टं वा ॥ हस्तिमदाध्युषितो वा मालत्याः कोरकक्षारः॥ सिद्धार्थकाबृहत्यौ करंजकोशातकीफलं गुंजा ॥ शुकनासा सगवाक्षी स्वर्णक्षीरी निकुंभश्च॥ लांगलिकाह्वयमारस्तिल्वकभल्लातकाश्च मूत्रं च॥ मुस्तास्नुही सहिंस्रासुवर्णशकलाफलोपेता ॥ मूलकबीजं व्योषं पीलु विडंगाग्निकर्णिकाश्च ॥पिचुमंदजातिकिसलयबाकुचिकातुत्थकुष्ठानि॥ कटुरोहिणी मनोह्वा त्रिफला च सुकल्किता गवां मूत्रे ॥ गजहयखरमूत्राणां पात्रत्रितयं स्नुगर्कदुग्धाभ्यां ॥ द्वौ कुडवाविह दद्यात्सर्षपतैलाच्चतुर्थी च॥ दर्वीलेपं सिद्धा रसक्रिया मूत्रिका नाम ॥ श्वित्रं घृष्टं लिप्तं त्रीनालेपांस्तथा न लंघयति ॥ मषतिलकचर्मकीलग्रंथ्यर्बुदसर्वकुष्ठघ्नी ॥ कुडवोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ॥मूत्रेण गवां पिष्टः सव-

---

१ पूतिःकीटो वर्षाकालोद्भवः पिदिदिर्कीतलोकप्रसिद्धः ॥

र्णकरणं परं श्वित्रे ॥ क्षारे सुदग्धे गजलिंडजे च गजस्य मूत्रेण परि-
स्रुतेन ॥ द्रोणप्रमाणे दशभागयुक्तं दत्वा पचेद्बीजमवल्गुजानां ॥ श्वि-
त्रं जयेच्चिक्कणतां गतेन तेन प्रलिप्तं बहुशः प्रघृष्टं ॥ कुष्टं किलासं
तिलकालकं वा यद्वा व्रणे स्यादधिमांसभूतं ॥ भल्लातकद्वीपि-
सुधार्कमूलगुंजाफलत्र्यूषणशंखचूर्णं ॥ कुष्टं सतुत्थं लवणानि पंच
क्षारद्वयं लांगलिकां च पिष्ट्वा ॥ स्नुगर्कदुग्धैर्घनमायसस्थं शला-
कया तद्विदधीत लेपं ॥ कुष्टे किलासे तिलकालकेषु मषेषु दुर्ना-
मसु चर्मकीले ॥ शुध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तू-
नां ॥ श्वित्रं कस्य चिदेव हि प्रशाम्यति क्षीणपापस्य ॥ स्निग्धे स्वि-
न्ने गुडक्षीरमध्वाज्यैः कृमिणोदरे ॥ उत्क्लेशितकृमिकफे शर्वरीं तां सु-
खोषिते ॥ सुरसादिगणं मूत्रे क्वाथयित्वाऽर्द्धवारिणि ॥ तं कषायं क-
णागालकृमिजित्कल्कयोजितं ॥ सतैलस्वर्जिकाक्षारं युंज्याद्बस्तिं त-
तोऽहनि ॥ तस्मिन्नेव निरूढं तं पाययेत विरेचनं ॥ त्रिवृत्कल्कं फल-
कणाकषायलुडितं ततः ॥ ऊर्ध्वाधः शोधिते कुर्यात्पंचकोलयुतं क्रमं
॥ कटुतिक्तकषायाणां कषायैः परिषेचितं ॥ काले विडंगतैलेन तत-
स्तमनुवासयेत् ॥ शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेषु तु ॥ उद्रिक्ततिक्त
कटुकमल्पस्नेहं च भोजनं ॥ विडंगकृष्णामरिचपिप्पलीमूलशिग्रुभिः
॥ पिबेत्सस्वर्जिकाक्षारैर्यवागूं तक्रसाधितां ॥ रसं शिरीषकिणिहीपारि-
भद्रककेंबुकात् ॥ पलाशबीजपत्तूरपूतिकाद्वा पृथक् पिबेत् ॥ सक्षौद्रं
सुरसादीन्वा लिह्यात्क्षौद्रयुतान्पृथक् ॥ बहुकृत्वोऽश्वविट्चूर्णं विडंग-
क्वाथभावितं ॥ कृमिमान्मधुना लिह्याद्भावितं वा वरारसैः ॥ शिरोगतेषु
कृमिषु चूर्णं प्रधमनं च तत् ॥ आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमि-
श्रितैः ॥ पक्त्वा पूपलिकां खादेद्धान्याम्लं च पिबेदनु ॥ पंचकोलं
सलवणमसांद्रं तक्रमेव वा ॥ नीपमार्कवनिर्गुंडीपल्लवेष्वप्ययं विधिः ॥

१ शतकृत्वइतिपाठः

विडंगचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान्प्रकल्पयेत् ॥ विडंगतंदुलैर्युक्तमर्द्धांशै-रातपे स्थितं ॥ दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ॥ सुराह्व-सरलस्नेहं पृथगेवं च कल्पयेत् ॥ तिल्वकोद्दालकपले त्रिवृच्छ्यामे तदर्द्धतः ॥ दंतीद्रवंत्यावर्द्धेन तदर्द्धे चव्यचित्रकौ॥ पिष्ट्वा विडंगयूषेण-तेन भावितपीडितात् ॥ तैलं प्रस्थं तिलात्साध्यं क्रमिघ्नाद्विगुणे रसे ॥ तच्छोधनं पिबेत्काले विदध्याच्चानुवासनं ॥ कोशातकी करंजो वा स र्षपस्नेहकल्पनं ॥ कृत्वा तेनैव विधिना पाययेदुदरक्रमिं ॥ पुरीषजेषु सुतरां दद्याद्बस्तिविरेचने ॥ शिरोविरेकं वमनं शमनं कफजन्मसु ॥ रक्तजानां प्रतीकारं कुर्यात्कुष्ठचिकित्सितात् ॥ इंद्रलुप्तविधिश्चात्र वि-धेयो रोमभाजिषु ॥ क्षीराणि मांसानि घृतं गुडं च दधीनि शाकानि च पर्णवंति ॥ समासतोऽम्लान्मधुरान् रसांश्च क्रमीन् जिघांसुः परिव-र्जयेत ॥ ॥ इति श्वित्रक्रमिचिकित्सितं नाम द्वाविंशोऽध्यायः ॥२२॥

अथातो वातव्याधिचिकित्सितं व्याख्यास्यामः ॥ सर्वेषु केवला-निलविकारेष्वंतर्बहिः स्नेहस्वेदौ सलवणोपनाहौ निवातं स्थानं प्राव-रणानि दशमूलक्काथसिद्धा महास्नेहप्रगाढाः स्निग्धदध्यम्ला नागरपि-प्पलीतीक्ष्णग्राम्यानूपौदकशिरःपिशितरसाः पयांसि यूषाः प्रीणनानि चान्नानि ॥ तैरेव च मांसैर्महास्नेहसंसृष्टैस्तदक्तानामभीक्ष्णं पिंडादि-स्वेदाः ॥ अपिच ॥ कोलकुलत्थामरतरुयवसंमाषातसीवचाकुष्ठं ॥ रा स्नातैलफलानि च वातजिदुत्कारिका कोष्णा ॥ बिडालनकुलोष्ट्रशृ-गालादिचर्मभिर्बंधः ॥ स्निग्धा बस्तयो नावनानि च प्रयोज्यानि ॥ दो षोपक्रमणीयं चेक्षेत ॥ स्निग्धस्विन्नस्य हि तोदभेदनायामशूलादयो वातविकाराः शीघ्रमुपशाम्यंति॥स्नेहश्च धातून् पुष्णाति बलं च देहे ज-नयति॥तस्मात्पुनः पुनः स्नेहस्वेदौ शीलयेत् ॥ तन्मृदूकृते च कोष्ठे नाव तिष्ठंत्यनिलामयाः॥यदि तु सदोषत्वान्न निवर्त्तंते॥ ततः सर्वशरीरगते-ऽपि वायौ विशेषतः पक्काशयाश्रिते मृदु स्नेहविरेचनं तिल्वकसर्पिः सा

तल्लाघृतमैरंडतैलं वा क्षीरेण दद्यात् ॥ एवं हि विशुद्धस्रोतसोऽनावृतः पवनो विचरन्नाशु शांतिमेति ॥अपिच॥स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलाश्रिताः ॥ स्रोतोबंधाचलं रुंध्युस्तस्मात्तमनुलोमयेत् ॥ अथ दुर्बले विरेच्ये निरूहं पाचनीयदीपनीयद्रव्ययुक्तमेवं विधं च भोज्यं॥ भोज्ययुक्तं वा स्रंसनमवचारयेत् ॥ विशुद्धस्य च समिद्धेऽग्नावसकृत्स्नेहस्वेदौ स्वाद्वम्ललवणं चान्नपानं ॥ एवमप्यनिवृत्ताववपीडकस्नेहान् बस्तिकर्म च प्रयोजयेत्॥आमाशये तु कृतवमनस्य षड्धरणं चूर्णं[1] ॥परमतस्तु यथार्हं स्नेहादीन् ॥ नाभिदेशमाश्रिते बिल्वशलाटुभिः सिद्धान् मत्स्यान् ॥ अशेषकोष्ठाश्रिते पुनरर्शोग्रहणीविहितमाममलपाचनं क्षारप्रयोगानंतरगुल्मोपक्रमं च युंजीत ॥हृदयस्थे अंशुमत्या शृतं पयः ॥ श्रोत्रादिगते शिरोगते च विशेषेण स्नैहिकं नस्यधूमं शिरोबस्तिमर्दनालेपान्यथास्वं च स्रोतसां प्रीणनं ॥ त्वचि स्थितेऽभ्यंगस्वेदनिर्वातानि ॥ रक्ते शीतप्रदेहाविरेकरक्तमोक्षाः ॥ मांसमेदसोर्विरेकास्थापनशमनानि ॥ अस्थिमज्ज्ञोरंतर्बहिः स्नेहाः ॥ शुक्रप्राप्ते हर्षः शुक्रलं चान्नपानं ॥ विबद्धे तु शुक्रे विरेचनं ॥ ततो निर्बंधेऽनंतरोक्तां च क्रियां कुर्यात्पुत्रकामीयं चेक्षेत ॥ शुष्यति गर्भे बालेषु च यष्टिमधुककाश्मर्यफलसारिवाशर्कराघृतं पयो दद्यात् ॥ मांसादस्यमांसरसांश्च बृंहणीयस्नेहयुक्तान् ॥ सिरास्नावसंधिप्राप्तेऽभ्यंगमर्दनस्वेदोपनाहबंधाग्निकर्माणि ॥ संकोचे माषसैंधवसाधितं[2] तैलमभ्यंगः॥ स्वापे बहुशो रक्तावसेचनं न त्वंगम्लानौ शोषभयात् ॥ स्रुतरक्तस्य तैललवणागारधूमैः प्रदेहाः ॥ अथापतानकिनमस्रस्ताक्षमस्तब्धलिंगूलमस्वेदनमवेदनमप्रलापिनमखट्वाघातिनमबहिरायामिनं चोपक्र-

[1]पूर्वोक्तं तच्च यथा॥ दार्वीकलिंगकटुकाऽनिविषाऽग्निपाठामूत्रणे सुक्ष्मरजसो धरणप्रमाणा ॥ पीता जयंतिगदजोदरकुष्ठमेहकोष्ठानिलाढ्यपवनग्रहणीप्रदोषानिति ॥ धरणं पलस्यदशमोभागः ॥ [2]मांससैंधवसाधितमितिपाठः

मेत ॥ तत्र प्रागेव स्निग्धस्विन्नांगे व्योषविडंगश्वेतमरिचैरन्यैश्च तीक्ष्णैः शिरोविरेचनैः स्रोतोविशुद्धये कृतनस्यमनंतरं चैनं विदार्यादिकाथमांसरसक्षीरदधिविपक्वं सर्पिरच्छं पाययेत् ॥ तथा नातिमात्रमनिलः प्रसरति ॥ ततो भद्रदार्वादिवर्गं वातघ्नमाहृत्य सयवकोलकुलत्थं सानूपमांसं च निःक्वाथ्य तत्कषायेणाम्लक्षीरवचामधुरवर्गप्रतीवापं महास्नेहं विपचेत् ॥ तमपतानकिनमभ्यंगपरिषेकावगाहनपानभोजनानुवासननावनेषु विदध्यात् ॥ बलीयसि च वाते सुखोष्णकरीषपूर्णे कूपे निषण्यादामुखं ॥ तप्तायां वा [1]रथकारमुख्यां चुल्यां शिलायां वा सुरापरिषिक्तायां शाययेत्पलाशावच्छन्नं स्वेदयेद्वा पिंडेन ॥ मूलकोरुबूकस्फूर्जार्जकार्कसप्तलाशंखिनीस्वरससिद्धं वा तैलमभ्यंगादिषु प्रयोज्यं ॥ अभुक्तवता पीतमम्लं दधि मरिचवचायुक्तमाक्षेपकमपहंति ॥ तिलपीडनोपकरणद्रव्याण्यनल्पं कालं तैलपरिपीतान्यवक्षुद्य महति कटाहे पानीयेनाप्लाव्य क्वाथयेदास्नेहापगमात् ॥ ततस्तं स्नेहमंभस उपरिष्टात्पाणिशरावयोरन्यतरेणादाय वातघ्नौषधदत्तप्रतीवापं स्नेहपाककल्केन पचेत् ॥ एतदणुतैलं सर्ववातविकारहरं ॥ अणुतैलद्रव्येभ्यो निष्पद्यत इत्यणुतैलं ॥ वेगांतरेषु च तीक्ष्णानवपीडान्प्रधमनानि चासकृद्दद्यात् ॥ तथाऽनल्पश्लेष्मापगमेन [2]श्वसनविमोक्षात्संज्ञा पुनःपुनर्नोपरुध्यते ॥ कुक्कुटकुलीरशिशुमारवराहवसाः पाययेत् ॥ यवकोलकुलत्थमूलकदधिघृततैलसिद्धां च यवागूं ॥ सर्वाकारं च गतवेगः स्नेहविरेचनास्थापनानुवासनानि सेवेत ॥ त्रिवृद्दंतीसुवर्णक्षीरीशंखिनीविडंगत्रिफलानामक्षसमाः कल्का बिल्वमात्रस्तिल्वकमूलानां त्रिफलारसदधिपात्रे द्वे घृतप्रस्थमेकं सर्वमेकध्यं प्रतिसंसृज्य विपचेत् ॥ एतत्तिल्वकसर्पिः स्नेहविरेचनमनिलरोगेषु ॥ तिल्वकस्नेहविधिरेव वाऽशोकरम्यकयो-

---

१ रथकारमुख्यांचुल्यामित्यत्रांगारचुल्यामितिपाठः ॥ २ प्राणनाड्यो हृदाश्रिताः श्वसना इत्युच्यंते ॥

ष्टव्यः ॥ शुद्धवातापतानकविधानमेतत् ॥ संसृष्टे यथासंसर्गः ॥ सकफे तु वाते तुंबुरुफलाभयाहिंगुपुष्करमूललवणत्रयचूर्णं यवक्काथेन हृत्पार्श्वार्तिहरं पिबेत् ॥ हिंगुनागरदाडिमाम्लवेतससौवर्चलचूर्णं वा ॥ मुस्तपिप्पलीनागरातिविषाबिभीतकभार्ङ्गीचूर्णं वा मद्येनोष्णांबुना वाऽपतंत्रकश्वासहृद्रोगहरं ॥ सौवर्चलाभयाव्योषसिद्धं च सर्पिः ॥ रास्नाऽम्लवेतससैंधववचाहरीतकीकल्कश्च घृतभृष्टो भक्षितः ॥ शुंठीचित्रकभार्ङ्गीशुकनासानिचुलमहावल्लीबृहतीद्वयकाकमाचीपुनर्नवैरक्षमात्रैर्घृतप्रस्थं साधयेत् ॥ तत्पीतं परमपतंत्रकश्वासहिध्माहृद्रोगघ्नं ॥ पथ्याशतार्द्धकल्केन वा सौवर्चलपलद्वययुक्तं चतुर्गुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ पीतमपतंत्रकघ्नं ॥ नचास्य शोधनार्थं बस्तयस्तीक्ष्णाः प्रयोज्याः ॥ हृद्रोगचिकित्सितं चेक्षेत ॥ अंतर्बहिरायामावेक.यामवत्साधयेत् ॥ तैलद्रोण्यां चात्र शयनं ॥ अंतरायामश्चैतयोर्घोरतरः ॥ अपिच ॥ विवर्णदंतवदनः स्रस्तांगो नष्टचेतनः ॥ प्रस्विद्यंश्च धनुःकंपी दशरात्रं न जीवति ॥ वेगेष्वतोन्यथा जीवेन्मंदेषु विनतो जडः ॥ खंजः कुणिः पक्षहतः पंगुलो विकलोऽथवा ॥ हनुस्रंसमप्यर्दितवच्चिकित्सेत् ॥ स्वेदयित्वा च हनू स्तब्धौ स्रस्तौ च स्वस्थानमानीय पाणिभ्यां पीडयेत् ॥ विवृतास्ये चिबुकं चोन्नामयेत् ॥ संवृतास्ये च नामयेत् ॥ जिह्वास्तंभे सामान्योक्तो विधिरेकायामे च ॥ तथा महातृणपंचमूले विदार्यादिजीवनीयानि मद्यमांसान्यौदककंदांश्च द्विगुणोदके क्षीरद्रोणे क्षीरशेषं निःक्वाथ्य परिस्राव्य तैलप्रस्थेनोन्मिश्र्य पुनरधिश्रयेत् ॥ क्षीरानुगमे चावतार्य शीतं मंथयेत् ॥ ततः स्नेहमादाय पूर्ववद्विपचेत् ॥ एतत्क्षीरतैलं पानाभ्यंगादिषु विधेयं ॥ तैलं हितमिदमेव क्षीरघृतमक्षितर्पणं ॥ बिल्वकफलसिद्धक्षीरदध्ना च सह मांसरसान्कल्पयेत् ॥ यथोक्ताश्च यवागूः स्निग्धाश्च नस्यधूमकवलग्रहाः प्रयोज्याः ॥ कृष्णभूमिकेदारं रोहिणीकाष्ठैर्नातिशुष्कैर्दाहयेत् ॥ उपलिप्य

च गोमयेन पुनः खदिरकाष्ठैर्दग्ध्वा तद्भस्मापनीय तत्र शीतिभूते तैलं निषेचयेत् ॥ उषितं निशां खानयेत् ॥ तामनुगततैलां मृत्तिकामादाय पंचमूलेन सह क्काथयेत् तमपि क्काथपरिस्रुतमष्टगुणेन पयसा तैलावशेषं पाचयेत् ॥ एतदप्यणुतैलं नावनात्सर्ववातव्याधिहरं ॥ तद्वच्च पंचमूलकाष्ठैर्दग्ध्वा भस्मापनीय विदार्यादिसिद्धेन तैलेन शतशो निषिच्य पूर्ववन्मृदमादायोष्णोदकवति कटाहेऽभ्यासिंच्य तैलं पाणिना पिचुना वा गृहीत्वा व्याधिहरौषधक्काथमांसरसक्षीराम्लभागसहस्रेण सहस्रपाकं साधयेद्यावत्कालेन शक्नुयात्पक्तुं ॥ प्रतिवापश्चात्र हैमवत दक्षिणापथकाश्वगंधावातघ्नानि च द्रव्याणि॥सिद्ध्यति चास्मिञ्छंखानाध्मापयेत्॥दुंदुभीनूवादयेत् ॥ब्राह्मणानध्यापयेद्भोजयेच्च ॥ततःसिद्धं नस्यपानाभ्यंगबस्तिषु प्रयुंजीत॥एतत्सहस्रपाकमनिवार्यवीर्यं तैलं ॥एवं भागशतपक्वं शतपाकमभीक्ष्णंच स्वेदयेत्॥ततः स्निग्धस्विन्ने श्लक्ष्णस्य मृदुनश्चर्मणो वाससो वा चतुरंगुलविस्तृताभिः पट्टिकाभिर्वक्रीभूतान्प्रदेशान्यगृह्नन्सर्वतो वेष्टयेद्बध्नीयात्॥निशिबद्धान्दिवा मुंचेद्दिवा वा निशि॥मोक्षांते चोत्कारिकाभिः सुस्निग्धाभिर्वातघ्नप्रकृताभिः स्वेदयेत् ॥ शोभांजनकतर्कारीद्वयसरलार्जुनकरंजाढकीगोक्षुरकैर्लेपोन्मर्दनसकान् कुर्यात् ॥ व्यायामैश्च विविधैर्मेदः क्षपयेत् ॥ स्थलान्युल्लंघयेत् प्रतिस्रोतः सरितमव्यालां तरेत् ॥ एवमूरुग्रहो शुष्के श्लेष्मणि प्रशाम्यतीति ॥ भवति चात्र ॥ सहचरं सुरदारुसनागरं क्कथितमंभसि तैलविमिश्रितं ॥ पवनपीडितदेहगतिः पिबन् द्रुतविलंवितगो भवतीच्छया ॥ रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करं ॥ पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परं ॥ निंबामृतावृषपटोलनिदिग्धिकानां भागान्पृथक् दशपलानि पचेद्घटेऽपां ॥ अष्टांशशेषितरसेन पुनश्च तेन प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥पाठाविडंगसुरदारुगजोपकुल्याद्विक्षारनागरनिशामिशिचव्यकुष्ठैः॥तेजोवतीमरिचवत्सकदीप्यकाग्निरोहिण्यरुष्क

श्वचाकणमूलयुक्तैः ॥ मंजिष्ठयाऽतिविषया विषया यवान्या संशुद्ध-गुग्गुलुपलैरपि पंचसंख्यैः ॥तत्सेवितं विधमति प्रबलं समीरं संध्यस्थि-मज्जगतमप्यथ कुष्ठमीदृक् ॥ नाडीव्रणार्बुदभगंदरगंडमालाजत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ॥ यक्ष्मारुचिश्वसनपीनसकासशोफहृत्पांडुरोगमदविद्रधिवातरक्तं ॥ द्रोणेऽभसः पचेद्भागान्दशमूलाच्चतुःपलान् ॥ यवकोलकुलत्थानां भागैः प्रस्थोन्मितैः सह ॥पादशेषे रसे पिष्टैर्जीवनीयैः सशर्करैः ॥ तद्वत्खर्जूरकाश्मर्यद्राक्षाबदरफल्गुभिः॥सक्षीरैः सर्पिषः प्रस्थः सिद्धः केवलवातनुत् ॥ योज्यो निरत्ययः पाननस्याभ्यंजनबस्तिषु ॥ बलाबिल्वशृते क्षीरे घृतमंडं विपाचयेत् ॥ तस्य शुक्तिः प्रकुंचो वा नस्यं वाते शिरोगते ॥ तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा॥ प्रयोज्या विधिनाऽनेन नस्ये पाने च शस्यते॥जीर्णं पिण्याकं पंचमूलं पृथक् च क्वाथ्यं क्वाथाभ्यामेकतस्तैलमाभ्यां॥क्षीराद्दष्टांशं पाचयेत्तेन पानाद्वाता नश्येयुः श्लेष्मयुक्ता विशेषात् ॥ समूलशाखस्य सहाचरस्य तुलां समेतां दशमूलतश्च ॥ अभीरुमूलाच्च तुलार्द्धमेतदष्टावशेषं विपचेद्वहेऽपां ॥तत्र सेव्यनखकुष्ठहिमैलास्पृक्प्रियंगुनलिकांबुशिलाजैः ॥ लोहिनानलदलोहसुराह्वैः कोपनामिशितुरुष्कनतैश्च ॥ तुल्यं क्षीरं पालिकैस्तैलपात्रं सिद्धं कृच्छ्राच्छीलितं हंति वातान्॥ कंपाक्षेपस्तंभशोषार्तियुक्तान् गुल्मोन्मादौ पीनसं योनिरोगान् ॥ केतकिमूलबलाऽतिबलानां यद्वहलेन रसेन विपक्वं ॥ तैलमनल्पसुखोदकमिश्रं मारुतमस्थिगतं तदपोहेत् ॥तुलां लशुनकंदेभ्यस्तुलार्द्धं जांगलात्पलात् ॥ दशमूलाच्च विपचेद्भागान्पंचपलान्पृथक् ॥ तोयार्मणेन पादस्थे समं तैलं पयो दधि ॥ तत्र दद्यात्पलांशांश्च रास्नामधुकजीवकान् ॥ मिशिरस्थिरमहामेदाचपलातिबलाबलाः ॥ काकोली पौष्क-

१ अष्टांगहृदये तु ॥ विशेषेण प्रयोक्तव्या केवले मातरिश्वनीतिपाठः ॥

रं मूलमश्वगंधा च साधितं ॥ तत्परं वातरोगघ्नं गुल्माटोपार्तिशूलजित् ॥ भग्नजर्जरितांगानां पथ्यमग्नेश्च दीपनं ॥ समूलजालं विपचेत्प्रसारणीं तुलोन्मितां पादघृते घटेऽम्भसः ॥ पृथक् सतैलं दधि तत्समं क्षिपेत्समं च ताभ्यां विजयां ततः पचेत् ॥ प्रसारणीजीवकसिंधुजन्मयष्ट्याह्वरास्नाऽग्निकयावशूकैः ॥ सग्रंथिकाख्यैर्द्विपलैः सुपिष्टैर्भल्लातकानां दशकैस्त्रिभिश्च ॥ शुंठीपलत्रययुतैर्विनिहंति पानस्यादिभिस्तदखिलान्मरुतो विकारान् ॥ कुष्ठप्रमेहहृतनाममनोविकारश्वासास्थिभंगजठरक्रिमिबीजदोषान् ॥ पचेत्सहाचरतुलां जलद्रोणचतुष्टये ॥ द्रोणशेषे समक्षीरे तत्र तैलाढकं पचेत् ॥ सहाचरस्य मूलानां कल्कितैर्दशभिः पलैः ॥ अथवा नतषड्ग्रंथास्थिराकुष्ठसुराह्वयात् ॥ सैलानलदशैलेयशताह्वारक्तचंदनात् ॥ सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ॥ भेडस्य संमतं तैलं तत्कृच्छ्रानिलामयान् ॥ वातकुंडलिकोन्मादभूतापस्मारवर्ध्म च ॥ गुल्महृद्रोगदुर्नामयोनिरोगांश्च नाशयेत् ॥ श्वदंष्ट्राऽश्वाकषायस्य प्रस्थौ द्वौ पयसा समौ ॥ षट्पलं शृंगबेरस्य गुडस्य च पलाष्टकं ॥ तैलप्रस्थं विपक्वं तद्द्यात्सर्वानिलार्तिषु ॥ बलाशतं छिन्नरुहापादं रास्नाऽष्टभागिकं ॥ जलाढकशते पक्त्वा शतभागस्थिते रसे ॥दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः॥ पचेत्साजपयोऽर्द्धांशं कल्कैरेभिः पलोन्मितैः॥ शठीसरलदार्वैलामंजिष्ठाऽगुरुचंदनैः ॥ पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ॥ यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ पलाशरसकस्तुरीनलिकाजातिकोशकैः ॥ स्पृक्काकुंकुमशैलेयजातीकाकट्फलांबुभिः ॥ त्वक्कुंदुरुककर्पूरतुरुष्कश्रीनिवासकैः ॥ लवंगनखकंकोलकुष्ठमांसीप्रियंगुभिः ॥ स्थौणेयतगरध्यामवचामदनकप्लवैः ॥ सनागकेसरैः सिद्धे दद्याच्चात्रावतारिते ॥ पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितं ॥ श्वासं कासं ज्वरं

१ जींगकैरितिपाठः

मूर्च्छां छर्दिं तृष्णां क्षतं क्षयं।।प्लीहशोषावपस्मारमलक्ष्मीं च प्रणाशयेत् ।। बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनं ।। अमृतायास्तुलाः पंच पचेत्तोयवहद्वये ।।पादशेषे समक्षीरं तैलस्य द्व्याढकं पचेत्।।एलामांसीनतोशीरसारिवाकुष्टचंदनैः ।। शतपुष्पाबलामेदामहामेदर्द्धिजीवकैः ।। काकोलीक्षीरकाकोलीश्रावण्यतिबलानखैः ।। महाश्रावणिजीवंतीविदारीकपिकच्छुभिः ।। शतावरीतामलकीकर्कटाह्वाह्वरेणुभिः ।। वचागोक्षुरकैरंडरास्नाकालासहाचरैः ।। वीरासहैलर्षभकत्रिदशाह्वैश्च कार्षिकैः ।। मंजिष्ठायास्त्रिकर्षेण मधुकाष्टपलेन च ।। कल्कैस्तत्क्षीणवीर्याग्निबलसंमूढचेतसः ।। उन्मादार्त्यपस्मारैरार्त्तांश्च प्रकृतिं नयेत् ।। रास्नासहस्रनिर्यूहे तैलद्रोणे विपाचयेत् ।।गंधैर्हैमवतः पिष्टैरेलाद्यैश्चानिलार्तिनुत् ।। एष कल्पोऽश्वगंधाया बलाऽतिबलयोरपि ।।क्राथकल्कपयोभिर्वा बलादीनां पचेत्पृथक् ।। यवकोलकुलत्थानां मत्स्यानां शिग्रुबिल्वयोः ।। रसेन मूलकानां च तैलं दधिपयोन्वितं ।। साधयेत्तत्परं सर्वपवनव्याधिभेषजं ।। यच्च शीतज्वरे तैलमगुर्वाद्यमुदाहृतं ।। सहस्रशतशस्तच्च सिद्धं वातामयापहं ।। फलत्रिकस्य प्रस्थं स्यात्कुलत्थकुडवद्वयं ।। कृष्णगंधत्वगाढक्योः पृथक् पंच पलानि तु ।। रास्नाचित्रकयोर्द्वे द्वे दशमूलात्पलं पलं ।। जलद्रोणे पचेत्पादशेषे प्रस्थोन्मितं पृथक् ।। सुराऽऽरनालदध्यम्लसौवीरकतुषोदकं।।कोलदाडिमवृक्षाम्लरसं क्षीरं वसां नवां।।मज्जानं तैलमाज्यं च जीवनीयपलानि षट्।।कल्कमेकत्र सत्सिद्धं सिद्धं शुद्धानिलामये।।आनूपजांगलोत्थानामस्थीनि विपचेज्जले ।।तत्स्नेहं दशमूलस्य कषायेण पुनः पचेत्।।जीवकर्षभकास्फोतविदारीकपिकच्छुभिः।।वातघ्नैर्दीपनीयैश्च कल्कैर्द्विक्षारभागिकैः ।। सिरापर्वास्थिकोष्ठस्थं पानाद्यैर्हंति तच्चलं ।।क्षीणौजोमज्जशुक्राणामेतत्स्यादमृतोपमं ।। पाने नस्येऽन्वासनेऽभ्यंजने च स्नेहाः काले सम्यगेते प्र

१ मंजिष्ठाद्रूणिजीवंतीतिपाठः २ कृष्णगंधः शिग्रुः

युक्ताः ॥ दुष्टान्वातानाशु शांतिं नयेयुर्वंध्या नारीः पुत्रभाजश्च कुर्युः ॥ स्नेहैः स्वेदैर्द्रुतः श्लेष्मा यदा पक्काशये स्थितः ॥ पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेदिति ॥ ॥ इति वातव्याधिचिकित्सितं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ॥ वातशोणितिनः स्निग्धस्य दाहरागरुक्तोदेषु जलौकोभिः कंडूपतापस्वापचिमिचिमायनेषु शृंगतुंबैर्देशाद्देशं संसरच्छिरया प्रच्छानेन वा दुष्टमसृगसकृदल्पमल्पमवसेचयेत् ॥ असृक्क्षये हि गंभीरशोफस्तंभकंपम्लानिसंकोचादयः स्युः ॥ सिराव्यधोक्ताश्च मूर्च्छादयः ॥ नैव त्र स्रावयेदंगम्लानौ रूक्षं वातोत्तरं च रक्तं ॥ ततश्च पुनः स्नेहयित्वा मृदूनि स्नेहयुक्तानि रूक्षाणि वा विरेचनानि बस्तिकर्म चासकृत्प्रयोजयेत् ॥ अथ वातप्रबलेषु पुराणघृतं पिबेच्छतावरीघृतं वा ॥ दशमूलपुनर्नवद्वयैरंडमुद्गपर्णीमाषपर्णीमहामेदाशतावरीरास्नाऽवाक्पुष्पीशंखपुष्पीबलाऽतिबलाद्विपलांशाः पृथक् जलद्रोणे विपाचयेत् ॥ पादशेषे च तत्तुल्यानि पृथक् छागमांसामलकेक्षुरसघृतक्षीराणि संयोज्य कल्कं च पिप्पलीकाश्मर्यफलोत्पलद्विमेदाद्विश्रावणीवीरापुनर्नवानागरसमंगातवक्षीरीक्षीरकाकोलीद्राक्षाऽक्षोडपद्मबीजशृंगाटकनिकोचकभल्योत्कमाणखर्जूरवातामसुंजाताभिषुकाणां पुनः पचेत् ॥ एतज्जीवनीयाख्यं सर्पिः सर्ववातपित्तविकारान् विशेषतश्च पांडुरोगज्वरापस्मारभगंदरश्वासकासहिध्मास्वरभेदपार्श्वशूलयक्ष्मप्लीहमूत्रसंगाश्मरीवातशोणितसर्वैकांगरोगानपहरति ॥ बल्यं वर्ण्यं वृष्यं चक्षुष्यं पुत्रप्रदं च ॥ तैलसात्म्यो वा क्षीरसितोपेतं तैलं पिबेत् ॥ अथवा शतावरीमयूरकक्षीरविदारीबलाद्वयतृणपंचमूलक्काथे पद्मकादिगर्भं साधितं ॥ बलातैलं वा शतपाकं ॥ वातहरसिद्धेन च पयसाऽम्लैर्वा स्पर्शसुखं परिषेकं कुर्वीत ॥ प्रत्येकशो यवगोधूमतिलमुद्गमाषेषु काकोलीक्षीरका-

कोलीजीवकर्षभबलाऽतिबलाशृगालविन्नामेषशृंगीपिप्पलीसितोपला सुरभिवचाकसेरुकल्कमिश्रोपनाहार्थं सर्पिस्तैलवसामज्जदुग्धसिद्धान् पंचपायसानुपकल्पयेत् ॥ शैहिकफलमज्जोत्कारिका वा ॥ बिल्वपेशिकातगरदेवदारुसरलरास्नाहरेणुकुष्ठशतपुष्पाभिर्वा दधिमस्तुयुक्ताभिरुपनाहः ॥ यवमधुकैरंडबीजपुनर्नवैर्धान्याम्लपिष्टैः प्रलेपः ॥ मातुलुंगाम्लसैंधवघृतमिश्रं वा शिग्रुमूलं सहचरजीवंतीमूलं वा ॥ रास्नामधुकगुडूचीबलाद्वयजीवकर्षभकल्कक्षीरसिद्धं ससिक्थकं सर्पिरभ्यंगः ॥ पित्तप्रबले द्राक्षारेवतफलपरूषकमधुकचंदनकाश्मर्यकषायं शर्करामधुमधुरं पाययेत् ॥ शतावरीपटोलत्रिफलागुडूचीकटुककषायं वा ॥ स्वादुतिक्तवर्गसिद्धं च सर्पिः क्षीरं च रास्नाऽभीरुदशमूलबलासिद्धं धारोष्णं वा ॥ विरेकार्थं त्रिवृच्चूर्णयुक्तं वा ॥ क्षीराहारो वा क्षीरेणैरंडतैलं बहुशः पिबेत् ॥ अमृतारग्वधाटरूषककषायेण वा ॥ क्षीरबस्तीन्वा सघृतान्दद्यात् ॥ शीतैश्चंदनपद्मकबिसमृणालादिभिः शृतेन क्षीरेण परिषेकः॥क्षीरेक्षुरसमधुशर्करातंदुलोदकेन वा ॥ द्राक्षामधुककाश्मर्ययुतेन वा ॥ धान्याम्लेन वा जीवनीयसिद्धेन वा सर्पिषा शतधौतेन वा॥मुस्तोशीरप्रपुंडरीकदार्वीमधुकमंजिष्ठाचंदनोत्पलपद्मकैर्वा सक्तुभिः सघृतशर्करैः प्रदेहो दाहरागरुग्विसर्पशोफहरः ॥ गोधूमचूर्णो वा छागक्षीरयुक्तो लेपः ॥ तिलाश्च पयसा पिष्टा भृष्टा कपाले पुनः पयसि प्रक्षिप्य निर्वापिताः ॥ रक्तप्रबलेऽप्येवं बहुशश्च शोणितमवसेचयेत् ॥ श्लेष्मप्रबले धात्रीफलविश्वामुस्ताकषायं मधुमधुरं पिबेत् ॥ त्रिफलाकषायं वा ॥ मधुकशृंगवेराभयाकटुरोहिणीनिर्यूहं वा ॥ यथार्हस्नेहपीतं च मृदु वामयेल्लिङ्घयेच्च ॥ नचातिसेकलेपान्दद्यात् ॥ निंबसर्षपाश्वगंधाक्षारतैलैः कोष्णैर्लेपः ॥ वचाऽगारधूमहरिद्रानिशाकुष्ठशतपुष्पाभिर्वा ॥ पुनर्नवेन वा सघृतेन ॥ तिलसर्षपातसीयवचूर्णो वा ॥ श्लेष्मातककपित्थमधुशिग्रुमिश्रः क्षारमू-

त्रपिष्टः ॥ केंबुकस्कंधसिद्धैः क्षारोदकतैलमूत्रैः सेकः ॥ संसर्गे मिश्रं यथोद्रेकं वा प्रतिकुर्यात् ॥ सर्वेषु च यथायथं गुडूचीं गुडहरीतकीं पिप्पलीवर्द्धमानं वा शीलयेद्बस्तिकर्म चाभीक्ष्णमिति ॥ भवंति चात्र ॥ बाह्यमालेपनाभ्यंगपरिषेकावगाहनैः ॥ विरेकास्थापनस्नेहपानैरातुरमाचरेत् ॥ सर्पिस्तैलवसामज्जपानाभ्यंजनवस्तिभिः ॥ लेपोपनाहसेकैश्च कोष्णैर्वातोत्तरं जयेत् ॥ विरेचनैर्घृतक्षीरपानसेचनबस्तिभिः ॥ पित्तरक्तोत्तरं वातरक्तं लेपैश्च शीतलैः ॥ वमनं मृदुनाऽत्यर्थं स्नेहसेकावलंघनं ॥ कोष्णा लेपाश्च शस्यंते वातरक्ते कफोत्तरे ॥ वातश्लेष्मोत्तरे शीतैः प्रलिप्ते वातशोणिते ॥ विदाहशोफरुक्कंडूविवृद्धिः स्तंभनाद्भवेत् ॥ पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ॥ उष्णैः प्लोषो रुग्रागस्वेदावदरणोद्भवः ॥ मधुयष्ट्याः पलशतं कषाये पादशेषिते ॥ तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ शतपुष्पावरीमूर्वापयस्याऽगुरुचंदनैः ॥ स्थिराहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ काकोलीक्षीरकाकोलीतामलक्यृद्धिपद्मकैः ॥ जीवंतीजीवकर्षभत्वक्पत्रनखवालकैः ॥ प्रपौंडरीकमंजिष्ठासारिवेंद्रीविमुन्नकैः ॥ चतुःप्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ मधुयष्ट्याः पलं पिष्ट्वा तैलप्रस्थं चतुर्गुणे ॥ क्षीरे पचेच्छतंवारांस्तदेवं मधुकाच्छत ॥ सिद्धं योज्यं तृड्डुन्मादश्वासकासविसर्पिषु ॥ हृत्पांडुरोगवातासृक्पित्तादिषु च पूर्ववत् ॥ कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा॥अतिवृद्धयाऽनिले शस्तं नादौ स्नेहनबृंहणं ॥ कृत्वा तत्राढ्यवातोक्तं वाशोणितिकं ततः ॥ भेषजं स्नेहनं कुर्याच्च रक्तप्रसादनं ॥ गंभीररक्तमाक्रांतं स्याच्च तद्वा विवर्जयेत्॥रक्तपित्तातिवृद्धया तु पाकमाशु निगच्छति॥भिन्नं स्रवति यद्रक्तं विदग्धं पूयमेव वा ॥ ततश्चिकित्सां व्रणवक्लेदशोधनरोपणैः ॥ कुर्यादुपद्रवाणां च तस्मात्तस्माच्चिकित्सितात् ॥ प्राणादिकोपे युगपद्यथोद्दिष्टं यथायथं ॥ यथासन्नं च भैषज्यं विकल्प्यं स्या-

यथाबलं ॥ नीते निरामतां सामे स्वेदलंघनपाचनैः ॥ रूक्षैश्चालेपसेकाद्यैः कुर्यात्केवलवातनुत् ॥ वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियां ॥ व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत् ॥ धन्वमांसं यवः शालिर्विरेकः क्षीरवान्मृदुः ॥ सक्षीरा बस्तयः क्षीरं पंचमूलबलाशृतं ॥ कालेऽनुवासनं तैलैर्मधुरौषधसाधितैः ॥ यष्टीमधुबलातैलघृतक्षीरैश्च सेचनं ॥ पंचमूलकषायेण वारिणा शीतलेन वा ॥ कफावृते यवान्नानि जांगला मृगपक्षिणः ॥ स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनं ॥ पुराणसर्पिस्तैलं च तिलसर्षपसंहितं ॥ संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥ कारयेद्रक्तसंसृष्टे वातशोणितिकीं क्रियां ॥ स्वेदाभ्यंगरसाः क्षीरं स्नेहो मांसावृते हितं ॥ प्रमेहमेदोवातघ्नमाढ्यवाते[1] भिषग्जितं॥ महास्नेहो[2]ऽस्थिमज्जस्थे पूर्वोक्तं रेतसाऽऽवृते[3] ॥ अन्नावृते पाचनीयं वमनं दीपनं लघु ॥ मूत्रावृते मूत्रलानि[4] स्वेदाः सोत्तरबस्तयः ॥एरंडतैलं वर्चस्थे बस्तिस्नेहाश्च भेदिनः ॥ कफपित्ताविरुद्धं यद्यच्च वातानुलोमनं ॥ सर्वस्थानावृतेऽप्याशु तत्कार्यं मातरिश्वनि ॥ अनभिष्यंदि च स्निग्धं स्रोतसां शुद्धिकारणं ॥ यापना बस्तयः प्रायो मधुराः सानुवासनाः ॥ प्रसमीक्ष्य बलाधिक्यं मृदु कार्यं विरेचनं ॥ रसायनानां सर्वेषामुपयोगः प्रशस्यते ॥ शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलुः ॥ लेहो वा भार्गवकृतद्वदेकादशसिताशितः ॥ अपाने त्वावृते सर्वं दीपनं ग्राहि पाचनं॥ वातानुलोमनं कार्यं मूत्राशयविशोधनं ॥ इति संक्षेपतः प्रोक्तमावृतानां चिकित्सितं ॥ प्राणाद्यानां भिषक् कुर्याद्वितर्क्य स्वयमेव तत् ॥ उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजये-

---

१ अथ वाते मेदसाऽऽवृते प्रमेहघ्नं मेदोघ्नं वातघ्नं च भिषग्जितमौषधं हितं ॥ २ महास्नेहो घृतमज्जवसातैलैः सिद्धो यद्वा नारायणादिर्हितः ॥ ३ रेतसाऽऽवृते वाते पूर्वोक्तं च वातव्याधौ शुक्रस्थवातोक्तं हितं ॥ ४ मूत्रलानि त्रपुसादीनि ॥

तृ ॥ प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ॥ स्वं स्वं स्थानं नयेदेवं वृतान्वातान्विमार्गगान् ॥ सर्वं चावरणं पित्तरक्तसंसर्गवर्जितं ॥ रसायनविधानेन लशुनो हंति शीलितः ॥ पित्तावृते पित्तहरं मरुतश्चानुलोमनं ॥ रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजं ॥ पित्तरक्तानिलहितं विविधं च रसायनं ॥ यथानिदानं निर्दिष्टमिति सम्यक् चिकित्सितं ॥ आयुर्वेदफलं स्थानमेतत्सद्योऽर्तिनाशनात् ॥ चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितं ॥ भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधं ॥ इति वातशोणितचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टांगसंग्रहे चतुर्थं चिकित्सितस्थानं समाप्तं ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥

---

॥ श्री ॥

# अष्टांगसंग्रहे

## कल्पस्थानम् ५

॥ श्रीगणेशाय नमः ॥ अथातो वमनकल्पं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ वमनद्रव्याणां मदनजीमूतकेक्ष्वाकुद्विकोशातकीकुटजफलानि च श्रेष्ठानि ॥ तेष्वपि मदनफलं ॥ दोषदूष्यादिवशाच्चैषामेतत्कल्पनानां प्राधान्यं ॥ दोषादीनामेव चातिबह्ववस्थाभेदाद्वमनादिषु कल्पानां व्यापदां साधनानां च यदसंख्येयत्वं ॥ अतो बुद्धिमतां विकल्पमार्गदर्शनार्थमुदाहरणमात्रं कल्पसिद्धिस्थानमुपदेक्ष्यते ॥ अथ वसंतग्रीष्मयोरंतरे प्रशस्तेऽहनि मुहूर्ते च नातिहरितपांडूनि मदनफलान्याददीत ॥ तानि प्रमृज्य कुशमूडके बध्वा गोमयेनालिप्य यवबुसमाषशालिव्रीहिकुलत्थमुद्गान्यतमराशावष्टरात्रमुषितान्युद्धृत्यातपे शोषयेत् ॥ सुशुष्काणां पिप्पलीरुद्धृत्य दधिघृतमधुपललविमृदिताः पुनः शोषयित्वा नवं कलशमरजस्कमाकंठं पूरयित्वा सुगुप्तं निधापयेत् ॥ ततः प्रयोगकाले तासां फलपिप्पलीनामंतर्मुखमुष्टिं यावद्वा साधु मन्येत जर्जरीकृत्य यष्टीमधुककोविदारकर्बुदारनीपविदुलबिंबीशणपुष्पीसदापुष्पीप्रत्यक्पुष्प्यन्यतमकषाये वा रात्रिमुषितं विमृदितं पूतं सूत्रोक्तविधिना पाययेत् ॥ श्लेष्मज्वरगुल्मप्रतिश्यायांतर्विद्रधिषु विशेषेण पुनरापित्तगमनात् ॥ तेन साधु वमति ॥ फलपिप्पलीचूर्णं वा स्वक्वाथभावितं त्रिभागत्रिफलाचूर्णं कोविदारादिनिर्यूहेण बलवत्कफप्रसेकापच्यर्बुदग्रंथिज्वरोदरारोचकेषु पि-

बेत् ॥ मदनफलमज्जाचूर्णं वा जीमूतकादिनिर्यूहेण पित्ते कफ-स्थानगते ॥ मदनफलमज्जसिद्धं वा पयस्तस्मिन्वा यवागूमधो-भागे रक्तपित्ते हृद्दाहे च ॥ तस्य वा पयसः शीतस्य संता-निकांऽजलिं पित्ते प्रकुपिते उरःकंठहृदये च तनुकफोपदिग्धे ॥ तज्जं वा दधि दध्युत्तरं वा कफच्छर्दिप्रसेकतमकेषु ॥ तस्माद्वा प-यसो नवनीतमुत्पन्नं फलादिषट्ककाथेन फलषट्कचूर्णोन्मिश्रेण सिद्धं कफाभिभूतेऽग्नौ शुष्यच्छरीरे च ॥ फलमज्जाचूर्णमिश्रेण वाऽऽ श्वधादिद्रव्याणां घोंटाभूनिंबबाणवर्ज्यानां ससोमवल्कपंचकोल-कानामन्यतमस्य निर्यूहेण साधितं लेहमुपयुंजीत ॥ फलमज्जचू-र्णमिश्रेण वा रेणुकैलाशताह्वाकुस्तुंबरुतगरकुष्टत्वक्चोरकमरुबकागु-रुगुग्गुलुवालकश्रीवेष्टकपरिपेलवमांसीशैलेयकस्थौणेयकसुरसापाले-वतपूत्यशोकरोहिणीनां द्वाविंशतेरन्यतरस्य कषायेण साधितामुत्का-रिकां मोदकं वा भक्षयेत् ॥ फलपिप्पलीस्वरसकषायपरिपी-तैर्वा तिलशालितंदुलपिष्टैस्तत्कषायोपसृष्टैः सुरसादिद्रव्यान्यतमनि-र्यूहोपसृष्टैर्वा शष्कुलीरपूपानन्यं वा भक्ष्यं साधयित्वा भक्षयेत् ॥ फलपिप्पलीनां वा भल्लातकविधिश्रृतं स्वरसमादर्वीप्रलेपात्पक्त्वा लेहयेत् ॥ अन्नपानेषु वा तं लेहमवचारयेत् ॥ तत्कषायैरेव चान्न-पानानि कल्पयेत् ॥ फलमज्जक्काथं वा वत्सकादिप्रतिवापं निंबा-र्कान्यतरकषायोपसर्जनं संतर्पणोत्थसर्वश्लेष्मव्याधिहरं ॥ फलपि-प्पलीनां वा फलादिनिर्यूहेणैकविंशतिकृत्वः सुभावितानां कुसुमरजः-सदृशेन चूर्णेनावचूर्णयेत् सरसि सरोरुहं बृहत्सायान्हे तद्रात्रिमुषितं प्रभाते पुनरुपचूर्णितमुद्धृत्य हरिद्राकृसराक्षीरयवागूनामन्यतमं सैं-धवगुडफाणितोपेतमाकंठं पीतवानुपजिघ्रन् सुकुमारः समुचितगं-धसंपदुत्क्लिष्टकफपित्तो भेषजद्वेषी च तथा सुखेन च्छर्दयति ॥

---

१ जीमूतादयः श्रेष्ठयुक्ताः ॥

एतेन सर्वमाल्यगंधप्रावरणपटा व्याख्याताः ॥ एवमेव च फलाभावे मदनपुष्पाणि शलाटूनि च कल्पयेत् ॥ इति फलविधानमुक्तं ॥ एवंच जीमूतकादीनपि कल्पयेत् ॥ विशेषतस्तु ज्वरश्वासहिध्मादिषु जीमूतं ॥ तत्र पुष्पेषु क्षीरं फलेषु पेयां लोमालोमवत्सु[1] फलेषु शेषेषु संतानिकां[2] निर्लोमसु दधि दध्युत्तरकं[3] वा ॥ हरितपांडुषु क्षीरं दध्यम्लं[4] वा ॥ तत्कषायसंसृष्टां वा सुरां कफारोचककासपांडुरोगयक्ष्मसु प्रयुंजीत ॥ पर्यागतानां वा जीर्णानां जीमूतकफलानां शुष्काणां वा चूर्णं वातपित्ते ॥ द्वित्राणि वा संपोथ्यारग्वधादीनां[5] नवानामन्यतमस्य पटोल्या वा निर्यूहेणासुतानि[6] मथित्वा पित्तश्लेष्मजे ज्वरे ॥ जीमूतकचूर्णं कल्कं वा शीतेनांबुना पित्तजे ॥ तदेवोष्णेन वातकफजे कफजे वा ॥ जीवकर्षभेक्षुशतावरीणामन्यतमस्य स्वरसेन वा पित्तजे ॥ अथवा पूर्ववद्घृतं वा सिद्धं ॥ इक्ष्वाकुस्तु[7] विशेषेण कासश्वासज्वरच्छर्दिविषश्लेष्मरोगेषु योज्यः ॥ तस्यापुष्पफलस्य प्रवालैः शृतं क्षीरमुद्रिक्तपित्ते पित्तकफज्वरे पुष्पादिषु तु रातजीमूतवत्प्रयोगाः[8] ॥ इक्ष्वाकुफलस्वरसं वा त्रिगुणक्षीरसाधितमातुरः पित्ते कफपीनसे स्वरसादे वमनार्थी पिबेत् ॥ जीर्णे वा समुद्धृतबीजे फले क्षीरं प्रक्षिपेत् ॥ तत्र जातं दधि श्लेष्मकासश्वासच्छर्दिषु ॥ इक्ष्वाकुबीजानि वा छागीक्षीरभावितानि विषगुल्मोदरगलगंडग्रंथ्यर्बुदश्लीपदेषु ॥ इक्ष्वाकुफलमध्यं वा कुष्ठविषगुल्मोदरगरगंडग्रंथ्यर्बुदश्लीपदेषु ॥ इक्ष्वाकुफलं मस्तुना कुष्ठविषपांड्वामयेषु ॥ तद्विपक्कं वा तक्रं समधुसैंधवं ॥ तदेव वा मध्यं सगुडपलं भक्षयेत् ॥ इक्ष्वाकुफलतैलं वा पिबेत् ॥ तत्फलस्वरसभावि-

---

१ जीमूतफलस्य लोमशालोमशतया द्वैविध्यं २ संतानिकांप्रयुंजीतेतियोज्यं ॥ ३ दधिसरं ॥ ४ अम्लं दधि दध्यम्लं ॥ ५ अरग्वधेंद्रयवपाटलीत्यादिनवसंख्याकादन्यतमस्य ॥ ६ संधानितानि ॥ ७ इक्ष्वाकुः कटुतुंबी ॥ ८ पुष्पादिषु तु सुरांता जीमूतवत्प्रयोगाइति पाठः

तैर्वा सक्तुभिर्मंथं श्लेष्मज्वरकासकंठरोगारोचेकषु ॥ इक्ष्वाकुकल्कं मांसरसेन वातकफगुल्मप्रसक्तज्वरेषु ॥ बिल्वमूलप्रस्थक्काथेन वा तुंबीबीजानि क्काथयेत् ॥ ततस्तस्मिंस्त्रिभागघृते घृतसमानि पिष्ट्वा तुंबीबीजानि तदर्द्धांशिकानि च प्रत्येकं जीमूतमहाजालिनिवत्सककृतवेधनानि क्काथतुल्यमेव च त्रिकटुकमावपेत् ॥ ततः पुनरपि शृत्वा लेहं साधयेत् ॥ तमवलिह्य प्रमध्यामनुपिबेत्तद्वदयमेव च कल्पः काश्मर्यादिषु चतुर्षु महापंचमूलांगेषु पृथक्पृथगुक्तो वेदितव्यः ॥ धामार्गवो विशेषेण गरगुल्मोदरकासकफसंचयोत्थरोगेषु स्थिरेषु गुरुषु च श्लेष्माशयस्थेषु वातश्लेष्मणि च कंठाश्रये ॥ प्रकल्प्य जीवनीयान्यतमचूर्णसंयुक्तान्समधुशर्करांस्तत्कषायैर्लेहान् पित्तोपसर्जने श्लेष्मणि विदध्यात् ॥ धामार्गवकल्कं तुंबरुधान्ययूषेण विषेषु ॥ सुमनःसौमनस्यायवानीहरिद्राचोरकहैमवतीमहासहाक्षुद्रसहाश्वीवाबिंबीपुनर्नवकासमर्दान्यतमकषायेण वा धामार्गवमेकं द्वे वा मनोविकारेषु ॥ धामार्गवमूलसिद्धक्षीरसंभवं सर्पिः फलादिषट्कसिद्धं वा मनोविकारेषु ॥ कृतवेधनमत्यर्थकटुतीक्ष्णोष्णं सुतरां गरोदरगुल्मप्लीहपांडुरोगश्वयथुषु कल्पयेत् ॥ कुटजफलं पुनः सुकुमारेषूल्बणास्रपित्तकफेषु वातशोणितविसर्पज्वरकुष्ठादिषु च प्रयोजयेत् ॥ कुटजफलचूर्णान्यर्कक्षीरेण सप्ताहं भावयित्वा मदनफलजीमूतकेक्ष्वाकुजीवंतीजीवकमूलान्यतमकषायेण वा सर्षपमधूकलवणान्यतमांभसा वा कुटजफलचूर्णं कृशरया वा वमनाय कल्पयेदिति ॥ भवति चात्र ॥ वमनानां दिगित्येषा सुतरामुपयोगिनां ॥ बीजेनानेन मतिमानन्यानपि विकल्पयेदिति ॥ ॥ इति वमनकल्पो नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ राजकोशातकी २ महत्सु ३ कटुकोशातकी

अथातो विरेचनकल्पं व्याख्यास्यामः ॥ विरेचनद्रव्याणां मूलेषु त्रिवृत्त्वक्षु तिल्वकः क्षीरेषु स्नुही फलेषु हरीतकी प्रधानानि ॥ त्रिवृतायाः खलु द्विविधं मूलमरुणं श्यामं च ॥ तत्रारुणं कषायमधुरं विपाके कटुकं रूक्षं श्लेष्मपित्तहरं कल्पनाविशेषात्पुनः सर्वव्याधिशमनं सुखविरेचनत्वाच्छिशुस्थविरसुकुमारमृदुकोष्ठेषु प्रशस्तं त्रिवृच्छब्दवाच्यं च ॥ इतरदपि तस्माद्गुणैः किंचिदूनं तीक्ष्णं कंठहृदयकर्षणं मूर्च्छासंमोहकृदाशु दोषहरत्वाद्बहुदोषक्लेशक्षमक्रूरकोष्ठेषु प्रशस्तं श्यामाशब्दवाच्यं च ॥ अथ तयोर्मूलमतिर्यग्विसृतं गंभीरानुगतं श्लक्ष्णमाहरेत् ॥ ततस्त्वचं शोषयित्वा सम्यक् स्थापयेत् ॥ तच्चूर्णं शुंठीसैंधवयुक्तमम्लैर्मांसरसेनापि पिबेद्वातामयेषु ॥ क्षीरक्षौद्रद्राक्षेक्षुकाश्मर्यस्वरससर्पिः स्वादुक्वाथैः सशर्करं पित्तोत्थेषु ॥ मूत्रक्षौद्रक्षारारिष्टपीलुरसत्रिफलापंचकोलकक्वाथैर्व्योषचूर्णानुविद्धं कफजेषु ॥ एभिरेव च द्रव्यैर्यथास्वं घृतशर्कराक्षोडतवक्षीरीमधुराणि मातुलुंगदाडिमामलककोलकरमर्दककपित्थरसतक्राम्लानि सैंधवलवणानि व्योषतीक्ष्णानि विविधवेसवारपूरितानि सहकाररसत्रिजातकनागकेसरकर्पूरसुरभीणि लेहगुटिकामोदकभक्ष्यभोज्यान्युपकल्पयेदिति ॥ भवति चात्र ॥ त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनं ॥ अजगंधातवक्षीरीविदारीशर्करात्रिवृत् ॥ चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥ सन्निपातज्वरस्तंभपिपासादाहपीडितः[1] ॥ लिंपेदंतस्त्रिवृतया द्विधाकृत्वेक्षुगंडिकं ॥ एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत् ॥ भृंगैलाभ्यां समा नीली[2] तैस्त्रिवृत्तैश्च शर्करा ॥ चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ॥ नरेषु सुकुमारेषु निरपायं विरेचनं ॥ विडंग-

१ सन्निपातज्वरादिपीडितः २ कालांजनी ॥

तंदुलवरायावशूकक्कणास्त्रिवृत् ॥ सर्वतोऽर्द्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ गुल्मं प्लीहोदरं कासं हलीमकमरोचकं ॥ कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून् ॥ विडंगपिप्पलीमूलत्रिफलाधान्यचित्रकान् ॥ मरिचेंद्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ दीप्यकं पंचलवणं चूर्णितं कार्षिकं पृथक् ॥ तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ धात्रीफलरसप्रस्थांस्त्रीन् गुडार्द्धतुलान्वितान् ॥ पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयंत्रणः ॥ मंदाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकं ॥ कुष्ठार्शःकामलामेहगुल्मोदरभगंदरं ॥ ग्रहणीपांडुरोगांश्च हंति पुंसवनश्च सः ॥ गुडः कल्याणको नाम सर्वेष्वृतुषु यौगिकः ॥ व्योषत्रिजातकांभोदकृमिघ्नामलकैस्त्रिवृत् ॥ सर्वैः समा समसिता क्षौद्रेण गुलिकाः कृताः ॥ मूत्रकृच्छ्रज्वरच्छर्दिकासे शोषे भ्रमे क्षये ॥ तापे पांड्वामये ऽल्पाग्नौ शस्ताः सर्वविषेषु च ॥ त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजं ॥ क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनं ॥ त्रिवृद्दुरालभामुस्तशर्करोदीच्यचंदनं ॥ द्राक्षांबुना सयष्ट्याह्वशीतलं जलदात्यये ॥ त्रिवृता चित्रकं पाठामजाजीं सरलं वचां ॥ स्वर्णक्षीरीं च हेमंते चूर्णमुष्णांबुना पिबेत् ॥ त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनं ॥ त्रिवृत्त्रायंतिहपुषासातलाकटुरोहिणीः ॥ स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्र्यहं ॥ एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ श्यामात्रिवृद्दुरालभाहस्तिपिप्पलिवत्सकं ॥ नीलिनीकटुकामुस्तश्रेष्ठायुक्तं सुचूर्णितं ॥ रसाज्योष्णांबुभिः शस्तं रूक्षाणामपि सर्वदा ॥ त्र्यूषणं त्रिफला हिंगु कार्षिकं त्रिवृता पलं ॥ सौवर्चलार्द्धकर्षश्च पलार्द्धं चाम्लवेतसात् ॥ तच्चूर्णं शर्करातुल्यं मंडनाम्लेन वा पिबेत् ॥ गुल्मपार्श्वार्तिनुत्सिद्धं जीर्णे चास्मिन् रसौदनं ॥ त्रिवृतात्रिफलादंतीसातलाव्योषसैंधवैः ॥ प्रकल्प्य चूर्णं सप्ताहं भाव्यमामलकाद्रसे ॥ तद्योज्यं

तर्पणे यूषे पिशिते रागयुक्तिषु ॥ तुल्याम्लं त्रिवृताकल्कसिद्धं गु-
ल्महरं घृतं ॥ श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पयोऽपि वा ॥ त्रि-
वृन्मूर्ध्नींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत् ॥ पादशेषं कषायं तं
पूतं गुडतुलायुतं ॥ स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ॥
लिप्ते मासे गते पीतं पांडुश्वयथुगुल्मजित् ॥ सुरा वा त्रिवृतापादकिण्वा
तत्क्काथसंयुता ॥ यवैः श्यामात्रिवृत्क्काथस्विन्नैः कुल्माषमंभासा ॥
आसुतं षडहं पल्ले जातं सौवीरकं पिबेत् ॥ भृष्टान्वा सतुषांश्छुष्का
न्यवांस्तच्चूर्णसंयुतं ॥ आसुतानंभसा तद्वत्पिबेज्जातं तुषोदकं ॥ ज्वर
हृद्रोगवातासृग्गुदावर्त्तादिरोगिषु ॥ राजवृक्षोऽधिकं पथ्यो मृदुर्मधुर-
शीतलः ॥ बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ॥ योज्यो मृदन-
पायित्वाद्विशेषाच्चतुरंगुलः ॥ फलकाले परिणतं फलं तस्य समाह-
रेत् ॥ तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ सप्तरात्रात्समुद्धृत्य
शोषयेदातपे ततः ॥ ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत्॥
द्राक्षारसेन तं दद्याद्दाहोदावर्त्तपीडिते ॥ चतुर्वर्षे सुखं बाले
यावद्द्वादशवार्षिके ॥ चतुरंगुलमज्जो वा कषायं पाययेद्धिमं ॥
दधिमंडसुरामंडधात्रीफलरसैः पृथक् ॥ सौवीरकेण वा युक्तं
कल्केन त्रैवृतेन वा ॥ चतुरंगुलसिद्धाद्वा क्षीराद्यदुदियाद्घृ-
तं ॥ मज्जकल्केन धात्रीणां रसे तत्साधितं पिबेत् ॥ तदेव द-
शमूलस्य कुलत्थानां यवस्य च ॥ कषाये साधितं सर्पिः क-
ल्कैः श्यामादिभिः पिबेत् ॥ दंतीकषाये तन्मज्जां गुडं जीर्णं च नि-
क्षिपेत् ॥ तमरिष्टं स्थितं मासं पाययेत्पक्षमेव वा ॥ त्वचं
तिल्वकमूलस्य त्यक्त्वाऽभ्यंतरवल्कलं ॥ विशोष्य चूर्णयि-
त्वा च द्वौ भागौ गालयेत्ततः ॥ रोध्रस्यैव कषायेण तृ-
तीयं तेन भावयेत् ॥ कषाये दशमूलस्य तं भागं भावितं पुनः ॥
शुष्कचूर्णं ततः कृत्वा ततः पाणितलं पिबेत् ॥ मस्तुमूत्रसुरामंडको-

लधात्रीफलांबुभिः ॥ मेषशृंग्यभयाकृष्णाचित्रकैः क्वथिते जले ॥ मरुजान्[1] सुनुयात्तच्च जातं सौवीरकं यदा ॥ भवेदंजलिना तस्य रोध्रकल्कं पिबेत्तदा ॥ सुरां रोध्रकषायेण जातां पक्षस्थितां पिबेत् ॥ तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ सघृतः साधितो लेहः स च श्रेष्ठं विरेचनं ॥ सुधा भिनत्ति दोषाणां महांतमपि संचयं ॥ आश्वेव कष्टविभ्रंशान्नैव तां कल्पयेत्ततः ॥ मृदौ कोष्ठे ऽबले बाले स्थविरे दीर्घरोगिणि ॥ कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ॥ पांडौ दूषीविषे शोफे दोषविभ्रांतचेतसि ॥ सा श्रेष्ठा कंटकैस्तीक्ष्णैर्बहुभिश्च समाचिता ॥ द्विवर्षा वा त्रिवर्षा वा शिशिरांते विशेषतः ॥ तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ॥ बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ॥ मिश्रयित्वा सुधाक्षीरं ततोऽगारेषु शोषयेत् ॥ पिबेत्कृत्वा च गुलिकां मस्तुमूत्रसुरादिभिः ॥ त्रिवृतादीन्नव वरां स्वर्णक्षीरीं ससातलां ॥ सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ॥ तद्वद्घोषोत्तमाकुंभनिकुंभादीन् गुडांबुना ॥ अद्याच्छामात्रिवृत्क्वाथस्नुक्क्षीरघृतफाणितैः ॥ कासारिरसयूषाद्यैर्युक्तं वा स्नुक्पयः पिबेत् ॥ निकुंभकुंभश्याभार्क[2]शंखिनीसप्तलारजः ॥ रात्रौ मूत्रे दिवा घर्मे सप्ताहं स्थापयेदिति ॥ स्नुक्क्षीरेऽपि ततस्तेन माल्यं वासो ऽवचूर्णितं ॥ आजिघ्रेत्प्रावृणानश्च मृदुकोष्ठो विरिच्यते ॥ नातिशुष्कं फलं ग्राह्यं शंखिन्या निस्तुषीकृतं ॥ सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ॥ श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ अक्षमात्रं तयोः पिंडं मदिरालवणान्वितं ॥ हृद्रोगे वातकफजे तद्वद्गुल्मेऽपि योजयेत् ॥ शंखिनीचूर्णभागौ द्वौ तिलकल्कस्य चापरः ॥हरीतकीकषायेण तत्तैलं पीडितं पिबेत् ॥ अतसीसर्षपैरंडकरंजेष्वप्ययं विधिः ॥ दंतिदंतस्थिरस्थूलं

1 मरुजान् यवान्. 2 शम्याक इति पाठः

मूलं दंतीद्रवंतिजं॥आताम्रश्यावं तीक्ष्णोष्णमाशुकारि विकाषि च॥गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनं ॥ तत्क्षौद्रपिप्पलीलिप्तं स्वेदये- न्मृत्कुशांतरे ॥ शोषयेच्चातपे ऽग्न्यर्कौ हतो ह्यस्य विकाषितां ॥ तत्पि- बेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी॥गोमृगाजरसैः पांडुकृमिकोष्ठी भगंदरी ॥सिद्धं तत्क्वाथकल्काभ्यां दशमूलरसेन च ॥ विसर्पविद्रध्यलजीकक्षादाहान् जयेद्घृतं॥तैलं तु गु- ल्पमेहार्शोविबंधकफमारुतान् ॥ महास्नेहः शकृच्छुक्रवातसंगानिल- व्यथाः ॥ दंत्या रसे वा शृंग्याश्च गुडक्षौद्रघृतान्वितः ॥ लेहः सिद्धो- विरेकार्थे दाहसंतापमेहनुत् ॥ वाततर्षे ज्वरे पैत्ते स्यात्स एवाजगंध- या ॥ दंतीद्रवंत्योर्मूलानि पचेद्धात्रीरसे ततः ॥ त्रीनंशान्फाणिताद्वौ- च भजेत्तैले घृते ऽथवा ॥ श्यामादिकल्कयुक्तोऽयं लेहः सिद्धं विरे- चनं ॥ पथ्याक्षदशमूलानां तद्वल्लेहाः पृथग्रसैः ॥ तयोर्विडसमं चू- र्णं तद्रसेनैव भावितं ॥ विबंधे विशि वातोत्थे गुल्मे चाम्लयुतं हितं ॥ मुद्गादिसिद्धैस्तन्मूलैर्यूषादींश्च प्रकल्पयेत् ॥ दंतीद्रवंतीमरिचस्वर्ण- क्षीरीयवानकं ॥ सशुंठ्यग्निकपृथ्वीकं चूर्णितं सप्तवासरान् ॥ मूत्र- भावितमाज्येन पिबेज्जीर्णे च तर्पणं ॥ सर्वदा सर्वरोगेषु बाले वृद्धे च तद्धितं ॥ दुर्भुक्ताजीर्णपार्श्वार्तिगुल्मप्लीहोदरेषु च ॥ गंडमालासु वाते च पांडुरोगे च शस्यते ॥ गुडस्याष्टपले पथ्या विंशतिः स्यात्पलं- पलं ॥ दंतीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ प्रकल्प्य मोदका- नेकं दशमे दशमे ऽहनि ॥ उष्णांभोऽनुपिबन् खादेत्तान्सर्वान्विधि- ना ऽमुना ॥ एते निष्परिहाराः स्युः सर्वव्याधिनिबर्हणाः ॥ विशेषा- द्ग्रहणीपांडूकंडुकोठार्शसां हिताः ॥ विरेचने मुख्यतमा नवैते त्रिवृता- दयः ॥ हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ विशेषाद्ग्रहणीपां- डुशोषमोहोदरापहाम् ॥ पिबेत्पथ्यां ससिंधूत्थविडंगोत्पलनागरां ॥

मूत्रेण वत्सकादेर्वा निर्यूहेण हरीतकीं ॥ पथ्यानागरचूर्णं वा संयुक्तं-नीलिनीफले ॥ गुडेन भक्षयेत्तोयं कवोष्णं च पिबेदनु ॥ पथ्यात्रि-वृद्भ्यां गुलिकाः कार्याः क्षौद्ररसाप्लुताः ॥ माषप्रमाणास्ताः शुष्का य-क्ष्मी लिह्याद्घृतद्रुताः ॥ पथ्यात्रिवृत्कदुष्णांबु सर्वत्रेष्टं विरेचनं ॥ स्नु-क्क्षीरभाविते पथ्याचूर्णे कुर्वीत मोदकान् ॥ कोलास्थिमात्राम् शु-ष्कांश्च नवनीतेन लेहयेत् ॥ गुल्मोदरयकृत्प्लीहशूलानाहविबंधिनः ॥ लिह्यादेरंडतैलेन कुष्टत्रिकटुकान्वितं ॥ सुखोदकं चानुपिबेत्सुखमेत-द्विरेचनं ॥ अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मतां ॥ कुर्यात्संश्लेष विश्लेषकालसंस्कारयुक्तिभिः ॥ त्वक्केसराम्रातकदाडिमैलासितोपला-माक्षिकमातुलुंगैः ॥ मद्येन तैस्तैश्च मनोनुकूलैर्युक्तानि देयानि विरे-चनानि ॥ ॥ इति विरेचनकल्पो नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ॥ अतिक्षुधि-तेन मृदुकोष्ठेनाल्पश्लेष्मणा दुर्वमेन दुर्बलेन हीनमात्रमतितीक्ष्णमति-शीतमजीर्णे वा पीतं वमनमधो गच्छति ॥ तत्रेप्सितानवाप्तिर्मलोत्क्ले-शश्च ॥ तं पुनराशु स्नेहयित्वा यौगिकैर्मात्राकालाद्यपेक्षं वामयेत् ॥ व्यापत्करणानि च पूर्वमतिक्रमं स्मरन् परिहरेत् ॥ अजीर्णिनः श्लेष्म-वतोऽत्युष्णतीक्ष्णलवणमात्रमहृद्यं वा विरेचनमन्यद्वा भेषजमूर्ध्वं प्र-वर्त्तते ॥ तत्र पूर्वोक्ता व्यापत्साधनं च ॥ अतोऽप्यूर्ध्वमुत्तिष्ठति हृद्या वलेरवनवटकवर्जमौषधं न तृतीयमवचारयेत् ॥ क्रूरकोष्ठस्यातितीक्ष्णाग्ने रल्पवीर्यं वा भेषजमूर्ध्वभागिकमधोभागिकं वा भक्तवदुपैति पाकं ॥ तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा विभ्रमं कुर्वंति ॥ तं सुस्निग्धकोष्ठमनल्पमनन्नं चौषधं पाययेत् ॥ कषायमल्पमत्यग्रं रूक्षं वा भेषजमस्निग्धस्विन्नेन वा पीतं शीतोपचारेण वा स्तब्धदोषं विग्र-

१ लिह्याद्घृताप्लुता इति पाठः ॥ २ पथ्यात्रिवृद्भ्यामुष्णांब्विति पाठः ॥ पथ्यात्रि-वृत्पटूष्णांब्विति च पाठः

थितमयोगि भवति ॥ तत्र वमनेन भूयो वामयेद्विरेचनं स्निग्धस्वि-न्नस्य पुनर्विरेचयेदुत्क्लिष्टभूरिदोषं वा तृतीयेऽहनि ॥ उभयोश्च सं-शोधनयोर्लवणतैलाभ्यक्तं पिंडप्रस्तराभ्यां स्वेदयेत् ॥ स्निग्धस्विन्न-स्य च वमनमकृत्वा विरेचनं पीतवतः सामस्य वा मृदु वा विरिक्त-स्याधोभागेऽत्यर्थंगुरुस्तब्धोदरता शूलो वातपुरीषसंगश्च भवति ॥ तमप्ययोगिनं समूत्रैस्तीक्ष्णैरास्थाप्य जांगलरसैश्च भोजयित्वा फ-लदारुपिप्पलीसिद्धेन तैलेनानुवास्य वातहरैश्च स्नेहैरुपस्नेह्य पुनस्ती क्ष्णैर्विरेचयेत् ॥ कफोल्बणस्यातिस्निग्धस्य गुरुकोष्ठस्य मंदाग्नेर्वा मृदुप्रणीतमौषधं भृशमुत्क्लेश्य दोषान् जाड्यतंद्रादौर्बल्यांगसादान् जनयति ॥ तच्छीघ्रमुल्लिखेत् ॥ लंघितं च संधुक्षिताग्निं पुनः स्निग्धं तीक्ष्णोष्णैर्विशोधयेत् ॥ सशोषान्नाय च वातश्लेष्मवते रूक्षाय सो-दावर्त्ताय मंदाग्नये वा शीतं रूक्षं वा दत्तमौषधं भृशमाध्मानं करो-ति॥तत्र मलसंगात्समुन्नह्य दह्यत्युदरमंतःशूलं दृतिवत्पार्श्वयोरापूर्णता शिरःपृष्ठरुजा श्वासः पायुबस्तिनिस्तोदश्च भवति ॥तमुदावर्तानाहहरा भ्यंगस्वेदवर्तिदीपनचूर्णबस्तिक्रियाभिरुपचरेत् ॥ क्षामेणाल्पबलेन मृदुकोष्ठाग्निना रूक्षेण स्निग्धेन वा स्विन्नेन सामेन वा बलवदौषधमु पयुक्तं सपित्तमनिलं परिदूष्य परिकर्त्तिकामापादयति ॥ तत्र नाभि-बस्तिगुदमेंढ्रे सदाहं परिकर्त्तनमनिलसंगो विष्टंभश्च ॥तं कृष्णतिलमधु-कमधुयुक्तैः पिच्छाबस्तिभिरास्थापयेत् ॥ क्षीरिवृक्षशृतक्षीरेण वा ॥ शीतांबुपरिषिक्तं चैनं पयसा भुक्तवंतं घृतमंडेन यष्टीमधुकतैलेनानु-वासयेत् ॥ क्षामस्य मधुरो बृंहणश्च सर्वो विधिरिष्टः ॥ सामे लंघनो दीपनश्च लघुरूक्षोष्णं चान्नपानं ॥ निरामीभूते (*मध्यबलोपचारइव वातातपाभ्यामिव पांशुभस्मावकिरणैरितादि) वातानुबंधे लघुक्षाराम्लं वातेऽधिके दधि साम्लं दाडिमत्वचा युक्तं भोजने पाने च युंजीत॥स-दाडिमरसं च सर्पिः पिबेत्॥उष्णांबुना वा तिलदेवदारुकल्कं ॥क्रूरको-

ष्टस्य बहुदोषस्याल्पमात्रगुणं मृदु स्निग्धं वा शोधनमवचारितमुत्क्ले-
श्य दोषान्न निर्हरत्यल्पाल्पं च पित्तकफसंसृष्टं परिस्रवति ॥ विष्टं-
भगौरवशोफकोठकंडूपांडुतांगसादशूलानि चापादयति ॥ तं तिनिश-
धवाश्वकर्णपलाशबलानिर्यूहैर्मधुयुक्तैरास्थापयेत् ॥ उपशांतपरिस्रवं
च पुनरुपस्निग्धं तीक्ष्णैः शोधयेत् ॥ शुद्धे च दीपनांश्चूर्णासवारिष्टा-
दीन् योजयेत् ॥ पीतौषधो यदा वेगमुदीरयति निगृह्णाति वा ॥
तदा प्रवाहिकाऽस्य जायते ॥ तस्यां सदाहशूलं सपिच्छं श्वेतं कृ-
ष्णं सरक्तं वा भृशं प्रवाहमानः कफमुपविशति ॥ तं परिस्रवविधि-
नोपचरेत् ॥ पीतौषधस्य भेषजोद्गारच्छर्द्यादीनां निग्रहाद्वातादयः कु-
पिता हृदयमुपश्रित्य हृद्ग्रहं घोरमावहंति ॥ ततः प्रधानमर्मोपता-
पाद्वेदनाभिरत्यर्थमातुरः पीडयते मोहहिध्माकासलालापार्श्वशू-
लयुतो वेपथुमान्नष्टसंज्ञो दंतान्कटकटायत्युद्धृताक्षो जिव्हां खाद-
यति ॥ तं हृदयापसरणमाहुस्तस्मै भिषक् शीघ्रममुष्यन्नभ्यंगपूर्वं धा-
न्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीडं दद्यात् ॥ यष्टीमधुकमिश्रेण तं-
दुलांबुना वमनं ॥ कटुभिर्वा कफोत्तराय ॥ ततो दोषशेषं पाचनी-
यैः पाचयेत् यथादोषोच्छ्रयं च बस्तीन् वितरेत् ॥ अस्निग्धस्वि-
न्नेनाब्रह्मचारिणा वेगविधारिणा मृदुकोष्ठेन सुकुमारेण वा सूक्ष्मौ-
षधमतिमात्रं प्रयुक्तमतिविरेकाद्वायुं कोपयति ॥ तेन सर्वांगप्रग्रहो
विशेषात्पार्श्वपृष्ठश्रोणीमन्यामर्मसु शूलं मूर्च्छा भ्रमः कंपः स्तंभो नि-
स्तोदो भेदउद्वेष्टनं संज्ञानाशश्च स्यात् ॥ तमभ्यज्य धान्यैः स्वेद-
यित्वा यष्टीमधुविपक्वेन तैलेनानुवासयेत् ॥ वातहरं चान्नपानं ॥
स्निग्धस्विन्नस्यातिमृदुकोष्ठस्य क्षुधितस्य वा तीक्ष्णवेगमतिभूरि वा
प्रयुक्तमौषधं सर्वं निर्हृत्य मलं धातूनपि द्रवीकृत्य स्रावयेदति-
योगि भवति ॥ तं शतधौतघृतेनाभ्यज्य कषायस्वादुशीतैः प्र-
देहपरिषेकावगाहान्नपानैः शर्करामधुमद्भिश्च लेहैः स्तंभयेत् ॥ चं-

दनांजनोशीरच्छागासृक्शीतोदकैर्लाजसक्तून् पाययेत् ॥ पिच्छाबस्ति चास्मै दद्यात् ॥ मधुरवर्गसिद्धं च क्षीरसर्पिः सर्पिर्मंडो वा ऽनुवासनं ॥ रक्तपित्तविधानं च कुर्यात् ॥ विशेषेण तु वमनातियोगे सघृतसिताक्षौद्रं फलरसैर्मंथं पिबेत् ॥ क्षीरिवृक्षशुंगसिद्धां वा समाक्षिकां पेयां क्षीरं वा संग्राहिद्रव्यसिद्धं च क्षीरं भोजने चावचारयेत् ॥ सोद्गारायां च छर्द्यां धनिकामधूकमधुरसमुस्तांजनानि मधुना लिह्यात् ॥ वाक्संगे हनुसंहनने ऽनिलार्त्तौ च घृतमांसरससिद्धामल्पतंदुलां पेयां पिबेत् स्नेहस्वेदौ चावचारयेत् ॥ जिह्वाप्रवेशे स्निग्धाम्ललवणान्कवलग्रहगंडूषान् हृद्यांश्चाजमांसरसान् ॥ पुरतश्चास्य फलान्यम्लानि खादयेत् ॥ निर्गतां जिह्वां तिलद्राक्षाकल्कलिप्तां व्योषलवणचूर्णप्रघृष्टां वा प्रवेशयेत् ॥ अक्षिणी व्यावृत्ते घृताभ्यक्ते पीडयेत् ॥ विसंज्ञं सामवेणुगीतशब्दान् श्रावयेत् ॥ विरेचनातियोगे तंदुलांभसा मिश्रेण वमेत् ॥ प्रियंग्वादिं च तंदुलोदकेन पिबेल्लोध्ररसांजनदाडिमत्वचो वा कमलोत्पलसमंगापद्मकेसराणि वा ॥ क्षौद्रशर्करामधुकौदुंबरत्वचो वा ॥ रक्तातिसारक्रियां च कुर्वीत ॥ गुदं निःसृतमभ्यज्य स्वेदयित्वा कषायैश्च स्तंभयित्वा प्रवेशयेत् ॥ पूर्ववच्च वाक्संगादीन् साधयेत् ॥ उभयत्र च जीवरक्तपित्तयोर्ज्ञानार्थं रक्ते शुक्लं पिचु प्लोतं वा क्षिपेत् ॥ तस्मिन्नावाने[1] कोष्णांबुक्षालितशुद्धे रक्तं वैवर्ण्ये तु रक्तपित्तं विद्यात् ॥ अन्नं वा तद्विमिश्रं शुने काकाय वा दद्यात् ॥ तस्मिन् भुक्ते जीवमभुक्ते पित्तं ॥ आमरणाच्च तस्य तृण्मूर्च्छामदार्तस्य क्रियां पित्तघ्नीमतियोगोक्तं च कुर्यात् ॥ खड्गादिरुधिरं चातिस्रुतरक्तोक्तविधिना सक्षौद्रं शीघ्रमुपयुंजीत ॥ श्यामाकाश्मर्यदूर्वोशीरैर्वा शृतं पयो घृतमंडांजनयुक्तं शीतं बस्तौ निषेचयेत् ॥ शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोप-

१ आवाने ईषच्छुष्के

द्रवेषु यथामयं दोषानपेक्ष्य प्रतिकुर्याद्बस्तिव्यापत्तिसिद्धिं चेक्षेत ॥ एवमुभयतोभागेऽपि शोधने यथावस्थमुत्तिष्ठेत ॥ या तु विरेचने परिकर्तिका तद्वमने कंठक्षणनं यः परिस्रवः स कफप्रसेको यत्प्रवाहणं स शुष्कोद्गारइति ॥ भवति चात्र ॥ अतिमात्रमकालेऽल्पं तुल्यवीर्यैरभावितं ॥ असम्यक्संस्कृतं जीर्णं व्यापद्येतौषधं ध्रुवं ॥ छर्दनं न तु दुश्छर्दं दुर्विरेचं न रेचनं ॥ पाययेदौषधं भूयस्तं निहंति तथा हि ते ॥ यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकं ॥ वमितं केवलैः शुद्धं लंघितं पाययेत्तु तं ॥ विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलं ॥ तेनाध्मानं वमिस्तृष्णा विबंधश्चानुशाम्यति ॥ भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्त्तते ॥ सोद्गारं सांगशूलं वा स्वेदं तत्रावचारयेत् ॥ सम्यग्विरिक्तसोद्गारभेषजं क्षिप्रमुल्लिखेत् ॥ अजीर्णमप्रवृत्तौ तु सुशीतैः स्तंभयेद्भिषक् ॥ कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजं ॥ क्षीणे श्लेष्मणि सायान्हे रात्रौ वा तत्प्रवर्त्तते ॥ रूक्षान्नाहारयेज्जीर्णे तिष्ठत्यूर्ध्वगते ऽपि वा ॥ वायुना भेषजे त्वन्यत्सस्नेहलवणं पिबेत् ॥ तृण्मोहभ्रममूर्च्छाद्याः स्युर्जीर्यति च भेषजे ॥ पित्तघ्नं स्वादुशीतं च भेषजं तत्र शस्यते ॥ लालाहृल्लासविष्टंभरोमहर्षान्कफावृते ॥ भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितं ॥ प्रतिकूला गतिः पायोर्ग्रथितत्वं सगौरवं ॥ दोषोत्क्लेशो भृशाध्मानं परिकर्त्तः परिस्रवः ॥ प्रवाहिकाहृद्ग्रहणं सर्वगात्रपरिग्रहः ॥ सर्वधातुस्रवेणैता द्वादशोक्ताः ससाधनाः ॥ व्यापदो योगविभ्रंशाद्द्विविधेऽपि विरेचने ॥ उत्पद्यमानासु च तासु तासु व्यापत्सु संशोधनविभ्रमेण ॥ दिशा ऽनयैवाशु यतेत सिद्धौ ज्योतिर्हि शास्त्रं नयदुर्नयानां ॥ ॥ इति वमनविरेचनव्यापत्तिसिद्धिर्नाम तृतीयोऽध्यायः॥ ३ ॥

अथातो बस्तिकल्पं व्याख्यास्यामः ॥ बलां गुडूचीं त्रिफलां सरास्नां द्विपंचमूलं च पलोन्मितानि ॥ अष्टौ फलान्यर्द्धतुलां च

मांसाच्छागात्पचेदप्सु चतुर्थशेषं ॥ पूते यवानीफलबिल्वकुष्ठवचा-
शताह्वाघनपिप्पलीनां ॥ कल्कैर्गुडक्षौद्रयुतैः सतैलैर्युक्तः सुखोष्णो-
लवणान्वितश्च ॥ बस्तिः परं सर्वगदप्रमाथी स्वस्थे हितो जीवनबृं-
हणश्च॥बस्तौ च यस्मिन् प्रणितो न कल्कः सर्वत्र दद्यादमुमेव तत्र॥
द्विपंचमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वपेष्यः ॥ त्रिस्नेह-
युक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः ॥ बलापटोलीलघुपं-
चमूलत्रायंतिकैरंडयवात्सुसिद्धात् ॥ प्रस्थो रसाच्छागरसार्द्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥ प्रियंगुकृष्णाघनकल्कयुक्तः सतैल-
सर्पिर्मधुसैंधवश्च ॥ स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चोपदधाति
सद्यः ॥ एरंडमूलात्रिपलं पलाशात्तथा पलांशं लघुपंचमूलं ॥ रास्ना-
बलाच्छिन्नरुहाश्वगंधापुनर्नवारग्वधदेवदारु ॥ फलानि चाष्टौ सलि-
लाढकाभ्यां विपाचयेदष्टमशेषितेऽस्मिन् ॥ वचाशताह्वाहपुषाप्रियं-
गुयष्टीकणावत्सकबीजमुस्तं ॥ दद्यात्सुपिष्टं सहतार्क्ष्यशैलमक्षप्रमाणं
लवणांशयुक्तं ॥ समाक्षिकस्तैलयुतः समूत्रो बस्तिर्जयेल्लेखनदीपनो
ऽसौ ॥ जंघोरुपादत्रिकपृष्ठकोष्ठहृद्गुह्यशूलं गुरुतां विबंधं ॥ गुल्माश्म-
बध्मग्रहणीगुदोत्थांस्तांस्तांश्च रोगान्कफवातजातान् ॥ चतुष्पले तैल
घृतस्य भृष्टश्छागाच्छताह्वादधिदाडिमाम्लः ॥ रसः सपेष्यो बलवर्ण
मांसरेतोग्निर्तमिर्यशिरोरुजीष्टः ॥ यष्ट्याह्वयस्याष्टपलेन सिद्धं पयः श-
ताह्वाफलपिप्पलीभिः॥युक्तं ससर्पिर्मधु वातरक्तविसर्पवैस्वर्यहितो निरू
हः॥यष्ट्याह्वरोध्राभयचंदनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च॥सशर्करा-
क्षौद्रघृतं सुशीतं पित्तामयान् हंति सजीवनीयं ॥ गोपांगनाचंदनशीत-
पाकीद्राक्षर्द्धिकाश्मर्यमधूकसेव्यैः ॥ पयः शृतं श्रावणिमुद्गपर्णीबलाख्य
गुप्तामधुयष्टिकल्कैः ॥ गोधूमचूर्णैश्च पिचुप्रमाणैरिक्षोर्विदार्याश्च रसेन
युक्तं ॥ तैलेन यष्टीमधुसाधितेन सितोपलाक्षौद्रघृतैश्च शीतः ॥ बस्तिः

१ घृतैरितिपाठः २ पूर्वकल्कसहितः ॥

प्रशस्तः स समस्तदेहदाहे सशूले ऽवयवाश्रिते वा॥ गुल्मातिसारभ्रममूत्रकृच्छ्रक्षीणे क्षतौजोबलसंक्षये च ॥ कोशातकारग्वधदेवदारुमूर्वाश्वदंष्ट्राकुटजार्कपाठाः ॥ पक्त्वा कुलत्थान् बृहतीं च तोये रसस्य तस्य प्रसृता दश स्युः ॥ तान्सर्षपैलामदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ॥ क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्य च सार्षपस्य ॥ दद्यान्निरूहं कफरोगिताय मंदाग्नये चाशनविद्विषे च ॥ पुनर्नवैरंडवृषाश्मभेदवृश्चीवभूतीकबलापलाशान्॥द्विपंचमूलं च पलांशकानि क्षुण्णानि धौतानि फलानि चाष्टौ॥बिल्वं यवांकोलकुलत्थधान्यं फलानि च स्युः प्रसृतोन्मितानि ॥ पयो जलद्व्याढकसाधितं तत्क्षीरावशिष्टं शुचिवस्त्रपूतं ॥ वचाशताह्वाऽमरदारुकुष्ठयष्ट्याव्हसिद्धार्थकपिप्पलीनां॥ कल्कैर्यवान्या मदनैश्च युक्तं नात्युष्णशीतं गुडसैंधवाक्तं ॥ क्षौद्रस्य तैलस्य च सर्पिषश्च नवस्य युक्तं प्रसृतित्रयेण ॥ दद्यान्निरूहं विधिना विधिज्ञस्तं सर्वसंसर्गकृतामयघ्नं ॥ अर्द्धार्द्धविहितान् बस्तीनतश्चित्रान्प्रचक्षते ॥ कोशातकीद्वयेक्ष्वाकुफलजीमूतवत्सकाः॥श्यामात्रिवृतयोर्मूलं तथा दंतीद्रवंतिजं॥प्रकीर्या चोदकीर्या च क्षीरिणी नीलिनी फलं॥सप्तला शंखिनी रोध्रं फलं कंपिल्लकस्य च॥ सकल्कसैंधवयुताः पक्वाशयविशोधनाः॥ धातुकीपुष्पतर्कारीजीवंतीमूलवत्सकाः॥प्रग्रहः खदिरी कुष्ठं शमीपिंडीतकायवाः॥प्रियंगुरक्तमूले च भरणीजातियूथिकाः॥वटाद्याः किंशुकं रोध्रमिति संग्राहिका मताः ॥ ग्राहिप्रियंग्वंबष्ठादिक्वाथकल्कैः क्रमेण च ॥ ऊषकादिप्रतीवापो लेखनस्त्रिफलारसः ॥ मधुरक्वाथकल्केन सरसाज्येन बृंहणः ॥ बदर्यैरावणीशैलूशाल्मलीधन्वनांकुराः ॥ समाक्षिकाः क्षीरयुताः सासृजाः पिच्छिलाः स्मृताः ॥ कोलं कतककांडेक्षुदर्भपाठेक्षुवालुभिः ॥ दाहघ्नः सघृतक्षीरो द्वितीयश्चोत्पलादिभिः ॥ मुष्टिं शाल्मलिवृंतानां क्षी-

१ तरणीजातियूथिकाइति पाठः

रसिद्धो घृतान्वितः ॥ हितः प्रवाहणे तद्वद्वृंतैः शाल्मलकस्य च ॥ कर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः ॥ परिकर्त्ते तथा वृंतैः श्रीपर्णीकोविदारजैः ॥ परिस्रवे पयः सिद्धं सवृश्चीवपुनर्नवं ॥ आखुकर्णिकया तद्वत्तंदुलीयकयुक्तया ॥ अश्वावरोहकः काकनासाराजकसेरुकाः ॥ सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्रांजनघृतैर्युताः ॥ न्यग्रोधाद्यैश्चतुर्भिश्च तेनैव विधिनाऽपरः ॥ बृहतीक्षीरकाकोलीपृश्निपर्णीशतावरी ॥ काश्मर्यबदरीमूर्वास्तथोशीरप्रियंगवः ॥ जीवादाने शृते क्षीरे द्वौ घृतांजनसंयुतौ ॥ बस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥ गोऽव्यजामहिषीक्षीरैर्जीवनीययुतैरपि ॥ शशैणदक्षमार्जारमहिष्यव्यजशोणितैः ॥ सद्यस्कैर्मृदितैर्बस्तिर्जीवादाने प्रशस्यते ॥ अथेमान् सुकुमाराणां निरूहान्स्नेहनान्मृदून् ॥ कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥ क्षीराद्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ॥ खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषां ॥ बिल्वादिमूलक्काथाद्वौ कौलत्थाद्वौ स वातजित् ॥ पटोलनिंबभूतिकरास्नासप्तच्छदांभसः ॥ प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ सपंचतिक्तो ऽभिष्यंदक्रमिकुष्ठप्रमेहहा ॥ विडंगत्रिफलाशिग्रुफलमुस्ताखुकर्णिजाः ॥ कषायाः प्रसृताः पंच तैलादेको विमथ्य तान् ॥ निरूहः क्रमिहा वेल्लपिप्पलीकल्कयोजितः ॥ पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषः ॥ एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ॥ चत्वारस्तैलगोमूत्रदधिमंडाम्लकांजिकात् ॥ बस्तिः कवोष्णः सानाहे मूत्रकृच्छ्रे परो मतः ॥ मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ॥ तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ॥ तीक्ष्णत्वं मूत्रबिल्वाग्निलवणक्षारसर्षपैः ॥ प्राप्तकालं विधात

व्यं क्षीराज्याद्यैस्तु मार्दवं ॥ बलकालदेशसात्म्यप्रकृतीः प्रविभज्य योजितो बस्तिः ॥ स्वैः स्वैरौषधवर्गैः स्वान्स्वान्रोगान्निवर्तयति ॥ उष्णार्त्तानां शीतांश्छीतार्त्तानां तथा सुखोष्णांश्च ॥ तद्योग्यौषधयुक्तान् बस्तीन्संतर्क्य युंजीत ॥ बस्तीन्न बृंहणीयान्दद्याद्व्याधिषु विशोधनीयेषु ॥ मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानां ॥ दद्याद्विशोधनीयान्दोषनिबद्धायुषो ये च ॥ इति बस्तिकल्पो नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातः सिद्धबस्तिकल्पं व्याख्यास्यामः ॥ सिद्धबस्तीन्प्रयुंजीत सर्वदा सर्वदेहिनां ॥ निर्व्यापदो बहुफलान्बलपुष्टिकरान्सुखान् ॥ मधुतैले समे कर्षः सैंधवाद्द्विपिचुर्मिशिः ॥ एरंडमूलक्काथेन निरूहो माधुतैलिकः ॥ रसायनं प्रमेहार्शःकृमिगुल्मांत्रवृद्धिनुत् ॥ सयष्टीमधुकश्चैव चक्षुष्यो रक्तपित्तजित् ॥ यापनो घनकल्केन मधुतैलवसाज्यवान् ॥ पायुजानूरुवृषणबस्तिमेहनशूलजित् ॥ प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ यापनं सैंधवार्द्धाक्षहपुषार्द्धपलान्वितं ॥ एरंडमूलनिःक्काथो मधु तैलं ससैंधवं ॥ एष युक्तरथो बस्तिः सवचापिप्पलीफलः ॥ सक्काथो मधु षड्ग्रंथा[1] शताव्हा हिंगु सैंधवं ॥ सुरदारु च रास्ना च बस्तिर्दोषहरः शिवः ॥ पंचमूलस्य निःक्काथस्तैलं मागधिका मधु ॥ ससैंधवः समधुकः सिद्धबस्तिरिति स्मृतः ॥ द्विपंचमूलत्रिफलाफलबिल्वानि पाचयेत् ॥ गोमूत्रे तेन[2] पिष्टैश्च पाठावत्सकतोयदैः ॥ सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ॥ युक्तो बस्तिः कफव्याधिपांडुरोगविसूचिषु ॥ शुक्रानिलविबंधेषु बस्त्याटोपेषु पूजितः ॥ मुस्तपाठामृतैरंडबलारास्नापुनर्नवं ॥ मंजिष्ठाऽरग्वधोशीरत्रायमाणाक्षरोहिणीः ॥ कनीयः पंचमूलं च पालिकं मदनाष्टकं ॥ जलाढके पचेत्तच्च पादशेषं परिस्रुतं ॥ क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ सपादजांगलरसः

---

[1] वचा [2] गोमूत्रेण

ससर्पिर्मधुसैंधवः ॥ पिष्टैर्यष्टीमिशिश्यामाकलिंगकरसांजनैः ॥ बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्द्धनः ॥ वातास्रङ्मेहमेदोर्शोगुल्मविण्मूत्रसंग्रहं ॥ विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ॥ वंक्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ हन्यादसृग्दरोन्मादशोफकासाश्मकुंडलान् ॥ चक्षुष्यः पुत्रदो राजा यापनानां रसायनं ॥ पृथक्पलांशं विपचेत्पंचमूलमगोक्षुरं॥ क्षीराढके चतुःप्रस्थं पिष्टैर्यष्ट्यादिभिर्युतं ॥ क्षौद्रतैलाज्यसिंधूत्थयुक्तं बस्तिः सुपूजितः ॥ विशेषाद्बालवृद्धस्त्रीसुकुमारसुखात्मनां ॥ तद्वत्सहाचरबलासारिवादर्भसाधितं ॥ क्षीरबस्तिस्तथाऽभीरुगुडूचीबृहतीद्वयैः ॥ सिद्धं पयो मागधिकायष्टीमधुककल्कवत् ॥ पंचमूलं बृहत्यादिप्रतिद्रव्यं पलोन्मितं ॥ द्विपलं शालिगोधूमयवमाषं सयष्टिकं ॥ तैः सिद्धं छागलं क्षीरं कुक्कुटांडरसः सिता ॥ साज्यक्षौद्रद्विलवणस्तैर्बस्तिः शुक्रकृत्परं ॥ कल्पोऽयं शिखिगोनर्दमत्स्याद्यंडरसेष्वपि ॥ रसः कुलीरमांसस्य चटकांडरसान्वितः ॥ सशर्कराघृतमधुर्बस्तिर्वृषतमो मतः ॥ बस्तसूकरजैर्मुष्कैः कुलीरचटकामिषैः ॥ सिद्धं पयो बस्तमुष्कमुच्चटेक्षुरकं मधु ॥निर्घृताढ्योऽल्पलवणो बस्तिर्वृषतमः परः॥ सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥अतो दशदशाहेन यस्तु बस्तीन्निषेवते ॥ वाजीव पुष्टः सवृषो गच्छति प्रमदाशतं ॥ एते माक्षिकसंयुक्ताः कुर्वंत्यतिवृषं नरं ॥ नातियोगं न चायोगं स्तंभिनस्ते च कुर्वते ॥ निरूहा लेखनाः प्रायो बृंहणाः स्नेहबस्तयः ॥ यापनेषूभयं तस्मान्नेष्टं तेष्वनुवासनं ॥ मृदुत्वान्न निवर्त्तेरन् यस्य त्वेते प्रयोजिताः ॥ समूत्रैर्बस्तिभिस्तीक्ष्णैरास्थाप्यः क्षिप्रमेव सः ॥ शोफाग्निनाशपांडुत्वशूलार्शःपरिकर्तिकाः ॥ स्युर्ज्वरश्चातिसारश्च यापनात्यर्थसेवनात् ॥ अरिष्टक्षारसीध्वाद्यैस्तत्रेष्टा दीपनी क्रिया ॥ युक्त्या तस्मान्निषेवेत यापनान्न प्रसंगतः ॥ मृद्वल्पौषधसंयोगात्पादहीनप्रमाणतः ॥ अ-

ल्पकालोपयोगाच्च तेषु निष्परिहारता ॥ द्रव्येषु यापनार्थेषु सिद्धात्स्नेहात्पृथक् पृथक्॥बस्तीन्सर्वेषु वा युंज्यात्परिहारविवर्जितान्॥सहाचराभीरुबलारास्नागोक्षुरकात्पृथक् ॥ तुलां जलद्रोणशते पंचद्रोणावशेषिते ॥ पूतशीते बिसद्राक्षातवक्षीरीनिदिग्धिकाः ॥ महासहाक्षुद्रसहायष्टीमधुमधूलिकाः ॥ जीवकर्षभकोदीच्यमृणालोत्पलचंदनं ॥ खर्जूरतालमज्जात्मगुप्तातामलकीकणाः ॥ पटोलमेदात्वक्पत्रशीतपाक्योदनाव्हयाः ॥ कल्कीकृत्य क्षिपेत्तस्मिन्पृथक्च प्रस्थसंमितं ॥ रसं वराहमहिषबस्तमुष्कोद्भवं तथा ॥ शिखिकुक्कुटहंसांडसंभवं तैलसर्पिषी ॥ धात्रीविदारीस्वरसं गव्यक्षीराढकद्वयं ॥ ब्रह्मभेरीमृदंगानां निनादैः साधितं च यत् ॥ सितच्छत्रकृतच्छायं सितवस्त्रावगुंठितं ॥ आरोपितं गजस्कंधे पूजयित्वा वृषध्वजं ॥ कृत्वा स्वस्त्ययनं दद्यात्स्नेहबस्तिमयंत्रणं ॥ प्राप्तस्तेनातितृषतां श्रमयेद्वनिताशतं ॥ निर्वलीपलितः कांतश्चिरंजीवी भवेत्स च ॥ नष्टशुक्रक्षतक्षीणविषमज्वरिणां हितः ॥ व्यापन्नार्त्तवशुक्राणां पुत्रदाता रसायनं ॥ एवं च बस्तयोऽन्येऽपि कल्प्याः पाक्याश्च नैकशः ॥ शतंवारान्सहस्रं वा पाचयेत्संभवे सति ॥ दोषघ्नाः सपरीहारा वक्ष्यंते स्नेहबस्तयः ॥ दशमूलं वरां रास्नामश्वगंधां पुनर्नवां ॥ गुडूच्यैरंडभूतीकभार्ङ्गीवृषकरोहिषं ॥ शतावरीं सहचरं काकनासां पलांशिकं॥ यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥ वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥ पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ आनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥शताव्हायवबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥ सैंधवेनाग्निवर्णेन तप्तं चानिलजिद्धृतं ॥ जीवंतीं मदनं मेदां श्रावणीं मधुकं बलां ॥ शताव्हर्षभकौ कृष्णां काकनासां शतावरीं ॥ स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचां ॥ पिष्ट्वा तैलं घृतं क्षीरे साधयेत चतुर्गुणे ॥ बृंहणं वा-

तपित्तघ्नं बलशुक्राग्निवर्द्धनं ॥ रजःशुक्रामयहरं पुत्रीयं चानुवासनं॥ शिशिरस्पर्शवीर्यैश्च पिष्टैः क्षीरे चतुर्गुणे ॥ तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनं॥ सैंधवं मदनं कुष्टं शताह्वा निचुलो वचा॥ ह्रीबेरं मधुकं भार्ङ्गी देवदारु सकट्फलं॥ नागरं पुष्करं मेदा चविका चित्रकः शठी ॥ विडंगातिविषे श्यामा हरेणुर्नीलिनी स्थिरा॥ बिल्वाजमोदे चपला दंती रास्ना च तैः समैः॥ साध्यमैरंडतैलं वा तैलं वा कफरोगनुत्॥ वध्मोदावर्त्तगुल्मार्शःप्लीहमेहान्समारुतान्॥ आनाहमश्मरीं चाशु हन्यात्तदनुवासनं॥ साधितं पंचमूलेन तैलं बिल्वादिना ऽथवा॥ अन्वासनं श्लेष्महरं द्रव्यैर्वा कफघातिभिः॥ फलैरष्टगुणे चाम्ले सिद्धमन्वासनं कफे॥ शूलानाहे तु तद्युक्तो निरूहः पटुमूत्रवान्[1]॥ पृच्छतिस्म मुनिमित्यथ[2] धीमानग्निवेश इह किं तु फलानां॥ बस्तिकर्मणि हितं सततं स्यात्तं पुनर्वसुरिति प्रशशास॥ इह कुष्ठहिता गैरागरी[3] हितमिक्ष्वाकुफलं प्रमेहिणां॥ कुटजस्य फलं हृदामये प्रवरं कोटफलं तु पांडुषु॥ उदरे कृतवेधनं हितं मदनं सर्वगदाविरोधि तु॥ मधुरं सकषायतिक्तकं तदरूक्षं सकटूष्णपिच्छिलं॥ कफपित्तहृदाशुकारि यच्चिरपायं पवनानुलोमि च॥ प्रवरं तदतः फलादिषु स्मृतमास्थापनयोजनास्विति॥ अथ मुनिवृषभे निगद्य वाक्यं स्थितवति विज्ञपयांबभूव भूयः॥ इदमतिगहनं सहान्यशिष्यैरवनिगतोऽजलिमग्रतो निधाय॥ चित्रकर्मगुणकद्गुरुणोक्तो बस्तिरूर्ध्वमथ चैति न नाभेः॥ शीघ्रमापतति चानुस देहात्सर्वतः कथमपोहति दोषान्॥ ऊचे गुरुः स्तिमितमारुतवश्यमेतद्देहस्य यद्बहिरपाश्रितमंतरे वा॥ दुष्टस्य तस्य जनयन्ननुलोमतां तु बस्तिर्हिनस्ति विषमानतिरोगपूगान्॥ शाखागताः कोष्ठगताश्च

---

१ पटुतैलवानितिपाठः २ मुनिं पुनर्वसुं ३ बेणी गरागरी देवताडोजीमूतइत्यपीत्यमरः ( देवडंगरी )

रोगा मर्मोर्ध्वसर्वावयवांगजाश्च ॥ ये संति तेषां न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥ विट्शोषपित्तादिमलाचयानां विक्षेपसंहारकरो हि वायुः ॥ तस्यातिवृद्धस्य शमाय नान्यद्बस्तेः समं भेषजमस्ति यस्मात् ॥ शाम्यंति यत्नेन जिते ऽनिले च तदीरिताः पित्तकफादयोऽपि ॥ तस्माच्चिकित्सार्द्धमितिब्रुवंति सर्वां चिकित्सामपि बस्तिमेके ॥ यच्च पक्वाशयस्थोऽपि दोषानापादमस्तकं ॥ वीर्येण बस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥ यत्तत्रौषधवीर्यं हि तदपानेन वायुना॥पर्याप्तमचिरादेव समानः प्रतिपद्यते॥समानादुत्तरं चैवं व्यानाद्याः पवनाः क्रमात्॥ते तृप्ताः प्रकृतिं यांति शरीरानुग्रहे स्थिताः॥ प्रसह्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च॥संतर्पयंति परितःस्वान्स्वान् भूतगुणांस्तनौ ॥ व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति ॥ यथास्वमेव नाडीभिर्हारिणीभिरिवोदकं ॥ एवं वा तैः सिराभिश्च वपुर्बस्तिः सुयोजितः ॥ व्याप्नुवन्प्रसभं हंति सुकृच्छ्रानपि यक्ष्मणः ॥ बस्तिस्तस्मात्सर्वकर्मप्रधानं सर्वातंकान् हंति निःशेषतश्च ॥ स्रोतस्यंतः शोधयित्वा च कुर्याद्दोषांस्तेजः शुक्रदेहाग्निदीप्तिमिति ॥ ॥ इतिसिद्धबस्तिकल्पो नाम पंचमोऽध्यायः ॥ ५ ॥

अथातो बस्तिव्यापत्तिसिद्धिं व्याख्यास्यामः ॥ विबंधगौरवाध्मानशिरोरुग्वाहनोर्ध्वगाः ॥ कुक्षिशूलांगरुग्धिध्मात्हृत्पीडाकर्त्तनस्रवाः ॥ अयोगादतियोगाच्च बस्तेः स्युः षट्षडापदः ॥ अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ॥ शीतोल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ॥ करोति वातविण्मूत्रविबंधमतिदारुणं ॥ बस्तिनाभिरुजानाहं हृल्लेपं श्वयथुं गुदे ॥ कंडूगंडानि वैवर्ण्यमरतिं वन्हिमार्दवं ॥ क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ॥ उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ॥ फलव-

१ विट्श्लेष्मइतिपाठः २ प्रसाद्येतिपाठः ॥ ३ विबंधाख्यामापदमाह ॥

र्थस्तथा स्वेदाः कालं ज्ञात्वा विरेचनं॥बिल्वमूल त्रिवृद्दारुयवकोलकुलत्थवान् ॥ सुरादिमूत्रवान्बस्तिः सप्राकुपेष्यस्तमानयेत् ॥ संशोषामे निरूहेण मृदुना दोषईरितः॥मूर्च्छयत्यनिलं मार्गं रुणद्ध्यग्निं हिनस्ति च ॥ गौरवक्लमहृच्छूलदाहसंमोहवेष्टनं ॥ ततः कुर्यादुपचरेत्तं रूक्षस्वेदपाचनैः ॥ पिप्पलीकत्तृणोशीरदारुमूर्वाशृतं जलं ॥ पिबेत्सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनं ॥ वचानागरशठ्यो वा दधिमंडेन मूर्च्छिताः ॥ पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा ॥ दारुत्रिकटुकं पथ्यां पलाशं चित्रकं शठीम् ॥ पिष्ट्वा कुष्टं च मूत्रेण पिबेत्क्षारांश्च दीपनान् ॥ बस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकं ॥युक्तोल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशये ऽथवा॥ बस्तिर्दोषावृतो रुद्धमार्गो रुंध्यात्समीरणं ॥ सविमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनं ॥ विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनां ॥ रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ॥ विल्वादिश्च निरुहः स्यात्पीलुसर्षपमूत्रवान् ॥ सरलामरदारुभ्यां साधितं चानुवासनं ॥ बहुदोषबलेक्रूरकोष्ठे बस्तिस्तनुर्मृदुः ॥ शीतोऽल्पश्चावृतो दोषैः प्रतिहंति समीरणं ॥ ऊर्ध्वं सोऽनुसरन्देहं कुर्याद्वायुः शिरोरुजं ॥ ग्रीवास्तंभं प्रतिश्यायं बाधिर्यं दृष्टिविभ्रमं ॥ तमुष्णतैललवणप्रदिग्धस्विन्नमर्दितं ॥ तीक्ष्णैर्धूमैः प्रधमनैर्नस्यैरास्यविरेचनैः ॥ विरेकैर्बस्तिभिश्चाशु योजयेदानुलोमिकैः ॥ स्निग्धस्विन्ने महादोषे बस्तिर्मृद्वल्पभेषजः ॥ उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकां ॥ शोफो बस्तावपाने च सदनं चोरुजंघयोः ॥ विबद्धमारुतो जंतुरभीक्ष्णं स प्रवाहते ॥ स्वेदाभ्यंगान्निरूहांश्च शोधनीयानुलोमिकान् ॥ विदध्याल्लंघयित्वा च वृत्तिलस्य विरिक्तवत्॥कुर्वतो वेगसंरोधं पीडितो वा ऽतिमात्रया॥अस्नि-

१ गौरवाख्यामापदमाह ॥२आध्मानाख्यामापदमाह ॥ ३बहुदोषेऽनिले इति पाठः ॥ शिरोरुजाख्यामापदमाह ४ वाहनाख्यां व्यापदमाह ॥ ५ ऊर्ध्वमारुताख्यां व्यापदमाह ॥

न्धलवणोष्णो वा बस्तिरल्पो ऽल्पभेषजः॥ मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ निरेति मूर्च्छाहृल्लासतृड्दाहादीन्प्रवर्तयन् ॥ मूर्च्छाविकारं दृष्ट्वाऽस्य सिंचेच्छीतांबुना मुखं ॥ व्यजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ॥ पृष्ठपार्श्वोदरं मृद्यात्करैरुष्णैरधोमुखं॥ केशेष्वाक्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ॥ शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ॥ प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायणः ॥ अपानः पवनो बस्तिं तमाश्वेवापकर्षति ॥ कुष्ठक्रमुककल्कं च पाययेताम्लसंयुतं ॥ औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च बस्तिं सोप्यनुलोमयेत् ॥ गोमूत्रेण त्रिवृत्पथ्याकल्कं वा ऽधोऽनुलोमनं ॥ पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ॥ यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ बस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः ॥ पूतीकरंजत्वक्पत्रशठीदेवाव्हरोहिषैः॥ सतैलगुडसिंधूत्थो विरेकौषधकल्कवान् बिल्वादिपंचमूलेन सिद्धो बस्तिरुरःस्थिते ॥ शिरःस्थे नावनं धूमः प्रच्छाद्यं सर्षपैः शिरः ॥ [1]बस्तिरत्युष्णतीक्ष्णाम्लघनो ऽतिस्वेदितस्य वा ॥ अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ॥ अतियोगत्वमापन्नः कुक्षिशूलकरो भवेत् ॥ विरेचनातियोगेन सतुल्याकृतिसाधनः ॥ पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकोत्पले ॥ पिष्ट्वा द्राक्षां मधूकं च क्षीरे तंडुलधावने ॥ द्राक्षायाः पक्वलोष्टस्य प्रसादे मधुकस्य वा ॥ विनीय सघृतं बस्तिं युंज्याद्दाहे ऽतियोगजे ॥ [2]स्नेहस्वेदैरसंपाद्य गुरुतीक्ष्णोऽतिमात्रकः ॥ दुःस्थिताय प्रणिहितो बस्तिर्दुःशयिताय वा ॥ अतिप्रवृत्तो मरुतं कोपयेत्स विमार्गगः ॥ करोत्यंगरुजां जृंभां स्तंभं भेदं च पर्वणां ॥ तं तैललवणाभ्यक्तं स्वेदितं संस्तरादिभिः ॥ बिल्वकोलयवैरंडवर्षाभूबृहतीद्वयैः ॥ सकुलत्थैः शृतं मस्तु फलसौवीरकान्वितैः ॥

---

१ अथाऽतियोगव्यापदः॥तत्रकुक्षिशूलाख्यां व्यापदमाह ॥ २ अंगरुगाख्यांव्यापदमाह

आस्थापयेत्ससिंधूत्थैर्जांगलैरशितं रसैः ॥ तैलेनानिलजिद्रव्यवि-
पक्केनानुवासयेत् ॥ मृदुकोष्टे ऽबले बस्तिरतितीक्ष्णोऽतिनिर्हरन् ॥
कुर्याद्धिध्मां हितं तत्र हिध्माघ्नं बृंहणं च यत् ॥ बलास्थिरादिका-
श्मर्यत्रिफलारससैंधवैः ॥ सप्रसन्नारनालाम्लैस्तैलं पक्त्वाऽनुवासये-
त् ॥ उष्णांबुनाक्तं पिप्पल्या दद्याल्लवणसंयुतं ॥ धूमलेहरसक्षीरस्वे-
दैश्चान्नं च वातनुत्॥अतितीक्ष्णः सवातो वा न वा सम्यक्प्रपीडितः॥
घट्टयेद्धृदयं बस्तिस्तत्र काशकुशोत्कटैः॥ स्यात्साम्ललवणस्कंधक-
रीरबदरीफलैः ॥ शृतैर्बस्तिर्हितः सिद्धो वातघ्नैश्चानुवासनैः ॥
मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णातिमात्रकः॥ हत्वा बस्तिर्मलांश्छीघ्रं
वातपित्ते प्रकोपयेत् ॥ नाभिबस्तिगुदांस्ते हि कृंततोऽस्य मुहुर्मुहुः ॥
विवर्णाल्पाल्पमुत्थानं बस्तिर्निर्लेखनो भवेत् ॥ स्वादुशीतौषधैस्त-
त्र पयश्चेक्ष्वादिभिः शृतं ॥ यष्ट्याव्हतिलकल्काभ्यां बस्तिः स्या-
त्क्षीरभोजिनः॥ ससर्जरसयष्ट्याव्हं जिंगिणीकर्दमांजनं ॥ विनीय
दुग्धे बस्तिः स्याद्व्यक्ताम्लरसभोजिनः॥ पिच्छिलश्च हितो बस्तिः स्नेहै-
श्च मधुरैः शृतः ॥ बस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा॥गुदं
दहन् लिखन् क्षिण्वन्करोत्यस्य परिस्रवं॥सविदग्धं स्रवत्यस्रं वर्णैः पित्तं
च भूरिशः ॥ बहुशश्चातिवेगेन मोहं गच्छति चासकृत् ॥ तत्रार्द्रशा-
ल्मलीवृंतैः क्षुण्णैराजं पयः शृतं ॥ पूतं घृतान्वितं बस्तिं दद्यादन्यां-
श्च पिच्छिलान् ॥ वटादिपल्लवेष्वेवं कल्पो यवतिलेषु च ॥ सुवर्च-
लोपोदकयोः कर्बुदारे च शस्यते ॥ गुदे च शीतमधुरान्कुर्यात्सेक
प्रलेपनान्॥रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते॥दाहादिषु त्रिवृ-

---

१ हिध्माख्यां व्यापदमाह २ वृषसैंधवैरिति पाठः २ उष्णांबुनाक्षमिति पाठः ४ हृत्पीडाख्यां व्यापदमाह ५ कर्त्तनाख्यांव्यापदमाह ३ ते मलाः ७ परिस्रवाख्यां व्यापदमाह

त्कल्कं मृद्वीकावारिणा पिबेत्॥तद्धि पित्तशकृद्वातान्हत्वा दाहादिकान् जयेत्॥विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुतां॥युंज्याद्वाऽतिविरिक्तस्यक्षीणविट्कस्य भोजनं॥माषयूषेण कुल्माषान्पानं दध्यथवा सुरां॥आमं यः कुणपं रुग्वानुपवेश्येत सारुचिः॥ सघनातिविषाकुष्टनतदारुवचाः पिबेत् ॥ शकृद्वातमसृक्पित्तं कफं वा योऽतिसार्यते ॥ पक्वं-तत्र स्ववर्गीयो बस्तिः श्रेष्ठं भिषग्जितं ॥ षण्णामेषां द्विसंसर्गास्त्रिंशद्भेदा भवंति तु ॥ केवलैः सहषट्त्रिंशद्विद्यात्सोपद्रवानपि ॥ शूलप्रवाहिकाऽऽध्मानपरिकर्त्यरुचिज्वरान् ॥ तृण्मोहदाहमूर्च्छार्दींश्चैषां विद्यादुपद्रवान् ॥ तत्रामेंऽतरपानं तु कट्वम्ललवणैर्युतं ॥ पाचनं शस्यते बस्तिरामे हि प्रतिषिध्यते ॥ वातघ्नग्राहिवर्गीयो बस्तिः शकृति शस्यते ॥ स्वाद्वम्लो व्यक्तलवणः स्नेहबस्तिः समीरणे ॥ रक्ते रक्तेन पित्तास्रे कषायस्वादुतिक्तकः॥सार्यमाणे कफे बस्तिः कषायः कटुतिक्तकः ॥ शकृता वायुना वाऽऽमेन वर्चस्यथवाऽनिले ॥ संसृष्टेंऽतरपानं स्यात्कट्वम्ललवणैर्युतं ॥ पित्तेनामेऽसृजातद्वत्तयोरामेन वा पुनः ॥ संसृष्टयोर्भवेत्पानं सकटुस्वादुतिक्तकं ॥ तथा ऽऽमे कफसंसृष्टे कषायकटुतिक्तकं ॥ आमेन तु कफे युक्ते कषायलवणौषधं ॥ वातेन विशि पित्ते वा विट्पित्तास्रे तथाऽनिले ॥ स्यात्कषायाम्लमधुरः संसृष्टे बस्तिरुत्तमः ॥ बस्तिर्वातेन रक्तेच कार्यः स्वाद्वम्लातिक्तकः ॥ शकृच्छोणितयोः पित्तशकृतोरस्रपित्तयोः ॥ बस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ॥ कफेन विशि पित्ते वा कफे विट्पित्तशोणितैः ॥ कटुतिक्तकषायः स्यात्संसृष्टे बस्तिरुत्तमः ॥ स्याद्बस्तिः कटुतिक्ताम्लः संसृष्टे वायुना कफे ॥ मधुरोषणतिक्तस्तु रक्ते कफविमूर्च्छिते ॥ मारुते कफसंसृष्टे कट्वम्ललवणो भवेत् ॥ त्रिचतुःपंचषड्योगानेवमेव विकल्पयेत् ॥ युक्तिश्चैषाऽतिसारोक्ता सर्वरोगेष्वपि स्मृता ॥ युगपत्षड्रसं षण्णां संसर्गे पाचनं भवेत् ॥ निरामाणां तु पंचानां बस्तिः ष-

ड्रासिको हितः ॥ उदुंबरशलाटूनि जंब्वाम्रोदुंबरत्वचः ॥ शंखं सर्जरसं लाक्षां कत्तृणं च पलांशिकं ॥ पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत् ॥ अतिसारेषु सर्वेषु पेयमेतद्यथाबलं ॥ कच्छुराधातकीबिल्व-समंगारक्तमूलिभिः ॥ मसूराश्वत्थशुंगैश्च यवागूः स्याज्जले शृतैः ॥ बालोदुंबरकट्वंगसमंगाप्लक्षपल्लवैः ॥ मसूरधातकीपुष्पबलाभिश्च तथा भवेत् ॥ नानाप्रकारा जायंते व्यापदो बस्तिविभ्रमात् ॥ यथाय-थं यथावस्थं तासां कुर्वीत साधनं ॥ इति बस्तिव्यापत्सिद्धिर्नाम-षष्ठोऽध्यायः ॥ ६ ॥

अथातः स्नेहव्यापदिकां सिद्धिं व्याख्यास्यामः ॥ स्नेहबस्तौ मरु-त्पित्तकफात्यशनविट्चयैः ॥ आवृतौ भुक्तदत्तामे सप्तधा व्यापदः स्मृताः ॥ शीतो ऽल्पो वा धिके वाते पित्ते ऽत्युष्णः कफे मृदुः ॥ अतिभुक्तेगुरुवर्चःसंचये ऽल्पबल स्तथा ॥ दत्तस्तैरावृतः स्नेहो ना-यात्यभिभवादपि ॥ स्तंभोरुसदनाध्मानज्वरशूलांगमर्दनैः ॥ पार्श्व-रुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतं ॥ स्निग्धाम्ललवणोष्णै स्तं रास्ना-पीतद्रुतैलिकैः ॥ सौवीरकसुराकोलकुलत्थयवसाधितैः॥निरूहैर्निर्हरेत्स-म्यक्समूत्रैः पांचमूलिकैः॥ताभ्यामेव च तैलाभ्यां सायं भुक्ते ऽनुवास-येत् ॥ तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ॥ विद्यात्पित्तावृतं स्वादु-तिक्तैस्तं बस्तिभिर्हरेत् ॥ तंद्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ समूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतं ॥ कषायातिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ॥ छर्दिमूर्च्छारुचिग्लानिशूलनिद्रांगमर्दनैः ॥ आमलिंगैः सदाहैस्तं विद्यादत्यशनावृतं॥ कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनं ॥ मृदुर्विरेकः सर्वं च तत्रामविहितं हितं ॥ विण्मूत्रानिलसंगा-र्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सबस्तिभिः

---

१ पिंडिकोद्वेष्टनैः ॥ २ सर्वात्तिभिरिति पाठः ॥

॥ श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ॥ निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ॥ अभुक्ते शूनपायौ वा पेयामात्राशितस्य वा ॥ गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ॥ ऊर्ध्वं कायं ततः कंठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ मूत्रश्यामात्रिवृत्तसिद्धो यवकोलकुलत्थवान् ॥ तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ कंठादागच्छतः स्तंभकंठग्रहविरेचनैः ॥ छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्त्तनं ॥ नापक्कं प्रणयेत्स्नेहं गुदं स ह्युपलिंपति ॥ ततः कुर्यात्सरुङ्मोहकंडूशोफान् क्रिया ऽत्र च ॥ तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतं ॥ ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबंधनं ॥ पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ॥ अप्राप्त्यतिगतिक्षोभकषणक्षणनस्रवाः ॥ गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमं ॥ मांसलस्निग्धविषमजालवत्स्थूलवातलाः ॥ छिन्नः क्लिन्नश्च तानष्टौ बस्तीन्कर्मसु वर्जयेत् ॥ गतिवैषम्यदौर्गंध्याजिह्मत्वस्रुतिदुर्ग्रहाः ॥ फेनिलच्युसधार्यत्वं बस्तेः स्युर्बस्तिदोषतः ॥ उच्चकैरत्यवाक्शीर्षमूर्ध्वंसंकुचितस्थितं ॥ उत्तानं दक्षिणं पार्श्वं सप्त शय्याः परित्यजेत् ॥ मूत्राघातो ऽत्रसंप्राप्तिरप्राप्तिः साधुतागतिः ॥ आश्वागतिर्मरुत्कोपस्तृप्तिः पक्वाशयस्य च ॥ तद्दोषाः स्युर्विधातव्यं यथोपयिकमत्र च ॥ संवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकंपिताः ॥ अतिमंदकबाह्यातिवेगदोषाः प्रणेतृतां ॥ अनुच्छ्वासानुबंधे वा दत्ते निःशेष एव वा ॥ प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ॥ तत्राभ्यंगो गुदे स्वेदो वातघ्नान्यशनानि च ॥ द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ॥ स्यात्कटीगुदजंघोरुबस्तिस्तंभार्तिभेदनं ॥ भोजनं तत्र वातघ्नं स्वेदाभ्यंगाः सबस्तयः ॥ तिर्यग्वल्याद्वतद्वारे बद्धे वा ऽपि न गच्छति ॥ नेत्रे तदृजु निष्कास्य संशोध्य च पुनर्नयेत् ॥ पीड्यमाने ऽतरा

१ मूत्राघाताविसंप्राप्तिरिति पाठः २ स्तृप्तिरि०पा० ३ संघातातिद्रुतोत्क्षिप्तेति पाठः हेमाद्रौ

मुक्ते गुदे प्रतिहतोऽनिलः ॥ उरःशिरोरुजं सादमूर्वोश्च जनयेद्वली ॥ वस्तिः स्यात्तत्र बिल्वादिफलश्यामादिमूत्रवान् ॥ स्याद्दाहो दवथुः शोफः कंपनाभिहते गुदे ॥ कषायमधुराः शीताः सेकास्तत्र सबस्तयः ॥ अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः ॥ स्यात्सार्तिदाहनिस्तोदगुरुवर्चःप्रवर्तनं ॥ तत्र सर्पिःपिचुः क्षीरं पिच्छाबस्तिश्च शस्यते ॥ न भावयति मंदस्तु बाह्यश्चाशु निवर्त्तते ॥ स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता ॥ अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलं ॥ तत्र बस्तिर्विरेकश्च गलपीडादिकर्म च ॥ वमनाद्यैर्विशुद्धं च क्षामदेहबलानलं॥ यथांऽडं तरुणं पूर्णं तैलपात्रं यथा तथा॥ भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपचारतः ॥ दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ स्वादुतिक्तौ तथा भूयः कषायकटुकौ ततः ॥ अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥ सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ अत्रांतरे त्यजेदष्टौ भाष्यादीनि विशेषतः ॥ उच्चैर्भाष्याच्छिरोरोगतिमिरोरःस्वरव्यथाः ॥ रक्तनिष्ठीवतमकज्वराद्यास्तत्र साधनं ॥ अभ्यंगस्वेदनस्याधोभक्तस्नेहोपसेवनं ॥ मौनं विधिर्वातहरो यथास्वं वा विकारजित्॥अत्यास्यायानयानाभ्यां संधिमूर्द्धत्रिकादिरुक्॥अतिचंक्रमणात्पादजंघोरुसदनादयः ॥ तेषां वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ अजीर्णभोजनादामविषच्छर्दिज्वरादयः ॥ तत्र मात्राशितीयोक्तो विधेयो विधिरामहा ॥ अहितान्नाद्यथादोषं रोगाः स्युर्भेषजानि च ॥ हलीमकादयः प्रोक्ता दिवास्वप्नात्पुरा गदाः ॥ विदध्यात्कफजित्तेषु धूमरूक्षान्नलंघनं ॥ व्यवायाज्जीवितभ्रंशात्तैस्तैरस्यानिलामयैः॥ गुदोऽवलुप्यतइव भ्रमतीव च चेतना ॥ मेढ्रं धूमायति मनस्तमसीव प्रवेक्ष्यते ॥ जीवनीयभृतक्षीरसर्पिषोरुपयोजनं ॥ आहारो बृंहणस्तत्र

१ एकत्रस्थितिः

वृष्यास्ते ते च बस्तयः ॥ वेगरोधोर्ध्ववातत्वात्प्रागुक्ता ये सदाऽऽतुराः ॥ तेषां विबद्धे पवने सर्वदेहोपतापिनि ॥ फलवर्तिंपुरा दद्यादथ बस्तिं बलावहं ॥ निकुंभकुंभाग्न्युरुबूकधावनी पुनर्नवं दारु महच्च पंचकं ॥ फलं च मूत्रे क्वथितं समस्तु घृतं सतैलं लवणानि पंच ॥ निरूहितं धन्वरसेन भोजयेन्निकुंभतैलेन ततोऽनुवासयेत् ॥ बलां सरास्नां फल-मूलचित्रकाद्विपंचमूलं कृतमालकात्फलं ॥ यवान्कुलत्थांश्च पचेज्जले रसः समुस्तपाठेंद्रयवैश्च कल्कवान् ॥ सतैलसर्पिर्गुडसैंधवो हितः सदाऽऽतुराणां बलपुष्टिवर्णदः ॥ तथाऽनुवास्यं मधुकेन साधितं बालेन बिल्वेन शताह्वया ऽथवा ॥ सजीवनीयस्तु रसोऽनुवासने निरूहणे चालवणः शिशोर्हितः ॥ न चान्यदाश्वंगबलाभिवर्द्धनं निरूहबस्ते-शिशुवृद्धयोर्हितं ॥ ॥ इति स्नेहव्यापत्तिसिद्धिर्नाम सप्तमोऽध्यायः॥७॥

अथातो भेषजकल्पं व्याख्यास्यामः ॥ जांगले साधारणे वा देशे यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेवतायतनागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुश-रोहिषास्तीर्णे स्निग्धकृष्णसुवर्णवर्णमधुरसुरभिमृत्तिके मृदावफालकृष्टे-ऽनुपहतेऽन्यैर्बलवत्तरैर्द्रुमैर्भेषजानि प्रशस्यंतइति सामान्यतो भूमिप-रीक्षा॥विशेषतस्त्वश्मवती स्थिरा गुर्वी श्यामा कृशस्थूलतृणा वृक्षसस्य-प्राया स्वगुणभूयिष्ठा॥स्निग्धा शीतलाऽऽसन्नोदका स्निग्धतृणसस्यकोम लदलप्राया शुक्ला चांबुगुणभूयिष्ठा॥नानावर्णा लघुपुष्पवती प्रविरलपां-डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा॥ रासभभस्मवर्णा रूक्षा तनुकोटरोषरप्रा-याऽल्परसप्ररोहाऽनिलगुणभूयिष्ठा ॥ मृद्वी समा श्वभ्रवत्यव्यक्तरसज-ला महापर्वतवृक्षा श्यामाऽऽकाशगुणभूयिष्ठा ॥ तत्रांबुपृथिवीगुण-भूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यंते ॥ अन-लानिलाकाशगुणभूयिष्ठासु वमनानि ॥ सर्वगुणयुक्तासूभयतोभागा-नि ॥ आकाशगुणभूयिष्ठासु शमनानि ॥ एवं बलवत्तमानि भवंति ॥

तत्र यानि कालजान्युपगतसंपूर्णप्रमाणरसवीर्यगंधानि कालातपाग्निसलिलपवनशस्त्रजंतुभिरनुपहतगंधवर्णरसस्पर्शप्रभावान्यवगाढमूलान्युदीच्यां दिशि स्थितानि ॥ तेषां शाखापलाशमचिरप्ररूढं वर्षावसंतयोर्ग्राह्यं ॥ ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानां ॥ शरदि त्वक्कंदक्षीराणि ॥ हेमंते साराणि ॥ यथर्तुफलपुष्पं ॥ अन्ये पुनराहुः ॥ सौम्यान्यौषधानि सौम्येष्वृतुष्वाग्नेयान्याग्नेयेषु ॥ एवमव्यापन्नान्यापूर्णतररसवीर्याणि भवंति ॥ अथ मंगलाचारकल्याणवृत्तिः शुचिः शुक्लवासाः संपूज्य देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुखउदङ्मुखो वा गृण्हीयात् ॥ गृहीत्वा चानुरूपगुणवद्भाजने संस्थाप्यागारेषु पूर्वोत्तरद्वारेषु निवातप्रवातैकदेशेषु[1] नित्यपुष्पोपहारबलिकर्मस्वग्निसलिलोपस्वेदधूमरजोमूषिकचतुष्पादाद्यनभिगमनीयानि स्ववश्यानि शिक्येष्वासज्य स्थापयेत् ॥ तानि सक्षीराण्युपकल्पयेत्[2] ॥ तदभंपत्तावनतिक्रांतसंवत्सराणि ॥ पुराणानि तु पिप्पलीविडंगगुडमधुघृतानि ॥ अपिच ॥ क्षीरं बाष्कयणं[3] ग्राह्यं शकृन्मूत्रं च नीरुजं ॥ वयोबलवतां धातुपुच्छशृंगखुरादिकं॥पंचविधस्तु भेषजानां कषायः कल्प्यः ॥ निर्यासः कल्को निर्यूहः शीतः फांटश्च ॥ ते यथापूर्वं बलिनः ॥ तत्र सद्यः समुद्धृतप्रक्षालितक्षुण्णस्य तांतवनिष्पीडितस्य स्वरसो निर्यासः ॥ उपलदशनादिपिष्टस्तु कल्कः ॥ सूक्ष्मतांतवच्युतश्चूर्णः ॥ तस्य समस्तद्रव्यापरित्यागादाप्लुतोपयोगाच्च कल्कादभेदः ॥ क्काथो निर्यूहः ॥ स तु भेद्यान्यौषधान्यणुशो भेदयित्वा छेद्यानि च छेदयित्वा प्रक्षाल्योदकेन शुचौ रूक्षायामधःप्रलिप्तायां ताम्रायोमृन्मयान्यतमस्थाल्यां समावाप्य बहुलपानीयग्राहितानामौषधानामाकलय्य यावता मुक्तरसता स्यात्तावदुदकमासेचयेच्छोषयेच्च ॥ अथाग्नावधिश्रि-

१ प्रवातोदंकदेशेष्विति हेमाद्रौ पाठः २ आर्द्राणि ३ प्रौढवत्सा गौर्बष्कयणी तस्याइदं बाष्कयणं

त्य महत्यासने सुखोपविष्टः सर्वतः सततमवलोकयन् दर्व्या च वि-
घट्टयन् मृदुना च परितः समुपगच्छता ऽनलेन साधयेत् ॥ अव-
तार्य च सुपरिस्रुतं यथार्हस्पर्शं प्रयुंजीत ॥ क्षीरादिसहितं च द्रव्यं
न सम्यङ्मुक्तरसं भवतीति वारिक्वाथपूर्वकं क्षीराद्यैस्तदुपदेशेनानु-
पदग्धं क्वाथयेत् ॥ शीतसलिलाप्लुतं तु निशापर्युषितं पूतं शी-
तः ॥ उष्णांभसि क्षुण्णाभिषुतपूतं फांटः ॥ तत्र सम्यग्रसवीर्यादी-
न्यौषधस्य समीक्ष्य व्याध्यातुरादिबलतश्च निर्यासादीनां कल्पना-
नां मात्रां च संश्रयेत् ॥ तथाच केचिदाहुः ॥मात्राया न व्यवस्थानं
देहं दोषं बलं वयः ॥ आलोच्य देशकालौ च भैषज्यमवचारयेत् ॥
इत्यलं ॥ तदेवमुपदिष्टं बुद्धिमतां ज्ञानप्रबोधाय ॥ यथा तु सर्वे
भिषजो विज्ञास्यंति तथोपदेक्ष्यते ॥ निर्यासस्य मध्यमा मात्रा च
तुष्पलं ॥ कल्कचूर्णयोः कर्षः पलत्रयं तदालोडने॥ निर्यूहे भेष-
जपलमुदकार्द्धप्रस्थेऽधिश्रित्य पादशेषितमवतारयेत् शीतफांटयो-
रौषधपलं षड्भिश्चतुर्भिरंबुपलैरासुतमिति ॥ स्नेहपाके त्वनिर्दिष्टप्रमा-
णे समुदितस्य द्रवस्य पादेन स्नेहः प्रयोज्यस्तत्पादेन कल्कः ॥ अ-
न्ये पुनः पठंति ॥ स्नेहे सिध्यति शुद्धांबुनिःक्वाथस्वरसैः क्रमात् ॥
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमं ॥ पंचप्रभृति तु द्रवं पृथ-
क्स्नेहसममेवावपेत् ॥अनिरूपितकल्पजं भेषजं कल्कीकुर्यात् ॥
अथैकध्यं प्रतिसंसृज्याधिश्रित्य च निर्यूहवत्साधयेत् ॥ तत्र यदा-
विरमति शब्दः प्रसादमापद्यते स्नेहो यथास्ववर्णगंधरसोपपत्तिर्भै-
षज्यमंगुलीभ्यां गृह्यमाणमनतिमृद्वनतिदारुणमनंगुलिग्राहिता च स्या
त् स कालस्तस्यावतारणाय॥ अपिच ॥ घृतस्य फेनोपशमस्तैल-
स्य तु तदुद्भवः ॥ लेहस्य तंतुमत्ताप्सु मज्जनं सरणं न च ॥अथा-
वतार्य शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलशे समा-

१ मृद्यमानमिति पाठः

सिच्यापिधानेन वा पिधाय शुक्लेन वस्त्रपट्टेनावच्छाद्य सूत्रेण सुबद्धमनुगुप्तं शुचौ देशे सुस्थितं स्थापयेत्॥ परिमाणं पुनः षड्वंश्यो मरीचिः ॥ ताः षट् सर्षपः ॥ ते ऽष्टौ तंडुलः ॥ तौ धान्यमाषः ॥ तौ यवः ॥ अतः परं चतुर्गुणवृत्त्यांऽडिकामाषकशाणकर्षपलकुडवप्रस्थाढकद्रोणवहाः कल्प्यंते ॥ धरणं तु पलदशभागः ॥ माषकस्य पर्यायो हेमो धानकश्च ॥ शाणद्वयस्य क्षुद्रमः कोलो वटकश्च ॥ कर्षस्य सुवर्णमक्षं पिचुर्बिडालपदकं पाणितलं तिंदुकं कवलग्रहः षोडशिका च ॥ कर्षद्वयस्य शुक्तिरष्टमिका च ॥ पलस्य मुष्टिः प्रकुंचश्चतुर्थिका बिल्वमात्रं च ॥ पलद्वयस्य प्रसृतोऽष्टमानं च ॥ कुडवस्यांजलिः ॥ कुडवद्वयस्य मानिका ॥ आढकस्य पात्रं कंसश्च ॥ द्रोणस्य नल्वणार्मणोन्मानघटकुंभकलशाः ॥ द्रोणद्वयस्य शूर्पः ॥ तुला पुनः पलशतं ॥ तानि विंशतिर्भारइति ॥ ॥ भवति चात्र ॥ शुष्कमेये त्विदं मानं द्विगुणं तु द्रवार्द्रयोः ॥ पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ कल्पयेत्सदृशान् भागानप्रमाणं यत्र नोदितं ॥ अनिर्दिष्टाप्रसिद्धेषु मूलं ग्राह्यं त्वगादिषु ॥ स्नेहपाकस्त्रिधा मंदश्चिक्कणः खरचिक्कणः ॥ मंदः कल्कसमे किट्टे चिक्कणो मदनोपमे ॥ किंचित्सीदति कृष्णे च वर्त्तमाने तु पश्चिमः ॥ दग्धोऽतऊर्ध्वं निष्कार्यः स्यादामस्त्वग्निसादकृत् ॥ मृदुर्नस्ये खरोऽभ्यंगे पाने बस्तौ च चिक्कणः ॥ हिमवद्विंध्यशैलाभ्यां प्रायो व्याप्ता वसुंधरा ॥ सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैंध्यमौषधं ॥ ॥ इति भेषजकल्पोनामाष्टमोऽध्यायः ॥ ८ ॥

॥ इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टांगसंग्रहे पचमं कल्पसिद्धिस्थानं संपूर्णम् ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥

॥ श्री ॥

# अष्टांगसंग्रहे

## उत्तरस्थानम् ६

श्रीगणेशाय नमः ॥ धन्वंतरये नमः ॥ अथातो बालोपचारणीयमध्यायं व्याख्यास्यामः ॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥ अथ खलु जातमात्रमेव बालमुल्बात्सैंधवसर्पिषा विशोधयेत् ॥ ततोऽस्यातिप्रबलमोहज्वरपरीतसर्वगात्रस्य क्रोशितुमपि रुजानुरूपमसमर्थस्यानवस्थिताशेषदेहधातोरसंभाव्ययौवनाद्यवस्थस्य क्रकचस्पर्शमिव करवसनशयनसंसर्गं मन्यमानस्याविकल्पितमंगानि विक्षिपतः पुनरिव मरणमनुभवतो लीयमानसंज्ञस्यातिसंबाधयोनिपुटावपीडितप्राणप्रत्यायनाय बलातैलेन परिषेकं कुर्यात् ॥ कर्णमूले चाश्मनोः संघट्टनं ॥ यदि वाऽचेष्ट एव स्यात्ततः कृष्णकपालिकाशूर्पेण चैनमभिनिष्पूयाद्दक्षिणकर्णमूले च मंत्रमस्योच्चारयेत् ॥ अंगादंगात्संभवसि हृदयादभिजायसे ॥ आत्मा वै पुत्रनामासि संजीव शरदां शतं ॥ शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि ॥ नक्षत्राणि दिशो रात्रिरहश्च त्वाऽभिरक्षतु ॥ प्रत्यागतप्राणस्य च प्रकृतिभूतस्य नाभिनालं मूलाच्चतुरंगुलस्योर्ध्वं क्षौमसूत्रेण बध्वा तीक्ष्णेन शस्त्रेण वर्द्धयेत् ॥ ग्रीवायां चैनमवसंजेन्नाभिं कुष्टतैलेन सेचयेत्ततः क्षीरिवृक्षकषायेण सर्वगंधोदकेन वा तप्ततपनीयरजतनिर्वापणकवोष्णेन कपित्थपत्रकषायेण

---

१ उल्बादपरापरपर्यायात् २ सैंधवयुक्तेन सर्पिषा ३ वादनं कारयेद्वैद्यः ४ छेदयेत् ५ योजयेत् ६ सर्वेषां गंधानां चंदनादीनां जलेन ७ इदं विशेषणं सर्वेषु स्नानकल्पेषु योज्यं

वा तद्विधेन स्नापयेत्ततोस्य सुपरिलिखितनखया सुप्रक्षालितोपधा- नया कार्पासपिच्चवगुंठितया दक्षिणप्रदेशिन्या जिह्वौष्ठकंठमनुसुखं प्रमृज्यात्तालु चोन्नम्य स्नेहपिचुनोपरिष्टादवगुंठयेत्ततश्चैंद्रीब्राह्मीशं खपुष्पीवचाकल्कं मधुघृतोपेतं हरेणुमात्रं[1] कुशाग्राभिमंत्रितं[2] सौवर्णे- नाश्वत्थपत्रेण मेधायुर्बलजननं प्राशयेत्तद्वद्ब्राह्मीबलाऽनंताशतावर्य- न्यतमचूर्णं वा ॥ ततः सैंधवोपहितेन सर्पिषा गर्भोदकानि वामयेत्त- थास्योरःकंठविशुद्ध्या लाघवमभिलाषश्च जायते ॥ अथास्य जात- कर्म प्राजापत्येन विधिना कुर्यात् ॥ अपिच ॥ सिराणां हृदयस्थानां- विवृतत्वात्प्रसूतितः ॥ तृतीयेऽन्हि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ तस्मात्प्रथमेऽहन्यनंतामिश्रे मधुसर्पिषी मंत्रपूते त्रिकालं प्राशयेत् ॥ द्वितीये लक्ष्मणासिद्धं सर्पिस्तृतीये च ॥ ततः प्राङ्निवारितस्तन्यस्य स्वपाणितलसंमितं[3] सर्पिर्द्विकालं दापयेदनंतरं च स्तन्यमिष्टं ॥ अह स्तश्चास्य स्रोतः शृंगाटकं स्नेहाप्लुतेन प्रच्छादयेत्प्राक्शिरसं चैनं क्षौ- मनिचये संवेशयेदुच्छीर्षके चास्याभिमंत्रितमुदकुंभं स्थापयेत् द्वा रपक्षयोश्च ॥ अद्वारीविदारीबदरीखदिरपीलुनिंबपरूषकशाखाभिरेनं बीजयेत्ताभिश्च समंततःसूतिकागारं परिवारयेत्सर्षपाः कणिकाश्चां तर्बहिः प्रकिरेत्सायं प्रातश्च बलिं ग्रहोक्तैश्च गुग्गुल्वादिभिर्धूमं कुर्वी- त ॥ तथा ब्राह्मणादथर्वविदो दशाहं शांतिकर्म ॥ आर्यां महामायू रीमार्यरत्नकेतुचारिणीं चोभयकालं वाचयेत्॥ हिंगुवचाकुष्ठरक्षोघ्नैः पोटलिकामुत्तरदेहल्यामासज्जेत् ॥ कुमारस्य च सह मातुः कंठे उ- च्छीर्षके च ॥ तद्वदार्यपर्णी शतावरीमार्यापराजितां च रोचनाभिलि खितां द्वारे च ॥ देहलीमनुतिर्यङ्मुसलं निधापयेत् ॥ कणकंटकातिं- दुकेंधनस्याग्निर्नक्तं दिनं जागृयात्तथानुरक्ताः स्त्रियः सुहृदश्च ॥ प्रह्व

१ रेणुकबीजप्रमाणं २ प्रागुक्तमंत्रेणाभिमंत्रितं ३ स्वशब्देन बालस्तस्यैवपाणे- स्तलेन मध्येन संमितं तत्प्रमाणं

ष्टजनसंपूर्णं च तद्वेश्म कार्यं॥अथास्य समानवर्णा मध्यमवयाः शुचि-
रलोलुपा निभृता नातुरा जीवद्वत्सा वत्सला ब्रह्मचारिण्यव्यंगा च
बहुक्षीरा शुक्लांबराचारा दीर्घह्रस्वादिदेहदोषाष्टकरहिता लंबोर्ध्वचू-
चुकातिहीनपीनस्तनदोषरहिता युक्तचूचुका धात्री स्यात्तस्या एव
स्तन्यं पिबेत्तच्चोदकपात्रे दुह्यमानमेकतां यदुदकेन सह गच्छति व-
क्ष्यमाणदोषरहितं च तच्छुद्धमारोग्यं बलजननं॥अथ च धात्री स्नाता
ऽनुलिप्ता नित्यमहतवासाः सुमनाः सुप्रजा स्थापनौषधीः शिरसा बि
भ्राणा प्राङ्मुखी स्तनं प्राग्दक्षिणं धौतमीषत्परिस्रुतं पाययेत् ॥ ना-
नास्तन्यस्य ह्यसात्म्यत्वान्नानाविधव्यापदो भवंति ॥ अपरिस्रुते चा
तिस्तन्यपूर्णस्तनपानेनाक्षेहनात्कासश्वासज्वरच्छर्दीषां संभवः ॥ रू-
क्षान्नपानकर्शनक्रोधशोककामादिभिः स्तन्यनाशः ॥ स्तन्यजनना
नि मद्यानि सीधुवर्जान्यानूपमांसानि द्रवाः स्वाद्वम्ललवणप्रायाश्चा-
हाराः क्षीरिण्यश्चौषधयः क्षीरपानमनायासः सौमनस्यं च ॥ न च
क्षुधितशोकार्तश्रांतक्रुद्धप्रदुष्टधातुगर्भिणीविरुद्धाहारभुक्तानां स्तन्यं
पाययेन्नाजीर्णौषधं च बालमिति॥भवति चात्र॥षष्ठीं निशां विशेषेण
कृतरक्षाबलिक्रियाः॥ जागृयुर्बांधवास्तस्य दधतः परमां मुदं॥दशमे द्वा
दशे वाऽन्हि गोत्रोचारैः शुभैः शुभे ॥ सूतास्नानोत्सवं कुर्यात्पिताऽप-
त्यस्य नाम च ॥ दिने शततमे वाऽऽख्यां पूर्णसंवत्सरेऽथवा ॥
बिभ्रतोंऽगे मनोह्वालरोचनागुरुचंदनं ॥ पूज्यत्रिपुरुषानूक्रमादौ घोष
वदक्षरं ॥ अवृद्धं कृतमूष्मांतमनरातिप्रतिष्ठितं ॥ नक्षत्रदेवतायुक्तं
तदेव न तु केवलं ॥ मंगल्यमंतरंतस्थं न दुष्टं न च तद्धितं ॥ पुंसो
विसर्जनीयांतमसवर्णं स्त्रियाः पुनः ॥ विषमाक्षरमक्रूरं विस्पष्टार्थं म-
नोरमं ॥ सुखोच्चं दीर्घवर्णांतमाशीर्वादाभिधानवत् ॥ ततः प्रकृति-
भेदोक्तरूपैरायुः परीक्षणं ॥ प्रागुदक्शिरसः कुर्याद्बालस्य ज्ञानवान्

---

१ जीवंत्यायाः २ प्रकृतिभेदे विकृतिविज्ञानीये उक्तानि रूपाणि तैः

भिषक्।।प्रशस्तवास्तुशरणं सज्जोपकरणं शुचि ।। निवातं च प्रवातं च वृद्धस्त्रीवैद्यसेवितं ।। निर्मत्कुणाखुमशकमतमस्कं च शस्यते ।। शुचि धौतोपधानानि निर्वलीनि मृदूनि च ।। शय्यास्तरणवासांसि रक्षोघ्नै-र्धूपितानि च ।। काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।। वचा ह्यकुष्ठश्रीवेष्टसर्षपैर्धूपयेत्सदा ।। बोधयेत्सहसा सुप्तं नो न चैनं समु-त्क्षिपेत् ।। तथा ह्यस्य समुत्त्रासो वेगरोधश्च जायते ।। माक्षिकामलक-व्योषबृहतीमूलसैंधवैः ।। श्लेष्मापनोदरुच्यर्थमुखमंतः परामृशेत् ।।जी वत्खड्गादिशृंगेषु समासक्तान् शुभान्मणीन् ।। धारयेद्दश चैंद्र्यादीन् जीवकर्षभकानपि ।। हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचां ।। आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोभिरक्षणीं ।। स्तन्यदोषाद्गदास्तस्य यथोक्तं तत्पिबेदतः ।। पीनोऽति कंधराभंगं कुर्यादूर्ध्वाक्षमूर्ध्वगः ।। उ-च्छ्वासरोधाल्लंबोऽति स्तनो जीवितसंशयं ।। न गर्भिण्याः पिबेत्स्तन्यं पारिगर्भिककृद्धि तत् ।। स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबे-त् ।। मूलैः सिद्धं बृहत्याद्यैः स्थिराभ्यां वा सितायुतं ।। चतुर्थे सूति कागारादग्निस्कंधपुरोगमात् ।। मासे निष्कामयेद्देवान्नमस्कर्तुं स्वलं कृतं ।। पंचमे मासि पूर्णेऽन्हि धरण्यामुपवेशयेत् ।। द्विकिष्कुमात्रं लि प्तायां बलिं दत्वा चतुर्दिशं ।। धरण्यशेषभूतानां माता त्वमसि कामधु क् ।। अजरा चाप्रमेया च सर्वभूतनमस्कृता ।। चराचराणां लोका-नां प्रतिष्ठाऽस्यव्यथाऽसि च ।। कुमारं पाहि मातेव ब्रह्मा तदनुमन्य-तां ।। स्वाहेति मंत्रेणानेन प्रत्यहं च ततः परं ।। साश्रयं सावलंबं च कटयादीन्मर्दयेदनु ।। षष्ठेऽन्नप्राशनं मासि क्रमात्तच्च प्रयोजयेत्।।चि रान्निषेवमाणोऽन्नं बालो नातुर्यमश्नुते ।। भजेद्यथा यथा चान्नं स्त-न्यं त्याज्यस्तथा तथा ।। षट् सप्ताष्टममासेषु नीरुजस्य शुभेऽहनि ।। कर्णौ हिमागमे विध्येद्धात्र्यंकस्थस्य सांत्वयन् ।। प्राग्दक्षिणं कुमा-रस्य भिषग्वामं तु योषितः ।। दक्षिणेन दधत्सूचीं पालीमन्येन पाणि

ना ॥ मध्ये तत्कर्णपीठस्य किंचिद्गंडाश्रयं प्रति ॥ जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ॥ धृतस्य निश्चलं सम्यगलक्तकरसांकिते ॥ विध्येद्दैवकृते छिद्रे सकृदेवर्जुलाघवात् ॥ नोर्ध्वं न पार्श्वतो नाधः सिरास्तत्र हि संस्थिताः ॥ कालिकामर्मरीरक्तास्तद्व्यधाद्रागरुग्ज्वराः ॥ सशोफदाहसंरंभमन्यास्तंभापतानकाः ॥ तेषां यथामयं कुर्याद्विभज्याशु चिकित्सितं ॥ स्थानव्यधान्न रुधिरं न रुग्रागादिसंभवः ॥ स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ॥ आमतैलेन सिंचेच्च बहलां तद्वदारया ॥ विध्येत्पालीं हितभुजः संचार्याथ स्थवीयसी ॥ वर्त्तिर्त्र्यहात्ततो रूढं वर्द्धयेत शनैः शनैः ॥ स्वेदितोद्वर्तितं कर्णमभ्यक्तं बृंहणैः पुनः ॥ नाजीर्णे न मलोद्रेके न चात्युष्णे विवर्द्धयेत् ॥ सदा च युंज्यादभ्यंगान्कर्णपालीगदोदितान् ॥ पुष्टिनीरुक्त्वजननानिति संवर्द्धिते दृढे ॥ कलधौतावबद्धानि कर्णे रत्नानि निक्षिपेत् ॥ छिंद्यादवृद्धौ स्त्रीणां तु पालिमंतरपांगतः ॥ देवतापांगयोर्बाह्यं व्यापदः स्युस्ततो ध्रुवाः ॥ जिह्मसूचीव्यधाद्वर्तिगाढत्वादथवा मलैः ॥ जाते महति संरंभे वर्त्तिमाश्वपनीय तत् ॥ यवैरंडजटायष्टीमंजिष्ठाद्यैः प्रलेपयेत् ॥ सुरूढं च पुनर्विध्येत्त्वरया तु विवर्द्धनात् ॥ छिद्येत पाली शुद्धस्य शुद्धास्तां संदधीत तां ॥ कर्णामयनिषेधोक्तसंधानविधिना भिषक् ॥ वर्षं स्ववसतेर्बाह्यं कुमारस्य न दर्शयेत् ॥ दीपमातपमग्निं च रूपमन्यच्च भासुरं ॥ अथैनं जातदशनं क्रमशोऽपनयेत्स्तनात् ॥ पूर्वोक्तं योजयेत्क्षीरमन्नं च लघु बृंहणं ॥ कुर्यादपस्तनं स्नेहसंक्रांत्या स्तनलेपनैः ॥ बीभत्सैर्याबकासेककृत्रिमक्षतदर्शनैः॥पियालमज्जामधुकमधुलाजसितोपलैः ॥ अपस्तनस्य संयोज्यः प्रीणनो मोदकः शिशोः ॥ दीपनो बालबिल्वैलाशर्करालाजसक्तुभिः ॥ संग्राही

१ स्थूलां २ आराचर्मकाराणांचर्मच्छेदनशस्त्रमितिसुश्रुतेऽलक्षणः ३ छागं गव्यं वा तद्गुणं ४ एतन्नामामोदकः

धातुकीपुष्पशर्कराळाजतर्पणैः॥बुभुक्षा चेत्प्रवलतामपस्तन्यस्य गच्छ-
ति ॥ अत्यग्निजिद्धितं तस्य विधानं पारिगर्भिकं॥ अभियुक्तः सदा-
चारो नातिस्थूलो न लोलुपः ॥ कुमारधारः कर्नंव्यस्तत्राद्यो बाल
चित्तवित् ॥ अधार्मिकं दुराचारः स्थूलो विकटगामिनं ॥ करोति लो-
लुपो बालं घस्मरत्वेन रोगिणं ॥ रोगांश्चास्य जयेत्सौम्यैर्भेषजैरविषा-
दकैः ॥ अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ त्रासयेन्नाविधेयं
च त्रस्तं गृह्णंति हि ग्रहाः ॥ वस्त्रवातातपखरस्पर्शात्पालयेल्लंघिताच्च तं
॥ क्रीडाभूमिः समा कार्या निःशस्त्रोपलशर्करा ॥ बिल्वोषणकणांभो-
भिः सिक्ता निंबोदकेन वा ॥ जातुषं घोषवच्चित्रमत्रासं रमणं बृहत् ॥
अतीक्ष्णाग्रं गवाश्वादिमंगल्यमथवा फलं ॥ शक्तिमंतं यथावर्णं वि-
द्यामध्यापयेत्ततः ॥ अनुशिष्यात्सदा चैनं धर्माय विनयाय च ॥ य-
था नेंद्रियदुष्टाश्वैर्ह्रियते यौवनागमे ॥ अभ्यंगोद्वर्तनं स्नानं प्रत्यहं च
समाचरेत् ॥ सहदेवास्थिराकौंतीकुसुमोत्पलचंदनैः॥ बृहतीफलतर्का-
रीसर्षपाकुष्टसैंधवैः ॥ अश्वगंधावचैरंडतिलापामार्गतंदुलैः ॥ सात्म-
गुप्ताफलैस्तैलं साजक्षीरं विपाचितं ॥ रक्षोघ्नः पुष्टिदोऽभ्यंगस्तद्वदुद्व-
र्त्तनं च तैः ॥ दधिमाक्षिकसंयुक्तैस्त्रिगुणीकृतचिक्कसैः ॥ मूर्वामूलह्रिर-
जनीयवैश्चोद्वर्त्तनं हितं ॥ कुलत्थचूर्णमेवं वा वाजिगंधारजोऽपि वा ॥
स्नाने सर्वौषधीकल्को जीवनीयांबुचेष्यते ॥ आरग्वधादिनिर्यूहे शृतं
शीतवसंतयोः ॥ वत्सकादिप्रतीवापं कुमारं प्राशयेद्घृतं ॥ ग्रीष्मे वा-
तातपस्वेदैर्बालः क्रामत्यतो हिमं ॥ प्रातरेव पिबेद्दुग्धं जीवनीयग-
णे शृतं ॥ सिताघृताढ्यान् सक्तूंश्च लिह्यान्न त्वेवपीतकं ॥ धा-
न्याम्लपायी लिह्याद्वा घृतसात्म्यो घृतं शृतं ॥ काकोलीशर्क-
रामेदातुल्यायष्ट्याह्वजीवकैः ॥ कुटन्नटेन मूर्द्धानं लिंपेदन्यैश्च शी-
तलैः ॥ रास्नासरलवर्षाभूहिंगुसैंधवदारुभिः ॥ सर्पिर्विदार्यादिजले

१ चिक्कसं यवपिष्टं

साधितं लेहयेच्छिशुं ॥ प्रपौंडरीकं मधुकं शूर्पपर्ण्यौ दुरालभा ॥ प्रियालमज्जा काकोली विदारी कट्फलाऽमृता ॥ द्राक्षाऽजशृंगी दुग्धीका क्षीरशुक्ला हयाह्वया ॥ शृंगी मधुककुसुममेदर्षभकजीवकं ॥ एभिः क्षीरं घृतं सिद्धं लिह्याद्वालो घनात्यये ॥ ब्राह्मीसिद्धार्थकवचासारिवाकुष्टसैंधवैः ॥ सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद्घृतं ॥ आयुष्यं पापरक्षोघ्नं भूतोन्मादनिबर्हणं ॥ त्रिफला लक्ष्मणाऽनंता समंगा सारिवा वचा ॥ ब्राह्मी पाठा द्विबृहती द्विस्थिरा द्विपुनर्नवं ॥ सहदेवा रवेर्वल्ली पयस्या गिरिकर्णिका ॥ तोयकुंभे पचेदेतत्पलांशं पादशेषितं ॥ तेन कौंतीवचाकुष्टकृष्णासर्षपसैंधवैः ॥ नीरुक्सरूपवत्सायाः संयुक्तं पयसा च गोः ॥ पुष्ययोगे घृतप्रस्थं सहेमशकलं शृतं ॥ पानाभ्यंजनतो मेधास्मृत्यायुःपुष्टिवृद्धिदं ॥ रक्षोघ्नं च विषघ्नं च सारस्वतमिदं घृतं ॥ लीढं सहघृतक्षौद्रं वचाहेमरजोऽल्पशः ॥ संवत्सरं परं मेध्यं रक्षोघ्नं बलवर्द्धनं ॥ पयस्या पिप्पली कुष्टं हरिद्रा सारिवा वचा ॥ मांसी कैडर्यमित्येतच्चूर्णं ब्राह्मीरजःसमं ॥ लीढ्वाऽऽज्येन शिशुर्वर्षं भवत्यपलितो बुधः ॥ बलवान् श्रुतसंपन्नः शतायुः स्थिरयौवनः ॥ प्रातः प्रातरिमं लेहं धात्री चास्यावलेहयेत् ॥ब्राह्मीवद्योजयेद्दूर्वां मूर्वां ब्रह्मसुवर्चलां ॥ लक्ष्मणां श्वेततकारीमध्यंडां[1] गौरसर्षपां ॥ सहस्रवीर्यां फलिनीं पक्वं च बृहतीफलं ॥ रोहिषं चेत्यमी प्राशाः पृथग्द्वादश कीर्तिताः ॥ महताऽप्युपयोक्तव्या नरेण नियतात्मना ॥ नित्यं मृद्भक्षणाद्रक्षेत्तया स्युर्नियतं गदाः ॥ पांडुत्वश्वयथुश्वासकासातीसारजंतवः ॥ छर्दिमूर्च्छाग्निसदनस्तन्यद्वेषाः सरुग्भ्रमाः ॥ भक्षयेद्दंतपवनं नास्थिरद्विजबंधनः ॥ तस्य तद्वदनकुद्धः कुर्याद्दंतामयान्सरुक् ॥ शूरैरायुधिभिर्गुप्तमधृष्यं नगरं परैः ॥ यथा शिशोर्वपुस्तद्वद्यथोक्तैर्विधिभिर्ग्रहैः ॥ इति बालोपचारणीयो नाम प्रथमोऽध्यायः ॥ १ ॥

---

१ अध्यडां कवचबीजं

अथातो बालामयप्रतिषेधं व्याख्यास्यामः ॥ त्रिविधो हि बालः प्रा[ग्]उक्तस्तस्य क्षीरमदुष्टं प्रयुंजीत ॥अन्नादस्य हितमन्नं॥ उभयवृत्ते-रुभयं॥ क्षीरं हि यथोक्तैर्दोषकोपनैराहारविहारैर्धात्र्या व्यापन्नं विविधामयोदयाय बालस्य कल्पते ॥ तत्र श्यामारुणवर्णं तिक्तकषाया-नुरसं विशदं रूक्षमलक्ष्यगंधं फेनिलमतृप्तिकरमाध्मानमूत्रवर्चोविबं-धकृत्कर्शनमप्सु विसर्पति विच्छिन्नं च प्लवते वातदुष्टं ॥ कृष्णं नीलं ताम्रावभासं तिक्ताम्लकटुकानुरसं कुणपरुधिरगंधि भृशोष्णमप्सु पीत-राजिमद्विदाहकरं च पित्तदुष्टं ॥ अत्यर्थं शुक्लं मधुरं लवणानुरसं घृततैलवसामज्जगंधिपिच्छिलं बहलं तंतुमद्गुरु सलिलेऽवसीदति नि-द्राबहुलं च श्लेष्मदुष्टं॥[1]तदुपयुज्यमानं यथास्वलिंगान् व्याधीनभिनिर्व-र्तयति॥स यत्प्रदेशमभीक्ष्णं स्पृशति स्पर्शं च न क्षमते तत्र रुजमुपल-क्षयेत् ॥ निमीलिताक्षतया मूर्ध्नि रुजं ॥ जिह्वोष्ठदंशश्वासमुष्टिबंधो-र्ध्वेक्षणैर्हृदये ॥ विण्मूत्रसंगच्छर्द्याध्मानांत्रकूजनस्तनदंशनचेष्टनपृ-ष्ठविनमनजठरोन्नमनैर्जठरे ॥ मूत्रसंगतृण्मूर्च्छात्रासदिगभिवीक्षणहृ-स्तवल्लीपादकुब्जीभवनश्मश्रुकेशलुंचनैर्बस्तौ गुदे च ॥ सर्वत्र च स्व-भावातिरिक्तरोदनेन मुखचिक्कणनेन च ॥ अथ यथामयं यथादोषं च धात्र्याः शमनशोधनानि प्रयुंजीत ॥ तत्र वातदूषिते स्तन्ये देवदा-रुसरलकटुरोहिणीवचाकुष्टपाठाभार्ङ्गीमागधिकावृश्चिकालीचित्रकाज-मोदशुंठीमरिचानां क्वाथं दशमूलक्वाथं वा त्रिरात्रं पाययित्वा वात-व्याधिविहितानां सर्पिषामन्यतमं निगदमदिरानुपानं दद्याद्वातहरद्र-व्यसिद्धं वा ॥ ततः स्निग्धां मृदु विरेच्य बस्तिकर्मणोपचरेद्वातघ्नैश्चा-भ्यंगस्वेदोपदेहोन्मर्दनैः ॥ सरलरास्नाऽजमोदादेवदारुचूर्णं सर्पिषा बा-लमवलेहयेत्॥एवं विधैरेव च पिप्पकं सशर्करं सर्पिः॥अपि च॥तिक्ता-

1 अष्टांगहृदये तु ॥ संसृष्टलिंगं संसर्गात्त्रिलिंगं सांनिपातिकमिति ॥

नुरसं स्तन्यं मुद्गमाषपलाशाभ्यां काकोलीयुगेन च शोधयेत् ॥ प्रि-
यंगुधातकीपद्मपद्मकदेवदारुक्षौद्रैर्वा ॥ कषायानुरसं हिंगुसैंधववचाघृ-
तेन ॥ फेनिलं विच्छिन्नं च प्लवमानं बिल्वाग्निमंथशृतेन पयसा ह-
विषा च ॥ शूर्पपर्णीकाकोलीबृहत्यवल्गुजफलैर्वा ॥ पित्तेऽमृतापटो-
लपत्रसारिवाशतावरीनिंबचंदनक्वाथं धात्री बालश्च पिबेत् ॥ त्रिफ-
लानिंबकटुकामुस्तक्वाथं वा ॥ जीवकर्षभकर्द्धिकाकोलीमधुककट्फ-
लकर्कटशृंगीक्वाथं वा ॥ सक्षौद्रं पटोलादिं पद्मकादिं वा न्यग्रोधादिं
वा ॥ एभिरेव च द्रव्यैः सर्पींषि पित्तघ्नानि च विरेचनानि शीतांश्चा-
भ्यंगप्रदेहसेकान् कुर्यात् ॥ अपिच ॥ ताम्रावभासं पयो हृदयमु-
द्वेष्टयति तत्प्रियंगुमुस्तशबररोध्रैः शोधयेत् ॥ अम्लानुरसमम्लपित्त-
करं तद्राक्षामधुकपयस्याश्रीपर्णीभिः ॥ कटुकानुरसं छर्द्यतीसारका-
सश्वासकरं तत्काकोलीभ्यां विदारीभ्यां मधुपर्ण्या च ॥ उष्णमामदा-
हज्वरकरं विरेचनं च तच्चंदनोत्पलकमलैः ॥ कफे तु सैंधवपिप्पलीयु-
क्तं सर्पिर्बालं पाययेत्॥सैंधवमधुकसंमृष्टं वा मदनपुष्पकल्केन च सक्षौ
द्रेण स्तनं बालस्य चोष्ठमालिंपेत्तेन सुखं वमति ॥धात्रीं तीक्ष्णैर्वामये
त्ततः कृतसंसर्जनां पंचकोलघनवचाऽतिविषाक्वाथं पाययेत्॥तगरसुर-
दारुसुरेंद्रयवपृश्नीकाक्वाथं वा ॥आरग्वधादिं मुस्तादिं वा ॥रूक्षोष्णा-
न्नस्य धूमगंडूषप्रदेहपरिषेकानविरुद्धं चान्नपानं योजयेत् ॥ अपिच॥
लवणानुरसं विसर्पकोठकंडूकरं॥तत्पिचुमंदपटोलीक्षीरिवृक्षैः शोधयेत्॥
तंतुमद्दौर्बल्यश्वासकासकरं ॥ तत्पिप्पलीनागरचूर्णेन समधुघृतेन ॥
गुरु सदनात्मकं प्रतिश्यायसिंघाणकक्षीरालसककरं ॥तत्पाठाव्योषक-
ल्केन पंचकोलचूर्णेन वा क्षौद्रघृताप्लुतेन दोषोपक्रमणीयं चेक्षेत॥यदा
पुनर्धातुसन्निपातप्रकोपनान्यासेवेत तदाऽस्यास्त्रयो मला युगपद्दक्षो-
भिप्रपन्नाः क्षीरावहा रसायनीः समनुश्रित्य संकीर्णलिंगं स्तन्यमावहं
ति ॥ तच्चेदमविज्ञानात्सततमप्रत्यवेक्षणात्प्रमादाद्वा मातुः कुमारः

पिबति ततः स तेन सलिलोपममच्छं विच्छिन्नमामं दुर्गंधि नानाव-
र्णवेदनं फेनिलमतिसार्यते पीतश्वेतमूत्रताविष्टंभतृष्णाज्वरच्छर्दिवि-
जृंभिकाशुष्कोद्गारारुचिभ्रमांगभंगविक्षेपकूजनघ्राणाक्षिमुखपाकदृ-
ष्ट्युपप्लवस्वरसादादयश्चास्य प्रादुर्भवंति ॥ तं क्षीरालसकमत्ययं चाच
क्षते ॥ तत्र धात्रीं बालं च पूर्वमेवाशु वामयेद्विहितसंसर्गयोश्च मुस्त
पाठाऽतिविषाककुभकटुकानां क्वाथं पानाय दद्यात् ॥ रास्नाऽजमो
दाप्रियंगुभद्रदारूणां वा ॥ पाठातेजोवतीपुनर्नवश्वित्रिकालीनां वा ॥
भूनिंबामृताकुटजफलसारिवाणां वा ॥ वचाहरिद्रादिगणयोर्वा ॥ पा-
ठादिमहाकषायस्य वा ॥ जंब्वाम्रबिल्वकदंबपत्राणां वा ॥ बिल्व-
भंगस्य वा ॥ अनुबंधे च यथाव्याधि प्रतिकुर्वीत ॥ दंतोद्भेदश्च सर्व-
रोगायतनं ॥ विशेषेण तु तन्मूला ज्वरशिरोभितापतृष्णाभ्रमाभि-
ष्यंदकुकूणकपोथकीवमथुकासश्वासातीसारविसर्पाः ॥ स दीर्घायुषो-
ऽष्टमान्मासात्परतो वा प्रवर्त्तते ॥ इतरेषां तु चतुर्थात ह्यतिबाल्ये दं-
तोत्पादवेदनया पीडिता न सम्यक्संपूर्णधातुबला भवंति ॥ तत्रास्थि
मज्जानौ दंतोत्पत्तिहेतू॥ तदा च तयोरसंपूर्णवीर्यत्वात्पुनः कालांत-
रेण दंतानां पतनमापूर्यमाणधातुत्वाच्च पुनरुत्थानमतएव च वृद्धानां
पुनर्दंतोत्पत्तिर्बलान्निपातितानां तु सहसा तदधिष्ठानगतधातुबीजभ्रं-
शात्संततिव्यवच्छेदाच्छोणितप्रवृत्त्याऽभिघाताच्च निःसारत्वाच्छिरा-
णां पुनरनुत्पादः ॥ एतेन योगच्युताअपि प्रायशो व्याख्याताः ॥
तौ तु धातुकालक्रमेण पच्यमानौ यदा दंताशयमनुप्रपद्येते तदाऽ-
स्य किंचिदुत्सेधनोर्ध्वाधोदंतमांससंघट्टनादंगहर्षौ जायते ॥ त-
द्गतेन च श्लेष्मणा कंडूस्तदा चूचुकं दंदश्यते ॥ यद्यदालभते
तत्तदास्यमानयति ॥ मारुतश्चास्य दंतमूलेषु मूर्च्छति ॥ ततः
स कफानुविद्धो ऽस्थिमज्जस्थितः सर्वतो विसरन् सह पित्तेन
धातून्मलांश्च दूषयन् विशोषयति ॥ तद्द्विजानामसंभवएवेति ॥ भवं

ति चात्र ॥ पृष्ठभंगे बिडालानां बर्हिणानां शिखोद्गमे ॥ दंतोद्भेदे च बालानां न हि किंचिन्न दूयते ॥ यथादोषं यथारोगं यथोद्रेकं यथाबलं ॥ विभज्य देशकालादींस्तत्र योज्यं भिषग्जितं ॥ त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते ॥ अतस्तदेव भैषज्यं मात्रात्वस्य कनीयसी ॥ सौकुमार्याल्पकायत्वात्सर्वान्नानुपसेवनात् ॥ स्निग्धा एव सदा बाला घृतक्षीरनिषेवणात् ॥ सद्यस्तान् वमनं तस्मात्पाययेन्मतिमान्मृदु ॥ बस्तिं साध्ये विरेकेण मर्शेन प्रतिमर्शनं ॥ युंज्याद्विरेचनादींस्तु धात्र्या एव यथोदितान् ॥ मूर्वाव्योषवराकोलजंबूत्वग्दारुसर्षपाः ॥ सपाठा मधुना लीढाः स्तन्यदोषहराः परं ॥ इक्षुमूलकशेर्वाख्ययष्ट्याव्हैस्तत्तु शुद्ध्यति ॥ सांद्रं तु क्षौद्रकाश्मर्यगुडूचीतंदुलांबुभिः ॥ शृतैर्वासुरसश्वेतसर्षपाबृहतीद्वयैः ॥ ग्रथितं पद्मकोशीरफलिनीश्वेतचंदनैः ॥ दंतपालीं समधुना चूर्णेन प्रतिसारयेत् ॥ पिप्पल्या धातकीपुष्पधात्रीफलकृतेन वा ॥ वार्ध्रीणसकपोतोत्थरजस्तद्वच्च योजितं ॥ लावतित्तिरिवल्लूरजः पुष्परसप्लुतं ॥ द्रुतं करोति बालानां दंतकेसरवन्मुखं ॥ वचाद्विबृहतीपाठाकटुकाऽतिविषाघनैः ॥ मधुरैश्च घृतं सिद्धं सिद्धं दशनजन्मनि ॥ भद्रदारुघनं यष्टी समंगा ससितोपला ॥ वातज्वरपरीतांगः पिबेदंतरपानकं ॥ सुराह्वघनयष्ट्याह्वपयस्यांशुमतीद्वयं ॥ नागरं मरिचं भार्ङ्गी वृश्चिकाली शतावरी ॥ घृतं तत्क्वाथदुग्धाभ्यां सिद्धं हंत्यनिलज्वरं ॥ बालस्य पानाभ्यंगाभ्यामेभिश्चोन्मर्दनं हितं ॥ हरिद्राकुष्ठपड्ग्रंथाशतपुष्पाहरेणुभिः ॥ भार्ङ्गचैलासुषवीरास्नावर्षाभूनतसर्षपैः ॥ अक्षांशैः सांबुदसुमैस्तुपिष्टैर्मरुद्वरैः ॥ तैलप्रस्थं सुरामंडतुल्यमभ्यंजने पचेत् ॥ लाजनीलोत्पलकणामधुरांजनशर्करं ॥ पित्तज्वरमतीसारं मधुलीढं निवर्तयेत् ॥ लाजद्विपिप्पलीक्वाथः शर्करामधुसंयुतः ॥ पीतो ज्वरमती-

१ अपितु सर्वाण्येवांगानि पीड्यंतइत्यर्थः ॥

सारं तृष्णां छर्दिं च नाशयेत् ॥आमातिसारे रक्ते च कल्कितां गजपिप्पलीं॥पाययेच्छर्करोपेतां चूर्णं वा देवदारुजं ॥शिरोभितापे सघृतैः शिरः शीतैः प्रलेपयेत्॥पत्रैः कपित्थचांगेरीबदरीकाकमाचिजैः॥शिरोरुक्छर्द्यतीसारनाशनं मूर्द्धलेपनं ॥गवादनी दाडिमं च कृत्वा कोष्णांभसा पचेत्॥कुर्यात्कुकूलपोथक्योर्यथोक्तं स्वस्वमौषधं॥मनःशिला शंखनाभिः पिप्पल्यो मधुयष्टिका ॥ क्षौद्रेण घृष्टा गुटिका शिशोः सर्वाक्षिरोगजित् ॥ पिप्पलीतंदुलीमुद्गैः सुमनःकोरकैर्यवैः ॥ नीलोत्पलस्य पत्रैश्च श्रेष्ठा वर्त्तिः सितोन्मितैः ॥ मुस्तांजनप्रियंगूणां चूर्णस्तंदुलवारिणा ॥ तृष्णातीसारवमथून् हंति पीतः समाक्षिकः ॥ पटोलनिंबकुटजसप्तपर्णं सदीप्यकं ॥ देवदारुविडंगानि सरलो माक्षिकं घृतं ॥ लीढं ज्वरमतीसारं कासं पांड्वामयं वमिं ॥ हन्याच्च मातृकान्दोषान् रोगानन्यांश्च तद्विधान् ॥ मधुकव्योषषड्ग्रंथाग्रंथिकाः *स्पृष्टरोदिताः॥ क्षीरिणां च प्रवालानि पाठां च विपचेद्धृते ॥ तत्पीतं समधु श्लेष्मज्वरघ्नं दीपनं परं॥रास्नैलानतलकर्कारीमधुशिग्रुसुराह्वयैः॥ सबिल्वकुष्टवरणरेणुकामिशिभिः कृतः ॥ श्लेष्मज्वरहितो लेपस्तैलमभ्यंजनं च तैः॥ मंडलानि च सा ग्येन गजमूत्रेण लेपयेत् ॥ रजनीदारुसरलश्रेयसीबृहतीद्वयं ॥ पृष्टिपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनं ॥ अतीसारज्वरश्वासकामलाकासपांडुजित् ॥ बालस्य सर्वरोगेषु पूजितं बलवर्णदं ॥ बिल्वपेशी सवरुणा धातकी रोध्रवालकं ॥ हंति लीढमतीसारं शिशोः क्षौद्रयुतं द्रुतं ॥ त्रिफलाधातकीपुष्पपद्मबिल्वशलाटुभिः ॥ सकट्वंगैर्घृतं सिद्धमुदरामयनाशनं ॥ पथ्यासौवर्चलक्षारवेल्लव्योषाग्निहिंगुभिः ॥ तिक्तया च घृतं सिद्धं समक्षीरं व्यपोहति ॥ गुल्मानाहगुदभ्रंशश्वासकासविलंबिकाः ॥ समंगाधातकीलोध्रकुटन्नटबलाह्वयैः ॥ महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ॥ सकार्पासीफलैस्तोयसाधितैः साधितं घृतं ॥ क्षीरमस्तुयुतं हंति शीघ्रं

दंतोद्भवान् गदान् ॥ विविधानामयानेतद्वृद्धकाश्यपनिर्मितं ॥ दंतोद्भेदोत्थरोगेषु न बालमतियंत्रयेत् ॥ स्वयमप्युपशाम्यंति जातदंतस्य यद्गदाः ॥ यावन्मासस्य यो जातस्तावद्वर्षस्य स द्विजः ॥ पतति प्रायशोऽष्टानां तेषां पूर्वस्य संभवः ॥ अत्यह्नःस्वमशीतांबुश्लैष्मिकस्तन्यसेविनः ॥ शिशोः कफेन रुद्धेषु स्रोतःसु रसवाहिषु ॥अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते॥कुमारः शुष्यति ततः स्निग्धशुष्कमुखेक्षणः ॥ सैंधवव्योषशार्ङ्गेष्टापाठागिरिकदंबकान् ॥ शुष्यतो मधुसर्पिर्भ्यामरुच्यादिषु योजयेत्॥अशोकरोहिणीयुक्तं पंचकोलं च चूर्णितं॥ बदरीधातकीधात्रिचूर्णं वा सर्पिषा युतं ॥ अश्वलिंडरसक्षौद्रयुक्तां वा मधुयष्टिकां ॥ द्विवार्ताकीफलरसं केवलं वाऽश्वविड्रसं ॥ मधुना वा घनव्योषपाठामूर्वाशतावरीः ॥ सपयस्याः पृथक्पर्णीशृतं वा माक्षिकान्वितं ॥ स्थिरामरतरुव्योषद्विपुनर्नवसाधितं ॥ स्थिरावचाद्विबृहतीकाकोलीपिप्पलीनतैः ॥ निचुलोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः॥ सिद्धं प्रस्थार्द्धमाज्यस्य स्रोतसां शोधनं परं॥ सिंह्यश्वगंधासुरसाकणागर्भं च तद्गुणं॥ यष्ट्याह्वपिप्पलीरोध्रपद्मकोत्पलचंदनैः॥ तालीसपिप्पलीभ्यां[1] च साधितं शोषजिद्घृतं ॥ शृंगीमधूलिकाभार्ङ्गीपिप्पलीदेवदारुभिः ॥ अश्वगंधाद्विकाकोलीरास्नर्षभकजीवकैः ॥ शूर्पपर्णीविडंगैश्च कल्कितैः साधितं घृतं॥शशोसमांगनिर्यूहे शुष्यतः पुष्टिकृत्परं॥ वचावयस्थातगरकायस्थाचोरकैः शृतं ॥ बस्तमूत्रसुराभ्यां च तैलमभ्यंजने हितं॥ द्वे बले तुंबरुच्छल्ली वचा गिरिकदंबकः ॥ सुरापिष्टः प्रदेहः स्यादधः काये विशुष्यतः ॥ सिंहस्कंधीसिंहवल्लीकरमर्दीत्रिकंटकैः ॥ भंगक्वाथैः कुमाराणां शुष्यतां परिषेचनं ॥ साशोकरोहिणीं कृष्णां मध्वाज्येन लिहन् जयेत् ॥ शिशुः शोषं शरीरस्यससितच्छागदुग्धभुक् ॥ शुष्ककासे कुमारस्य धात्र्याः स्तन्यविशोधनं ॥ माषसूपः पयोक्तश्च

१ तालीससारिवाभ्यामित्यष्टांगहृदये पाठः ॥ तालीसमरिचाभ्यामित्यपि क्वचित्पाठः

सकृष्णो घृतभर्जितः ॥ मधुनाऽतिविषाशृंगीपिप्पलीर्लेहयेच्छिशुं ॥ एकां वाऽतिविषां कासज्वरछर्दिरुपद्रुतं ॥ कासतृट्छर्द्यतीसारैरर्दितं लाजतर्पणात् ॥ लाजतालीसपत्रं वा बीजानि कमलस्य च ॥ रोध्रप्रियंगुकल्कं वा पाययेत्तंदुलांभसा ॥ शर्करामधुसंयुक्तं लाजकुस्तुंबरीरजः ॥ बृहतीफलमूलत्वक्पिप्पलीग्रंथिकैः कृतः ॥ नवक्षीरयुतैः क्वाथो मधुना हंति शीलितः ॥ छर्दिमूर्च्छाज्वरश्वासकासातीसारपीनसान् ॥ पंचकोलद्विवार्ताकीमूलभार्ङ्गीतुगाह्वयाः ॥ क्षौद्राज्यलीढाः श्वसनकासपीनसरुक्छिदः ॥ श्यामातिमुक्तातर्कारीकुसुमक्काथसाधितं ॥ यष्टीगर्भं घृतं तृष्णाहिध्माश्वासास्रपित्तनुत् ॥ पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ॥ द्विवार्ताकीफलरसं पंचकोलं च लेहयेत् ॥ पिप्पलीपंचलवणं कृमिजित्पारिभद्रकं ॥ तद्वल्लिह्यात्तथा व्योषं मर्षीं वा रोमचर्मणां ॥ लाभतः शल्यकश्वाविद्गोधर्श्यगिरिजन्मनां ॥ खदिरार्जुनतालीसकुष्ठस्यंदनजे रसे ॥ सक्षीरं साधितं सर्पिर्वमथुं विनियच्छति ॥ हनुमूलगतो वायुर्दंतदेशान्विशोषयेत् ॥ यदा शिशोः प्रकुपितो नोत्तिष्ठंति ततो द्विजाः॥रुक्षाशिनो वातिकस्य चालयत्यनिलः सिराः ॥ हन्वाश्रयाः प्रसुप्तस्य दंतैः शब्दं करोत्यतः॥क्षीरिप्रवालमधुकदर्भमूलबिसोत्पलैः॥तृष्णादाहज्वरहरः कषायः ससितामधुः॥शर्करादाडिमकणानागकेसरजीवकं ॥ लिहन्कुमारः क्षौद्रेण तृट्छर्दिभ्यां विमुच्यते ॥ लाजैः सचंदनोशीरयष्टीमधुकपद्मकैः ॥ लिप्तो धौतः स्तनः पीतो भ्रमतृड्दाहमोहहा॥ असेहलवणं पीत्वा संस्कृतं लावजं रसं ॥ सशर्करं विजयते बालो लंघनजान् गदान् ॥ विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः ॥ पद्मवर्णो महापद्मो बाले दोषत्रयोद्भवः ॥ शंखाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ॥ सदंतो जायते यस्तु दंताः प्राग्यस्य चोत्तराः॥ कुर्वीत तस्मिन्नुत्पाते शांतिकं च द्वि-

१ शल्यकादिजन्मनां रोम्णां चर्मणां च यथालाभं मर्षीं मधुघृताभ्यां लिह्यात् ॥

जातये ॥ दद्यात्सदक्षिणं बालं नैगमेषं च पूजयेत् ॥ वत्सस्य मधुलाजानामापूर्य प्राङ्मुखो मुखं ॥ चुंबेत्कुमारस्त्रीन्वारान्प्रायश्चित्तमिदं परं ॥ नावमारोहयेद्बालं स्नातं स्कंधं गजस्य च ॥ भोजयेद्ब्राह्मणांश्चात्र पायसं मधुसर्पिषा ॥ मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ॥ कायाग्निसादवमथुतंद्राकार्श्यारुचिभ्रमैः ॥ युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिणं ॥ रोगं परिभवाख्यं च युंज्यात्तत्राग्निदीपनं ॥ पिप्पलीपिप्पलीमूलकटुकादेवदारुभिः ॥ क्षारद्वयबिडाजाजीबिल्वमध्याग्निदीप्यकैः ॥ दधिसौवीरकसुरामंडैश्च विपचेद्घृतं ॥ हंति प्रयुक्तं तत्काले रोगान्पारिभवाश्रयान् ॥ अन्नेनोपहतं स्तन्यं पिबतो विहितात्परं ॥ इमानेव गदान्कुर्यात्कुर्यात्तेष्वेतदेव च ॥ पीतं पीतं च यः स्तन्यं सवातमतिसार्यते ॥ तस्याप्येतत्परं पथ्यं दीपनं बलवर्णकृत् ॥ अत्युद्रिक्तक्षुधं बालं परिभूतं तु लेहयेत् ॥ विदारीयवगोधूमकणाचूर्णं घृताप्लुतं ॥ पाययेदनु च क्षीरं शृतं समधुशर्करं ॥ अक्षमज्जाद्विकाकोलीयष्टीमधुकमोरटैः ॥ श्रपयेत्क्षीरमाज्यं वा बीजैरिक्षुरकस्य च ॥ तत्प्रयोज्यं गुरु स्निग्धं यच्चात्यग्नौ पुरेरितं ॥ श्ववायसबिडालानामुच्छिष्टेन जलेन च ॥ स्नापयेत्तं न चेदेवं क्षुत्तस्य प्रशमं व्रजेत् ॥ क्षीरिपादपमूलस्थं विधिना स्नापितं ततः ॥ वस्त्ररत्नाद्यलंकारैः कुमारं भूषयेन्मितैः ॥ वृक्षं चानु ततः कुर्याद्भूषणव्यत्ययं तयोः ॥ एतदायुःप्रदं धन्यं स्नपनं सर्वरोगजित् ॥ जटीभूतकचाक्षादिपक्ष्माणं त्वतिलोलुपं ॥ गोमूत्रगंधिं स्नपयेत्तीर्थे गव्यशकृद्रसैः ॥ वचापुष्पशिलाकुष्ठवयस्थाहिंगुकट्फलैः ॥ सबस्तमूत्रमदिरैस्तैलमभ्यंजनं पचेत् ॥ बलाविदारीत्रिकटुकुष्ठोशीरकुचंदनैः ॥ सिद्धं पीतं हविर्हंति तं विकारमशेषतः ॥ शिरः पृष्ठं ततो मुष्कौ ततः पादौ च योजयेत् ॥ हस्ताभ्यामुत्थितो वायुः स पर्वानुप्लवः स्मृतः ॥ गौरीवचासदापुष्पीहयगंधाकटुत्रयैः ॥ सकट्फलद्विवार्ता-

क्षीवयस्थाहिंगुरोहिषैः ॥ बस्तमूत्रसुरायुक्तैः साधितं तस्य योजयेत् ॥ तैलमभ्यंजने शेषं वातव्याधिवदाचरेत् ॥ तालुमांसे कफः क्रुद्धः कुरुते तालुकंटकं ॥ तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवं ॥ तृडास्यकंड्वक्षिरुजा ग्रीवादुर्धरता वमिः ॥ तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ॥ तालु तद्वत्कणाशुंठीगोशकृद्रससैंधवैः ॥ शृंगबेरनिशाशृंगं कल्कितं वटपल्लवैः ॥ बध्वा गोशकृता लिप्तं कुकूले स्वेदयेत्ततः ॥ रसेन लिंपेत्ताल्वास्यं नेत्रे च परिषेचयेत् ॥ हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतं ॥ पीत्वा कुमारः स्तन्येन मुच्यते तालुकंटकात् ॥ मस्तुलुंगक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत् ॥ तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतं॥ पानाभ्यंजनयोर्योज्यमुद्वेगश्च हिमांबुना ॥ मलोपलेपात्स्वेदाद्वा गुदे रक्तकफोद्भवः॥ ताम्रो व्रणोऽतःकंडूमान् जायते भूर्य्युपद्रवः ॥ केचित्तं मातृकादोषं वदंत्यन्येऽहिपूतनं ॥ पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामकं ॥ तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः सिद्धं शीतं च शीतांबुयुक्तमुत्तरपानकं ॥ सक्षौद्रताक्ष्यशैलेन व्रणं तेन च लेपयेत् ॥ त्रिफलाबदरीप्लक्षत्वक्क्काथपरिषेचितं ॥ कासीसरोचनातुत्थमनोह्वालरसांजनैः ॥ लेपयेदम्लपिष्टैर्वा चूर्णितैर्वाऽवचूर्णयेत् ॥ सुश्लक्ष्णैरथवा यष्टीशंखसौवीरकांजनैः ॥ सारिवाशंखनाभिभ्यामसनस्य त्वचाऽथवा ॥ रागकंडूत्कटे कुर्याद्रक्तस्रावं जलौकसा ॥ सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥ अनामस्थौल्यपित्तास्रकंडूगंडगलामये ॥ उदुंबरोन्मितं श्रेष्ठं ताक्ष्यमंतरपानकं ॥ गृह्णाति सूतिकागारे म स्तनं चेत्स्पृशेत्ततः ॥ पथ्याधात्रीफलकणैर्जिह्वां सघृतमाक्षिकैः ॥ पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतं ॥ रुदते त्रस्यते चावलेहं दद्यात्सुखावहं ॥ प्रदीप्तांगाररजसा प्रशांतेनावचूर्णयेत्॥पंचमेऽह्नि पत-

म्भालं लेपयेद्वा गुडांभसा ॥ सांद्रेण भूमौ घृष्टेन नालपातेऽपि चोन्न-
तां ॥ नाभिं छागेन शकृता दग्धेनांतर्विचूर्णयेत् ॥ अश्वगंधांजनाजा-
विविडच्चष्टीमधुकादिभिः॥रोपयेच्चूर्णितैर्नाभिं स्नेहयुक्तैरनुन्नतां॥यष्टी-
रोध्रनिशाश्यामाकल्कपक्वेन सेचयेत् ॥ नाभिं पाके तु तैलेन तच्चूर्णैश्चा-
वचूर्णयेत् ॥ वातेनाध्मापितां नाभिं सरुजां तुंडिसंज्ञितां ॥ मारुतघ्नैः प्र-
शमयेत्स्नेहस्वेदोपनाहनैः ॥ असम्यक्कल्पनान्नाभेः स्याद्विनामो विजृं-
भिका॥वातपित्तहरं कर्म तत्रांतर्बहिराचरेत् ॥ गर्भांभसामवमनाच्छ्ले-
ष्मणः कंठगस्य वा ॥ संपर्कात् हृदये दुष्टो मार्गानावृणुते रसः ॥
बद्धमुष्टिस्ततो मुह्येद्रोगैर्बालोऽभिभूयते ॥ हृद्रोगाक्षेपकश्वासकास-
च्छर्दिज्वरादिभिः ॥ उल्बकं सहजं व्याधिमंबुपूर्णं च तं वदेत् ॥
स्रोतोविशोधनं प्रातस्तस्मिन्नंतरपानकं ॥ विदध्याच्छागलं मूत्रं पा-
नाभ्यंगौ च वर्जयेत् ॥ बिल्वादिमूलबृहतीपंचकोलं पलांशकं ॥
धन्वमांसपलान्यष्टौ शशमूर्द्धपलाष्टकं ॥ साधयेत्षोडशगुणे सलि-
लेऽष्टांशशोषितं ॥ तेन क्वाथेन कर्षांशैर्घृतप्रस्थं विपाचयेत् ॥ छा-
गलीमूत्रमदिरादध्रिक्षीरसमांशकं ॥ विडंगसैंधवाजाजीचविकादेवदा-
रुभिः ॥ सहिंस्राहिंगुलशुनैः सव्योषैः श्लक्ष्णकल्कितैः ॥ तत्पानाद्धंति
सहजगुल्महिध्माऽनिलामयान्[1] ॥ पांडुरोगं च वातोत्थं स्वस्थवृत्ते च
पुष्टिदं ॥ परिदग्धच्छविं बालं लिंपाद्दूर्वातिलोत्पलैः ॥ शमीपत्रशि-
रीषत्वक्सारिवामधुकाभयैः ॥ मूर्वाधात्रीनिशाचूर्णं मूत्रेण मधुमत्पि-
बेत् ॥ पांडुरोगी शृतं सर्पिर्वराभृंगरसेन वा ॥ पाठावेल्लद्विरजनीमु-
स्ताभार्ङ्गीपुनर्नवैः ॥ सबिल्वत्र्यूषणैः सर्पिर्द्वश्चिकालीयुतैः शृतं ॥ लि-
ह्यानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः ॥ व्याधेर्यद्यस्य भैषज्यं
स्तनस्तेन प्रलेपितः ॥ स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेद्ग-
दं ॥ ग्रहैरपि हि जायंते प्रच्छन्नैर्व्याधयः शिशोः ॥ कर्म शस्तम-

१ हृदामयानिति पाठः

तस्तेषु दैवयुक्त्याश्रयं सदा ॥ इति बालामयप्रतिषेधो नाम द्वितीयोऽध्यायः ॥ २ ॥

अथातो बालग्रहविज्ञानं व्याख्यास्यामः ॥ पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना ॥ मनुष्यविग्रहाः पंच सप्त स्त्रीविग्रहा ग्रहाः ॥ स्कंदो विशाखो मेषाख्यः श्वग्रहः पितृसंज्ञितः ॥ शकुनिः पूतना शीतपूतना दृष्टिपूतना॥मुखमंडितिका तद्वद्रेवती शुष्करेवती॥ते कामरूपिणः स्कंदमुपचेरुः समाहिताः ॥ स्कंदस्य बालधारत्वात्तेषां स्कंदोऽग्रणीरभूत्॥स्कंदेऽथ यौवनं प्राप्ते सैनापत्यं च तान् ग्रहान् ॥ रौद्रान् रुद्रोऽनुजग्राह प्राज्ञान् वृत्त्यभिलाषिणः॥न तिथिष्वप्यतिथयो देवताः पितरोऽपिवा ॥ येषु वेश्मसु पूज्यंते निवृत्ताचारकर्मसु उत्सन्नबलिहोमेषु भिन्नकांस्यादिभोजिषु ॥ हरध्वं तेषु बालानामारोग्यं धर्मचारि च ॥ शूलिनेति नियुक्तास्ते बलिपूजाभिकांक्षिणः ॥ बालान् कश्मलधात्रीकान् संध्यासु रुदतोऽशुचीन् ॥ क्रुद्धान् भीतान्विमनसः शून्यस्थानैकचारिणः ॥ परोपभुक्तकुसुमवस्त्राभरणधारिणः ॥ ऋक्षोलूकबिडालादिरूपैरन्यैस्तथाऽद्भुतैः संत्रासयंति[1] शयितान्कदाचिज्जाग्रतोऽपि वा ॥ प्रायः पर्वसु गृह्णंति ग्रहाश्छिद्रप्रहारिणः ॥ आविशंतश्च लक्ष्यंते केवलं शास्त्रचक्षुषा ॥ शुद्धेन देहं बालानां ग्रहगंधर्वयोषितां ॥ तेषां ग्रहिष्यतां रूपं प्रततं[2] रोदनं ज्वरः ॥ सामान्यरूपमुत्त्रासजृंभाभ्रूक्षेपदीनताः फेनस्रावोर्ध्वदृष्ट्योष्ठदंतदंशप्रजागराः ॥ रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतं ॥ नखैरकस्मात्परितः स्वधात्र्यंगविलेखनं ॥ तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः ॥ हतैकपक्षः स्तब्धांगः सस्वेदो नतकंधरः ॥ दंतखादी स्तनद्वेषी त्रस्यन् रोदिति विस्वरं ॥ वक्रवक्त्रो वमन् लालां भृशमूर्ध्वं निरीक्षते ॥ वसासृग्गंधिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ॥ चलितैकाक्षिगंडभ्रूः संरक्तो-

---

१ संत्रासयंतइति पाठः २ प्रततं रोदनमित्यारभ्य विलेखनांतं सामान्यग्रहगृहितलक्षणं ॥

भयल्लोचनः ॥ स्कंदार्त्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवं ॥ संज्ञानाशो मुहुः केशलुंचनं कंधरानतिः ॥ विनम्य जृंभमाणस्य शकृन्मूत्रप्रवर्त्तनं ॥ फेनोद्गमनमूर्ध्वेक्षा हस्तभ्रूपादनर्त्तनं ॥ स्तनस्वजिह्वासंदंशसंरंभज्वरजागराः ॥ पूयशोणितगंधश्च स्कंदापस्मारलक्षणं ॥ आध्मानं पाणिपादस्य स्पंदनं फेननिर्वमः ॥ तृण्मुष्टिबंधातीसारस्वरदैन्यविवर्णताः ॥ कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः ॥ ओष्ठदंशांगसंकोचस्तंभबस्ताभगंधताः ॥ उर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ॥ मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥ कंपो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनं ॥ बहिरायामनं जिह्वादंशोंऽतःकंठकूजनं ॥ धावनं विट्सगंधत्वं क्रोशनं च श्ववच्छुनि[1] ॥ रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ॥ कासातीसारवमथुजृंभातृट्शवगंधिताः ॥ अंगेष्वाक्षेपविक्षेपशोषस्तंभविवर्णताः ॥ मुष्टिबंधः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ॥ स्रस्तांगत्वमतीसारो जिह्वातालुगले व्रणाः ॥ स्फोटाः सदाहरुक्पाकाः संधिषु स्युः पुनः पुनः ॥ निश्यह्नि प्रविलीयंते पाको वक्त्रे गुदेऽपि वा ॥ भयं शकुनिगंधत्वं ज्वरश्च शकुनिग्रहे ॥ पूतनायां वमिः कंपस्तंद्रा रात्रौ प्रजागरः ॥ हिध्माऽऽध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ॥ स्रस्तहृष्टांगरोमत्वं काकवत्पूतिगंधिता ॥ शीतपूतनया कंपो रोदनं तिर्यगीक्षणं ॥ तृष्णांऽत्रकूजातीसारौ वसावद्विस्रगंधिता ॥ पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ॥ अंधपूतनया छर्दिज्वरः कासोऽल्पनिद्रता ॥ वर्चसो भेदवैवर्ण्यदौर्गंध्यान्यंगशोषणं ॥ दृष्टिसादोऽक्षिरुक्कंडूपोथकीजन्म शूनता ॥ हिध्मोद्वेगस्तनद्वेषवैवर्ण्यस्वरतीक्ष्णताः ॥ वेपथुर्मत्स्यगंधत्वमथवा साम्लगंधिता ॥ मुखमंडितया पाणिपादास्यरमणीयता ॥ सिराभिरसिताभाभिराचितोदरता ज्वरः ॥ अरोचकोऽगग्लपनं गोमूत्रस-

[1] शुनि श्वग्रहे

मगंधता ॥ रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनं ॥ कासहिध्माक्षिविक्षेपवक्रवक्त्वरक्तताः ॥ बस्तगंधो ज्वरः शोषः पुरीषं हरितं द्रवं ॥ जायते शुष्करेवत्यां क्रमात्सर्वांगसंक्षयः ॥ केशशातोन्नविद्वेषः स्वरदैन्यं विवर्णता ॥ नानावर्णपुरीषत्वमुदरे ग्रंथयः सिराः ॥ रोदनं गृध्रगंधित्वं दीर्घकालानुवर्त्तनं ॥ उदरे ग्रंथयो वृत्ता यस्य नानाविधं शकृत् ॥ जिह्वायां निम्नता मध्ये श्यावतालु च तंत्यजेत् ॥ भुंजानोऽन्नं बहुविधं यो बालः परिहीयते ॥ तृष्णागृहीतः क्षामाक्षो हंति तं शुष्करेवती ॥ हिंसारत्यर्चनाकांक्षाग्रहग्रहणकारणं ॥ तत्र हिंसात्मके बालो महान्वा स्रुतनासिकः ॥ क्षतजिव्हः क्वणेद्बाढमसुखी साश्रुलोचनः ॥ दुर्बलो हीनवचनः पूतिगंधिश्च जायते ॥ क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ॥ हस्तौ चोद्यमसंरब्धो हंत्यात्मानं तथा परं ॥ तद्वच्च शस्त्रकाष्ठाद्यैरग्निं चादीप्तमाविशेत् ॥ अप्सु मज्जेत्पतेत्कूपे कुर्यादन्यच्च तद्विधं ॥ तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्त्तयेत् ॥ रक्तं च सर्वमार्गेभ्यो रिष्टोत्पत्तिं च तं त्यजेत् ॥ रहःस्त्रीरतिसंलापगंधस्रग्भूषणप्रियः ॥ हृष्टः शांतश्च दुःसाध्यो रतिकामेन पीडितः ॥ दीनः परिमृशन्वक्त्रं शुष्कौष्ठगलतालुकः ॥ शंकितं वीक्षते रौति ध्यायत्यायाति दीनतां ॥ अन्नमन्नाभिलाषेऽपि दत्तं नातिबुभुक्षते ॥ गृहीतं बलिकामेन तं विद्यात्सुखसाधनं ॥ हंतुकामं जयेद्धोमैः सिद्धमंत्रप्रवर्त्तितैः॥ इतरौ तु यथाकामं रतिबल्यादिदानतइति ॥ इति बालग्रहविज्ञानं नाम तृतीयोऽध्यायः ॥ ३ ॥

अथातो बालग्रहप्रतिषेधं व्याख्यास्यामः ॥ ग्रहेषु साध्येषु शिशुं विविक्ते शरणे स्थितं ॥ त्रिरन्हः सिक्तसंमृष्टे सदा सन्निहितानले॥ विकीर्णभूतिकुसुमबीजपत्राज्ञसर्षपे ॥ रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि ॥ व्यवायमद्यपिशितनिवृत्तपरिचारके ॥ पुराणसर्पिषाऽ-

भ्यक्तं परिषिक्तं सुखांबुना ॥ साधितेन बलानिंबवैजयंतीनृपद्रुमैः ॥ पारिभद्रककट्वंगजंबूवरणकट्तृणैः ॥ कपोतवंकाऽपामार्गपाटलीमधुशिग्रुभिः ॥ काकजंघामहाश्वेताकपित्थक्षीरिपादपैः ॥ सकदंबकरंजैश्च धूपं स्नातस्य चाचरेत् ॥ द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ॥ पूतीदंशांगसिद्धार्थवचाभल्लातदीप्यकैः ॥ सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः॥ सर्षपानिंबपत्राणि मूलमश्वखुरा वचा॥ भूर्जपत्रं घृतं धूपः सर्वग्रहनिबर्हणः ॥ अनंताम्रास्थितगरं मरिचं मधुरो गणः ॥ शृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ॥ दशमूलरसक्षीरयुक्तं तद्ग्रहजित्परं ॥ रास्नाद्व्यंशुमतीद्वंद्वपंचमूलबलाघनात् ॥ क्वाथे सर्पिः पचेत्पिष्टैः सारिवाव्योषचित्रकैः ॥ पाठाविडंगमधुकपयस्याहिंगुदारुभिः ॥ सग्रंथिकैः सेंद्रयवैः शिशोस्तत् सततं हितं ॥ सर्वरोगग्रहहरं दीपनं बलवर्णदं ॥ सारिवासुरभिब्राह्मीशंखिनीकुष्टसर्षपैः ॥ वचाऽश्वगंधासुरसायुक्तैः सर्पिर्विपाचयेत् ॥ तन्नाशयेद्ग्रहान्सर्वान् पानेनाभ्यंजनेन च ॥ योजयेद्भूतविद्यायां यान्युक्तानि घृतानि च ॥ हस्तमात्रं शुचौ देशे गोमयेनोपलेपयेत् ॥ तत्राक्षतानां चोक्षाणां[२] स्थाप्यं पात्रं सदक्षिणं ॥ विधूमश्चानलस्तोयं गुग्गुलुः सर्पिराहुतिः ॥ शुक्लं पुष्पं बलिर्धूपं दूर्वाः श्वेताश्च सर्षपाः॥ प्राङ्मुखोऽथ शुचिर्वैद्यस्त्रिवर्णामथवासितां ॥ उपविष्टः प्रतिसरां गृहीत्वा वेष्टयेत्तया ॥ भूर्जे रोचनया विद्यां लिखितामपराजितां ॥ विधिना साधितां भूतैः सर्वैरप्यपराजितां ॥ लक्ष्मणादिपरीवारां नित्यानुस्मृतिसेवितां ॥ लक्ष्मणा सहदेव्याख्या नागदंती कटंभरा ॥ मर्कटीकर्कटी लंबा बृहती कंटकारिका ॥ खरनासा मृगैर्वारुर्महाकोशा शतावरी ॥ उदङ्मुखस्य बालस्य बध्नीयात्तां ततो गले ॥ तदभावे दृढं क्षौमं सूत्रं मंत्रमिमं जपन्॥

---

१ वचाहिंगुविडंगानि सैंधवं गजपिप्पली ॥ पाठाप्रतिविषाव्योषं दशांगः कश्यपोदितइति ॥ २ चोक्षाणां निर्मलानां

बध्नाम्यहं प्रतिसरां नमस्कृत्य स्वयंभुवे ॥ बालानां रक्षणार्थाय शिवां पूर्वर्षिनिर्मितां ॥ इंद्रः प्रतिसरां तुभ्यं ये च तस्यानुसारिणः ॥ वज्राशनिपराभूता मेघवृंदानुसारिणः ॥ ऐरावणस्कंधगतं येऽनुयांति पुरंदरं ॥ यमो वैवस्वतो राजा ये च तस्यानुसारिणः ॥ मेषसूकरसिंहोष्ट्रगजवाजिसमाननाः ॥ कालाः कालायसैः पाशैः स्तब्धाक्षाभ्रुकुटीमुखाः ॥ शक्तिमुद्गरहस्ताश्च खड्गप्रासधराश्च ये ॥ पाशभृद्वरुणो राजा तोयभृत्सागरालयः ॥ शारदाभ्रघनाकारा ये च तस्यानुसारिणः ॥ महोर्मिवंतं वेगेन क्षोभयंति सरित्पतिं ॥ धनाधिपो वैश्रवणः सर्वयक्षाधिपो भुवि ॥ नानाकाराश्च ये भूतास्तस्यैवानुचराः सदा ॥ आदित्या वसवो रुद्रा मरुतश्चाश्विनापवि ॥ ते ते सर्वेऽनुमन्यंतामिमां प्रतिसरक्रियां ॥ दीर्घमायुररोगत्वं तव दास्यंति स्वस्ति ते ॥ स्वस्ति ते भगवान् ब्रह्मा स्वस्ति नारदपर्वतौ ॥ स्वस्ति वेदाश्च यज्ञाश्च अग्नीषोमौ तु स्वस्ति ते ॥ स्वस्ति ते श्रीर्धृतिः कांतिर्लक्ष्मीर्मेधा क्षमा द्युतिः ॥ स्वस्ति तुष्टिश्च पुष्टिश्च वपुर्ह्रीर्बुद्धिरेव च ॥ स्वस्ति रुद्रो विशाखश्च स्कंदः शक्तिधरश्च ते ॥ स्वस्ति धाता विधाता च सुपर्णश्च महाबलः ॥ स्वस्ति देवाश्च यक्षाश्च मा च ते पापमागमत् ॥ दुर्व्याहृतानि दुःस्वप्ने मनसा चिंतितानि च ॥ दुष्टादीनां भयकृतो वाचः प्रतिहता मया ॥ रक्षाप्रतिसरा तुभ्यं बद्धेयं पापघातिनी ॥ निर्वृतस्त्वं निरुद्वेगो जीव वर्षशतं सुखीति ॥ अपूपपूपसंयावस्वस्तिकालोपिकादयः ॥ पायसो मिश्रकः कूरो[1] गुडकूरो हरिद्रकः ॥ कृशरा याकवः क्षौद्रं पललं लवणं हविः ॥ दधि कुल्माषनिष्पावा रक्तो भूतौदनः पयः ॥ पक्वाममांसरुधिरमद्यसुक्तसुरासवाः ॥ गंधमाल्यं फलं हेम धूपः सपुरकुंकुरुः ॥ सुरसार्जकनिर्गुंडीकुसुमं च सपल्लवं ॥ बलिः सशस्त्रैर्देयः स्याद्भवनस्य चतुर्दिशं ॥ चतुष्कचैत्यत्रिपथदेवायतनगोपुरे ॥ एकवृक्षो

---

१ कूरः ओदनः

दपाने च संध्ययोर्दीपवान्निशि ॥ अथापतितगोवर्चःप्रलिप्ते दर्भसंस्कृते ॥ वृत्ते वा चतुरस्रे वा मंडले कुसुमोज्वले ॥ नानाग्रहपरीवारं भिषग्भूतपतिं लिखेत् ॥ तं प्रति प्राङ्मुखो विद्यां पठन्नुपहरेद्बलिं ॥ बकुलाग्रहकारिका ॥ सेना सुसेना माता च महासेना यशस्विनी ॥ कृतमाला कृतशिरा एतास्तु ग्रहमातरः ॥ कुमारवचनाच्छीघ्रं प्रमुंचंतु शिशुं त्विमं ॥ कालकल्पा ज्वलच्छक्तिः किंकिणीजालभूषिता ॥ कुमारवचनाद्दूती संप्राप्ता मुच्यतां शिशुं ॥ पताकाकुक्कुटश्छत्रं घंटा बर्हधराः शिखी ॥ शरस्तंभश्च ते मुद्रा मुच्यतां मातरः शिशुं ॥ गंधं धूपं च माल्यं च कुमारस्ते प्रयच्छति ॥ न स्थातव्यं तदाघ्राय स्वां गतिं गच्छ मा चिरं ॥ धात्र्यः सर्वाः कुमाराणां संगता गंधमादने ॥ रक्तध्वजपताकस्य रक्तांशुकनिवासिनः ॥ कुमारस्यालयं तत्र यात बालं विमुंचत ॥ षण्मुखो द्वादशाक्षो वै तस्मिन्बाले वृतो वरं ॥ वीरः कुमाराधिपतिस्तव पुत्रो भविष्यति ॥ ब्रह्मणो ब्राह्मणानां तु सर्ववेदविदां वर. ॥ यक्षराक्षसनागानां गंधर्वासुरयोरपि ॥ पिशाचभूतसंघानां व्याधीनां च स ईश्वरः ॥ आज्ञापयति वः स्कंदो गम्यतां गंधमादनं ॥ ग्रहो यः कोपयेदाज्ञां कुमारस्य यशस्विनः ॥ स्थानच्युतः स वै क्षिप्रं बाह्यस्तत्पर्षदो भवेत् ॥ बलेरनंतरं कुर्याद्धोममभ्यर्च्य पावकं ॥ पुष्पैर्भक्ष्यैश्च विविधैस्त्वरुणालोहितैरपि ॥ गंधैर्गुग्गुलुधूपेन समिधः खदिरादयः ॥ शतमष्टोत्तरं हव्यमथवा चंदनाद्भुमात् ॥ अग्निरिदं प्रवक्ष्यामि सर्वग्रहविमोक्षणं ॥ ब्रह्मण्यं त्वमलं देवं हव्यकव्यप्रतीच्छकं ॥ देवानां प्रमुखं स्वस्ति स्वाहाप हरितद्रवः ॥ सहस्रविद्योदहन पावकः सर्वभक्षणः ॥ त्वं हि यज्ञश्च यूपश्च त्वं हि धर्मवतां गतिः ॥ हिरण्यरेता देवेश त्वं हि वेदविदां गतिः ॥ दुर्वृ-

---

१ अत्र मंत्रश्लोकपादो लुप्तो भाति ॥ अतःपरं चाग्निमाध्यायसमाप्तिपर्यंतं मध्ये मध्ये ग्रंथश्च्युतिः ॥

त्तानां विनाशाय त्वं हि उत्पादितः सुरैः॥ दह संग्रह देवस्त्वमिमं दुष्टस्य निग्रहं ॥ अग्नये स्वाहा महाअग्नये स्वाहा ॥ त्वं हि शांतिकरो वह्निः त्वं मारुतहरोदनः हरिप्रधानगतिरासीदर्हंनिगृह्य गुह्यकं॥ तत्सादय तेजसा त्वं मम वश्यं च तत्कुरु ॥ दुष्टग्रहचारणं सर्वोपद्रवेषु च ॥ त्वया कृतेन होमेन शीघ्रं शांतिः प्रजायते॥ अथो हि बहुदेवानां त्वं हि वक्रं पुरातनं ॥तेन सत्येन देवेश इमं साधय मे ग्रहं ॥ नमोस्तु ते हव्यवाहन दंडीं प्रदर्शय२ दह२ तेज२ मोटय२ अपस्मारमुद्घाटय नमो अविसारकस्य नमः ॥ कुरंगाय नमः ॥ सप्तानां मातृणां नमः स्कंदाय ॥ एष परिग्रहमंत्रः मातृणामावाहनं च ॥ हिलतिमिलतिहलितापललनिस्वाहा ॥ अनेन सप्तकृत्वः परिजप्तेन पानीयचुलुकेनात्माऽभ्युक्षयितव्यः ॥ एवमात्मरक्षा कृता भवति ॥ ग्रहाणां सन्निधानाय बालस्य प्रतिपत्तये॥ सत्यशापनसंयुक्तमिमं मंत्रं पठेदनु ॥ प्रजापतौ तु यत्सत्यं यत्सत्यममरेश्वरे ॥ धर्मराजे च यत्सत्यं यच्च सत्यं तपस्विषु ॥ धनाधिपे च यत्सत्यं यच्च सत्यं जलाधिपे ॥ यत्सत्यमग्निहोत्रेषु यत्सत्यं श्रोत्रियेषु च ॥ पतिव्रतासु यत्सत्यमीश्वरे च महात्मनि ॥ एतैस्तु सत्यसमयैर्गुह्यकाः सत्यवादिनः ॥ दर्शयध्वं स्वरूपाणि सत्यं रक्षत सर्वशः ॥ आमंत्रिता मया सौम्याः सौम्यरूपाः प्रतीच्छत॥ बलिं चोपहृतं सर्वं सर्वे कौमारकग्रहाः॥ दर्शयध्वं स्वरूपाणि बलिं च प्रतिगृह्यतां ॥ ततश्चानुपठेदेतां कुलविद्यां समाहितः॥ ॐ लानीलाखलाकालाकुमारपिशाचरेवतीरोदनत्रासनकंपनजृंभणउत्थापय देवयक्षगंधर्वभूतानां नागराक्षससंतर्जनदंडनाविधूसारयभगवन्नग्निदंडअग्निवीर्यनमस्तेजसास्वेनत्यक्तमुत्सादय स्वाहा॥ भूर्भुवाय स्वाहा॥ दीप्ततेजसे स्वाहा ॥ हव्यवाहाय स्वाहा ॥ यमाय स्वाहा ॥ नश्यंत्यनेन होमेन समस्ता बाल-

कग्रहाः ॥ तत्राग्नावरुणे ताम्रे तप्तहेमसमर्चिषि ॥ तारावैदूर्यसदृशे शशिविद्युत्समप्रभे ॥ घृतमंडाभवर्णे वा गंधे न च घृतोपमे ॥ केतक्युत्पलदध्याभे ध्रुवमारोग्यमादिशेत् ॥ अनारोग्यं तु नीलेऽग्नौ कपिले भस्मनिष्प्रभे ॥ कृष्णे कपोते दुर्गंधे मत्स्यपूयास्रगंधिके ॥ वचालशुनगंधाभे विस्रकर्दमगंधिके ॥ इति ग्रहप्रतिषेधो नाम चतुर्थोऽध्यायः ॥ ४ ॥

अथातः स्नपनाध्यायं व्याख्यास्यामः ॥ सरित्संगमगोतीर्थगजेंद्रस्कंधगोकुले ॥ चतुष्पथे च स्नपयेद्बालं सस्तन्यमातरं ॥ श्मशाने दीर्घरोगार्तं मृतापत्यं च योषितं ॥ दूर्वाक्षीरद्रुमवती प्रागुदक्प्रवणा मही ॥ स्निग्धनीरुजपुष्पाढ्या पादपाः स्नपने शुभाः ॥ रेवतीश्रवणस्वातीप्राजापत्योत्तरेऽहनि॥ पुष्ये मूले च बालस्य स्नानं पर्वदिनेषु च ॥चतुर्हस्ताष्टहस्तं वा द्वात्रिंशद्धस्तमेव वा॥नल्वमात्रप्रमाणं वा त्रिवर्णं मंडलं लिखेत्॥[1]चतुरस्रं चतुर्द्वारं पताकाभिरलंकृतं ॥ आकीर्णं परितो दूर्वासिद्धार्थकयवांकुरैः ॥ क्रमात् प्राच्यादिषु लिखेद्गजारूढं पुरंदरं ॥ धर्मराजं महिषगं नक्राव्हस्थमपां पतिं ॥ धनदं च गदापाणिं यमस्थानमतीत्य च ॥ मातृस्थानं लिखेत्तस्मिन् सवृषं नंदिकेश्वरं ॥ सवध्वनुचरं चादौ मृन्मयं च विनायकं ॥ अतीतवरुणावासं सहस्रारं निवेशयेत् ॥ विष्णुप्रहरणं चक्रं सर्वविघ्ननिवारणं ॥ अग्नियक्षेशयोर्मध्येपद्महस्तालयां श्रियं ॥ नंद्यावर्त्तौ कुशादर्शमत्स्यस्वस्तिकतोरणं ॥ शंखं च दक्षिणावर्त्तं श्रीवत्सं माल्य दाम च ॥ इंद्रादीनां परीवारमैशान्यादिषु दिक्षु च ॥ लंबोदरी लंबभुजा लंबकर्णा च राक्षसी ॥ इंद्रद्वारे निवेश्याः स्युः यमद्वारे प्रलंबिनी ॥ लंबकाऽपांपतिद्वारे कौबेर्यां लंबनासिका ॥ षट्कीलानायसान्कुर्यात् सप्तत्रैलोहिकान्भिषक् ॥ द्वौ चात्र खादिरौ-

---

१ गोचर्मचापेषुमितं त्रिविधं नल्वमुच्यते इति क्वचिदधिकं श्लोकार्द्धं

शंकू चंदनांबुसमुक्षितौ ॥ अष्टौ घटाः षोडश वा द्वात्रिंशद्द्विगुणा अपि ॥ स्वस्तिकांका प्रवालाभा रंगैरश्लेषकैः कृता ॥ यथार्हौषधसंयुक्तशुचितोयप्रपूरिताः ॥ क्षीरिवृक्षपलाशाब्जगंधमाल्योपशोभिताः ॥ मंडलस्य चतुर्द्वारं कर्तव्याः सुनिवेशिताः ॥ पूर्वेषु प्रक्षिपेद्धेम ततश्च मणिमौक्तिकं ॥ अपरेष्वौषधीबीजानुदकाक्षतसर्षपान् ॥ मृदः पवित्रा रक्षोघ्नीराहरेत सुरालयात् ॥ हस्तिशालाश्वशालाभ्यां शृंगाटकचतुष्पथात् ॥ वल्मीकाग्रान्नदीतीराद्वेश्याकोशनृपालयात् ॥ गुप्तिद्वारात्समुद्राच्च समिद्धं चाग्निमाहरेत् ॥ समिधः क्षीरिवृक्षाणां गंधमाल्यं घृतं मधु ॥ अक्षतांस्तंदुलान् लाजान् पंचवर्णौदनं तिलान् ॥ ततो मध्ये स्थिते पद्मे सह धात्र्योपवेशयेत् ॥ बालमौदुंबरे पीठे पालाशे वा ऽप्युदङ्मुखं॥ आस्तृते हरितैर्दर्भैर्न तु प्राच्यादिसन्मुखं ॥ उदाहरिष्यते मंत्रो यः स्कंदबलिकर्मणि ॥ जुहुयात्तेन तत्राग्निमुदीच्यां स्थापितं दिशि ॥ त्रिरात्रोपोषितो वैद्यः शुक्लवासा जितेंद्रियः ॥ सर्षपाक्षतयुक्ताभिर्मृद्भिर्गात्राणि मार्जयेत् ॥ यथोदिताभिः स्नपयेद्घटैः प्राच्यादिदिक्स्थितैः ॥ क्रमात्प्रदक्षिणोत्क्षिप्तैस्तत्र मंत्रं प्रयोजयेत् ॥ अमृतात्पूर्वमुत्पन्नमिमं ते कलशं शुभं ॥ ददातु भगवानिंद्रो विजयं नाम नामतः ॥ रक्तपीतांबरधरैर्भूतैर्बहुभिरन्वितः ॥ राक्षसोरगगंधर्वपिशाचैश्चानुसेवितः ॥ शक्रो घंटाशनिधरैर्मेघैश्च विविधस्वनैः ॥ देवसंघैः परिवृतो गजेंद्रस्कंधसंश्रितः ॥ एभिः सार्द्धं महानिंद्रः स्नपनं ते ऽनुमन्यतां ॥ पूर्वद्वारे स्थितं दिव्यं वज्रमिंद्राज्ञया शुभं ॥ भवान् सर्वाणि पापानि निहंत्यद्यापराजितः ॥ इंद्राय नमः स्वाहा ॥ इंद्राण्यै स्वाहा ॥ अपराजिताय स्वाहा ॥ मेघाधिपतये स्वाहा ॥ देवाधिपतये स्वाहा ॥ शतक्रतवे स्वाहा ॥ द्वितीयं कलशं पुण्यमादित्यसदृशप्रभं ॥ यमो ददातु भगवान् वैजयंतं तु नामतः ॥ कृष्णांजननिभैर्घोरैः कृष्णांबरधरैस्तथा ॥ वृतः करालैर्विकृतैराक्षसै-

रुग्रविक्रमैः ॥ श्मशानारण्यनिलयैर्मृतवस्त्रांत्रभूषणैः ॥ त्वगस्थिमज्जामांसादैः प्रेतैर्बहुभिरावृतः ॥ धर्मराजो यमः श्रीमान्सत्यसंधो महातपाः ॥ दिव्यं महिषमारूढः स्नपनं तेऽनुमन्यतां ॥ दक्षिणद्वारसंस्थस्ते यमदंडः प्रतापवान् ॥दुःस्वप्नं दुष्कृतं पापं सर्वमद्य हरिष्यति- ॥ यमाय नमःस्वाहा ॥ यमदंडाय नमःस्वाहा ॥ महिषवाहनाय स्वाहा ॥ प्रेताधिपतये स्वाहा ॥ धर्माधिपतये स्वाहा ॥ वैजयंताय स्वाहा ॥ जयंतं जयवृत्त्यर्थं तृतीयं कलशं शुभं ॥ ददातु वनराजस्ते ददातु वरुणः स्वयं ॥ श्वेतमाल्यांबरधरैः श्वेतगंधानुलेपनैः ॥ गंधर्वैः पन्नगेंद्रैश्च भगवाननुशोभितः ॥तीर्थकूपनदीवृक्षनिकुंजोद्यानवासिभिः ॥प्रबलैः कपिलैर्मुंडैर्विकटैर्वामनैस्तथा ॥संवृतः पार्षदैर्वृत्तैः पाशमुद्गरपाणिभिः॥एभिः सहाद्य भगवान् वरुणस्त्वाऽभिषिंचतु॥ वरुणस्य महापाशोह्यपरद्वारमाश्रितः॥तव पापं निहंत्वाशु सर्वविघ्ननिवारणः॥वरुणाय नमःस्वाहा ॥ पाशहस्ताय स्वाहा ॥ श्वेतांबरधराय स्वाहा ॥ जयंताय स्वाहा ॥ मकरवाहनाय स्वाहा॥चतुर्थं कलशं पुण्यं प्रधानमपराजितं ॥ धनेश्वरो महाबाहुः प्रयच्छत्वलकाधिपः ॥ चित्रमाल्यांबरधरैश्चित्रगंधानुलेपनैः ॥ चित्रमद्यमदोन्मत्तैर्यक्षैः समुपसेवितः ॥ मुदितोद्गीथगंधर्वैः सेवितश्चाप्सरोगणैः ॥ स ते वैश्रवणः श्रीमान् स्नपनं त्वनुमन्यतां ॥ सर्वव्याधिहरा दीप्ता द्वारमुत्तरमाश्रिता ॥ गदा ते नाशयत्वद्य सर्वपापं दिशो दश ॥ धनाधिपतये स्वाहा ॥ अपराजिताय स्वाहा ॥ गदापाणये स्वाहा ॥ चित्रांबरधराय स्वाहा ॥ आपः पवित्रं लोकेऽस्मिन्नापो वै परमं शुचि ॥ आपो वै देवताः सर्वा आपस्त्वामभिषिंचतां ॥ब्रह्मा महर्षिभिः सार्द्धं भगवांस्त्वाऽभिषिंचतु ॥ सांगोपांगास्तथा वेदाः कीर्तिर्लक्ष्मीः सरस्वती ॥ बाला दाक्षायणी शीता सावित्री सरमा द्युतिः ॥ आकाशगंगा गंगाद्या महानद्यो महोदधिः ॥ नदीनां संगमस्तीर्थं निर्झरा अप्सरास्तथा ॥ मेरुर्महेंद्रो हिमवान् ज-

गतः स्थावरत्रयं ॥ स्कंदादयो ग्रहाश्चैव तोषिता बलिकर्मणा ॥ अद्य त्वामभिषिंचति नीरुजो भव दारक ॥ नमो भगवते पितामहाय ॐॐलिमलिमलिनुलिभुवनेस्वाहा ॥ नमो भगवते रुद्राय हिलिमिलिसेलिमसेलिमलिसलिमिलिस्वाहा ॥ राक्षसाश्च पलायंतु भूता उत्रस्तमानसाः ॥ मृताशना महाजिह्वास्तथा विघ्नविनायकाः ॥ नमो भगवते कुमाराय खिलिखिलिखेलिखेलिलिणिलिणिस्वाहा ॥ पुष्करं पुष्करारण्यं निमिषं च तथा पुनः ॥ प्रभासं प्रवरं तीर्थं तथा पिंडारकाह्वयं ॥ तीर्थान्येतानि सर्वाणि अभिषिंचंतु स्वस्ति ते ॥ नमो भगवतीभ्यो महायोगीश्वरीभ्यः निमिलिनिमिलिमेनुमेनुनुरुनुरुस्वाहा ॥ याश्च जातापहारिण्यो राक्षस्यो विकृताननाः ॥ अपि ता निहताः सर्वा याश्चान्या पापचिंतकाः ॥ सतीनां कपिलानां च सिद्धानां रेवतेजसां॥ तेजसा चर्षिविप्राणां मयाऽद्य स्नापितो भवान् ॥ प्रभुर्मृत्युरलक्ष्मीश्च कालरात्रिश्च सा रतिः ॥ लंबा च लोहशंकुश्च पूतना कूटपूतना ॥ अशुभं यच्च ते किंचित्सर्वं प्रतिहतं मया ॥ आदित्यावसवो रुद्रा अश्विनावौषधीगणाः ॥ गावोऽतरिक्षं संध्ये च नक्षत्रग्रहवत्सराः ॥ विश्वावसुश्च हाहाश्च नारदस्तुंबरुस्तथा ॥ धन्वंतरिरगस्त्यश्च सुस्नातं प्रदिशंतु ते ॥ स्नातो द्विजभिषग्भृत्यान् यथाविभवमर्चयेत् ॥ स्नपनं पापजित् पुण्यं नीरुजामपि पुष्टिकृत् ॥ रोगिणां सर्वरोगघ्नं वंध्यानामपि पुत्रदं ॥ विधिना विधिहीनं च वैद्यं हंति सबालकं ॥ नैतदश्रद्दधानाय योज्यं चानुपसीदते ॥ पूतीकरंजत्वक्पत्रं क्षीरिभ्यो बर्बरादपि ॥ तुंबीविशालाऽरलुकशमीबिल्वकपित्थतः ॥ स्थाल्यामुत्क्वाथ्य तत्तोयं बालानां स्नपनं शिवं ॥ रात्रौ प्रसुप्तलोकायां पुष्टिदं सर्वरोगजित् ॥ इति स्नपनविधिर्नाम पंचमोऽध्यायः ॥ ५ ॥

अथातः प्रत्येकग्रहप्रतिषेधं व्याख्यास्यामः ॥ स्कंदग्रहे गुग्गुल्वेलवालुकामनःशिलाहरितालमंजिष्ठोशीररास्नाऽगुरुदारुश्रीवेष्टकहरेणु

गिरिकदंबचंदनैः श्लक्ष्णपिष्टैः प्रदेहो वातहरवृक्षपत्रक्काथेन कवोष्णेन परिषेकस्तेषामेव च मूलक्काथे सर्वगंधसुरामंडकैंडर्यावापं तैलं विपक्कमभ्यंगः ॥ बृहतीद्वयद्विपुनर्नवेरणुकोपकुल्यामुस्तखदिरवचाशंखनाभिसरलसर्षपसुगंधासुराह्वकल्कविपक्कं वा ॥ क्षीरिवृक्षकषायेण क्षीरेण च सिद्धार्थकपलिकैश्च पिष्टैः सारिवाद्विकाकोलीद्विबलांशुमतीद्वयहस्तीकर्णपूर्णैर्घृतप्रस्थं पानं ॥ रास्नादेवदार्वन्यतरकल्केन वा सक्षीरं साधितं सर्पिः ॥ वचाकाकादनीसर्पकंचुकसर्षपैरुष्ट्राजाविगोरोममिश्रैः सघृतैर्धूमः ॥ सिद्धार्थकसर्जरसकुष्ठहिंगुगुग्गुलुभिर्वा ॥ सोमवल्लीशमीबिल्वमंदारकमृगादनीमूलानि सूत्रेण ग्रथितानि कंठेन शिरसा वा धारयेत् ॥ रक्तमाल्यानुलेपनवस्त्रपताकामणिबीजैर्विविधैश्च भक्तैः सदधिमधुघृतलाजकुल्माषान् समत्स्यसुरासवान् समयूरकुक्कुटान् सघंटान् सचंडान् सशूर्पव्यजनांश्च कुमारग्रहे रक्तौदनेन बलिमुपोषितो निवेदयेत् ॥ तत्र च रात्रावग्निं ज्वालयित्वा मंत्रमिमं पठन् मधुसर्पिषा जुहुयात् ॥ अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति वै ततः॥ नमः स्कंदाय देवाय ग्रहाधिपतये नमः ॥ शिरसा त्वाऽभिवंदेऽहं प्रतिगृण्हीष्व मे बलिं ॥ नीरुजो निर्विकारश्च शिशुर्भवतु सर्वदा ॥ स्वाहेति सर्वेष्वेवच ग्रहेषु त्रिकालमग्निं पूजयेत् तर्पयेच्च ॥ विशेषतः स्कंदग्रहे त्रिरात्रं च रात्रौ गायत्र्यभिमंत्रितोदकेन चत्वरे धात्रीकुमारयोः स्नपनमाचरेत् ॥ त्रिकालं च मंत्रेणानेन बालमपमार्जयेत्प्रतिसरां च बध्नीयात् ॥ तपसां तेजसां चैव वपुषां यशसां तथा ॥ विधाता यो ऽव्ययो देवः स ते स्कंदः प्रसीदतु ॥ ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः ॥ देवसेनारिपुहरः पातु त्वा भगवान् गुहः ॥ देवदेवस्य महतः पावकस्य च यः सुतः॥ गंगोमाकृत्तिकानां च स ते शर्म प्रयच्छतु ॥ रक्तमाल्यांबरः श्रीमान् रक्तचंदनभूषितः ॥ रक्तदिव्यवपुर्देवः पातु त्वा क्रौंचसूदनइति ॥ विशाखे स्कं-

दोक्तो वचाकुष्ठान्वितः प्रदेहो गोलोमीबिल्वशिरीषयुक्तसुरसादिक्वाथेन परिषेकः॥ सर्पगंधादेवदारुकुष्ठमुस्तकल्केन सगोमूत्रबस्तमूत्रेण सिद्धं तैलमभ्यंगः॥ क्षीरिवृक्षकषायेण जीवनीयगर्भं सपयस्कं सर्पिः सिद्धं पानं जीवकर्षभकक्षीरिणीहरिद्रांशुमतीद्वयमधुकैर्वा घृतं विदारीद्वयतवक्षीरमृद्वीकामधुकरास्नानीलोत्पलकदंबवचाव्योषैर्वा॥ गृध्रोलूकपुरीषवृषभरोमकेशहस्तिनखैर्घृताक्तैर्धूपः॥ अनंता कुक्कुटी मर्कटी बिल्वी सर्षपा श्वेतगिरिकर्णिका पूर्वोक्तानि च पूर्ववद्धारयेत्॥पक्वाममांसरुधिरदधिवारुणीयुक्तो वटवृक्षे बलिश्चतुष्पथे स्नानं मंत्रश्च॥ स्कंदापस्मारसंज्ञो यः स्कंदस्य दयितः सखा॥ विशाखसंज्ञः स शिशोः शिवायास्तु शुभाननः॥ नैगमेषे विशाखोक्तः प्रदेहो ऽग्निमंथवरुणरोहिषपूतीकपारिभद्रैः परिषेको धान्याम्लेन वा सबीजेन॥गुग्गुल्वश्वगंधासर्षपोशीरश्वेताकुष्ठमनोह्वाविपक्वं तैलमभ्यंगः॥ दशमूलक्वाथे मधुरस्कंधगर्भं सर्पिः पानं॥ सर्पगंधाबस्तनखरोमभिर्धूमः॥ सर्पगंधाबस्तगंधातुंबीमृगैर्वारुशतावरीसहदेवापुनर्नवबीजानि धारयेत्॥ विचित्रमाल्यफलशुक्लविलेपनौदनदधिघृतगुडक्षीरैर्महापाथक्षीरिद्रुमे वा नदीतीरे स्नानं मंत्रश्च॥ अजाननश्चलाक्षिभ्रूः कामरूपीमहायशाः॥ बालं बालहितो देवो नैगमेषोऽभिरक्षतु स्वाहा॥ श्वग्रहे गवाक्षीब्रह्मदंताबृहतीद्वयसारिवाह्रीबेरकुष्ठभूमिकदंबसुरसमंजरीकरवीरपुष्पैः प्रदेहः॥ श्वमहिषपुरीषबिल्वैरंडनक्तमालारलूकपत्रक्वाथः परिषेको वयस्थाशतावरीसारिवापयस्यैरंडत्रिकटुककल्कक्षीरसिद्धंतैलमभ्यंगस्तथैव च घृतं पानं॥ मयूरोलूकाश्वरोमाणि गोबस्तमूत्रभावितशुक्लमत्स्यचूर्णानि वा निशीथे धूपः॥ वचावयस्थाब्राह्मीजटिलागोलोमीलंबापूतनाकेशीगिरिकदंबकेषीकासहदेवा धारयेत्॥ सघृतसुरामांसदधिरुधिरपल्लश्चत्वरे बलिः॥ संकरकूटे स्नानं मंत्रश्च॥

१ पालयितेति सौश्रुते पाठः

रक्षार्थं कार्तिकेयस्य कृत्तिकोमाग्निशूलिभिः ॥ योऽसौ श्वविग्रहः सृष्टो स देवस्त्वाऽभिरक्षतु स्वाहा ॥ पितृग्रहे पूर्वोक्तप्रदेहो वचावयस्था-जीवंतीवासकप्रियंगुगुग्गुलुरास्नामनःशिलालैर्वा वचादिभिरेव च सि-द्धं तैलमभ्यंगो बिल्वकपित्थकरंजतर्कारीसुरसपाटलीवरुणपारिभद्र-कमातुलुंगपत्रक्काथेन रात्रौ परिषेको बिल्वादिभिरेव च तैलं सुराबस्त मूत्रयुक्तं साधितमभ्यंगस्त्रिफलांशुमतीद्वयपयस्यामधुककल्केन दश-मूलनिर्यूहे सक्षीरं सर्पिः पक्कं पानं ॥ देवदारुभार्ङ्गीविडंगचंदनकाको लीद्वयजीवकर्षभकैर्वा सक्षीरैर्लक्ष्मीसुराकुष्टगोलोमीजटिलोग्रगंधाद्भिः सिद्धं तैलं नावनं॥ एभिरेव च पिष्टैर्लेपः ॥ गृध्रोलूकवानररोमाणि स-घृतानि तत्पुरीषं वा सुमजने धूपो वचादिभिर्वा प्रदेहोक्तैः ॥ पूर्वो-क्ता एव च वचाद्या धारयेत् ॥ ससुरासवगुडापूपपिष्टतिलकृतभक्षो वृक्षमूले सवृषभः कांचनाक्षियुगयुक्तः स्वयं पित्रा कुमारस्य निर्वा-पणीयो बलिः क्षीरिवृक्षसमीपे स्नानं मंत्रश्च ॥ यः पिता सर्वबाला-नां ग्रहाणां पूजितो वरः ॥ वृक्षमूले कृतावासाः स त्वां पातु पिता महः स्वाहा ॥ शकुन्यां मधुकह्लीबेरोशीरसारिवापद्मकोत्पलमं-जिष्टालोध्रप्रियंगुगैरिकैः प्रदेहः ॥ सुरामेषमूत्रपिष्टैर्वा रोध्रयष्टीम-धुकमंजिष्टाहरीतकीदेवदारुभिर्व्रणोक्तैश्च प्रदेहः ॥ वेतसाम्रकपित्थैः सपंचमूलैर्वा ॥ शुक्तिशंखशंबूकभस्ममंजिष्टाऽभयामधूकैस्तैलं पक्कं व्रणरोपणं ॥ क्षीरितरुभिः परिषेको मार्कवमूलकामलकीत्वक्पत्रप्रि-यंगुमनःशिलाबलाद्वययष्टीकमुकरोध्रधातकीसारिवांजनोत्पलपत्तंगस-मंगाद्विहरिद्रामांसीमंजिष्टाचंदनपद्मकसुवर्णगैरिकैस्तैलं सपयस्कं प-क्कमभ्यंगो ग्रहहा व्रणरोपणश्च ॥ अर्जुनफलरोध्रमधुकोदुंबरत्वचाचूर्णः क्षौद्रयुक्तो मुखपाके मुखोद्धर्षः ॥ विशाखोक्तं सर्पिःपानं ॥ स्कंदो-क्तो धूपः ॥ काकपिच्छेन वा गोवालोग्रगंधारक्षोघ्नघृतमयूरचंद्रकैर्वा ॥ कदंभराकुक्कुटीलंबासहदेवाह्रीबेरोशीराणि धारयेत् ॥ छागदंतील-

क्ष्मणाबृहतीद्वयमृगैर्वारुशतावरीसहदेवा वा ॥ तिलतंदुलमत्स्यमनः-शिलाहरितालसंपृष्टस्तिलपिष्टकृतशकुनिकैः करंजे बलिः निष्कुटे स्नानं मंत्रश्च ॥ अंतरिक्षचरा देवी सर्वालंकारभूषिता॥ अधोमुखी तीक्ष्णतुंडा शकुनी ते प्रसीदतु ॥ दुर्दर्शना महाकाया पिंगाक्षी भैरवस्वरा॥ लंबोदरी शंकुकर्णा शकुनी ते प्रसीदतु ॥ पूतनायां हिंगुवचागिरिकदंबकुष्टैलाद्वयसुराह्वैः प्रदेहः ॥ कपित्थशिरीषन्यग्रोधबिल्वैरंडबकुलधववंशाग्निमंथपत्रक्काथो गंधोदकयुक्तः परिषेको वरुणकट्वंगास्फोतककपोतवंकापाशिभद्रकैर्वा ॥ कुष्टसर्जरसवचागोलोमीवयस्थामनःशिलाऽलैस्तैलं साधितमभ्यंगः ॥ मधुरौषधसिद्धं सर्पिः पानं ॥ एलाद्वयकुष्टवचाहिंगुदेवदारुगिरिकदंबकैर्धूपः ॥ बिंबीगुंजाकाकादनीं द्रवारुणीचित्रफला धारयेत्॥विचित्रमाल्यो मस्त्वोदनकृशरापल्लवान् बलिः शरावसंपुटस्थः शून्यगृहे चतुर्दिशं प्रक्षेप्यः॥ तत्रचोच्छिष्टेन स्नपनं मंत्रश्च ॥ मलिनांबरसंवीता मलिना रूक्षमूर्द्धजा ॥ शून्यागाराश्रया देवी दारकं पातु पूतना ॥ दुर्दर्शना [1]महाकाया कराला मेघकालिका ॥ भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ शीतपूतनायां पूतनोक्तप्रदेहो धारणीयानि च ॥ वरुणकपित्थतुलसीपाशिकावंशीबिल्वपाटलीनंदीभल्लातकपत्रनिर्यूहेण परिषेकः ॥ मुस्तामरदारुकुष्टसर्वगंधैर्गोबस्तमूत्रसंयुक्तं तैलं विपक्वमभ्यंगः ॥ काश्मर्यपृश्निपर्णीरोध्रमधुकैर्मधुरवर्गेण समक्षीरं सर्पिः शृतं प्राश्यमानं शीतपूतनां छर्दिहिध्माकासांश्च शमयति ॥ सातिसारायां तु खदिरपलाशसर्जार्जुनरोहिणीक्काथेन तुल्यपयः सर्पिः ॥ गृध्रोलूकविड्बस्तगंधाहिनिर्मोकनिंबपत्रैर्धूपो जीर्णगोचर्मसर्षपभिक्षुसंघाटीसर्पकंचुकैर्वा॥ मुद्गौदनप्रायो जलाशयसमीपे बलिस्तत्रैव च स्नानं मंत्रश्च ॥ मुद्गौद-

१ सुदुर्गंधेति सुश्रुते पाठः २ भिक्षुसंघाटीभिक्षुकंथा ॥

नाशना देवी सुराशोणितपायिनी ॥ जलाशयालयरता पातु त्वा शीतपूतना ॥ अंधपूतनायां सर्वगंधैः सशिरोवक्त्रस्य प्रदेहः ॥ वरुणास्फोतपारिभद्रकवृक्षादनीनागबलागैरिकशतावरीभिः परिषेकः- ॥ हरितालमनःशिलाकुष्ठसर्जरससुरासौवीरकसंस्कृतं तैलमभ्यंगः ॥ स्यंदनस्योनाककाश्मर्यखदिरकुष्टैर्मधुरवर्गेण क्षीरिवृक्षकषाये सक्षीरं शृतं सर्पिः मधुयुतं चक्षुःकामोपसृष्टानां प्राशः ॥ छर्दिःकासातिसारवतां तु तदेव पिप्पलीपिप्पलीमूलशालशालिपर्णीबृहतीकल्कोपेतं ॥ रक्षोघ्नारुष्करैः समधुभिर्धूपो जीर्णभिक्षुसंघाटीकृकवाकुपुरीषाहित्वक्केशचर्मभिर्वा ॥ अनंताकुक्कुटीमर्कटीबिंबीर्धारयेत् ॥ तुंबीचित्रफलामृगैर्वारुजालिनीकाकादनीर्वा ॥ पक्वामसांसशोणितैश्चतुष्पथे बलिर्गृहे स्नानं मंत्रश्च ॥ करालपिंगला मुंडी कषायांबरवासिनी ॥ देवी बालमिमं प्रीता पालयत्वंधपूतना ॥ मुखमंडितिकायां वारुण्या श्लक्ष्णपिष्टैः सर्वगंधैर्लेपः ॥ बिल्वैरंडकपित्थाग्निमंथवांशीकुबेराक्षीपत्रक्वाथेन परिषेकस्तेषामेव च स्वरसेन मधुकवाजिगंधागर्भं नैकध्यं तैलं वसा च पक्वमभ्यंगः ॥ ह्रस्वपंचमूलमधुरवर्गसिद्धं घृतं समधुशर्करं प्राशः ॥ पाठाकेतकसूचीनिचुलफलपिप्पलीविडंगहरीतकीभस्मवचाचोरकचूर्णो वा मधुसर्पिर्भ्यां रूक्षरामठपाठामरिचपिप्पलीचूर्णो वा देवदारुभस्मयुतो मूर्वाव्योषमुस्तरास्नागिरिकदंबकाश्वगंधाचूर्णो वाऽशोकरोहिणीचूर्णो वा ॥ एभिरेव च विपक्कमाजं घृतं पयो वा पिबेत् ॥ एभिरेव च योगैर्धूपोपदेहाभ्यंगनस्यतैलाक्षिपूरणपरिषेकान् कुर्यात् ॥ यवकुष्ठसर्जरसैर्धूपः ॥ सर्पचाषचीरल्लिजिह्वा धारयेत् ॥ मंत्रं चास्य श्लेष्महरमौषधं पाने स्तनोद्वर्त्तने च युंज्यात् ॥ विविधगंधधूपमाल्यांजनपारदमनःशिलायुक्तो गोष्ठमध्ये बलिर्गवां मध्ये स्नानं मंत्रश्च ॥ अलंकृता रूपवती सु-

१ जलाशयालया देवीतिसौश्रुते पाठः

भगा कामरूपिणी ॥ गोष्ठमध्यालयरता पातु त्वा मुखमंडिका ॥ रेवत्यां सर्वगंधैः कुलत्थशशचूर्णेन च प्रदेहः ॥ अश्वगंधाऽजशृंगीसारिवाद्विपुनर्नवाद्विसहाविदारीभिः परिषेकः ॥ कुष्ठसर्जरससाधितं तैलमभ्यंगः॥धवाश्वकर्णधातकीककुभातिंदुकैर्जीवनीयैश्च पिष्टैर्घृतं शृतं प्राशः ॥ यवयवफलोलूकगृध्रशकृद्भिः सघृतैर्धूपः ॥ वरुणादिरिष्टशिग्रुकान्विः श्वाविकसूत्रेण गंडकः ॥ शुक्लमाल्यविलेपनलाजौदनपायसैर्गौ तीर्थे बलिः संगमे क्षीरिवृक्षसमीपे वा स्नपनं मंत्रश्च॥नानावस्त्रधरा देवी चित्रमाल्यानुलेपना चलत्कुंडलिनी श्यामा रेवती ते प्रसीदतु ॥ शुष्करेवत्यां धूपवर्जः स्कंदग्रहोक्तो विधिः॥वचाऽश्वगंधाहिंगुलाजसिद्धार्थकैरुद्वर्तनं ॥ सर्षपतैलं वचासिद्धं नेत्रपूरणं ॥ काकगृध्रगर्दभशकृद्भिर्धूपः ॥कुलीरकपालशल्यकशुक्तिमेषशृंगहयखरजाहकहस्तिनखनकुलरोमभिर्धूपः सर्वग्रहघ्नः ॥ कुल्माषैर्मद्येन शुष्कमांसेन च शुष्कवृक्षे बलिस्तत्रैव च स्नानं मंत्रश्च ॥ उपासते यां सततं देव्यो विविधभूषणाः ॥ लंबा कराला विनता तथैव बहुपुत्रिका ॥[1] रेवती शुक्लनामा च सा ते देवी प्रसीदत्विति ॥ भवति चात्र॥अनुबंधान्यथाकृच्छ्रं ग्रहापायेप्युपद्रवान् ॥बालामयनिषेधोक्तभेषजैः समुपाचरेत्॥ इति प्रत्येकग्रहप्रतिषेधो नाम षष्ठोऽध्यायः ॥ ६ ॥ इति द्वितीयं कौमारतंत्रं संपूर्णं ॥ २ ॥

यथा वेदविदो नेदमश्लिष्टं मनुयो ऽभ्यधुः ॥ तथाऽवबोधं यदिह स्पष्टमाचष्ट वाग्भटः ॥ १ ॥

अथातो भूतविज्ञानं व्याख्यास्यामः ॥ अष्टादश भूताधिपतयः ॥ तद्यथा॥सुरासुरगंधर्वोरगयक्षब्रह्मराक्षसराक्षसपिशाचप्रेतकूष्मांडककालादौकिरवेतालपितृऋषिगुरुवृद्धसिद्धाश्च॥ ते पुनः पृथक्कोटिपरिवा-

---

१ लंबा कराला विनता तथैव बहुपुत्रिका ॥ रेवती सततं माता सा ते देवी प्रसीदत्वितिसौश्रुतेऽधिकःपाठः

शाः ॥ तेषामपि चापरिसंख्येयः परिचारइत्यनंतो भूतलोकः॥सर्वेऽपि च प्रायेणाहारकामा निशाचारिणो भयानका मांसासृग्वसाशिनः॥अपिच ॥ सुरासुरादिसंवाससंसर्गात्तच्छीलाचारकर्मतया तत्संज्ञां लभंते॥तेषां पुनरनु प्रवेशकारणं सद्यः पूर्वकृतो वा विशेषेण प्रज्ञापराधस्तेनाहितनतस्तमात्महननमवतारगवेषिणो देवादिग्रहा अप्यनुगृह्णंति ॥ तद्वदुन्मादापस्मारोपप्लुतचित्तं तथा ज्वराद्यामयोपहतमपि विशेषतश्च प्राणिनां पूयासृक्स्नेहक्लेदगंधेन ॥एवंविधांस्तु पुरुषाननिष्टाघातकालेष्वभिगच्छंति ॥ तद्यथा ॥ पापस्य कर्मणः समारंभे पूर्वकृतस्य वा परिणामकाले एकस्य वा शून्यग्रहनिवासे चतुष्पथाधिष्ठाने वा संध्यायामप्रयतमाने वा[1] पक्षसंधिषु वा मिथुनीभावे रजस्वलाभिगमने वा विगुणे वाऽध्ययनहोमबलिमंगलप्रयोगे नियमब्रह्मचर्यव्रतभंगे वा महाहवे वा देशपुरकुलविनाशे वा महाग्रहोपगमने वा स्त्रिया वा प्रजननकाले विविधभूताशुचिस्पर्शे वा वमनविरेचनरुधिरस्रावाशुचेरप्रयतस्य चैत्यदेवायतनाभिगमने वा मांसमद्यमधुतिलगुडोच्छिष्टे वा दिग्वाससि वा निशि नगरचतुष्पथोपवनश्मशानाभिगमने वा द्विजगुरुसुरपतिपूज्यव्यतिक्रमे वा[2] ॥ तत्रावलोकयंतो जनयंति मनोविकारं सुरासुरग्रहाः स्पृशंतो गंधर्वाः समाविशंतो भुजगा यक्षाश्चात्मगंधमाघ्रापयंतो राक्षसाः वाहयंतोऽधिरुह्य पिशाचाद्या धर्षयंतः पितरोऽभिशपंतः ऋषिगुरुवृद्धसिद्धाः ॥ तत्र शीलवंतं चोष्याचारं शुक्लांबरधरं तपःस्वाध्यायपरमं प्रायः शुक्लप्रतिपदि च त्रयोदश्यां संध्ययोश्च सुराः ॥ शुक्लत्रयोदशीकृष्णद्वादश्योर्दानवा ग्रहाः ॥ प्रियनृत्यगीतवादित्रगंधमाल्यपरदाररतिं चोष्याचारं प्रायश्चतुर्थ्यामष्टम्यां द्वादश्यां वा चतुर्दश्यां च गंधर्वाः ॥ स्नानशीलं चपलमनिमित्त-

१ संध्याविलायामप्रयतभावे वेति चरकपाठः ॥ २ धर्माख्यातव्यतिक्रमे वाऽन्यस्य कर्मणोऽप्रशस्तस्यारंभे वेति चरकेऽधिकः पाठः ॥

क्रोधनमर्थसिद्धं प्रायो ब्राह्मणं प्रायः पंचम्यां संध्ययोर्मध्याह्ने च नागाः ॥ सत्वबलरूपगांधर्वधनशौर्ययुक्तं माल्यानुलेपनहास्यप्रियमतिवाक्करणं प्रायः शुक्लसप्तम्यामेकादश्यां च यक्षाः ॥ स्वाध्यायतपोव्रतचर्यादेवयतिगुरुपूजाऽरतिं च भ्रष्टशौचं ब्राह्मणमब्राह्मणं वा ब्रह्मवादिनं शूरमानिनं देवागारसलिलक्रीडनप्रियं स्खलितब्रह्मचर्यं प्रायः शुक्लपंचम्यामष्टम्यां पूर्णचंद्रदर्शने संध्यासु च ब्रह्मराक्षसाः ॥ हीनसत्वं पिशुनं स्तेनं लुब्धं शठं प्रायो द्वितीयातृतीयाष्टमीषु राक्षसपिशाचादयः ॥ सकलिलोलपापप्रियमसूयावंतं परुषभाषिणं बह्वाशनं च कृष्णनवमीद्वादश्योश्च निशि राक्षसाः॥ आत्मश्लाघिनं कूटसाक्षिप्रदं परोपतापिनं च चतुर्दश्यां च पिशाचादयः॥मातापितृगुरुवृद्धाचार्योरगविप्रसेविनं प्रायो दशम्याममावास्यायां च पितरः॥ तद्विधमेव च प्रायः षष्ठ्यां नवम्यां च गुरुवृद्धसिद्धाः॥तयोरेव च स्नानशुद्धिविविक्तसेविनं धर्मशास्त्रश्रुतिवाच्यकुशलमृषयः॥ तेषां तु गृहीष्यतां पूर्वरूपाणि ॥ ॥ तद्यथा ॥ देवगोब्राह्मणतपस्विनां हिंसारुचित्वं नृशंसाभिप्रायता कोपनत्वमरतिरोजोवर्णच्छायाबलवपुषां चोपतप्तिः स्वप्ने देवादिभिरभिभर्त्सनं प्रवर्त्तनं च ॥ तत्र सौम्यदृष्टिं गभीरमधृष्टमकोपनं शुचिमनिद्रं भोजनानभिलाषिणमल्पस्वेदमूत्रपुरीषवाचं संस्कृतवादिनं देवद्विजगुरुभक्तं शुक्लमाल्यांबरधरं सरित्पुलिनशैलोच्चभवनदधिक्षीरसुरभिप्रियं चिरादक्षिणी निमेषयंतं वरप्रदातारं शुभगंधं वर्चस्विनं फुल्लपद्मोपममुखं देवग्रहेण गृहीतं विद्यात् ॥ तत्रापि गोवृषमिव नदंतं दीप्तमुखनयनमादीप्तेन भास्वरेण सर्वमाभाषणमीश्वरेण॥ मेघस्तनितविद्युद्वृष्टीर्वाचा विसृजंतमिंद्रेण॥धनानि वाचा प्रयच्छंतमाच्छिदंतं च धनदेन ॥ सुरासवसमगंधं काष्ठतृणरज्वादिसर्वपाशमभिगम्यमानं वरुणेन ॥ जिह्मदृष्टिं दुष्टात्मानं क्रोधनमतृप्तं सस्वेदगात्रं ब्राह्मणगुरुद्वेषिणं निर्भयमभिमानिनं खरव्यवसायिन-

महंरुद्रो ऽहमुपेंद्रो ऽहं स्कंदो ऽहं विशाखइत्यादिभाषमाणं विकृतवाचमसकृद्धसंतं सुरामिषादंतं दंतैर्नखैश्च परान् हिंसंतमसुरेण ॥ स्वाचारं हृष्टात्मानं शुभगंधमाल्यव्याहारं नृत्यंतं गायतं मुखवाद्यानि कुर्वंतं प्रियोद्यानपुलिनस्नानरक्तवस्त्रानुलेपधूपान्नपानहासलीलाशृंगारकथागांधर्वं गंधर्वेण ॥ तत्रापि शिरोधुनानं कलहं कुर्वंतं सहेन ॥ जागरूकं पठंतं हसंतं हसनेन ॥ क्रोधनमनिशं निश्वसंतं त्रसंतमातपत्रतो रक्ताक्षं स्तब्धदृष्टिं जिह्वां लोलयंतं सृक्किण्यौ लिहानमधोमुखशायिनं चलं वक्रगामिनं बिलमवलोक्य सर्पवद्दूरं प्रसरंतं जलौघघनदुंदुभिस्वनैर्हृष्यंतं क्षीरमधुघृतगुडमधुस्नानमाल्यप्रियं गात्राणि कंपयंतं दंतैः खादयंतं जलेऽवतीर्णमुत्तरमनिच्छंतमुरगेण ॥ असकृत्स्वमरोदनहासनृत्यगीतपाठकथान्नपानमाल्यधूपगंधरक्तवस्त्ररतिं रक्तत्रस्नविप्लुताक्षं द्रुतसर्वगं मत्तमिव च गच्छंतं वस्त्रांतमुत्कर्षंतं चालिताग्रहस्तं बहुभाषिणं स्त्रीलोलं मद्यामिषप्रियं सन्नद्धशस्त्रं मृगयमाणमतिबलमव्यथं हृष्टमल्परोषं किं कस्मै ददामीति वादिनं शुभगंधं वर्चस्विनं द्विजातिवैद्यपरिभाविनं रहस्यभाषिणं यक्षेण ॥ तत्रापि हृषितरोमाणमूर्ध्वेक्षणं हृष्टं प्रहृष्टनयनं चंडं महानिनादं मणिचरेण ॥ रहोहसितनृत्यगीतान्याचरंतमाकीर्णमौनमासेविनं विकटेन ॥ हासनृत्यप्रियमाक्रोशिनं प्रधाविनं देवद्विजभिषग्द्वेषिणं मंत्रवेदशास्त्राध्यायिनं काष्ठशस्त्रादिभिरात्मानमाघ्नंतं छिद्रप्रहारिणं[1] वैद्यरंध्रान्वेषिणं भोःशब्दवादिनं परुषं रौद्रचेष्टं शीघ्रगामिनं ब्रह्मराक्षसेन ॥ तत्रापि विकृतेन स्वरेण भाषंतमुत्त्रासयंतं ब्रह्मवादिनं संस्कृतभाषिणं बहुस्तोभं नादयंतं यज्ञसेनेन ॥ सक्रोधदृष्टिं भ्रुकुटीमुद्वहंतं भैरवाक्षं त्वरितमभिधावंतं वदंतं ससंभ्रमं प्रहरंतं नष्टनिद्रं निशाविचारिणमन्नद्वेषिणमनाहारमप्यतिबलिनमन्नकाले हसंतं निर्लज्जं शूरं रोषणमशुचिस्त्रीमद्यमांसर-

---

१ छिद्रं पापक्रियारंभः

क्तरक्तमाल्यप्रियं रक्तमामिषं वा दृष्ट्वौष्ठौ परिलिहंतं दीनं शंकितं ध्यायंतमकस्माद्रुदंतं हसंतं गायंतं नृत्यंतं निरर्थकभाषिणं राक्षसेन ॥ तत्रापि परुषच्छविं भूमिं ताडयंतमकस्माद्रुदंतं विशाखेन ॥ भिन्नगद्गदकंठमंगानि भंजंतं जिह्वां परिलिहानमक्षमालया जपमानं शौचमभीक्ष्णं कुर्वाणं संगमेन ॥ मद्यविद्युद्द्वयायासते क्रुध्यंतं जलदृष्टिं समंतान्मन्यमानं स्नाटकनिष्पीडितं विद्युन्मालिना ॥ आममांसपललमूलकापूपपरमान्नवाचिनं रूक्षच्छविं विरूपाक्षेण ॥ अस्वस्थचित्तं नैकत्र प्रतिष्ठंतं परिधाविनं दयितनृत्यगीतहासोच्छिष्टमद्यमांसशून्यावासरतिं पुरस्तादभिघ्नंतं निर्भर्त्सनाद्दीनशंकितवदनं नखैरात्मनो वपुरुल्लिखंतं नष्टस्मृतिं बद्धाबद्धभाषिणमकस्माद्रुदंतं दुःखान्यावेदयंतमविध्वस्तरूक्षस्वरदेहं दुर्गंधमशुचिं नग्नं मलिनं रथ्याचैलतृणाभरणं संकरकूटकाष्ठाश्मकारोहणं लोलं बह्वाशिनं पिशाचेन ॥ तत्रापि भोजनं दृष्ट्वा हसंतं विस्वरं क्रोशंतं नित्यभीतं करमलेन ॥ सर्वगात्राणि स्पंदयंतं मुहुर्धावंतं भीषयमाणं नवाक्रशेन ॥ वैद्यं दृष्ट्वा कुप्यंतं भ्रमन्नोजिनं बह्वाशिनं भस्मगुंठनशयनं स्त्रियो मार्गे रुंधानं मूत्रपुरीषविमर्दिनं निस्तेजसा ॥ प्रेताकृतिचेष्टागंधं तृणच्छेदिनं भीरुमाहारद्विषं प्रेतेन ॥ बहुप्रलापमुखवाक्यं विलंबितगतिं कृष्णवदनं शूनप्रलंबवृषणं कूष्मांडेन ॥ नग्नं धावंतमश्मकाष्ठादि गृहीत्वा भ्रमंतं तृणचीरमाल्यनिवसनमुत्रस्तदृष्टिं परुषाभिधायिनं श्मशानशून्यैकवृक्षरथ्यानिषेविणं तिलान्नमद्यामिषसक्तदृष्टिं कालार्दैन ॥ उग्रवादिनं रक्तत्रस्तनेत्रमन्नाभिलाषमुदकं प्रार्थयमानमौकिरेण ॥ सत्यवादिनं परिवेपिनं धूपगंधमाल्यरतिमतिनिद्रालुं वेतालेन ॥ अप्रसन्नदृष्टिं चलनेत्रपक्ष्माणं दीनवदनं संशुष्कतालुमतिनिद्रालुं प्रतिहतवाचमपसव्यवस्त्रमल्पाग्निमरोचकिनं तिलगुडमांसरुचिं वा पितृग्रहेण ॥ ऋषिगुरुवृद्धसिद्धानामभिशापाभिध्यानानुरूपविहारव्याहाराहारं तद्ग्रहेण गृहीतं

विद्यादिति ॥ भवति चात्र ॥ लक्षयेज्ज्ञानविज्ञानवाक्चेष्टाबलपौरुषं ॥ पुरुषे ऽपौरुषं यत्र तत्र भूतग्रहं वदेत् ॥ कुमारवृंदानुगतं नग्नमुद्धतमूर्द्धजं ॥ अस्वस्थमनसं दीर्घकालिकं सग्रहं त्यजेत् ॥ इति भूतविज्ञानं नाम सप्तमोऽध्यायः ॥ ७ ॥

अथातो भूतप्रतिषेधं व्याख्यास्यामः ॥ भूतं जयेदहिंसेच्छं जपहोमबलिव्रतैः ॥ तपःशीलसमाधानदानज्ञानदयादिभिः ॥ हिंगुव्योषालनेपालीलशुनार्कजटाजटाः ॥ अजलोमी सगोलोमी भूतकेशी वचा बला ॥ कुक्कुटी सर्पगंधाख्या तिलाः कालविषाणिके ॥ वज्रप्रोक्ता वयस्था च शृंगी मोहनवल्यपि ॥ स्रोतोजांजनरक्षोघ्नं रक्षोघ्नं चान्यदौषधं ॥ खराश्वश्वाविदुष्ट्रर्क्षगोधानकुलशल्यकान् ॥ द्वीपिमार्जारगोसिंहव्याघ्रसामुद्रसत्वतः ॥ चर्मपित्तद्विजनखान् वर्गेऽस्मिन् साधयेद्धृतं ॥ पुराणमथवा तैलं नवं तत्पाननस्ययोः ॥ अभ्यंगे च प्रयोक्तव्यमेषां चूर्णं च धूपने ॥ एभिश्च गुलिकां युंज्यादंजने सावपीडने ॥ प्रलेपे कल्कमेतेषां क्वाथं च परिषेचने ॥ प्रयोगोऽयं ग्रहोन्मादान् सापस्मारान् शमं नयेत् ॥ गजाव्हापिप्पलीमूलव्योषामलकसर्षपान् ॥ गोधानकुलमार्जारर्क्षपित्तप्रपेषितान् ॥ नावनाभ्यंगसेकेषु विदधीत ग्रहापहान् ॥ अश्वश्वाश्वतरोलूककंकगृध्रशृगालजा॥अविखरोष्ट्रवराहाश्च तथा तैलं विपाचयेत्॥पिष्टया बस्तमूत्रेण नावनादिषु पूजितं ॥ शिरीषपुष्पं लशुनं शुंठी सिद्धार्थकत्वचा ॥मंजिष्ठा द्वे निशे कृष्णा बस्तमूत्रेण पेषयेत्॥छायाशुष्का कृता वर्त्तिर्मत्स्यपित्तद्रुतांऽजनं॥नक्तमालफलं व्योषं बिल्वस्योनाकयोर्जटा॥हरिद्रे च कृता वर्तिः पूर्ववन्नयनांजनं॥वयस्था हिंगु कटुका षड्ग्रंथा सैंधवं तथा ॥सिद्धार्थकवचाहिंगुप्रियंगुरजनीद्वयं ॥ मंजिष्ठा श्वेतकटभी वरा श्वेताऽद्रिकर्णिका ॥ निंबस्य पत्रं बीजं तु नक्तमालकरंजयोः ॥ सु-

१ कालविषाणिके काकोलीक्षीरकाकोल्यौ २ झषपित्तप्रपेषितानिति पाठः

राऽहं त्र्यूषणं सर्पिर्गोमूत्रे तैश्चतुर्गुणे ॥ सिद्धं सिद्धार्थकं नाम पाने नस्ये च योजितं ॥ ग्रहान् सर्वान्निहंत्याशु विशेषादासुरान् ग्रहान् ॥ कृत्यालक्ष्मीविषोन्मादज्वरापस्मारपाप्मजित् ॥ एभिरेवौषधैर्बस्त-वारिणा कल्पितोऽगदः ॥ पाननस्यांजनालेपस्नानोद्वर्षणयोजितः ॥ गुणैः पूर्ववदुद्दिष्टो राजद्वारे च सिद्धिकृत् ॥ सिद्धार्थकव्योषवचा-श्वगंधानिशाद्वयं हिंगु पलांडुकंदः ॥ बीजं करंजात् कुसुमं शिरी-षात्फलं च वल्कश्च कपित्थवृक्षात् ॥ समाणिमंथं सनतं सकुष्ठं श्योनाकमूलं कटभी सिता च ॥ बस्तस्य मूत्रेण सुभावितं त-त्पित्तेन गव्येन गुडान् विदध्यात् ॥ दुष्टव्रणोन्मादतमोनिशांधा-नुद्बद्धकान् वारिनिमग्नदेहान् ॥ दिग्धाहतान् दर्पितसर्पदष्टान् ते साधयंत्यंजनपाननस्यैः[1] ॥ कार्पासास्थिमयूरपत्रबृहतीनिर्माल्य[2]पिंडी-तकत्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोचनैः ॥ नागेंद्रद्विजशृंग-हिंगुमरिचैस्तुल्यं कृतं धूपनं स्कंदो[3]न्मादपिशाचराक्षससुरावेशग्रहघ्नं परं ॥ त्रिकटुकदलकुंकुमग्रंथिकक्षारसिंहीनिशादारुसिद्धार्थयुग्मांबु-शक्राह्वयैः सितलशुनफलत्रयोशीरतिक्तावचातुत्थयष्टीबलालोहितै-लाशिलापद्मकैः ॥ दधितगरमधूकसारप्रियाह्वाविषाख्याविषाताक्ष्य-शैलैः सचव्यामयैः कल्कितैर्घृतमनवमशेष[4]मूत्रांशसिद्धं मतं भूत-रावाह्वयं पानतस्तद्ग्रहघ्नं परं ॥ नतमधुककरंजलाक्षापटोलीसमं-गावचापाटलीहिंगुसिद्धार्थसिंहीनिशायुग्मलतारोहिणीबदरकटुफलत्रि-काकांडदारुक्रमिघ्नाजगंधामरांकोलकोशातकीशिग्रुनिंबांबुदेंद्राह्वयैः ॥

१ नस्यलेपैरिति पाठः २ निर्माल्यं महादेवसंबंधि ३ स्कंदाः स्कंदपरिचारकाः न तु स्कंदः ॥ यदुक्तं ॥ स्कंदग्रहा भवंत्यष्टौ स्कंदतुल्यपराक्रमाः ॥ बालान् गृण्हंति ते तावद्यावद्वर्षाणि षोडशेति प्राचीनपुस्तके टिप्पणं ॥ ४ अशेषमूत्राणां गोमूत्रादीनामंशैः भागैः सिद्धं ५ दंडकमिदं वृत्तं चंडवृष्टिप्रयातं ॥

गदशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुंभाग्निबिल्वैः समं कल्कितै मूत्रवर्गेण सिद्धं घृतं विधिविनिहितमाशु सर्वैः क्रमैर्योजितं हंति सर्वग्रहोन्मादकुष्ठज्वरांस्तन्महाभूतरावं स्मृतं ॥ ग्रहा गृह्णंति ये येषु तेषां तेषु विशेषतः ॥ दिनेषु बलिहोमादीन्प्रयुंजीत चिकित्सकः ॥ स्नानवस्त्रवसामांसमद्यक्षीरगुडादि च ॥ रोचते यद्यदा येभ्यस्तत्तेषामाहरेत्तदा ॥ रत्नानि गंधमाल्यानि बीजानि मधुसर्पिषी ॥ भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरित्ययं सुरर्षिगुरुवृद्धेभ्यः सिद्धेभ्यश्च सुरालये ॥ दिश्युत्तरस्यां तत्रापि देवायोपहरेद्बलिं ॥ पश्चिमायां यथाकालं दैत्यभूताय चत्वरे ॥ गंधर्वाय गवां मार्गे सवस्त्राभरणं बलिं ॥ पितृनागग्रहे नद्यां नागेभ्यः पूर्वदक्षिणे ॥ यक्षाय यक्षायतने सरितो वा समागमे ॥ चतुष्पथे राक्षसाय[2] भीमेषु गहनेषु च ॥ रक्षसां दक्षिणस्यां तु पूर्वस्यां ब्रह्मरक्षसां ॥ शून्यालये पिशाचाय पश्चिमां दिशमास्थिते ॥ शुचिशुक्लानि माल्यानि गंधाः क्षैरेयमोदनं ॥ दधि छत्रं च धवलं देवानां बलिरिष्यते ॥ हिंगुसर्षपषड्ग्रंथाव्योषैरर्द्धपलोन्मितैः ॥ चतुर्गुणे गवां मूत्रे घृतप्रस्थं विपाचयेत् ॥ तत्पाननावनाभ्यंगैर्देवग्रहविमोक्षणं ॥ नस्यांजनं वचाहिंगुलशुनं बस्तवारिणा ॥ दैत्ये बलिर्बहुफलः सोशीरकमलोत्पलः ॥ नागानां सुमनोलाजगुडापूपगुडौदनैः ॥ परमान्नमधुक्षीरकृष्णमृन्नागकेसरैः ॥ वचापद्मपुरोशीररक्तोत्पलदलैर्बलिः ॥ श्वेतपत्रं[3] च रोध्रं च तगरं नागसर्षपाः ॥ शीतेन वारिणा पिष्टं नावनांजनयोर्हितं ॥ यक्षाणां क्षीरदध्याज्यमिश्रकौदनगुग्गुलु ॥ देवदारूत्पलं पद्ममुशीरं वस्त्रकांचनं ॥ हिरंण्यं च बलिर्योज्यो मूत्राज्यक्षीरमेकतः ॥ सिद्धंपलोन्मितं पाननावनाभ्यंजने हितं ॥ हरीतकी हरिद्रे द्वे लशु-

---

१इदमपि दंडकं व्यालाख्यं २ राक्षसशब्देनेह ब्रह्मराक्षसो गृह्यते इत्यरुणदत्तः ३ श्वेतपुंडरीकं

नो मरिचं वचा ॥ निंबपत्रं च बस्तांबुकल्कितं नावनांजनं ॥ ब्रह्मरक्षोबलिः पक्कं यवानां पूर्णमाढकं ॥ तोयस्य कुंभं पललं छत्रं वस्त्रविलेपनं ॥ गायत्रीविंशतिपलकाथेऽर्द्धपलिकैः पचेत् ॥ त्र्यूषणत्रिफलाहिंगुषड्ग्रंथामिशिसर्षपैः॥ सनिंबपत्रलशुनैः कुडवान् सप्त सर्पिषः ॥ गोमूत्रे त्रिगुणे पाननस्याभ्यंगेषु तद्धितं ॥ रक्षसां पललं शुक्लं कुसुमं मिश्रकौदनः ॥ बलिः पक्कामममांसानि निष्पावा रुधिरोक्षिताः॥नक्तमालशिरीषत्वङ्मूलपुष्पफलानि च॥तद्वच्च कृष्णपाटल्या बिल्वमूलं कटुत्रिकं ॥ हिंग्विंद्रयवसिद्धार्थलशुनामलकीफलं ॥ नावनांजनयोर्योज्यो बस्तमूत्रयुतोऽगदः ॥ एभिरेव घृतं सिद्धं गवां मूत्रे चतुर्गुणे ॥ रक्षोग्रहान्वारयते पानाभ्यंजननावनैः ॥ पिशाचानां बलिः सीधुपिण्याकपललं दधि ॥ मूलकं लवणं सर्पिः प्रभूतौदनयावकं[1] ॥ हरिद्राद्वयमंजिष्ठामिशिसैंधवनागरैः ॥ हिंगुप्रियंगुत्रिकटुरसोनत्रिफलावचा ॥ पाटलाश्वेतकटभीशिरीषकुसुमैर्घृतं ॥ गोमूत्रपादिकं सिद्धं पानाभ्यंजनयोर्हितं ॥ बस्तांबुपिष्टैस्तैरेव योज्यमंजननावनं ॥ देवर्षिपितृगंधर्वे तीक्ष्णं नस्यादि वर्जयेत् ॥ सर्पिःपानादि मृद्वस्मिन् भैषज्यमवचारयेत् ॥ ऋते पिशाचात् सर्वेषु प्रतिकूलं च नाचरेत् ॥ सवैद्यमातुरं घ्नंति क्रुद्धास्ते हि महौजसः ॥ ईश्वरं द्वादशभुजं नाथमार्यावलोकितं ॥ सर्वव्याधिचिकित्सं च जपन् सर्वग्रहान् जयेत् ॥ तथोन्मादानपस्मारानन्यं वा चित्तविप्लवं ॥ महाविद्यां च मायूरीं शुचिः संश्रावयेत्सदा ॥ भूतेशं पूजयेत् स्थाणुं प्रमथाख्यांश्च तद्गणान् ॥ जपन् सिद्धांश्च तन्मंत्रान् ग्रहान् सर्वानपोहति ॥ यच्चानंतरयोः किंचिद्वक्ष्यतेऽध्याययोर्हितं ॥ यथोक्तमिह तत्सर्वं प्रयुंजीत परस्परं ॥ इति भूतप्रतिषेधो नामाष्टमोऽध्यायः ॥ ८ ॥

---

१ सभूतौदनयावकमिति पाठोऽष्टांगहृदये

अथातउन्मादप्रतिषेधं व्याख्यास्यामः ॥ षडुन्मादा भवंति वातपित्तकफसन्निपाताधिविषनिमित्ताः ॥ तत्रोन्मादो नाम यदुन्मार्गगैः शारीरमानसैर्दोषैर्मनसो मादनं॥ तेषांपुनरुन्मार्गगत्वे हेतुः समलं विकृतोपहितमहितमनुचितमन्नपान विधिनिरपेक्षमाहारजातमत्युपक्षीणदेहानां व्यवायव्याधिवेगसमुद्भ्रमे विषमशरीरचेष्टोपसेवा देवद्विजगुरूलंघनं वा रागद्वेषजनिताभिराधिभिर्मनोविघातो विषोपविषगरोपयोगात् ॥ एभिर्हीनसत्वस्य मनस्युपहते बुद्धौ प्रचलितायामत्युदीर्णत्वाद्दोषाः प्रकुपिता हृदय मुत्सृज्य मनोवहानि स्रोतांस्यावृत्य जनयंत्युन्मादं ॥ तत्र शिरसः शून्यता चक्षुषोऽस्वस्थत्वं स्वनः कर्णयोरुच्छासाधिक्यमास्यस्रवणमन्नानभिलाषोऽरोचकोऽविपाको हृदयग्रहोऽस्थाने ध्यानायाससंमोहोद्वेगाः सततं रोमहर्षो ज्वरोऽभीक्ष्णमभीक्ष्णमुन्मत्तचित्तत्वमर्दिताकृतिकरणं व्याधेः स्वप्ने च दर्शनमभीक्ष्णं भ्रांतचलितानवस्थितानामप्रशस्तानां च रूपाणां तिलपीडकचक्राधिरोहणं वातकुंडलिकाभिरुन्मथनं निमज्जनं कलुषाणामंभसामावर्त्तेषु चक्षुषोश्चापतपर्णमिति दोषनिमित्तानामुन्मादानां पूर्वरूपाणि ॥ ततोऽनंतरमुन्मादाभिनिर्वृत्तिरेव ॥ तस्य सामान्यलिंगं मनोबुद्धिस्मृत्यादिसंभ्रमोहः ॥ ततश्च देहो हृतसारथिरिव रथो ऽकर्णधारइव चाप्सु प्लवः सुखदुःखाचारधर्माधर्मप्रलुप्तोऽकस्माद्भवति ॥ तत्र वातादस्थानस्मितहसितनृत्यगीतवादित्रवागंगविक्षेपरोदनक्रोशनास्फोटनानि पर्यटनमजस्रमास्यात्फेनागमो यानमयानैरलंकरणमनलंकारिकैर्द्रव्यैर्लोभोऽभ्यवहार्ये लब्धे चावमानस्तीव्रं मात्सर्यं कार्श्यं पारुष्यमुत्पिंडितारुणाक्षिता जीर्णेऽन्ने च गदत्वं ॥ पित्तात्क्रोधसंतर्जनमकस्मान्मुष्टिलोष्टकाष्ठशस्त्रैरभिद्रवणं नग्नताप्रच्छायशिशिराभिरतिरुदकाभिलाषः संतापः पीतावभासत्वमनिमित्तं ज्वलितज्वालौघशंका ऽन्हि तारकादर्शनं ताम्रहरितहारिद्रसंरब्धाक्षित्वं॥कफा-

दल्पवाक्चेष्टाहारत्वमरोचको वमथुरुष्णसेवा लालासिंघाणकस्रवणं रहःकामता स्त्रीप्रियत्वं निद्रा बीभत्सत्वं शौचद्वेषः श्वयथुरास्ये शुक्लस्तिमितमलाविलाक्षिता भुक्ते रात्रौ च बलत्वमिति ॥ भवति-चात्र ॥ सर्वायतनसंस्थानं सन्निपाते तदात्मकं ॥ उन्मादं दारुणं विद्यात्तं भिषक् परिवर्जयेत् ॥ धनकांतादिनाशेन दुःसहेनाभिषंग-वान् ॥ पांडुर्दीनो मुहुर्मुह्यन् हाहेति परिदेवते ॥ रोदित्यकस्मा-न्म्रियते तद्गुणान्बहुमन्यते ॥ शोकक्लिष्टमना ध्यायेज्जागरूको विचेष्टते ॥ विषेण श्याववदनो नष्टच्छायाबलेंद्रियः ॥ वेगांतरेऽ-पि संभ्रांतो रक्ताक्षस्तं विवर्जयेत् ॥ अथानिलजउन्मादे स्नेहपानं प्रयोजयेत् ॥ पूर्वमावृतमार्गे तु सस्नेहं मृदु शोधनं ॥ कफपित्तभ-वेप्यादौ वमनं सविरेचनं ॥ स्निग्धस्विन्नस्य वस्तींश्च शिरसश्च विरे-चनं ॥ तथाऽस्य शुद्धदेहस्य प्रसादं लभते मनः ॥ स्नेहकाले च वातोत्थे तैलं शैरीषमिष्यते ॥ महाकल्याणकं पैत्ते पंचगव्यं कफो-द्भवे ॥ इत्थमप्यनुवृत्तौ च तीक्ष्णं नावनमंजनं ॥ हर्षणाश्वास-नोत्रासभयताडनतर्जनं ॥ अभ्यंगोद्वर्तनालेपधूपान् पानं च सर्पिषः ॥ युंज्यात्तानि हि शुद्धस्य नयंति प्रकृतिं मनः ॥ हिंगुसौवर्चलव्यो-षैर्द्विपलांशैर्घृताढकं ॥ सिद्धं समूत्रमुन्मादभूतापस्मारनुत्परं ॥ द्वौ प्रस्थौ स्वरसाद्ब्राह्म्या घृतप्रस्थं च साधितं ॥ व्योषश्यामात्रिवृद्दंबी-शंखपुष्पीनृपद्रुमैः ॥ ससप्तलार्कमिहरैः कल्कितैरक्षसंमितैः ॥ प-लवृध्या प्रयुंजीत परं मात्रा चतुष्पलं ॥ उन्मादकुष्ठापस्मारहरं वं-ध्यासुतप्रदं ॥ वाक्स्वरस्मृतिमेधाकृद्धन्यं ब्राह्मीघृतं स्मृतं ॥ वरा-विशाला[1]रोध्रैलादेवदार्वेलवालुकैः ॥ द्विसारिवाद्विरजनीद्विस्थिराफलि-नीनतैः ॥ बृहतीकुष्ठमंजिष्ठानागकेसरदाडिमैः ॥ वेल्लतालीसपत्रैला-मालतीमुकुलोत्पलैः ॥ रुदंतीपद्मकहिमैः कर्षांशैः सर्पिषः पचेत् ॥

१ भद्रैलेतिपाठः

प्रस्थं भूतग्रहोन्मादकासापस्मारपाप्मनुत् ॥ पांडुकंडूविषे शोषे मेहे मोहे ज्वरे गरे ॥ अरेतस्यप्रजसि वा दैवोपहतचेतसि अमेधसि स्खलद्वाचि स्मृतिकामेऽल्पपावके ॥ बल्यं मंगल्यमायुष्यं कांतिसौभाग्यपुष्टिदं ॥ कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ एभ्यो द्विसारिवादीनि जले पक्त्वैकविंशतिं॥ रसे तस्मिन् पचेत्सर्पिर्गृ[1]ष्टिक्षीरचतुर्गुणं ॥ वीराद्विमेदाकाकोलीकपिकच्छुविषाणिभिः ॥ शूर्पपर्णीयुतैरेतन्महाकल्याणकं परं ॥ बृंहणं सन्निपातघ्नं पूर्वस्मादधिकं गुणैः ॥ जटिला[2] पूतना[3] केशी[4] चारटी[5] मर्कटी[6] वचा ॥ त्रायमाणा जया वीरा चोरकः[9] कटुरोहिणी ॥ कायस्था[10] सूकरी[11] छत्री[12] सातिच्छत्रा[13] पलंकषा[14] ॥ महापुरुषदंता[15] च वयस्था[16] नाकुलीद्वयं[17] ॥ कटंभरा वृश्चिकाली शालीपर्णी च तैर्घृतं ॥ सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनं ॥ महापैशाचकं नाम घृतमेतद्यथाऽमृतं ॥ बुद्धिमेधास्मृतिकरं बालानां चांगवर्द्धनं ॥ लशुनानां शतं त्रिंशदभयात्र्यूषणात्पलं ॥ गव्यचर्ममषीप्रस्थो द्व्याढकं क्षीरमूत्रयोः ॥ पुराणसर्पिषः प्रस्थमेभिः सिद्धं प्रयोजयेत् ॥ हिंगुचूर्णपलं शीते दत्वा च मधुमानिकां ॥ तद्दोषागंतुसंभूतानुन्मादान्विषमज्वरान् ॥ अपस्मारांश्च हंत्याशु पानाभ्यंजननावनैः ॥ केवलं सिद्धमेभिर्वा घृतमुत्तममात्रया ॥ पुराणं[18] पाययेत्त्वेनं श्वभ्रे रुंध्याद्गृहेऽथवा ॥ एतानौषधवर्गान्वा विधेयत्वमगच्छति ॥ अंजनोद्वर्त्तनालेपनावनादिषु योजयेत् ॥ अश्वगंधाऽजगंधोग्रगंधालशुनसर्षपैः ॥ रास्नाकायस्थगोलोमीयुक्तैस्तैलं विपाचयेत् ॥ गोमूत्रसदृशं पाननस्याभ्यंगानुवासनैः ॥ सर्वौं

---

१ सकृत्प्रसूतागौर्गृष्टिरिति कोशः ॥ २ मांसी ३ हरीतकी ४ गंधमांसी ५ पद्मचारिणी ६ कपिकच्छूः ७ अरणिकः ८ काकोली ९ चंडा १० धात्री ११ वृद्धदारकः १२ धान्यकं १३ शतपुष्पा १४ लाक्षा १५ शतावरी १६ क्षीरकाकोली १७ सर्पाक्षी सर्पगंधा च १८ उग्रगंधं पुराणं स्याद्दशवर्षस्थितं. घृतं ॥ लाक्षारसनिभं शीतं तद्धि सर्वग्रहापहमिति चरके

न्मादग्रहालक्ष्मीपापापस्मारनाशनं ॥ शिरीषो मधुकं हिंगु लशुन-स्तगरं वचा ॥ कुष्ठं च बस्तमूत्रेण पिष्टं स्यान्नावनांजनं ॥ तद्वद्व्योषं हरिद्रे द्वे मंजिष्ठा हिंगु सर्षपाः ॥ शिरीषबीजं चोन्मादग्रहापस्मार-नाशनं ॥ ब्राह्मीमैंद्रीं विडंगानि व्योषं हिंगु जटां मुरां ॥ रास्नां वि-षघ्नां लशुनं विशल्यां सुरसां वचां ॥ ज्योतिष्मतीं नागविन्नामनं-तां सहरीतकीं ॥ कांक्षीं च हस्तिमूत्रेण पिष्ट्वा छायाविशोषिता ॥ वर्तिर्नस्यांजनालेपधूपैरुन्मादसूदनी ॥ पिष्ट्वा फलान्यपामार्गाद्धिंगुलं हिंगुपात्रिकां ॥ वर्तिर्गोक्रोष्टुपित्तेन मरिचाद्वींशकांजनं ॥ उन्माद-भूतापस्माररोगेषु त्रिषु योजयेत्॥अवपीडाश्च विविधाः सर्षपस्नेहसंयु-ताः ॥ कटुतैलेन चाभ्यंगो ध्मापयेच्चास्य तद्रजः ॥ सहिंगुस्तीक्ष्ण धूमश्च सूत्रस्थानोदितो हितः॥शृगालशल्यकोलूकजलौकावृकबस्तजैः ॥ मूत्रपित्तशकृल्लोमनखचर्मभिराचरेत् ॥ धूपधूमांजनाभ्यंगप्रदेहपरिषे चनं॥धूपयेत्सततं चैव श्वगोमत्स्यैः सुपूतिभिः॥वातश्लेष्मात्मके प्रायः पैत्तिके तु प्रशस्यते ॥ तिक्तकं जीवनीयं च सर्पिः स्नेहश्च मिश्रकः ॥ शीतानि चान्नपानानि मधुराणि लघूनि च ॥ विध्येच्छिरां यथोक्तां वा तृप्तं मेद्यामिषस्य वा ॥ निवाते शाययेदेनं मुच्यते मतिविभ्रमात् ॥ प्रक्षिप्यासलिले कूपे शोषयेद्वा बुभुक्षया ॥ आश्वासयेन्मुहूर्तं वा वाक्यैर्धर्मार्थसंहितैः ॥ ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि वा ॥ बद्धं सर्षपतैलाक्तं न्यसेच्चोत्तानमातपे ॥ कपिकच्छ्वाऽथवा तप्तैर्लोहतैलज-लैः स्पृशेत् ॥ कशाभिस्ताडयित्वा वा बद्धं श्वभ्रे विनिक्षिपेत् ॥ अथ-वा वीतशस्त्राश्मजने संतमसे गृहे ॥ सर्पेणोद्धृतदंष्ट्रेण दांतैः सिंहैर्गजै-

१ तथा ऽस्योन्मादिनः तच्चूर्णं सर्षपचूर्णं घ्राणे आध्मापयेत् २ शस्त्रादिवर्जिते भवने वा बध्वा निक्षिपेत् ॥ ननु चैकस्य शून्यगृहे स्थितिरुन्मादहेतुरुक्तः ॥ यच्च यस्य निदानं तदेव तस्य कथं चिकित्सितं स्यात् ॥ नैषदोषस्तदर्थकारिभेषजत्वात् ॥ तदर्थकारिणि हि भेषजे यदेव निदानं तदेव औषधं ॥ यथा तुच्छदग्धेऽग्निप्रतपनं मदात्यये मद्य-पानमिति तद्वदिहाप्यवगंतव्यमित्यरुणदत्तेन सर्वांगसुंदरायामुक्तं

श्च तं ॥ त्रासयेच्छस्त्रहस्तैर्वा किरातारातितस्करैः ॥ अथवा राजपुरुषा बहिर्नीत्वा सुसंयतं ॥ भीषयेयुर्वधेनैनं तर्जयंतो नृपाज्ञया ॥ देहदुःखभयेभ्यो हि परं प्राणभयं मतं ॥ तेन याति शमं तस्य सर्वतो विप्लुतं मनः ॥ सिद्धा क्रिया प्रयोज्येयं देशकालाद्यपेक्षया ॥ इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ॥ तस्य तत्सदृशप्राप्तिसांत्वाश्वासैः शमं नयेत् ॥ कामशोकभयक्रोधहर्षेर्ष्यालोभसंभवान् ॥ परस्परप्रतिद्वंद्वैरेभिरेव शमं नयेत् ॥ भूतानुबंधमीक्षेत प्रोक्तलिंगाधिकाकृतं ॥ यद्युन्मादे तदा कुर्याद्भूतनिर्दिष्टमौषधं ॥ बलिं च दद्यात्पललं यावकं सक्तु पिंडिकां ॥स्निग्धं मधुरमाहारं तंदुलान् रुधिरोक्षितान् ॥ पक्वामकानि मांसानि सुरामैरेयमासवं ॥ अतिमुक्तस्य पुष्पाणि जात्याः सहचरस्य च ॥ चतुष्पथे गवां तीर्थे नदीनां संगमेषु च ॥ निवृत्तामिषमद्यो यो हिताशी प्रयतः शुचिः ॥ निजागंतुभिरुन्मादैः सत्ववान्न स युज्यते ॥ प्रसाद इंद्रियार्थानां बुद्ध्यात्ममनसां तथा ॥ धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणं ॥ इत्युन्मादप्रतिषेधो नाम नवमोऽध्यायः ॥ ९ ॥

अथातोऽपस्मारप्रतिषेधं व्याख्यास्यामः ॥ स्मृत्यपायो ह्यपस्मारः स धीसत्वाभिसंप्लवात् ॥ जायतेऽभिहते चित्ते चिंताशोकभयादिभिः ॥ उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः॥हते सत्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ तमोविशन्मूढमतिर्बीभत्साः कुरुते क्रियाः ॥ दंतान् खादन् वमन् फेनं हस्तौ पादौ च विक्षिपन् ॥ पश्यन्नसंति रूपाणि प्रस्खलन् पतति क्षितौ ॥ विजिह्माक्षिभ्रुवो दोषवेगेऽतीते विबुध्यते ॥ कालांतरेण स पुनश्चैवमेवं विचेष्टते ॥ अपस्मारश्चतुर्भेदो वाताद्यैर्निचयेन च ॥ रूपमुत्पत्स्यमानेऽस्मिन् हृत्कंपः शून्यता भ्रमः ॥ तमसो दर्शनं ध्यानं भ्रूव्युदासोऽक्षिवैकृतं ॥ अशब्दग्रहणं स्वेदो लालासिंघाणकस्रुतिः ॥ अविपाकोऽरुचिर्मूर्च्छा

कुक्ष्याटोपो बलक्षयः ॥ निद्रानाशोऽगमर्दस्तृट् स्वप्ने गानं सनर्त्तनं ॥ पानं तैलस्य मद्यस्य तयोरेवच मेहनं ॥ तत्र वातात्स्फुरत्सक्थिः प्रपतंश्च मुहुर्मुहुः ॥ अपस्मरति संज्ञां च लभते विस्वरं रुदन् ॥ उत्पिंडिताक्षः श्वसिति फेनं वमति कंपते ॥ आविध्यति शिरो दंतान् दशत्याध्मातकंधरः ॥ परितो विक्षिपत्यंगं विषमं विनतांगुलिः ॥ रूक्षश्यावारुणाक्षित्वङ्नखास्यः कृष्णमीक्षते ॥ चपलं परुषं रूक्षं विरूपं विकृताननं ॥ अपस्मरति पित्तेन मुहुः संज्ञां च विंदति ॥ पीतफेनाक्षिवक्त्रत्वगास्फालयति मेदिनीं ॥ भैरवादीप्तरुषितरूपदर्शी तृषान्वितः ॥ कफाच्चिरेण ग्रहणं चिरेणैव विबोधनं ॥ चेष्टाऽल्पा भूयसी लाला शुक्लनेत्रनखास्यता ॥ शुक्लाभरूपदर्शित्वं सर्वलिंगं तु वर्जयेत् ॥ अथावृतानां धीचित्तहृत्खानां प्राक् प्रबोधनं ॥ तीक्ष्णैः कुर्यादपस्मारे कर्मभिर्वमनादिभिः ॥ वातिकं बस्तिभूयिष्ठैः पैत्तं प्रायो विरेचनैः ॥ श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ वमनं मदनं लंबाविशालारिष्टकौटजं ॥ रेको मूत्रं त्रिवृच्छामा द्रवंती सप्तला गुडा ॥ दशमूलबलारास्नासरलामरदारुभिः ॥ यवकोलकुलत्थैश्च समूत्रक्षारसैंधवैः ॥ आस्थापनं प्रयुंजीत हिंगुस्नेहसमन्वितैः ॥ एभिरन्यैश्च वातघ्नैः कटुतैलं प्रसाधितं ॥ वातापस्मारशमनं नस्याभ्यंगानुवासनैः ॥ सर्वतः परिशुद्धस्य सम्यगाश्वासितस्य च ॥ अपस्मारविमोक्षार्थं योगान्संशमनान् शृणु ॥ गोमयस्वरसक्षीरदधिमूत्रशृतं हविः ॥ अपस्मारज्वरोन्मादकामलांतकरं पिबेत् ॥ द्विपंचमूलत्रिफलाद्विनिशाकुटजत्वचः ॥ सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीं ॥ शम्याकपुष्करजटाफल्गुमूलदुरालभाः ॥ द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥ भार्ङ्गीपाठाऽऽ-

१ तैलमूत्रयोर्मेहनं मूत्रणं

ढकीकुंभनिकुंभव्योषरोहिषैः ॥ मूर्वाभूतीकभूनिंबश्रेयसीसारिवा-द्वयैः ॥ मदयंत्यग्निनिचुलैरक्षांशैः सर्पिषः पचेत् ॥ प्रस्थं तद्वद्रवैः पूर्वैः पंचगव्यमिदं महत् ॥ ज्वरापस्मारजठरभगंदरहरं परं ॥ शोफार्शःकामलापांडुगुल्मकासक्षयापहं ॥ शिरीषपुष्पपत्रत्वक्क्षीरिमूलतुलाद्वयं ॥ वरुणैरंडश्यामाकदशमूलाटरूषकं ॥ शतावरीबलारास्नामुषवीपारिभद्रकं ॥ मुरुंगीवंजुलं दंतीककुभं सपुनर्नवं ॥ रोहिषस्य जटां पुष्पं करघातमयूरकं ॥ शतार्द्धांशं पृथक्द्राक्षालाक्षामिशिवरायवान् ॥ सकोलान्सकुलत्थांश्च पृथगर्द्धाढकोन्मितान् ॥ द्विशतं पिशिताद्गव्याच्छागाद्वा तत्पचेदपां ॥ द्रोणैर्द्वात्रिंशताष्टांशशेषेण च विपाचितं ॥ तैलद्रोणं दधिवहं श्लक्ष्णपिष्टैश्च पालिकैः ॥ पाठासमंगाद्विनिशाचेतकीचंदनद्वयैः ॥ एलाजलोत्पलबलाश्वदंष्ट्रासारिवाघनैः ॥ मंजिष्ठाकुष्टमधुकरोध्ररास्नाकुटन्नटैः ॥ शठीशिरीषकुसुमनतनागासनाह्वयैः ॥ वरांगजोंगपत्तंगविडंगैः सप्रियंगुभिः ॥ मुरंगीपत्रनलदमेध्यकुंदनखाह्वयैः ॥ तिलपर्ण्या च तत्पानबस्त्यभ्यंजननावनैः ॥ अपस्मारग्रहोन्मादान्सशोषविषमज्वरान् ॥ योनिशुक्रामयान् गुल्मप्रमेहं पांडुतागदं ॥ वातशोणितवीसर्पपक्षाघातार्दितादिकान् ॥ सर्वान्मारुतजान् रोगान्विशेषाद्विषवातजान् ॥ निहंति कार्मणां कृत्यां मूलदंष्ट्राविषं गरं ॥ रसायनानां प्रवरं मेध्यं वाजीकरं परं ॥ ब्राह्मीरसवचाकुष्टशंखपुष्पीशृतं घृतं ॥ पुराणं मेध्यमुन्मादालक्ष्म्यपस्मारपाप्मजित् ॥ तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ॥ क्षीरद्रोणे पचेत्सिद्धमपस्मारविमोक्षणं ॥ कंसे क्षीरेक्षुरसयोः काश्मर्येऽष्टगुणे रसे ॥ कार्षिकैर्जीवनीयैश्च सर्पिः प्रस्थं विपाचयेत् ॥ वातपित्तोद्भवं क्षिप्रमपस्मारं नियच्छति ॥ तद्वत्कासविदारीक्षुकुशक्काथशृतं पयः ॥ मधुकाद्विपले कल्के द्रोणे चा

१ गोमयत्वरसादिभिर्द्रवैः २ ग्रहापहमिति पाठः

मलकीरसात् ॥ तद्वत्सिद्धो घृतप्रस्थः पित्तापस्मारभेषजं ॥ कूष्मांडकरसे सर्पिरष्टादशगुणे शृतं ॥ यष्टीकल्कमपस्मारहरं धीवाक्स्वरप्रदं ॥ कपिलानां गवां पित्तं नावनं परमं हितं ॥ श्वशृगालबिडालानां सिंहादीनां च पूजितं ॥ गोधानकुलनागानां पृषतर्क्षगवामपि ॥ पित्तेषु साधितं तैलं नस्येऽभ्यंगे च शस्यते ॥ त्रिफलाव्योषपीतद्रुयवक्षारफणिज्जकैः ॥ श्यामापामार्गकारंजबीजैस्तैलं प्रसाधितं ॥ बस्तमूत्रे हितं नस्यं चूर्णं वा दापयेद्भिषक् ॥ वृश्चिकालीबलाकुष्टभार्ङ्गीलवणपंचकान् ॥ कायस्थां शारदान्मुद्गानुशीरं जलदं यवान् ॥ व्योषं च बस्तमूत्रेण पिष्ट्वा वर्तिं प्रकल्पयेत् ॥ अपस्मारगरोन्मादसर्पदष्टविषाशिते ॥ मुस्तावयस्थात्रिफलाकायस्थाहिंगुशाद्वलैः ॥ व्योषमाषयुतैर्मूत्रैर्बस्तमेषर्षभोद्भवैः ॥ हंति वर्त्तिरपस्मारकिलासविषमज्वरान् ॥ पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमंजनं ॥ तदेव सर्पिषा युक्तं धूपनं परमं मतं ॥ कटभीनिंबकट्वंगमधुशिग्रुत्वचां रसैः ॥ सिद्धं मूत्रसमैस्तैलमभ्यंगार्थं प्रशस्यते ॥ पलंकषावचापथ्यावृश्चिकाल्यर्कसर्षपैः ॥ जटिलापूतनाकेशीनाकुलीहिंगुरोचकैः ॥ लशुनातिरसाछत्राकुष्टैर्विड्भिश्च पक्षिणां ॥ मांसाशिनां यथालाभं बस्तमूत्रे विपाचितं ॥ तैलमभ्यंजनं कार्यं तैश्च धूपनलेपनं ॥ नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः ॥ तुंडैः पक्षैः पुरीषैश्च धूपमस्य प्रयोजयेत् ॥ काकोलीशिग्रुलवणाहिंगुपत्रीशिवाटिकाः ॥ कैडर्यं चंदनं कृष्णां काकनासां ससर्षपां ॥ शुनः स्कंधास्थिनखरान् पर्शुकांश्चेति पेषयेत् ॥ बस्तमूत्रेण पुष्यार्के तैर्दिह्यात्धूपयेच्च तैः ॥ गोपुच्छलोमभिर्दग्धैरथवा बस्तरोमभिः ॥ खरास्थिभिर्हस्तिनखैस्तद्वद्वा मूत्रकल्कैः ॥ उद्वर्त्तनं सदा कुर्यान्मूत्रैश्च परिषेचनं ॥ आभिः क्रियाभिः सिद्धाभिः हृदयं संप्रबुध्यते ॥ स्रोतांसि चास्य शुध्यंति स्मृ

१ श्याव्हापामार्गकारंजबीजैरितिपाठः २ वाऽऽध्मापयेदितिपाठः

तिं संज्ञां च विंदति ॥ भूतानुबंधेऽपस्मारे दोषलिंगाधिकाकृतौ ॥ युंज्याद्यथास्वभूतोक्तां क्रियां दैवव्यपाश्रयां ॥ शीलयेत्तैललशुनं पयसा वा शतावरीं ॥ ब्राह्मीरसं कुष्ठरसं वचां वा मधुसंयुतां ॥ समं कुद्धैरपस्मारो दोषैः शारीरमानसैः ॥ यज्जायते यतश्चैष महामर्मसमाश्रयः ॥ तस्माद्रसायनैरेनं दुश्चिकित्स्यमुपाचरेत् ॥ तदार्त्तं चाग्नितोयादेर्विषमाद्रक्षयेत् सदा ॥ मुक्तं मनोविकारेण त्वमित्थं कृतवानिति॥ न ब्रूयाद्विषयैरिष्टैः क्लिष्टं चेतोऽस्य बृंहयेत् ॥ ग्रहोपक्लिष्टदेहानां विभ्रांतस्मृतिचेतसां ॥ महास्नेहं प्रशंसति पानाभ्यंजनबस्तिभिः ॥ इत्यपस्मारप्रतिषेधो नाम दशमोऽध्यायः ॥ १० ॥ इति तृतीयं भूतविद्यातंत्रं संपूर्णं ॥ ३ ॥

भूतनाथांघ्रिपाथोजध्यानविध्वस्तपाप्मनां ॥ मनांसि न मनुष्याणामेनांसि समुपासते ॥

अथातो वर्त्मरोगविज्ञानं व्याख्यास्यामः ॥ सर्वरोगनिदानोक्तैरहितैः कुपिता मलाः ॥ अचक्षुष्यैर्विशेषेण प्रायः पित्तानुसारिणः ॥ सिराभिरूर्ध्वं प्रसृता नेत्रावयवमाश्रिताः॥ वर्त्म संधिं सितं कृष्णं दृष्टिं वा सर्वमक्षि वा[1]॥रोगान्कुर्युश्चलस्तत्र प्राप्य वर्त्माश्रयाः सिराः ॥सुप्तोत्थितस्य कुरुते वर्त्मस्तंभं सवेदनं ॥ पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च ॥ विमर्दनात्स्याच्च शमः कृच्छ्रोन्मीलं वदंति तं ॥ चालयन्वर्त्मनी वायुर्निमेषोन्मेषणं मुहुः ॥ करोत्यरुङ्निमेषोऽसौ वर्त्म यत्तु निमील्यते ॥ विमुक्तसंधि निश्चेष्टं हीनं वातहतं हि तत् ॥ कृष्णाः पित्तेन बह्व्योऽतवर्त्मकुंभीकबीजवत्॥आध्मायंते पुनर्भिन्नाः पिटिकाः कुंभिसंज्ञिताः ॥ सदाहक्लेदनिस्तोदं रक्ताभं स्पर्शनाक्षमं ॥ पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशंति तत् ॥ करोति कंडूं दाहं च पित्तं पक्ष्मां-

---

१ वाशब्दः प्रत्येकं युज्यते ॥ वर्त्म वा संधिं वा सितं वा ऽसितं वा दृष्टिं वा सकलं लोचनमाश्रिताइति सामान्येन नयनरोगाणां संप्राप्तिः॥

तमाश्रितं ॥ पक्ष्मणां शातनं चानु पक्ष्मशातं वदंति तं ॥ पोथक्यः पिटिकाः श्वेताः सर्षपाभा घनाः कफात् ॥ शोफोपदेहरुक्कंडूपिच्छिलाश्रुसमन्विताः ॥ कफोत्क्लिष्टं भवेद्वर्त्म स्तंभक्लेदोपदेहवत् ॥ ग्रंथिः पांडुररुक्पाकः कंडूमान्कठिनः कफात् ॥ कोलमात्रः स लगणः किंचिदल्पस्ततोऽथवा ॥ रक्ता रक्तेन पिटिका तत्तुल्यपिटिकाचिता ॥ उत्संगाख्या तथोत्क्लिष्टं राजिमत्स्पर्शनाक्षमं ॥ अर्शोऽधिमांसं वर्त्मांतस्तब्धं स्निग्धं सदाहरुक् ॥रक्तं रक्तेन तत्स्रावि विच्छिन्नं च विवर्द्धते॥ मध्ये वा वर्त्मनोंऽते वा कंडूषारुग्वती स्थिरा ॥ मुद्गमात्राऽसृजा ताम्रा पिटिकांऽजननामिका ॥ दोषैर्वर्त्म बहिः शूनं यदंतः सूक्ष्मखाचितं ॥ सस्रावमंतरुदकं बिसाभं बिसवर्त्म तत् ॥ यद्वर्त्मोत्क्लिष्टमुत्क्लिष्टमकस्मान्म्लानतामियात् ॥ रक्तदोषत्रयोत्क्लेशाद्भवत्युत्क्लिष्टवर्त्म तत् ॥ श्याववर्त्म मलैः सास्रैः श्यावं रुक्क्लेदशोफवत् ॥ श्लिष्टाख्यं वर्त्मनी श्लिष्टे कंडूश्वयथुरागिणी ॥ वर्त्मांतः पिटिका रूक्षाः कर्कशाः सिकतोपमाः ॥ सिकतावर्त्म कृष्णं तु कर्दमं कर्दमोपमं ॥ बहलं बहुभिर्मांसैः सवर्णं चीयते समैः ॥ कुकूणकः शिशोरेव दंतोत्पत्तिनिमित्तजः ॥ स्यात्तेन शिशुरुच्छूनताम्राक्षो वीक्षणाक्षमः ॥ सवर्त्मशूलपैच्छिल्यकर्णनासाक्षिमर्दनः ॥ पक्ष्मोपरोधे संकोचो वर्त्मनां जायते तथा ॥ खरताऽतर्मुखत्वं च रोम्णामन्यानि वा पुनः ॥ कंटकैरिव तीक्ष्णाग्रैर्घृष्टं तैरक्षि सूयते ॥ उष्यते चानिलादिद्विडल्पाहं शांतिरुद्धृतैः ॥ कनीनके बहिर्वर्त्म कठिनो ग्रंथिरुन्नतः ॥ ताम्रः पक्कोऽस्रपूयस्रुदलज्याध्मायते मुहुः ॥ वर्त्मांतर्मांसपिंडाभः श्वयथुर्ग्रथितोऽरुजः ॥ सास्रैः स्यादर्बुदो दोषैर्विषमो बाह्यतश्चलः ॥ चतुर्विंशतिरित्येते व्याधयो वर्त्मसंश्रयाः ॥ आद्योऽत्र भेषजैः साध्यो द्वौ ततोऽर्शश्च वर्जयेत् ॥ पक्ष्मोपरोधो याप्यः स्याच्छेषान् शस्त्रेण साधयेत् ॥ कुट्टयेत्पक्ष्मसदनं छिंद्यात्तेष्वपि चार्बुदं ॥ भिंद्या-

ल्लगणकुंभीकाबिसोत्संगांजनालजीः ॥ पोथकीश्यावसिकताश्लिष्टोत्क्लिष्टचतुष्टयं ॥ सकर्दमं सबहलं विलिखेत्सकुकूणकं ॥ इति वर्त्मरोगविज्ञानीयो नामैकादशोऽध्यायः ॥ ११ ॥

अथातो वर्त्मरोगप्रतिषेधं व्याख्यास्यामः ॥ कृच्छ्रोन्मीले पुराणघृतं द्राक्षाकल्कक्काथसिद्धं शर्करावचूर्णितं रात्रौ पाययेत् ॥ स्निग्धांश्च नस्यधूमांजनतर्पणपुटपाकान्प्रयोजयेत् ॥ वातहरद्रव्यकल्पितांश्च बस्तीन्क्षीरस्विन्नैरंडपल्लवस्वेदं च वर्त्मनां ॥ एवमशांतौ मुद्गमात्रांतरैः पदैरग्निना त्वग्दाहं बिंदुभिराचरेत् ॥ कुंभीकपिटिकासु वर्त्म लिखित्वा सैंधवेनानुसार्य पटोलामलकमधुकक्काथेन सेचयेद्घृतेन च ॥ पित्तरक्तोत्क्लिष्टयोर्मधुरौषधसिद्धेन सर्पिषा स्निग्धस्य सिरां विध्येत् ॥ विरेचयेच्चैनं त्रिवृत्क्काथवता त्रिफलाकल्केन-त्रिफलाक्काथयुतेन च ब्राह्मीचूर्णेन ॥ चंदनोशीरमधुकमृद्वीकापुनर्नवबृहतीमूलसिद्धं नावयेत् ॥ लिखिते च वर्त्मनि स्रुते रक्ते षष्ट्याऽह्न निर्यूहेण प्रक्षालनं ॥ चंदनशृतं च पयः परिषेकः शीतस्निग्धाश्च शिरोवक्त्रलेपाः ॥ पक्ष्मशाते रोमकूपान्सूच्यग्रेण कुट्टयेज्जलौकोभिर्वा ग्राहयेत् ॥ पयसेक्षुरसेन वा वमनं स्वादुशीतस्कंधसाधितं सर्पिर्नावनं ॥ काकजंघारोहितमत्स्यमांसं काकशोणितभावितमंत धूमदग्धं चूर्णांजनं कुर्यात् ॥ संचूर्ण्य पुष्पकासीसं भावयेत्सुरसारसैः ॥ ताम्रे दशाहं परमं पक्ष्मशाते तदंजनं ॥ पोथकीं विलिख्य शुंठीसैंधवमागधिकाचूर्णैः प्रतिसार्य प्रक्षाल्य चोष्णांभसा खदिररसाढकीचूर्णशिग्रुपत्रकषायेण सेचयेत् ॥ ततश्चाम्रजंबूप्रवालक्काथेनाश्चोतनं ॥ त्रिफलाखदिरसारोदकेन वा मधुयुक्तेन ॥ विडंगलाक्षादार्वीत्वग्गैरिकालमनोह्वाचूर्णः क्षौद्रान्वितोऽजनं ॥ एवमप्यनुपशमे जलौकसो योजयेत्पुनर्वा लेखयेत् ॥ परिषेकं त्रिफलामधुकद्विहरिद्राकषायेण

१ पुनर्नवां लेपयेदिति पाठः

मधुयुक्तेन कुर्यात् ॥ मस्तुशर्कराकपित्थपत्रांबुना वा ॥ कफोत्क्लिष्टं वर्त्म लिखित्वा सैंधवकासीसपिप्पलीमनःशिलारसांजनचूर्णैर्मधुमद्भिः प्रतिसारयेत् ॥ कफघ्नानि च वमनधूमनावनांजनान्याहारविधिश्च ॥ वर्त्मोपक्लेदे कासीसलवणसुमनोमुकुलरसांजनैर्वर्तिरंजनं ॥ लगणं कफोत्क्लिष्टवत्साधयेत्॥अशाम्यत्यग्निना दाहो वमनविरेचनं च॥पिप्पली मधुकनिंबज्योतिष्मतीदेवदारुविडंगप्रियंगुत्रिफलाकुष्टशताह्वासैंधवैः सिद्धं तैलं नावयेत् ॥ तीक्ष्णावपीडांजनकवलांश्च विदध्यादुष्णोपचारं च ॥ उत्संगपिटिकामंजननामिकां च भित्वा निष्पीड्य चोल्लिखितां तगरैलासैंधवनेपालीचूर्णेन सक्षौद्रेण प्रतिसारयेत् ॥ हरिद्रामधुकपटोललोध्राः समाक्षिकाः परिषेकः ॥ बिसवर्त्मादिषु बहलवर्त्मांतेषु सैंधवं प्रतिसारणं ॥ बिसश्लिष्टवर्त्मनोस्तथाऽनुपशमेऽग्निना क्षारेण वा दहनं ॥ कुकूणके निंबपत्रत्रिफलाखदिरमूलकल्कविपक्कं सर्पिर्धात्रीं पाययित्वा सैंधवसर्षपोपकुल्यायष्ट्याह्ववतोष्णांभसा वामयेत् ॥ स्तनावस्या मागधिकामुस्ताद्विरजनीकल्केनालिप्योद्वर्त्तयेत् धूपयेच्च सघृतैः सिद्धार्थैर्नावयेच्चैनां ॥ पटोलमुस्तमृद्वीकागुडूचीत्रिफलाकषायं पाययेत् ॥ बालस्य वर्त्मनी लिखित्वा मधुसैंधवरसांजनैः प्रतिसार्यामलकाश्मंतकजंबूपल्लवक्काथेन प्रक्षालयेत् ॥ जलौकोभिर्वा ग्राहयेत् ॥ वेदनायां तु कुष्टगुडूचीकल्कोदकेन सगुडक्षौद्रेण परिषेको मूर्द्धानं चास्य कटुतैलेनाभ्यज्य पाठाकल्केन प्रलिप्य बृहत्यर्जुनबिल्वनिंबगुडुचीमार्कवतर्कारीसैर्यककार्पासीमालतीपत्रनिर्यूहेण सेचयेत् ॥ मरिचविडंगद्विहरिद्राकल्कसिद्धं तैलं प्रतिमर्शो मूर्वाताम्ररजसी स्तन्यपिष्टे पिंडांजनं ॥ शंखमनःशिलासैंधवरसांजनक्षौद्रैर्वा रसक्रिया ॥ लोहशिवाटिकामृदः कपालेऽनेकशः प्रतप्ताः स्तन्येन निर्वापिताः श्लक्ष्णचूर्णमंजनं ॥ पुनःपुनश्च धात्रीं वमनविरेचनैरुपपादयेत् ॥ पक्ष्मोपरोधे समुपचितं वर्त्म लेखनोत्क्लिष्टरक्तविस्रावणेन सशोफं शिरोविरेककवल-

वमनैः यापयेत् ॥ प्रवृद्धेषु तु रोमसु सुविशुद्धदेहस्य सहिष्णोर्भ्रुवोऽधस्तात् द्वौ भागौ पक्ष्मांताद्भागमेकं समुत्सृज्य यवमात्रं तदाकृतिं तिर्यक् छेदयेत् ॥ आर्द्रवाससा च रक्तं गृह्णीयात् ॥ ततस्तनूभूते रक्ते क्षौमवस्त्रेण वालेन वा धनुर्वक्रया सूच्या मुद्गमात्रांतरैः पदैः सीव्येत् ॥ ततोऽस्य ललाटे पट्टं बध्वा तत्सेवनीसूत्रं तत्र सूचीपदैर्नातिगाढश्लथमासज्जेत् ॥ शतधौतघृतेन चास्य सक्षौद्रेण कवलिकां दद्यात् ॥ न चैतद्बध्नीयात्॥ व्रणवेदनायां वस्त्रवद्वेष्टनेन यष्टिमधुकचूर्णेन संस्कृतं सर्पिः परिषेको वटादिकषायाश्च सक्षीराः ॥ पंचमे षष्ठे वाऽहनि स्थिरीभूतेषु शस्त्रपदेषु सेवनीसूत्रमवलंबनाच्छित्त्वाऽपनयेत् ॥ व्रणं च स्वर्णगैरिकरजसाऽवचूर्णयेत् ॥ तीक्ष्णांजनानि चावचारयेत् ॥ अत्युत्क्षिप्ते तु सूत्रे श्वयथुः स्यात्तत्र मृदुस्वेदः स्नैहिकं च नस्यं ॥ निर्भुज्य वा वर्त्मदोषोपहतां वलिं विलिख्य तुंबरुवाकुच्यभयाबीजान्यतमकल्केन प्रतिसारयेत् ॥ क्षारेण वा इहत्तप्तया वा शलाकया ॥ उपपक्ष्मकाणि तु लाक्षारसेन लक्षयित्वा संदंशेनोध्दृत्य तनुसूच्यग्रेणाग्निवर्णेन रोमकूपान्दहेत् ॥ ततश्च पूर्ववत्परिषेको नावनं च ॥ बाह्यालजेर्भिन्नलिखितस्य क्षारेणाग्निना वा दाहो व्रणवच्चोपचारः ॥ अर्बुदस्य च मूलच्छिन्नस्य लिखितप्रतिसारितस्य चेति ॥ भवंति चात्र ॥ निवातेऽधिष्ठितस्याप्तैः शुद्धस्योत्तानशायिनः ॥ बहिः कोष्णांबुतप्तेन स्वेदितं वर्त्म वाससा ॥ निर्भुज्य वस्त्रांतरितं वामांगुष्ठांगुलीधृतं ॥ न स्रंसते चलति वा वर्त्मैवं सर्वतस्ततः ॥ मंडलाग्रेण तत्तिर्यक्कृत्वा शस्त्रपदांकितं ॥ लिखेत्तेनैव पत्रैर्वा शाकशेफालिकादिजैः ॥ फेनेन तोयराशेर्वा पिचुना प्रमृजन्नसृक् ॥ स्थिते रक्ते सुलिखितं सक्षौद्रैः प्रतिसारयेत् ॥ यथास्वमुक्तैरनु च प्रक्षाल्योष्णेन वारिणा ॥ घृतेन सिक्तमभ्यक्तं बध्नीयान्मधुसर्पिषा ॥ उर्ध्वाधःकर्णयोर्दत्वा पिंडीं

१ यवाकारं ॥

च यवसक्तुभिः ॥ द्वितीयेऽहनि मुक्तस्य परिषेकं यथायथं ॥ कुर्या
च्चतुर्थे नस्यादीन्मुंचेदेवाह्नि पंचमे ॥ समं नखनिभं शोफकंडूघर्षा-
द्यपीडितं ॥ विद्यात्सुलिखितं वर्त्म लिखेद्भूयो विपर्यये ॥ रुक्प-
क्ष्मवर्त्मसदनस्रंसनान्यतिलेखनात् ॥ स्नेहस्वेदादिकस्तस्मिन्निष्टो वा-
तहरः क्रमः ॥ अभ्यज्य नवनीतेन श्वेतरोध्रं प्रलेपयेत् ॥ एरंडमूलक
ल्केन पुटपाके पचेत्ततः ॥ स्विन्नं प्रक्षालितं शुष्कं चूर्णितं पोटली-
कृतं ॥ स्त्रियाः क्षीरे छगल्या वा मृदितं नेत्रसेचनं ॥ शालितंदुलक-
ल्केन लिप्तं तद्वत्परिष्कृतं ॥ कुर्यान्नेत्रेऽतिलिखिते मृदितं दधिम-
स्तुना ॥ केवलेनापि वा सेकं मस्तुना जांगलाशिनः ॥ भेद्यांस्तु व्री
हिवक्रेण विभिद्य कठिनोन्नतान् ॥ निष्पीडयेदनु विधिः शेषः स्या
त्तत्र पूर्ववत् ॥ लेखने भेदने चायं क्रमः सर्वत्र वर्त्मनि ॥ इति व-
र्त्मरोगप्रतिषेधो नाम द्वादशोऽध्यायः ॥ १२ ॥

अथातः संधिसितासितरोगविज्ञानं व्याख्यास्यामः ॥ वायुः क्रुद्धः
सिराः प्राप्य जलाभं जलवाहिनीः ॥ अश्रु स्रावयते वर्त्मशुक्लसंधि-
कनीनकात् ॥ तेन नेत्रं सरुग्रागशोफं स्यात्स जलास्रवः ॥ कफात्क
फस्रवे श्वेतं पिच्छिलं बहलं स्रवेत् ॥ कफेन शोफस्तीक्ष्णाग्रः क्षारबु-
द्बुदकोपमः ॥ पृथुमूलबलः स्निग्धः सवर्णो मृदुपिच्छिलः ॥ महान-
पाकः कंडूमानुपनाहः स नीरुजः ॥ रक्ताद्रक्तस्रवे ताम्रं बहूष्णं चा-
श्रु संस्रवेत् ॥ वर्त्मसंध्याश्रया शुक्ले पिटिका दाहशूलिनी ॥ ताम्रा
मुद्गोपमा भिन्ना रक्तं स्रवति पर्वणी ॥ पूयास्रावे मलाः सास्रा वर्त्म
संधिकनीनकात् ॥ स्रावयंति मुहुः पूयं सास्रत्वङ्मांसपाकतः ॥ पूया-
लसो व्रणः सूक्ष्मः शोफसंरंभपूर्वकः ॥ कनीनसंधावाध्मायी पूयस्रा
वी सवेदनः ॥ कनीनस्यांतरलजी शोफो रुक्दाहतोदवान् ॥ अपां-
गे वा कनीने वा कंडूषापक्ष्मपोटवान् ॥ पूयास्रावी कृमिग्रंथिर्ग्रंथिः

कृमियुतोऽर्तिमान् ॥ उपनाहकृमिग्रंथिपूयालसकपर्वणीः ॥ शस्त्रेण साधयेत्पंच सालजीनास्रवांस्त्यजेत् ॥ पित्तं कुर्यात्सिते बिंदूनसितश्यावपीतकान् ॥ मलाक्तादर्शतुल्यं वा सर्वं शुक्लं सदाहरुक् ॥ रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृट्ज्वरः ॥ कफाच्छुक्ले समं श्वेतं चिरवृद्ध्यधिमांसकं ॥ शुक्लार्म शोफस्त्वरुजः सवर्णो बहलो मृदुः ॥ गुरुः स्निग्धोंऽबुबिंद्वाभो बलासग्रथितं स्मृतं ॥ बिंदुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत् ॥ रक्तराजीततं शुक्लमुष्यते यत्सवेदनं ॥ अशोफाश्रूपदेहं च सिरोत्पातः स शोणितात् ॥ उपेक्षितः सिरोत्पातो राजीस्ताएव वर्द्धयन् ॥ कुर्यात्साश्रुं सिराहर्षं तेनाक्ष्युद्वीक्षणाक्षमं ॥ सिराजाले सिराजालं बृहद्रक्तं घनोन्नतं ॥ शोणितार्मसमं श्लक्ष्णं पद्माभमधिमांसकं ॥ नीरुक्श्लक्ष्णोऽर्जुनं बिंदुः शशलोहितलोहितः ॥ मृद्वाशुवृद्ध्यरुङ्मांसं प्रस्तारि श्यावलोहितं ॥ प्रस्तार्यर्म मलैः सास्रैः स्नावार्म स्नावसन्निभं ॥ शुष्कासृक्पिंडवच्छ्यावं यन्मांसं बहलं पृथु ॥ अधिमांसार्म तद्दाहघर्षवत्यः सिरावृताः ॥ कृष्णासन्नाः सिरासंज्ञाः पिटिकाः सर्षपोपमाः ॥ शुक्तिहर्षसिरोत्पातपिष्टकग्रथितार्जुनं ॥ साधयेदोषधैः षट्कं शेषं शस्त्रेण सप्तकं ॥ नवोत्थं तदपि द्रव्यैरर्मोक्तं यच्च पंचधा ॥ तच्छेद्यमसितप्राप्तं मांसस्नावसिरावृतं ॥ चर्मोद्दालवदुच्छ्रायि दृष्टिप्राप्तं तु वर्जयेत् ॥ पित्तं कृष्णेऽथवा दृष्टौ शुक्रं तोदाश्रुरागवत् ॥ छित्त्वा त्वचं जनयति तेन स्यात्कृष्णमंडलं ॥ पक्वजंबूनिभं किंचिन्निम्नं च क्षतशुक्रकं ॥ तत्कृच्छ्रसाध्यं याप्यं तु द्वितीयपटलव्यधात् ॥ तत्र तोदादिबाहुल्यं सूचीविद्धाभकृष्णता ॥ तृतीयपटलच्छेदादसाध्यं निचितं व्रणैः ॥ शंखशुक्लं कफात्साध्यं नातिरुक् शुद्धशुक्रकं॥आताम्रपिच्छिलास्रस्रुदाताम्रपिटिकातिरुक्॥अजाविट्सदृशोच्छ्रायकार्ष्ण्या वर्ज्या ऽसृजाऽजका॥सिराशुक्रं म

१एवं संधिगतान्नव रोगानाख्याय सितभागस्थान् रोगानाह २ कृष्णरोगानाह

लैः सास्रैस्तज्जुष्टं कृष्णमंडलं॥ सतोददाहताम्राभिः सिराभिरवतन्यते॥ अनिमित्तोष्णशीताच्छघनाश्रुस्रुच्च तत्त्यजेत् ॥ दोषैः सास्रैः सकृत् कृष्णं नीयते शुक्लरूपतां ॥ धवलाभ्रोपलिप्ताभं निष्पावार्द्धदलाकृति ॥ अतितीव्ररुजारागदाहश्वयथुपीडितं ॥ पाकात्ययेन तच्छुक्रं वर्जयेत्तीव्रवेदनं ॥ यस्य वा लिंगनाशोंऽतःश्यावं यद्वा सलोहितं ॥ अत्युत्सेधावगाढं वा साश्रुनाडीव्रणावृतं॥ पुराणं विषमं मध्ये विच्छिन्नं यच्च शुक्रकं ॥ पंचेत्युक्ता गदाः कृष्णे साध्यासाध्यविभागतः॥ इति संधिसितासितविज्ञानीयो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

अथातः संधिसितासितरोगप्रतिषेधं व्याख्यास्यामः ॥ उपनाहं स्विन्नं व्रीहिमुखेन भित्वा मंडलाग्रेण समंताल्लिखयेत् ॥ ततः सैंधवपिप्पलीचूर्णेन क्षौद्रेण प्रतिसारयेत् ॥ पूर्ववच्च बध्नीयात् पटोलपत्रामलककाथेन वाऽऽश्चोतयेत् ॥ पर्वणीमंतर्बाह्यसंधित्रिभागे बडिशेनावलंब्य वृद्धिपत्रेणार्द्धमात्रे छिंद्यादन्यथाऽश्रुनाडी स्यात् ॥ मधुसैंधवप्रतिसारिताऽर्मवच्चिकित्सेत् ॥ पूयालसे सिरां विध्येत्ततश्च तमुपनाहयेदक्षिपाकोक्तं चेक्षेत ॥ सैंधवार्द्रककासीसायस्ताम्रैः सुसूक्ष्मैः सक्षौद्रैरंजनं ॥ कृमिग्रंथिं करीषेण स्वेदयित्वा छित्त्वाऽवलिख्य च कासीससैंधवत्रिफलामाक्षिकैः प्रतिसारयेत् ॥ शुक्तिकां पित्ताभिष्यंदवत्साधयेत् ॥ बलासग्रथितं पिष्टकं च सिराव्यधवर्जं कफाभिष्यंदवत् ॥ विशेषतो यवनालान् तिलनालान्वा हरितशलाकानर्द्धमासमजाक्षीरेण भावयित्वा शोषयित्वा च दाहयेत् ॥ ततस्तद्भस्म क्षारकल्पेन परिस्राव्या दर्वीप्रलेपाद्विपचेत् ॥ रसक्रियेयं बलासग्रथितशोफोपदेहहरा ॥ अयमेवच कल्पः फणिज्जकार्जकास्फोताबिल्वकपित्थनिर्गुंड्येरंडकुमुदोत्पलजातीकुसुमेषु पृथक्कार्यः ॥ सैंधवालमरिचकट्फलशंखसमुद्रफेनैर्वर्तिः पिष्टकेंऽजनं ॥ शुंठीशिग्रुफलपिप्पलीसैंधवचूर्णो बीजपूररसाप्लुतोंऽजनं पिष्टकमपहरति ॥ त्रिवृत्त्रिकटूककट्फलचूर्णो बलासग्र-

थितं च ॥ बृहतीफलं पिप्पलीतंदुलपूरितं पुटपाकेन पचेत् ॥ तैस्तंदुलैश्चूर्णांजनं बलासग्रथितपिष्टकघ्न ॥ अत्यर्थशोफे हरितालसैंधवशुंठीदेवदारुपुनर्नवैर्बिडालपदकः ॥ सिरोत्पातहर्षजालार्जुनेषु रक्ताभिष्यंदवत्प्रतिकुर्यात् ॥ विशेषेण सिराहर्षे स्वर्णगैरिको मधुयुक्तोंऽजनं ॥ स्तन्यान्वितं कासीसं क्षौद्रयुतं वा ॥ कासीसं त्वर्जुने मातुलुंगरसेन सशर्करेणाश्चोतनं मस्तुनाऽथवा ॥ शंखनाभिर्माक्षिकेण युक्ता सितया वा समुद्रफेनकांजनस्फटिककुंकुमशंखनाभिमधुयष्टिका वा क्षौद्रार्द्रास्तद्वा रसांजनं कासीसं वा ॥ अमोक्तं तु पंचविधमपि यत्तनु रक्तं धूमाविलं दधिनिभं वा तच्छुक्रवत्क्रियया शिरोविरेकलेखनांजनैरुपाचरेत्॥अथेतरस्मिन् स्निग्धस्यातुरस्य पेयाविलेपीजांगलरसान्यतमाशितस्य कृतस्वस्त्ययनस्य सुखशयनगतस्योत्तानदेहस्य किंचिदवाक्शिरसः सुखोष्णाप्लुततांतवस्विन्ननयनस्य ससैंधवबीजपूरकरसेनांजयित्वांऽगुष्ठकेन निमीलितं विमृद्नीयाद्यावदाबलासग्रथिताभरूपोत्पत्तेरित्थं च संरोषिताक्षस्य प्रचलितेऽर्ममांसे निश्चलं परिचारकः शिरो धारयेत्॥अन्यश्च वामदक्षिणान्यतरपार्श्वेऽनुकूलस्थितो दृढवस्त्रगर्भाभ्याम‌ंगुष्ठाभ्यां वर्त्मनी विक्षिपेत्॥अथ वैद्यः कनीनकात्प्रवृद्धेऽर्मण्यपांगमीक्षमाणस्य यत्र यत्र वली जायते तत्र तत्रार्मं बडिशेनोच्छाद्य च नात्यायातं गृहीत्वा किंचिदुन्नम्य कृष्णशुक्लमंडलाभ्यां सर्वतः सूच्यग्रेण मोक्षयित्वा किंचिदांच्छेत्[1] ॥ अथ तीक्ष्णेन मंडलाग्रेण वृद्धिपत्रेण वोल्लिख्य कनीनकं चोपनीय कनीनकसममेव चतुर्भागशेषं छिंद्यात् ॥ वर्जयेच्च कनीनकं सिराश्चाश्रुवहाः ॥ तथा हि नाक्षिव्यापद्यते ॥ यज्जालवदर्म व्यापि तदेषण्या यावत्कनीनकमनुसरमुन्नम्य पूर्ववच्छिंद्यात् ॥ तद्वदपांगात्प्रवृद्धे कनीनकमीक्षमाणस्य यावदपांगं चोपनीयापांगसममेव तथा यावद्वर्जयेदपांगसिराश्चेत्यादि ततः प्लो-

---

१ आंच्छेत् आयतंकुर्यात् ॥

तेन रक्तं विशोध्य सम्यक्छिन्नमवेक्ष्य सैंधवचूर्णेन पुनः पुनः प्रतिसारयेद्यवनालभस्मना वा प्लोतशुद्धं च पुनर्मधुना ॥ ततः शीतांबुपरिषिक्तं सर्पिषा सुखोष्णेन परिषिच्य मधुघृताभ्यक्तं पूर्ववद्बध्नीयात् ॥ मूर्द्धनि पादयोश्चास्मै शतधौतघृतशीतांबुप्रदेहान्दद्यात् ॥ स्नेहोक्तं चाचारमादिशेत् ॥ द्वितीये चाह्नि सायं प्रातर्मधुसर्पिषा कोष्णेन शिरस्तथाबद्धमेवाक्षि सिंचेत्पंचाहं चोष्णोदकानुपानं सर्पिः पीत्वा जीर्णे पथ्यमश्नीयात् ॥ तृतीये च दिवसे विमुच्य करंजबीजसिद्धेन क्षीरेणाक्षि स्वेदयेत् ॥ रोध्रकिंशुकमधुकपटोलद्विहरिद्राकुरंटमुकुलक्काथेन मधुमिश्रेणाश्चोतयेत् ॥ सप्तमेऽहनि सर्वथा मुंचेत् ॥ आतपाकाशदर्शनं च परिहरेत् ॥ सशोफे तु नेत्रधूमः शिरोविरेचनं च ॥ अनुपशांतरागे सिराविस्रावणं ॥ साश्रुपाते नस्यं ॥ तिलान् लुंचितान्मधुककाकोलीसुनिषण्णकपंचमूलशर्कराशृतशीते पयसि सप्ताहं भावितानत्नेनैव पयसा पीडयेत् ॥ मधुकशताह्वासारिवाऽनंतागुडकाकोलीहरेणुकैलवालुकचूर्णं पीड्यमानेषु षोडशभागेन प्रक्षिपेत् ॥ तत्तैलमेभिरेवौषधैः पयसा वाऽष्टगुणेन सिद्धं नावनादश्रुरागघ्नं दृष्टिप्रसादनं च ॥ कृष्णगते तु व्रणशुक्रवत्क्रिया ॥ अर्मशेषे च लेखनांजनानि ॥ तत्र सम्यक्छिन्ने वर्णविशुद्धिः स्वस्थता च ॥ हीनच्छेदात् पुनर्वृद्धीरागाश्रुपातप्रकाशदर्शनाक्षमत्वानि च ॥ अतिच्छेदादतिपाकस्तंभस्फुरणाश्रुतिमिरसंरंभविस्वरत्वानि ॥ तेषु यथास्वं दोषोद्रेकात् प्रतिकुर्यात् ॥ नागरमनःशिलैलेयकसैंधवशर्कराभिरर्द्धकर्षांशाभिर्युक्तं रसांजनार्द्धपलं क्षौद्रयुतमंजनादर्मशेषश्लेष्मतिमिरपिल्लामयघ्नं च ॥ सिराजाले सिरास्तु स्थूलाः कठिनाश्च बडिशेन गृहीत्वा मंडलाग्रेणोल्लिखेत् ॥ सिरापिटिकाः सूच्यग्रेणावलंबिताः कृष्णमनुपघ्नंश्छिंद्यात्त्वचःलिखेदर्मवच्चैतयोः शेषमाचरेत् ॥ शुक्रकेषु यथास्वं दोषानुसारेण त्रिफलाघृतपानरक्त-

मोक्षविरेचनाश्च्योतनमुखालेपनतर्पणपुटपाकान्प्रयुंजीत ॥ तत्र व्रण-शुक्रे त्रिवृन्निर्यूहेण त्रिःपक्कं सर्पिः पाययेत् ॥ सिरां च विध्येत् दुष्टशिष्टं च पिंडितमक्षिस्थमसृक् जलौकोभिरपहरेत् ॥ मधुककाकोलीमृद्वीकोत्पलविदारीक्काथेन मंजिष्ठाक्षीरकाकोलीमधुकक्कथिताजक्षीरेण वा सशर्करेणाश्च्योतयेत् ॥ शीतैश्चास्य शिरोवक्रं दिह्यात्सिंचेच्च ॥ एवमप्यनुबद्धवेदनं शताह्वायष्ट्याह्ववचाघृतमंडेनानुवासयेत् ॥ अपिच ॥ असृग्रागरुजाशांतिं यदा तेभ्योऽपि लक्षयेत् ॥ तदा तदंजनैः शुक्रं लेखनीयैरुपाचरेत् ॥ वैदूर्यस्फटिकशंखमुक्ताविद्रुमरूप्यायस्त्रपुताम्रसीसालमनःशिलाकुकुटांडत्वक्समुद्रफेनरसांजनसैंधवैरजापयःपिष्टैर्वर्त्तयश्छायाशुष्काः क्षौद्रमृष्टाः प्रातः सायं च प्रयुक्ता व्रणशुक्रनुदः ॥ करिवराहगोगर्दभाश्वाजोष्ट्रदशनाः शंखमुक्तासमुद्रफेनाश्च मरिचचतुर्थांशा जलपिष्टा वर्त्तयः क्षतशुक्रहराः ॥ लाक्षासुवर्णगैरिकचंदनजातीमुकुलैर्वर्त्तिरसृक्पित्तप्रसादनी व्रणशुक्रहरा च ॥ निम्नं तु शुक्रं सरुजमुन्नमयेत् स्नेहपाननस्यजांगलरसैः ॥ तर्पणपुटपाकाभ्यां नीरुजं ॥ तत्र तर्पणं ॥ मृगविष्किरपिशितं काश्मर्यसुनिषण्णोत्पलमृणालशृंगाटककसेरुद्राक्षाक्षीरविदारीजीवनीयांश्च क्षीरे पाचयेत्तस्मान्नवनीतमुद्धृत्य चंदनमधुशर्करानतनीलोत्पलकल्कैरष्टगुणेन च पयसा विपक्कं पूर्ववत्स्यं ॥ चंदनसारिवाप्रपौंडरीकजीवनीयकल्कैः समधुघृतैः संसृज्य प्रागिव कल्पयेत् ॥ द्वित्वावच्छिन्नमेव वा पाययेत् ॥ शुद्धशुक्रे हरिद्रामधुकसारिवारोध्रनिर्यूहेणाश्च्योतनं रोध्रचूर्णेन वा तांतवबद्धेनोष्णांबुमृदितेन ॥ शुद्धकोष्ठस्य दंतीज्योतिष्मतीकल्कोऽवपीडशिरोविरेचनद्रव्यपक्कं वा मर्शः प्रतिमर्शो वा॥शुंठीसैंधवमधुयष्टिकाबृहतीमूलताम्ररजोभिरामलकरसपिष्टैस्ताम्रपात्रं लेपयेत् ॥ सघृतैर्यवैरामलकपत्रैश्च बहुशो धूपयेत् ॥ ततो वर्त्तिरेषा महानीला मधुतोयघृ-

ष्टा शुद्धशुक्रं नाशयति पूर्वोक्ता च दंतवर्त्तिः ॥ अथाशाम्यति तु शुक्रे सर्वत्र पुनः पुनर्यथोक्तमेव पर्यायेण योजयेत् ॥ अंतरांतरा च रक्तं स्रावयेदभिष्यंदप्रतिषेधं चेक्षेत ॥ अथोत्सादनार्थी शुद्धशुक्रे संप्रहर्षणानि दद्यात्त्रिफलारसेन त्र्यहं भावितेन सैंधवेनांजयेत् ॥ तद्वत्सैंधवपिप्पलीबीजसर्षपैर्वा शिरीषबीजसैंधवैर्वा कोलास्थिकनकफलशंखद्राक्षामधुमधुकैर्वा बलासग्रथितोक्तक्षारांजनैर्वा संप्रहर्षणान् रागास्रवेदनासु संबाधांजनानि युंज्यात् ॥ शंखं ताम्रे स्तन्येन प्रघृष्य सघृतैर्यवैः शमीपत्रैश्च धूपयेत् ॥ अनेन संबाधांजनेनांजयेत् ॥ तद्वत्सुवर्णं रूप्यमयो वा घृष्टं सघृतैर्बदरीपत्रैर्धूपितमंजनं ॥ सारिवा निस्तुषाश्च हरिता मुद्गाः पिष्टा वर्त्तिश्चूर्णो वा मधुयुतोऽजनं शुक्रघ्नं ॥ मधूकसारश्च मधुना बिभीतकास्थिमज्जा वा ॥ मसूरा निस्तुषाः स्तन्यपिष्टास्तरुणदर्भांकुरा घृतमाजं गोक्षीरं शरश्चायसे ताम्रेण घृष्टा अभ्यंजनं वेदनाघ्नं ॥ यवगोधूमजीवनीयमांसीचूर्णेन सघृतशर्करोत्कारिका स्वेदोपनाहे प्रणीता वेदनामपनयति शुक्रं चोत्सादयति ॥ तद्वदानूपमांसवेसवारो वसापयःसर्पिर्विमिश्रसिद्धः ॥ अथैनमुपनाहप्रचलितस्यांजनं ॥ गोखराश्वोष्ट्रदंताः समुद्रकफः शंखश्चार्जुनकषायपिष्टा वर्त्तिर्लेखनी ॥ समुद्रफेनशंखखरपरशुकास्थिखरनराश्वगोबालास्थितिंदुककषायपिष्टा वा प्रत्यंजनं च ॥ तरुणबदरखदिरतिंदुकास्थ्यामंतर्धूमदग्धानां चूर्णं॥उत्सन्नं वा शुक्रं सशल्यं वा बालादिभिरुल्लिखेत्॥ पुटपाकेन वा बलासग्रथितोक्तक्षाररसक्रियया वा॥सिराशुक्रे त्वदृष्टिघ्ने तरुणे व्रणशुक्रवत्कुर्यात् ॥ अंजनं चास्य प्रपौंडरीकमधुकहरिद्रालोहरजोऽजनबृहतीक्षीरकाकोल्यजापयः पिष्टायवैर्घृतयुतैरामलकीपत्रैश्च पर्यायेण धूपिता वर्त्तिः ॥ अप्रशांतमेवमर्मवत्साधयेत् ॥ सप्ताक्षिकं तु रसांजनं प्रतिसारणं ॥ सप्तमे च दिवसे कुक्कुटांडकपालस्फटिकशंखचंदनमनःशिलालैरश्ववराहदशनैश्च वर्त्तिं कृत्वांऽजयेत् ॥ उदधिक-

फशंखचंदनैर्जलपिष्टैर्वर्त्तिर्मधुघृष्टा प्रत्यंजनं ॥सिराशुक्रवदनुपशमे पश्यति चातुरे किंचिदिदमेव वा सकृत्कुर्वीत ॥ अजकामदृष्ट्युपघातिनीं कृष्णांतजामस्रविस्रावणैर्मधुरविरेचनैः क्षीरबस्तिभिश्च साधयेत् ॥ सिराशुक्रवच्च शस्त्रकर्मादिविधिनेति ॥ भवति चात्र ॥ अजकायामसाध्यायां शुक्रेऽन्यत्र च तद्विधे॥वेदनोपशमं स्नेहपानासृक्स्रावणादिभिः ॥ कुर्याद्बीभत्सतां जेतुं शुक्लत्वोत्सेधसाधनं ॥ नारीकेलास्थिभल्लाततालवंशकरीरजं ॥ भस्माद्भिः स्रावयेत्ताभिर्भावयेत्करभास्थिजं ॥ चूर्णं शुक्रेष्वसाध्येषु तद्वैवर्ण्यघ्नमंजनं ॥ साध्येषु साधनायालमिदमेव च शीलितं ॥ अजकां पार्श्वतो विध्वा तस्या विस्राव्य चोदकं॥ समं प्रपीड्यांगुष्ठेन वसार्द्रेणानुपूरयेत् ॥ व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ॥ सप्तरात्राद्व्रणे रूढे कृष्णभागे समे स्थिते ॥ स्नेहांजनं च कर्तव्यं नस्यं वा क्षीरसर्पिषोः ॥ तथापि पुनराध्माते भेदच्छेदादिकां क्रियां ॥ युक्त्या कुर्याद्यथा नातिच्छेदेन स्यान्निमज्जनं ॥ नित्यं च शुक्रेष्वमृतं यथास्वं पाने च मर्शे च घृतं विदध्यात्॥ न हीयते लब्धबला तथां ऽतस्तीक्ष्णांजनैर्दृक् सततं प्रयुक्तैः ॥ इति संधिसितासितरोगप्रतिषेधो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अथातो दृष्टिरोगविज्ञानं व्याख्यास्यामः ॥ सिरानुसारिणि मले प्रथमं पटलं श्रिते ॥ अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ॥ भूतं तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ दूरांतिकस्थं रूपं च विपर्यासेन मन्यते ॥ दोषे मंडलसंस्थाने मंडलानीव पश्यति ॥ द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधास्थिते ॥ दृष्टेरभ्यंतरगते ह्रस्ववृद्धविपर्ययं ॥ नांतिकस्थमधःसंस्थे दूरगं नोपरिस्थिते ॥ पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः ॥ प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ॥ तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमं ॥ यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ॥

तथाऽप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ लिंगनाशं मलः कुर्वन्-
छादयेद्दृष्टिमंडलं ॥ तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥ च
लाविलारुणाभासं प्रसन्नं चेक्षते मुहुः ॥ जालानि केशान् मशकान्
रश्मींश्चोपेक्षितेऽत्रच ॥ काचीभूते दृगरुणा पश्यत्यास्यमनासिकं ॥
चंद्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥ वृद्धः काचो दृशं कुर्याद्रजो-
धूमावृतामिव ॥ स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हृतदर्शनां ॥ स
लिंगनाशो वाते तु संकोचयति दृक्सिराः ॥ दृङ्मंडलं विशत्यंतर्गंभी-
रा दृगसौ स्मृता ॥ पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितं ॥ शि
खितित्तिरपत्राभं प्रायो नीलं च पश्यति ॥ काचे दृक्काचनीलाभा
तादृगेव च पश्यति ॥ अर्केंदुपरिवेषाग्निमरीचींद्रधनूंषि च ॥ भृंग-
नीला निरालोका दृक् स्निग्धा लिंगनाशतः ॥ दृष्टिः पित्तेन ह्रस्वा-
ख्या सा ह्रस्वा ह्रस्वदर्शिनी॥भवेत्पित्तविधग्धाख्या पीता पीताभदर्शना
॥कफजे तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति॥ शंखेंदुकुंदकुसुमैः कु-
मुदैरिव वाऽन्वितं ॥ काचे तु निःप्रभेंद्वर्कप्रदीपाद्यैरिवाचितं ॥ सि
ताभासा च दृष्टिः स्याल्लिंगनाशे तु दृश्यते ॥ मूर्तः कफो दृष्टिगतः
स्निग्धो दर्शननाशनः ॥ बिंदुर्जलस्येव चलः पद्मिनीपुटसंस्थितः ॥
उष्णे संकोचमायाति छायायां परिसर्पति ॥ शंखकुंदेंदुकुमुद-
स्फटिकोपमशुक्लिमा॥ रक्तेन तिमिरे रक्तं तमोभूतं च पश्यति ॥
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति॥ लिंगनाशे ऽपि दृ
क् तादृङ्निष्प्रभा हतदर्शना ॥ संसर्गसन्निपातेषु विद्यात्संकीर्णलक्षणा
न् ॥ तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणः ॥ तिमिरे शेष-
योर्दृष्टौ चित्रो रागः प्रजायते ॥ द्योतते नकुलस्येव यस्य दृङ्निचि-
ता मलैः ॥ नकुलांधः स तत्राह्नि चित्रं पश्यति नो निशि ॥ अर्के-
ऽस्तमस्तकन्यस्तगभस्तौ स्तंभमागताः ॥ स्थगयंति दृशं दोषा दो-

षांधः स गदोऽपरः ॥ दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः॥विलीनलीना यच्छंति व्यक्तमत्राह्नि दर्शनं ॥ उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ॥ त्रिदोषरक्तसंपृक्तो यात्यूष्मोर्ध्वं ततोऽक्षिणी ॥ दाहोषे मलिनं शुक्लमहन्याविलदर्शनं ॥ रात्रावांध्यं च जायेत विदग्धोष्णेन सा स्मृता ॥ भृशमम्लाशनाद्दोषैः सास्रैर्या दृष्टिराचिता ॥ सक्लेदकंडूकलुषाविदग्धाऽम्लेन सा स्मृता ॥ शोकज्वरशिरोरोगसंतप्तस्यानिलादयः ॥ धूमाविलां धूमदर्शीं दृशं कुर्युः स धूमरः ॥ सहसैवाल्पसत्वस्य पश्यतो रूपमद्भुतं॥ भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ॥ कुर्वंति तेजः संशोष्य दृष्टिं मुषितदर्शनां ॥ वैदूर्यवर्णां स्तिमितां प्रकृतिस्थामिवान्यथां ॥ औपसर्गिकइत्येष लिंगनाशोऽत्र वर्जयेत् ॥ विना कफाल्लिंगनाशाद्गंभीरां ह्रस्वजामपि ॥ षट् काचा नकुलांधश्च याप्याः शेषांस्तु साधयेत् ॥ द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥ इति दृष्टिरोगविज्ञानं नाम पंचदशोऽध्यायः ॥ १५ ॥

अथातस्तिमिरप्रतिषेधं व्याख्यास्यामः ॥ तिमिरं काचतां याति काचोऽप्यांध्यमुपेक्षया ॥ नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतं ॥ तुलां पचेत्तु जीवंत्या द्रोणेऽपां पादशेषिते ॥ तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ प्रपौंडरीककाकोली पिप्पलीरोध्रसैंधवैः ॥ शताह्वा मधुकद्राक्षाशिवादारुफलत्रयैः ॥ कार्षिकैर्निशि तत्पीतं तिमिरापहरं परं ॥ द्राक्षाचंदनमंजिष्ठाकाकोलीद्वयजीवकैः ॥ सिताशतावरीमेदा-[1]यवाह्वमधुकोत्पलैः ॥ पचेज्जीर्णघृतप्रस्थं समक्षीरं पिचून्मितैः ॥ हंति तत्काचतिमिररक्तराजीशिरोरुजः ॥ पटोलनिंबकटुकादार्वीसेव्यवरात्रिफं ॥ सधन्वयासत्रायंतीपर्पटं पालिकं पृथक् ॥ प्रस्थमामलकानां च क्वाथयेन्नल्वणेऽभसः॥तदाढकेऽर्द्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत्॥मु-

१ पुंड्राह्वमधुकोत्पलैरितिपाठः २ नल्वणे द्रोणपरिमाणे ॥

स्तभूनिंबयष्ट्याव्हकुटजोदीच्यचंदनैः ॥ सव्योषचव्यैस्तत्सर्पिर्घ्राण-कर्णाक्षिरोगजित् ॥ विद्रधिज्वरदुष्टास्त्रविसर्पापचिकुष्टनुत् ॥ विशेषाच्छुक्रतिमिरनक्तांध्याम्लोष्णदाहहृत् ॥ त्रिफलाष्टपलं काथ्यं पादशेषे जलाढके ॥ तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ॥ अर्द्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा ॥ युक्तं पिबेत्तत्तिमिरी तद्युक्तं वा वरारसं ॥ यष्टीमधुद्विकाकोलीव्याघीकृष्णाऽमृतोत्पलैः ॥ पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत्समैः ॥ अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ॥ महात्रिफलमित्येतत्परं दृष्टिविकारजित् ॥ त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ॥ यष्टीमधुकसंयुक्तां मधुना च परिप्लुतां ॥ मासमेकं हिताहारः पिबन्नामलकोदकं ॥ सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ॥ गव्यं घृतं लोहमये भाजने बादरे स्थितं ॥ त्रिफलाचूर्णसहितं पीतं तिमिरनाशनं ॥ पुराणं च सिताभीरुयष्टीमधुकचूर्णवत् ॥ निषिक्तमग्निवर्णे वा शीर्णं[1] सर्पिरयोगुडे ॥ हेमरूप्यायसैश्चूर्णैर्युक्तां वा त्रिफलां पृथक् ॥ घृतक्षौद्रान्वितामद्यात्केवलां वाऽवचूर्णितां ॥ त्रिफलाऽयोरजोयष्टीसर्पिःक्षौद्रसमन्विता ॥ विदाहे शीलिता वृष्या सर्वनेत्रगदान् जयेत् ॥ ताप्यायस्त्रिफलाचूर्णं मधुजीर्णघृतप्लुतं ॥ लोहपात्रे स्थितं मासं माषराशौ च भक्षयेत् ॥ सक्तूंश्चाद्यात्ससर्पिष्कान् त्रिफलाचूर्णसंयुतान् ॥ भुंजीत वा सुसिद्धेन सूपेनामलकैः सह ॥ प्रातर्भुक्तस्य वा पूर्वमद्यात्पथ्यां पृथक् पृथक् ॥ मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः ॥ काथोऽसनाद्भृंगरसैस्तैलं कृष्णतिलोद्भवं ॥ लोहपात्रे तदेकत्र साधितं नावनं हितं ॥ स्रोतोजांशांश्चतुःषष्टिं हेमायोरूप्यताम्रकैः ॥ युक्तान्प्रत्येकमेकांशैरंधमूषोदरस्थितान् ॥ ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ॥ रसस्कंधकषायेषु सप्तकृत्वः पृथक्

1 शीतमितिपाठः

पृथक् ॥ वैदूर्यमुक्ताशंखानां त्रिभिर्भागैर्युतं ततः ॥ चूर्णांजनं प्रयुंजीत तत्सर्वं तिमिरापहं ॥ निर्दग्धं बादरांगारैस्तुत्थं चेत्थं निषेचितं ॥ क्रमादजापयःसर्पिःक्षौद्रे तस्मात्पलद्वयं ॥ कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ॥ पट्टुरोध्रशिलापथ्याकणैलांजनफेनकैः॥ युक्तं पलेन यष्ट्याश्च मूषांतर्ध्मातचूर्णितं ॥ हंति काचार्मनक्तांध्यरक्तराजीः स शीलितः॥ चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ॥ नागशुल्बालवंगाख्यगंधकांजनकैर्भवेत् ॥ त्रिंशद्विद्व्येकपंचत्रिभागैः पक्वैः सदा जयेत् ॥ मनोऽह्वासैंधवव्योषशंखनाभिरसांजनं ॥ कतकस्य फलं फेनो विडंगानि सितोपला ॥ कुक्कुटांडकपालानि जलपिष्टा सुखावहा ॥ हंत्येषा मधुना घृष्टा काचतैमिर्यशुक्रकान् ॥ त्रिफला कुक्कुटांडत्वक् कासीसमयसो रजः ॥ नीलोत्पलविडंगानि फेनं च सरितां पतेः ॥ आजेन पयसा पिष्ट्वा लेपयेत्ताम्रभाजनं ॥ सप्तरात्रे गते भूयः पिष्टं क्षीरेण वर्त्तयेत् ॥ एषा दृष्टिप्रदा वर्त्तिरंधस्याभिन्नचक्षुषः ॥ अंजनं कृष्णसर्पास्ये निहितं कुशवेष्टिते ॥ तलस्ततः समुद्धृत्य मासात्संचूर्णयेत्सह ॥ सुमनःकोरकैः शुष्कैरर्द्धांशैः सैंधवेन च ॥ प्रयोजयेद्रागवति तिमिरे तद्वदंजनं ॥ पयसा द्वयमेतच्च चूर्णयित्वा सुभावितं ॥ सामान्यं साधनं त्वेतत्प्रतिदोषमतः शृणु ॥ वातजे तिमिरे तत्र दशमूलांभसा घृतं ॥ क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ॥ त्रिफलापंचमूलानां कषायं क्षीरसंयुतं ॥ एरंडतैलसंसृष्टं योजयेत विरेचनं ॥ शंखिनीतिल्वकश्यामादंतीर्निःक्वाथ्य वा जले ॥ त्रिवृत्कल्कप्रतीवापं तेन पक्वं घृतं पिबेत् ॥ प्रपौंडरीकयष्टीबलानलदसैंधवैः ॥ दारुबिल्वाढकीकृष्णाहरिद्रामधुयष्टिभिः ॥ सिद्धं चतुर्गुणं क्षीरं तैलं बस्तौ निषेचयेत् ॥ सितैरंडजटासिंहीफलदारुवचानतैः ॥ शताह्वाबिल्वमूलैश्च तैलं पक्वं पयोन्वितं ॥ नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिषु ॥ वसांऽजने च वैध्या-

ग्नी वाराही वा प्रशस्यते ॥ गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ॥ प्रत्यंजने च स्रोतोजं रसक्षीरघृते क्रमात् ॥ निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमं ॥ नचेदेवं शमं याति ततस्तर्पणमाचरेत् ॥ शताह्वाकुष्टनलदकाकोलीद्वययष्टिभिः ॥ प्रपौंडरीकसुरसापिप्पलीदेवदारुभिः ॥ सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमं ॥ प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ॥ वातपीनसवच्चात्र निरूहं सानुवासनं ॥ पित्तजे तिमिरे सर्पिजीवनीयफलत्रयैः ॥ विपाचितं पाययित्वा स्निग्धस्य व्यधयेच्छिरां ॥ सशर्करैस्त्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचनं ॥ मंजिष्ठारोध्रमधुकसारिवाचंदनैः शृतं ॥ जलं सशर्करस्तन्यं नेत्रसेकः प्रशस्यते ॥ स्तन्यं वा पद्मकोशीरक्षीरिवृक्षांकुरैः शृतं ॥ तप्तैर्निर्वापितं सर्पिरसकृल्लोहपिंडकैः ॥ विमार्दितसिताद्राक्षं हिमं तत्राक्षिसेचनं ॥ शीतलेपनसेकादीन् मुखे मूर्द्धनि शीलयेत् ॥ सारिवापद्मकोशीरमुक्ताशाबरचंदनैः ॥ वर्तिः शस्ताऽञ्जने चूर्णस्तथा पद्मोत्पलांजनैः ॥ सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ॥ रोध्रमूर्वाप्रपुंड्राह्वमांसीयष्ट्याह्वचंदनैः ॥ सोशीरं साधितं सर्पिः सक्षीरं तर्पणे हितं ॥ एभिरेवौषधैश्छागे पक्वे शकृति तद्रसे ॥ पूर्ववत्पुटपाकस्तु कार्यस्तिमिरनाशनः ॥ श्लेष्मोद्भवेऽमृताक्वाथे वराकणशृतं घृतं ॥ विध्येच्छिरां पीतवतो दद्याच्चाशु विरेचनं ॥ क्वाथं पूगाभयाशुंठीकृष्णाकुंभनिकुंभजं ॥ करंजकट्फलवचात्रिफलापंचकोलकैः ॥ सदार्वीकैः पयोयुक्तं सिद्धं तैलं च नावनं ॥ शंखप्रियंगुनेपालीकटुत्रिकफलात्रिकैः ॥ दृग्वैमल्याय विमला वर्तिः स्यात्कोकिला पुनः ॥ कृष्णलोहरजोव्योषसैंधवत्रिफलांऽजनैः ॥ पीताख्या द्विनिशा कुष्टनतपत्रकणोषणैः ॥ पत्रपीतावराव्योषशीलालनतसैंधवैः ॥ मनोह्वाशंखसिंधूत्थमरिचैस्तिमिरं जयेत् ॥ वर्तिः प्रगाढमप्याशु शुक्रपित्तामयाम च ॥ तालीसपाठाकिणिहीबेल-

मांसीनिशाद्वयैः ॥ पिष्टैः क्षीरिद्रुमक्काथे घृतं सिद्धं तु तर्पणं ॥ पुटपाकं तु पिशितैर्जांगलैः सैंधवान्वितैः ॥ सपिप्पलीमधुघृतैः कल्पितं प्रागिवाचरेत् ॥ शिग्रुपत्रैर्जलस्विन्नैः कार्यः स्वेदश्च मात्रया ॥ रक्तजे पित्तवत्कार्यं सन्निपाते यथोल्बणं ॥ व्याघ्रर्क्षगोशिखिवसा यवक्काथपयोयुता ॥ दूर्वामधुककल्केन विपक्का तर्पणे हिता ॥ यष्ट्यनंताद्विबृहतीपिप्पलीलवणद्वयैः॥ सलोध्रचंदनैः पक्वं शकृता शल्यकस्य च ॥ मृगगोधाशशानां वा पुटपाकं प्रकल्पयेत् ॥ दद्यादुशीरनिर्यूहे चूर्णितं कणसैंधवं ॥ तच्छृतं सघृतं भूयः पचेत्क्षौद्रं क्षिपेद्धने ॥ शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽजनं ॥ कुष्ठं वा शर्करोपेतमांतरिक्षेण वारिणा ॥ निःक्काथ्य सर्पिःक्षौद्राभ्यां संसृष्टे प्रागिवांजनं ॥ स्रोतोंजनं च सौवीरं वेष्टयित्वाऽजमेदसा ॥ वटपत्रैरनु तथा दर्भैः कृष्णमृदाऽनुच ॥ गोमयानलपक्कं च प्रशस्तं चूर्णमंजनं ॥ उरभ्रशल्यकश्यावमार्जारशिखिजन्मभिः ॥ वसाभिर्विधिनाऽनेन योगा योज्याः पृथक् पृथक् ॥ वटप्ररोहमधुकदूर्वारोध्रतिलोत्पलैः ॥ पयोंबुपिष्टैः सघृतैः शिरोवक्त्रं च लेपयेत् ॥ कुर्याच्छिरःपरीषेकमेभिरेव पयःशृतैः ॥ सन्निपाते यदुचितं दोषोद्रेकं विभज्य तत् ॥ संसर्गेऽपि प्रयुंजीत काचे तिमिरवत्क्रियाः॥न तु तत्र सिरां विध्येत् दृक्स्थितां यंत्रपीडनात् ॥ कुर्यूरांध्यं मला दद्यात्साव्ये त्वस्रे जलौकसः॥धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा॥स्निग्धं विरचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः॥गोशकृद्रसदुग्धाज्यैर्विपक्कं शस्यतेऽजनं ॥ स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ पुराणगुडकासीसपिप्पलीकट्फलाद्रजः ॥ भावितं त्रिफलांभोभिः शुष्कं गोविड्रसाप्लुतं ॥ निशांध्यतिमिरे सद्यो गुल्का हंति तत्कृता ॥ दध्ना विघृष्टं मरिचं रात्र्यंधांजनमुत्तमं ॥ भृष्टं घृतं कुंभयोनेः पत्रैः पाने च पूजितं ॥ करंजिकोत्पलस्वर्णगैरिकांभोजके

सरैः ॥ गोविड्रसेन पिष्टेयं वर्तिर्दोषांध्यनाशिनी ॥ क्षौद्रजातीरसाभ्यां वा द्विहरिद्रारसांजनैः ॥ अजामूत्रेण वा कौंतीकृष्णास्रोतोजसैंधवैः ॥ गोशकृद्रसपिष्टैर्वा द्विनिशापिप्पलीयुतैः ॥ कालानुसारितालीसपत्रयष्ट्याह्नागरैः ॥ कणा वा कापिले पित्ते मासार्द्धं परिभाविता ॥ यकृत्पित्तेषु वा गोधाशशर्क्षरुरुबर्हिणां ॥ खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ॥ घृते सिद्धानि जीवंत्याः पल्लवानि च भक्षयेत् ॥ तथातिमुक्तकैरंडशेफाल्यभीरुजानि च ॥ व्रणवच्चाक्षिरोगेषु भोज्यान्यन्नानि निर्दिशेत् ॥ अविधारितवेगस्य भजतोऽजननावनं ॥ त्यजतः क्रोधशोकौ च तिमिरं नाश्नुते नरं ॥ त्रिफलामश्नतो रात्रौ संस्कृतं पिबतो घृतं ॥ भुक्त्वा वा पिबतस्तोयं तिमिरं लघु शाम्यति ॥ सुषभव्यं सुकांतं च स्कंदं च्यवनमश्विनौ ॥ षडेतानि स्मरेन्नित्यं तस्य चक्षुर्न हीयते ॥ चिंताभिघातभीशोकरूक्षादुत्कटकासनात् ॥ विरेकनस्यवमनपुटपाकादिविभ्रमात् ॥ विदग्धाहारवमनात्क्षुत्तृष्णादिविधारणात् ॥ अक्षिरोगावसानाच्च पश्येत्तिमिररोगवत् ॥ यथास्वं तत्र युंजीत दोषादीन्वीक्ष्य भेषजं ॥ सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ॥ संतर्पणं स्निग्धहिमादियोज्यं तथांऽजनं हेमघृतेन पिष्टं ॥ तमालतृटिकुंकुमान्यसितमुत्पलं पिप्पली सितांजनमयोरजो मरिचकाचमांसीत्वचः ॥ सयष्टिमधुकांजना उदधिफेनमक्ष्यामयेष्वनुत्तममतोऽजनं विमलमाशु तैमिर्यहृत् ॥ चक्षूरक्षायां सर्वकालं मनुष्यैर्यत्नः कर्तव्यो जीविते यावदिच्छा ॥ व्यर्थो लोकोऽयं तुल्यरात्रिंदिवानां पुंसामंधानां विद्यमानेऽपि वित्ते ॥ त्रिफला रुधिरस्रुतिर्विशुद्धिर्मनसोनिर्वृतिरंजनं च नस्यं ॥ शकुनाशनता सपादपूजा घृतपानं च सदैव नेत्ररक्षा ॥ इति तिमिरप्रतिषेधो नाम षोडशोऽध्यायः ॥ १६ ॥

---

१ दोषारात्रिः २ शयनासनवासपादपूजेतिपाठः ॥

अथातो लिंगनाशप्रतिषेधं व्याख्यास्यामः ॥ लिंगनाशो निलीका पटलमांध्यमिति पर्यायाः ॥ स श्लेष्मकएव प्राक् साध्योऽभिहितः ॥ तस्य पुनः षडुपद्रवा आवर्त्तकी शर्करा राजीमती छिन्नांशुका चंद्रकी छत्रकी चेति॥ तद्यथा तत्राश्वेतारुणाऽऽवर्त्तवदनवस्थिता ताराऽऽवर्त्तकी ॥ अर्कक्षीरलेशेनेव कूचीकपिंडेनेव चाचिता शर्करा॥ शालिशूकाभराज्यावृतेव राजीमती ॥ विषमच्छिन्नदग्धाभा सरुक् छिन्नांशुका ॥ कांस्यसमच्छाया चंद्रकसंस्थाना चंद्रकी ॥ नैकवर्णा छत्रनिभा छत्रकीति ॥ न विध्येदसिरार्हाणां न च पीनसकासिनां ॥ नाजीर्णभीरुवमितशिरःकर्णाक्षिशूलिनां ॥ नात्युष्णशीतवाताभ्रे नासंपूर्णां च नीलिकां ॥ असंजाता हि विषमा दधिमस्तुतनुश्च या॥ शलाकया विकृष्टापि पुनरूर्ध्वं प्रपद्यते ॥ करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ॥ सा च संपूर्यते शीघ्रं श्लेष्मलैर्वातपित्तलैः ॥ चिरात्सोपद्रवा च स्यान्निष्प्रेक्ष्या याऽर्हति व्यधं ॥अथ स्निग्धविरिक्तस्य घृतैः संभोजितस्य च ॥ संप्रीणितोत्तमांगस्य सज्जोपकरणस्य च ॥ भुक्तवतोवि मलेऽहनि साधके च कृतस्वस्त्ययनस्य विहितादित्यविदेहाधिपतिप्रणामस्य पूर्वाह्णे निवातप्रकाशदेशस्थस्य प्रत्यादित्यमास्तरणलब्धमार्दवायां भूमौ प्रसारितचरणयुग्ममुपविष्टस्य क्षितितलगतसमतलोभयपाणेः पृष्ठतः सुखोपविष्टेन परिचारकेण हस्ताभ्यां निश्चलमवलंबितशिरसः किंचिदुत्तानस्य स्वां नासामितरच्चेक्षणमीक्षमाणस्यातुरस्य नात्युच्छ्रितासननिविष्टो भिषगक्षि मुखबाष्पस्विन्नं मीलितमीषदंगुष्ठोदरविमृदिततारकतया परिप्लुतदोषं सव्यांगुष्ठप्रदेशिनीभ्यामुन्मील्य दक्षिणमध्यमाप्रदेशिन्यंगुष्ठैर्निष्कंपं गृहीतया शलाकया कृष्णाद्भागद्वयस्यापांगादेकभागस्य च संगमे दृष्टेरार्जवं नात्यूर्ध्वमधो वा नेत्रसहजन्मनि संधौ वा विध्येत् ॥ एवमेव दक्षिणांगुष्ठप्रदेशिन्युन्मीलितमितरेण च दक्षिणेनैव चातुरस्य दक्षिणपार्श्वं छिंद्यात्तत्र शब्दवदवेद-

नं सांबुबिंदुस्रुति च सम्यग्विद्धं विद्यात् ॥ प्रविष्टमात्रां च शलाकां धारयेत् ॥ रागाश्रुवेदनानुत्पादार्थं च स्तन्येन सेचयेत्ततः पुनरातुरमाश्वास्य भ्रमयन् शलाकामादृष्टिमध्यात् प्रवेशयेदधश्चावलोकयतो लिंगनाशमद्रुतमविलंबितमनुसुखमधोमुखमपनयेदुच्छिंदयेच्चैनं ॥ तथाहि दृङ्मंडलगः कफश्च विशुध्यति विशुद्धदृष्टेश्चांगुलिसूत्रतंतुजातींश्च दर्शयेत् प्रेक्षमाणस्य चानिमीलितनेत्राच्छनैः शनैर्भ्रमयन्नेव शलाकामपनयेत् ॥ अथ व्यपगतदोषस्य यथावत्पश्यतः सुखोष्णघृताप्लुतं पिचुमीक्षणस्योपरि दत्वा बध्नीयात् ॥ ततो निवातमागारमनुप्रविश्य च सोपधाने मृदुनि शयने शयानं दक्षिणेऽक्षिणि विद्धे वामेन पार्श्वेन वा दक्षिणेनोभयस्मिन्नुत्तानमनुकूलाभिः कथाभिरुपाचरेत् ॥ यथाशक्ति चैनमुपवासयेत् ॥ उद्गारक्षवथुकासनिष्ठीवनोत्कंपनानि त्र्यहं परिवर्जयेत् ॥ स्नानांबुपानदंतधावनाधोमुखावस्थानानि सप्ताहं ॥ स्नेहविधिं चेक्षेत॥ मूर्ध्नि पादयोश्च घृताभ्यंगमाचरेत् ॥ तृतीये चाह्नि मुक्ताक्षि परिषेचयेत् ॥ एरंडपल्लवशृतेन दुग्धेन जीवनीयैर्वा सिद्धेन पयसा हविषा वा तद्वल्लघुना पंचमूलेन ततः पूर्ववद्बध्नीयात् ॥ ततः प्रभृत्येवमेव प्रत्यहमासप्ताहं ॥ सप्तमे तु दिवसे सर्वथा मोक्षयेद्दशमे वा ॥ भोजयेच्चैनं व्योषामलकयुक्तं द्रवमीषत्स्नेहलवणाढ्यं वाट्यं विलेपीं वा ॥ एवमाचरतो रुजारागादयो नानुवर्त्तंते ॥ तदनुवृत्तौ तु यष्टीमधुकरोध्रमृद्वीकसैंधवैः सिद्धेन छागेनाथपयसा नयनमाश्चोतयेत् ॥ मधुककुष्ठोत्पलद्राक्षालाक्षाशर्कराभिर्वा पृश्निपर्णीमुस्तमधुकशतावरीपद्मकसैंधवैर्वा शिरोवक्त्रलेपं च सारिवागैरिकयवदूर्वाघृतैः कुर्यान्मातुलुंगरसाप्लुतैर्वा मृदुभृष्टैस्तिलैः ससर्षपैरजाक्षीरद्रुतैर्वा पयस्यासारिवापत्रमंजिष्ठायष्ट्याह्वैर्हिमः सुखोष्णो वालेपः ॥ तद्वद्देवदारुनागरपद्मकैर्वा जांगलरसेन जीवंतीक्वाथवता भो

जनं वातहरवर्गसिद्धेन च पयसा वत्सकादिगर्भसिद्धं सर्पिः पाननावनसेकेषु विदध्यात् ॥ तथाऽनुपशमे सिरां विध्येत् ॥ अधिमंथसाधनं चेक्षेत ॥ यथोक्ताचारातिक्रमात्तु व्यधः पाकमुपयाति ॥ अभिष्यंदाधिमंथादयश्च स्युर्व्यधदोषाश्च ॥ तान् यथास्वमुपक्रमेत् ॥ व्यधदोषः पुनरूर्ध्वमधः कृष्णासन्नमपांगासन्नं सिराव्यधश्च ॥ तत्राधो व्यधादत्यर्थशूलाश्रुरागाः शलाकायाश्चोपलेपो बहुलपिच्छिलकृष्णं च बलिभिरुपचीयते नयनं च निःस्रवति तद्वर्जयेत् ॥ ऊर्ध्वंव्यधादतिमात्रा रुक् ॥ तत्रात्युष्णघृतपरिषेको वातहरं च कर्म ॥ कृष्णासन्नव्यधान्न सुखमुपनीयते पटलं कृष्णे रुजा दृष्टिरपि रक्तावच्छादिता कृष्णमंडलाभा भवति ॥ तत्र सर्पिः सेकविरेकरक्तमोक्षैः सिद्धिः ॥ अपांगासन्नव्यधाच्छोफशूलतोदोक्लेदसास्राश्रुतयस्तत्र मूत्रघृतसेकोपवासौ भ्रुवोरंतरे च दाहः॥ सिराव्यधाद्रक्तागमो विविधाश्च वेदनास्तत्र स्तन्यमधुकविपक्केन सर्पिषा परिषेकोऽपांगे च दाहः ॥ सिराजालवति तु नेत्रे प्राक्सिराजालमपनयेत् ॥ ततो लब्धबलं स्निग्धं च व्यध्येत् ॥ अथो शलाकाभ्रमणदोषाः क्षोभणमूर्ध्वमधोऽत्यर्थदृष्टिघट्टनमतिदृष्टिप्रेरणं च ॥ शलाकाक्षोभणाद्विस्पंदनतोदभेदपरिमंथाः ॥तस्मिन्यष्टीमधुकपटोल्या घृतमृदितया सेको जलौकसश्च ॥ ऊर्ध्वप्रणयनाद्रागोऽतिवेदना च ॥ तत्रोपवासो घृतसेकश्च स्पर्शसुखः ॥ अधोनयनाच्छूलं रक्तागमश्च ॥ तत्र क्षोभणवत्सिद्धिः ॥ अत्यर्थदृष्टिघट्टनात् दृष्ट्याकुलता ॥ तस्मिन्सर्पिर्मंडानुवासनं च ॥ अतीत्य दृष्टिं शलाकायाः प्रेरणाद्रक्तस्रवणं रक्ताभरूपदर्शनं च ॥ तत्र सर्पिःसेकोपवासौ जलौकसः ॥ लिंगनाशदोषास्तु स्फुटनमपगलनविस्तरणमुत्प्लवनं लीनता च ॥ तत्र शलाकया स्पृष्टो लिंगनाशो यः स्फुटति तमेरंडपत्रस्विन्नं खंडशः शोधयेत् ॥ ततः कृष्णासैंधवमधुभिरवपीडनं ॥ अपलगति तु शलाकामपनीय स्तन्यसेकं दद्यादवपीडनं च ॥ शुं-

ठीगुडं जलौकसश्च ॥ विस्तीर्यमाणे मुखे सुखोष्णांबुप्लुतेन वाससा स्वेदो घृतमंडश्च ॥ प्रतिमर्शस्तद्वदुत्प्लवमाने वित्रासनं च शीतांभसा प्रततंचोच्छिदनं ॥ स्थिरे चले च दोषे पत्रभंगस्वेदस्तथाप्यनवगच्छति शलाकोपगमे वा पुनरुत्प्लवने स्नेहपाननस्यादिभिरुपपाद्य पुनर्व्यध्येदेवमपि पुनरुत्प्लवने भ्रुवोरंतरे दाहः ॥ यस्त्वपकृष्यमाणो दृष्टिमंडले लीयते ॥ तत्र क्षीरेण नाडीस्वेदं दद्यात् ॥ शताह्वामधुकचूर्णसंसृष्टं च घृतं प्रतिमर्शमिति ॥ भवति चात्र ॥ विद्धेऽक्षिण कार्ये स्वेदादौ नियमोऽयं विधीयते ॥ स्वेददाहप्रतीमर्शास्सद्यो विद्धे तु सेचनं ॥ अवपीडं तृतीयेऽह्नि युंज्यात्तद्वज्जलौकसः॥सप्ताहांते सिरामोक्षं विरेकं बस्तिकर्म च॥यंत्रणामनुरुध्येत दृष्टेरस्थैर्यलाभतः॥रूपाणि सूक्ष्म दीप्तानि सहसा नावलोकयेत् ॥ कुर्याच्छलाका स्थूलाऽग्रे विशालव्रणतां तनुः ॥ पटलोत्प्लवनं तीक्ष्णा क्षतमंतः खरा रुजं ॥ कुंठा च विषमाऽश्रूणि ह्रस्वा दीर्घा च दुर्ग्रहा ॥ आढकीमूलमरिचहरितालरसांजनैः ॥ विद्धेऽक्षिण सगुडा वर्तिर्योज्या दिव्यांबुपेषिता ॥ जातीशिरीषधवमेषविषाणपुष्पवैदूर्यमौक्तिकफलं पयसा सुपिष्टं ॥ आजेन ताम्रममुना प्रतनु प्रदिग्धं सप्ताहतः पुनरिदं पयसैव पिष्टं ॥ पिंडांजनं हितमनातपशुष्कमक्षिण विद्धे प्रसादजननं बलकृच्च दृष्टेः ॥ स्रोतोजविद्रुमशिलार्णवफेनतीक्ष्णैरस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥इति लिंगनाशप्रतिषेधो नाम सप्तदशोऽध्यायः ॥ १७ ॥

अथातः सर्वगताक्षिरोगविज्ञानं व्याख्यास्यामः ॥ वातेन नेत्रेऽभिष्यन्ने नासानाहोऽल्पशोफता ॥ शंखाक्षिभ्रूललाटास्यतोदस्फुरणभेदनं ॥ शुष्काऽल्पा दूषिका शीतमच्छं चाश्रु चला रुजः॥ निमेषोन्मेषणं कृच्छ्राज्जंतूनामिव सर्पणं ॥ अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितं ॥ स्निग्धोष्णैश्चोपशमनं सोऽभिष्यंद उपेक्षितः ॥ अधिमंथो भवेत्तत्र कर्णयोर्नादनं भ्रमः ॥ अरण्येव च मथ्यंते ललाटाक्षिभ्रुवाद-

थः ॥ हताधिमंथः सोऽपि स्यात्प्रमादात्तेन वेदनाः ॥ अनेकरूपा जा-
यंते व्रणो दृष्टौ तु दृष्टिहा ॥ मन्याक्षिशंखतो वायुरन्यतो वा प्रवर्त्तय-
न् ॥ व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनं ॥ संकोचयति पर्यश्रु
सोऽन्यतोवातसंज्ञितः ॥ तद्वज्जिह्मं भवेन्नेत्रं शूनं वातविपर्यये॥दाहो
धूमायनं शोफः श्यावता वर्त्मनो बहिः॥ अंतःक्लेदोऽश्रु पीतोष्णं रागपी
ताभदर्शनं ॥ क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यंदलक्षणं ॥ ज्वलदंगार-
कीर्णाभं यकृत्पिंडसमप्रभं ॥ अधिमंथे भवेन्नेत्रं स्यंदे तु कफसंभवे ॥
जाड्यं शोफो महान्कंडूर्निद्रान्नानभिनंदनं ॥ सांद्रस्निग्धबहुश्वेतपित्त-
वद्दूषिकाश्रुता॥अधिमंथे नतं कृष्णमुन्नतं शुक्लमंडलं ॥ प्रसेको नासि-
काध्मानं पांशुपूर्णमिवेक्षणं ॥ रक्ताश्रुराजीदूषीकाशुक्लमंडलदर्शनं ॥
रक्तस्यंदेन नयनं सपित्तस्यंदलक्षणं ॥ मंथेऽक्षिताम्रपर्यंतमुत्पाटनस-
मानरुक् ॥ रागेण बंधूकनिभं ताम्यति स्पर्शनाक्षमं ॥ असृङ्नि-
मग्नारिष्टाभं कृष्णमग्न्याभदर्शनं ॥ अधिमंथा यथास्वं च सर्वे स्यं-
दाधिकव्यथाः ॥ शंखदंतकपोलेषु कपाले चातिरुक्कराः ॥ वात-
पित्तोत्तरं घर्षतोदभेदोपदेहवत् ॥ रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मी-
लनिमीलनं ॥ विकूणनं विशुष्कत्वं शीतेच्छा शूलपाकवत् ॥ उक्तः
शुष्काक्षिपाकोऽयं सशोफः स्यात्त्रिभिर्मलैः ॥ सरक्तैस्तत्र शोफोऽ-
तिरुग्दाहष्ठीवनादिमान् ॥ पक्वोदुंबरसंकाशं जायते शुक्लमंडलं ॥ अ-
श्रूष्णशीतविशदपिच्छिलाच्छघनं मुहुः ॥ अल्पशोफेऽल्पशोफस्तु-
पाकोऽन्यैर्लक्षणैस्तथा ॥ अक्षिपाकात्यये शोफः संरंभः कलुषा-
श्रुता॥कफोपदिग्धमसितं सितं प्रक्लेदरागवत्॥दाहो दर्शनसंरोधो वेद-
ना चानवस्थिता ॥ अन्नसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः ॥
सिराभिर्नेत्रमारूढः करोति श्यावलोहितं ॥ सशोफपाकदाहाश्रु भृशं
चाविलदर्शनं ॥ अम्लोषितोऽयमित्युक्ता गदाः षोडश सर्वगाः ॥ हता-
धिमंथमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ वातोद्भूतः पंचरात्रेण दृष्टिं

सप्ताहेन श्लेष्मजातोऽधिमंथः ॥ रक्तोत्पन्नो हंति तद्वत्त्रिरात्रान्मिथ्याचारात्पैत्तिकः सद्यएव ॥ इति सर्वाक्षिरोगविज्ञानं नामाष्टादशोऽध्यायः ॥ १८ ॥

अथातोऽभिष्यंदप्रतिषेधं व्याख्यास्यामः ॥ अथ खलु सर्वाक्षिरोगी शिरोविरेककवलधूमोपवासानासेवेत ॥ अन्यत्र मारुतोद्रेकात् ॥ सर्वत्र कुचंदनमरिचपत्रैलासुवर्णगैरिकतगररसांजनलवणयष्ट्याह्वैर्बिडालं कुर्यात् ॥ तथा दार्वीतुत्थकहरीतकीभिर्वा॥पित्ते कफे हरीतकी नागररसांजनस्वर्णगैरिकैः ॥ अपिच ॥ कुष्ठमिशिपिप्पलीचंदनोत्पलैर्बिडालको वेदनाघ्नः॥मुस्तागुरुरक्तचंदनैः क्षौद्रयुतैः शूलदाहरागघ्नः॥सैंधवागुरुत्रिजातकत्रिकटुकस्वर्णगैरिकशैलेयकैः शूलश्वयथुदाहरागनुत्॥ शिग्रुफलमनोह्वाशाबररोध्रैः क्रमाचतुर्गुणप्रवृद्धैः श्लक्ष्णरजोभिः सूक्ष्मतांतवस्थैर्घनमवचूर्णयेत् ॥ श्वेतरोध्रत्वचं बहिर्विलिखितां निंबपत्रकल्कघनप्रलिप्तां पुटपाकवत्पक्त्वाऽर्द्धपलोन्मितां मरिचचतुष्टययुक्तां श्लक्ष्णरजीकृतां वस्त्रबद्धामक्ष्ण्यवकिरेत् ॥ एतदवगुंठनं शूलदाहाश्रुश्वयथुकंडूषापाकक्लेदोपदेहहरं ॥ तथैव च पोटलिकयाऽऽश्चोतनकालेऽवंतिसोमाप्लुतयाऽऽश्चोतयेत् ॥ पूर्वं रोध्रकल्कमुपहृतं तन्मात्रमेव मरिचद्वयेन मनःशिलापादेनाष्टांशकैश्च यष्टीमधुकशतपुष्पापुष्पांजनैश्च युक्तं प्रकल्पयेत् ॥ अपिच ॥ आरण्याश्छगणरसे पटावबद्धाः सुस्विन्ना नखवितुषीकृताः कुलत्थाः ॥ तच्चूर्णं सकृदवचूर्णनान्निशीथे नेत्राणां विधमति सद्यएव कोपं ॥ अथ दारुहरिद्रापलमुदकार्द्धप्रस्थेऽष्टांशशेषं क्वथितं माक्षिकयुक्तमाश्चोतनं कुर्वीत ॥ एवं चानुपशमे वाताभिष्यंदिनमादावेव जांगलरसैर्भोजयित्वा दशमूलरास्नात्रिफलाक्काथेन जीवनीयकल्केन वा पयोयुतं सिद्धमितरद्वा पुराणसर्पिः पाययेत् ॥ आश्चोतनं चास्यैरंडपल्लवैः शृतमजा-

---

१ बिडालो नेत्रलेपः

क्षीरं कुर्यात् ॥ शालिपर्णीबृहतीमधुककोरकैर्वा तद्वत्तगरह्रीबेरशार्ङ्ग-ष्टाबदरमधुकपिप्पलीबृहतीद्वयैरंडमूलैर्वांऽशुमतीद्वयबृहतीकंटकारि-काभिर्वा तांतवबद्धाभिः सुरामंडधान्याम्लान्यतमाप्लुताभिः ॥ आनू-पमांसक्वाथेन वा ॥ तैरेव मांसैर्वेसवारीकृतस्विन्नैर्महास्नेहवद्भिर्यवचूर्ण-लवणप्रगाढामुत्कारिकां कृत्वा ललाटगंडादीन् स्वेदयेत् ॥ अथवा रास्नाऽभीरुदशमूलबलाकोलकुलत्थयवानामजाक्षीरस्विन्नानां बाष्पे-ण रास्नादिभिरेव च सिद्धं तैलं सर्पिर्वा नावनं ॥ एवं विधैरेव नाडीस्वे-दं कुर्यात् ॥ सुरभिगंधदेवदार्वहिंस्राकरंजफलबिल्वसर्षपैश्च सभृष्टति लैः पयसा पिष्टैः सुखोष्णैर्मुखालेपोऽक्षिवेदनास्तंभप्रशमनः ॥ एव-मप्यशांतरुजः सिरां मोक्षयेत् ॥ स्नेहस्वेदविष्यंदं हि वातदुष्टमसृ-क् निर्ह्रीयमाणं नानिलप्रकोपाय॥ पुनश्च स्नेहयित्वा तिल्वकेन संस्कृ तं संयुतं वा तिल्वककषायानुपानं सर्पिर्विरेचनं दद्यात् ॥ शुद्धे च वातप्रतिश्यायवदास्थापयेत् ॥ अनुवासयेच्च ॥ अथ तिलान्निस्तु-षान्बिल्वफलक्वाथेन भावयेन्निशि दिवा शोषयेत् ॥ एवं पंचाहं ते-भ्यस्तैलं कृत्वा वराहमेदोयुतं बिल्वमूलमधुयष्टिकाकल्केन पयसा पचेत् ॥ तेन नस्यं शिरोबस्तिं च कुर्यात् ॥ सर्वगंधनिर्यूहेण वा तद्गर्भं सक्षीरं तैलं ॥ स्नैहिकं च धूमं पिबेत् ॥ उपशांतरुजस्य तर्प-णं ॥ काश्मर्यमधुककुष्टबृहतीतालीसपत्रमांसीसारिवाप्रपौंडरीकदर्भ-मूलकसेरुकाभिः पयः साधयेत् ॥ तत्तर्पणं नस्याभ्यंगेषु विदध्यात् ॥ कृष्णसर्पशिरो वा क्षीरे क्वाथयेत् ॥ ततः स्नेहमुद्धृत्य चंदनोशीरश-र्करोत्पलकल्केन क्षीरवता पक्वं तर्पणं ॥ अथवा पंचमूलजीवनीयकु क्कुटमांसैः पयो विपचेत्ततो नवनीतं घनानंतासारिवोशीरचंदनैः सप्र-यस्कैः साधयेत् ॥ पुटपाकवच्छागोरभ्रवराहाणामन्यतमस्य यकृत्पि प्पलीसैंधवमधुघृतोपेतं कुर्यात्॥अंजनं चास्य दृक्प्रसादनार्थं कृष्णति-लान्निस्तुषान् कृत्वा स्तन्येन सप्ताहं भावयेच्छोषयेच्च तच्चूर्णं सि-

तोपलासमं कृत्वा मधुकार्द्धभागेन सैंधवांशेन कृष्णसर्पशिरसश्चांत-
र्धूमदग्धस्य भागेन संसृष्टं दिव्योदकपिष्टां गुलिकां कल्पयेत् ॥
गोधासर्पवसायामाजे मेदसि सैंधवपिप्पलीचूर्णं रसांजनं चावपेत् ॥
एतेषां मासं स्थिता रसक्रिया दृष्टिप्रसादनी रुजाहरा च ॥ उत्धृतस-
रेण गव्येन दध्नाऽम्लेन राजतं भाजनमालिंपेन्नीलीभूतं च तद्विशुष्कं
मस्तुना वर्त्तयः कृताश्छायाविशोषिताः वाताक्षिरोगं जयंति ॥ माग-
धिकाकंटकारीद्वयमूलत्वङ्मधुसितासैंधवताम्ररजांस्यजाक्षीरेण पिष्ट्वा
ताम्रपात्रमालेपयेत्सप्ताहादपनीय पुनस्तथैव पिष्ट्वाऽनुलेपयेत्सप्तभिः
सप्तरात्रैर्गुटिकाः कृताः परं वाताक्षिरोगवेदनारागशोफतिमिरकाचनक्तां
ध्यताधिमंथाभिघातहराः ॥ प्रत्यंजनं चात्र स्फटिकशंखनाभिमधुक-
गैरिकैरिक्षुरसपिष्टैर्वर्त्तिः॥अयमेव च सर्वो विधिरधिमंथादिष्वपि प्रयो-
ज्यः॥विशेषतस्त्वधिमंथे सहचरस्फूर्जातकबिल्वबृक्षादनीनिर्यूहे सप-
यस्कं सर्पिः सिद्धं पिबेत् ॥ सर्पिषाऽनुपशमे वसां मज्जानं वा पूर्वकर्मै-
व च व्यत्यासेन कुर्यात् ॥ सर्वानुपशांतावुपरिभ्रुवोर्यथोक्तो दाहः॥पि-
त्ताधिमंथाभिष्यंदयोः शर्करयाऽवचूर्णितं सर्पिःपानं तिक्तकानामन्यत-
मेन वा प्रपौंडरीकामलकद्विबृहतीदर्भमूलशतावरीतालीसमंजिष्ठानीलो
त्पलक्वाथस्थितस्तन्येनाश्चोतनं ॥ मधुककटंकटेरीनिर्यूहो वा ॥ सक्षौ-
द्रचंदनमधुकरोध्रमंजिष्ठास्वर्णगैरिकक्वाथस्तीव्रशूलदाहहरः ॥ रोध्रद्रा-
र्वीमधुकप्रपौंडरीकान्यापोथ्य तांतवे बध्नीयात् तेन क्षौद्रसलिलाप्लुते-
न सेको वेदनाघ्नः॥ तेनैव सशर्करे स्त्रीस्तन्ये छागदुग्धे वा दाहरागघ्नः॥
श्वेतरोध्रं च मधुकं समघृतं पूतं घृतेन भर्जयित्वा चूर्णयेत् ॥ तत्पोट-
लिकावबद्धं स्तन्येन तोयेन वा मृदितमाशु शूलदाहरागशोफानपहं-
ति ॥ चंदनकुमुदसारिवानलदादिभिर्वा क्षीरसंस्कृतैश्च शिरोवक्त्रप्रलेप-
परिषेकाः॥एवमसिद्धौ सिराव्यधः॥ पुनः स्निग्धस्य च त्रिफलाकाश्म-
र्यक्वाथशर्करात्रिवृच्चूर्णैर्विरेकः ॥ शंखमधुकसैंधवबृहतीमूलत्वचः पय-

साऽऽजेन पिष्ट्वा ताम्रपात्रं प्रलेपयेत्पुनः सप्ताहादेवं सप्तभिः सप्तरात्रै-र्गुलिकाः कार्याः ॥ ताः स्तन्यघृष्टाः पित्तामयेष्वंजनाद्रुजमपहरंति ॥ सुवर्णगैरिकं निशां दिव्यांभसि स्थितमहःशोषयेत् सप्ताहमेव च सुशी-तैर्मधुरवर्गकषायैर्भावयेदेतच्चूर्णांजनं दाहरागघ्नं ॥ पंचाशद्द्वावींपलानि-पालिकानि च सारिवामधुककाकोलीमृद्वीकाकाश्मर्यसुनिषण्णकमंजि ष्ठारोध्रोशीरचंदनानि जलद्रोणेऽष्टभागं पचेत् परिस्रुतं पुनरादर्वीप्र-लेपादवतार्य च सितोपलासमांशं मधुघृतद्विपलं प्रक्षिपेत् ॥ रसक्रियेयं मधुरा सर्वाक्षिरोगेषु हिता ॥ काश्मर्यस्वरसपिष्टाः सारिवाशर्कराकाको-ल्यो नस्ये ॥ इक्षुरसपिष्टं वा यष्ट्याव्हं ॥क्षतशुक्रोक्तं च तर्पणं पुटपाक-श्च ॥ श्लेष्माधिमंथेऽभिष्यंदे च त्र्यहमुपवासस्तीक्ष्णानि धूमकवलनाव नानि॥शार्ङ्गेष्टाकुष्टतगरमुरंगीव्योषैलादारुभिर्बिडालकं॥ त्रिल्वकबृहती निदिग्धिकारोध्रारग्वधमूलत्वग्भिर्गोमूत्रक्काथितैराश्चोतनं शोफोपदेह-कंडूघ्नं ॥ निंबपत्रकल्कदिग्धं वा रोध्रमंगारस्वेदितं चूर्णितं तांतवावन-द्धमुष्णांबुमृदितं ॥ तद्वदेवामलकोपकुल्यापाटलीचूर्णानि ॥ शिग्रुपल्ल वरसो वा ॥ मधुशिग्रुपाटलीविल्वमूलशुंठीक्काथो वा ॥ निंबपत्रपत्रो-लीजातीपत्ररोध्रबृहतीद्वयमहौषधैः खंडशः क्लृप्तैर्वस्त्रबद्धैः सक्षौद्रे गौ-डे सीधौ वा परिप्लुतैः सेकः परं श्लेष्मघ्नः ॥ रोहिषपूतीकरंजकपित्था-स्फोतपीलुबिल्वपत्रशिग्रुसुरसार्कनिंबपत्रैर्गोमूत्रक्वथितैः स्वेदः॥तथाऽ-पि शोफघर्षानुबंधे यवमदनभूर्जशमीपत्रैः सघृतैर्घृतेनैव वा नात्यक्षि धूमयेत् ॥ लघ्वसितं च द्वितीयेऽन्हि प्राशः व्योषविपक्वं यवक्षाराव-चूर्णितं सर्पिः पाययेत् ॥ ततः सिराव्यधो विरेकश्च ॥ बृहतीत्वक्-शुंठीताम्रकांस्यरजांसि दधिमस्तुना पिष्ट्वा ताम्रपात्रे लेपयेत् तथैव च सप्ताहेऽवगते वर्त्तयः कार्याः ॥ मरिचहरिद्राभयांजनैर्वा जलपिष्टा वर्त्तिः ॥ त्रिकटुकत्रिफलाविडंगसारहरिद्राभिर्वा ॥ हरीतकी तुत्थं च समभागं तुत्थाष्टांशेन मरिचं शंपावर्तिः कुमारी सर्वश्लेष्माक्षिरोग-

घ्नी ॥ विडंगचूर्णो वारुण्या भावितः शंखो बीजपूररसेन मधुरस्त्रि-फलारसेन पृथगेकध्यं चूर्णांजनं पिंडो वा पोथकीबहलकफोत्क्लेशा-भिष्यंदानपहरति ॥ स्वर्णगैरिकसैंधवमनःशिलालाक्षानतकरंजिका-सुरसशंखतालीसकुष्टकलिंगकदेवदारुनलदजातीमुकुलरसांजनैः सु-रामंडपिष्टैर्वर्तिः श्लेष्मविकारहरा ॥ पुष्पकासीसचूर्णं ताम्रसमुद्गे सुरसपत्रस्य रसेन सप्ताहं भावयेत् ॥ तच्चूर्णांजनं वर्त्मोपचयपक्ष्म-शातघ्नं ॥ सैंधवव्योषवराविडंगरोध्रप्रपौंडरीकमधुकतुत्थकतार्क्ष्यशैल-तालताम्रचूर्णैश्छागपयःपिष्टैर्मार्कवरसपरिपीतैर्वर्तिः कांडचित्राख्या स-र्वाक्षिरोगान् जयति ॥ कंड्वां मनःशिलासैंधवश्वेतमरिचैर्मातुलुंगर-सपिष्टैर्वर्तिः ॥ सशोफायां तगरदेवदारुसैंधवजातिकोरकैः सुरामंड-पिष्टैर्नक्तमाललशुनशुक्तिशिग्रुकबीजैर्वा रसक्रिया ॥ तर्पणं च यकृ-दाजं सगुडप्रियंगुनलददेवदारुयुतं क्वाथयेत्तस्मिन् शीते खजमथिते यन्नवनीतं तदेभिरेवौषधैर्विपक्कं ॥ पुटपाकश्च कुष्टतगरदार्वीसर्व-गंधैराजेन यकृता सह मधुघृतयुक्तैः ॥ रक्तजं पुनरभिष्यंदमधिमंथं च पित्तवदुपक्रमेत् ॥ स्तन्येक्षुरसशर्करोदकान्यतमेनाश्चोतयेत् ॥ पुनः पुनश्चास्य रुधिरमवसेचयेच्छिराव्यधेन जलौकोभिश्च ॥ तीव्रवेदना-यां महतीं घृतमात्रां पाययेत् ॥ आढकीकुब्जकपाटलिश्रीपर्णीवि-दुलानामर्जुनरसेन पिष्टानां गुटिकांजनं ॥ सेकैर्जलार्द्रैःकासमर्द्दविकां-स्यमलदिग्धामंतर्धूमं दग्धा तद्भस्म त्रिफलाक्वाथे सुरसास्वरसे क्षीरे च छागे पंचाहं भावयेत् ॥ एतच्चूर्णं स्रोतोजतुल्यं प्रत्यंजनं ॥ कृष्णं सर्पं पयसि क्वाथयेत्ततः पूतशीतमथितं स्नेहमुपोषितक्रकवाकवे दद्या-त्तस्य यत्पुरीषं तत् स्नेहांजनं ॥ कृष्णसर्पमुखमंजनसर्पिषोः पूर्णं दर्भवे-ष्टितं मृदुविलिप्तमधोमुखं गोमयेनाग्निना दग्धं ततोंजनमादाय पत्र-

१ मधुरोरक्तशिग्रुः

नलदनीलोत्पलतुल्यं चूर्णितं परं दृष्टिप्रसादजननं ॥ घृतमंडश्च शर्करामधुकनीलोत्पलैर्मानुषीदुग्धयुक्तैः सिद्धो नस्यइति ॥ भवंति चात्र ॥ सर्वेऽक्षिरोगाः प्रायेण जायंते स्यंदपूर्वकाः ॥ यतश्च रक्तं संदूष्य तानतस्त्वरया जयेत् ॥ सर्वोर्ध्वजत्रुगस्रोतःस्यंदनात्स्यंदउच्यते ॥ तत्स्थानां तद्वदंगानामधिमंथोऽतिमंथनात् ॥ वातेऽक्षिसेकः सैरंडबृहतीमधुशिग्रुणा ॥ सिद्धेन पंचमूलेन ससितैः पित्तरक्तयोः ॥ दार्वीलाक्षोत्पलद्राक्षामंजिष्ठामधुकर्द्धिकैः ॥ श्लेष्मणि त्रिफलाशुंठीनिंबरोध्राटरूषकैः ॥ समस्तैः सन्निपातोत्थे कुर्यात्स्यंदेऽक्षिसेचनं ॥ तुत्थव्योषाभयारोध्रयष्ट्याह्वैस्ताम्रसंस्थितैः ॥ धान्याम्लपिष्टैः सेकोऽयं सर्वाभिष्यंदरुक्प्रणुत् ॥ तद्वत्तुत्थाभयारोध्रयष्टीमधुरसांजनैः ॥ सिताह्लाद्धांशसंयुक्तैः सेकः सर्वाक्षिशूलजित् ॥ पुष्पांजनसिताक्षौद्रैस्ताम्रसंस्थं तिलांभसा ॥ सेचनं हंति रुग्रागदाहश्वयथुघर्षणं ॥ द्विनिशात्रिफलामुस्तैः प्रमदादुग्धकल्कितैः॥ सेकः सशर्कराक्षौद्रैरभिघातरुजापहः ॥ निषिक्तं तुत्थकं वारान् गोजले पंचविंशतिं ॥ स्तन्ये वा छागदुग्धे वा सद्यःकोपे तदंजनं ॥ बदरीदलयष्ट्याह्वतुत्थधात्रीफलैः समैः ॥ पुटित्वा बादराग्नौ द्वैर्दृगुत्कोपघ्नमंजनं ॥ बृहत्यरंडमूलत्वक्शिग्रुमूलैः ससैंधवैः ॥ वर्तिराजपयःपिष्टैः सर्ववाताक्षिरोगजित् ॥ सुमनःकोरकाः शंखस्त्रिफला मधुकं बला ॥ पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ सैंधवं त्रिफला व्योषं शंखनाभिः समुद्रजः ॥ फेन एलाद्वयं सर्जो वर्त्तिः श्लेष्माक्षिरोगनुत् ॥ पिप्पल्यः किंशुकरसो वसा सर्पिः ससैंधवं ॥ घृतं च जीर्णं सर्वाक्षिविकारघ्नी रसक्रिया ॥ कृष्णसर्पवसा क्षौद्रं रसो धात्र्या रसक्रिया॥ शस्ता सर्वाक्षिरोगेषु काचार्बुदमलेषु च ॥ रसांजनं शृंगबेरमभयातुत्थकिंशुकं ॥ यथोत्तरं द्विगुणितैस्तैर्वर्तिरपराजिता ॥ ऋते वातादभिष्यंदात्तिमिराणि कुकूणकं ॥ पोथकीपिटकापिल्लानर्माणि च नियच्छति ॥ ताम्रे म-

स्नुसमुद्धृष्टं यत्तुत्थं श्यावतां गतं ॥ सर्वाभिष्यंदशुक्रार्मसिराजाल-
जिदंजनं ॥ मरिचलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्यां ॥ सौवीर
भागनवकं चित्रायां चूर्णितं कफामयजित्॥मरिचामलकजलोद्भवतु-
त्थांजनताप्यधातुक्रमवृद्धैः ॥ षण्मासिक इति योगस्तिमिरार्मक्ले-
दकाचकंडूघ्नः ॥ पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत्समधुकां सहरिद्रां॥
एतया सततमंजयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥ इत्यभि
ष्यंदप्रतिषेधो नामैकोनविंशोऽध्यायः ॥ १९ ॥

अथातोऽक्षिपाकपिल्लप्रतिषेधं व्याख्यास्यामः॥ शुष्काक्षिपाके वा-
ताभिष्यंदविहितं सर्पिर्विपचेत्॥ कुलीररससिद्धं क्षीरसिद्धं वा ॥ दा-
र्वीप्रपौंडरीकयोः क्वाथ आश्चोतनमक्षिपाकघ्नं ॥ मंजिष्ठामधुककालानु-
सारिवारोध्रलाक्षाप्रपौंडरीकाणामक्षिपाकरक्तराजीघ्नो मृद्वीकाचंदनक-
रंजतंदुलांबुपरिस्रुतो मधुमानश्रुदाहहरः ॥ रोध्रकोरंटकपुष्पक्काथो वे-
दनाहरः ॥ अणुतैलं नस्यं सारिवाविदारीबलामधुकोत्पलद्राक्षाटरूष-
कजीवकचंदनैर्जांगलरसक्षीरोपेतं तैलं साधितं नावनात्सर्वोर्ध्वजत्रुजा-
न् गदान् वातपित्तोत्तरान् हंति ॥ स्निग्धाश्चात्र तर्पणपुटपाकाः ॥ वा-
तपित्तान्यतरोद्रेकतश्च यथास्वमभिष्यंदविधिः॥ आदर्शमंडले घृताक्त-
केशान् घृष्ट्वांऽतर्धूमं दहेत् सा मषी घृतभृष्टाऽऽयसभाजनस्थिताऽक्षि-
पाकमंजनादपहराति ॥ मंजिष्ठानतकटंकटेरीनिःक्काथेन लोहस्रोतोंजन-
चूर्णमापिंडीभावात्पचेत् ॥ एतच्चूर्णांजनं दाहोषारागाश्रुहरं ॥ ताम्र-
रजःसैर्यकमुस्तपुंड्राव्हामधुककालानुसारिवाश्छागेन पयसा पिष्ट्वा पिं-
डांजनं ॥ आनूपवसा शुंठीसैंधवचूर्णान्विता स्नेहांजनं ॥ एवमप्यशां-
तौ मधुकसिद्धः शताव्हाचूर्णयुक्तो घृतमंडस्तथा पयो वा बस्तिः ॥स-
शोफाल्पशोफयोस्तु स्निग्धस्य सिरां विध्येत्॥ द्राक्षाभयानिर्यूहस्त्रिवृ-
त्कल्कवान् सघृतो विरेकः ॥ विरिक्तस्य यथादोषोदयमास्थापनं ॥
ततः पिंडस्विन्नशिरसः सर्षपतैलेन सैंधवयुतेन सर्पिःफणिज्जकचूर्णसं-

सृष्टेन वा तैलेन शिरोविरेकः ॥ विरिक्तशिरसोऽनुवासनं क्षीरसर्पिषा ॥ धूमपानं च॥ शिरोनेत्रं चास्य सुनिषण्णकपत्राद्यैः सैरंडपत्रैः क्षीरांबुस्विन्नैः संस्वेदयेत् ॥ घृतभृष्टं रोध्रचूर्णं सूक्ष्मवासःस्थमुष्णोदकविमृदितमाश्चोतनं शुष्काक्षिपाकोक्तं च वेदनाघ्नं ॥ एवमशांतवेदनं संधावैरुपक्रमेत ॥ शशशिरःकपालं ससैंधवं कांस्ये स्तन्यघृष्टं संधावो वेदनाघ्नः ॥तद्वल्लोहे गोमूत्रघृष्टं घृतधूपितं॥शिग्रुपल्लवरसश्च ताम्रघृष्टो घृतधूपितः॥शंखं ताम्रे स्तन्येन घृष्टं घृताभ्यक्तयवशमीपत्रधूपितं घर्षवेदनाघ्नं ॥ उदुंबरफलं लोहे स्तन्यघृष्टं घृताक्तशमीपत्रधूपितं शूलरागाश्रुघर्षघ्नं ॥ दधिसरः सैंधवयुक्तस्ताम्रे घृष्टः शोफघर्षाश्रुवेदनाघ्नः ॥ नृकपालं कांस्ये तिलोदकघृष्टं घृताक्तनिंबपत्रधूपितं शोफपांडुघर्षाश्रुशूलरागघ्नं ॥ संधावांजितं चाक्षि स्तन्येन चानु सिंचेत् ॥ त्रिःपरं च तैर्नांजयेत् ॥ अथांजनानि ॥ मधुकबृहतीत्वक्ताम्ररजांस्यजाक्षीरपिष्टानि शम्यामलकपत्रैर्घृताप्लुतैरनेकशो धूपितानि पिंडांजनं शोफवेदनाघ्नं ॥ तालीसपत्रपिप्पली लोहरजोंजनकासीसतगरजातिमुकुलसैंधवैर्गोमूत्रपिष्टैस्ताम्रमालिप्तं सप्तरात्रं स्थापयित्वा पुनस्तद्वदेव पिष्टैर्गुलिकाः कार्यास्ताः स्तन्यघृष्टाः स्तंभघर्षश्वयथुहर्षाश्रुकंडूघ्नाः॥अबद्धास्थिसहकारमांसं विगतत्वक् समताम्रचूर्णमीषत्सैंधवोपेतं गव्येन दध्ना पिष्ट्वा ताम्रमालेपयेत् ॥ शुष्कं शुष्कं तथैव च पिष्ट्वा पुनर्लेपयेत् सप्तभिः सप्ताहैः पिंडांजनं कृत्वा सर्वाक्षिपाकेष्वश्रुघर्षशोफरागवर्त्मोपचयघ्नं ॥ अश्मंतकाम्लवेतसपरूषककोलदाडिमैः कृता रसक्रिया सशोफान् पूयालसान् नाशयति ॥ इत्थमपि शोफानुवृत्तौ पुनरास्रावशिरोविरेकाश्च ॥ अम्लोषितं पित्ताभिष्यंदवदुपाचरेत् ॥ पित्तसाधनं चेक्षेत ॥ पित्तकफरक्तनिचयोत्क्लिष्टवर्त्मपोथकीबिसाक्षिकुकूणकपक्ष्मोपरोधपूयालसशुष्काक्षिपाकसशोफाम्लोषिता वातवर्जाश्च स्यंदाधिमंथा इत्यष्टादश दीर्घकालानुबंधिनो रोगाः पिल्लसंज्ञाः॥

एषां क्रिया समुपदिष्टैव ॥ पुनश्च पिल्लीभूतानां सामान्येनोपदिश्यते ॥ अथ पिल्लाक्षिरोगिणं स्नेहयित्वा वामयेत् ॥ कुकूणकस्य सिराव्यधः विरिक्तस्य वर्त्मनी लिखेत् ॥ सकृल्लेखनादशुद्धौ पुनर्लेखयेत् ॥ जलौकोभिश्च ग्राहयेत् ॥ प्रियंगुरोध्रपद्मकेसरचंदनमधुककल्केन समाक्षिकेण बिडालस्तुवरिकाफलत्रिकरोचनाक्काथेन मधुना सायं प्रातः सदा प्रक्षालनमंजनांते च कषायवृक्षपल्लवकषायेण तैरेव पत्रैरुष्णप्रियतायामंतरांतरा स्वेदः॥तुत्थकपलं विंशतिश्च श्वेतमरिचानि धान्याम्लपिष्टानि तत्पलैस्त्रिंशता ताम्रपात्रे समालोडितानि बहुवर्षाणामपि पिल्लानां परममाश्चोतनं ॥अंजनं चास्याम्रधातकीपुष्पतिलपर्णीकल्केन वर्तिः ॥ हरीतक्याढकीनाकुलीश्चाष्टगुणांभसाऽष्टभागशेषं क्काथयेत् ॥ पुनश्च परिस्राव्यादर्वीप्रलेपात् रसक्रियेयं पिल्लाक्षिरोपणी ॥पलाशशाखास्वरसे क्काथ्यमाने बृहत्युशीररजोदद्यात्तद्घनीभूतं शीतमंजनं॥ सुरसारसपिष्टैर्वा वचाऽलदेवदारुभिर्गोपित्तपिष्टाभ्यां वा व्योषरसांजनाभ्यांवा हरितालसौवीरकांजनसमांशं वा ताम्रचूर्णमंजनं ॥ परिपेलवकासीसहरिद्राद्वयसर्षपप्रियंगुतगरपिप्पलीकल्केन ताम्रभाजनमंतर्लेपयित्वा सौवीरककुंभाधोमुखं सप्ताहं वासयेत्ततो गुलिकाश्चूर्णं वा कुर्यात् ॥ तुत्थगैरिकचूर्णं छगलीपयःपिष्टं गुटिका प्रत्यंजनं ॥स एव चूर्णः दिव्योदकभावितः तदाप्लुतो नेत्राश्चोतनमिति॥भवति चात्र ॥ वर्त्माभिलेखं बहुशस्तद्वच्छोणितमोक्षणं ॥ पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ॥ पूयालसे त्वशांतेऽतर्दाहः सूक्ष्मशलाकया ॥ चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ॥ परस्परमसंकीर्णाः कार्त्स्न्येन गदिता गदाः ॥ सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः ॥ पुराणयवगोधूमशालिषष्टिककोद्रवान् ॥ मुद्गादीन्कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ॥ शाकं चैवंविधं मांसं जांगलं दाडिमं सितां ॥ सैंधवं त्रिफलां द्राक्षां बारि पाने च नाभसं ॥ आतपत्रं पदत्राणं विधि-

वद्दोषशोधनं ॥ वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ॥ विदाहविष्टंभकरं यच्चेहाहारभेषजं॥ द्वे पादमध्ये पृथुसन्निवेशे सिरे गते ते बहुधा च नेत्रे॥ता म्रक्षणोद्वर्तनलेपनादीन्पादप्रयुक्तान्नयने नयंति ॥ मलोष्णयसंघट्टनपीडनाद्यैस्ता दूषयंते नयनानि दुष्टाः ॥ भजेत्सदा दृष्टिहितानि तस्मादुपानदभ्यंजननावनानि ॥ इत्यक्षिपाकपिल्लप्रतिषेधो नाम विंशोऽध्यायः ॥ २० ॥

अथातः कर्णरोगविज्ञानं व्याख्यास्यामः ॥ प्रतिश्यायजलक्रीडाकर्णकंडूयनैर्मरुत् ॥ मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ॥ प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत् ॥ अर्द्धावभेदकं स्तंभं शिशिरानभिनंदनं ॥ चिराच्च पाकं पक्वं तु लसीकामल्पशः स्रवेत् ॥ श्रोत्रं शून्यमकस्माच्च स्यात्संचारविचारवत् ॥ शूलं पित्तात्सदाहोपाशीतेच्छाश्वयथुज्वरं ॥ आशु पाकं प्रपक्वं च सपीतलसिका स्रुतिः ॥ सा लसीका स्पृशेद्यद्यत्तत्तत्पाकमुपैति च ॥ कफाच्छिरोहनुग्रीवागौरवं मंदता रुजः ॥ कंडूः श्वयथुरुष्णेच्छा पाकाच्छ्वेतघनस्रुतिः ॥ करोति श्रवणे शूलमभिघातादिदूषितं ॥ रक्तं पित्तसमानार्ति किंचिद्वाऽधिकलक्षणं ॥ शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥ पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ॥ पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः ॥ नादानकस्माद्विविधान्कर्णनादं वदंति तं ॥ श्लेष्मणाऽनुगतो वायुर्नादो वा समुपेक्षितः ॥ उच्चैः कृच्छ्राच्छ्रुतिं कुर्याद्बधिरत्वं क्रमेण च ॥ वातेन शोषितः श्लेष्मा स्रोतो लिंपेत्ततो भवेत् ॥ रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥ कंडूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ॥ कफो विदग्धः पित्तेन सरुजं नीरुजं त्वपि ॥ घनपूतिबहुक्लेदं कुरुते पूतिकर्णकं ॥ वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजां रुजं ॥ खादंतो जंतवः कुर्युस्तीव्रां स कृमिकर्णकः ॥ श्रोत्रकंडूय-

नाज्जाते क्षते स्यात्पूर्वलक्षणः ॥ विद्रधिः पूर्ववच्चान्यः शोफोऽर्शोर्बुदमीरितं ॥ तेषु रुक्पूतिकर्णत्वं बधिरत्वं च बाधते ॥ गर्भेऽनिलात्संकुचिता शष्कुली कूचिकर्णकः ॥ एको नीरुगनेको वा गर्भे मांसांकुरः स्थिरः ॥ पिप्पली पिप्पलीमानः सन्निपाताद्विदारिका ॥ सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः ॥ कटुतैलनिभं पक्वः स्रवेत्कृच्छ्रेण रोहति ॥ संकोचयति रूढा च सा ध्रुवं कर्णशष्कुलीं ॥ सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयं ॥ कृशा दृढा च तंत्रीवत्पाली वातेन तंत्रिका ॥ सुकुमारे चिरोत्सर्गात् सहसैव प्रवर्द्धिते ॥ कर्णे शोफः सरुक् पाल्यामरुणः परिपोटवान् ॥ परिपोटः स पवनादुत्पातः पित्तशोणितात् ॥ गुर्वाभरणभाराद्यैः श्यावो रुक्दाहपाकवान् ॥ श्वयथुस्फोटपिटिकारागोषाक्लेदसंयुतः ॥ पाल्यां शोफो ऽनिलकफात्सर्वतो निर्व्यथः स्थिरः ॥ स्तब्धः सवर्णः कंडूमानुन्मंथो गल्लिरश्च सः ॥ दुर्विद्धे वर्द्धिते कर्णे सकंडूदाहपाकरुक् ॥ श्वयथुः सन्निपातोत्थः स नाम्ना दुःखवर्द्धनः ॥ कफासृक्कृमिजाः सूक्ष्माः सकंडूक्लेदवेदनाः ॥ लेह्याख्याः पिटिकास्ता हि लिह्युः पालीमुपेक्षिताः ॥ पिप्पलीसर्वजं शूलं विदारीकूचिकर्णकाः ॥ एषामसाध्या याप्यैका तंत्रिकाऽन्यांस्तु साधयेत् ॥ पंचविंशतिरित्युक्ताः कर्णरोगा विभागतः॥इति कर्णरोगविज्ञानीयो नामैकविंशोऽध्यायः ॥२१॥

अथातः कर्णरोगप्रतिषेधं व्याख्यास्यामः ॥ वातजे कर्णशूले रात्रौ रसभोजनोत्तरं वातहरद्रव्यसिद्धं सर्पिः पिबेत्॥निरन्नो वा पयोनुपानं॥ ततो दशमूलसिद्धे छागपयसि गोशृंगनिहितेऽग्निवर्णान् पाषाणान् सदंशेन गृहीत्वा ऽऽवपेत्॥तेनोष्मणा नाडीस्वेदेन वसाभ्यक्तं स्वेदयेत्॥ बिल्वयवकोलकुलत्थमाषार्कशिग्रुपत्रैर्वा सानूपमांसैः क्वथितैः॥ स्विन्नं च पूरयेत् कुष्टरास्नामधुकवंशावलेखशुंठीशिखिचंद्रकमाषसरलपयो-

1 परिपोटस्फुठनमितिसर्वांगसुंदरायाम्

विपक्केन तैलेन ॥ जीवकमधुककुष्टमंडूकीदेवदारुमहौषधकल्काष्टगुण-क्षीरसिद्धेन वा ॥मयूरनालकुलत्थागुरुमाषदेवदारुकल्कक्षारसुक्ताम्ल-साधिताभ्यां वा तैलवसाभ्यां ॥ मधुकक्षीरकाकोलीमाषशतावरीक-ल्कसर्वगंधोदकक्षीरपक्वया वा वराहवसया ॥ रास्नामधुककाकोली-देवदारुकल्कपयोविपाचितया वा शिशुमारवसया ॥ मांसीकुष्टमे-दासरलसुरभिमधुक्षीरविपक्वया वा गोवसया ॥ जीवकशताव्हामधु-कमांसक्षीरसिद्धां कुक्कुटमयूरवसां कर्णपूरणनस्याभ्यंगेषु विदध्यात् ॥ मधुकक्षीरकाकोलीकल्केन चतुर्गुणशिग्रुव्हस्वपंचमूलेन चैरंडपत्रर-समष्टगुणक्षीरसाधितं तैलं वा ॥ घृततैलवसाभ्यक्तानि तरुणान्य-श्वत्थपत्राणि पुटपाकस्विन्नानि प्रपीड्य तद्रसेन कर्णं पूरयेत् ॥तद्वच्च तैललवणाभ्यक्तान्यर्कौरुबूकमूलककोरंटबिल्वमहावृक्षान्यतमपत्राणि ॥ महापंचमूलसरलागुरुदेवदार्वन्यतमकाष्ठमष्टादशांगुलं त्रिभागे क्षौमेणावेष्ट्य तैलेनासिक्त्वाऽग्रेण प्रदीपयेत् ॥ दह्यमानाद्यः स्ने-हः पतति स सद्यः कर्णरुजमपहरति ॥ मधूच्छिष्टकैंडर्यमधुशिग्रु-फलवचायवनलदैलागुग्गुलुभिः श्लक्ष्णपिष्टैः क्षौमवस्त्रवर्तिप्रमाणप-रिणाहं लेपयेत्ततः सूत्रेणावेष्ट्य टुंटुकजलेन नुं दद्यात् ॥ टुंटुकना-लमेवानेन कल्केनाभ्यज्य शोषयित्वा धूमं विदध्यात् ॥ श्रेयसीदेव-दारुकाकोलीकुष्टनिचुलबीजैः क्षीरपिष्टैस्तैलयुतैः कर्णं बहिर्लेपयेत् ॥ सर्वधान्यस्नेहगोक्षीरसिद्धामुत्कारिकामेरंडपत्रावच्छादितकर्णस्वेदा-य प्रणयेत् ॥ पुनः पुनश्च नाडीस्वेदं कुर्यात् ॥ पिंडस्वेदेन वा ॥ वातव्याधिप्रतिश्यायार्दितविधानं च सनिरूहानुवासनं कुर्यात् ॥ परि-हार्यांश्च परिहरेत् ॥ विशेषतः प्रवातशीतांबुपानं शिरःस्नानं च ॥ पित्तजे तु शूले प्रातः शर्करायुतं सर्पिः पाययेत् ॥ ततः स्निग्धं विरे-चयेत् ॥ द्राक्षामधुकस्तन्यं कर्णपूरणं प्रयुंजीत माक्षिकं वा ॥ म-धुकपद्मककल्कस्तन्यसिद्धं वा सर्पिः ॥ सितामधुकखर्जूरमृद्वीका-

भिर्वा सक्षीरेक्षुरसं पियालतैलं पाचितमभ्यंगनस्यकर्णपूरणैः शूलदा-
हघ्नं ॥ मधुककुडवं षोडशगुणेनांभसा पादशेषं साधयित्वा तेन तै-
लार्द्धकुडवमष्टगुणक्षीरं यष्टीमधुकोशीरसारिवाकाकोलीजीवकानंतामृ-
णालमंजिष्ठारोध्रचंदनबिसगर्भं पचेत् ॥ तच्च पूर्ववत्प्रणयेत् ॥ एषामे-
व च कल्केन सघृतेन कर्णं परिलेपयेत् ॥ सेचयेच्च ॥ तथा क्षीरसर्पि-
र्नस्यशिरोभ्यंगेन ॥ एवमनुपशमे तु पुनर्विरेकः ॥ कफजे पिप्पलीवि-
पक्कं घृतमथवा क्षौद्रं पाययित्वा वामयेत् ॥ ततस्तीक्ष्णं धूमं पाययेत् ॥
सरलदेवदारुहिंस्रापटोलपत्रसुरससिद्धेन तैलेन देवदारुपिप्पलीकटुक-
मालतीपत्रकल्कक्काथसिद्धेन वा रोध्रखदिरसारमनःशिलालद्विहरिद्रा-
कुष्टत्रिफलैलाक्काथकल्कसिद्धेन वा रसांजनमार्कववैजयंतीशिग्रुलशु-
नार्द्रकमुरंगीमूलककदलीनां वा पृथक् समस्तानां वा रसेन मधुना वा
रक्षोघ्नतैलेन वा तथा शूलशोफगौरवाणि शाम्यंति ॥ धान्याम्ल-
क्कथितदशमूलक्काथबाष्पेण नाडीस्वेदमाचरेत् ॥ स्विन्नः कुशाम्र-
त्रिवृन्नलदशुंठीमुस्तसाधितेन तैलेन पूरयेत् ॥ कफघ्नांश्च गंडूषा-
न्धारयेत् ॥ रक्तजे पैत्तिकवत्सिद्धिः सिराव्यधश्च ॥ पक्केषु क-
र्णमूलेषु पूयप्रवाहिषु यथास्वं धूमनस्यगंडूषवमनान्याचरेत् ॥ उपदि-
ग्धं च स्रोतः सायं प्रातः पिचुवर्त्तिभिः प्रमृज्य यवागुरुमदनैः सघृतैर्गु-
ग्गुलुना वा धूपयित्वा मधुना पूरयेत् ॥ पलाशधवतिनिशककुभसर्ज-
त्वक्कल्कक्काथेन रसक्रियया स्वभ्यक्तां पिचुवर्तिं स्रोतसि दद्यात् ॥
बदरीसल्लकीजंबूधातकीवटप्लक्षोदुंबरक्काथेनैवमेवं रसक्रियया ॥ हरि-
द्राधातकीत्रिफलाजंबूशल्लकीकिंशुकक्काथेन च ॥ तथा सौराष्ट्रिकापद्म-
कधातकीसमंगाऽम्बष्ठाधवरोध्ररसांजनक्काथेन॥ एभिरेव चौषधैः सूक्ष्म-
चूर्णीकृतैः स्रोतसो विकिरणमेवं क्लेदशूलगौरवाणि शाम्यंति ॥ एषामे-
व कषायेण सक्षौद्रेण कपित्थस्वरसेन वा प्रक्षालनं ॥ तथा सुरसादिवर्गः

प्रक्षालनावचूर्णनयोः प्रयोज्यः ॥ नादबाधिर्ययोर्वातशूलोक्तः सर्वो विधिः ॥ श्लेष्मानुबंधे तु प्राक् श्लेष्माणमाहरेद्वमननावनाभ्यां तीक्ष्णधूपैश्च ॥ बाधिर्यं च बालवृद्धक्षीणकासशोषिणां चिरोत्थितं वर्जयेत् ॥ इतरस्तु स्नेहस्वेदनस्यशिरोबस्तिबस्तिकर्मप्रभृतिभिर्दोषानुबंधमपेक्ष्य साधयेत् ॥ तत्र प्रागेव पुराणसर्पिषा वातहरतैलेन वा स्निग्धं स्नेहेनैव विरेचयेत् ॥ कृतसंसर्जनस्य पुनः स्निग्धस्य शोणितमपहरेत् कर्णासन्नं जलौकोभिस्ततो बस्तिकर्म पूर्वतैलेन नस्यधूपान् कर्णपूरणं च शीलयेत् ॥ तरुणबिल्वफलानि गोमूत्रेण क्काथयेत्तेन सितामधुकबीजकबीजकल्केन पयोयुक्तं तैलं पाचयेत् तत्तैलमुष्णं शीते बिल्वक्काथे प्रक्षिप्य मंथयेत् ॥ यावत्पिंडीभूतमुद्धृत्य चैतत्पुनरन्यत्र बिल्वोदकेन मंथयेत् ॥ ततश्चोद्धृत्याष्टगुणे पयसि समधुकचंदनगर्भसाधितमाशु कर्णपूरणाद्बाधिर्यं नाशयति ॥ तिलान्नवप्रलूनान्व स्त्रबद्धान् वहंतीष्वप्सु रात्रिमुषितान्दिवा शोषयेत्पंचरात्रं ॥ एवं गते पंचरात्रे मधुयष्टिकाक्षीरकाकोलीमहापंचमूलदेवदारुशतान्हाजीवककथिते पयसि पंचाहमेव वासयेच्छोषयेच्च ॥ ततोऽनेनैव क्षीरेणैषामेव च द्रव्याणां चूर्णमात्रया युक्तान्प्रपीडयेत् ॥ तत्तैलं नीलोत्पलानंताचंदनागुरुमधुकजीवककाकोलीसुनिषण्णकमूलकल्कैरष्टगुणेन पयसा पचेत् ॥ एतन्नस्यं कर्णपूरणं शिरसि चाभ्यंजने प्रणीतमाशु शूलनादबाधिर्याणि सर्ववातविकारांश्च पित्तानुबंधानपोहति ॥ भग्नास्थिसंबंधजननं च ॥शुष्कमूलकक्षारक्षारद्वयहिंगुशुंठीमिशिवचाकुष्टामरदारुशोभांजनभूर्जग्रंथिमुस्तासौवर्चलबिडोद्भिदलवणैस्तैलं शुक्तकदलीबीजपूरकरसयुक्तं सिद्धं शूलनादबाधिर्यकंडूशोफक्लेदोपदेहकृमिपूतिकर्णेषु ॥ अथ कर्णौ सुप्ताविव भवतस्तत्समीपे यथोक्तां सिरां मोक्षयेत् ॥ सश्वयथुपरिस्रावे मंदश्रुतेर्वमनमाचरेत् ॥ प्रतिनाहे स्नेहस्वेदक्लिन्नं कर्णं कर्णशोधनेन विशोध्य तैलस्य पूरयेत् ॥ मातुलुंगरसस्य वा सशुक्तक्षौद्रसैंधव-

स्य॥ शोध्यमाने वेदना रक्तागमो वा यदि भवेत्॥ ततो घृतमंडेन पूरयेत् नस्यं च शीलयेत्॥ मलपूर्णेऽप्येष एव विधिः॥ कंड्वां तीक्ष्णधूमनस्यादीन्कफघ्नान्वितरेत्॥रूक्षकटुतिक्तश्चाहारः॥शोकेऽप्ययमेवविधिः कटुतिक्तोष्णाश्च प्रदेहाः परिषेकाः॥ पूतिकर्णे कर्णस्रावोक्तो विधिः कृमिकर्णे च॥ विशेषतश्चात्र कृमिघ्नः॥ तथा सर्षपतैलेन पूरणं॥ हरितालचूर्णवता गोमूत्रेण वा॥ वार्ताकबीजेन धूपनं॥ कर्णविद्रधिं वमनपूर्वं विद्रधिवदामं पक्वं च चिकित्सेत्॥ क्षतविद्रधिं पित्तकर्णशूलवत्॥ कर्णार्शोर्बुदानि नासार्शोर्बुदवत्॥ विदारिकामामां कर्णविद्रधिवद्यथादोषोदयं च साधयेत्॥ पालीशोषे वातशूलवन्नस्यमालेपं स्वेदं च कुर्यात्॥ स्विन्नमुद्वर्त्तयेत् तिलपियालबीजमधुकयवाश्वगंधाकल्केनोद्वर्तितं च मधूकपयस्यासितपुष्पाश्वगंधाकल्काष्टगुणवाजिगंधाबृहत्यभीरुक्वाथक्षीरसाधितेन तैलेनाभ्यंज्यात्॥ शतावर्यश्वगंधैरंडपयस्याजीवकक्षीरे सिद्धेन वा गोधाप्रतुदविष्किरानूपोदकमांसवसामज्जानं सर्पिः सर्षपतैलं च यथालाभं संसृज्याकोलकैर्बलाऽतिबलानंताविदारिगंधाजलशूकमधुरवर्गप्रतीवापं विपचेत्॥ अयमभ्यंगः पाल्याः परं मांसजननः॥ एवमपि तु या क्षीयते पाली तस्या यद्दुष्टं तच्छित्त्वा विधिवत्संधाय युक्तेनैव क्रमेणोपचरेत्॥ तंत्रिकामपि चैवमेव नस्याभ्यंगादिभिर्यापयेत्॥ परिपोटकेऽप्ययमेवविधिः॥ तथा मधुकखरमंजरमंजरीसैंधवाश्वगंधादेवदारुमूलकावल्गुजफलमूलमधूच्छिष्टैः सक्षीरैर्महास्नेहसिद्धोऽभ्यंगः॥ तिलमधुकप्रपौंडरीकसिद्धार्थकक्षीरकृतयोत्कारिकयोपनाहः॥ उत्पाते जलौकोभिरपनीतरक्ते शीतैः प्रदेहः॥ तिलमधुकसारिवोत्पलकरोध्रकदंबबलाऽऽम्रजंबूपल्लवैः सधान्याम्लं तैलं साधितमभ्यंगः॥ तथा क्षीरसर्पिर्विसर्पोक्तानि च घृतानि॥ उन्मंथे तीक्ष्णैः शिरोविरेकस्निक्तसर्षपरोध्रहरिद्राद्वयैः॥ उद्वर्तितायाः कर्णपाल्यास्तालीसत-

मालैलाकट्फलरसांजनैर्लेपः ॥ तालपत्राश्वगंधार्कसैंधवावल्गुजबी-
जमुरसलांगलीभिः गोधाकुलीरवसायुक्तं तैलं विपक्कमभ्यंजनं ॥ तै
लमेव वा पटोलकटुरोहिणीरसांजनशिरीषैः ॥ दुःखवर्द्धने जंब्वाम्रा-
श्मंतकपत्रक्काथपरिषिक्तां कर्णपालीं तैलेनाभ्यज्य यष्टीमधुहरिद्राप्र-
पौंडरीकमंजिष्ठाचूर्णेनावचूर्णयेत् ॥ लाक्षाविडंगविपक्कतैलेनाभ्यंजये
त् ॥ लेहिकापिडिकां कर्णपालीं बहुशो गोमयपिंडस्विन्नामुरभ्रीमूत्र-
पिष्टैः कृमिघ्नैरालेपयेत् ॥ कुटजकरंजेंगुदबीजारग्वधत्वग्भिर्वा ॥ ए-
भिरेव च सर्वैः समरिचानिंबपत्रमधूच्छिष्टैः सर्षपतैलं सिद्धं लेहिका-
व्रणघ्नोऽभ्यंगः ॥ परिदहने जलजाभिरसृक्स्रावयेत् ॥ शीतैश्च प्र-
दिह्यात् ॥ सर्वेषु च पालीरोगेषु स्नेहस्वेदशोधनाभ्यंगप्रदेहनस्यास्र-
विस्रावणानि यथार्हं प्रयुंजीत ॥ प्रकोपकारणानि च परिहरेत् ॥ उ-
त्पद्यमानायां तु पाल्यां सर्जरसापामार्गपटोललिकुचत्वग्भिरालेपः ॥
उत्पतंत्यां शिग्रुशम्याकपूतीकगोवराहपित्तगोधावसासर्पिर्भिः ॥ श्या-
वायां गौरीसुगंधाश्यावानंतातंदुलीयकमूलैः ॥ कंडूमत्यां पाठानंताता-
र्क्ष्यशैलेयमाक्षिकैः॥ दह्यमानायां क्षीरिवृक्षजीवनीयकल्कमधुघृतैः॥व्र
णितायां क्षौद्रजीवनीयैः॥ कृशायां गोधावराहादिभिः॥ग्रथितायां ग्रंथिं
पाटयित्वा ऽवलिख्य च कृष्णासैंधवमधुभिः प्रतिसारयेत् ॥ स्रावव-
त्यां मधुमधूकमधुपर्णीभिर्लेपः ॥ एभिरेव च यथास्वं स्नेहानभ्यंगार्थे
प्रकल्पयेत् ॥ अथ रोगतो बलाद्वा छिन्नकर्णमनुसंदध्यात् ॥ समा-
सतस्तु पंचदश कर्णसंधयः प्रायो नामानुगतसंस्थानस्थानविशेषतया
संभवंति ॥ तद्यथा ॥ पृथुलायतसमपालिश्चक्रनेमि[1]र्वृत्तायतसमपा

---

१ अस्मिन् कर्णपालिप्रकरणे लेखकप्रमादाद्ग्रंथसंगतिः समीचीना न दृश्यते सा-
चिंत्या ॥ सुश्रुते तु ॥ तत्र समासेन पंचदश कर्णबंधनाकृतयः ॥ तद्यथा ॥ नेमिसं-
धानक उत्पलभेद्यको वल्लूरक आसंगिमो गंडकर्ण आहार्यो निर्वेधिमो व्यायोजिमः क
पाटसंधिकोऽर्द्धकपाटसंधिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टीकर्णः काकौष्ठकइति ॥
तेषु पृथुलायतसमोभयपालिर्नेमिसंधानकः ॥ वृत्तायतसमोभयपालिरुत्पलभेद्यकः ॥ ह्र-

लिरुत्पलभेद्यकश्चाभ्यंतरदीर्घपालिसंक्षिप्तोधिष्ठानपालिपर्यंतयोश्च क्षीणमांसहीनतनुविषमपालीवल्लीग्रथितनिर्मांसस्तब्धसिराततसूक्ष्मपालियष्टीनिर्मांससंक्षिप्ताग्राशोणितपालिकाकौष्ठइति ॥ एषामाद्या दश सिध्यंति नत्वितरे ॥ तत्र बाह्यायां पाल्यां दीर्घायामाभ्यंतरसंधिः ॥ तथेतरायां बाह्यः समः समयोश्च ॥ अण्वादिविषमयोस्तु परस्परविपर्ययेण ॥ यात्वेकैव पाली स्थूला पृथ्वी स्थिरा च स्यात् ॥ तां द्विधा पाटयित्वोपरि छित्त्वा संदध्यात् ॥ गंडोत्कृत्तेन वा सशोणितेन सानुबंधेन मांसेन पालीं कल्पयेत् ॥ यस्य पालीद्वयमपि नास्ति तस्याप्येष विधिः ॥ अथवा समानवयोदोषादौ संचार्य कर्णं पीठं वा समे मध्ये निर्विध्य वर्द्धयेत् ॥ संधानविधिः पुनरातुरे ग्रथितकेशांते बंधमुपधार्य छेद्यभेद्यलेख्यैरुपपन्नैरुपपाद्य कर्णशोणितमवेक्षेत दुष्टमदुष्टं चेति ॥ ततो वातदुष्टे धान्याम्लोष्णोदकाभ्यां पित्तदुष्टे क्षीरशीतोदकाभ्यां श्लेष्मदुष्टे वारुणीसलिलाभ्यां प्रक्षाल्य पुनश्चावलिख्यानुन्नतमहीनमविषमं कर्णसंधिं निवेश्य ततो मधुघृताभ्यामभ्यज्य पिचुप्लोतयोरन्यतरेणावगुंठ्य सूत्रेणानवगाढमशिथिलं च बध्वा सिराव्यधोक्तेन कपालस्य वा चूर्णेनाकीर्याचारिकमादिशेत् ॥ संधिमाश्लिष्य तं क्षौमसूत्रेण सीव्येदभिक्षीणपालिकं वा ॥ शोणिताक्तेन पिचुना वेष्टयेत् व्रणवच्चैनमुपाचरेत् त्र्यहाच्चतुरहाद्वा सतैलेन परिषिच्य पिचुसूत्रं चापनयेत् ॥ न चाशुद्धर-

---

स्ववृत्तसमोभयपालिर्वल्लूरकः ॥ अभ्यंतरदीर्घैकपालिरासंगिमः ॥ बाह्यदीर्घैकपालिर्गंडकर्णः ॥ अपालिरुभयतोऽप्याहार्यः ॥ पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः ॥ स्थूलाणुसमविषमपालिर्व्यायोजिमः ॥ अभ्यंतरदीर्घैकपालिरितराल्पपालिः कपाटसंधिकः ॥ बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसंधिकः ॥ तत्र दशैते कर्णबंधविकल्पाः साध्यास्तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः ॥ संक्षिप्तादयः पंचासाध्याः ॥ तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः ॥ अनधिष्ठानपालिः पर्यंतयोः क्षीणमांसो हीनकर्णः ॥ तनुविषमाल्पपालिर्वल्लीकर्णः ॥ ग्रथितमांसस्तब्धसिराततः सूक्ष्मपालिर्यष्टीकर्णः ॥ निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति ॥

कमतिप्रवृत्तरक्तं क्षीणरक्तं वा कर्णं संदध्यात् ॥ तस्य हि स्वयमपि संधिर्विश्लिष्यते ध्मायते श्यावतामुपैति पच्यते शुष्यति चिराद्रोहति रूढोऽप्याभरणं न क्षमते सशोफकंडूसंतापो ग्रंथिमांश्च भवति ॥ तत्र यथास्वं प्रतिकुर्वीत ॥ दुष्टरक्ते च रक्तमवसेचयेत् ॥ क्षीणरक्तं स्नेहपाननस्यमांसरसाशनाभ्यंगैर्बृंहयेत् ॥ सर्वत्र चैवमपि सोपद्रवसंधौ संधिं विमुच्य पूर्वापचारोपस्थापितस्मृतिं सम्यक् संदधीतेति ॥ भवंति चात्र ॥ न कर्णं शोफरागादियुक्ते संधानमाचरेत् ॥ न घस्मरस्य नात्युष्णे नाविशुद्धतनोरपि ॥ सुरूढं जातरोमाणं श्लिष्टसंधिसमं स्थिरं ॥ सुचर्माणमरोगं च शनैः कर्णं विवर्द्धयेत् ॥ अन्यथा[1]नाहरुक्तोदशोफाः स्युस्तत्र कारयेत् ॥ शीतान् प्रदेहसेकादीन् शुद्धिं च क्लेदनाशिनीं ॥ स्नेहावनूपजौ तैलं सर्पिर्लाक्षारसांजनं ॥ साधयेन्मधुरस्कंधहयगंधामसूरकैः ॥ पिष्टैर्दशगुणक्षीरे तत्परं कर्णवर्द्धनं ॥ कठिनाः सरुजः क्षामाः पाल्यः स्वेदितमर्दिताः ॥ अभ्यक्तास्तेन जायंते मृदवो नीरुजः स्थिराः ॥ बृहत्यौ क[2]बरीवारिशूकमर्कजटाघृतं ॥ माक्षिकं शिखिनीतैलं सप्ताहं ताम्रभाजने ॥ स्थापयेत्तत्परं कर्णमालेपात्पोषयेत्कृशं ॥ चर्मचटिकाजलौकोहयगंधाशबरकंदकं तुल्यं ॥ माहिषनवनीतयुतं कपित्थकं कर्णवर्द्धनं पक्षात् ॥ कुर्याच्चाभ्यंजनालेपान् पालीशोषे प्रकीर्तितान् ॥ अथ कुर्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकां ॥ छिंद्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः॥त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ॥ सीव्येद्गंडं ततः सूच्या सेविन्या पिचुयुक्तया ॥ नासाछेदे सुलिखिते परिवर्त्योपरि त्वचं ॥ कपोलवध्रं संदध्यात् सीव्येन्नासां च सर्वतः ॥ नाडीभ्यामुत्क्षिपेदंतः सुखोच्छ्वासप्रवृत्तये ॥ आमतैलेन सिक्त्वाऽनु पत्तंगमधुकांजनैः ॥ शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ॥

१ अन्यथादाहरुगितिपाठः २ कच्छुरेतिपाठः

ततो मधुघृताभ्यक्तं बध्वाऽऽचारिकमादिशेत् ॥ ज्ञात्वा ऽवस्थांतरं कुर्यात्सद्योव्रणविधिं ततः ॥ छिंद्याद्वृद्धेऽधिके मांसं नासोपांताच्च चर्मवत् ॥ सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्द्धयेत्पुनः ॥ निवेशिते यथान्यायं सद्यश्छेदेऽप्ययं विधिः ॥ इति कर्णरोगप्रतिषेधो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

अथातो नासारोगविज्ञानं व्याख्यास्यामः ॥ अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ॥ नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ अत्यंबुपानरमणछर्दिबाष्पग्रहादिभिः ॥ क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः ॥ जनयंति प्रतिश्यायं वर्द्धमानं क्षयप्रदं ॥ तत्र वातात्प्रतिश्याये मुखशोषो भृशं क्षवः ॥ घ्राणोपरोधनिस्तोददंतशंखशिरोव्यथाः ॥ कीटकाइव सर्पंति मन्यते परितो भ्रुवौ ॥ स्वरसादश्चिरात् पाकः शिशिराच्छकफस्रुतिः ॥ पित्तात्तृष्णा ज्वरघ्राणपिटिकासंभवभ्रमाः ॥ नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः ॥ कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवं ॥ माधुर्यं वदने कंडूः स्निग्धश्लक्ष्णघनस्रुतिः ॥ सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशांतिमान् ॥ दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक् ॥ उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥ कंडूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणं ॥ सर्वएव प्रतिश्याया दुष्टतां यांत्युपेक्षिताः ॥ यथोक्तोपद्रवाधिक्यात्स सर्वेंद्रियतापनः ॥ साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ॥ कुप्यत्यकस्माद्बहुशो मुखदौर्गंध्यशोषकृत् ॥ नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ॥ पूयोपमासितारक्तग्रथितश्लेष्मसंस्रुतिः ॥ मूर्च्छंति चात्र कृमयो दीर्घस्निग्धसिताणवः ॥ पक्वलिंगानि तेष्वंगलाघवं क्षवथोः शमः ॥ श्लेष्मा सुचिक्कणः पीतो ज्ञानं च रसगंधयोः ॥ तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ॥

१ सः दुष्टपीनसः

वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥ विघट्टितेऽनिलः क्रुद्धो रुद्धः शृंगाटकं व्रजन् ॥ निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः ॥ शोषयेन्नासिकास्रोतः कफं च कुरुतेऽनिलः ॥ शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥ स्मृतोऽसौ नासिकाशोषो नासानाहे तु जायते ॥ नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥ निश्वासोच्छ्वाससंरोधात्स्रोतसी संवृते इव ॥ पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥ स घ्राणपाकः स्रावस्तु तत्संज्ञः श्लेष्मसंभवः ॥ अच्छो जलोपमोऽजस्रं विशेषान्निशि जायते ॥ कफः प्रवृद्धो नासायां रुध्वा स्रोतांस्यपीनसं ॥ कुर्यात्सघुर्घुरश्वासं पीनसाधिकवेदनं॥अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ॥ अजस्रं पिच्छिलं शीतं पक्वं सिंघाणकं घनं॥रक्तेन नासा दग्धेव बाह्यांतः स्पर्शनासहा॥भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥ तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात्॥ श्लेष्मा च पूतिर्निर्गच्छेत्पूतिनासं वदंति तं ॥ निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् ॥ तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरं ॥ पित्तश्लेष्मावरुद्धोऽतर्नासायां शोषयेन्मरुत्॥कफं स शुष्कपुटतां प्राप्नोति पुटकं तु तत् ॥ अर्शोर्बुदानि विभजेद्दोषलिंगैर्यथायथं ॥ सर्वेषु कृच्छ्रोच्छ्वसनं पीनसः सततं क्षुतिः ॥ सानुनासिकवादित्वं पूतिनासः शिरोव्यथा ॥ अष्टादशानामित्येषां यापयेद्दुष्टपीनसं ॥ इति नासारोगविज्ञानीयो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

अथातो नासारोगप्रतिषेधं व्याख्यास्यामः ॥ सर्वेष्वेवादौ पीनसेषु स्नेहस्वेदवमनधूमगंडूषस्निग्धोष्णभोजननिवातशयनासनानि सेवेत ॥ पाचनार्थं च गुडार्द्रकक्षीरत्रिकटुकाजमांसमद्याम्लभोजनानि ॥ रोहिषाजाजीवचाचोरकोपकुंचिकाचातुर्जाततर्कारीरजो वस्त्रावबद्धं मुहुर्मुहुरुपजिघ्रेत् ॥ घृताक्तसक्तून्मल्लकसंपुटे कृत्वा धूमं च पिबेत् ॥ पक्वे तु शिरोविरेचनमवपीडं च युंज्यात् ॥ निदानोक्तानि वर्जयेत्॥विशेषे-

ण शीतांबुस्नानपानात्युच्चोपधानवेगोदीरणधारणक्रोधशोकान् ॥ अथ वातप्रतिश्यायी पूर्वमेव वातहरद्रव्यविपक्कं ससैंधवं प्रातः सर्पिः पिबेत् ॥ दशमूलकुलत्थकोलयवशुष्कमूलकव्योषलवणपंचकैः सदधिधान्याम्लं सर्पिः सिद्धमाहरेत् ॥ पाने च प्रणीतं प्रतिश्याययक्ष्मकासश्वासग्रहणीगुल्मविबंधघ्नं ॥ जीर्णस्नेहं जांगलरसेन व्योषदाडिमसैंधववचाबालमूलरसेन सर्वधान्ययूषेण वा भोजयेत् ॥ नागरं वा पयसा पिबेत् ॥ कृष्णादशमूलशुंठीयवैरंडमूलक्काथसिद्धेन पयसोत्तमांगं स्वेदयेत् ॥ तदेव च पानभोजनयोर्विदध्यात् ॥ अर्दितोक्तांश्च स्वेदानेवमपरिपच्यमाने पुनः पुनर्नाडीस्वेदान्वातहरं चास्थापनमनुवासनं शिरोबस्तिं च ॥ पक्के तु तैलं क्षवकचूर्णयुक्तं सैंधवं सर्पिः शिरोविरेचनं ॥ पित्तप्रतिश्याये पद्मकोशीरपटोलीसारिवाविदारीशतावरीक्षीरिद्रुमशुंगशुंठीककैटाख्यादुरालभानामर्द्धाढकमष्टगुणेंऽभसि विपाच्य पादावशेषे मधुकमृद्वीकाचंदनशृंगाटककशेरुकश्वेतपाकान्यक्षमात्राणि दत्वा घृतप्रस्थं पयसा सह साधयेत्॥तत्प्रातः पानाय युंज्यात्॥जीर्णे सुखोष्णतोयपरिषिक्तं ससैंधवेन रसेन भोजयेत् ॥ स्निग्धं विरेचयेत् ॥ द्राक्षापटोलश्रीपर्णीमूर्वात्रिवृत्क्काथेन त्रिवृत्पथ्यापूगफलचूर्णान्वितेन ॥ विरिक्तभुक्तस्य शीतलैः शिरोवक्त्रलेपपरिषेककवलग्रहान्वितरेत् ॥ व्यजनपवनविधूयमानश्च नीलशाद्वलोपवनशिशिरकरकिरणधारागृहाणि सेवेत ॥ पक्के तु दोषे शिरोविरेकं पुराणेन घृतेन ससैंधवेन घृतमंडेन वा कट्फलान्वितेन वा कुर्यात् ॥ विशुद्धस्रोतसश्च जांगलरसेन क्षीरेण वा शीतेन संभोजनं ॥ कफजे तु यवक्षारावचूर्णितमुष्णोदकानुपानं घृतं पाययेत् ॥जीर्णे च तिलमाषपल्लवतीं यवागूं ॥ ततो वामनीयौषधक्काथसिद्धया ससर्पिष्कया ससैंधवमाषचूर्णप्रगाढया पेययोष्णांभसा च वामयेत् ॥ ततस्तीक्ष्णधूमकवलयवान्नचणकप्रायाहारनाडीस्वे

देरुपाचरेत् ॥ अरुचिगौरवयोस्तु विशोषयेत् ॥ पक्के क्षवकविडंगसैंधवादिभिर्नस्यं तैलाप्लुतो नागरचूर्णानुबद्धो मुद्गाहारो यथासात्म्यं च ॥ रूक्षतीक्ष्णोष्णशुद्धघ्राणपथस्य देवदारुसरलकाकोलीजीवकमधुकपिप्पल्यनंताक्षीरविपक्कं तैलं नस्यं ॥ सान्निपातिके दोषबलतः प्रतिकुर्यात् ॥ रसांजनातिविषामुस्तभद्रदारुसाधितं चात्र तैलं नावनं ॥ रक्तजे पैत्तिकरक्तपित्तयोश्च विधिः ॥ दुष्टप्रतिश्याये व्योषचित्रकयवक्षारबीजकविडंगत्वक्लवणत्रयीमांसरसप्रतीवापविपक्कं सक्षौद्रं सर्पिः पाययेत् ॥ जीर्णे घृते जांगलरसेन तैलोपसेकं भोजयेत् ॥ स्निग्धं च प्रतिश्यायवदुपाचरेत् ॥ पक्केऽवपीडं व्योषेंद्रयवविडंगसारजीरकसैंधवैर्बस्तमूत्रपिष्टैर्दद्यात् ॥ विशुद्धघ्राणस्रोतसं च पुनरुपस्नेह्य विरेचयेत् ॥ भृष्टान् यवान् भूस्तृणकाम्रातकजीरकत्रिवृतायुक्तगोमूत्रे क्काथयेत् ॥ तं क्काथमभयानागरमरिचक्रमुकसैंधवयावशूकचूर्णयुक्तं सबीजपूरकरसं पाययेत् ॥ कोष्णोदकं चानु पाययेत् ॥ विरिक्तं च काले मुस्तहरिद्रानागरयवक्षारपूतिकरंजरेणुकाभिरजाविगोमूत्रदधिभिश्च सिद्धं सर्पिरुपयोजयेत् ॥ तीक्ष्णानि च निरूहानुवासनानि ॥ अरिष्टांश्च पानार्थं ॥ एवमप्यशांतौ हिंगुक्षाराम रदारुविपक्कं घृतं मांसरसानुपानं पिबेत् ॥ कुशाग्रपल्लवमूर्वातर्कारींगुदीफलफणिज्झकमहापंचमूलकंटकारिकासारिवोरुबूकहिंस्रानिंबशिग्रुफलरक्षोघ्नक्रमिघ्नदंतीपूतिकरंजपिप्पलीवार्ताकबीजाहिमारकमूलत्वक्पत्रपुष्पफलैरजाश्वशकृद्रसयुक्तैर्धूमवर्तिं कृत्वा घृताभ्यक्तां पातुं प्रयच्छेत् ॥ पिप्पलीवर्द्धमानं चोपयुंजीत ॥ क्रमिघ्नैश्च योगैर्योजयेत् ॥ भृशक्षवथौ पुटके च निंबकट्फलकुष्टमरिचचूर्णः क्लेदनाय प्रधमनं ॥ पिप्पलीकुष्टशुंठीविडंगमृद्वीकाकषायकल्कविपक्कं तैलं घृतं वा नावनं ॥ नासाशोषे बलातैलं पाने शिरोबस्तौ च ॥ स्निग्धस्य स्वेदः॥क्षी-

१ लंघयेत्

रसर्पिर्नस्यं ॥ मधुरवर्गसाधितं वा तैलं ॥ स्नैहिको धूमः॥ तथा ऽऽनाहे ऽपि ॥ एवमनुपशमे शिरोविरेकः ॥ नासापाके दीप्तौ च जलौकोभिरस्रविस्रावणं ॥ शीतैरूर्ध्वाधो विरेकलेपसेकाः॥नासास्रावे तीक्ष्णं नस्यं धूमश्च॥ अपीनसे पूतिनासे च गुडमरिचाहिंगुशिवाटिकाविडंगैरजामूत्रपिष्टैर्नस्यं ॥ कफप्रतिश्यायवच्च स्नेहस्वेदवमनानि ॥ वमितवतो निर्गुंडीशिग्रुतर्कारीफणिज्जकक्षवकसुरसाजेकपत्रस्वरसेन सार्षपं पीलुजं वा तैलं विपाच्य नस्यं विदध्यात् ॥ लाक्षाविडंगपिप्पलीलवंगक्षवकनिशाकुष्टवचाकरंजिकाकल्कैर्वा तिलतैलं ॥ उत्पन्नमात्रं पूयरक्तं प्रतिश्यायवच्चिकित्सेत् ॥ प्रवृद्धं नाडीव्रणवत् ॥ कृतवमनस्य चास्य नस्यधूमौ योजयेत् ॥ अर्शांसि विधिवत् क्षारेणाग्निना वा दहेत् ॥ स्थूलानि तु शस्त्रेण स्पृष्ट्वा ॥ दाहानंतरं शीतां क्रियां योजयेत्॥वर्त्तिं च नासायां कुंभनिकुंभाग्निकसैंधवपिप्पलीमनःशिलाऽलकल्कमधुघृतप्रदिग्धां ॥ तुवरिकाबिभीतकहरिद्रारोध्रप्रियंगुकरंजिकाकल्कगुडोदकविपक्कं तैलं नावनं ॥ रोध्रोत्पलमधुकातिंदुकास्थित्रिफलाखदिरसारविपक्कं वा ॥ यथादोषं च स्नेहवमनविरेचनादीन् प्रणिदध्यात् ॥ अर्बुदं बडिशेन गृहीत्वा मंडलाग्रेण मूले समं भिंद्यात् ॥ छेद्यं चोच्छेदयेत् ॥ चलं प्रसृष्टं च व्रणं शलाकया दहेत् ॥ तैलेन वाऽग्निदग्धं म्रक्षयेत् ॥ ततः शिशिरप्रदेहः ॥ उपरूढव्रणस्य रोध्रावापं तीक्ष्णोष्णलवणद्रव्यगोमूत्रयुक्तं सार्षपं कारंजं वा तैलं नावनं ॥ पित्तजे रक्तजे वाऽर्बुदे गोदंतसैंधवतालकासीसकांस्यनीलैरंबुपिष्टैरालेपः ॥ ततश्च शीताः प्रदेहसेकाः शीतैरेव च साधितान्यभ्यंगनस्यपानानि॥ मांसमेदःसन्निपातार्शोर्बुदानि च साधयेदिति ॥ भवति चात्र ॥ हीनच्छेदात् पुनर्वृद्धिरतिच्छेदात्स्वरक्षयः ॥ गंधाज्ञानं च वीसर्पौ मूर्च्छा छिंद्यादतःसमं ॥ इति नासारोगप्रतिषेधो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

अथातो मुखरोगविज्ञानं व्याख्यास्यामः ॥ मात्स्यमाहिषवाराहपिशितामकमूलकं ॥ माषसूपदधिक्षीरसुक्तेक्षुरसफाणितं ॥ अवाक्शय्यां च भजतो द्विषतो दंतधावनं ॥ धूमछर्दनगंडूषानुचितं च सिराव्यधं ॥ क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वंत्यंतर्मुखे गदान्॥ तत्र खंडोष्ठइत्युक्तो वातेनोष्ठो द्विधा कृतः ॥ ओष्ठकोपे तु पवनात्स्तब्धावोष्ठौ महारुजौ ॥ दाल्येते परिपाट्येते परुषासितकर्कशौ ॥ पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ॥ पिटिकाभिर्बहुक्लेदावाशुपाकौ कफात्पुनः ॥ शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ ॥ सन्निपातादनेकाभौ दुर्गंधास्रावपिच्छिलौ ॥ अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ ॥ रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ खर्जूरसदृशं चात्र क्षीणे रक्तेऽर्बुदं भवेत् ॥ मांसपिंडोपमौ मांसात्स्यातां मूर्च्छत्कृमी क्रमात् ॥ तैलाभश्वयथुक्लेदौ सकंडू मेदसा मृदू ॥ क्षतजाववदीर्यंते पाट्येते चासकृत्पुनः ॥ ग्रथितौ च पुनः स्यातां कंडूलौ दशनच्छदौ ॥ जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदं[1] ॥ गंडालजी स्थिरः शोथो गंडे दाहज्वरान्वितः[2] ॥ वातादुष्णसहा दंताः शीतस्पर्शाधिकव्यथाः ॥ दाल्यंतइव शूलेन शीताख्यो दालनश्च सः ॥ दंतहर्षे च वाताम्लशीतभक्ष्याक्षमा द्विजाः ॥ भवंत्यम्लाशनेनैव सरुजाश्चलिताइव ॥ दंतभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ॥ चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः ॥ करालस्तु करालानां दशनानां समुद्गमः ॥ दंतोऽधिकोऽधिदंताख्यः स चोक्तः खलु वर्द्धनः ॥ जायते जायमानेऽतिरुक् जाते तत्र शाम्यति ॥ अधावनान्मलो दंते कफो वा वातशोषितः ॥ पूतिगंधः स्थिरीभूतः शर्करा सोऽप्युपेक्षितः ॥ शातयत्यणुशो दंतान्कपालानि कपालिका ॥ श्यावः श्यावत्वमायाता रक्तपित्तानिलैर्द्विजाः ॥ समूलं दंतमा-

१ इत्येकादश ओष्ठे २ इत्येको गंडे

श्रित्य दोषैरुल्बणमारुतैः ॥ शोषिते मज्जि सुषिरे दंतेऽन्नमलपूरिते ॥ पूतित्वात्कृमयः सूक्ष्मा जायंते जायते ततः ॥ अहेतुतीव्रार्तिशमः ससंरंभोऽसितश्चलः ॥ प्लूनः पूयरक्तास्रक् स चोक्तः कृमिदंतकः[1] ॥ श्लेष्मरक्तेन पूतीनि वहंत्यस्रमहेतुकं ॥ शीर्यंते दंतमांसानि मृदुक्लिन्नसितानि च ॥ शीतादोऽसावुपकुशः पाकः पित्तासृगुद्भवः ॥ दंतमांसानि दह्यंते रक्तान्युत्सेधवंत्यतः ॥ कंडूमंति स्रवंत्यस्रमाध्मायंतेऽसृजि स्थिते ॥ चला मंदरुजो दंताः पूतिवक्त्रं च जायते ॥ दंतयोस्त्रिषु वा शोथो बदरास्थिनिभो घनः ॥ कफास्रात्तीव्ररुक् शीघ्रं पच्यते दंतपुप्पुटः ॥ दंतमांसे मलैः सास्रैर्बाह्यांतः श्वयथुर्गुरुः ॥ सरुग्दाहः स्रवेद्भिन्नः पूयास्रं दंतविद्रधिः ॥ श्वयथुर्दंतमूलेषु रुजावान् पित्तरक्तजः ॥ लालास्रावी स सुषिरो दंतमांसप्रशातनः॥स सन्निपाताज्ज्वरवान् सपूयरुधिरस्रुतिः ॥ महासुषिर इत्युक्तो विशीर्णद्विजबंधनः॥ दंतांते कीलवच्छोथो हनुकर्णरुजाकरः॥ प्रतिहंत्यभ्यवहृतिं श्लेष्मणा सोऽधिमांसकः ॥ घृष्टेषु दंतमांसेषु संरंभो जायते महान् ॥ यस्मिंश्चलंति दंताश्च स विदर्भोऽभिघातजः ॥ दंतमांसाश्रितान् रोगान् यः साध्यानप्युपेक्षते ॥ अंतस्तस्यास्रवन् दोषः सूक्ष्मां संजनयेद्गतिं ॥ पूयं मुहुः सा स्रवति त्वङ्मांसासृक्प्रभेदिनी ॥ ताः पुनः पंच विज्ञेया लक्षणैः स्वैर्यथोदितैः[2] ॥ शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ॥ जिह्वा पित्तात् सदाहोषा रक्तैर्मांसांकुरैश्चिता ॥ शाल्मलीकंटकाभैस्तु कफेन बहला गुरुः ॥ कफपित्तादधः शोफो जिह्वास्तंभकृदुन्नतः ॥ मत्स्यगंधिर्भवेत्पकः सोऽलसो मांसशातनः ॥ प्रबंधनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः ॥ सांकुरः कफपित्तास्रैर्लालोषास्तंभवान् खरः ॥ अधिजिह्वः सरुकंडूर्वाक्याहारविघातकृत् ॥ तादृगेवोपजिह्वस्तु जिह्वाया उपरि-

---

१ इति दंते दश २ इतिदंतमूले त्रयोदश ॥

स्थितः[1] ॥ तालुमांसेऽनिलाद्दुष्टे पिटिकाः सरुजाः खराः ॥ बह्व्यो घनाः स्रावयुतास्तास्तालुपिटिकाः स्मृताः ॥ तालुमूले कफात्सास्रान्मात्स्यबस्तिनिभो मृदुः ॥ प्रलंबः पिच्छिलः शोफो नासयाऽऽहारमीरयन् ॥ कंठोपरोधतृट्कासवमिकृद्गलशुंडिका ॥ तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदं ॥ कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ॥ कोलाभः श्लेष्ममेदोभ्यां पुप्पटो नीरुजः स्थिरः ॥ पित्तेन पाकः पाकाख्यः पूयास्रावी महारुजः ॥ वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ॥ जिव्हाप्रबंधजाः कंठे दारुणा मार्गरोधिनः ॥ मांसांकुराः शीघ्रचया रोहिणी शीघ्रकारिणी ॥ कंठास्यशोषकृद्वातात्सा हनुश्रोत्ररुक्करी ॥ पित्ताज्ज्वरोषातृण्मोहकृत्कंठधूमायनान्विता ॥ क्षिप्रजा क्षिप्रपाकातिरागिणी स्पर्शनासहा ॥ कफेन पिच्छिला पांडुरस्रजा स्फोटकान्विता ॥ तप्तांगारनिभा कर्णरुक्करी पित्तजाकृतिः ॥ गंभीरपाका निचयात्सर्वलिंगसमन्विता ॥ दोषैः कफोल्बणैः शोफः कोलवद्ग्रथितोन्नतः ॥ शूककंटकवत्कंठे शालूको मार्गरोधनः ॥ वृंदो वृत्तोन्नतो दाहज्वरकृद्गलपार्श्वगः ॥ हनुसंध्याश्रितः कंठे कार्पासीफलसन्निभः ॥ पिच्छिलोमंदरुक् शोफः कठिनस्तुंडिकेरिका ॥ बाह्यांतः श्वयथुर्घोरो गलमार्गार्गलोपमः ॥ गलौघो मूर्द्धगुरुतातंद्रालालाज्वरप्रदः ॥ वलयं नातिरुक् शोफस्तद्वदेवायतोन्नतः ॥ मांसकीलो गले दोषैरेकोऽनेकोऽथवाऽल्परुक् ॥ कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो गिलायुकः ॥ भूरिमांसांकुरवृता तीव्रतृट्ज्वरमूर्द्धरुक् ॥ शतघ्नी निचिता वर्त्तिः शतघ्नीवातिरुक्करी ॥ व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ॥ पूतिपूयनिभस्रावी श्वयथुर्गलविद्रधिः ॥ जिव्हावसाने कंठादावपाकं श्वयथुं मलाः ॥ जनयंति स्थिरं रक्तं नीरुजं तद्गलार्बुदं ॥ ष

---

१ इति जिव्हायाः षट् ॥ २ स तालुशोष इत्युच्यते इत्यष्टौ तालुरोगाः

वनश्लेष्ममेदोभिर्गलगंडो भवेद्बहिः ॥ वर्द्धमानः स कालेन मुष्कवल्लंबते गले ॥ कृष्णोऽरुणो वा तोदाढ्यः स वातात्कृष्णराजिमान् ॥ वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यतां ॥ स्थिरः सवर्णः कंडूमान् शीतस्पर्शो गुरुः कफात् ॥ वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यतां ॥ मेदसः श्लेष्मवद्धानिवृद्ध्योः सोऽनुविधीयते ॥ देहं वृद्धश्च कुरुते गले शब्दं स्वराल्पतां ॥ श्लेष्मरुद्धानिलगतिः शुष्ककंठो हतस्वरः ॥ ताम्यन्प्रसक्तं श्वसिति येन स स्वरहा ऽनिलात् ॥ करोति वदनस्यांतर्व्रणान् सर्वसरोऽनिलः ॥ संचारिणोऽरुणान् रूक्षानोष्ठौ ताम्रौ चलत्वचौ ॥ जिव्हा शीतासहा गुर्वी स्फुटिता कंटकान्विता ॥ विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः ॥ अधःप्रतिहतो वायुरर्शोगुल्मकफादिभिः ॥ यात्यूर्ध्वं वक्रदौर्गंध्यं कुर्वन्नूर्ध्वगदस्तु सः ॥ मुखस्य पित्तजे पाके दाहोषे तिक्तवक्रता ॥ क्षारोक्षितक्षतसमा व्रणास्तद्वच्च रक्तजे ॥ कफजे मधुरास्यत्वं कंडूमतिपिच्छिला व्रणाः ॥ अंतः कपोलमाश्रित्य श्यावपांडु कफोऽर्बुदं ॥ कुर्यात्तत्पाटितं छिन्नं मृदितं च विवर्द्धते ॥ मुखपाको भवेत्सास्रैः सर्वैः सर्वाकृतिर्मलैः ॥ पूत्यास्यता च तैरेव दंतकाष्ठादिविद्विषः ॥ ओष्ठे गंडे द्विजे मूले जिव्हायां तालुके गले ॥ वक्रे सर्वत्र चेत्युक्ताः पंचसप्ततिरामयाः ॥ एकादशैको दश च त्रयोदश तथा च षट् ॥ अष्टावष्टादशाष्टौ च क्रमात्तेष्वनुपक्रमाः ॥ करालो मांसरक्तोष्ठावर्बुदानि चलाद्विना ॥ कच्छपस्तालुपिटिका गलौघः सुषिरो महान् ॥ स्वरघ्नोर्ध्वगदश्यावशतघ्नीवलयालसाः ॥ नाड्योष्ठकोपौ निचयाद्रक्तात्सर्वैश्च रोहिणी ॥ दशने स्फुटिते दंतभेदः पक्कोपजिव्हिका ॥ गलगंडः स्वरभ्रंशी कृच्छ्रोच्छ्वासोऽतिवत्सरः ॥ याप्यस्तु हर्षो भेदश्च शेषान् शस्त्रौषधैर्जयेत् ॥ इति मुखरोगविज्ञानं नाम पंचविंशोऽध्यायः ॥ २५ ॥

---

१ इति गलरोगाअष्टादश

अथातो मुखरोगप्रतिषेधं व्याख्यास्यामः ॥ स्निग्धस्विन्नस्य खंडौष्ठस्योष्ठांतौ विलिख्य सुश्लिष्टौ क्षौमसूत्रेण सीव्येत् ॥ शतधौतघृताभ्यक्तां चास्मै कवलिकां व्रणस्योपरि दद्यात् ॥ प्रक्लिन्नं च व्रणं व्रणचिकित्सया साधयेत् ॥ज्योतिष्मतीरोध्रमधुकपटोलकाकमाचीश्रावणीसारिवाभिस्तैलं विपक्वमभ्यंजनाच्छोधनरोपणं ॥ वातहरमधुरौषधसिद्धं च तैलं नस्यं ॥ वातजे ओष्ठकोपे देवदारुगुग्गुलुसर्जरसमधूच्छिष्टसिद्धेन महास्नेहेनाभ्यंगः ॥ तेनैव च समधुकचूर्णेन प्रतिसारणं ॥ तदभ्यक्तेन पिचुना प्रच्छादनं ॥ एरंडपल्लवैः क्षीरक्वथितैर्नाडीस्वेदः ॥ खंडौष्ठोक्तं च नावनं ॥ तदेव शिरोभ्यंगः ॥ पित्तोत्थेऽभिघातजे च जलौकोभिर्वाऽस्रस्रावणं ॥ पत्तंगयष्टीछिन्नरुहाविपक्वं सर्पिरभ्यंगः ॥ मधुमधुकरोध्रसर्जरसैः प्रतिसारणं ॥ पित्तविद्रधिवच्च चिकित्सा ॥ रक्तजेऽप्यचिरोत्थिते पैत्तिकवत्प्रतिकुर्यात् ॥ कफजे जलजाभिः शाकादिपत्रैर्वा रक्तं विस्राव्य व्योषपाठायवक्षारस्वर्जिकाक्षारैः सक्षौद्रैः प्रतिसारयेत्॥कुष्ठतगरदंतीश्यामाबिडहरितालविडंगैर्वा॥स्वेदनस्यधूमकवलांश्च कफघ्नानवचारयेत्॥मेदोजे दंतच्छदं स्वेदयित्वा वृद्धिपत्रेण विपाट्य शुद्धमेतदग्निनाऽनु दहेत् ॥ कफजोक्तैश्च प्रतिसारणं॥जलार्बुदोक्तं च तैलं रोपणं॥जलार्बुदं भित्त्वा विशोध्य त्रिकटुककटुकातेजोवतीयवक्षारसैंधवस्वर्जिकाकासीसचूर्णैः सक्षौद्रैः प्रतिसारयेत् ॥ अतिगाढमतिवृद्धं वा क्षारेणाग्निना वा दहेत् ॥ हरिद्रामधुकरोध्रमालतीहरेणुतगरैर्विपक्वं तैलं रोपणं ॥ मांसपाकार्बुदसन्निपातास्त्याज्याः ॥ गंडालजीमपक्वां शोफवत् विदग्धामुपनाह्य पक्वां विदार्य व्रणवत्साधयेत् ॥ शीतदंतस्योष्णांबुस्विन्नस्य व्रीहिमुखेन पाली लिखित्वा पिचुतैलेन दहेत् ॥ प्रतिसारयेच्च प्रियंगुजंब्वस्थिदाडिमत्वक्त्रिफलारसांजनसैंधवशुंठीमुस्तकचूर्णैर्मधुयुतैः ॥ क्षीरिवृक्षकषायैर्गंडूषः ॥ अणुतैलं नस्यं ॥ दंतहर्षे भेदे

च वातहरसिद्धं तैलं ॥ एलाकुष्टपाटलीत्वग्विपक्को मज्जा वा गंडूषः ॥ स्निग्धाश्च नस्यादयः ॥ दंतचाले दशमूलक्काथेन तैलसर्पिर्वसाक्षौद्रैश्च कवलः ॥ पिप्पलीसैंधवतुत्थरोध्रपत्तंगस्रोतोजमुस्तात्रिफलाः प्रतिसारणं ॥ नियतं च स्नैहिकधूमपायी स्निग्धमधुराहारो विस्रावणपरः स्यात् ॥ चंदनपद्मकविदारीकसेरुकनीलोत्पलमृद्वीकाजीवकर्षभकशर्कराणां प्रत्येकं पलेन क्षीरेण च मांसरसद्विगुणेन तैलप्रस्थं विपाचयेत् ॥ एतन्नस्यगंडूषप्रयोगात्परमं दशननयनश्रवणबलकरं ॥ अधिदंतकं क्षारेणालिप्य जर्जरं विज्ञाय कृमिदंतकविधिनोत्पाट्य तद्वदेवोपचरेत् ॥ अनवस्थितशोणितं दग्ध्वा व्रणवदुपक्रमेत् ॥ दंतशर्करां दंतमूलान्यपीडयन्दंतलेखनेन विलिख्य क्षारतैलेनावसेचयेत् ॥ ऊषायां कर्पूरपाटलीत्वक्चूर्णेन प्रतिसारणं ॥ सदा च दंतधावनादि निषेवेत ॥ दंतहर्षोक्तं च कुर्यात् ॥ कपालिकायामेतदेव विशेषतः शीलयेत् ॥ कृमिदंतके सुषिरं गुडेन मधूच्छिष्टेन सर्पिषा वा पूरयित्वा तप्तशलाकया दहेत् ॥ सप्तच्छदार्कक्षीरपूरणं ॥ सर्षपकरंजतैलं वा॥हिंगुविडंगस्वर्जिकाकट्फलकासीसकुष्टचूर्णस्तांतवबद्धो दंतस्योपरि तिष्ठन् रुजमपहरति ॥ कुंदरुकचूर्णो वा ॥ एभिरेव च सिद्धं तैलं गंडूषः ॥ दृढमूलगूढमांसे सरुजे विस्रावणं ॥ भग्नस्फुटितविवर्णसुप्तस्य चलस्य सरुजश्चैवमनुपशमे संदंशयंत्रेण दंतमायतं गृहीत्वा विचाल्य शस्त्रेण पार्श्वेभ्यो मोक्षयित्वोद्धरेत् ॥ दंतनिर्घातनेन चोत्पीड्य मुद्गरेणाश्मना वा निर्घातयेत् ॥ न तूत्तरं ॥ तस्योद्धरणाच्छोणितात्ययः स्यात् ॥ ततश्चेंद्रियभ्रंशो वातव्याधिर्वा ॥ प्रक्षालितमुखस्य समधुचूर्णं तैलं मधु वा गंडूषं धारयेत् ॥ विदारीमधुकशृंगाटककसेरुकाभिस्तैलं दशगुणे पयसि सिद्धं नस्यं ॥ उत्तरदंतोद्धरणेऽप्ययमेव प्रतीकारः ॥ शीतोपचारश्च सुतरां ॥ शीतादे शोणितं विस्राव्य रसांजनमुस्तत्रिफला-

र्जुनत्वक्प्रियंगुमहौषधकषायगंडूषं धारयेत् ॥ एभिरेव च सक्षौद्रैः प्रतिसारणं मधुवर्गतैलं नस्यं ॥ तेजोवतीहरिद्राद्वयकुष्टपाठाकटुकरोहिणीरोध्रसमंगामुस्तैः प्रतिसारणं ॥ सर्वदंतमांसामयेषु कंडूश्वयथुवेदनारक्तस्रुतिहरं ॥ तथा व्योषयवक्षारमनःशिलाऽलसैंधवदार्वीत्वग्भिरेव चौषधैर्गुलिकाः सर्वमुखरोगहराः ॥ उपकुशे सुखोष्णांबुस्विन्नान्युत्सन्नानि दंतमांसान्यवलिखेन्मंडलाग्रेण शाकादिपत्रैर्वा ॥ ततः सुखोष्णो घृतमंडस्तैलं वा गंडूषः ॥ मरिचकुष्टमधुप्रियंगुभिर्वा लाक्षापत्तंगगैरिकरसांजनशुंठीसैंधवैर्मधुघृतमंडयुक्तैः प्रतिसारणं ॥ पृथक्पर्णीविडंगविदारीमधुकपयस्यासुरदारुपक्कं तैलं गंडूषो नस्यं च ॥ मधुरसिद्धमेव वा सर्पिः ॥ पुनः पुनश्च रुधिरावसेकः ॥ दंतपुप्पुटके छिन्ने भिन्ने विलिखिते स्वर्जिकामधुशुंठीसैंधवैः प्रतिसारणं ॥ दंतविद्रधौ तिक्तकटुकषायोष्णैः समूत्रैः कवलालेपाश्च ॥ वृश्चिकाली कुष्टकटुकायवक्षारैः प्रतिसारणं ॥ पाकं तु रूक्षशीतैरंतर्बहिः प्रयुक्तैर्धारयेत्[1] ॥ पक्के तु पाटनमवगाढे दाहः ॥ त्रिफलासुमनारिष्टक्काथो गंडूषः ॥ यष्टीमधुकसिद्धः सर्पिर्मंडो नस्यं ॥ सुषिरे छिन्नलिखितेरोध्रमुस्तत्रिफलाकिंशुकपत्तंगतार्क्ष्यशैलशतपुष्पाकट्फलैरवघर्षः ॥ तेषामेव क्काथो गंडूषः ॥ क्षीरिवृक्षकिंशुकामलकानां वा ॥ गैरिकोत्पलमधुकसारिवाचंदनप्रपौंडरीकशर्करानंतारोध्रागुरुसिद्धं तैलं नावनं ॥ अधिमांसकमचिरोत्थं स्रावयेत् ॥ विवृद्धं तु बडिशेन मुचुंड्या वा गृहीत्वा मंडलाग्रेण छित्वा तीक्ष्णैः प्रतिसारयेत् ॥ कटुतीक्ष्णैः कवलस्तैलं वा यवक्षारावचूर्णितं ॥ विदर्भे दंतमूलानि शस्त्रेण विशोध्य क्षारं प्रयुज्य घृतमंडं गंडूषे दद्यात् ॥ रोध्रप्रियंगुमंजिष्ठामधुकचूर्णैः प्रतिसारणं ॥ काकोलीयष्टीमधुशर्कराविपक्कं तैलं नावनं ॥ दंतनाडीमेषयित्वा संवृतां शस्त्रेण विचारयित्वा तदाश्रितं दंतशेषमुद्धृत्यश-

---

१ प्रयुक्तैरक्षेदिति पाठः ॥

लाकया दहेत् ॥ कुब्जामवगाढामनेकगतिं गुडमधुसिक्थान्यतमपूर्णां ॥ ततः क्षीरिवृक्षकषायेण गंडूषान्धारयेत् ॥ तत्सिद्धेन वा तैलेन नस्यं च ॥ दंतीखदिरसारमदनस्वादुकंटककाशे रोध्रवालकोशीरदेवदारुमंजिष्ठामधुककल्के विपक्कं तैलं सर्षपतैलं वा नाडीशोधनं रोपणं च ॥ प्रपौंडरीकहरिद्राद्वयमधूकमधूच्छिष्टरोध्रकटुशर्करापद्मकचंदनदूर्वापोदकावास्तुकतंदुलीयकमंजिष्ठाम्लीकाकपित्थैः पत्रैर्वा नस्यं च ॥ विडंगमधुमुस्तानिर्गुंडीखदिरमंजिष्ठोशीरसुरतरुसिद्धं तैलं ॥ धूमासृक्स्रावणनावनानि शीलयेत् ॥ नाडीशोधनं चेक्षेत ॥ जिव्हायां वातजेषु कंटकेषु वातोष्ठकोपोक्तं च कुर्यात् ॥ पित्तजेषु विघृष्टस्रुतदुष्टरुधिरेषु प्रतिसारणगंडूषनावनानि मधुरैर्हिमानि कुर्यात् ॥ कफोत्थेषु सर्षपत्र्यूषणादिभिस्तीक्ष्णैस्तानि ॥ जिव्हालसे नवोत्थिते तीक्ष्णाः प्रतिसारणादयः ॥ नचात्र शस्त्रमवचारयेत् ॥ सिरां तु विध्येत् ॥ पुनरधोजिव्हामुन्नम्य बडिशेन गृहीत्वा मंडलाग्रेण छिंद्यात् ॥ तीक्ष्णाश्च नस्यादयः ॥ उपजिव्हां शाकपत्रेणांगुलिशस्त्रेण वा विस्राव्य यवक्षारेण प्रतिसारयेत् ॥ गलशुंडिकां तु कफघ्नैरुपाचरेत् ॥ वृद्धायां त्वेर्वारुकबीजनिभमसिराततमुपरि जिव्हाया निविष्टं बडिशेन मुचुंड्या वा वस्त्रवेष्टिताभ्यां वा वामांगुष्ठप्रदेशिनीभ्यां गृहीत्वा मंडलाग्रेण नात्यग्रे नातिमूले छिंद्यात् ॥ अग्रच्छेदादनुपशयः शोफलालाभिवृद्धिर्वा ॥ अतिच्छेदाच्छोणितक्षयेण मरणं ॥ सम्यक्छिन्नायां पूर्ववत्प्रतिसारणादयः ॥ तालुसंघाते पुप्पुटे कच्छपे च नवे विधिरयं ॥ शस्त्रकर्मणि तु विशेषः ॥ तत्र हि विलेखनं ॥ तालुपाकेऽप्यपक्वस्य श्वयथोः कासीसरसांजनक्षौद्रेण प्रतिसारणं ॥ मधुरकषायशीतैर्गंडूषः ॥ पक्वस्य मंडलाग्रेणाष्टापदवच्छेदनं ॥ तीक्ष्णैरवघर्षणं ॥ पटोला-

---

अष्टापदं चतुरंगपीठं

रिष्टजातीकरवीरगुडूचीवृषकटुकाहरिद्राद्वयवेत्राग्रकंटकारिकाक्वाथः कवलो मधु तैलं च ॥ तालुशोषे मधुपिप्पलीनागरसिद्धमौत्तरभक्तकं सर्पिः सतृष्णः पिबेत् ॥ अम्लैश्चास्य गंडूषः ॥ पयस्यामधुकमधूलिकाविपक्कं क्षीरसर्पिर्नस्यं॥स्निग्धो धूमः॥तृष्णाघ्नमन्नपानं॥कंठरोगेषु तु ज्वराद्यनुपद्रुतेषु कटुतीक्ष्णैर्नस्यावघर्षणगंडूषादयः ॥ सिराव्यधो रसांजनेंद्रयवदार्वीनिंबक्काथः पानं ॥ व्योषयवक्षाररसांजनदार्वीतेजोवतीपाठानिंबत्वक्त्रिफलाचित्रकैः सुक्तगोमूत्रक्कथितैः कवलो गुटिका वा प्रतिसारणं ॥ तालीसपत्रगृहधूमपंचकोलकैलामरिचपलाशमुष्ककक्षारयवक्षारैः गुडक्काथेन गुटिकाः कृताः सर्वकंठरोगेष्वमृतोपमाः ॥ अथ वातरोहिणिकामंतर्बहिः स्विन्नामंगुलिशस्त्रकेण मधुलवणगर्भेण वा नखेन विस्राव्य तीक्ष्णैः प्रतिसारयेत् ॥ महापंचमूलक्काथो गंडूषः ॥ एलापुनर्नवासिंहीकपित्थकल्कपयोविपक्कं तैलं गंडूषो नावनं च ॥ पित्तजामप्येवं विस्राव्य पत्तंगशर्कराराेध्रप्रियंगुभिः प्रतिसारयेत् ॥ एषामेव कषायो गंडूषः ॥ द्राक्षापरूषकोशीरमधुकचंदनक्काथो वा ॥ त्रिफलातिल्वकश्यामाश्रीपर्णीत्वङ्मधुयष्टिकाभिर्दशगुणे पयसि सिद्धं सर्पिर्नस्यकवलभोजनेषु ॥ रक्तजामप्येवं प्रत्याख्यायोपक्रमेत् ॥ श्लैष्मिकां स्वेदयित्वा विलिख्य कटुवर्गेण सागारधूमत्रिफलासैंधवयुक्तेन प्रतिसारयेत् ॥ तद्विधाश्च गंडूषाः ॥ निंबजात्यपामार्गतगरविडंगविपक्कं तैलं नस्यं ॥ कंठशालूकवृंदतुंडिकेरीगिलायुष्वप्येष एव विधिः ॥ गलविद्रधौ विस्राविता‍यां रोध्रवराऱसांजनपत्तंगगैरिकरोचनापिप्पलीसैंधवचूर्णावघर्षणं ॥ तैरेव क्वथितैर्गंडूषः ॥ किराततिक्तकरोध्रदार्वीशतपुष्पानिंबकुष्ठैलागुडूचीचित्रकतगरमुस्ताक्काथविपक्कं तैलं नावनं ॥तिलप्रियालल्ट्वामूलकशणातसीबीजैरुपनाहयेत् ॥ तिल्वकाग्निमंथपुनर्नवकालामृतासौभांजनकगजपिप्पल्येषिकार्कमूलकरघाटकपुष्पैः सुराम्ल-

पिष्टैः पुनः पुनर्लेपयेत् ॥ निंबगुडूचीकुटजहंसपादीकृष्णाबलाद्वयदेवदारुसिद्धं तैलं पाययेत् ॥ श्लैष्मिकेऽप्ययमेव विधिः ॥ तीक्ष्णतराश्च स्वेदप्रलेपादयः ॥ विशल्याऽतिविषाविषाणिकाशुकनासाऽजगंधागुंजाफलकटुकालाबुभिः पलाशक्षारसुपिष्टैः सुखोष्णो लेपः ॥ वत्सकादिना पंचलवणयुक्तेन सिद्धं तैलं पानं ॥ तीक्ष्णान् वमनादीन् शीलयेत् ॥ पर्यायशः स्वेदः शोणितावसेचनं च ॥ तथाऽनुपशमे पाचयित्वा व्रणवदुभावप्युपचरेत्॥यवान्नमुद्गादियूषांश्च व्योषोत्कटान् पानभोजनयोर्विदध्यात्॥मेदोजे स्निग्धस्य सिरां व्यधेत्॥पूर्वोक्तैः प्रलेपः ॥ प्रातः प्रातश्चासनादिसाररजो गोमूत्रेण पिबेत्॥एवमशांतौ च शस्त्रेण विदार्य मेदो विशोध्य सीव्येत् ॥ दाहयोग्यं वा वसाघृतक्षौद्रान्यतमेन यथावद्दहेत् ॥ रोचनाकासीसतुत्थकचूर्णावचूर्णितं तैलं व्रणशोधनरोपणं ॥ असनादिसारं गोपुरीषरसयुक्तं वा ॥ मुखपाकेषु सामान्यतस्त्रिफलाक्वाथो मधुमान् ॥ अन्ये च तिक्तकटुकषाया मुखधावनाः॥पाठामृद्वीकाजातीमातुलुंगार्जुनपुत्रजीवकपल्लवानामनभ्यवहारताचर्वणं ॥ दारुहरिद्रार्द्धतुलां विंशतिगुणेऽभसि श्रपयित्वा तं क्वाथं सगैरिकमादर्वीप्रलेपात्साधितं क्षौद्रयुक्तं घृतभाजने निदध्यात् ॥ तन्निष्ठीवनं सर्वमुखामयनाडीघ्नं ॥ अयमेव पृथक्कल्पो यष्टीमधुकपटोलीनिंबाटरूषकजातिरोध्रारिमेदत्रिफलाजंबूखदिरत्वचां ॥ यवक्षारभागाः सप्त सुवर्णगैरिकभागद्वयं दूर्वाकटुकातिविषामलकानामेकैको भागस्तत्सर्वं कुंतलाक्षारोदकपिष्टं गुलिकाः कृत्वा खादेन्निष्ठीवेत् ॥ खदिरसारतुलामरिमेदतुलाद्वयं च तोयवहेऽष्टभागावशेषं क्वाथयेदवतारितपरिस्रुतं च पुनराघनीभावात् ॥ घनीभूते शीते च कार्षिकाणि श्लक्ष्णीकृतानि प्रक्षिपेच्चंदनपद्मकोशीरवालकमंजिष्ठाधातकीमुस्तकप्रपौंडरीकमधुकत्रिफलाचतुर्जातकलाक्षानलदलाक्ष्यैशैलरोध्रद्विरजनीसमंगाकट्फलैलेयपत्तंगागुरुगैरिकांजनानि पालिकांश्च जा-

तीफललवंगकंकोलकान् कर्पूरकुडवं च ॥ ता गुलिका वदनस्थाः सर्वान्मुखरोगान् जयंति ॥ सौरभं सौमनस्यं रुचिं च जनयंति ॥ एषामेव च कल्ककषायैस्तैलं साधितं कवले नियुंज्यात् ॥ तत्र वातजे मुखपाके दशमूलकंकोलीरास्नामधुकसारिवाक्वाथेन कुष्टकल्केन च सिद्धं तैलं नस्यं गंडूषश्च स्नैहिको धूमः ॥ पिप्पल्येलालवणोत्तमैः प्रतिसारणं ॥ पैत्तिके क्षीरेक्षुरसद्राक्षारसशर्करोदकैर्गंडूषः ॥ मधुरद्रव्यसिद्धं पयः पानं कवलो नस्यं च ॥ पद्मकसमंगामंजिष्ठारोध्रधातकीविपक्वः सर्पिर्मंडो नावनं ॥ मदयंतिकापत्रैर्निष्ठीवनं ॥ कफजे कटुकक्षारलवणैः प्रतिसारणं ॥ स्थिरासु तु पिटिकासु प्राक् शाकादिपत्रेण लेखनं ॥ मुष्ककपलाशामलकक्षारगोमूत्रैर्गंडूषः ॥ तद्विपक्वं तैलं च ॥ निर्गुंडीफणिज्जार्जकसुरसपत्रैर्निष्ठीवनं ॥ देवदारुपाठाऽतिविषादंतींद्रयवकटुका गोमूत्रेण क्वथिताः कल्किता वा पीताः सर्वकफामयान्निघ्नंति ॥ रक्तजे पित्तवत्सिद्धिः ॥ सर्वजे यथादोषोदयं सेवनं ॥ कासीससौराष्ट्रिकारसांजनानि मोचरसो मधु चैकतो विपक्वं लोहभाजनस्थं कल्कं विशुष्कं चूर्णीकृतं मधुना व्रणलेपं कुर्यात् ॥ सर्वसरमर्बुदमचिरोत्थितमप्रवृद्धं मंडलाग्रेण छित्वा मुष्ककभस्मना मधुमिश्रेण प्रतिसारयेत् ॥ स्वर्जिकाशुंठीचूर्णेन वा ॥ मधु तैलं निंबगुडूचीक्वाथश्च गंडूषः ॥ यवान्नभोजी च तीक्ष्णानि कवलतैलनस्यान्याचरेत् ॥ पूतिमुखं स्निग्धस्विन्नं वामयित्वा शिरोविरेकरूपाचरेत् ॥ ततः स्वर्जिकाहिंगुगृहधूममनःशिलैलाशुंठीविडतेजोवतीभिर्गुलिकाः कृत्वा मधुद्रुता मुखपाकशोधनार्थं दद्यात् ॥ समंगाधातुकिरोध्रपद्मप्रियंगुचूर्णैः सलिलमवचूर्णितं मुखधावनं ॥ शीतादोपकुशोक्तं च कुर्यात् ॥ नस्यधूमकवलांश्च शीलयेदिति ॥ भवंति चात्र ॥ मुखदंतमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः ॥ तस्मात्तेषामसकृद्रुधिरं विस्रावयेद्दुष्टं ॥ कायशिरसोर्विरेको वमनं कवलग्रहाः कटुकतिक्ताः ॥ प्रायः शस्तं तेषां

कफरक्तहरं तथा कर्म ॥ यवतृणधान्यं भक्तं विदलैः क्षारोषितैरपस्नेहाः ॥ यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥ प्राणानिलोपसंस्थाः श्वसितमपि निरुंधते प्रमादवतः ॥ कंठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥ इति मुखरोगप्रतिषेधो नाम षड्विंशोऽध्यायः ॥२६॥

अथातः शिरोरोगविज्ञानं व्याख्यास्यामः ॥ धूमातपतुषारांबुक्रीडातिस्वप्नजागरैः ॥ उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः॥अत्यंबुमद्यपानेन क्रमिभिर्वेगधारणैः ॥ उपधानमृजाभ्यंगद्वेषाधःप्रततेक्षणैः ॥ असात्म्यगंधदुष्टांभोभाष्याद्यैश्च शिरोगताः ॥ जनयंत्यामयान्दोषास्तत्रमारुतकोपतः ॥ निस्तुद्यते भृशं शंखौ घाटा संभिद्यते तथा ॥ भ्रुवोर्मध्यं ललाटं च पततीवातिवेदनं ॥ बाध्येते स्वनतः श्रोत्रे निष्कृष्येते इवाक्षिणी ॥ घूर्णतीव शिरः [illegible] संधिभ्य इव मुच्यते ॥ स्फुरत्यतिसिराजालं कंधराहनुसंग्रहः प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥ मार्दवं मर्दनस्नेहरू [illegible] बंधैश्च जायते ॥ शिरस्तापोऽयमर्द्धे तु मूर्ध्नः सोऽर्द्धावभेदकः ॥ [illegible]क्षात् कुप्यति मासाद्वा स्वयमेव च शाम्यति ॥ अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत् ॥ शिरोभितापे पित्तोत्थे शिरोधूमायनं ज्वरः ॥ स्वेदोऽक्षिदहनं मूर्च्छा निशि शीतैश्च मार्दवं ॥ अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता ॥ सिरानिस्पंदता ऽऽलस्यं रुङ्मंदाऽन्ह्यधिका निशि ॥ तंद्रा शूनाक्षिकूटत्वं कर्णकंडूयनं वमिः ॥ रक्तात् पित्ताधिकरुजः सर्वैः स्यात्सर्वलक्षणः ॥ संकीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ॥ कोपिते सन्निपाते च जायंते मूर्ध्नि जंतवः ॥ शिरसस्ते पिबंत्यस्रं घोराः कुर्वंति वेदनाः ॥ चित्तविभ्रंशजननीर्ज्वरः कासो बलक्षयः ॥ रौक्ष्यशोफव्यधच्छेददाहस्फुरणपूतिताः ॥ कपाले तालुशिरसोः कंडूः शोषः प्रमीलकः ॥ ताम्राच्छसिंघाणकता कर्णनादश्च जंतुजे ॥ वातोल्बणाः शिरः कंपं तत्संज्ञं कुर्वते मलाः ॥ पित्तप्रधानैर्वाताद्यैः शंखे शोफः सशोणि-

तैः ॥ तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ तिक्तास्यः पीतवदनः क्षिप्रकारी स शंखकः ॥ त्रिरात्राज्जीवितं हंति सित्ध्यत्यप्याशु साधितः ॥ पित्तानुबंधः शंखाक्षिभ्रूललाटेषु मारुतः ॥ रुजं सस्पंदनां कुर्यादनुसूर्योदयोदयां ॥ आमध्याह्नं विवर्द्धिष्णुः क्षुद्वतः सा विशेषतः ॥ अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परं ॥ सूर्यावर्तः स इत्युक्ता दश रोगाः शिरोगताः ॥ शिरस्येव च वक्ष्यंते कपाले व्याधयो नव ॥ कपाले पवने दुष्टे गर्भस्थस्यापि जायते॥ सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकं ॥ यथादोषोदयं ब्रूयात्पिटिकार्बुदविद्रधीन् ॥ कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजंतुभिः ॥ कंगुसिद्धार्थकनिभाः पिटिकाः स्युररूंषिकाः ॥ कंडूकेशच्युतिस्त्वापरौक्ष्यकृत्स्फुटनं त्वचः ॥ सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ॥ रोमकूपानुगं पित्तं वातेन सह मूर्च्छितं ॥ प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ रोमकूपान् रुणत्ध्यस्य ततोन्येषामसंभवः ॥ तदिंद्रलुप्तं रुज्यां च प्राहुश्चाचेति चापरे ॥ खलतेरपि जन्मैवं शातनं तत्र तु क्रमात् ॥ सा वातादग्निदग्धाभा पित्तात्स्विन्नसिरावृता॥कफाद्घनत्वग्वर्णांश्च यथास्वं निर्दिशेत्त्वचि ॥ दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा ॥ दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥ शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः ॥ केशान्सदोषः पचति पलितं संभवत्यतः ॥ तद्वातात् स्फुटितं श्यावं खरं रूक्षं ज्वलत्प्रभं ॥ पित्तात्सदाहं पीताभं कफात्स्निग्धं विवृद्धिमत् ॥ स्थूलं सशुक्लं सर्वैस्तु विद्याद्व्यामिश्रलक्षणं ॥ शिरोरुजोद्भवं चान्यद्विवर्णं स्पर्शनासहं ॥ असाध्या सन्निपातेन खलतिः पलितानि च ॥ शरीरपरिणामोत्थान्यपेक्षंते रसायनं ॥ इति शिरोरोगविज्ञानीयो नाम सप्तविंशोऽध्यायः ॥ २७ ॥

अथातः शिरोरोगप्रतिषेधं व्याख्यास्यामः ॥ वातजे शिरोभितापे वातव्याधिविहितं कुर्यात् ॥ निवातस्थं च नक्तमभ्यक्तशिरसं सर्पिः पयोनुपानं तैलं वा पाययेत् ॥ माषान्वा सर्पिष्कानुष्णपयोनुपानान् भक्षयेत् ॥ तद्वद्वा मुद्गान्॥ आनूपपिशितवेसवारेण यवतिलमाषमुद्गकुलत्थकुष्ठदारुहरिद्राऽतसीसैंधवैर्वा महास्नेहवतीमुत्कारिकां दत्वा शिरो वेष्टयेत् ॥ ततः प्रत्यूषे दशमूलसिद्धेन पयसा कवोष्णेन परिषेकं कुर्यात् ॥ तत्सिद्धैश्च पायसैः पिंडस्वेदं लेपं वा ॥ कूर्ममहिषवराहकुक्कुटशल्लकीनां वसा ससैंधवा नस्यं शिरःकर्णपूरणं च ॥ तथैव पंचमूलबलासारिवाद्वयक्वाथे मधुकजीवकर्षभकपुनर्नवगर्भं पयः सर्पिस्तैलं चैकतो विपक्वं ॥ कार्पासमज्जात्वङ्मुस्तसुमनःकोरकाण्युष्णांबुपिष्टानि नावनं शिरोरुजाघ्नं ॥ तद्वत्त्वक्पत्रशर्कराशिग्रुकरंजबीजानि तथा चंदनोत्पलतगरकुष्ठैः सघृतैर्लेपः ॥ देवदारुकुष्ठचोरकयष्टीमधुककमलनीलोत्पलैलाप्रपौंडरीकैश्च॥ कुंकुमशर्करासंस्कृतमाज्यं रक्तपित्तानुबंधे मर्शः॥न चात्र रक्तमवसेचयेद्वातोद्रेकभयात् ॥स्नैहिकं धूमं शिरोबस्तिं च शीलयेत्॥बस्तिकर्म चाचरेत्॥एवमशांतौ वातजे श्लेष्मजे वा यथोक्तो दाहः ॥ अर्द्धावभेदकेऽप्ययमेव विधिः ॥ निर्गुंडीपत्ररसश्च सघृतमंडसैंधवो नस्यं॥ शिरीषमूलफलानि वा॥सारिवोत्पलकुष्ठवचामधुकपिप्पलीभिः सतैलाम्लो लेपः॥अशाम्यति दोषानुबंधमवेक्ष्य प्रतिकुर्वीत॥सूर्यावर्त्तेऽपि तद्वद्विधिः॥ विशेषतस्तु सिरामोक्षः॥पित्तजे रक्तजेऽपि शिरोभितापे स्निग्धस्य सिरां विध्येत्॥कायं च विरेचयेत् ॥ सुशीतैः शतधौतघृतान्वितैः शिरो वक्त्रं च प्रदिह्यात् सिंचेच्च ॥ चंदनसारिवामधुकदूर्वोत्पलप्रपौंडरीकमंजिष्ठाविदारीभिः सक्षीरं सर्पिर्विपाचितं नावनं शिरोबस्तिश्च ॥ जीवनीयविपक्वात्पयसो नवनीतमुद्धृत्य जीवनीयक्वाथकल्काभ्यां पाचितं पानभोजनन-

स्याभ्यंगबस्तिषु प्रणीतं पित्तरक्तजान्सर्वान् विकारान् साधयति ॥ जीवनीयगर्भं षोडशगुणे पयसि सिद्धमाज्यं वा ॥ क्षीरेक्षुजांगलरस-खर्जूरद्राक्षाकसेरुकमृणालसिद्धः सर्पिर्मंडोऽनुवासनं ॥ उत्पलादिवर्ग-शृतं क्षीरमास्थापनं ॥ शंखकं प्रत्याख्यायैवमेवोपचरेत् ॥ विसर्पवच्च ॥ विशेषतस्तु कृष्णतिलशतावरीनीलोत्पलदूर्वापुनर्नवैर्लेपः ॥ कफजे शिरोभितापे लंघयेत् ॥ पुराणसर्पिःस्निग्धं वामयेत् ॥ स्वेदः पिंडेन रूक्षेण शिग्रुनिंबैरंडक्काथेन वा नाडीस्वेदेन वा देवकाष्ठकुष्टशार्ङ्गेष्टासरलरोहिषैः सलवणैः सुखोष्णैरालेपः ॥ यवचूर्णमधुकचंदनहरिद्राकुष्टप्रियंगुशतपुष्पादेवदारुभिस्तैलाजक्षीरयुक्तैः ससैंधवैरुपनाहः ॥ विडंगतैलं नस्यं सार्षपं वा ॥ तदेव व्योपसिद्धं ॥ मधुकसारकल्को वा मधुयुतस्त्वग्वा मेषशृंग्या वा इंगुदस्य वा ॥ एभिरेव धूमवर्त्तिः ॥ शिरोविरेचनद्रव्यैर्वा सूत्रस्थानोक्तैः प्रधमनं ॥ तैरेव पक्कं तैलं प्रतिमर्शो वा ॥ शिरोविरेचनांते कर्णनादोक्तं स्नेहनस्यं ॥ तीक्ष्णाः कवलाः॥ मनःशिलानलदतुत्थकासीसचूर्णः ससर्पिष्को धूमः ॥ कट्फलचूर्णस्य मुहुर्मुहुराघ्राणं ॥ सन्निपाते व्यामिश्रो विधिः ॥ कृमिजे दुरालभासुरदारुरोहिषपूतीकत्रिफलाकट्फलवचात्रिकटुकैरजामूत्रयुक्तं सर्पिः पानं ॥ उपस्निग्धस्विन्नस्य देवदारुपूतीककटभीसर्षपविडंगतिलकंटकविपक्केन तैलेन शिरः कर्णौचाभ्यज्य स्वेदयेत् ॥ ततः कृमिमूर्च्छनार्थमसृक् नस्तो ऽवसेचयेत् ॥ ततो रुधिरगंधमदेन प्रविसृताः सप्तच्छदत्वग्रसेन वा पुष्परसेन वाऽनंतरं निषिक्तेन तैलेन शिरः कर्णौचाभ्यज्य कृमयः पतंति ॥ सरलदेवदारुकट्फलसर्षपापामार्गक्षवककटुकालाबुकरसबीजपिप्पलीतंदुलकल्कचूर्णस्तत्पक्कं वा तैलं सद्यः कृमीन्निरस्यति ॥ विडंगतंदुला वाजिमूत्रपिष्टाः शिरीषबीजानि छागमूत्रपिष्टानि पुष्करमध्यबीजानि वा॥ गोमांसेन छागमांसेन वा पिष्टेन यवागूं कृत्वा शिरो विलेपयेत् ॥ ततो निंबार्कवंशसुरसकटुकंकरंजक-

रवीरपत्रक्वाथेन सेचयेत् ॥ अजामूत्रेण वा कवोष्णेन पूतिमत्स्ययुताश्च धूमाः ॥ एवं कृमिषूपगतेषु तेजोवतीपूतिकबिंबीसुरसनक्तमालविडंगहरीतकीसर्षपार्ककरवीरमूलमालतीदेवदारुक्षवकमुस्तफणिज्जकपिप्पलीशतपुष्पामधुकनिंबसारकल्कैरजामूत्रयुतैः सर्षपतैलमैंगुदं पैलुकं वा विपक्वं युक्त्या नावनं ॥ न तु जातु रुधिरमवसेचयेत् ॥ जंतुभिः पीतशोणिते हि शिरसि पुनरस्रावसेकादकांडे मृत्युः स्यात् ॥ कृमिचिकित्सितं चेक्षेत ॥ शिरःकंपमक्षीणस्यान्यव्याध्यनुपद्रुतस्य दाहवर्जं मारुतविधानेनोपक्रमेत ॥ उपशीर्षके जन्मोत्तरकालजातोत्थिते वातव्याधिविहितं स्नेहं पाननावनाभ्यंजनेषूपयोजयेत् ॥ अभ्यक्तं च स्वेदयित्वोपनाहयेद्यथा विदाहो न भवति ॥ विदाहे विद्रधिवत्कर्म ॥ पिटिकार्बुदविद्रधिषु यथास्वमाचरेत् ॥ व्रणीभूतासु पिटिकासु निंबनिशामधुकधात्रीफलैर्विपक्वं तैलं शोधनरोपणं ॥ मूर्वाचंदनसारिवाधातकीकांतारोध्रमधुकसमंगापद्मकेसरशतपर्वकमूलैर्वा ॥ विद्रधिष्वेभिरेव च सिद्धं सर्पिर्नस्यं ॥ रूढे तु विद्रधौ यदि त्वक् सुप्तेव भवति ततो वामयेत् ॥ उपस्निग्धं च विरेचयेत् ॥ अरुंषिकासु जलौकोपहृतशोणितं शिरः क्षुराघृष्टं वा निंबोदकेन परिषिच्याश्वशकृद्रसेन लवणप्रगाढेन लेपयेत् ॥ किंचित्कालं स्थितं चोष्णोदकाम्लकांजिकान्यतरधौतं विडंगव्योषलाक्षाऽगारधूममनोह्वाऽलवचारसांजनहरिद्राद्वयैरालिंपेत् ॥ तिलमष्या वा स्नुक्क्षीरयुक्तया मधुकोत्पलतिलैरेंडमार्कवपत्रैर्वा शिग्रुमूलकसर्षपबीजैर्वा गोमूत्रपिष्टैर्वालुकामलकनागरैर्वा क्षीरपिष्टैः शिरीषत्वग्यष्टीमधुकाभ्यां वा पुराणपिण्याककुक्कुटपुरीषाभ्यां वा ॥ कपालभृष्टकुष्टचूर्णं तैलयुक्तं कंडूक्लेददाहवेदनाघ्नं ॥ इंद्रलुप्तोक्तं चित्रकादितैलमभ्यंजनं ॥ दंतीपाठाकोशातकीचित्रकातिविषासहालांगलकीसिद्धं तैलं व्रणाभ्यंगः ॥ मनःशिलैलहरितालपिप्पलीकुष्टकासीसहरिद्राकरंजमुस्त-

नगरविडंगचित्रकसिद्धार्थककरवीरमूलचूर्णगर्भं तैलमादित्यपाकं व्रणरोपणं ॥ एवमनुपशमे वमनधूमशिरःकायविरेकान्कुर्यात् ॥ दारुणके ललाटसिरां व्यध्येत् ॥ अभ्यंगस्नाननावनानि शीलयेत् ॥ पियालबीजमधुककुष्टमाषसर्षपैः सक्षौद्रैर्लेपः ॥ कोद्रवतृणक्षाराम्भःप्रक्षालनं ॥ इंद्रलुप्ते यथासन्नं सिरां विध्वा कासीसमनःशिलामरिचैर्लेपयेत् ॥ भद्रादारुकुटन्नटाभ्यां वा ॥ चित्रककरवीरनक्तमालमालतीसिद्धेन वा तैलेनाभ्यज्यात् ॥ अवगाढपदं वा सूचीकूर्चकेन प्रच्छाय भूयो भूयः प्रदिह्यात् ॥ कपोतवंकामूलेन लांगलिकामूलेन वा माहिषक्षीरपिष्टेन घृतलिप्तमैरंडपत्रावच्छादितं रात्रिमुषितं माहिषनवनीतेन लिंपेत्॥मार्कवपत्रसहचरपुष्पपक्ववार्ताकफलैस्तैलं पक्वं क्षौद्रांजनयुक्तमालेपः॥सक्षौद्रो वा क्षुद्रवार्ताकरसो जलशूको वा॥लाक्षारसाक्तेन गोशकृता वा घृष्टा ऽरुष्करसेनालिप्तमंतर्धूमदग्धं कूर्मप्पवचूर्णयेत् ॥ कूर्मकपालभस्मना वा सुरसारसाक्तेन प्रदिह्यात् ॥ ॥ हस्तिदंतमष्या वा तैलान्वितया पूतीककरंजपत्राणि वा ससैंधवानि लेपः ॥ पिप्पल्यंजनरसांजनबाकुचिकाफललोहरजांसि वा गोमूत्रपिष्टानि ॥ खलतिविहितानि चाचरेत् ॥ सलिलसेकमारोमोद्गमात् परिहरेत् ॥ खलताविंद्रलुप्तोक्तः क्रमो यथादोषं च संशुद्धिः ॥ त्रिफलार्जुनसैर्यकत्वक्पुष्पकृष्णापिंडीतकफलमूलोत्पलनीलीलोहचूर्णकासीसजंबुमार्कवबीजमंजिष्ठामेषशृंगीखदिररजः सकर्दममर्दितोक्तामुतैलयुक्तमसनसारसंपुटे न्यस्तं कर्दमे मासं निखातस्थितमुद्धृतं सूचीकूर्चप्रच्छितायाः खलतेर्लेपः परं रोमसंजननं ॥ रक्ताश्मिमंथपुष्करककिंशुकतालमूलमधुकहस्तिदंतभस्मान्यविक्षीरपिष्टानि लेपः ॥ जंबूत्वक्पत्रद्वयमधुकभृंगरजस्त्रिफलाश्लेष्मातकमंजिष्ठाफणिज्जकबलाद्राक्षाजशृंगीचपलाऽतिविषाकंकोलकल्केन क्षीरिद्वक्ष-

१ पिंडीतकफलमूलं मदनफलमूलं

काथेन च तैलमक्षतैलं साधयेत् ॥ तन्नस्येऽभ्यंगे च युंज्यात् ॥ एवमेव मधुरवर्गकल्केन ॥ खलतिपलितयोश्च प्रयोगान् परस्परं विदध्यात् ॥ अकालपलितेषु वातादीनपेक्ष्य स्नेहस्वेदसंशोधनास्रविस्रावणानि कुर्यात् ॥ ततोऽस्यार्दितप्रोक्तमणुतैलं नस्येऽभ्यंजने च ॥ मधुकामलकमाक्षिकैः केशमूलानि लिंपेत् ॥ तिलामलकक्षौद्रतैलैर्वा तुत्थकाभ्रजंब्वस्थिकासीसकिट्टशर्कराभिर्वा सैर्यकपुष्पनीलीत्रिफलाभृंगरजोभिर्वा कृष्णाजमूत्रपिष्टैः॥असनपुष्पपत्रमयःपात्रे बहिरामलककल्कप्रदिग्धे निहितमक्षतैलं सिद्धमयःपात्रे पूर्ववत्स्थितं समानं पूर्वेण ॥ रामतरणीमूलपलद्वयं यष्टीमधुकपलं शर्कराद्धपलमेकत्र जर्जरीकृतमक्षतैलपलैर्दशभिराप्लुतं लोहभाजने दशाहं दिवसकरकरप्रतप्तं नावनात् पलितघ्नं सर्वेंद्रियदार्ढ्यावहं च ॥ कृष्णतिलतिलपर्णीत्रिफलामधुककासीसपद्मकर्दमं मांसीमार्कवासनपुष्पपत्रस्वरसपिष्टं त्रिरात्रमयःपात्रे स्थापयेत् तेन पूर्वोक्तरसद्रुतेन पद्मिनीकर्दमेन प्रलिप्तधौतान्केशान्कपालं च लेपयेत् ॥ ततः पद्मिनीपत्रैः प्रच्छाद्य कौशेयमयेन वेष्टयेत् ॥ तृतीयेऽहनि प्रक्षाल्यैवमेव कुर्यात् ॥ एवमलिकुलनीलाः केशाः शिरो विभूषयंतीति ॥ भवंति चात्र ॥ खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितं ॥ नस्यवक्त्रशिरोभ्यंगप्रदेहैः समुपाचरेत् ॥ सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनं ॥ क्षीरात्सहचराद्भृंगरजसः सौरसाद्रसात् ॥ प्रस्थस्तैलस्य कुडवो यष्टीमधुपलान्वितः ॥ सिद्धः शैलासने भांडे शृंगे वा मेषस्य वा स्थितः ॥ नस्यं स्यात्क्षीरपिष्टौ वा दुग्धिकाकरवीरकौ ॥ उत्पाट्य पलितं देयावाशये[1] पलितापहौ॥आदित्यवल्या मूलानि कृष्णासैरेयकस्य च ॥ फलं कृष्णशणात्पत्रं सुरसायष्टिमार्कवं ॥ सुराह्वं काकमाची च पृथक् दशपलांशकं ॥ प्रपौंडरीकमंजिष्ठारोध्रकृष्णा-

---

1 आशये तत्स्थाने

गुरूत्पलं ॥ अम्रास्थि कर्दमः कृष्णो मृणाली रक्तचंदनं ॥ नीलीभल्लातकास्थीनि कासीसं मदयंतिका ॥ सोमराज्यसनात्पुष्पं कृष्णं पिंडीतचित्रकौ ॥ पुष्पाण्यर्जुनकाश्मर्यादाम्रजंबूफलांजनं ॥ प्रत्येकं पंचपलिकं पिष्टं सत्रिफलाकणं ॥ अक्षतैलाढकं तेन पचेद्धात्रीरसार्मणे ॥ कुर्यादादित्यपक्कं च यावद्भक्तो भवेद्रसः ॥ लोहपात्रे ततः पूतं महानीलं प्रयोजितं ॥ तत्पाने नावनेऽभ्यंगे शुद्धस्य नियतात्मनः ॥ सर्वजत्रूर्ध्वरोगघ्नं पलितघ्नं विशेषतः ॥ एभिरेव च भैषज्यैः शिरोवक्रं प्रलेपयेत् ॥ क्षीरं प्रियालं यष्ट्याह्वं जीवनीयो गणस्तिलाः ॥ कृष्णाप्रलेपो वक्रस्य हरिल्लोमावलीहितः ॥ तिलाः सामलकाः पद्मकिंजल्को मधुकं मधु ॥ बृंहयेद्रंजयेच्चैतत्केशान्मूर्ध्नः प्रलेपनात् ॥ पचेत्सैंधवशुक्ताम्लैरयश्चूर्णं सतंदुलं ॥ तेनालिप्तं शिरः शुद्धमस्निग्धमुषितं निशं ॥ तत्प्रातस्त्रिफलाधौतं स्यात्कृष्णस्निग्धमूर्द्धजं ॥ अयश्चूर्णोऽम्लपिष्टश्च रागः सत्रिफलो वरः ॥ नीलीपत्रसुनिंबबीजमधुकश्रेष्ठावचामार्कवाच्चूर्णं छागलगव्यमाहिषपयःस्नेहेन संप्लावितं ॥ पात्रे स्थापितमायसे क्षितितले मासं निधायोद्धृतं पालित्यं खलतिं च दर्पणनिभां हंत्येतदभ्यंजनात् ॥ बीजैः श्लेष्मातकस्य व्यपशमिततुषैः कांजिकश्लक्ष्णपिष्टैर्यल्लिप्ताल्लोहदंडाद्दिनकरकिरणैस्तापितात्प्रच्यवेत ॥ तत्तैलं केशकार्ष्ण्यं जनयति परमं नावनाभ्यंजनाभ्यां मूर्द्धघ्राणाक्षिदंतश्रवणगलरुजं हंति निःशेषतश्च ॥ बलामधूकमधुकविदारीचंदनोत्पलैः ॥ जीवकर्षभकद्राक्षाशर्कराभिश्च साधितः ॥ प्रस्थस्तैलस्य सक्षीरो जांगलार्द्धतुलारसे ॥ नस्यं सर्वोर्ध्वजत्रूत्थवातपित्तामयापहं ॥ मयूरं पक्षपित्तांत्रपादविट्तुंडवर्जितं ॥ दशमूलबलाराम्नामधुकैस्त्रिफलैर्युतं ॥ जले पक्त्वा घृतप्रस्थं तस्मिन्क्षीरसमं पचेत् ॥ कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगनुत् ॥ तदभ्यासीकृतं पानबस्त्यभ्यंजननावनैः ॥ एतेनैव कषायेण घृतप्रस्थं

विपाचयेत् ॥चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ॥ जीवंतीत्रिफलामेदामृद्वीकर्द्धिपरूषकैः॥ समंगाचविकाभार्ङ्गीकाश्मरीकर्कटाव्हयैः॥ आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ॥ मृणालबिसखर्जूरयष्टीमधुकजीवकैः ॥ शतावरीविदारीक्षुबृहतीसारिवायुगैः ॥ मूर्वाश्वदंष्ट्रर्षभकशृंगाटककसेरुकैः ॥ रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करैः ॥ पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः ॥ जीवंतीत्रिफलामेदामृद्वीकाद्विपरूषकैः ॥ मधुकाक्षोडवातामम्मुंजाताभिषुकैरपि ॥ महामायूरमित्येतन्मयूरादधिकं गुणैः ॥ धात्विंद्रियस्वरभ्रंशश्वासकासार्दितापहं ॥ योन्यसृक्शुक्रदोषेषु शस्तं वंध्यासुतप्रदं ॥ आखुभिः कुक्कुटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ जत्रूर्ध्वजानां व्याधीनामेकात्रिंशं शतद्वयं ॥ परस्परमसंकीर्णं विस्तरेण प्रकाशितं ॥ उर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ॥ मूलप्रहारिणस्तस्माद्रोगांश्छीघ्रतरं जयेत् ॥ सर्वेंद्रियाणि येनास्मिन् प्राणा येन च संस्थिताः ॥ तेन तस्योत्तमांगस्य रक्षास्ववहितो भवेत् ॥ इति शिरोरोगप्रतिषेधो नामाष्टाविंशोऽध्यायः ॥ २८॥ इतिचतुर्थमूर्ध्वांगमंगं संपूर्णं ॥ ४ ॥

अथातो व्रणविभक्तिविज्ञानीयमध्यायं व्याख्यास्यामः ॥यावदायुर्व्रणयति वा शरीरमिति व्रणः ॥ स द्विविधो निज आगंतुश्च ॥ तत्र निजो दोषसमुत्थः ॥ आगंतुः शस्त्रानुशस्त्रोपललकुटनखदशनविषाणविषारुष्करादिनिमित्तः॥सोऽपि पुनर्वातादि भिरधिष्ठितो निजतां लभते॥पुनश्च द्वेधा दुष्टः शुद्धश्च॥ तत्र दोषदूषितो दुष्टः॥तस्य सामान्यलिंगमतिसंवृतमतिविवृतमतिमृदुकठिनात्युत्सादावसादातिशीतोष्णभावोऽतिरक्तकृष्णपांडुता पूतिमांससिरास्नायुप्रतिच्छन्नत्वं पूतिपूयास्रावः सोत्संगता दाहपाककंडूश्वयथुवेदनासंरंभपिटिकोपद्रुतत्वं दीर्घकालानुबंधश्च ॥ विशेषतस्तु पंचदशधा प्रतिभिद्यते ॥ तत्र श्यावोऽ-

रुणः कृष्णो भस्मास्थिकपोतगुडान्यतमवर्णो वा दधिमस्तुक्षारांबुमांस-
धावनपुलाकोदकनिभोऽल्पस्रावो रूक्षश्चटचटायनशीलोऽकस्माद्विवि-
धशूलस्फुरणायामतोदभेदस्वापबहुलो निर्मांसश्च वातात् ॥ क्षिप्रजः
पीतनीलहरितकृष्णकपिलपिंगलो गोमूत्रभस्मशंखकिंशुकोदकमार्द्वी
कतैलाभोष्ण भूरिक्लेदो दाहोषाज्वररागपाकावदरणधूमायनान्वितः क्षा
रोक्षितक्षतोपमः पिटिकाजुष्टश्च पित्तात् ॥ स्निग्धः स्थूलोष्ठः पांडु-
श्चंडकंडूर्नवनीतवसामज्जपिष्टतिलनारिकेलांबुसदृशश्वेतः शीतबहलपि
च्छिलक्लेदः स्वापस्तंभस्तैमित्यगौरवोपदेहयुक्तः सिरास्नायुजालावततो
मंदवेदनः कठिनश्च कफात्॥प्रवालनिचयदलप्रकाशरक्तः कृष्णस्फो-
टपिटिकाजालोपचितो वाजिस्थानगंधः सरक्तपूयस्रावी पित्तलिंगश्च
रक्तात्॥यथास्वलिंगसंकरे द्वाभ्यां त्रिभिः सर्वैश्च दुष्टं विद्यात्॥अपिच
॥घृतमंडाभो मत्स्यधावनगंधिर्मृदुर्विसर्पी कृष्णोष्णपूयश्च पित्तरक्ता-
भ्यां[1] ॥ वातादिभिरेव च व्रणस्यानधिष्ठानं शुद्धिः॥तत्र यथोक्तदुष्ट-
लिंगाभावात् संरंभरहितत्वं जिव्हावर्णता शुक्लत्वं नीरुजत्वं निरास्रा-
वता श्यावपर्यंतत्वं समौष्ठमध्यत्वं किंचिदुन्नतमध्यता वा ॥ त्वङ्मां-

---

१ अत्र पित्तरक्तजव्रणस्यैव विशिष्टं लक्षणं दृश्यते अन्यानि द्वंद्वजादिव्रणानां वि-
शिष्टलक्षणानि न दृश्यंते तानि लेखकप्रमादाद्गलितानि भांति ॥ सुश्रुते तु तानि सर्वाण्युक्ता
नि ॥ तान्यथा ॥ तोददाहधूमायनप्रायः पीतारुणाभासस्तद्वर्णस्रावी चेति वातपित्ताभ्याम्
॥ कंडूयनशीलः सनिस्तोदो दारुणो मुहुर्मुहुः शीतपिच्छिलस्रावी चेति वातश्लेष्मभ्या-
म् ॥ गुरुः सदाह उष्णः पीतः पांडुस्रावी चेति पित्तश्लेष्मभ्याम् ॥ रूक्षस्तनुस्तोदबहु
लः सुप्त इव च रक्तारुणाभस्तद्वर्णस्रावी चेति वातशोणिताभ्याम् ॥ घृतमंडाभो मीनधाव-
नतोयगंधिर्मृदुर्विसर्प्युष्णकृष्णस्रावी चेति पित्तशोणिताभ्याम् ॥ रक्तो गुरुः पिच्छिलः कं
डूप्रायः स्थिरः सरक्तपांडुस्रावी चेति श्लेष्मशोणिताभ्याम् ॥ स्फुरणतोददाहधूमायनप्रायः
पीततनुरक्तस्रावी चेति वातपित्तशोणितेभ्यः ॥ कंडूस्फुरणचुमचुमायनप्रायः पांडुघनरक्ता
स्रावी चेति वातश्लेष्मशोणितेभ्यः ॥ दाहपाकरागकंडूप्रायः पांडुघनरक्तास्रावी चेति श्ले
ष्मपित्तशोणितेभ्यः ॥ त्रिविधवर्णवेदनास्रावविशेषोपेतः पवनपित्तकफेभ्यः ॥ निर्दहन
निर्मथनस्फुरणतोददाहपाकरागकंडूस्वापबहुलो नानावर्णवेदनास्रावविशेषोपेतः पवनपि-
त्तकफशोणितेभ्यइति ॥

ससिरास्नायुसंध्यस्थिकोष्ठमर्माण्यष्टौ व्रणाशयः ॥ आश्रयविशेषा च्चास्रावविशेषः ॥ तत्र घृष्टासु भिन्नासु वा त्वक्षु स्फोटेषु वा भिन्नेषु सलिलप्रकाशो भवत्यास्रावः किंचिद्विस्रः पीतावभासश्च ॥ मांसगतः सर्पिःप्रकाशो बहलपिच्छिलश्च ॥ सिरागतस्तु सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः ॥ पक्कासु च तोयनाडीभिरिवांभसः पूयस्यागमनं ॥ स च तनुर्विच्छिन्नः पिच्छिलोऽवलंबी श्यावश्च ॥ स्नावगतः स्निग्धो घनः सिंघाणकप्रतिमः सरक्तश्च ॥ संधिगतः समंतात्पीड्यमानो न प्रवर्त्ततेऽथवा कुंचनप्रसारणोन्नमनविनमनप्रवाहणेषु स्रवति पिच्छिलोऽवलंबी रुधिरोन्मिश्रश्च ॥ अस्थि त्वभिहतं स्फुटितं भिन्नं दोषावदारितं वा दोषभक्षितत्वान्निःसारं भवत्यास्रावश्चात्र मज्जमिश्रः सरुधिरः स्निग्धश्च ॥ कोष्ठाश्रितस्तु व्रणो मूत्रपुरीषरुधिरपूयोदकानि स्रवति॥मर्मगतस्तु नोच्यते ॥ त्वगादिष्वेवांतर्गतत्वात् ॥ तेषु यथापूर्वं सुखसाध्यत्वं ॥ तथाऽऽयतश्चतुरस्रो वृत्तस्त्रिपुटकश्च व्रणः ॥ शेषास्तु विकृताकृतयो दुरुपचारास्ते च प्रायशो भवंत्यागंतवः ॥ स्वयं विदीर्णाश्च दोषजा न तु वैद्यकृताः ॥ वयस्थानां दृढानां प्राणवतां सत्ववतां दीप्ताग्नीनां च व्रणाः सुचिकित्स्याः ॥ तत्र वयस्थानां प्रत्यग्रधातुत्वादाशु व्रणसंरोहो भवति ॥ दृढानां स्थिरबहुमांसत्वाच्छस्त्रमवचार्यमाणं सिरास्नाय्वादीन्न प्राप्नोति ॥ प्राणवतां वेदनाहारविहारयंत्राणादिभिर्न ग्लानिः ॥ सत्ववतां दारुणैरपि क्रियाविशेषैर्न व्यथा भवति ॥ दीप्ताग्नीनामप्रक्लिन्नदेहत्वात्प्रकृतितश्चाप्रक्लेदशरीराणां तद्विधयोश्च देशकालयोरास्रावदौर्गंध्याभावादाशु विशुद्धेन मांसेनानुपद्रवमापूरणं ॥ एतएव गुणा वृद्धकृशाल्पप्राणभीरुमंदाग्निप्रक्लेददेशकालेषु विपरीताः ॥ शिष्योपनयनीयं चेक्षेत ॥ तथा स्फिक्पायुप्रजननललाटगंडौष्ठपृष्ठकर्णफलकोशोदरजत्रुमुखाभ्यंतरस्थाः सु-

खरोपणीयाः ॥ विपरीतास्त्वक्षिदंतनासाऽपांगश्रोत्रनाभिजठरसेवनी-नितंबपार्श्वकुक्षिवक्षःकक्षास्तनसंधिविभागगताः सफेनपूयरक्तानिल वाहिनोऽतःशल्याश्चाधोभागाश्चोर्ध्वभागनिर्वाहिणो रोमांतोपनखमर्म-जंघास्थिश्रिताश्च॥भगंदरश्चांतर्मुखः सेवनीकटयस्थिसंश्रितः॥अपिच ॥ कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनां ॥ व्रणाः कृच्छ्रेण सि-ध्यंति येषां च स्युर्व्रणे व्रणाः ॥ याप्यास्त्ववपाटिकानिरुद्धमणिरुद्धगु दव्रणग्रंथिप्रभृतयः सर्वास्थिगताश्च ॥असाध्याः पुनर्मांसपिंडवदुद्गताः-प्रसेकिनोऽतःपूया वेदनावंतश्चापानवदुद्वृत्तौष्ठाः कठिना गोशृंगवद्गतप्र-रोहा दुष्टशोणितास्राविणस्तनुपिच्छिलास्रावस्राविणो वा मध्योन्नताः समवसन्नसुषिरपर्यंताः शणतूलवत्स्नायुजालवंतो दुर्दर्शा मेदोमज्जव-सामस्तुलुंगस्राविणश्च दोषसमुत्थाः ॥ पीतासितमूत्रपुरीषवातवा-हिनश्च कोष्ठस्थाः ॥ रक्ताशयजाश्च क्षारोदकसमास्रावाः ॥ तथा ऽऽमाशयजाः कलायांभोनिभास्रावाः पक्वाशयजाश्च पुलाकोदकमिव-निःस्रवंतः ॥ क्षीणमांसानां च सर्वतो गतयस्त्वणुमुखामांसबुद्बुद-वंतः ॥ सशब्दवातवाहिनश्च शिरःकंठस्थाः ॥ विसर्पज्वरपिपासारो-चकाविपाककासश्वासातीसारछर्दियुक्ता भिन्ने च शिरःकपाले मस्तु-लुंगदर्शनं त्रिदोषलिंगप्रादुर्भावो वा स्यादिति ॥ भवंति चात्र ॥ स्नायुच्छेदात् सिराछेदाद्गांभीर्यात्क्रिमिभक्षणात् ॥ अस्थिभेदात्सशल्य-त्वात्सविषत्वादतर्कितात् ॥ मिथ्याबंधादतिस्नेहाद्रौक्ष्याद्रोमादिघट्ट-नात् ॥ क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ॥ मद्यपाना-द्दिवास्वप्नाद्व्यवायाद्रात्रिजागरात् ॥ व्रणो मिथ्योपचाराच्च नैव सा-ध्योऽपि रोहति ॥ कपोतवर्णप्रतिमा यस्यांताः क्लेदवर्जिताः ॥ स्थि-राश्च पिटिकावंतो रोहतीति तमादिशेत् ॥ इति व्रणविभक्तिविज्ञानी-यो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

अथातो व्रणप्रतिषेधं व्याख्यास्यामः ॥ व्रणस्य शोफावस्थायां शस्त्रकर्मविधौ श्वयथुचिकित्सिते च साधनमुपदिष्टं यथायथं ॥ अवेक्ष्य दोषप्राणादीन्कर्त्तव्यमपसर्पणं ॥ रागसंरंभरहिताः परिम्लानहताश्रयाः ॥ सद्यः शाम्यंति शुद्धानां व्रणाः शोफाश्च देहिनां ॥ लेपाभ्यंगपरीषेकान् यथोक्तांश्च प्रयोजयेत् ॥यथांऽबुभिः सिच्यमानः शांतिमग्निर्नियच्छति॥दोषाग्निरेवं सहसा प्रलेपाद्यैः प्रयोजितैः ॥प्रतिलोममेव चानुलिंपेन्नानुलोमं तथाह्यौषधं सम्यगवतिष्ठते॥अनुप्रविशति च रोमकूपान्॥ न तु शुष्यदुपेक्षितव्यमन्यत्र पीडयितव्यात्॥शुष्कं हि दाहोषारागश्यावत्वशूलानि वर्द्धयति॥स तु शीतस्तनुर्मुहुर्मुहुश्च प्रयुज्यते ॥ स प्रदेहो रक्तपित्तत्वचां प्रसादकृत् ॥ प्रलेपस्तूष्णः शीतो वा बहलश्च ॥ तथा वातश्लेष्मप्रशमनस्तस्योपयोगः क्षताक्षतेषु ॥ यस्तु क्षतेषूपयुज्यते स भूयः कल्क इति संज्ञां लभते ॥ दशविधश्च समासादालेपः ॥ स्नैहिको निर्वापणः प्रसादनः स्तंभनो विलयनः पाचनः पीडनः शोधनो रोपणः सवर्णीकरणश्च ॥ तत्र वाते स्निग्धद्रव्यैः स्नेहाढ्यैः स्नेहेनैव वा स्नैहिकः ॥ पित्ते प्रायशश्च शोफे विषाग्निक्षारदग्धे च शीतैर्निर्वापणः ॥ स एव वातदुष्टे रक्ते प्रसादनः ॥ स एव च पुनरस्रातिप्रवृत्तौ संस्तंभनसंज्ञः॥ श्लेष्ममेदोभूयिष्ठे शीतैश्चाविदग्धे विष्टब्धे ग्रथिते वा रूक्षैर्विलयनः ॥ तैरेव च विदग्धे पाचनः ॥ सूक्ष्मास्ये व्रणे रूक्षैः पिच्छिलैश्च पीडनः ॥ अशुद्धे यथास्वमुपदिष्टैः शोधनः॥ शुद्धे रोपणः ॥ रूढे च सवर्णीकरणः॥नामभिरेव चैषां स्वरूपमाख्यातं॥ न च प्रदेहं रात्रौ प्रयुंजीत॥माभूच्छैत्यपिहितस्योष्मणो बहिरनिःसरणाद्विकारपरिवृद्धिः॥ पुष्कलावर्त्तस्तु पठति ॥ तमसा च हतो ह्यूष्मा रोमकूपैरनावृतैः ॥ लेपाद्विनैव निर्याति रात्रौ नालेपयेदतः ॥ न च पर्युषितं लेपं दद्यान्नूयस्तमेव वा ॥ ह्यम्लः पर्युषितो हि स्याद्भ्रष्टवीर्यस्तथोत्तरः ॥ शोफे

व्रणे च कठिने विवर्णे वेदनान्विते ॥ सविषे च विशेषेण जलौकाद्यै-र्हरेदसृक् ॥ वेदनायाः प्रशांत्यर्थं पाकस्याप्राप्तयेऽपि च॥निर्वापणान् पुनश्चात्र न्यग्रोधाद्यैः सुशीतलान् ॥ कुर्यात्प्रदेहसेकादीन्सघृतक्षीरश-र्करान् ॥ न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः ॥ प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परं ॥ प्रदेहःससितस्तद्वत्सक्तवो मधुकं घृतं ॥ वातो-ल्बणानां स्तब्धानां कठिनानां महारुजां ॥ स्रुतासृजां च शोफानां व्रणानामपि चेदृशां ॥ ग्राम्यानूपौदकामिषवेसवारकृशरापायसोत्का-रिकाभिः स्वेदो योज्यः ॥ सदाहशूलांस्तु तिलानतसीं च भृष्ट्वा प-यसि निर्वाप्य तेनैव क्षीरेण पिष्ट्वा प्रलेपयेत् ॥ कालामधुकपृश्निप-र्णीछिन्नरुहाभीरुजीवंतीशर्करामदनक्षीरमहास्नेहसिद्धोत्कारिका क-वोष्णा शूलदाहहरा ॥ तद्वन्मधुकयवचूर्णतैलसर्पिर्भिः कोष्णस्तु लेपः ॥ तथा सतिलो मुद्गपायस उपनाहः ॥ दशमूलसिद्धेन सुखो-ष्णेनांभसा पयसा वा घृततैलाभ्यां वा परिषेकः शोफे व्रणे वा दा-हशूलघ्नः ॥ स्थिराणां मंदवेदनानां शोफानां विम्लापनं कार्यं ॥ अ-भ्यज्य स्वेदयित्वा च वेणुनाड्या शनैः शनैः॥विम्लापनार्थं मृद्नीयात्त-लेनांगुष्ठकेन वा ॥ तथाऽऽस्फोतपत्रमसूरकल्केनालेपः ॥ सुसिद्ध-पिष्टैः सघृतमधुगोधूमयवमुद्गैर्वा लेपादाविलीयते ॥ सचेन्नैवं विलीयेत ततस्तमुपनाहयेत् ॥ अविदग्धस्तथा शांतिं विदग्धः पाकमश्नुते ॥ शिग्रुशणफलचित्रककिण्वनिष्पावसर्षपतिलातसीसक्तुकोलगृहधूमैर-म्लपिष्टैः सुखोष्णैः स्निग्धैः सलवणैरुत्कारिकां कृत्वा तया प्रलिप्तैरं-डपत्रेणाच्छाद्य बध्नीयात् ॥ पाकाभिमुखे च शोफे यथेष्टमातुरं भो-जयेत् ॥ पाचनार्थं पाकवेदनाशस्त्रकर्मसहनार्थं च ॥ पक्के तु यथो-क्तेन विधिना शस्त्रमवचारयेत् ॥ सुपक्के पिंडिते शोफे पीडनैरुपपी-डिते ॥ दारणं दारणार्हस्य दोषपाकाद्दते हितं ॥ चित्रकचिरबिल्वदं-

१ सुकुमारस्य चेष्यते इत्यष्टांगहृदये पाठः

तीकरवीरमूलकपोतकगृध्रपुरीषैर्गुग्गुल्वतसीस्नुहीक्षीरपलाशक्षारस्नुवर्ण क्षीरीदक्षशकृन्मुकुलकैर्वा क्षारेणैव वा॥ पूयगर्भानणुद्वारान्सोत्संगान्म-र्मगानपि॥निःस्नेहैः पीडनद्रव्यैः समंतात्प्रतिपीडयेत्॥शुष्यंतं समुपेक्षेत प्रलेपं पीडनं प्रति॥ न मुखे चैनमालिंपेत्तथा दोषः प्रसिच्यते॥कलाय यवगोधूममाषमुद्गहरेणवः॥द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपी-डनं॥विवर्णान् पिच्छिलान् पूतिगंधीन् क्लेदरुजावतः॥व्रणानशुद्धान्वि-ज्ञाय शोधनैरेभिराचरेत् ॥ शंखिन्यंकोलसुमनाकरवीरसुवर्चलाः॥ त्रिफला खदिरो दार्वी कोलपत्रं बलांकुराः ॥ प्रक्षालने कषायाणि-वर्गश्चारग्वधादिकः॥ पटोलीतिलयष्ट्याह्वत्रिवृद्दंतीनिशाद्वयं ॥ निं-बपत्राणि चालेपः सपटु व्रणशोधनः ॥ अजगंधा ऽजशृंगी च गवाक्षी लांगली निशा ॥ पूतिकश्चित्रकः पाठापटोलीवेल्लरेणुकाः ॥ कटु-त्रिकं यवक्षारो लवणानि सुराष्ट्रजा ॥ निकुंभकुंभकासीसहरितालम-नःशिलाः॥कल्काज्यतैलरसजाचूर्णवर्तिषु भेषजं॥तत्रगंभीरेषु पित्ता-त्मकेषु दाहपाकवत्सु व्रणेषु तीक्ष्णोष्णैरेभिः कार्पासीफलमिश्रं क-ल्कं घृतं वा साधयित्वा योजयेत् ॥ उत्सन्नमांसेष्वल्पस्रावेषु ति-लापामार्गबृहतीद्वययुक्तैः सर्षपतैलं ॥ प्रबलप्रदेशजेषु क्लेदबहुलेषू-त्सन्नस्थिरमांसेषु तैलेन चाशुध्यत्सु रसक्रियां कुर्यात् ॥ यथोक्तानां संशोधनौषधानां कषायं पुनः परिस्राव्याधिशृतं मनःशिलालतुवरीका-सीसचूर्णप्रतीवापं सिद्धं च मातुलुंगरसोपेतं सक्षौद्रं प्रयुजीत॥मेदोयुक्ते षु गंभीरेषु क्लेदिषु कल्कैश्चासिध्यत्सु च वचासैंधवकिण्वकासीसरजनी द्वयेषु॥शोधनांगेषु चान्येषु चूर्णं कुर्वीत शोधनं॥अंतःशल्यानणुद्वारान् गंभीरान्मांससंश्रितान् ॥संधिमर्मनिविष्टांश्च शोधयेद्वर्तिभिर्व्रणान्॥वा-ताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ॥ श्रीवेष्टकसर्जरससारदे व-दारुशिंशिपाखदिरासनकैडर्यसारयवमधूच्छिष्टभूर्जपत्रक्षौद्रसर्पिर्भिः॥

१ प्रसिच्यते निर्याति २ रसजा रसक्रिया

निर्वापयेद्भृशं शीतैः पित्तरक्तविषोल्बणान्॥शुष्काल्पमांसे गंभीरेव्रण उत्सादनं हितं ॥ अश्वगंधाऽपामार्गतालपत्रीसुवर्चलाऽतिबलाऽनंताधातकीकुसुमसमंगाभिः पद्मकादिवर्गेण न्यग्रोधादिना च कल्कः ॥ तथा सर्पिरभ्यंजनार्थं ॥ अद्यान्मांसादमांसानि विधिनोपहितानि च॥ मांसं मांसादमांसेन वर्द्धते शुद्धतेजसः ॥ उत्सन्नमृदुमांसानां व्रणानामवसादनं ॥ सैंधवकासीससुमनोमुकुलगुग्गुलुचित्रकाग्निमंथदंतीशिरीषकरंजफलभूर्जग्रंथिकुक्कुटांडत्वक्कपोतकलविंकपुरीषनेपालीहरितालचूर्णानि सक्षौद्राणि ॥ कठिने सरुजे शुष्के रूक्षे शुष्यति च व्रणे ॥ मार्दवजननार्थं व्रणविरोधिवातघ्नसिद्धस्य सर्पिषः पानं ॥ तद्विधैरेव च सिद्धं तैलमभ्यंगः ॥ पूर्वोक्ताश्च स्वेदाः ॥ तथा सर्पिर्मज्जवसाभिर्धूमाः ॥ सुस्निग्धसक्तुसैंधवकिण्वतिलपिष्टकृशरपायसप्रलेपाः वेसवारः किंचिदुष्णो बहुशः प्रलेपो घनश्च बंधः ॥ पित्तविद्रधिविसर्पशोफकुष्ठघृतानि ॥ सर्वव्रणेषु योज्यानि पानसेकप्रलेपने ॥ अतिमृदुमांसेषु दृढीकरणार्थं त्रिफलारोध्राम्रसर्जजंबूप्रियंग्वशोकवल्कलानि॥ सौराष्ट्रीकासीसरोचनायावचूर्णनवसारगंधैश्च धूपः॥ उत्सन्नमांसान्कठिनान्कंडूयुक्तांश्चिरोत्थितान्॥व्रणान्सुदुःखसाध्यांश्च शोधयेत्क्षारकर्मणा॥स्रवंतोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः॥छिन्नाश्च संधयो येषां यथोक्तैर्ये च शोधनैः ॥ शोध्यमाना न शुध्यंति शोध्याः स्युस्तेऽग्निकर्मणा॥व्रणानामथ शुद्धानां रोपणानि प्रयोजयेत्॥असनादिर्न्यग्रोधादिर्वर्गएव॥ शल्लकीकुटजत्वक्मंजिष्ठासमंगाऽमृताऽश्वगंधाऽऽरग्वधधातकीपुष्पाणि पद्मकादिश्च प्रक्षालनादिषु सप्तसु प्रयोज्या इति॥भवंति चात्र ॥ उत्सन्नदुष्टपिशिते संश्लिष्टध्यामशोणिते ॥ व्रणे प्रच्छर्दनं शस्तं कफदुष्टे विशेषतः ॥ विरेचनं पित्तदुष्टे दीर्घकालानुबंधिनि ॥ रूक्षे सवेदने बस्तिरधःकाये विशेषतः ॥ जत्रूर्ध्वजे सश्वयथौ कंड्वाढ्ये तीक्ष्णनावनं ॥ रजएवानिलाविष्टे रुजाढ्ये स्नेहनाव-

नं ॥ तथा सशोफरुक्स्रावे धूमो वातकफोल्बणे ॥ रुजादिमति वक्रस्थे यथास्वं कवलो हितः ॥ द्वावाद्यौ पंचमूलाख्यौ गणौ यश्चानिलापहः ॥ ते व्रणे वातिके योज्याः कषायादिषु सप्तसु ॥ न्यग्रोधपद्मकाद्यैस्तु पित्ते वर्गश्च पित्तजित् ॥ आरग्वधादिश्लेष्मघ्नौ कफे मिश्रास्तु मिश्रिते ॥ पिष्टोऽम्लैर्वातिके लेपस्तैलसर्पिर्वसायुतः ॥ घनः कोष्णश्च पैत्ते तु पयःपिष्टो घृतान्वितः ॥ तनुर्वस्त्रांतरः शश्वदुष्णो गोमूत्रपेषितः ॥ रूक्षस्तैलेन वा स्निग्धो बहुलः कफजे हितः॥ अपेतपूतिमांसानां मांसस्थानामरोहतां ॥ कल्कं संरोहणं कुर्यात्ति-[1]लानां मधुकान्वितं ॥ स्निग्धोष्णतिक्तमधुरकषायत्वैः स[2] सर्वजित् ॥ स क्षौद्रनिंबपत्राभ्यां युक्तः संशोधनं परं ॥ पूर्वाभ्यां[3] सर्पिषा चासौ युक्तः स्यादाशु रोपणः ॥ तिलवद्यवकल्कं तु केचिदिच्छंति तद्विदः ॥ सास्रपित्तविषागंतुगंभीरान्सोष्मणो व्रणान् ॥ क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ॥ रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ अबंध्यानां चलस्थानां शुद्धानां वा प्रदूष्यतां ॥ यथास्वं रोपणैः कुर्याद्रसजा सनिशाद्वयैः ॥ समानां स्थिरमांसानां त्वक्स्थानां चूर्ण इष्यते ॥ नीरुजामवगाढानां शुद्धानां वर्त्तयो हिताः ॥ समंगामोचसरलसोमवल्काः सचंदनाः ॥ पद्मकादिश्च कल्कोऽयं परमो रोपणोऽथवा॥ मुंजाह्वातिलजीवंतीगोजिह्वाधातुकीबलाः ॥ प्रपौंडरीकमधुककाकोलीद्वयचंदनैः ॥ साधितं तैलमाज्यं वा तद्वत्कंपिल्लकेन वा ॥ दूर्वारसेन वा दार्व्यास्त्वचो वा व्रणरोपणं ॥ पाटलीनिंबपत्राणि रोध्रमुस्ता प्रियंगवः ॥ सूक्ष्मैलाधातकीसर्जखदिरागुरुचंदनं ॥ कंपिल्लकं विडंगानि वत्सकं त्रिफला बला ॥ कल्कैरेभिर्घृतं सिद्धं तैलं वा रोपणं परं ॥ चंदनं पद्मकिंजल्कं दार्वीमूर्वातिलोत्पलं ॥ मेदासमंगायष्ट्याह्वं प्रलेपो व्रणशोधनः ॥ ककुभोदुंबराश्वत्थजंबूकट्फलरोध्रजैः ॥ त्वचमा

१ तिलकल्कः ॥ २ तिलकल्कः ॥ ३ क्षौद्रनिंबपत्राभ्यां ॥

शु निगृण्हंति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥ लाक्षामनोव्हामंजिष्ठाहरि-
तालनिशाद्वयैः ॥ प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ श्याम
काश्वत्थनिचुलमूलं लाक्षालगैरिकं ॥ सहेमाह्वामृतासंगाकासीसं चे-
ति वर्णकृत् ॥ कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥ लेपः स-
गोमयरसः सवर्णकरणः परं ॥ अयोरजः सकासीसं त्रिफलाकुसुमा-
नि च ॥ प्रलेपः कुरुते कार्ष्ण्यं सद्यएव नवत्वचि ॥ दग्धयाऽऽनूपसत्वा
नां श्लक्ष्णचूर्णितया त्वचा॥ भल्लाततैलप्लुतया शुक्लमालेपयेद्व्रणं ॥ स-
प्तरात्रस्थितं क्षीरे छागले रोहिणीफलं॥ तेनैव पिष्ट्वा सुश्लक्ष्णं कृष्णमा
लेपयेद्व्रणं ॥ नवं कपालिकामूलं वैदुलं सर्जसाह्वयं ॥ कासीसं मधुकं
लेपो व्रणे कृष्णे मधुद्रुतः ॥ कपित्थानां समुद्धृत्य मूत्रस्याजस्य पू-
रणं ॥ क्षिपेच्चास्य मनोव्हालं वंशनिर्लेखरोचनाः ॥ कासीसं प्रपु-
नाटं च मासं न्यस्तं ततो भुवि ॥ अथोऽर्जुनस्य तत्कृष्णे व्रणे लेपः
सवर्णकृत् ॥ दग्धो वारणदंतोऽतधूमस्तैलं रसांजनं ॥ रोमसंजननो
लेपस्तद्वत्तैलपरिप्लुता ॥ चतुष्पान्नखरोमास्थित्वक्शृंगखुरजा मषी ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरं ॥ भुंजानो जांगलैर्मांसैः
शीघ्रं व्रणमपोहति ॥ इति व्रणप्रतिषेधो नाम त्रिंशोऽध्यायः ॥ ३० ॥

अथातः सद्योव्रणविज्ञानप्रतिषेधं व्याख्यास्यामः ॥ आगंतोर्व्र-
णस्य प्रागुपदिष्टः संभवः ॥ तत्र यथायथं प्रतीकारश्च ॥ विविधा-
भिघातजनितैश्च तत्तदाव्हाकृतिभिरपि सद्योव्रणैरधिष्ठितमंगं समा-
सात्त्रिविधं भवति ॥ छिन्नं भिन्नं पिच्चितं च ॥ त्रिविधमपि चैत-
त्वगादिक्षणनात्क्षतमित्युच्यते ॥ तत्र छिन्नं पंचधा भिद्यते ॥ त-
द्यथा ॥ त्वक्छेदे घृष्टं ॥ किंचिन्मांसस्याप्यवकृत्तं॥ तस्यैवावगाढस्य
प्रायेण विशालमायतं विच्छिन्नं ॥ किंचिच्छेषेषु त्वस्थिस्नाय्वादिषु
विलंबितं ॥ अशेषांगच्छेदे पातितं ॥ विद्धं त्वष्टविधं ॥ तत्र मांस-

१ सूक्ष्ममुखशल्यविद्धंयत्तद्विद्धंकथ्यते ॥

मनुप्राप्तेन शल्येन विद्धं ॥ द्वितीयपार्श्वत्वचमुन्नम्योत्तुंडितं ॥ किंचि
न्निःसृतेऽतिविद्धं ॥ सर्वथा निःसृते निर्विद्धं ॥ एतदेव चतुर्विधं कोष्ठे
पृथुमुखैर्वा प्रहरणैः कुंतादिभिर्विद्धमनुभिन्नं भिन्नोत्तुंडितमतिभिन्नं
निर्भिन्नमिति च संज्ञां लभते ॥ यत् पुनः प्रहारेण पीडनेन वा गा-
त्रमस्थियुक्तमसृङ्मज्जप्लुतं पृथुतामापद्यते तत्पिच्चितं ॥ तत् द्विविधं
सव्रणमव्रणं च॥तत्र सव्रणमुक्तमव्रणं पुनर्भंगेषूपदिश्यत इति ॥भवति
चात्र ॥ सद्यः सद्योव्रणं सिंचेद्यष्टीमधुकसर्पिषा ॥ तीव्रव्यथं कवो-
ष्णेन बलातैलेन वा पुनः ॥ क्षतोष्मणो निग्रहार्थं तत्कालं विस्तृत-
स्य च ॥ कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ सद्योव्रणेष्वाय-
तेषु संधानार्थं विशेषतः ॥ मधुसर्पिः प्रयुंजीत पित्तघ्नाश्च हिमाः क्रि-
याः ॥ ससंरंभेषु कर्तव्यमूर्ध्वं चाधश्च शोधनं ॥ उपवासो हितं भक्तं
प्रततं रक्तमोक्षणं ॥ घृष्टपिच्चितयोरेष सुतरामिष्यते विधिः ॥ त-
योरस्रं स्रवत्यल्पं पाकस्तेनानु जायते ॥ अत्यर्थमस्रं स्रवति प्राय-
शोऽन्यत्र विक्षते ॥ ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ स्नेह-
पानपरीषेकस्वेदलेपोपनाहनं ॥ स्नेहबस्तिं च कुर्वीत वातघ्नौषधसा-
धितं ॥ इति सप्ताहिकः प्रोक्तः सद्यो व्रणहितो विधिः ॥ सप्ताहा-
द्गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ क्षालनाभ्यंगलेपेषु तस्मिन् दुष्टे
प्रयोजयेत् ॥ आरग्वधादिकं वर्गं सुरसादिं च शोधनं ॥ कल्कस्त्रि-
वृत्तिलैरंडपत्रैर्योज्यः ससैंधवैः ॥ वातिके पैत्तिके कुंभयष्ट्याव्हा-
रजनीतिलैः ॥ श्लैष्मिके तिलतेजोव्हानिकुंभस्वर्जिकाग्निकैः ॥ एष
दुष्टव्रणविधिः कुष्ठमेहव्रणेष्वपि॥प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथ-
क् पृथक्॥घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत्॥कल्कादीन्यवकृ
त्ते तु विच्छिन्ने प्रविलंबिते ॥ सीवनं विधिनोक्तेन बंधनं चानुपीडनं ॥

१ व्रणप्रतिषेधोक्तं ॥ २ पीडां प्रागुपशम्य ॥

असाध्यं स्फुटितं नेत्रमदीर्णं लंबते तु यत् ॥ सन्निवेश्य यथास्थानमव्याविद्धशिरं भिषक् ॥ पीडयेत्पाणिना पद्मपत्रव्यवहितेन तत् ॥ ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ विपक्कमाज्यं यष्ट्याह्वजीवकर्षभकोत्पलैः ॥ सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ मुखबाष्पोष्णचैलेन स्विन्नं नयनमाहतं ॥ मरिचेनांबुपिष्टेन पिचुयुक्तेन पूरयेत् ॥ दद्यान्निषिक्तेन जले निशायां सर्पिषा सह ॥ सास्रश्वयथुरुग्रागे शस्तं चक्षुषि सेचनं ॥ कार्या चानु क्रिया शीता प्रलेपाश्चोतनादिका ॥ गलपीडावसन्नेऽक्ष्णि वमनोत्कासनक्षवाः ॥ प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥ कर्णे स्थानच्युते स्यूते स्रोतस्तैलेन पूरयेत् ॥ कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥ सम्यं निवेश्य बध्नीयात्स्यूत्वा शीघ्रं निरंतरं ॥ आजेन सर्पिषा चात्र परिषेकः प्रशस्यते ॥ उत्तानोऽन्नानि भुंजीत शयीत च सुयंत्रितः ॥ घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते ॥ स्यूत्वा वेल्लितबंधेन बध्नीयाद्धनवाससा ॥ चर्मणा गोष्फणाबंधः कार्यश्चांसगते व्रणे ॥ पादौ विलंबिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ॥ प्रवेश्य वृषणौ सीव्येत्सेवन्या तुन्नसंज्ञया ॥ कार्यश्च गोष्फणाबंधः कट्यामावेश्य पट्टकं ॥ स्नेहसेकं न कुर्वीत तत्र क्लिद्यति हि व्रणः ॥ कालानुसार्यगुर्वेलाजातीचंदनपद्मकैः ॥ शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणं ॥ छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ॥ बध्नीयात्कोशबंधेन ततो व्रणवदाचरेत् ॥ कार्यः शल्याहृते विद्धे क्रमोऽयं गात्रपिच्चिते ॥ शिरसोऽपहृते शल्ये वालवर्तिं प्रवेशयेत् ॥ मस्तुलुंगे स्रुते क्रुद्धो हन्यादेनं चलोऽन्यथा[1] ॥ व्रणे रोहति चैकैकं शनैरपनयेत्कचं ॥ मस्तुलुंगस्रुतौ खादेन्मस्तिष्कानन्यजीवजान् ॥

१ वालवर्त्तेरप्रवेशात् ॥ आचरमोच्छ्वासादातुरं समुपाचरेदिति वचनान्मस्तुलुंगस्रुतावप्युपक्रममाह ॥ मस्तुलुंगस्य मज्जाख्यस्य स्रुतौ ॥

शल्ये हृतेंऽगादन्यस्मात् स्नेहवर्तिं निधापयेत् ॥ दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ॥ सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छाहृत्पार्श्ववेदनाः ॥ ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनंदनं ॥ संगो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ॥ लोहगंधित्वमास्यस्य स्याद्गात्रे च विगंधिता ॥ आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ॥ आध्मानेनातिमात्रेण शूलेन च विनश्यति ॥ पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ॥ नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते॥असृजा स्यंदमानेन पार्श्वे मूत्रेण बस्तिवत्॥ तत्रांतर्लोहितं शीतपादोच्छ्वासकराननं ॥ रक्ताक्षं पांडुवदनमानद्धं च विवर्जयेत् ॥आमाशयस्थे वमनं हितं पक्वाशयाश्रिते ॥विरेचनं निरूहं च निःस्नेहोष्णैर्विशोधनैः ॥ यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ॥ भुंजीतान्नं यवागूं वा पिबेत्सैंधवसंयुतां ॥ अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक्॥क्लिष्टच्छिन्नांत्रभेदेन कोष्ठभेदो द्विधा स्मृतः॥मूर्च्छादयोऽल्पाः प्रथमे द्वितीये त्वतिबाधकाः॥ क्लिष्टांत्रः संशयी देही छिन्नांत्रो नैव जीवति ॥यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः ॥व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवत्यसंशयं॥अभिन्नमंत्रं निष्क्रांतं प्रवेश्यं न त्वतोऽन्यथा[1] ॥ उरोगल[2]शिरोग्रस्तं तदप्येके वदंति तत् ॥ प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥ प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः ॥ क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतं ॥ अंगुल्या प्रमृशेत्कंठं जलेनोद्वेजयेदपि ॥ तथांऽत्राणि विशंत्यंतस्तत्कालं पीडयंति च ॥ व्रणसौक्ष्म्याद्बहुत्वाद्वा कोष्ठमंत्रमनाविशत् ॥ तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत् ॥ यथास्थानस्थिते सम्यगंत्रे सीव्येदनुव्रणं ॥

---

१. अन्यथाभिन्नमित्यर्थः २ उत्पंगिलशिरोग्रस्तमिति पाठः॥ उत्पंगिलशिरसा मर्कोटशिर्षेण ॥ उरोगल व-उत्पंगिल ह्मणजे मुंगळा इतिलोके ॥

स्थानादपेतमादत्ते जीवितं कुपितं हि तत् ॥ वेष्टयित्वा ऽनु पट्टेन घृतेन परिषेचयेत् ॥ पाययेत ततः कोष्णं चित्रतैलप्लुतं पयः ॥ मृदुक्रियार्थं शक्तो वायोश्चाधः प्रवृत्तये ॥ त्वगश्वकर्णकतकबदरीशल्लकीधवात् ॥ धातुकीमेषशृंगीभ्यां क्षीरिभ्यश्च बलाजटा ॥ तत्कल्कसाधितं तैलं प्रधानं व्रणरोपणं ॥ अनुवर्तेत वर्षं च यथोक्तां व्रणयंत्रणां ॥ उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ अवकीर्य कषायैर्वा श्लक्ष्णैर्मूले ततः समं ॥ दृढं च बध्वा सूत्रेण वर्द्धयेत्कुशलो भिषक् ॥ तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु ॥ स्याद न्यथा रुगाटोपो मृत्युर्वा छिद्यमानया ॥ सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् ॥ क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतं ॥ रुग्दाहजित्सयष्ट्याह्वैः परं पूर्वोदितो विधिः ॥ मेदोग्रंथ्युदितं तत्र तैलमभ्यंजनं हितं ॥ तालीसं पद्मकं मांसी हरेण्वगुरुचंदनं ॥ हरिद्रे पद्मबीजानि सोशीरमधुकं च तैः ॥ पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमं ॥ गूढप्रहाराभिहते पतिते विषमोच्चकैः ॥ कार्यं वातास्रजित्तैलमर्दनाभ्यंगशोधनं ॥ विश्लिष्टदेहं मथितं क्षीणं मर्माहतं हतं ॥ वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनं ॥ प्रहर्तृयंत्रायुधघातगात्रे सद्योव्रणाः काममनंतरूपाः ॥ तथाऽपि न त्रित्वमतिक्रमंते चयादिभेदैरिव मारुताद्याः ॥ इति सद्योव्रणविज्ञानप्रतिषेधो नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

अथातो भंगविज्ञानप्रतिषेधं व्याख्यास्यामः ॥ पतनपीडनप्रहाराक्षेपणव्यालदंशप्रवृत्तिभिरभिघातविशेषैरनेकविधमस्थिभंगमुपदिशंति ॥ तत्तु भग्नजातं संधावसंधौ च ॥ तत्र संधिमुक्तं षड्विधं ॥ उत्पिष्टं विश्लिष्टमवक्षिप्तमतिक्षिप्तं तिर्यक्क्षिप्तं विवर्तितमिति ॥ तस्य सामान्यलक्षणं प्रसारणाकुंचननिवर्त्तनाक्षेपणाशक्तिरुग्ररुजता

१ चित्रातैलमिति पाठः ॥

स्पर्शासहिष्णुत्वं ॥ अथोत्पिष्टे स्वस्थानएव संधीषूभयतः शोफो वेदना विशेषतश्च रात्रौ भवति ॥ विश्लिष्टेऽल्पशोफो वेदनासातत्यं संधिविक्रिया च ॥ अवक्षिप्ते संधिविश्लेषस्तीव्रा च रुक् ॥ अति क्षिप्ते द्वयोरपि संध्यस्थ्नोरतिक्रांतता वेदना च ॥ तिर्यक्क्षिप्ते त्वेकस्यास्थ्नः पार्श्वतो गमनमत्यर्थवेदना च ॥ विवर्तिते संधिपार्श्वगमनाद्विषमांगता वेदना च ॥ असंधिभग्नं पुनर्द्वादशविधं ॥ तद्यथा ॥ कर्कटं वक्रं स्फुटितं वेल्लितमस्थिच्छल्लिकमश्वकर्णं पिच्चितं दारितं चूर्णितमतिपातितं शोषितं मज्जानुगतमिति ॥ श्वयथुबाहुल्यं स्पंदनं विवर्त्तनं स्पर्शासहिष्णुता च पीड्यमाने शब्दः स्रस्तांगता वेदनातिप्रवृत्तिः सर्वासु चावस्थासु शर्म न लभत इति साधारणमसंधिभग्नरूपं ॥ वैशेषिकं च ॥ संमूढमुभयतोस्थ्यस्थिमध्ये भग्नं ग्रंथिरिवोन्नतं कर्कटानुकारिकर्कटकं ॥ अभुग्नमविमुक्तमस्थि वक्रं ॥ शूकपूर्णमिवाध्मातं विपुलैकदारि स्फुटितं ॥ द्विधाभूतं वेल्लिते प्रकंप्यमानं वेल्लितकं ॥ पार्श्वतोऽस्थिहीनउद्गते ऽस्थिच्छल्लिका ॥ अश्वकर्णवदुद्गतमश्वकर्णः ॥ पृथुतां गतमनल्पशोफं पिच्चितं ॥ अणुवेददारिवेदनावच्च दारितं ॥ स्पृश्यमानं शब्दवच्चूर्णितं ॥ अस्थ्यवयवोऽस्थिमध्यमनुप्रवेश्यनिपातितं ॥ अन्यतरपार्श्वावशिष्टं शोषितं ॥ क्षतं भुग्नमुन्नम्यमानं मज्जति मज्जानुगतं ॥ एवमंत्यानि पंच कृच्छ्रसाध्यानि ॥ कृशातिबालवृद्धासहानामल्पाशनानां वातात्मकानां कुष्ठिनामुपद्रववतां च ॥ असाध्यं तु भिन्नं कटिकपालं संधिमुक्तं वा जघनमुत्पिष्टं कूर्परो विवर्त्तितस्तथा ललाटं चूर्णितमसंश्लिष्टकपालं च शिरः शंखपृष्ठस्तनांतरं भुग्नं चेति ॥ भवंति चात्र ॥ अथावनतमुन्नम्य मुन्नतं चावपीडयेत् ॥ आंच्छेदनिक्षिप्तमधोगतं चोपरि वर्त्तयेत् ॥ आंच्छनोत्पीडनोन्नामचर्मसंक्षेपबंधनैः ॥ संधीन् शरीरगान् सर्वान् चलानप्यचलानपि ॥ इत्येतैः स्थापनोपायैः सम्यक्संस्थाप्य निश्चलं ॥

पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ॥ कदंबोदुंबराश्वत्थसर्जार्जुनपलाशजैः ॥ वंशोद्भवैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ॥ सुश्लक्ष्णैः सुप्रतिस्तंभैर्वल्कलैः शकलैरपि ॥ कुशाह्वयैः समं बंधं पट्टस्योपरि योजयेत् ॥ शिथिलेन हि बंधेन संधिस्थैर्यं न जायते ॥ गाढेनातिरुजादाहपाकश्वयथुसंभवः ॥ त्र्यहात्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ॥ साधारणे तु पंचाहाद्भंगदोषवशेन वा ॥ न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥ तं पंचमूलपक्वेन पयसा तु सवेदनं ॥ सुखोष्णं चावचार्यं स्याच्चक्रतैलं विजानता ॥ विभज्य देशं कालं च वातघ्नौषधसाधितं ॥ प्रततं सेकलेपांश्च विदध्याद्भृशशीतलान् ॥ गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितं ॥ प्रातः प्रातः पिबेद्भग्नः शीतलं लाक्षया युतं ॥ सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ॥ कषायैः प्रतिसार्योऽथ शेषो भंगोदितः क्रमः ॥ लंबानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥ संदधीत व्रणान्वैद्यो बंधनैश्चोपपादयेत् ॥ तान्समान्सुस्थितान् ज्ञात्वा फलिनीरोध्रकट्फलैः ॥ समंगाधातुकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ पंचवल्कलचूर्णैर्वा शुक्तिचूर्णसमन्वितैः ॥ धातुकीरोध्रचूर्णैर्वा रोहत्याशु तथा व्रणः ॥ विश्लिष्टोत्पिष्टयोः संधिमेवमेवाव घट्टयेत् ॥ उपाचरेद्यथास्वं च विसर्पादीनुपद्रवान् ॥ इति भंग उपक्रांतः स्थिरधातो ऋतौ हिमे ॥ मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ॥ पूर्वमध्यांतवयसामेकद्वित्रिगुणैः क्रमात् ॥ मासैः स्थैर्यं भवेत्संधेर्यथोक्तं भजतो विधिं ॥ सामान्यं साधनमिदं विशिष्टं वक्ष्यते ततः ॥ नखसंधिं समुत्पिष्टं रक्तानुगतमारया ॥ अवमथ्य स्रुते रक्ते शालिपिष्टेन लेपयेत् ॥ भग्नान्संधिविमुक्तांश्च कृत्वा पूर्ववदंगुलीन् ॥ तनुनाऽऽवेष्ट्य पट्टेन घृतसेकं प्रयोजयेत् ॥ चक्रयोगेन मतिमानांच्छेदूर्ध्वास्थिनिर्गतं ॥ आंच्छेदूर्ध्वमधस्ताच्च

१ शरद्वसंताख्ये

कटिभग्नं चिकित्सकः ॥ मुसलेनोत्क्षिपेत्कक्षामंससंधौ विसंगते ॥ स्थानस्थितं च बध्नीयात्स्वस्तिकेन समाहितः ॥ कौर्परं तु भिषक् संधिमंगुष्ठेनानुमार्जयेत् ॥ अनुमृज्य ततः संधिं पीडयेत्कूर्पराच्च्युतं ॥ प्रसार्याकुंचयेच्चैनं स्नेहसेकं च कारयेत् ॥ मणिबंधे च जानौ च गुल्फे चैवं क्रियाक्रमः ॥ उभे तले समे कृत्वा तलभग्नस्य देहिनः ॥ बध्नीयादामतैलेन परिषेकं च कारयेत् ॥ प्राग्गोमयस्य पिंडं वा धारयेन्मृन्मयं ततः ॥ हस्ते जातबले कार्यं क्रमात् पाषाणधारणं ॥ सन्नमुन्नामयेत्स्विन्नमक्षकं मुसलेन तु ॥ तथोन्नतं पीडयेत बध्नीयान्निबिडं ततः ॥ ऊरुवच्च विधातव्यं बाहुभंगे प्रसाधनं ॥ ग्रीवायां तु विवृत्तायां प्रविष्टायामथापि वा ॥ अवटावथ हन्वोस्तु प्रगृह्योन्नमयेत्ततः ॥ समं कुशाभिर्बध्नीयादुत्तानं शाययेत्तु तं ॥ हन्वस्थिनी समानीय हनुसंधौ विसंगते ॥ स्वेदयित्वा स्थिते सम्यक् पंचांगीबंधमाचरेत् ॥ घृतं वातघ्नमधुरैः सिद्धं नस्यं च पूजितं ॥ दंतानभग्नांश्चलितान्सरक्तानवपीडयेत् ॥ वयस्थस्यांबुभिः शीतैः परिषिच्य प्रलेपनैः ॥ बहिर्निर्वापणैरंतः संधानीयैरुपाचरेत् ॥ बलाद्वयशृते क्षीरे पद्मकादिशृतं घृतं ॥ नस्यगंडूषयोर्योज्यं चलद्विजहितानि च ॥ कल्कितैस्तद्विधैश्चास्य दंतमांसानि लेपयेत् ॥ त्रीन्मासान्मृदु भुंजीत रसान्नं कठिनांस्त्यजेत् ॥ नासां विवृतां सन्नां वा ऋजुं कृत्वा शलाकया ॥ प्रत्येकतस्ततो नाडीं द्विमुखीं संप्रवेशयेत् ॥ ततः पट्टेन संवेष्ट्य घृतसेकं प्रदापयेत् ॥ मग्नं कर्णं घृताभ्यक्तं न्यस्य बंधेन योजयेत् ॥ सद्यःक्षतविधानं तु ततः पश्चात्समाचरेत् ॥ कटीजंघोरुभग्नानां कपाटशयनं हितं ॥ यंत्रणार्थं ततः कीलाः पंच कार्या निबंधनाः ॥ जंघोर्वोः पार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥ श्रोण्यां वा पृष्ठवंशे वा वक्षस्याक्षकयोस्तथा ॥ विमोक्षे भग्नसंधीनां विधिमेवं समाचरेत् ॥ संधींश्चिरविमुक्तांश्च स्निग्धस्विन्नान्मृदून् कृतान् ॥

उ[1]पनिबंधानैर्बुध्या च यथास्वं स्थानमानयेत् ॥ असंधिभग्ने रूढे तु विषमोल्बणसाधिते ॥ आपोथ्य भंगं यमयेत्ततो भग्नवदाचरेत् ॥ भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ॥ पक्वमांससिरास्नायुः संधिः श्लेषं न गच्छति ॥ वातव्याधिविनिर्दिष्टान्स्नेहान् भग्नस्य योजयेत् ॥ चतुःप्रयोगान्बल्यांश्च बस्तिकर्म च शीलयेत् ॥ शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः ॥ मात्रयोपचरेद्भग्नं संधिसंश्लेषकारिभिः ॥ ग्लानिर्न शस्यते तस्य संधिविश्लेषकृद्धि सा ॥ लवणं कटुकं क्षारमम्लं मैथुनमातपं ॥ व्यायामं च न सेवेत भग्नो रूक्षं च भोजनं ॥ सम्यग्यमितमप्यस्थि दुर्न्यासादुर्निबंधनात् ॥ संक्षोभादपि यद्गच्छेद्विक्रियां तद्विवर्जयेत् ॥ आदितो यच्च दुर्जातमस्थिसंधिमथापि वा ॥ तरुणास्थीनि नम्यंते भज्यंते नलकानि तु ॥ कपालानि विभज्यंते स्फुटंत्यन्यानि भूयसा ॥ अनुल्बणमनाविद्धं स्वस्थाने पर्यवस्थितं ॥ अवेदनं च चेष्टायां भग्नं विद्यात् सुसाधितं ॥ कृष्णांस्तिलान्विरजसो दृढवस्त्रबद्धान्सप्त क्षपा वहति वारिणि वासयेत ॥ संशोषयेदनुदिनं प्रतिसार्य[2] चैतान्क्षीरे तथैव मधुकक्कथिते च तोये ॥ पुनरपि पीतपयस्कांस्तान् पूर्ववदेवशोषितान्बाढं ॥ विगततुषानरजस्कान्संचूर्ण्य सुचूर्णितैर्युंज्यात् ॥ नलदवालकलोहितयष्टिकानखमिशिप्लवकुष्टबलात्रयैः ॥ अगुरुकुंकुमचंदनसारिवासरलसर्जरसामरदारुभिः ॥ पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ॥ समस्तगंधभैषज्यसिद्धदुग्धेन पीडयेत् ॥ शैलेयरास्नांशुमतीकसेरुकालानुसारीनतपत्त्ररोध्रैः ॥ सक्षीरशुक्तैः सपयस्कदूर्वैस्तैलं पचेत्तन्नलदादिभिश्च ॥ गंधतैलमिदमुत्तममस्थिस्थैर्यकृज्जयति चाशु विकारान् ॥ वातपित्तजनितानतिवीर्यान् व्यापिनोऽपि [3]विविधैरुपयोगैरिति ॥ इति भंगविज्ञानप्रतिषेधो नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

१ पाननस्याभ्यंगानुवासनैः २ प्रतिसार्यविकीर्य ३ पाननस्यादिभिः

अथातो भगंदरविज्ञान प्रतिषेधं व्याख्यास्यामः ॥ हस्त्यश्वपृष्ठ-गमनकठिनोत्कटकासनैः ॥ अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ अनिष्टदिष्टपाकेन सद्यो वा साधुगर्हणैः॥ प्रायेण पिटिकापूर्वो योऽगुले द्व्यंगुलेऽपि वा ॥ पायौ व्रणोऽतर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ॥ बस्तिमूत्राशयाभ्याशगतत्वात्स्यंदनात्मकः ॥ भगंदरः सर्वगश्च दारयत्यक्रियावतः ॥ भगबस्तिगुदं तेषु दीर्यमाणेषु भूरिभिः ॥ वातमूत्रशकृच्छुकं खैः सूक्ष्मैर्वमति क्रमात् ॥ दोषैः पृथक् द्वयैः सर्वैरागंतुः सोऽष्टमः स्मृतः ॥ अपक्कं पिटिकामाहुः पाकप्राप्तं भगंदरं ॥ गूढमूलां ससंरंभां रुगाढयां रूढकोपिनीं ॥ भगंदरकरीं विद्यात्पिटिकां न त्वतोऽन्यथा ॥ तत्र श्यावारुणा तोदभेदस्फुरणरुक्करी ॥ पिटिका मारुतात्पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥ रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥ स्थिरा स्निग्धा महामूला पांडुः कंडूमती कफात्॥ श्यावा ताम्रा सदाहोषा घोररुग्वातपित्तजा ॥ पांडुरा किंचिदाश्यावा कृच्छ्रपाका कफानिलात् ॥ पादांगुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ॥ शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ॥ व्रणतां यांति ताः पक्काः प्रमादात्तत्र वातजा ॥ चीयतेऽणुमुखैश्छिद्रैः शतपोनकवत्क्रमात् ॥ अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतं ॥ शतपोनकसंज्ञोऽयमुष्ट्रग्रीवस्तु पित्तजः ॥ बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ वातपित्तात्परिक्षेपी परिक्षिप्य गुदं गतिः ॥ जायते परितस्तत्र प्राकारं परिखेव च ॥ ऋजुर्वातकफादृज्व्या गुदो गत्या तु दीर्यते ॥ कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ॥ अर्शोमूले ततः शोफः कंडूदाहादिमान् भवेत् ॥ स शीघ्रं पक्कभिन्नोऽस्य क्लेदयन्मूलमर्शसः ॥ स्रवत्यजस्रं गतिभिरयमर्शोभगंदरः ॥ सर्वजः शंबुकावर्त्तः शंबुकाव-

१ शतपोनकवत् चालनीवत्

त्तंसन्निभः ॥ गतयो दारयंत्यस्मिन् रुग्वैगैदारुणैर्गुदं ॥ अस्थिलेशो-ऽभ्यवहृतो मांसगृध्या यदा गुदं ॥ क्षणोति तिर्यङ्निर्गच्छन्नुन्मार्गं क्षततो गतिः ॥ स्यात्तदा पूयदीर्णायां मांसकोथेन तत्र च ॥ जायंते कृमयस्तस्य खादंतः परितो गुदं ॥ विदारयंति न चिरादुन्मार्गी क्षतजश्च सः ॥ तेषु रुग्दाहकंड्वादीन्विद्याद्व्रणनिषेधतः ॥ षट् कृच्छ्रसाधनास्तेषां निचयक्षतजौ त्यजेत् ॥ प्रवाहिणीं वलीं प्राप्तं सेवनीं वा समाश्रितं ॥ अथ भगंदरिणमपक्वपिटिकं पाकपरिहारार्थमपतर्पणादिना व्रणप्रतिषेधविहितेन शीघ्रमुपाचरेत् ॥ पक्वपिटिकं पुनरर्कादिक्वाथसिद्धस्नेहस्वभ्यक्तमवगाहस्विन्नं ॥ भुक्तवंतं शयनस्थमर्शसमिव यंत्रयित्वाऽर्वाचीनं पराचीनं बहिर्मुखमंतर्मुखं वा भगंदरं सम्यगीक्षेत ॥ तथांऽतर्मुखं यंत्रं प्रणिधाय प्रवाहणप्रविष्टं भगंदरमभिसमीक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत् ॥ बहिर्मुखं त्वेषिणीं प्रणीय साशयमुद्धरेत्सशस्त्रेणानंतरं चोभयमप्यग्निना क्षारेण चोपक्रमेत ॥ उष्ट्रग्रीवं क्षारेणैव ततो निर्वापणशोधनरोपणैर्यथाकालं साधयेदिति सामान्यो विधिः ॥ अथ शतपोनके नाडीरेकांतरिताः पाटयित्वा रोपयेत् ॥ रूढासु चेतराश्चिकित्सेत् ॥ अन्यथा तु विस्तृतं व्रणं गुदस्रोतोविदारणाद्वातविण्मूत्राण्यनुप्रपद्यंते ॥ ततश्चोन्मार्गगो वायुराध्मानाटोपपायुशूलादीनुपजनयति ॥ तत्र स्नेहाभ्यक्तगुदस्यास्निग्धपिंडनाडीकुंभीस्वेदान्प्रयुंजीतावगाहं वा ॥ स्विन्नं वचाकुष्टहिंगुव्योषलवणपंचकाजमोदाः सर्पिर्मद्यकांजिककुलत्थयूषान्यतमेन पाययेत् ॥ व्रणं चास्य मधुकतैलेनोष्णेन सिंचेत् ॥ गुदं च बलातैलादिभिर्वातवेदनाघ्नैः ॥ अनेन विधाना वातादयः स्वमार्गमापतंति तत्कृताश्च विकारा निवर्त्तंते ॥ एवमेव परिक्षेपिण्यपि क्रमाद्वार्तिं नाडीविहितेन क्षारसूत्रेण द्विशस्त्रिशो वाऽवदारयेत् ॥ सकृदेव ह्यवदारणादसाध्यता याप्यता वा स्यात् ॥ अर्शोभगंदरे पूर्वमर्शांसि छिंद्यात् ॥

ततो गत्यनुसारेण ॥ भगंदरमुन्मार्गिणं च प्रत्याख्यायोपचरेत् ॥ अ-
निःसृतं च शल्यमाहरेत् ॥ तथा कृमिघ्नक्रमं लेपाभ्यवहारयोः कुर्वी-
त ॥ वेदनायां पूर्वोक्ताः स्वेदा वचादिपाचनं च ॥ साल्वणप्रदिग्धं वा
व्रणं कदलीमृगलोपाकाजिनकौशेयाविकैरुपनाहयेदिति ॥ भवति
चात्र ॥ भगंदरे बहुच्छिद्रे छेदानेतान्प्रयोजयेत् ॥ गोतीर्थसर्वतोभद्र-
दललांगललांगलान् ॥ पार्श्वगतेन शस्त्रेण छेदो गोतीर्थको मतः ॥
सर्वतः सर्वतोभद्रः पार्श्वछेदो ऽर्द्धलांगलः ॥ पार्श्वद्वये लांगलकः सम-
स्तांश्चाग्निना दहेत् ॥ आस्रावमार्गान्निःशेषान्नैवं विकुरुते पुनः ॥
यतेत कोष्ठशुद्धौ च भिषक् तस्यांतरांऽतरा ॥ आर्द्रकस्वरसे सिद्धं
कल्के वा पाययेद्धृतं ॥ भगंदरे मारुतजे पक्वापक्वे विरेचयेत् ॥ ज्यो-
तिष्मतीलांगलिकाश्यामादंतीत्रिवृत्तिलाः ॥ कुष्टं शताह्वा गोलोमी
तिल्वको गिरिकर्णिका ॥ हेमक्षीरी च वर्गोऽयं लेपाद्यैर्व्रणशोधनः ॥
तिलकुंभवरादंतीतुत्थसिंधूत्थमाक्षिकैः ॥ सकृष्णरोचनाकुष्टं शोधनं
मांसकृत्पुनः ॥ मंजिष्ठासैंधवक्षौद्रनागदंतीत्रिवृत्तिलाः ॥ रसांजनं द्वि-
रजनीतेजोह्वानिंबपल्लवाः ॥ निकुंभकुंभरक्ताश्च कल्को नाडीव्रणापहः
॥ सुधासेलुत्रिवृत्पाठामलयूहयमारकैः ॥ ज्योतिष्मतीलांगलिकास्व-
र्जिकाकवचाग्निकैः ॥ विष्यंदनाख्यं विपचेत्तैलं शोधनरोपणं ॥
त्रिवृद्दंतीहरिद्राऽर्कमूललोहाश्वमारकैः ॥ विडंगसारत्रिफलास्नुगर्क-
क्षीरमाक्षिकैः ॥ तैलं समदनैः सिद्धं भगंदरनिबर्हणं ॥ सैंधवा-
र्कत्रिवृत्पाठासंमगापूतिकाग्निकैः ॥ समातुलुंगच्छदनैस्तैलं शोधन-
रोपणं ॥ मधुतैलयुता विडंगसारत्रिफलामागधिकाकणाश्च लीढाः ॥
कृमिकुष्टभगंदरप्रमेहक्षतनाडीव्रणरोपणा भवंति ॥ अमृतात्रुटिवेल्ल
वत्सकं कलिपथ्यामलकानि गुग्गुलुः ॥ क्रमवृद्धमिदं मधुद्रुतं पिटि-
कास्थौल्यभगंदरान् जयेत् ॥ गुग्गुलुपंचपलं पलिकांशा मागधिका
त्रिफला च पृथक् स्यात् ॥ त्वक्त्रुटिकर्षयुतं मधुलीढं कुष्ठभगंदर-

गुल्मगतिघ्नं ॥ शृंगबेररजोयुक्तं तदेव[1] च सुभावितं ॥ क्वाथेन दश-मूलस्य विशेषाद्वातरोगजित् ॥ उत्तमाखदिरसारजं रजः शीलयन्न-सनवारिभावितं ॥ हंति तुल्यमहिषाक्षमाक्षिकं कुष्ठमेहपिटिकाभ-गंदरान् ॥ भगंदरेष्वेष विशेष उक्तः शेषाणि तु व्यंजनसाधनानि[2] ॥ व्रणाधिकारात्परिशीलनाच्च सम्यग्विदित्वौपयिकं विदध्यात् ॥ अश्व-पृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यं ॥ साहसानि विवि-धानि च रूढे वत्सरं परिहरेदधिकं वा ॥ इति भगंदरविज्ञान प्रतिषेधो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

अथातो ग्रंथ्यर्बुदश्लीपदापचीनाडीविज्ञानं व्याख्यास्यामः ॥ कफप्रधानाः कुर्वंति मेदोमांसास्रगा मलाः ॥ वृत्तोन्नतं यं श्वयथुं स ग्रंथिर्ग्रंथनात्स्मृतः ॥ दोषास्रमांसमेदोऽस्थिसिराव्रणभवा नव ॥ ते तत्र वातादायामतोदभेदान्वितो ऽसितः ॥ स्थानात्स्थानांतरगतिरक-स्माद्धानिवृद्धिमान् ॥ मृदुर्बस्तिरिवानद्धो विभिन्नोऽच्छं स्रवत्यसृ-क् ॥ पित्तात्सदाहः पीताभो रक्तो वा पच्यते द्रुतं ॥ भिन्नोऽस्रमु-ष्णं स्रवति श्लेष्मणा नीरुजो घनः ॥ शीतः सवर्णः कंडूमान् पक्वः पूयं स्रवेद्घनं ॥ दोषैर्दुष्टेऽसृजि ग्रंथिर्भवेन्मूर्च्छत्सु जंतुषु ॥ सिरामांसं च संश्रित्य सस्वापः पैत्तलक्षणः ॥ मांसलैर्दूषितं मांसमाहारैर्ग्रंथिमा-वहेत् ॥ स्निग्धं महांतं कठिनं सिरानद्धं कफाकृतिं ॥ प्रवृद्धं मे-दुरैर्मेदो नीतं मांसेऽथवा त्वचि ॥ वायुना कुरुते ग्रंथिं भृशं स्निग्धं मृदुं चलं ॥ श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयं ॥ स विभि-न्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥ अस्थिभंगाभिघाताभ्यामुन्न-तावनतं तु यत् ॥ सोऽस्थिग्रंथिः पदातेस्तु सहसांऽभोवगाहनात् ॥ व्यायामाद्वा प्रतांतस्य सिराजालं सशोणितं ॥ वायुः संपीड्य सं-कोच्य वक्रीकृत्य विशोष्य च ॥ निःस्फुरं नीरुजं ग्रंथिं कुरुते स

---

१ तदेव पूर्वोक्तं गुग्गुलुपंचपलमित्यादि २ लक्षणचिकित्सितानि

सिराह्वयः ॥ अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ॥ सार्द्रे वा बंधरहिते गात्रेऽश्माभिहते ऽथवा ॥ वातोऽस्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणं ॥ कुर्यात्सदाहः कंडूमान् व्रणग्रंथिरयं स्मृतः ॥ साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः ॥ मर्मकंठोदरस्थाश्च महत्तु ग्रंथितोऽर्बुदं॥तल्लक्षणं च मेदोंऽतैः षोढा दोषादिभिस्तु तत्॥प्रायो मेदःकफाढ्यत्वात्स्थिरत्वाच्च न पच्यते॥सिरास्थं शोणितं दोषः संकोच्यानुप्रपीड्य च ॥ पाचयेच्च तदानद्धं सास्रावं मांसपीडितं॥मांसांकुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ॥ अजस्रदुष्टरुधिरं भूरि तच्छोणितार्बुदं ॥ तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ॥ प्रस्थिता वंक्षणोर्वादिमधःकायं कफोल्बणाः॥दोषा मांसास्रगाः पादौ कालेनाश्रित्य कुर्वते॥शनैः शनैर्घनं शोफं श्लीपदं तत्प्रचक्षते ॥परिपोटयुतं कृष्णमनिमित्तरुजं खरं॥रूक्षं च वातात् पित्तात्तु पीतं दाहज्वरान्वितं॥ कफाद्गुरु स्निग्धमरुक् चितं मांसांकुरैर्बृहत् ॥ तत्त्यजेद्वत्सरातीतं सुमहत् सुपरिस्रुति ॥ पाणिनासौष्ठकर्णेषु वदंत्येके तु पादवत् ॥ श्लीपदं जायते तच्च देशेऽनूपे भृशं नृणां ॥ मेदस्थाः कंठमन्याक्षकक्षावंक्षणगा मलाः ॥ सवर्णान्कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ॥ अवगाढान्बहून् गंडांश्चिरपाकांश्च कुर्वते ॥ पच्यंतेऽल्परुजस्त्वन्ये स्रवंत्यन्येऽतिकंडुराः ॥ नश्यंत्यन्ये भवंत्यन्ये दीर्घकालानुबंधिनः ॥ गंडमालाऽपचीचेयं दूर्वेव क्षयवृद्धिभाक् ॥ तां त्यजेत्सज्वरच्छर्दिपार्श्वरुक्कासपीनसां ॥ अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः ॥ अनुप्रविश्य मांसादीन्दूरं पूयोऽभिधावति ॥ गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ॥ नाड्येका ऽनृजुरन्येषां सैवानेकगतिर्गतिः ॥ सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पंचमी ॥ वातात्सरुक् सूक्ष्ममुखी विवर्णा फेनिलोद्वमा ॥ स्रवत्यभ्यधिकं रात्रौ पित्तात्तृट्ज्वरदाहकृत् ॥ पीतोष्णपूतिपूयास्रुद्दिवा चातिनिषिंचति ॥ घनपिच्छिलसंस्रा-

वा कंडूला कठिना कफात् ॥ निशि चाभ्यधिकक्लेदा सर्वैः सर्वाकृतिं त्यजेत् ॥ अंतःस्थितं शल्यमनाहृतं तु करोति नाडीं वहते च साऽस्य ॥ फेनानुविद्धं तनुमल्पमुष्णं सास्रं च पूयं सरुजं च नित्यं ॥ इति ग्रंथ्यर्बुदश्लीपदापचीनाडीविज्ञानं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अथातो ग्रंथ्यादिप्रतिषेधं व्याख्यास्यामः ॥ सर्वेष्वेव पूर्वं ग्रंथिषु बृहतीद्वयपिप्पलीचित्रकसाधितेन पुराणसर्पिषा स्निग्धं वामयेत् विरेचयेच्च ॥ कृतसंसर्जनस्य चोत्तमांगगतेषु ग्रंथिषु लाक्षाद्विरजनीविडंगशुंठीपूतीदारुभिः शिरो विरेचयेत् ॥ धूमकवलगंडूषांश्च सेवेत ॥ अंकोल्लमधुमातुलुंगहिंस्रापूतिदारुबिल्वमूलसरलकुष्ठवचावरुणत्वक्का-लातिविषाऽजगंधाभिर्लेपः ॥ श्यामासुरदारुसमंगाकोशातकीपुनर्नवासर्षपैर्वा ॥ सशोफरुक्स्तंभे चोपनाहयेद्यवसक्तुमधुककुष्ठशतपुष्पा देवदारुभिर्घृतयुक्तैः ॥ गोजाखरोष्ट्राश्वहस्तिमूषकमांसैर्वा वेसवारीकृतैर्वसातैलवद्भिः ॥ पलाशदंत्याग्निमंथत्वक्कल्केन मांसपिंडैर्वा बहुशः स्निग्धमंगुष्ठेन वेणुपर्वणा वा शनैः शनैः पुनःपुनर्विमर्दयेत् ॥ यथायथं च शोफवत्क्रियां प्रयुंजीत ॥ अथ वातजे ग्रंथौ दशमूलसिद्धं महास्नेहं पिबेत् ॥ अमृतानिंबबीजभार्ङ्गीश्योनाकतालपत्रीकृष्णगंधाऽगुरुभिः क्षीरपिष्टैः सुखोष्णैरालेपयेत् ॥ विविधाश्च वातव्याधिविहिताः स्नेहस्वेदोपनाहाः ॥ तथानुपशमे सिराव्यधः ॥ पक्वं तु विदार्य निरस्तपूयं कृत्वा ऽर्कादिवर्गांभसा प्रक्षाल्य तिलकल्केन च चित्रकदंतीसैंधवेनालेपयेत् ॥ तैलं च रोपणं रास्नासरलोशीरविडंगमधुकक्षीरसंस्कृतं पिबेत् ॥ कुर्यात्पित्तजे रक्तजे च जलौकसो न्यग्रोधादिः प्रदेहपरिषेकयोः पद्मकादिः पाचने च ॥ द्राक्षेक्षुरसयुक्तो हरीतकीविरेकः ॥ पक्वे पाटिते च पित्तव्रणोक्तो विधिः ॥ कफजग्रंथिमंतःसंशुद्धस्य भृशं स्वेदयेद्विम्लापयेच्च ॥ काकादनीविकंकतकाकदंतिकारग्वधेंगुदमूलमदनफलभार्ङ्गीकरंजैर्लेपयेत् ॥ तग-

रविडंगैलवालुकचव्यपालाशवृंतचित्रकैर्वा ॥ भल्लातकसैंधवाजगंधासर्षपैर्वा ॥ एवमप्यपच्यमानममर्मस्थं विदार्य स्थितरक्तं निःशेषमग्निना दहेत् ॥ सशेषो हि पुनरापूर्यते ॥ ततो निर्वापितं क्षारक्षौद्रगुडोत्तरैरालेपयेत् ॥ संशुद्धं रोपयेत् ॥ मांसव्रणग्रंथी चैवमेव पाटयेत् ॥ मेदोजेऽप्ययमेव विधिः ॥ अपिच ॥ मेदोग्रंथिं तिलकल्कदिग्धद्विगुणपटांतरितं तप्तेन फालेन दर्व्या वा जतुलिप्तया बहुशः प्रमृष्यते ॥ शस्त्रं चावचार्य पूर्ववन्मेदो दहेत् ॥ सुपक्कं वा विपाट्य मूत्रक्षालितं क्षौद्रसैंधवसुवर्चिकाकांचनक्षीरीहरितालमिश्रैः क्षीरपाकंप्रगाढैस्तिलैरालेपयेत् ॥ गुंजाद्विकरंजतापसवृक्षवंशावलेखमूत्रसिद्धं तैलमभ्यंगः ॥ सम्यक्शुद्धं चैनं रोपयेत् ॥ सिराग्रंथौ त्वभिनवे तैलं साहचरं पिबेत् ॥ उपनाहश्च वातहरैर्बस्तिकर्म च कुर्यात् सिराव्यधश्च ॥ वातार्बुदमेरंडपियालनारिकेलमज्जैर्वारुककर्कारुबीजोत्कारिकयोपनाहयेत् ॥ आनूपामिषवेसवारैर्वा ॥ नाडीस्वेदं च कुर्यात् ॥ बहुशश्चात्र शृंगेण रुधिरमवसेचयेत् ॥ वातहरवर्गक्काथपयोम्लसिद्धं त्रैवृतं पिबेत् ॥ पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनं च प्रयोजयेत् ॥ शाककाकोदुंबरिकापत्रघृष्टे प्रियंगुपत्तंगसर्जरसार्जुनरोध्रमधुमधुकैर्लेपः ॥ प्रियंगुश्यामागिरिकर्णिकांजनक्लीतनकद्राक्षासप्तलान्यतमरससाधितं सर्पिः पीतं पित्तार्बुदश्लीपदोदरघ्नं ॥ श्लेष्मजे तूर्ध्वमधश्च हृतदोषस्य स्रुतरक्तस्य च वमनविरेचनद्रव्यैः प्रलेपः ॥ काकादनीशुकबर्हाग्निजिव्हामूलदक्षकपोतगृध्रपुरीषकाशमूलैर्वा ॥ पलाशक्षारपिष्टैः पिण्याककुलत्थनिष्पावैर्वा मांसप्रगाढैर्दधिपिष्टैर्लेपयेत् ॥ लेपास्वादलोभेन च निलीयमाना मक्षिकाः समुपेक्षेत तद्विमुक्तैः कृमिभिरितरैर्वा भक्ष्यमाणं च ॥ ततः कृमिभिर्भक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निना प्रतिसारयेत् ॥ अल्पमूलं वा त्रपुताम्रायःसीसपट्टकवेष्टितं पुनः पुनश्च क्षारान् कालापेक्षया योजयेत् ॥ जात्यास्फो-

तकरवीरपल्लवांश्च व्रणशोधनार्थ कल्कादौ ॥ तैलं चात्र पाठाविडंग-
भार्ङ्गीत्रिफलाकषायसिद्धमभ्यंगः ॥ मेदोर्बुदं स्विन्नभिन्नं सुशोधित-
मेदस्कमुपशांतरक्तस्रावं सद्यः सीव्येत् ॥ ततो गृहधूमरोध्रमनःशिला-
हरिद्रापत्तंगचूर्णैर्मधुसर्पिर्भिः प्रतिसारयेत् ॥ करंजतैलं चाभ्यंजनार्थं
च युंजीत ॥ सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि
रोपयेत् ॥ अपिच॥सशेषदोषाणि हि योऽर्बुदानि करोति तस्याशु पुन-
र्भवंति ॥ तस्मादशेषोद्धरणं प्रशस्तं क्षारेण शस्त्रेण तथाऽग्निना वा ॥
श्लीपदे तु वातात्मके स्नेहस्वेदोपनाहान्प्रयुज्य गुल्फस्योपरिष्टाद्व्यंगु-
ले सिरां विध्येत् ॥ एरंडतैलं गोमूत्रेण मासं पिबेत् ॥ जीर्णे ना-
गरक्वथितेन पयसा पुराणधान्यान्यश्नीयात् ॥ त्रिवृतं च पाययेत् ॥ब-
स्तिं च प्रयुंजीत ॥ एवमप्यशाम्यदग्निना दहेत् ॥ पैत्तिके मृदुरुपना-
हो गुल्फस्य चाधः सिरामोक्षः॥ पित्तार्बुदोक्ताः स्नेहविरेकाः पित्तघ्नाश्च
लेपाः॥श्लैष्मिके त्वंगुष्ठके सिरां मुंचेत् ॥ सक्षौद्रांश्च कफघ्नान्कषायान
भीक्ष्णं पाययेत् ॥ यथाबलं वा हरीतकी वर्द्धमाना ॥ अदारीकाकजं-
घाकाकादनीशुकनासाकदंबपुष्पीबृहतीद्वयमंतर्धूमं दग्ध्वा गोमूत्रेण
बहुशः परिस्रावयेत् ॥ ततस्तत्क्षारोदकं क्षारकल्पेन विपचेत् ॥ द-
द्याच्चात्र प्रतीवापं फल्गुशूकाख्यामदनफलरसं॥ एष क्षारो मधुराहार-
णाभ्यस्तोऽन्वहं श्लीपदापचीग्रहणीदोषारोचकान्सर्वविषाणि च निय-
च्छति॥तैलं वा पिबेद्विडंगार्कमरिचचित्रकचविकशुंठीदेवदार्वेलातार्क्ष्य
लवणपंचकैः सिद्धं॥ आलेपयेच्च नागरामृताविडंगकटुकाभद्रदारुभिर्मू-
त्र पिष्टैरूरुस्तंभोक्तैश्च भेषजैः॥यथासन्नं च शोधनं शीलयेत्॥गंडमा-
लायां कुंभनिकुंभद्रवंतीजीमूतककोशातकीफलविपक्वं घृतमुभया-
नुलोमनं पिबेत् ॥ शार्ङ्गेष्टामूलं च तक्रपिष्टं वमनार्थं सुखोदकेन वा
॥ जातीबर्हिष्ठनिर्गुंडीजीमूतकैरंडमूलत्वक्चूर्णं वा ॥ सिरां चास्य
विध्येत् ॥ सशेषदोषं तु कौष्टिकं नवकं पाययेत् ॥ रसांजनं गोमूत्र-

तंदुलोदकान्यतरेण वा ॥ तदेव च नावयेत् ॥ मधूकसारं वा ॥ शिग्रुफलानि वा ॥ निंबकरंजकरवीरसिद्धं वा ॥ विरेचनकं च धूमं पिबेत् ॥ अपक्कांश्च गंडान्नाकुलीसैंधवनागरैर्लेपयेत् ॥ गुंजाकरवीरार्कश्यामासिद्धार्थैकरजामूत्रयुक्तैर्दशकृत्वो विपक्कं तैलं लवणपंचकपिप्पलीमरिचचूर्णोपेतमभ्यंगात्सर्वावस्थमपच्यर्शोर्बुदनाडीदुष्टव्रणवल्मीकानपोहति ॥ सौवर्चलसैंधवोद्भिददंतीभल्लातकचित्रककल्केन सिद्धं तैलमभ्यंगोऽपच्यां ॥ तंदुलीयकस्वरसेन वा समरिचनिर्गुंडीरसं तैलं साधितमभ्यंगपाननावनैर्गंडमालानाडीव्रणकुष्ठानिलार्त्तिहरं ॥ काकादनीनंहिकाऽग्निजिह्वावंध्याककर्कोटकीविशालापाठोत्तुंडकीजीमूतकोशातकीबीजैरर्द्धपलांशैर्विषकर्षयुक्तैर्निर्गुंडीस्वरसोपेतं करंजतैलप्रस्थं विपचेत्तत्पूर्ववदेव प्रयुक्तं परमपचीघ्नं ॥ अममंजांश्च गंडानपक्कानेवोद्धृत्याग्निना क्षारेण वा प्रतिसारयेत् ॥ सर्षपवृक्षादनीक्काथैर्व्रणक्षालनं ॥ तिलकुंतलकक्षारपिष्टस्तिलकल्कः सुखोष्णो लेपः ॥ काककृकलासगौराहिनिर्मोककूर्माणामन्यतमस्यांतर्धूमदग्धस्य मर्षागुदतैलप्लुताऽभ्यंगः ॥ मांसीसर्जरसकार्पासीफलसैंधवैः स्तन्यपिष्टैस्तैलं पक्कमभ्यंगो व्रणकाठिन्यघ्नः ॥ सर्पाजगरवसातैलं समं त्रयमेतदपचीव्रणघ्नं ॥ श्लीपदोक्तानि च तैलानि प्रयोजयेत् ॥ एवमनुपशमे वामपार्श्वजायां दक्षिणजंघापृष्ठमध्यादिंद्रबस्तेरधस्तादूर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्यांडजालनिभं मेदोऽपनीयाग्निना दहेत् ॥अनेनेतरपार्श्वजा व्याख्याता ॥ एवमुभयपार्श्वजायां गंडमालायामुभयतः॥ यवमुद्गप्रायं च गंडमालासु भोजनं ॥ नाडीमनिलजामुपनाह्य पूयगतिमस्या निःशेषमेषित्वा च दारयेच्छस्त्रेण ॥ ततस्तिलापामार्गफलकल्केन ससैंधवेन पूरयित्वा बध्नीयात्॥पित्तजां सघृतक्षीरया पद्मकादिकृतयोत्कारिकयोपनाहितां विदारितां च तिलनागरदंतीमंजिष्ठाक-

ल्केनपूरयेत् ॥श्यामात्रिभंडीत्रिफलातिल्वहरिद्राद्वयकल्कक्षीरसंस्कृतं सर्पिरभ्यंगः परं नाडीनिबर्हणं॥श्लेष्मजां सक्तुकुलत्थकिण्वसर्षपैरुपनाह्य विदार्य च तैलसैंधवसौराष्ट्रीनिकुंभैर्लेपयेत्॥दंतीचित्रकसुवर्चिकासैंधवतालीतालपूतिकापामार्गपलैस्तैलं समूत्रं पाचितमभ्यंगः॥ शल्यहेतुकीं पाटयित्वा सर्वशः शल्यं विशोध्य मधुघृततिलकल्कप्रतिच्छन्नां बध्नीयात् ॥ बिल्वकपित्थकुंभीकखर्जूरवनस्पतिशलाटुक्काथे प्रियंगुमुस्तोरुबूकशकुनसुगंधिकारोध्रमोचरसधातुकीपुष्पगर्भं तैलं प्रतिसाधितं प्रसाधयत्याशु शल्यजां गतिं॥ अशस्त्रकृत्यायां नाड्यां भेदनैषिण्याऽते समुद्भिद्य क्षारक्तं सूत्रं प्रवेशयेत् ॥ तदसन्निधाने त्वरयेतरैषिण्या च तेनानवदीर्णायां तदनुस्यूतमन्यदन्यत्क्षारसूत्रं संचारयेदागतिभेदादयमनपायोऽभ्युपायः सूक्ष्मानेकगतिषु भगंदरेषु मूलेषु च छिद्रितेषु ग्रंथ्यर्बुदेष्विति ॥ भवति चात्र ॥ व्रणेषु दुष्टसूक्ष्मास्यगंभीरादिषु साधनं ॥ या वर्त्यो यानि तैलानि तन्नाडीष्वपि शस्यते ॥ बिभीतकाम्रास्थिवटप्रवालहरेणुकाशाल्मलिबीजयुक्ता ॥ वराहविष्टा च मषी सुदग्धा तैलप्लुता सर्वगतीर्निहंति ॥ धत्तूरकं मदनकोद्रवजं च बीजं कोशातकीशुकनसामृगभोजिनी च ॥ अंकोल्लजं च कुसुमं परिकल्प्य चूर्णं लाक्षोदकापहृतदोषगतौ प्रयोज्यं ॥ मिश्रितं तेन तैलं च परमं गतिरोपणं ॥ सौकरेषु[1] च कंदेषु कृतं वज्राह्वयेषु च ॥ भल्लातकार्कमरिचैर्लवणोत्तमेन सिद्धं विडंगरजनीद्वयचित्रकैश्च ॥ तैलं समार्कवरसैर्विनिहंति कृच्छ्रां नाडीं कफानिलकृतामपिच व्रणांश्च ॥ इति ग्रंथ्यर्बुदश्लीपदापचीनाडीप्रतिषेधो नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

अथातः क्षुद्ररोगविज्ञानं व्याख्यास्यामः ॥ स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ॥ पिटिका कफवाताभ्यां बालानामजगल्लिका ॥

---

१ सौवहेषु च कंदेष्वितिपाठः ॥ तत्र सुवहा गंधनाकुली

यवप्रख्या यवाकारा तैर्भ्यां मांसश्रिता घना ॥ अवक्रा चाल-जी वृत्ता स्तोकपूया घनोन्नता ॥ ग्रंथयः पंच वा षड्वा कच्छपी क-च्छपोन्नता ॥ कर्णस्योर्ध्वं समंताद्वा पिटिका कठिनोग्ररुक् ॥ शा-लूकाभा पनसिका शोफः स्वल्परुजः स्थिरः ॥ हनुसंधिसमुद्भू-तस्ताभ्यां[2] पाषाणगर्दभः ॥ शाल्मलीकंटकाकाराः पिटिकाः सरुजो घनाः ॥ मेदोगर्भा मुखे यूनां ताभ्यां[3] च मुखदूषिकाः ॥ ते पद्म-कंटका ज्ञेया यैः पद्ममिव कंटकैः ॥ चीयते नीरुजैः श्वेतैः शरीरं क-फवातजैः ॥ पित्तेन पिटिका वृत्ता पक्वोदुंबरसन्निभा ॥ महादाह-ज्वरकरी विवृता विवृतानना ॥ गात्रेष्वंतश्च वक्रस्य दाहज्वररुजा न्विताः ॥ मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटिका घनाः ॥ ततः कष्ट तराः स्फोटा विस्फोटाख्या महारुजाः ॥ या पद्मकर्णिकाकारा पिटि-का पिटिकाचिता ॥ सा विद्धा वातपित्ताभ्यां ताभ्यामेव च गर्दभी ॥ मंडला विपुलोत्सन्ना सरागा पिटिकाचिता ॥ कक्षेति[4] कक्षासन्ने षु प्रायो देशेषु साऽनिलात् ॥ पित्ताद्भवंति पिटिकाः सूक्ष्मा लाजोपमा घनाः ॥ तादृशी महती त्वेका गंधनामेति कीर्तिता ॥ घर्मस्वेदपरीतेंऽगे पिटिकाः सरुजो घनाः ॥ राजिकावर्णसंस्थानप्रमा-णा राजिकाह्वया ॥ दोषैः पित्तोल्बणैर्मंदैर्विसर्पति विसर्पवत् ॥ शो-फोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ॥ मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः ॥ कक्षाभागेषु जायंते येऽग्न्याभाः साऽग्निरोहिणी ॥ पंचाहात्सप्तरात्राद्वा पक्षाद्वा हंति जीवितं ॥ त्रि-लिंगा पिटिका वृत्ता जत्रूर्ध्वमिरिवेल्लिका ॥ विदारीकंदकठिना वि-दारी कक्षवंक्षणे ॥ मेदोनिलकफैर्ग्रंथिः स्नायुमांससिराश्रयैः ॥ भि-न्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः ॥ मांसं विशोष्य ग्रथितां

१ वातकफाभ्यां. ॥ २ वातकफाभ्यां ॥ ३ वातकफाभ्यां ४ काखमां-जरीतिलोके

शर्करामुपपादयेत् ॥ दुर्गंधि रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥ तां स्रावयंति निचितां विद्यात्तच्छर्करार्बुदं ॥ पाणिपादतले संधौ जत्रूर्ध्वं चोपचीयते ॥ वल्मीकवच्छनैर्ग्रंथिस्तद्वद्व्हणुभिर्मुखैः ॥ रुग्दाहकंडूक्लेदाढ्यैर्वल्मीकोऽसौ समस्तजः ॥ शर्करोन्मथिते पादे क्षते वा कंटकादिभिः ॥ ग्रंथिः कीलवदुत्सन्नो जायते कदरं तु तत् ॥ वेगसंधारणाद्वायुरपानोऽपानसंश्रयं ॥ अणूकरोति बाह्यांतमार्गमस्य ततः शकृत् ॥ कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ॥ कुर्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरं ॥ चिप्यमक्षतरोगं च विद्यादुपनखं च तं ॥ कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥ दुष्टकर्दमसंस्पर्शात्कंडूक्लेदान्वितांतराः ॥ अंगुल्योऽलसमित्याहुस्तिलाभांस्तिलकालकान् ॥ कृष्णानवेदनांस्त्वक्स्थान्मषांस्तानेव चोन्नतान् ॥ मषेभ्यश्चोन्नततरान् चर्मकीलान् सितासितान् ॥ तथाविधो जतुमणिः सरुजो लोहितस्तु सः ॥ कृष्णं सितं वा सहजं मंडलं लांच्छनं समं ॥ शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ॥ श्यामलं मंडलं व्यंगं वक्त्रादन्यत्र नीलिका ॥ परुषं परुषस्पर्शं व्यंगं श्यावं च मारुतात् ॥ पित्तात्ताम्रांतमानीलं श्वेतांतं कंडुमत्कफात् ॥ रक्ताद्रक्तांतमाताम्रं सोषं चिमिचिमायते ॥ वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति ॥ ततस्त्वग्जायते पांडुः क्रमेण च विचेतना ॥ अल्पकंडूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः ॥ असम्यग्वमनोदीर्णपित्तश्लेष्मान्नविग्रहैः ॥ मंडलान्यतिकंडूनि रागवंति बहूनि च ॥ उत्कोठः सानुबंधस्तु कोठ इत्यभिधीयते ॥ भवति चात्र ॥ प्रोक्ताः षट्त्रिंशदित्येते क्षुद्ररोगा विभागशः ॥ यान्विज्ञाय न संमुह्येच्चिकित्सायां चिकित्सकः ॥ इति क्षुद्ररोगविज्ञानं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

अथातः क्षुद्ररोगप्रतिषेधं व्याख्यास्यामः ॥ अजगल्लिकामपक्कां जलौकोभिर्ग्राहयेत् ॥ यवक्षारशुक्तिसौराष्ट्रीकल्कैश्च लेपयेत् ॥ पक्कामजगल्लिकां व्रणवदुपाचरेत् ॥ यवप्रख्यादीन् पाषाणगर्दभांतान् स्वेदयित्वा सुरदारुकुष्ठमनःशिलालैर्लेपयेत् ॥मुखदूषकान् रोध्रतुवरिकाभ्यां प्रदिह्यात् ॥ वटपत्रनारिकेलशुक्तिकाभ्यां सैंधववचाक्षिभेषजसिद्धार्थकैर्वा॥एवमशांतौ छर्दयेत्॥ललाटे च सिरां विध्येत् ॥ पद्मकंटकेषु निंबांबुवांतं निंबोदकसिद्धं सर्पिः सक्षौद्रं पाययेत् ॥निंबारग्वधकषायश्चोद्वर्त्तनं॥विवृतादीन् जालगर्दभांतानिरिवेल्लिकां च पित्तविसर्पवच्चिकित्सेत् ॥विशेषतो राजिकं चापाकवच्छर्करादूर्वाकटशर्कराभिः क्षीरपिष्टाभिर्लेपः॥अभीक्ष्णं च मृजाशीलनं॥जालगर्दभे वा त्रिफलां युंजीत॥ अग्निरोहिणीमपि प्रत्याख्याय पित्तविसर्पवदुपाचरेत् ॥ पक्कां तु मधुरवर्गसिद्धेन सर्पिषा रोपयेत् ॥ विदारिकां जलवासिनीभिः शोधयित्वा विल्वमूलनागमृत्तिकावर्षाभ्वजकर्णपलाशकल्केन प्रलिंपेत् ॥ अनुपशाम्यंतीं त्वभ्यज्य स्वेदयित्वा च विम्लापयेत्॥ पक्कां शस्त्रेण विदार्य निंबपटोलविदारिकल्केन[1] प्रच्छाद्य बध्नीयात् ॥ क्षीरिवृक्षबदरखदिरकषायो व्रणप्रक्षालनं ॥ शुद्धां मधुरकषायसंस्कृतेन तैलेन रोपयेत् ॥ शर्करार्बुदं मेदोर्बुदवदुपाचरेत् ॥ वल्मीकं हस्तपादस्य चोपरिष्टान्मर्मणि वा जातं प्रवृत्तमतिबहुच्छिद्रावृतं सशोफं च वर्जयेत् ॥ अतोऽन्यथा तु प्राकृतशुद्धेः शोणितमपहरेत् ॥ सक्तुपल्लवलवणगुडूच्यारेवतश्यामादंतीकुलित्थिकामूलैर्लेपयेत् ॥ पक्के तु सर्वगतिदुष्टमांसानि च शस्त्रेण सम्यक् शोधयित्वाऽग्निना क्षारेण वा दहेत्॥ सुशुद्धे व्रणे च भल्लातकमनःशिलैलाकालानुसार्यगुरुचंदनैर्निंबतैलं रोपणार्थं श्रपयेत् ॥ कदरं च शस्त्रेणोत्कृत्य स्नेहेन दहेत् ॥ रुद्धगुदे निरुद्धमणिवच्चिकित्सा ॥ चिप्यं शोणितावसेकसंशोधनैरु-

१ निंबतिलपटोलकल्केनेतिपाठः

पाचयेत् ॥ व्यपगतोष्माणं चैनमुष्णांबुना परिषिच्य यथायोगं शस्त्रेण परिकृत्यापनयेत् ॥ ततो रसांजनरोचनानेपालीतेजोह्वाकल्कैरंबुपिष्टैः शोधयित्वा कालेयकागुरुहरिद्रारसांजनसिद्धेन तैलेन रोपयेत् ॥ मधुरकषायसिद्धेन वा ॥ अवशिष्टं सर्जरसचूर्णेन पूरयेत् ॥ कुनखमपि प्रदुष्टमेवमेवोपक्रमेत् ॥ अलसे ऽम्लकांजिकावसिक्तौ चरणौ निंबतिलपटोलीकासीसरोचनाकल्केनालेपयेत् ॥ निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनाकासीसमनःशिलाचूर्णैः प्रतिसारयेत् ॥ तिलकालकान्मषकांश्च सूर्यकांतेनाग्निना दहेत् क्षारेण वा ॥ चर्मकीलं जतुमणिं च तद्वच्छस्त्रेणोत्कृत्य दहेत् ॥ लांच्छनव्यंगनीलिकासु यथासन्नां सिरां विध्येत् ॥ क्षीरिवृक्षकल्कैश्च क्षीरपिष्टैर्लेपयेत् ॥ बलाऽतिबलामधुकहरिद्राभिर्वा मधुकागुरुपयस्याकालीयकैर्वा तरुणकपित्थतिंदुकरजनीभिर्वाऽम्लिकामूलेन वा शूकरदंष्ट्रया वा मधुघृतयुक्तया ॥ विशेषेण व्यंगेष्वसृक्स्रावपूर्वमंजनं ॥ क्षौद्रेण वा यष्टीमंजिष्ठाऽजाक्षीरेण चार्द्रदाडिमत्वक् तेनैव बालामलकं गोमूत्रे सप्ताहं स्थितं दधिमंडेन वा कालीयकरोध्रोत्पलकिंजल्कं नवनीतेन वा श्वेताश्वखुरमषी ॥ तत्रापि वातजेषु देवदारुदुरालभा बृहतीमंजिष्ठामूर्वाऽपामार्गत्रायमाणाशुकनासाबलाविदारीयवबदरकुलत्थबिल्वोत्पलशतावरीदर्भमूलक्काथे शृंगीविडंगगर्भं घृतं विपक्वमधोपभुक्तं पानमभ्यंगं नावनं च सायं योजयेत् ॥ प्रलेपं च न्यग्रोधदेवदारुहरीतकीपूतिकरंजमदनफलचूर्णैर्घृतयुक्तैः बदरमज्जाकोद्रवलाजचूर्णेन वा सघृतेन श्वेतचमरास्थितालपत्रैः स्तन्यमधुघृतैर्वा ॥ पैत्तेषु बलामधुकमागधिकाक्षीरकाकोलीस्वगुप्ताफलकाकमाचीतुगाह्वाभिः सपयः सर्पिः सिद्धं पूर्ववत्प्रयोजयेत् ॥ मृद्वीकाश्वेतपाकखर्जूरपरूषकसौवीरबदरद्विमेदापुनर्नवकसेरुकामृणालैर्वा सक्षीरैरुपस्निग्धं चैनमिक्षुरसेनोभयतो विरेचयेत् ॥ कृतरुधिरावसेचनश्च व्यंगं मधु-

सारिवाबलाचंदनरोध्रोत्पलैर्घृतयुक्तैरालेपयेत् ॥ प्रपौंडरीमकधुकनी-
लोत्पलसारिवाकदलीमूलप्रवालसुवर्णगैरिकैर्वा ॥ शीतमधुरमन्नपानं
प्रवातमहःस्वप्नं सौमनस्यं च सेवेत ॥ कफजेषु दशमूलदेवदारुहरी-
तकीश्वदंष्ट्रामालतीक्काथे मुस्तकुष्टहरिद्राऽमरतरुकल्कैस्तद्वत्साधि-
तं सर्पिस्तद्वदेवोपयुंजीत ॥ तुत्थरोचनारोध्रप्रियंगुकालीयकैर्मधुघृ-
तैर्लेपः ॥ देवदारुसरलबलाशिग्रुमूलैर्वा मनःशिलातुत्थरसांजनैर्वा म-
धुना क्षारेण दशरात्रं प्रलेपः ॥ रक्तजेषु क्षीरसर्पिःस्निग्धस्य सिरां वि-
स्रावयेत् ॥ वमनविरेचने च पित्तवत्कुर्यात् ॥ आलेपश्चास्य चंदन-
मधुककल्केन ॥ घृतवसासर्जरसनीलोत्पलशंखवेतसकदलीमूलमूर्वा-
मधुककल्केन वा ॥ प्रसुप्तौ वातकुष्ठोक्तः क्रमोऽते चाग्निना दहेत् ॥
उत्कोठे पित्तश्लेष्महरो विधिः सक्षारलवणं च तैलमभ्यंगः ॥ को-
ठे कुष्ठचिकित्सितं चेक्षेत ॥ इति क्षुद्ररोगप्रतिषेधो नाम सप्तत्रिंशो-
ऽध्यायः ॥ ३७ ॥

अथातो गुह्यरोगविज्ञानं व्याख्यास्यामः ॥ स्त्रीव्यवायनिवृत्तस्य
सहसा भजतोऽथवा ॥ दोषाध्युषितसंकीर्णमलिनाणुरजःपथां[1] ॥
अन्ययोनिमनिच्छंतीमगम्यां[2][3] नवसूतिकां ॥ दूषितं[4] स्पृशतस्तोयं र-
तांतेष्वपिनैव[5] वा ॥ विवर्द्धयिषया तीक्ष्णान्प्रलेपादीन्प्रयच्छतः ॥ मु-
ष्टिदंतनखोत्पीडाविषवच्छूकपातनैः ॥ वेगनिग्रहदीर्घातिखरस्पर्श-
विघट्टनैः ॥ दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥ जनयं-
त्युपदंशादीनुपदंशोऽत्र पंचधा ॥ पृथग्दोषैः सरुधिरैः समस्तैश्चात्र
मारुतात् ॥ मेंढ्रे शोफो रुजश्चित्राः स्तंभस्त्वक्परिपोटनं ॥ प-
क्वोदुंबरसंकाशः पित्तेन श्वयथुर्ज्वरः ॥ श्लेष्मणा कठिनः स्नि-

---

१ वाताद्यधिष्ठीतस्तथा संकीर्णः संकटो मलिनोऽणुः सूक्ष्मो रजोमार्गो यस्या स्तथाविधां स्त्रियं ॥ २ महिष्यादिका ॥ ३ भगिन्यादिं ॥ ४ सविषजंत्वादिभिर्दूषितं जलं स्पृशतः ॥ ५ रतांतेष्वपि नैव जलं स्पृशतः ॥

गधः कंडूमान् शीतलो गुरुः ॥ शोणितेनासितस्फोटसंभवोऽस्र-स्रुतिर्ज्वरः ॥ सर्वजे सर्वलिंगत्वं श्वयथुर्मुष्कयोरपि ॥ तीव्रा रु-गाशु पचनं दारणं कृमिसंभवः ॥ याप्यो रक्तोद्भवस्तेषां मृ-त्यवे सन्निपातजः ॥ जायंते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ॥ अंतर्बहिर्वा मेंढ्रस्य कंडूला मांसकीलकाः ॥ पिच्छिलास्रस्रवा यो-नौ तद्वच्च छत्रसन्निभाः ॥ तेऽर्शांस्युपेक्षया घ्नंति मेंढ्रपुंस्त्वभगार्त्तवं[1] ॥ गुदस्य बहिरंतर्वा पिटिकाः कफरक्तजाः ॥ सर्षपामानसंस्थाना घनाः सर्षपिकाः स्मृताः ॥ पिटिका बहवो दीर्घा दीर्यंते मध्यतस्तु याः ॥ सोऽवमंथः कफासृग्भ्यां वेदनारोमहर्षवान् ॥ कुंभिका र-क्तपित्तोत्था जांबवास्थिनिभा ऽशुभा[2] ॥ अलर्जी मेहवद्विद्यादुत्तमां रक्तपित्तजां ॥ पिटिकां माषमुद्गाभां पिटिका पिटिकाचिता ॥ कर्णिका पुष्करस्येव ज्ञेया पुष्करिका तु सा ॥ पाणिभ्यां भृशसं-व्यूढे[3] संव्यूढपिटिका भवेत् ॥ मृदितं मृदितं वस्त्रसंरब्धं वातकोपतः ॥ विषमा कठिना भुग्ना वायुनाऽष्ठीलिका स्मृता ॥ विमर्दनादिदु-ष्टेन वायुना चर्ममेंढ्रजं ॥ निवर्त्तते सरुग्दाहं क्वचित्पाकं न गच्छति ॥ पिंडितं ग्रथितं चर्म तत्प्रलंबमधो मणेः ॥ निवृत्तसंज्ञं सकफं कंडू-काठिन्यवत्तु तत् ॥ विरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका ॥ वा-तेन दूषितं चर्म मणौ सक्तं रुणद्धि तत् ॥ स्रोतोमूत्रं ततोऽभ्येति मंदधारमवेदनं ॥ मणेर्विकासरोधश्च स निरुद्धमणिर्गदः ॥ लिंगं शूकै-रिवापूर्णं ग्रथिताख्यं कफोद्भवं ॥ शूकदूषितरक्तोत्था स्पर्शहानिस्त-[4]दाह्वया ॥ छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितं ॥ वातशोणितकोपेन तं विद्याच्छतपोनकं ॥ पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वर-दाहवान् ॥ मांसपाकः सर्वजः सर्ववेदनो मांसशातनः ॥ सरागैर-

१ मेंढ्रे जाता पुंस्त्वं घ्नंति भगे जाता आर्त्तवं घ्नंति ॥ २ आसुजेति पाठोऽष्टांगहृदये ३ पाणिभ्यामतिशयेन संव्यूढे घृष्टे सति ॥ ४ स्पर्शहानिसंज्ञा ॥ ५ ईषल्लोहितैः

सितैः स्फोटैः पिटिकाभिश्च पीडितं ॥ मेहनं वेदना चोग्रा तं विद्या-दसृगर्बुदं ॥ मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ॥ कृष्णानि भूत्वा मांसानि विशीर्यंते समंततः ॥ पक्कानि सन्निपातेन तान्विद्या-त्तिलकालकान् ॥ मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ॥ च-तुरो वर्जयेदेषां शेषांश्छीघ्रमुपाचरेत् ॥ विंशतिर्व्यापदो योनेर्जायंते दुष्टभोजनात् ॥ विषमस्थानशयनभृशमैथुनसेवनैः ॥ दुष्टार्त्तवादपद्र-व्यैर्बीजदोषेण दैवतः ॥ योनौ क्रुद्धोऽनिलः कुर्याद्रुक्तोदायामसुप्तताः ॥ पिपीलिकासृप्तिमिव स्तंभं कर्कशतां स्वनं ॥ फेनिलारुणकृष्णा-ल्पतनुरूक्षार्त्तवस्रुतिं ॥ स्रंसं वंक्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ॥ तांस्तांश्च स्वगदान् व्यापद्वातिकी नाम सा स्मृता ॥ सैवातिचर-णा शोफसंयुक्ताऽतिव्यवायतः ॥ मैथुनादतिबालायाः पृष्ठजंघोरुवं-क्षणं ॥ रुजन्संदूषयेद्योनिं वायुः प्राक्चरणेति सा ॥ वेगोदावर्त्तना-द्योनिं प्रपीडयति मारुतः ॥ सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुं-चति ॥ इयं व्यापदुदावृत्ता जातघ्नी तु यदाऽनिलः ॥ जातं जातं सुतं हंति रौक्ष्याद्दुष्टार्त्तवोद्भवं ॥ अत्याशिताया विषमं स्थितायाः सुरते मरुत् ॥ अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ॥ सास्थिमांसं मुखं तीव्ररुजमंतर्मुखीति सा ॥ वातलाहारसेविन्यां जनन्यां कुपि-तोऽनिलः ॥ स्त्रियो योनिमणुद्वारां कुर्यात्सूचीमुखीति सा ॥ वेगरो-धावृतौ वायुर्दुष्टो विण्मूत्रसंग्रहं ॥ करोति योनेः शोषं च शुष्का-ख्या साऽतिवेदना ॥ षडहात्सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ॥ व-मेत्सरुक्नीरुजो वा यस्याः सा वामिनी मता ॥ योनौ वातोपतप्ता-यां स्त्रीगर्भे बीजदोषतः ॥ नृद्वेषिण्यस्तनी च स्यात् षंढसंज्ञाऽनु-पक्रमा ॥ दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः ॥ कुरुते वि-

---

१ ग्रंथ्यादिरोगविज्ञानीये तच्च त्रिदोषजं ॥ २ स उक्तो विद्रध्यादिविज्ञानीये ॥

ष्टतां स्रस्तां वातिकीमिव दुःखितां ॥ उत्सन्नमांसां तामाहुर्महायोनिं महारुजां ॥ यथास्वैर्दूषणैर्दुष्टं पित्तं योनिं समाश्रितं ॥ करोति दाहपाकोषापूतिगंधज्वरान्वितां ॥ भृशोष्णभूरिकुणपनीलपीतसितासृवां ॥ सा व्यापत्पैत्तिकी रक्तयोन्याख्याऽसृगतिस्रुतेः ॥ कफोऽभिष्यंदिभिः क्रुद्धः कुर्याद्योनिमवेदनां ॥ शीतलां कंडुलां पांडुं पिच्छिलां तद्विधस्रुतिं ॥ सा व्यापच्छ्लैष्मिकि वातपित्ताभ्यां क्षीयते रजः ॥ सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ॥ पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ॥ पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥ शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ॥ बस्तिकुक्षिगुरुत्वातिसारारोचककारिणी ॥ श्रोणिवंक्षणरुक्तोदज्वरकृत् सा परिप्लुता ॥ वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥ उपप्लुता स्मृता योनिर्विप्लुताख्या त्वधावनात् ॥ संजातजंतुः कंडूला कंड्वा चातिरतिप्रिया ॥ अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः ॥ कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीं ॥ सा कर्णिनी त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ॥ यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥ इति योनिगदा नारी यैः शुक्रं न प्रयच्छति ॥ ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणान् ॥ असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥

इति गुह्यरोगविज्ञानीयो नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अथातो गुह्यरोगप्रतिषेधं व्याख्यास्यामः ॥ उपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां व्यधेत् ॥ जलौकसो वा योजयेत् ॥ उभयतश्चास्य विधिवद्दोषानपहरेद्विशेषतो विरेचनेन ॥ तदयोग्यस्य त्वत्युच्छ्रितानास्थापनेन॥यथायोगं च लेपसेकादीनविरतं विदध्यात् ॥ एवं सद्य एव रुक्शोफरागसंरंभा निवर्त्तंते॥ पक्वेषु तु शस्त्रमवचारयेत् ॥सघृतक्षौद्रेण च तिलकल्केन वा लेपयेत्॥अपिच॥जंब्वा

१ पीडाविशेषान्.

श्वसुमनोनीपश्वेतकांबोजिकांकुरान् ॥ शल्लकीबदरीबिल्वपलाशति-
निशोद्भवाः ॥त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ॥ स क्काथः
क्षालनं तेन पक्कं तैलं च रोपणं ॥ गोजीविडंगमधुकसर्वगंधैश्च पे-
षितैः ॥ तुत्थगैरिकलोध्रैलामनोऽह्वालरसांजनैः ॥ हरेणुपुष्पकासी-
ससौराष्ट्रीलवणोत्तमैः ॥ लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः ॥
दार्वीत्वक्सेऽयताक्ष्यौंत्थलाक्षागोक्षुरविड्सैः ॥ सक्षौद्रतैलसर्पिर्भिर्ले-
पः श्रेष्ठो व्रणे तथा ॥ लाक्षाद्राक्षाऽतसीक्षौद्रैः क्षौद्रशैलेयताक्ष्यजैः
॥ कपाले त्रिफला दग्धा सघृता रोपणी परं ॥ सामान्यं साधनमि-
दं वांतिकं तु प्रलेपयेत् ॥ अपक्कं कुष्ठयष्ट्याऽह्वसुरदारुपुनर्नवैः ॥ स्नि-
ग्धोष्णैर्लौध्रसरलरास्नापुंड्राह्वसंयुतैः ॥ अथवा निचुलैरंडबीजगोधू-
मचिक्कसैः ॥ गैरिकांजनमंजिष्ठामधुकोशीरपद्मकैः ॥ सचंदनोत्प-
लैः शीतैर्घृताढ्यैः पित्तसंभवं॥ पद्मोत्पलमृणालैर्वा ससर्जार्जुनवेतसैः॥
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ॥ धवशालाश्वकर्णाजकर्णत्वग्भिः
कफोत्थितं ॥ सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥ रजन्य-
तिविषामुस्तसरलामरदारुभिः ॥ सपर्णपाठापत्तूरैरथवा श्लेष्मसंभवं ॥
न च याति यथा पाकं प्रयतेत तथा भृशं ॥ पक्कैः स्नायुसिरामांसैः
प्रायो नश्यति हि ध्वजः ॥ उपदंशद्वये शिष्टे प्रत्याख्यायाचरेत्क्रियां
॥ अर्शांसि च यथायोगं शुद्धदेहस्य शस्त्रक्षारादिभिः साधयेत् ॥ उ-
पदंशोक्ताश्चात्र रसक्रियालेपाः ॥ सर्षपिकां विलिख्य कषायैरवचू-
र्णयेत् ॥ तैरेव तैलं व्रणरोपणं कुर्यात् ॥ अवमंथे जलौकसो योज-
येत् ॥ पक्कभिन्नं धवतिंदुकशल्लकीपत्तंगसर्जकृतेन तैलेनारोपयेत्
॥ तद्वत् कुंभीकामुपाचरेत् ॥ रोध्रतिंदुकत्रिफलाकृतस्तु लेपस्तैलं
च रोपणं ॥ अलजीं स्रुतरक्तां कषायैरवचूर्णयेत् ॥ तेष्वेव च तैलं
व्रणरोपणार्थं कुर्वीत ॥ उत्तमपिटिकां शस्त्रेण छित्वा कषायचूर्णप्रदे-
हैर्मधुमद्भिरुपाचरेत् ॥ पुष्करिकासंव्यूढस्पर्शहानित्वक्पाकेषु पित्त-

विसर्पोक्तो विधिः ॥ मृदितं कोष्णेन बलातैलेन सेचयेत् ॥ मधुरद्रव्यकल्कैः सुखोष्णैर्घृतसिक्तैरुपनाहयेत् ॥ अष्ठीलिकां जलौकोभिर्ग्राहयेत् ॥ तथाऽनुपशमे श्लेष्मग्रंथिमिव शस्त्रेणोद्धरेत् ॥ निवृत्तं सर्पिषाऽभ्यज्य स्वेदयेत् ॥ स्विन्नमुपनाहयेत् त्रिरात्रं पंचरात्रं वा साल्वणेन ततो भूयः स्वेदयित्वा घृतेनाभ्यज्य शनैः शनैश्चर्मसमानयन्मणिमवपीडयेत् ॥ पीडयित्वा च पुनरुपनाहयेत् ॥ स्निग्धोष्णं चान्नपानं ॥ अवपाटिकायामप्ययं विधिः ॥ निरुद्धमणेः सुवर्णादिकृतां दारुजां वा जतुसृतां नाडीमुभयतो द्वारां स्नेहाभ्यक्तां स्रोतसि प्रणिधाय शूकरशिशुमारयोर्वसया मज्ज्ञा वा परिषेचयेत् ॥ चक्रतैलेन वा वातहरसिद्धेन वा त्रिवृतेन वा ॥तृतीये तृतीयेऽहनि नाडीं पीनतरां विदध्यात् ॥ एवमस्य स्रोतोद्वारं विवर्द्धयेत् स्निग्धं चाहारं भोजयेत् ॥ एवमनुपशांतौ शस्त्रेण सेवनीं परिहृत्य दारयित्वा सद्यः क्षतवदुपाचरेत् ॥ ग्रथितं नाडीस्वेदेन स्वेदयित्वा स्निग्धोष्णैरुपनाहयेत् ॥ शतपोनकं लिखित्वा कषायचूर्णैः सक्षौद्रैर्लेपयेत् ॥ विदार्यादिसिद्धेन तैलेन रोपयेत् ॥ रक्तार्बुदे रक्तविद्रधिवत्साधनं ॥ सर्वेषु च यथास्वमंतःशुद्धिं कषायलेपघृततैलरसक्रियाचूर्णान् शोधनरोपणान्विदध्यात् ॥ योनिव्यापदि तु वातिक्यां लवणतैलाक्तां योनिं पिंडनाडीकुंभप्रभृतिभिः स्वेदयेत् ॥ ततः सुखोष्णांबुपरिषिक्तसर्वगात्रां जांगलरसैर्भोजयेत् ॥ बलाद्रोणद्वयनिर्यूहे पयस्याशालिपर्णीमागधिकाशतावरीकाकनासाश्रावणीशर्कराजीवनीयमहाकषायगर्भं क्षीरचतुर्गुणं घृततैलाढकं साधयेत् ॥ तत्पानात् सर्वान् वातपित्तविकारानपोहति गर्भजननं च ॥ शतावरीत्रिफलागुडूचीकाश्मर्यमृद्वीकाकसेरुकपरूषकहरिद्राद्वयसहचरशुकनासापुनर्नवैः कार्षिकैर्घृतप्रस्थः सिद्धो वातजान् योनिरोगानपहरति गर्भजननश्च ॥

१ घृततैलवसात्मकेन स्नेहत्रयेण ॥

सैंधववचोपकुंचिकापिप्पलीवृषकयवक्षाराजमोदाजाजीसितोपलाचि-त्रकचूर्णो मदिराकुलितः सर्पिषा संयावीकृत्य भक्षितो योनिपार्श्वबस्तिवेदनाशोगुल्महृद्रोगहरः ॥ शूले वृषकरास्नागोक्षुरकशृतं पयः पिबेत् ॥ वृषकमातुलुंगमूलमदयंतिकासैंधवपिप्पलीकृष्णजीरककल्कं वा मद्येन ॥ तेनैव चार्जकमूलं बिल्वयुतं पिप्पलीयुक्तं सौवर्चलोपकुंचिकापिप्पलीयुक्तं वा मद्येनावंतिसोमेन वा ॥ दंतीत्रिफलागुडूचीक्वाथः सुखोष्णो योनेः परिषेकः ॥ कुष्टतगरदेवदारुवार्ताकिनीसैंधवैः साधितं तैलं पिचुना धारयेत् ॥ रास्नामालतीछिन्नरुहामधुकबलाऽग्यामीदेवदारुचित्रकयूथिकामूलैः कार्षिकैस्तैलप्रस्थो वाजिमूत्रे द्विगुणपयसा विपक्वः पिचुना प्रणीतोऽनिलार्त्तिहरः ॥ बस्तिकर्माभीक्ष्णं स्वेदं च प्रयोजयेत् ॥ विशेषतो वातहरैः सुकुमारकबलातैलशिरीषतैलैः सशतपाकसहस्रपाकैश्चानुवासनमुत्तरबस्तिश्च ॥ एष क्रमो विशेषेण योनेर्वेदनाकार्कश्यस्तंभसंस्पर्शहानिघ्नः ॥ अतिचरणादिषु सर्वास्वनिलजास्वयमेव क्रमः ॥ धारयेच्चातिचरणायां यवगोधूमकिण्वकुष्टशतपुष्पाश्यामाह्वाप्रियंगुबलाखुपर्णीकल्ककृतामुत्कारिकां ॥ प्राक्चरणाशुष्काविप्लुताकर्णिनीषु तैलमुत्तरबस्तिं दद्यात् ॥ धारयेच्च विप्लुतायां गोमत्स्यान्यतरपित्तेनैकाविंशकृत्वो भावितान् क्षौमनक्तकान्किण्वचूर्णमाक्षिकमेवं युक्तमस्याः स्रोतांसि विशुध्यंति कंडूक्लेदशोफाश्च निवर्त्तंते ॥ कर्णिन्यां कुष्टार्कपल्लवपिप्पलीसैंधवैर्बस्तमूत्रपिष्टैर्वर्तिं कृत्वा धारयेत् ॥ श्लेष्महरं च सर्वं कर्म ॥ उपावृत्तायामानूपमांसरसाः क्षीरं स्वेदो दशमूलत्रिवृताक्काथकल्कसिद्धश्च स्नेहः पानानुवासनोत्तरबस्तिषु ॥ योनिस्रंसे च महायोनिप्रभृतिष्वेष एव विधिः ॥ जातघ्नीरक्तयोनिरक्तक्षयासु कुटजकाश्मर्यक्काथसिद्धं सर्पिरुत्तरबस्तौ दद्यात् ॥ अथवा मृगाजाविवरा-

---

१ अत्र ग्रंथसंगतिश्चिंत्या

हरुधिराम्लदधिमधुघृतानीति ॥ भवति चात्र ॥ स्नेहस्वेदनबस्त्यादि वातलास्वनिलापहं ॥ कारयेद्रक्तपित्तघ्नं शीतं पित्तक्रियासु च ॥ श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्यथायथं ॥ सन्निपाते विमिश्रं तु संसृष्टासु तु कारयेत् ॥ स्निग्धस्विन्नां तथा योनिं दुस्थितां स्थापयेत्समां ॥ पाणिनोन्नमयेज्जिह्मां संवृतां व्यधयेत् पुनः ॥ प्रवेशयेन्निःसृतां तु विवृतां परिवर्तयेत् ॥ स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रियो मता ॥ सर्वां व्यापन्नयोनिं च कर्मभिर्वमनादिभिः ॥मृदुभिः पंचभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥ सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ॥ बस्त्यभ्यंगपरीषेकप्रलेपपिचुधारणं ॥ हिंस्राकल्कं समीरार्त्तौ कोष्णमभ्यज्य धारयेत् ॥ पंचवल्कस्य पित्तार्त्यां श्यामादीनां कफातुरा ॥ वामिन्याप्लुतयोश्चैव स्वेदयित्वा प्रयोजयेत् ॥ तर्पणं स्नेहपिचुभिर्भोजनं चानिलापहं ॥ शल्लकीजिंगणीजंबूधवत्वक्पंचवल्ककल्कैः ॥ कषायैः साधितात्स्नेहात् पर्युपप्लुतयोः पिचुं ॥ कुलीरसूकरवसासर्पिर्भिर्मधुरैः शृतैः ॥ पूरयित्वा महायोनिं बध्नीयात्क्षौमनक्तकैः ॥ प्रशस्तां सर्पिषाऽभ्यज्य क्षीरस्विन्नां प्रवेशयेत् ॥ बध्नीयाद्वेसवारस्य पिंडं मूत्रेण कल्कितं ॥ यच्च वातविकाराणां कर्मोक्तं तच्च कारयेत् ॥ सर्वव्यापत्सु मतिमान्महायोन्यां विशेषतः ॥ न हि वातादृते योनिर्वनितानां प्रदुष्यति॥अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजं ॥ पित्तलानां तु योनीनां सेकाभ्यंगपिचुक्रियाः ॥ शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥ शतावरीमूलतुलाचतुष्कात्क्षुण्णपीडितात् ॥ रसेन क्षीरतुल्येन पाचयेत घृताढकं ॥ जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ॥ पिष्टैः प्रियालैश्चाक्षांशैर्मधुकार्द्धपलान्वितैः ॥ सिद्धशीते तु मधुनः पिप्पल्याश्च पलाष्टकं ॥ शर्कराया दशपलं क्षिपेल्लिह्यात् पिचुं ततः ॥ योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परं ॥ क्षतक्षयमसृक्पित्तं कासं श्वासं हलीमकं ॥ काम-

लां वातरुधिरं विसर्पं हृच्छिरोग्रहं ॥ अपस्मारार्दितायाममदोन्मादां-
श्च नाशयेत् ॥ एवमेव घृतं क्षीरं जीवनीयोपसाधितं ॥ गर्भदं पित्त-
जानां च रोगाणां परमं हितं ॥ रक्तयोन्यामसृग्वर्णैरनुबंधमवेक्ष्य च
॥ यथादोषोदयं युंज्याद्रक्तस्थापनमौषधं ॥ तिलचूर्णं दधिघृतं फा-
णितं शौकरी वसा ॥ क्षौद्रयुक्तं जयेत्पीतं वातोत्तरमसृग्दरं ॥ वराह-
स्य रसो मेध्यः सकौलत्थश्च तद्गुणः॥ पत्रकल्को घृते भृष्टो राजादन-
कपित्थयोः ॥ शर्कराक्षौद्रयष्ट्याव्हनागरैश्च युतं दधि ॥ पयस्योत्पल-
शालूकबिसकालीयवारिजं ॥ सपयःशर्कराक्षौद्रं रक्तपित्तोत्तरे पिबेत्
॥ तंदुलीयकमूलं वा सक्षौद्रं तंदुलांभसा ॥ सताक्ष्यशैलां लाक्षां वा
छागेन पयसा पिबेत् ॥ वासाघृतं तिक्तघृतं रक्तपित्ते हितं च यत् ॥
मधुकं त्रिफलां रोध्रं मुस्तं सौराष्ट्रिकां मधु ॥ मद्यैर्निंबगुडूच्यौ च क-
फजेऽसृग्दरे पिबेत् ॥ पाठां जंब्वाम्रयोरस्थि शिलोद्भेदं रसांजनं ॥
अंबष्ठां शाल्मलीपिच्छां समंगां वत्सकत्वचं ॥ बाल्हीकबिल्वातिवि-
षारोध्रतोयदगैरिकं ॥ शुंठीमधुकमाचीकारक्तचंदनकट्फलं ॥ कट्वंग-
वत्सकानंताधातकीमधुकार्जुनं ॥ पुष्ये गृहीत्वा संचूर्ण्य सक्षौद्रं
तंदुलांभसा ॥ पिबेदर्शःस्वतीसारे रक्तं या चोपवेश्यते ॥ दोषा जं-
तुकृता ये च बालानां तांश्च नाशयेत् ॥ योनिदोषं रजोदोषं
श्यावश्वेतारुणासितं ॥ चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितं ॥
सर्वेषु गर्भस्रावोक्तं प्रदरेषु प्रशस्यते ॥ रक्तक्षयायां क्षीरं च जी-
वनीयशृतं पिबेत् ॥ योन्यां श्लेष्मप्रदुष्टायां वर्त्तिः संशोधने हिता ॥
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता ॥ भावितं पयसाऽर्कस्य
माषचूर्णं ससैंधवं ॥ वर्त्तिः कृता क्षणं धार्या सेक्तव्याऽनुसुखांबुना ॥
पिप्पलीमाषमरिचशताव्हाकुष्टसैंधवैः ॥ प्रदेशिन्यंगुलीतुल्या वर्त्तिर्यो-
निविशोधिनी ॥ उदुंबरशलाटूनां द्रोणं द्रोणेऽभसः क्षिपेत् ॥ सपंच-

१ पयःसर्पिरिति पाठः ॥ पयःसर्पिः क्षीरोत्थं घृतं ॥ २ गजादनकपित्थयोरिति पाठः

वल्कतिलकमालतीनिंबपल्लवैः ॥ निशास्थिते जले तस्मिंस्तैलप्रस्थं विपाचयेत् ॥ पलाशशाल्मलीलाक्षाधवनिर्यासवल्कलैः ॥ पिष्टैर्युक्तं च तत्स्नेहपिचुं योनौ निधापयेत् ॥ सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनं ॥ पिच्छिला विवृता योनिश्चिरदुष्टा तु दारुणा ॥ सप्ताहाच्छुध्यति क्षिप्रमपत्यं च समश्नुते ॥ उदुंबरस्य दुग्धेन षट्कृत्वो भावितांस्तिलान् ॥ तैलं क्वाथेन तस्यैव सिद्धं धार्यं च पूर्ववत् ॥ धातुक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ॥ जंब्वाम्रसारकासीसरोध्रकट्फलतिंदुकैः ॥ सौराष्ट्रिकादाडिमत्वगुदुंबरशलाटुभिः ॥ अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ तैलप्रस्थं तदभ्यंगपिचुबस्तिषु योजयेत् ॥ शूनोत्तानोन्नता सुप्ता पिच्छिला स्राविणी तथा ॥ विप्लुतोपप्लुता योनिः सिध्येत्सस्फोटशूलिनी ॥ अर्कनिंबाम्रकोशाम्रबिल्वपूगधवोद्भवैः ॥ करंजजिंगिणीजंबूकरंजार्जुनशिग्रुजैः ॥ पलाशमधुकोत्थैश्च कषायैर्धावनं परं ॥ सुक्तसीधुमधून्मिश्रैर्योन्याः स्रावनिवारणं ॥ कुर्यात् सतक्रगोधूमयुक्तैर्वा त्रिफलारसैः ॥ यवान्नमभयारिष्टसीधुतैलं च शीलयेत् ॥ पिप्पल्ययोरजःपथ्याप्रयोगांश्च समाक्षिकान् ॥ रोहीतकजटाकल्कं पांडुरेऽसृग्दरे पिबेत् ॥धात्रीमज्ञोऽथवा कल्कं सितामाक्षिकसंयुतं ॥ मधुनाऽऽमलकीचूर्णं रसं वा प्राशयेत् सिते ॥ सरोध्रकल्केन वटत्वक्कषायेण सेचयेत् ॥ आस्रावे क्षौमपट्टान्वा भावितांस्तेन धारयेत् ॥ प्लक्षत्वक्चूर्णपिंडं वा धारयेन्मधुनोक्षितं ॥ योन्या स्नेहाक्तया रोध्रप्रियंगुमधुकस्य च ॥ धार्या म¹धुघृता वर्त्तिः कषायाणां च भूरिशः ॥ स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृतप्लुतैः ॥ सरलागुग्गुलुयवैः सतैलैः कटुमत्स्यकैः ॥ कासीसं त्रिफला कांक्षी साम्रजंब्वस्थिधातकी ॥ पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ॥ पलाशधातुकीजंबुसमंगामोचसर्जजः॥ दुर्गंधे पिच्छि-

१ मधुयुतेति चरके पाठः

लोत्क्लेदे स्तंभनश्चूर्ण इष्यते आरग्वधादिवर्गस्य कषायः परि-षेचनं ॥ स्तब्धानां कर्कशानां च कार्यं मार्दवकारकं ॥ धारणं वेसवारस्य कृशरापायसस्य च ॥ दुर्गंधानां कषायः स्यात्तैलं वा कल्क एव वा ॥ चूर्णो वा सर्वगंधानां पूतिगंधापकर्षणः ॥ श्ले-ष्मजानां कटुप्रायाः समूत्रा बस्तयो हिताः ॥ पित्ते समधुक-क्षीरा वाते तैलाम्लसंयुताः ॥ सन्निपातसमुत्थायाः कर्म साधारणं हि-तं ॥ एवं योनिषु शुद्धासु गर्भं विंदंति योषितः ॥ अदुष्टे प्राकृते-बीजे जीवोपक्रमणे सति ॥ पंचकर्मविशुद्धस्य पुरुषस्यापि चेंद्रियं ॥ परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥ मंजिष्ठाकुष्ठतगरत्रिफ-लाशर्करावचाः ॥ द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ॥ प-यस्या हिंगुकाकोली वाजिगंधा शतावरी ॥ पिष्ट्वाऽक्षांशैर्घृतप्रस्थं प चेत्क्षीरचतुर्गुणं ॥ योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते ॥ आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परं ॥ फलसर्पिरिति ख्यातं पुष्पे[1] पीतं फलाय तत्॥म्रियमाणप्रजानां च गर्भिणीनां च पूजितं ॥ एतत्परं च बालानां ग्रहघ्नं देहवर्द्धनं ॥ इति गुह्यरोगप्रतिषेधो नामैकोनचत्वा-रिंशोऽध्यायः ॥ ३९ ॥

इति शल्यतंत्रं नाम पंचममंगं समाप्तं ॥ ५ ॥

अथातो विषप्रतिषेधं व्याख्यास्यामः ॥ पुरा खल्वमृतार्थं सुरा-सुरैः सलिलनिधेर्विमथ्यमानात्क्रोधइव रूपवान्सत्वं समुद्बभूव कृष्णं हृ-रितनयनमूर्ध्वप्रदीप्तकेशं दंष्ट्राकरालं भैरवारावरूपं ॥ तद्दर्शनादेव य-तो देवदानवा विषण्णास्तस्माद्विषसंज्ञामवाप ॥तत्र सहसैव सर्वभूता-नि निर्दग्धुकाममुपयोगविशेषैर्विषममृततां नयमानो ब्रह्मा ऽनुनीयौ-

---

१ पुष्पे आर्तवकाले पीतं फलाय भवति

षधिषु न्यस्तवान् ॥ ततश्च स्थावरासु मूर्तिष्वधिवसनात् स्थावरमित्युच्यते ॥ जंगमं पुनः पृथिव्याभारावतारार्थमुरगादिरूपेण विष्णुर्निर्ममे ॥ तयोः स्थावरं मूलपत्रपुष्पफलत्वक्सारनिर्यासक्षीरधातुकंदभेदाद्दशाधिष्ठानं ॥ तत्र मूलविषाणि क्लीतनकाश्वमारकगुंजासुगंधकगर्गरककरघाटकादीनि ॥ पत्रविषं कालपत्रकालंबरवरदकरंभाकोदीनां ॥ पुष्पविषं वल्लीजरेणुककरंभमहाकरंभादीनां ॥ फलं कुमुद्वतीरेणुकाकरंभमहाकरंभनंदनकतुवरकादीनां ॥ त्वक्सारनिर्यासाः करककरघाटककरंभमहाकरंभनाराचकादीनां ॥ क्षीरं कुमुद्वतीदंतीस्नुह्यर्कजालिनीव्याल्लादीनां ॥ धातवो हरितालफेनाश्मभस्मरक्तप्रभृतयः ॥ कंदजानि तु हालाहलकालकूटवत्सनाभशृंगीसर्षपवालककर्दमकवैराटकमुस्तकसाकुककौंचकबलाहलकमहाविषपुंडरीकगालवमूलकमर्कटकर्कटककरवीरकेंद्रायुधसांकोचकलांगलकतैलपयकुशमुस्तकेंद्रमुष्ककरोहिषाजनाभकादीनि ॥ तत्र मूलविषैरुपयुक्तैरुद्वेष्टनप्रलापमोहाः प्रजायंते ॥ पत्रविषैर्जृंभोद्वेष्टनश्वासाः॥ पुष्पविषैश्छर्द्याध्मानमोहाः ॥ फलविषैर्दाहमुष्कशोफौ ॥ निर्यासविषैः प्रसेकास्यदौर्गंध्यपारुष्यशिरोवेदनाः ॥ क्षीरविषैर्जिह्वागौरवं शकृद्भेदश्च ॥ धातुविषैस्तालुदाहमूर्च्छाहृदयपीडाः॥ सर्वमेव च स्थावरं ज्वरहिध्मातंद्रादंतहर्षहनुस्तंभगलग्रहफेनवमनाऽरुचिश्वासमूर्च्छाः करोति विशेषेण कंदजं ॥ तध्यतितीक्ष्णत्वादाशुकारितरं॥इतरं तु प्रायः कालांतरप्राहरणं ॥ सर्वमपि चैतन्मूलमित्युच्यते मूलाश्रयत्वात्पत्रादीनां ॥जंगमस्य त्वाश्रयाः षोडश ॥ दृष्टिनिःश्वासस्पर्शदंष्ट्रामुखनखास्थिमूत्रपुरीषशुक्रार्त्तवलालाशूकपित्तशोणितशवानि ॥ तानि पुनः सर्पकीटकणभाद्याश्रितानि ॥ तत्कृतानां यथास्वमामयानां साधनं चोत्तरत्र वक्ष्यते॥सर्वं च प्रायशो जंगमं निद्रातंद्राक्लमदाहरोमहर्षशोफपाकातिसारान्करोति ॥ द्विविधमपि चैतद्विषं तीक्ष्णोष्णरूक्षविशदसूक्ष्मव्यवा-

घ्याशुकारिविकाशिलघ्वव्यक्तरसैर्दशभिर्गुणैर्युक्तमपाकि च ॥ तत्र तै-क्ष्ण्योष्ण्यात् पित्तं रक्तं च प्रकोपयति रौक्ष्याद्वायुं वैशद्यादसक्तवेगं प्रसरति सौक्ष्म्याद्व्यवायित्वाच्च दोषधातुमलादीन्समंताच्छरीरावयवाननु प्रविशत्याशुकारित्वादाशु व्यापादयति विकाशित्वान्मर्मच्छेदेन मतिं व्यामोहयति लाघवाद्दुर्निर्हरमव्यक्तरसत्वाच्छ्लेष्मप्रकोपमन्नरसांश्च सर्वाननुवर्त्तते ॥ अत एव च प्रयत्नेनान्नानि विषतो रक्षेदित्युक्तं ॥ अपाकित्वाज्जरां नो याति तेनाभ्यवहृतमवश्यं मारयति मंत्रौषधबलेन चोपशमितमपि प्रत्ययमासाद्य प्रकुप्यतीति ॥ भवति चात्र ॥ स्थावरं जंगमं चेति विषं प्रोक्तमकृत्रिमं ॥ कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ॥ हंति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ शोफपांडूदरोन्माददुर्नामादीन् करोति वा ॥ अपि चैतद्विषं सर्वं तीक्ष्णाद्यैरन्वितं गुणैः ॥ वातपित्तोत्तरं नृणां सद्यो हरति जीवितं ॥ विषं हि देहं संप्राप्य प्राग्दूषयति शोणितं ॥ कफपित्तानिलांश्चानु समं दोषान् सहाशयान् ॥ ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥ शरीरं दूषिते रक्ते सर्वं चिमिचिमायते ॥ कोठः समंडलः स्वेदो रोमहर्षश्च जायते ॥ क्षुद्रकीटा इवांगे मे विसर्पंतीति मन्यते ॥ विनामयति गात्राणि जृंभते शिशिरप्रियः ॥ व्यापिनस्तस्य दुष्टस्य रक्तस्य विषतेजसः ॥ वातादयो वशं यांति बलिनोऽप्यबला इव ॥ विषं यद्दोषभूयिष्ठं तं दोषं प्राक् प्रपद्यते ॥ आश्रये यस्य यस्यैव ततस्तदवतिष्ठते ॥ तज्जान् विकारान्कुरुते यान्सर्पेषूपदेक्ष्यते ॥ वाताशयस्थं कुरुते तथा श्लेष्मामयानपि ॥ पित्तश्लेष्माशयगतं तद्वत्पित्तकफोद्भवान् ॥ तत्रापि चोत्तमांगस्थे सकोठं शूयते शिरः ॥ विशेषादक्षिकूटौष्ठनासास्यं हृष्टदंतता ॥ तालुशोषो रुजा मूर्ध्नि वक्रे चिमिचिमायनं ॥ अर्थेषु चक्षुरादीनामप्रवृत्तिर्हनुग्रहः ॥ इत्यन्यत्रापि च विषं स्थितमंगेऽभिलक्षयेत् ॥ व्याप्यैवं सकलं देहमुपरु-

ध्य च वाहिनीं[1] ॥ विषं विषमिव क्षिप्रं प्राणानस्य निरस्यति ॥ पीतं मृतस्य हृदयं जग्धदिग्धाभिविद्धयोः ॥ दंशे तिष्ठति भूयिष्ठं सर्वतः पिंडितं विषं ॥ नाद्यादतो विशेषेण तेषां मांसं तदाश्रयं ॥ यथास्वं भक्षिते पीडा यथास्वं च क्रियाक्रमः ॥ सप्त वेगान्विषस्याहुरष्टाविति पुनर्वसुः ॥ दुष्यति प्रथमे वेगे रसश्छर्दिप्रसेककृत् ॥ द्वितीयेऽस्रं चिमचिमाजृंभावेपथुकारि तत् ॥ तृतीये पिशितं कंडूकोठमंडलशोफदं॥दोषाश्चतुर्थे तेषु स्युर्यथायथमुपद्रवाः॥पंचमे दर्शने भ्रांतिः षष्ठे हिध्मासमुद्भवः॥सप्तमे स्कंधभग्नस्य जायते मृत्युरष्टमे ॥ दुष्यति प्रथमे रक्तं द्वितीये श्वयथूदयः ॥ तृतीयेंऽगे चिमिचिमा चतुर्थे ज्वरमूर्च्छना॥ पंचमे पांडुजिव्हाऽऽस्यशोफः षष्ठे हृदि व्यथा ॥ सप्तमे मरणं वेग इति नग्नजितो मतं॥मूर्च्छा हृदि परं पीडा शिरोरुगपतंत्रकः॥हिध्मा च दारुणो मर्मच्छेदो जीवितसंक्षयः॥सप्तेति वेगा मूर्च्छाद्या विदेहपतिना स्मृताः॥रक्तमांसवसास्नायु तथाऽस्थ्याद्यास्त्वयःक्रमात्॥आश्रयाः सप्त सप्तानामित्यालंबायनोऽब्रवीत् ॥ वेगान्धन्वंतरिस्तद्वत्सर्पदष्टस्य मन्यते ॥ स्थानवर्जं समस्थाने दोषानिच्छति कोष्ठगान् ॥ धान्वंतरेषु याः सप्त कलाः पूर्वं प्रकीर्तिताः ॥ अतीत्य तासामेकैकां वेगं प्रकुरुते विषं ॥ तत्कालकल्पं कालेन कलामभ्येति यावता ॥ ऊह्यमानं समीरेण तावद्वेगांतरं स्मृतं ॥ मुनिना येन यत्रोक्तं तत्सर्वमिति दर्शितं ॥ जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ॥ स्वभावतो वा न गुणैः[2] सुयुक्तं दूषीविषाख्यं विषमभ्युपैति ॥ वीर्याल्पभावादविभाव्यमेतत्कफावृतं वर्षगणानुबंधि ॥ तेनार्दितो भिन्नपुरीषवर्णो दुष्टास्त्ररोगी तृडरोचकार्तः ॥ मूर्च्छन्वमन् गद्गदवाक्प्रमुह्यन् भवेच्च दूष्योदरलिंगजुष्टः ॥ आमाशयस्थे कफवातरोगी पित्ताशयस्थेऽनिलपित्तरोगी ॥ भवेन्नरो ध्वस्तशिरोरुहांगो विलूनपक्षः

---

१ वाहिनीरितिपाठः २ स्वभावतो वा गुणविप्रहीनमिति सौश्रुते पाठः

स यथा विहंगः ॥ स्थितं रसादिष्वथवा यथोक्तान्करोति धातुप्रभवा-
न्विकारान् ॥ प्राग्वाताजीर्णशीताभ्रदिवास्वमाहिताशनैः ॥ दुष्टं दूष-
यते धातूनतो दूषीविषं स्मृतं ॥ स्थावरस्योपयुक्तस्य वेगे पूर्वे प्रजा-
यते ॥ जिव्हायाः श्यावता स्तंभो मूर्च्छा त्रासः क्लमो वमिः ॥ द्विती-
ये वेपथुः स्वेदो दाहः कंठे च वेदना ॥ विषं चामाशयं प्राप्तं कुरुते हृ-
दि वेदनां ॥ तालुशोषस्तृतीये तु शूलं चामाशये भृशं ॥ दुर्बले ह-
रिते शूने जायेते चास्य लोचने ॥ पक्वाशयगते तोदहिध्माकासांत्रकू-
जनं ॥ चतुर्थे जायते वेगे शिरसश्चातिगौरवं ॥ कफप्रसेको वैवर्ण्यं प-
र्वभेदश्च पंचमे ॥ सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ षष्ठे संज्ञा-
प्रणाशश्च स भृशं चातिसार्यते ॥ स्कंधपृष्ठकटीभंगो भवेन्मृत्युश्च स-
प्तमे ॥ प्रथमे विषवेगे तु वांतं शीतांबु सेचितं ॥ सर्पिर्मधुभ्यां संयु-
क्तमगदं पाययेद्द्रुतं ॥ द्वितीये पूर्ववद्वांतं विरिक्तं चानु पाययेत् ॥ तृ-
तीयेऽगदपानं च हितं नस्यं ततोऽजनं ॥ चतुर्थे स्नेहसंयुक्तमगदं प्र-
तियोजयेत् ॥ पंचमे मधुकक्वाथमाक्षिकाभ्यां युतं हितं ॥ षष्ठेऽती-
सारवत्सिद्धिरवपीडस्तु सप्तमे ॥ मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशि-
तं क्षिपेत् ॥ कोशातक्यग्निकः पाठा सूर्यवल्यमृताभयाः ॥ शेलुः शि-
रीषः किणिही हरिद्रे क्षौद्रसाव्हया ॥ पुनर्नवे त्रिकटुकं बृहत्यौ सारि-
वे बले ॥ एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकां ॥ युंज्याद्वेगांतरे
सर्वविषघ्नीं कृतकर्मणः ॥ तद्वन्मधूकमधुकपद्मकेसरचंदनैः ॥ अगदा-
न्वक्ष्यते चातः सिद्धान् पूर्वर्षिनिर्मितान् ॥ सर्वेषु सर्वावस्थेषु ये विषे-
षु परं हिताः॥ चंदनं कुंकुमं कुष्टं कांक्षी लाक्षा प्रियंगवः ॥ मुस्तस्थौ-
णेयशैलेयरोचनामदनप्लवं॥ श्रीवेष्टकविडंगैलाविशालाऽत्मनःशिलाः॥
सुरसप्रसवस्पृक्कारजनीद्वयवालकं ॥ हिंगु सिद्धार्थकाः पद्मचारिणी
पद्मकेसरं ॥ जात्याः पुष्पं प्रवालत्वक् पुष्पमर्कशिरीषयोः ॥ द्विरोध्र-

---

१ च शब्दात् पूर्वोक्ता रसनाश्यावतादयः स्युः ॥ एवमग्रेऽपि चशब्दार्थो बोध्यः

बृहतीकौंतीमधुकं गंधनाकुली ॥ मुद्गपर्णी कणा श्यामा ध्यामकं नलदं नतं ॥ सिंधुवारितशामाकं देवदारु मयूरकं ॥ पुष्ये समाहृतैः पिष्टैर्योज्यस्तैरगदोत्तमः ॥ संजीवनः प्रागमृताद्विहितोऽयं स्वयंभुवा ॥ पाननस्यांजनघ्राणधूमालेपनधारणैः ॥ जीवानां विषमुप्तानां राजद्वारे जयावहः ॥ धन्यो धान्यधनायुःश्रीक्षेमपुष्टिसुखप्रदः॥ गृहे स्थितो विषालक्ष्मीमंत्रज्वरगरग्रहान्॥कृत्याकार्मणकष्टादिव्यालजंतुसरीसृपान्॥ स्वमोपघातदुःस्वमतोयाग्निनृपतस्करान् ॥ निहंत्यकालमरणं मरकाशनिविग्रहान् ॥ चंदनं वालकं मुस्तां ध्यामकं कटुका नतं॥ दाडिमं कुंकुमं शुंठी कपित्थं वत्सकात्त्वचं[1] ॥ करंजबीजं मरिचं दलमौत्पलकामलं ॥ नलमूलमपामार्गकरवीरकमंजनं ॥ द्राक्षामालत्यहिच्छत्रनागपुष्पाम्लवेतसं ॥ विशाला रोचना श्यामा शंखपुष्पी प्रियंगुकः ॥ अजाजीसारिवाकुष्ठमजमोदकुरंटकं ॥ वयस्थासिंदुवारैला कायस्था चारटी वचा ॥ कर्कटी पूतना केशी श्वेता च गिरिकर्णिका ॥ गोलोमी सिंहलोमी च वर्षाभू गजपिप्पली ॥ अगदो यापनाख्योऽयं पूर्वेण सदृशो गुणैः ॥ अंजनं तगरं कुष्टं हरितालं मनःशिला ॥ फलिनी त्रिकटु स्पृक्का नागपुष्पं सकेसरं ॥ हरेणुमधुकं मांसी रोचना कोमलाक्षिका[2] ॥ श्रीवेष्टकं सर्जरसः शताव्हा कुंकुमं बला ॥ तमालपत्रतालीसभूर्जोशीरनिशाद्वयं ॥ कन्योपवासिनी स्नात्वा शुक्लवासा मधुद्रुतैः ॥ द्विजानभ्यर्च्य तैः पुष्ये कल्पयेदगदोत्तमं ॥ वैद्यश्चात्र सदा मंत्रं प्रयतात्मा पठेदिमं ॥ नमः पुरुषसिंहाय नमो नारायणाय च ॥ यथाऽसौ नाभिजानाति रणे कृष्णः पराजयं ॥ एतेन सत्यवाक्येन अगदो मे प्रसिद्ध्यतु ॥ नमो वैदूर्यमाते हर[3] हर रक्ष मां सर्वविषेभ्यः गौरी गांधारी चांडाली मातंगी स्वाहा ॥ पिष्टे

---

१ वत्सकात्फलमितिपाठः २ काकमालिकेत्यष्टांगहृदये पाठः ३ हरहरेत्यत्र हुलु हुल्वित्यष्टांगहृदये पाठः

च द्वितीयो मंत्रः ॥ ॐ हरिमयि स्वाहा ॥ अशेषविषवेतालग्रहकर्मणपाप्मसु ॥ मरकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ पाननस्यांजनालेपमणिबंधादियोजितः ॥ एष चंद्रोदयो नाम शांतिः स्वस्त्ययनं परं ॥ वासवो वृत्रमवधीत् समालिप्तोऽमुना किल ॥ श्रीवेष्टकं हरिद्रे द्वे कोविदारं मनःशिलां ॥ पिप्पलीं पाटलां श्वेतां श्वेतां च गिरिकर्णिकां ॥ मंजिष्ठां बृहतीं शक्रयष्टीमधुककेसरं ॥ फलिनीं किणिहीं चेति गवां पित्तेन पेषयेत् ॥ सूर्योदयो हंति विषं तमः सूर्योदयो यथा ॥ निंबकाष्ठं गृहाद्धूमं फाणितं बृहतीद्वयं ॥ गोपित्तयुक्तमगदः परमं मृतजीवनः ॥ गोपित्तकुष्ठसुरसमधुकद्विनिशं तथा ॥ विशालरजनीकुष्ठश्वपित्तव्योषतुंबरु ॥ वचाशिरीषपंचांगो मृतसंजीवनोऽगदः ॥ पंचांगानि शिरीषस्य श्वपित्तं च परोऽगदः ॥ प्रियंगु तगरं लाक्षा मंजिष्ठा मधुकं मधु ॥ हरिद्रा चेत्ययं श्रेष्ठः कौटिल्यदयितोऽगदः ॥ विसंज्ञानां विषघोरैः प्रहारैर्नष्टचेतसां ॥ उद्बंधानां जलौघेन मृतानां चेतनावहः ॥ शिरीषफलकाकांडसुरसाग्रपुनर्नवैः॥ कक्षावायसिसंयुक्तैरगदः पूर्ववद्गुणैः ॥ कटुकालाबुमूलानि गवां पित्तेन कल्कयेत् ॥ ब्राह्मो धार्योऽयमगदः सर्वकर्मसु पूजितः ॥ आगारधूमस्त्रिवृता गोपित्तं त्र्यूषणं वचा ॥ प्राजापत्योऽयमगदः सर्वरक्षोविषापहः ॥ श्वेतपुष्करतुल्यांशं जीवंत्याः कुसुमं घृतं ॥ रुक्मगर्भो मणिधार्यश्चाणक्येष्टो विषापहः ॥ मांसीत्वक्पत्रसुरसमनोह्वाशीतकुंकुमं ॥ निशा व्याघ्रनखं शुंठी दशांगोऽयं विषापहः ॥ उत्पातगल्लपिटिकादिग्धविद्धविषापहः ॥ उदुंबरत्वग्जंब्वस्थिमधुकोत्पलगैरिकैः ॥ चंदनोशीरनलदनागकेसरपद्मकैः ॥ विशेषाद्विषविस्फोटवीसर्पज्वरदाहहा ॥ शिरीषोदुंबरप्लक्षन्यग्रोधाश्वत्थवल्कलैः ॥ सघृतो दाहतृष्णास्रविषवीसर्पपित्तहा ॥ गजापिप्पलिकासीसक्षारयष्टीमधूरकं ॥ रक्ता नतं वचा दंती शिवः शिवकृतो गणः ॥ सुराह्वा

पावकी सोमभोगवत्यमृता नतं ॥ आढकी किणिही सोमराजी चौशनसोऽगदः ॥ श्लेष्मातकोऽर्ककुसुमं तंदुलीयो मयूरकः ॥ सुरसामंजरी काकमाची पानेऽगदो वरः ॥ दध्याज्यक्षौद्रलवणं पीतं मूलविषापहं ॥ हरिद्रासैंधवक्षौद्रघृतं संसृज्य पाययेत् ॥ आर्तान्मूलविषैर्घोरैर्दिग्धविद्धान्विशेषतः ॥ हरिद्राऽन्तर्बहिः शस्ता विषदोषातुरे परं ॥ निशाऽश्वमारसुरसकरंजव्योषदारुभिः ॥ अंजनं बस्तमूत्रेण पिष्टैर्नेत्रोपरोधजित् ॥ कर्णाक्षिनासिकाकंठजिह्वारोगेषु नावनं ॥ बीजपूरोऽथ बृहतीफलं ज्योतिष्मतीकृतं ॥ श्वेता वचा हिंग्वमृता सुगंधा कुष्टसैंधवं ॥ शिरीषपुष्पद्विनिशाव्योषटुंटुकसर्षपाः ॥ कपित्थमध्यं लशुनं करंजो वंशलेखनं ॥ पिष्ट्वा गोबस्तमूत्रेण तत्पित्तेनैव भावयेत् ॥ दिनानि सप्त विधिना विनिहंति ततोंऽजनात् ॥ विषं शिरस्थं मूर्द्धार्तिज्वराजीर्णविसूचिकाः ॥ अपस्मारगदोन्मादपांडुमेहमदात्ययान् ॥ शुष्कनेत्रामयशिरोरोगपैल्लगलार्बुदान् ॥ काचांधकारपटलकंडूदौर्बल्यपक्ष्मणः ॥ लेपात्पीतमथालीढं दुष्टदिग्धं विषं जयेत् ॥ श्वित्रं कृच्छ्राणि कुष्ठानि दुष्टनाडीमहाव्रणान् ॥ आनाहार्शो गुदे लेपाल्ललाटे दुष्टपीनसं ॥ योनिलेपेन नारीणां मूढगर्भानुलोमनः ॥ उन्मूलयत्येष विषं गदो हस्तीव काननं ॥ विडंगपाठात्रिफलाऽजमोदहिंग्वग्निवक्रं[1] लवणस्य वर्गः ॥ व्योषान्वितं स्थावरजंगमानां जेता विषाणामगदोऽजिताख्यः ॥ मनोह्वारोचनाचंडात्वगेलासितसर्षपैः ॥ स्पृक्काहिंगुलकाश्मीरकांतादिः कल्कितोऽगदः ॥ विषघ्नो बालसूर्योऽयं श्रीरक्षाविषयोगदः ॥ अश्वगंधा सगोमूत्रा गृहधूमः सगुग्गुलुः ॥ एष माहेश्वरो योगो न क्वचित्प्रतिहन्यते ॥ विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ विवर्णभावं भजते विषार्दं त्वाशु गच्छति ॥ कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ श्रोणिपृ-

१ अग्निवक्रोभल्लातकः

ष्ठशिरस्कंधसंधयः स्युः सवेदनाः ॥ कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ॥ दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ॥ आरक्तपीतपर्यंतः श्यावमध्योऽतिरुग्व्रणः ॥ शूयते पच्यते सद्यो गत्वा मांसं च कृष्णतां ॥ प्रक्लिन्नं जीर्यते ऽभीक्ष्णं सपिच्छिलपरिस्रवं ॥ कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतं ॥ शल्यमाकृष्य तप्तेन लोहेनानु दहेद्व्रणं ॥ अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लिजः ॥ शिरीषाद्धुधनख्याश्च क्षारेण प्रतिसारयेत् ॥ शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ॥ कीटदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ॥ व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ॥ सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽऽरातिचोदिताः ॥ गरमाहारसंयुक्तं यच्छंत्यासन्नवर्तिनः ॥ नानाप्राण्यंगशमलविरुद्धौषधिभस्मनां ॥ विषाणां मंदवीर्याणां योगो गर इति स्मृतः॥ तेन पांडुः कृशोऽल्पाग्निः कासश्वासज्वरार्दितः ॥ वायुना प्रतिलोमेन स्वप्नचिंतापरायणः॥महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलसः ॥ शोफवान् सतताध्मातः शुष्कपादकरः क्षयी ॥ स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ प्रायः पश्यति शुष्कांश्च वनस्पति जलाशयान् ॥ मन्यते कृष्णमात्मानं गौरो गौरं च कालकः ॥ विकर्णनासानयनं पश्येत्तद्विहतेंद्रियः ॥ एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः॥ गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः॥गरार्तो वांतिमान् भुक्त्वा तत्पथ्यं पानभोजनं ॥ शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ॥ शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ लेहः प्रशमयत्युग्रं सर्वयोगकृतं विषं॥मूर्वामृतानतकणापटोलीचव्यचित्रकान्॥वचामुस्तविडंगानि तक्रकोष्णांबुमस्तुभिः॥पिबेद्रसेन चाम्लेन गरोपहतपावकः

[1] शमलं पुरीषं [2] पूर्वोक्तं पानभोजनं [3] विधेः स्मरन्नित्यत्राधिगर्थेत्यादिना विधिशब्दात्कर्मणिषष्ठीत्यष्टांगहृदयेऽरुणदत्तः ॥ विधिमित्यपि पाठः [4] बीजपूरादिरसेन

॥ पारावतामिषशठीपुष्कराव्हशृतं हिमं ॥ गरतृष्णारुजाकासश्वासहि
ध्माज्वरापहं ॥ वायसी श्वासकासघ्नी भृष्टाऽथ त्रिफलारसे ॥ भा-
र्ङ्गीनागरनिर्यूहः शिशिरश्च समाक्षिकः ॥ हरेणुचंदनश्यामानलदं श्ल
क्ष्णपेषितं ॥ विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचः ॥ मंजिष्ठाकिणि-
हीनिंबरजन्यश्वत्थचंदनैः ॥ प्रघर्षणं कृशानां तु गरेण क्षपितौजसां॥
पथ्यं परममुद्दिष्टं शीलनं क्षीरसर्पिषोः ॥ वृषनिंबपटोलीनां क्वाथेन
विपचेद्धृतं ॥ अभयागर्भिणं श्रेष्ठं तद्गरस्य निबर्हणं ॥ हरिद्रे नाकुलीं
जातीं पृथक् पिष्ट्वा विपाचयेत् ॥ घृतत्रयं विषार्तानामेतदारोग्यदं
परं ॥ तंदुलीयकमूलेन गृहधूमेन चैकतः ॥ क्षीरेण च घृतं सिद्धं स
मस्तविषरोगजित् ॥ नागदंतीत्रिवृद्दंतीद्रवंतीस्नुक्पयःफलैः ॥ सा-
धितं माहिषं सर्पिः सगोमूत्राढकं हितं ॥ सर्पकीटविषार्तानां गरार्ता-
नां च शांतये ॥ मधुकं तगरं कुष्ठभद्रदारुहरेणवः ॥ मंजिष्ठैलैलवालू-
नि नागपुष्पोत्पलं प्लवं ॥ विडंगं चंदनं पत्रं प्रियंगु ध्यामकं बला ॥
अंशुमत्यौ हरिद्रे द्वे बृहत्यौ सारिवाद्वयं ॥ एषां कल्कैर्घृतं सिद्धम-
जेयं नाम विश्रुतं ॥ विषाणि हंति सर्वाणि शीघ्रमेव प्रयोजितं ॥ श्वे
तैकमाता बीजानि प्रत्यक्पुष्पीशिरीषयोः ॥ गोमूत्रपिष्टैस्तैः सर्पिः
सिद्धं विषहरं परं ॥ अमृतं नाम विख्यातमपि संजीवयेन्मृतं ॥ शि
रीषत्वक्त्रिकटुकं विदारी चंदनोत्पलं ॥ द्वे बले सारिवास्फोतसुरभी-
निंबपल्लवाः ॥ बंधुजीवाढकीमूर्वावासासुरसवत्सकाः ॥ पाठांकोटाश्व-
गंधार्कमूलयष्ट्याव्हपद्मकं ॥ विशाला बृहती द्राक्षा कोविदारी शता-
वरी ॥ कटभी दंत्यपामार्गपृष्टिपर्णीरसांजनं ॥ श्वेतौ बाणाश्वखुर-
कौ कुष्टदारुप्रियंगुकाः ॥ विदारी मधुकं सारं करंजस्य फलं वचा ॥
रजन्यौ रोध्रमक्षांशं पिष्ट्वा साध्यं घृताढकं ॥ तुलांबु छागगोमूत्रत्र्या-
ढके तद्विषापहं ॥ अपस्मारक्षयोन्मादभूतग्रहगरोदरान् ॥ पांडुरोग-

१ पाटलाइति पाठः

कृमिप्लीहगुल्मोरुस्तंभकामलाः ॥ हनुस्तंभग्रहार्दींश्च पानाभ्यंजननावनैः ॥ हंति संजीवयति च विषोद्बंधमृतान्नरान् ॥ भक्षिते हरिताले तु हृदि दाहो रसाग्रहः ॥ आनाहोऽम्लस्य वमनं पीतहारिद्रविट्स्रुतिः ॥ तथा मंडलिसर्पोक्तविकारास्तत्र भेषजं ॥ विभज्य योजयेदूर्ध्वमधः संशोधितं हितं ॥ अंकोल्लजालिनीबीजशुकनासाप्रियंगुकाः ॥ रोध्रध्यामकनालीसनतयष्ट्याह्वगुग्गुलु ॥ ह्रीबेरं भद्रकाष्टं च लेहयेन्मधुसर्पिषा ॥ दद्यान्नकुलगोपित्तश्रुतान्नस्यांजने च तान् ॥ धत्तूरकोपयोगेन सर्वं पश्यति पीतकं ॥ कंपलालामदच्छर्दिस्मृतिभ्रंशभ्रमान्वितः ॥ तं वामयेत मधुरैः पाययेद्वा सितापयः ॥ कोरदूषैर्मदनकैः प्रायो धत्तूरवद्गदाः॥ उन्मादोऽक्षिविनाशश्च तत्रापि वमनं हितं ॥ कूष्मांडकं च सगुडं बहुशस्तत्र भक्षयेत् ॥ नानाप्रकारैः संयोगैः कोद्रवा मदहेतवः ॥ तान्विभज्य यथायोगं चिकित्सेदविरोधिभिः ॥ दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितं ॥ दूषीविषारिमगदं लेहयेन्मधुनाऽऽप्लुतं ॥ पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्चिका ॥ कुटन्नटं नतं कुष्ठं यष्टीचंदनगैरिकं ॥ दूषीविषारिर्नाम्नाऽयं न चान्यत्रापि वार्यते ॥ हरीतकी सलवणा मागधी मरिचानि च ॥ एतद्दूषीविषार्तानां काश्यपोक्तं विरेचनं ॥ युंज्याच्च विषरोगेषु रेकं व्योषाधिकं भिषक्॥तरुणस्य पलाशस्य श्रृतं क्षारोदकं पिबेत्॥काथेनात्र प्रतीवापं प्रक्षिपेच्छ्लक्ष्णचूर्णितं ॥ व्योषं शिरीषकुसुमं मधुकं सारिवे मिशी ॥ कुष्ठं वेल्लनिशं लाक्षायुक्तां सुरसमंजरीं ॥ सिंधूत्थरक्तत्वङ्मांसीरेणुकाहिंगुबाल्हिकं ॥ दर्वीप्रलेपि तज्जातं गोविषाणे निधापयेत् ॥ क्षारं गुल्मोदरार्शांसि मेहमंदाग्निताज्वरान् ॥ त्वग्दोषकासापस्मारग्रहोन्मादभगंदरान् ॥ पांडु कंठोरसोरोगान् प्लीहानं श्वयथुं कृमीन् ॥ कोलमात्रमतः खादन् जयेत्सर्वविषाणि च ॥ विषं तेजोमयं मंत्रैः सत्यब्रह्मतपोधनैः ॥ यथा निवार्यते शीघ्रं प्रयुक्तैर्न तथौषधैः ॥

न तु सर्वमनुष्याणां संति भेषजसंपदः ॥ अज्ञातरोगसद्भावे योग्यता चातिदुर्लभा ॥ प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितं ॥ अवाप्तौ सिद्धमंत्राणां यतेतातश्चिकित्सकः ॥ नापि ते व्रतहीनस्य हीना वा स्वरवर्णतः ॥ यस्मान्न सिद्धिमायांति तस्माद्योज्योऽगदक्रमः ॥ विष-प्रकृतिकालान्नदोषदूष्यादिसंगमे॥विषसंकटमुद्दिष्टं[1] शतस्यैकोऽत्र जीवति ॥ क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ॥ अजीर्णवर्चोद्रवता-पित्तमारुतवृद्धिभिः ॥ तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ॥ ह-स्तिमूषिकवादित्रनिःस्वनैर्विषसंकटैः ॥ पुरोवातोत्पलामोदमदनैर्वर्द्धते विषं ॥ वर्षासु चांबुयोनित्वात्संक्लेदं गुडवद्गतं ॥ विसर्पति घनापाये तदगस्त्यो हिनस्ति च ॥ प्रयाति मंदवीर्यत्वं विषं तस्माद्घनात्यये ॥ इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलं ॥ आलोच्य निपुणं बुध्या कर्मानंतरमारभेत्॥श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ॥ कषाय-कटुतिक्तैश्च भोजनैः शमयेद्विषं ॥ पैत्तिकं स्रंसनैः[2] सेकप्रदेहैर्भूरिशी-तलैः ॥ कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ वातात्मकं जयेत्स्वादु स्निग्धाम्ललवणान्वितैः॥सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनैः ॥ नाघृ-तं स्रंसनं शस्तं प्रलेपो भोज्यमौषधं ॥ सर्वेषु सर्वावस्थासु विषेषु न घृतोपमं ॥ विद्यते भेषजं किंचिद्विशेषात्प्रबलेऽनिले ॥ रक्तजे स्रावये-द्रक्तं पित्तवच्च क्रियाक्रमः॥दूषीविषे पुनः स्वस्थे पंचकर्माणि चाचरेत्॥ गंडूषैः कवलैः प्राशैस्तीक्ष्णैः प्रधमनांजनैः ॥ शिरोगतं प्रशमयेद्वि-षसंक्रमणैस्तथा ॥ विषदुष्टकफस्रोतोरुद्धवायुर्मृतोपमः ॥ यः स्या-दसाध्यलिंगैश्च रहितस्तस्य योजयेत् ॥ मूर्ध्नि काकपदं कृत्वा कल्कं चर्मकषोद्भवं ॥ ध्मापनं चास्य कटभीजालिनीकटुकैर्हितं ॥ आ-

---

१ विषप्रकृत्यादियोगे सति विषसंकटं कथितं ॥ अस्मिंश्च विषसंकटे विषार्तः शत-मध्ये एको जीवति ॥ तत्र विषप्रकृतिः पित्तप्रकृतिः कालो वर्षा विषान्नं सर्पपादि विषदोषः पित्तं दूष्यं रक्तं आदिशब्देन सात्म्यादीनां ग्रहणं २ विरेचनैः

शये यस्य दोषस्य विषं तिष्ठति तं पुरः ॥ आश्रयाश्रयिणोर्विद्वानविरोधेन साधयेत् ॥ क्षारागदैः कफस्थाने स्थिते स्वेदसिराव्यधैः॥ पित्ते क्षौद्रपयोऽभ्यज्य पानसेकावगाहनं॥ स्वेदो वाताशये दध्ना पानं च नतकुष्टयोः ॥ क्षीरेण गुडगर्भेण मदनस्य फलेन च ॥ आस्थापनं प्रयुंजीत वाताशयगते विषे ॥ पचेद्यष्टीमधुक्काथे तैलं क्षीरचतुर्गुणं ॥ त्रिफलासर्षवेताल्लीशतपुष्पेंदुराजिभिः ॥ अनंतया च तत्पानंनावनाभ्यंगबस्तिषु ॥ भोजने च प्रणिहितं हंति वाताशयाद्विषं ॥ बलया सोमराज्या वा पचेत्पाटलयाऽथवा ॥ घृतमंडसमं तैलमनुवासनिकं परं ॥ विषोपद्रवपथ्यं च वीक्ष्य युंज्याद्यथायथं ॥ अयत्नाच्छ्लेष्मगं साध्यं यत्नात्पित्ताशयाश्रितं ॥ सुदुःसाध्यमसाध्यं वा वाताशयगतं विषं ॥ इति विषप्रतिषेधो नाम चत्वारिंशोऽध्यायः॥ ४० ॥

अथातः सर्पविषविज्ञानीयमध्यायं व्याख्यास्यामः ॥ दिव्यभौमविभागेन द्विविधाः पन्नगाः स्मृताः ॥ वासुकिस्तक्षकोऽनंतः सागरः सागरालयः॥ तथोपनंदनंदाद्याः समिद्धाग्निसमप्रभाः॥ दिव्या गर्जंति वर्षंति द्योतंते द्योतयंति च ॥ धारयंति जगत्सर्वं कुर्युः क्रुद्धाश्च भस्मसात् ॥ दृङ्निश्वासैर्नमस्तेभ्यो न तेष्वस्ति चिकित्सितं ॥ दर्वीकरा[1] मंडलिनो राजीमंतश्च पन्नगाः ॥ त्रिधा समासतो भौमा विद्यंते ते त्वनेकधा ॥ व्यासतो योनिभेदेन नोच्यंतेऽनुपयोगतः ॥ विशेषाद्रूक्षकटुकमम्लोष्णं स्वादुशीतलं ॥ विषं दर्वीकरादीनां क्रमाद्वातादिकोपनं ॥ तारुण्यमध्यवृद्धत्वे वृष्टिवातातपेषु च ॥ विषोल्बणा भवंत्येते व्यंतरा[2] ऋतुसंधिषु ॥ रथांगलांगलच्छत्रस्वस्तिकांकुशधारिणः ॥ फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः ॥ ज्ञेया मंड-

---

१ दर्वीरूपः फणएवै करो हस्तो येषां ते दर्वीकराः फणावंत इतिब्रह्मदेवव्याख्या ॥
२ व्यंतराः विजातयः ॥

लिनो भोगे विविधैर्मंडलैश्चिताः ॥ प्रांशवो ऽमंदगमना राजीमंतस्तु राजिभिः ॥ स्निग्धाभिश्चित्रवर्णाभिस्तिर्यगूर्ध्वं च चित्रिताः ॥ गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ॥ चतुष्पाद्यंतरान्विद्यादेतेषामेव संकरात् ॥ व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः ॥ दिव्यको ऽजगरः सर्पः प्रतापो वृक्षशायिकः ॥ शकली पुष्पकः क्षीरी लसिनी सारसाहिकः ॥ वर्षाहिको ज्योतिरथः शुकपत्रो बलाहकः ॥ गजभक्षः प्लवोद्वाही निर्विषाः षोडशाह्वयः ॥ प्रायेणर्तुमती मासं ज्येष्ठं तिष्ठति पन्नगी ॥ आषाढे सर्पसंयोगादंडानां मासि कार्तिके ॥ द्वे शते विंशती द्वे च सा सूते तत्र जायते ॥ कर्केतनसवर्णेऽडे समुद्भिन्ने भुजंगमः ॥ दीर्घलोहितराजीभिश्चित्रे योषिन्नपुंसकं ॥ शिरीषपुष्पसदृशे दंष्ट्राः सर्पस्य सप्तमे ॥ चतस्रः संभवंत्यन्हि विषं तासु चतुर्दशे ॥ वामाधोह्यसितापीतातदूर्ध्वादक्षिणात्वधः ॥ रक्ता श्यावोत्तरैकद्वित्रिचतुर्विषबिंदुकाः ॥ ताः क्रमान्मुद्गमात्राऽनुबिंदुरेखा तु भोगिनां ॥ व्यधकल्पेन चान्येषां विद्याद्दंष्ट्रास्तथाऽपराः ॥ चत्वारिंशद्भुजंगस्य निर्विषाश्चतुरुत्तराः ॥ आयुर्वर्षशतं विंशं पंचवर्षशतायुषः ॥ गोनसो धर्मनमानां ते गवां नाशकोद्भवाः ॥ तत्रोर्ध्वदृङ्महाकायनेत्रजिह्वाशिरः स्वरः ॥ व्यक्तभोगः पुमान्धीरः स्त्री स्यात्तस्माद्विपर्यये ॥ आयता चपला क्लीबः सुकुमारो जडाकृतिः ॥ मंदवेगस्वनक्रोधः स्तब्धांगस्तिर्यशीर्षकः ॥ दिनत्रियामासंध्यासु प्रबलास्ते यथाक्रमं ॥ तदैव चापराध्यंति सर्वदैव च पन्नगी ॥ ब्राह्मणाः क्रोधना नीलकपिलाः श्वेतलोहिताः ॥ रक्तास्याः पिंगनयना मध्यदेशविचारिणः ॥ भोगे यज्ञोपवीतानि द्विजचिन्होपचिन्हिताः ॥ बिल्वपुष्पहिमोशीरपद्मगुग्गुलुगंधयः ॥ क्षत्रिया मानिनो धीरा रक्ताक्षा भृशकोपनाः ॥ पक्वजांबवखर्जूरद्राक्षाभिन्नांजनप्रभाः ॥ ॥ भोगेऽर्द्धचंद्रश्रीवत्सशंखचक्रहलांकिताः ॥ जातीचंपकपुन्नागप-

न्नजोंगकगंधयः ॥ वैश्या पारावताभासा वज्रगोमेदसप्रभाः ॥ बिंदुमंडलचित्रांगा धूमपाटललोहिताः ॥ बस्तकुष्टाविकक्षीरसर्पिषां गंधतः समाः ॥ शूद्राः सवर्णा गोधूममाहिषद्विपकर्दमैः ॥ बिंदुरेखाचिता रूक्षाः सुराशोणितगंधयः ॥ पूर्वमध्यापराण्हेषु चरंति ब्राह्मणादयः ॥ अस्तंगते रवौ शूद्रा दशंति ब्राह्मणाः पुनः ॥ संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतो विशः ॥ शूद्रास्तु पृष्ठतो विप्रास्त्रीनप्यनिलपूर्वकान् ॥ कोपयंति क्रमाद्दोषांस्त्रींस्त्रयः क्षत्रियादयः ॥ दंशाअप्यंगगंधेन ज्ञेयास्तेषां यथायथं ॥ वायुमूषकमंडूकसर्वभक्षाः क्रमेण तु ॥ आहारार्थं भयात्पादस्पर्शादतिविषा क्रुधः ॥ पापवृत्तितया वैराद्देवर्षियमनोदनात् ॥ दशंति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरं ॥ आदिष्टात्कारणं ज्ञात्वा प्रतिकुर्याद्यथायथं ॥ व्यंतरः पापशीलत्वान्मार्गमाश्रित्य तिष्ठति ॥ यत्र लालापरिक्लेदमात्रं गात्रेषु दृश्यते ॥ न तु दंष्ट्राकृतं दंशं तत्तुंडाहतमादिशेत् ॥ एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितं ॥ दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि च ॥ मांसच्छेदादविच्छिन्नरक्तवाहीनि दष्टकं ॥ दंष्ट्रापदानि चत्वारि तद्वद्दंष्ट्रानिपीडितं ॥ निर्विषं द्वयमप्याद्यमसाध्यं पश्चिमं वदेत् ॥ विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ॥ रक्तमण्वपि तु प्राप्तं वर्द्धते तैलमंबुवत् ॥ भीरोस्तु सर्पसंस्पर्शाद्भयेन कुपितोऽनिलः ॥ कदाचित्कुरुते शोफं सर्पांगाभिहतं हि तत् ॥ दुर्गांधकारे विद्धस्य केन चिद्दष्टशंकया ॥ विषोद्रेको ज्वरश्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ॥ ग्लानिर्मोहोऽतिसारो वा तच्छंकाविषमुच्यते ॥ दंशस्तु सविषः सर्वः सशोफो वेदनान्वितः ॥ तुद्यते ग्रथितः किंचित्कंडूमान् दह्यते भृशं ॥ निर्विषो विपरीतोऽस्मात्तत्र दंशः फणावतः ॥ कूर्मपृष्ठोन्नतो रूक्षः सूक्ष्म

१ दष्टकमिव ॥ २ दष्टनिपीडिताख्यं ॥ ३ सर्पजं विषं न शोणितमप्राप्य शरीरं दूषयतेअपितु प्राप्य किंतु रक्तं स्तोकमपि प्राप्य विषं वर्द्धते यथा तैलं जलं प्राप्य प्रसरति॥

दंष्ट्रापदोऽसितः ॥ विकारः श्यावता वक्त्रनखमूत्राक्षिविट्त्वचां ॥ शीतज्वरः संधिरुजा निद्रानाशो विजृंभता ॥ मन्यास्तंभः सिराध्मानं पृष्ठकट्यस्थिवाग्ग्रहः ॥ शिरोगुरुत्वमरुचिः कासश्वासौ हनुग्रहः ॥ शूलमुद्वेष्टनं कोष्ठे शोषरोधौ मलाशये ॥ संदिग्धवाक्त्वं नैश्चेष्ट्यं मृतस्येव विसंज्ञता ॥ फेनलालोद्गमो हिध्मा कंठे खुरखुरायनं ॥ शुष्कोद्गारो मुहुश्चैते वातजाश्चापरे गदाः ॥ दंशो मंडलिनां सोष्मा सशोफः पीतलोहितः ॥ पृथुर्वीसर्पदाहोपाक्लेदः कोथोऽति शीर्यते ॥ विकारा दंतवक्त्रादिपीतता तृट् श्रमो भ्रमः ॥ दाहो मूर्च्छा ज्वरस्तिक्तवक्त्रत्वं पीतदर्शनं ॥ रक्तागमनमूर्ध्वाधः शीतेच्छा धूपनं मदः ॥ आशु सर्वांगविकृतिर्गदास्त्वेते च पित्तजाः ॥ दंशो राजीमतां स्निग्धः स्थिरः पिच्छिलशोफवान् ॥ सांद्रः सुशिशिरः पांडुस्तद्विकाराः शिरोव्यथा ॥ अरुचिश्छर्दिरालास्यं हृल्लासो मधुरास्यता ॥ कंठः खुरखुरः कोठः कंडूरूक्षाहिमो ज्वरः ॥ कृच्छ्रादुच्छ्वसनं निद्रा कासः श्वेतनखादिता ॥ स्तंभो गुरुत्वं चांगानां नासिकाक्षिमुखस्रुतिः ॥ रोमहर्षस्तनुश्वासो रोगाश्चान्ये कफोद्भवाः ॥ व्यंतरे मिश्रलिंगत्वं दष्टः पुंसोर्ध्वमीक्षते ॥ उत्क्षिपेद्दक्षिणं पादं पूर्वकायसमुद्यतः ॥ धीरोऽल्पवेगः शर्वर्यां विपरीतस्तु योषिता ॥ हीनस्वरोऽतिसारार्तः कंपते त्रस्यते ज्वरी ॥ नपुंसकेन तिर्यक्त्वं धीरस्तु प्रियमैथुनः ॥ बहुवादी च वृद्धेन चिरान्मंदा च वेदना ॥ बालेन शीघ्रं तीव्राश्च कुमारेणाक्ष्णि दक्षिणे ॥ रागः कुमार्या वामे तु गर्भिण्या कृष्णजिह्वदृक् ॥ जृंभा क्रोधोपजिव्हार्तः सशूनोष्ठः सिताननः ॥ गुरूदरः शिरोरोगी सूताद्दष्टस्तु मेहति ॥ शोणितं कुक्षिशूलार्तः सूचीभिरिव भिद्यते ॥ वेगानां रक्तमांसाद्याः समोक्ताः पूर्वमाश्रयाः ॥ पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् ॥ श्यावता तेन वक्त्रादौ सर्पंतीव च कीटकाः ॥ द्वितीये ग्रंथयो वेगे तृतीये मूर्द्धगौरवं ॥ दृग्रोधो दंश-

विक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥ संधिविश्लेषणं तंद्रा पंचमे पर्वभेदनं ॥ दाहो हिध्मा च षष्ठे च हृत्पीडा गात्रगौरवं ॥ मूर्च्छा विपाकोऽतीसारः प्राप्य शुक्रं तु सप्तमे ॥ स्कंधपृष्ठकटीभंगः सर्वचेष्टानिवर्त्तनं ॥ अथ मंडलिदष्टस्य दुष्टं पीतीभवत्यसृक् ॥ तेन पीतांगता दाहो द्वितीये श्वयथूद्भवः ॥ तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते ॥ चतुर्थे ज्वर्यते दाहः पंचमे सर्वगात्रगः ॥ दष्टस्य राजिलैर्दुष्टं पांडुतां याति शोणितं ॥ पांडुता तेन गात्राणां द्वितीये गुरुताऽति च ॥ तृतीये दंशविक्लेदनासिकाक्षिमुखस्रवं ॥ चतुर्थे गरिमा मूर्ध्नो मन्यास्तंभश्च पंचमे ॥ गात्रभंगो ज्वरः शीतः शेषयोः पूर्ववद्वदेत् ॥ कुर्यात्पंचसु वेगेषु चिकित्सां न ततः परं ॥ जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ॥ शीतवातातपव्याधिक्षुत्तृष्णापरिपीडिताः ॥ तूर्णं देशांतरायाता विमुक्तविषकंचुकाः ॥ कुशौषधीकंटकवद्ये चरंति च काननं ॥ देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ॥ श्मशानचैत्यवल्मीकयज्ञाश्रमसुरालये ॥ चतुष्पथे जलस्थाने जीर्णोद्याने तु कोटरे ॥ क्षीरिद्रुमे निंबतरौ निर्झरे गिरिगव्हरे ॥ चक्रवज्रगदाकुंतत्रिशूलांकजटाधराः ॥ रक्तास्यनयना ये च ते स्युराशीविषोपमाः ॥ न तेषां कालनियमो न च वेगेष्वनुक्रमः ॥ मंत्रतंत्रबलाच्चापि प्रसह्य विनिवर्त्तनं ॥ उपहारनमस्कारजपशांतिपरायणः ॥ कश्चिज्जीवति तैर्दष्टो विरूपो विकलोऽपि वा ॥ श्मशानचितिचैत्यादौ पंचमीपक्षसंधिषु ॥ अष्टमीनवमीसंध्यामध्यरात्रिदिनेषु च ॥ याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ॥ नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ॥ दष्टमात्रः सितास्याक्षः शीर्यमाणशिरोरुहः ॥ स्तब्धजीव्हो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जी-

१ षष्ठसप्तमयोर्लक्षणं पूर्ववद्दर्वीकरवद्वदेत् ॥ २ असाध्यात्वात् ॥ ३ याम्यं भरणी ॥ ४ आग्नेयं कृत्तिका ॥ ५ नैर्ऋतं मूलं ६ नैर्ऋताख्यो मुहूर्तः संध्योदय एव ॥

वति ॥ हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः ॥ जायते युगपद्यस्य सहृच्छूली न जीवति ॥ वेपथुर्वेदनास्तीव्रा ग्रीवाभंगाक्षिरक्तताः ॥ मूर्च्छा गलग्रहश्छर्दिः प्रेतराजस्य किंकराः ॥ जांबवप्रतिमो दंशः कूर्मपृष्ठवदुन्नतः ॥ रक्तं खेभ्यः समस्तेभ्यो वर्त्तते न तु दंशतः ॥ रोमहर्षो न शिशिरैः श्वयथुर्लोहिताासितः ॥ हृष्टमेहनता वक्रवक्रत्वं यस्य तं त्यजेत् ॥ फेनं वमति निःसंज्ञः श्यावपादकराननः ॥ नासावसादो भंगोऽगे विड्भेदः श्लथसंधिता ॥ विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ भवंत्येतानि रूपाणि संप्राप्ते जीवितक्षये ॥ न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥ दंडाहतस्य नो राजिः प्रयातस्य यमांतिकं ॥ अतोऽन्यथा तु त्वरया प्रदीप्तागारवद्भिषक् ॥ रक्षन्कंठगतान्प्राणान्विषमाशु शमं नयेत् ॥ इति सर्पविषविज्ञानीयो नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

अथातः सर्पविषप्रतिषेधं व्याख्यास्यामः ॥ मात्राशतं[1] विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ देहं प्रक्रमते धातून् रुधिरादीन्प्रदूषयेत् ॥ एतस्मिन्नंतरे कर्म दंशस्योत्कर्तनादिकं ॥ कुर्याच्छीघ्रं तथा देहे विषवल्ली न रोहति ॥ दष्टमात्रो दशेदाशु तमेव पवनाशनं ॥ लोष्टं महीं वा दशनैश्छित्त्वा चानु ससंभ्रमं ॥ निष्ठीवेन समालिंपेद्दंशं कर्णमलेन वा ॥ दंशस्योपरि बध्नीयादरिष्टां चतुरंगुले ॥ क्षौमादिभिर्वेणिकया सिद्धैर्मंत्रैश्च मंत्रवित् ॥ बंधो देशानुसारेण नातिगाढश्लथो हितः ॥ दंशपूतित्वशोफादीन्कुरुते ह्यतिपीडितः॥अशक्तः शिथिलो रोद्धुं विषं देशांतरं व्रजेत् ॥ अंबुवत्सेतुबंधेन बंधेन स्तभ्यते विषं ॥ न वहंति सिराश्चास्य विषं बंधाभिपीडिताः ॥ निष्पीड्य चोद्धरेद्दंशं मर्मसंध्यगतं तथा ॥ न जायते विषावेगो बीजनाशादिवांकुरः ॥ मर्मगे प्राप्नुयान्मृत्युं संधिस्थे विकलांगतां ॥ दंशं मंडलिनां मुक्त्वा पित्त-

---

१ मात्राशततुल्यकालं

त्वात्तथा परं ॥ प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा ॥ करोति भस्मसात् सद्यो वन्हिः किन्नाम तु क्षतं ॥ आचूषेत्पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ [१]प्रच्छायांतररिष्टाया मांसलं तु विशेषतः ॥ अंगं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ चंदनोशीरयुक्तेन सलिलेन च सेचयेत् ॥ विषे प्रविसृते विध्येत्सिरां सा परमा क्रिया ॥ रक्ते निर्ह्रीयमाणे हि कृत्स्नं निर्ह्रीयते विषं ॥ दुष्टे तु व्याप्नुवत्यंगं ध्रुवं मृत्युर्भवत्युत ॥ सिराव्यधोदितैरस्रमप्रवृत्तं प्रवर्त्तयेत् ॥ स्तंभयेदतिवृत्तं तु तैरेव प्राणरक्षया ॥ दुर्गंधं सविषं रक्तमग्नौ चटचटायते ॥ यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ॥ सिरास्वदृश्यमानासु योज्याः शृंगजलौकसः ॥ शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा ॥ लेपसेकैः सुबहुशः स्तंभयेद्भृशशीतलैः ॥ अस्कन्ने विषवेगाद्धि मूर्च्छायमदवद्रवाः ॥ भवंति तान् जयेच्छीतैर्वीजेच्चारोमहर्षतः ॥ स्कन्ने तु रुधिरे सद्यो विषवेगः प्रशाम्यति ॥ विषं कर्षति तीक्ष्णत्वात् हृदयं तस्य गुप्तये ॥ पिबेद्भूतं घृतक्षौद्रमगदं वा घृताप्लुतं ॥ मज्जानं गोमयरसं भस्मांभः कृष्णमृज्जलं ॥ ऐकध्यं पंचगव्यं वा दधिगैरिकसारिवाः ॥ खादेद्वा कोविदारार्कशिरीषकटभीच्छदान् ॥ छागमेषवराहासृक् शिशुस्थविरयोषितः ॥ पिबेयुर्गर्भिणी शीतमधुरान् पयसाऽगदान् ॥ तथा मूर्च्छादयो न स्युर्विषं चाभ्येति नानिलं ॥ हृदयावरणे चास्य श्लेष्मा ह्युपचीयते ॥ प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ॥ द्रवैः कांजिककौलत्थतैलमद्यादिवर्जितैः ॥ वमनैर्विषहृद्भिश्च नैवं व्याप्नोति [३]तद्वपुः ॥ भुजंगदोषप्रकृतिस्थानवेगविशेषतः ॥ सुसूक्ष्मं सम्यगालोच्य विशिष्टां चाचरेत्क्रियां ॥ सिंदुवारितमूलानि रसेन स्वेन पेषयेत् ॥ मधुयुक्तोऽयमगदः पानं दर्वीकृतां विषे

१ अरिष्टामध्ये प्रच्छाय प्रच्छानं कृत्वा आचूषयेत् २ शोफादिना अनुपलभ्यमानासु सिरासु ३ तत् विषं ॥

॥ सिंदुवारितमूलानि श्वेता च गिरिकर्णिका ॥ पानं दर्वीकरैर्दष्टे नस्यं मधु संपाकलं ॥ कृष्णसर्पेण दष्टस्य लिंपेद्दंशं हृतेऽसृजि ॥ चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ॥ पानं च क्षौद्रमंजिष्ठागृहधूमयुतं घृतं ॥ तंदुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ॥ मातुलुंगी सिता सेलुः पाननस्यांजनैर्हिताः ॥ अगदः फणिनां घोरे विषे राजीमतामपि ॥ समाः सुगंधा मृद्वीका श्वेताख्या गजमृत्तिका ॥ अर्द्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमं ॥ सक्षौद्रो मंडलिविषे विशेषादगदो हितः ॥ पंचवल्कवरायष्टीनागपुष्पैलवालुकं ॥ जीवकर्षभकौ शीतं सितापद्मकमुत्पलं ॥ सक्षौद्रो हिमवान्नाम हंति मंडलिनां विषं ॥ लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ काश्मर्यं वटशुंगानि जीवकर्षभकौ सिता ॥ मंजिष्ठा मधुकं चेति दष्टो मंडलिना पिबेत् ॥ वंशत्वग्बीजकटुकापाटलीबीजनागरं ॥ शिरीषबीजातिविषे मूलं गावेधुकं वचा ॥ पिष्टो गोवारिणाऽष्टांगो हंति गोनसजं विषं ॥ कटुकातिविषे कुष्टगृहधूमहरेणुकाः ॥ सक्षौद्रव्योपतगरा घ्नंति राजीमतां विषं ॥ निखनेत्कांडचित्राया दंशं यामद्वयं भुवि ॥ उद्धृत्य प्रच्छितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ॥ पिबेत्पुराणं च घृतं वराचूर्णावचूर्णितं ॥ जीर्णे विरिक्तो भुंजीत यवान्नं सूपसंस्कृतं ॥ करवीरार्ककुसुममूललांगलिकाकणाः ॥ कल्कयेदारनालेन पाठामरिचसंयुताः ॥ एष व्यंतरदष्टानामगदः सार्वकार्मिकः ॥ शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितं ॥ भावितं सर्पदष्टानां नस्यपानांजने हितं ॥ द्विपलं नतकुष्टाभ्यां घृतक्षौद्रचतुष्पलं ॥ अपि तक्षकदष्टानां पानमेतत्सुखप्रदं ॥ गृहधूमं हरिद्रे द्वे समूलं तंदुलीयकं ॥ अपि वा

---

१ कुष्टसहितमाक्षिकं ॥ २ शिरीषपिप्पलवटप्लक्षवेतसानां त्वक् पंचवल्कलमिति सर्वांगसुंदरायां ३ कांडचित्रायाः सर्पविशेषस्य दंशं यामद्वयं भुवि निखनेत् ॥ ततउद्धृत्य प्रच्छितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ॥ धान्यस्य मृद्धान्यमृत् ॥

सुकिना दष्टः पिबेन्मधुघृताप्लुतं ॥ रक्तं मांसं तु गोधायाः शुष्कं चूर्णीकृतं हितं ॥ विषे रसगते पानं कपित्थरससंयुतं ॥ सेलुत्वङ्मूलपत्राणि बादरोदुंबराणि च ॥ कटभ्याश्च पिबेद्रक्तगते मांसगते पुनः॥सक्षौद्रं खादिरारिष्टं कौटजं मूलमंभसा ॥ सर्वेष्वपि बलायुग्मं मधुकं मदनं नतं॥शिरोगते विषे मूलं नस्यकर्मणि योजयेत्॥ बंधुजीवस्य भार्ग्यां तु सुरसस्यासितस्य वा॥अथवा पिप्पली हिंगु वृश्चिकाली मनःशिला॥ शिरीषबीजापामार्गलवणं चेतनाकरं ॥ कल्कश्चूर्णोऽथवा कृष्णाक्षवकातिविषोपणात् ॥ पिप्पलीमरिचक्षारवचासैंधवशिग्रुकात् ॥ पिष्टो रोहितपित्तेन हंत्यक्षिगतमंजनात् ॥ चंदनं मधुकं मांसी पिप्पली मरिचोत्पलं ॥ सैंधवं चांजनं श्रेष्ठं गवां पित्तेन कल्कितं ॥ नक्तमालफलं व्योषं बिल्वमूलं निशाद्वयं ॥ पुष्पं च सौरसं पिष्टमंजनं बस्तवारिणा ॥ भोजवैतरणोद्दिष्टं विषसुप्तप्रबोधनं ॥ वाजिगंधाफलोशीरं नेत्रयोर्विषसुप्तयोः ॥ अंजनं वारिणा पिष्टं गारुडं गरुडोपमं ॥ समुद्रफेनमरिचकणासौवीरकांजनं ॥ चूर्णांजनं ससिंधूत्थं विषोपहतचक्षुषां ॥ कपित्थमांसं ससितक्षौद्रं कंठगते विषे॥ लिह्यादामाशयगते ताप्यचूर्णं फलं नतात् ॥ पिबेत्पक्वाशयगते मंजिष्ठारजनीद्वयं ॥ पिप्पलीच समं पिष्ट्वा मत्स्यपित्तेन पाययेत् ॥ पिप्पलीनागरं क्षीरं नवनीतेन मूर्च्छितं ॥ प्रवृद्धे कंठगे दद्याच्छेषाणि प्रतिसारयेत् ॥ जयेत्संक्रामणैश्चाशु विषं शिरसि संश्रितं ॥ दद्यादधस्तद्दष्टस्य मूर्ध्नि काकपदे कृते ॥ काकपक्षशिखिच्छागगव्यमाहिषकौक्कुटं ॥ बिल्वप्रमाणं मांसासृङ्मूर्ध्नि दष्टस्य पादयोः॥विषं संक्रमते तत्र निहन्याच्छीघ्रमन्यथा ॥ तीक्ष्णनस्यांजनांते च भूरिमात्रं पिबेद्घृतं ॥ विषं हि नेत्रं रूक्षस्यं तीक्ष्णैर्हंति समीरितं ॥ वामयेत ततश्चैनं विषशेषोपशांतये ॥ श्लेष्मलं श्लेष्मलैर्दष्टं नाभेरूर्ध्वं विशेषतः ॥ धामार्गवः शक्रयवाः सर्षपा मदनं मधु ॥ सैंधवं वमनं कोष्णं विषे श्लेष्माशयाश्रिते ॥ सुरसं

सर्पवेतालीमीश्वरीं गौरसर्षपं ॥ पटोलनिंबपत्रं च पिबेत्सक्षौद्रसैंधवं ॥ शुकाव्हा जालिनी दंती मदनेक्ष्वाकुकौटजं ॥काला लांगलिका तिक्ता वमनं तंदुलांबुना॥पैत्तिकं पैत्तिकैर्दष्टमधो नाभेर्विशेषतः॥विषे पित्ताशयगते पाययेत विरेचनं ॥ सनीलिनीफलां दंतीं पयसा मस्तुनाऽथवा ॥ श्लक्ष्णचूर्णीकृतं कुंभं क्वाथेन त्रैफलेन वा ॥ क्षारेण च त्रिवृच्छयामासुरसानीलिनीरजः ॥ पिंडीतकफलं व्योषं त्रिवृद्देलं हरीतकीं ॥ विरेचनं कफप्राये लवणं मूत्रसंयुतं ॥ घृताप्लुतं सलवणं मारुते नीलिनीफलं ॥ शयानः शयने छिद्रे विरेच्यो विषपीडितः ॥ मुहुरुत्तिष्ठते ह्यस्य विषं दूषयतेऽनिलं ॥ पिबेद्वांतो विरिक्तो वा यवागूं विषनाशिनीं ॥ विषे वाताशयगते सर्पिषा पानमिष्यते ॥ आद्यपश्चिमयोर्यच्च प्रोक्तं विषनिषेधयोः ॥ अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितं ॥ अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥ द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ॥ विषापहे प्रयुंजीत तृतीयेंऽजननावने ॥ पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते ॥ षष्ठपंचमयोः शीतैर्दिग्धं सिक्तमभीक्ष्णशः ॥ पाययेद्वमनं तीक्ष्णं यवागूं च यथोदितां ॥ अगदं सप्तमे तीक्ष्णं युंज्यादंजननस्ययोः॥ कृत्वाऽवगाढं शस्त्रेण मूर्ध्नि काकपदं ततः॥ मांसं सरुधिरं तत्र चर्म वा तत्र निक्षिपेत्॥ तृतीये वमितः पेयां वेगे मंडलिनां पिबेत्॥ [1]तीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकं॥ आद्येऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ॥ अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥ षष्ठेंऽजनं तीक्ष्णतममवपीडं च योजयेत्॥अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदितां ॥ [2]गर्भिणीबालवृद्धेषु मृदुं विध्येत्सिरां न च ॥ त्वङ्मनोव्हानिशे [3]वक्रं रसः शार्दूलजो नखः ॥ तमालः केसरं शीतं पीतं तंदुलवारिणा ॥ हंति सर्वविषाण्येतद्वज्रिवज्रमिवासुरान् ॥प्रपौं-

---

१ अभीक्ष्णमिति पाठः २ गर्भिण्यादिषु मृदुक्रियां योजयेत् ॥ सिरां च न व्यधयेत्॥ ३ वक्रं तगरं

डरीकं कटुका देवदारु सुवर्चिका ॥ कालानुसारी स्थौणेयशैलेयघन-पद्मकं ॥ कुटन्नटैलापुन्नागनतकुष्टप्रियंगुकं ॥ रोध्रगुग्गुलुतालीस-पिप्पलीस्वर्णगैरिकं ॥ सिंदुवारसिताशुंठीध्यामकं लवणोत्तमं ॥ सू-क्ष्मचूर्णीकृतं शृंगे निदध्यान्माक्षिकान्वितं ॥ तार्क्ष्यस्तार्क्ष्योपमः पा-ननावनाभ्यंजनांजनैः ॥ अगदस्तक्षकस्यापि विषवेगं निवर्त्तयेत् ॥ रोध्रं शिरीषपुष्पाणि समंगा सहरेणुका[1] ॥ कणोपणालनेपालीवचाय-ष्टीमधूत्पलं ॥ सिंदुवारीतमंदारमूलं बीजं करंजजं ॥ ज्योतिष्मती नतं कुष्टं श्वेता च गिरिकर्णिका ॥ चूर्णितः कन्यया क्षौद्रगोपित्ता-भ्यां च वर्त्तितः ॥ अगदो हंति सर्पाखुकणभुक्श्वशृगालजं ॥ बि-डालकांडचित्रोत्थं विषं भूतज्वरं ग्रहं ॥ अपस्मारगदोन्मादगुल्माजी-र्णविसूचिकाः ॥ शिरोक्षिकर्णशूलं च राजद्वारे च शस्यते ॥ बि-ल्वस्य मूलं सुरसस्य पुष्पं फलं करंजस्य नतं सुराह्वं ॥ फलत्रिकं व्योषनिशाद्वयं च बस्तस्य मूत्रेण सुसूक्ष्मपिष्टं ॥ भुजंगलूतोंदुरुवृ-श्चिकाद्यैर्विसूचिकाऽजीर्णगरज्वरैश्च ॥ आर्त्तान्नरान्भूतविधर्षितांश्च स्वस्थीकरोत्यंजनपाननस्यैः ॥ त्रिवृद्विशल्या मधुकं निशे लवणपंच-कं ॥ मंजिष्ठा त्र्यूषणं तद्वत्कल्कयेत्स महागदः ॥ मांसीहरेणुत्रि-फलासुरंगीमधुयष्टिका ॥ पद्मकाशोकपुन्नागकुष्टतालीसचंदनं ॥ सु-गंधकैला किणिही त्वक्पटोली मृगादनी ॥ भार्ङ्गी विडंगं पालिंदी पाठा क्रोष्टुकमेखला ॥ पुष्पमारुष्करं पत्रं सौरसं कटुकं नतं ॥ पित्तं नकुलमार्जारगोधाशल्यकसूकरात् ॥ पृषताच्चित्रपत्राच्च गोशृं-गे पूर्ववत्स्थितं ॥ यत्र गेहे न तत्राहिकीटादिभ्यो भयोद्भवः ॥ ए-तेन भेरीपटहाः पताकाश्च प्रलेपिताः ॥ आर्षभेण[2] विषं घ्नंति स्पर्श-श्रवणदर्शनैः ॥ प्रलेपाद्यैश्च निःशेषं दंशादप्युद्धरेद्विषं[3] ॥ भूयो वे-

---

१ हिंगुरेणुकेतिपाठः २ आर्षभनाम्नाऽगदेन ३ दंशादपि किं पुनः कायात्सर्वं विषमुद्धरेत् ॥

गाय जायेत शेषं दूषीविषाय वा ॥ विषापायेऽनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ॥ तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥ पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः ॥ समाक्षिकेण वर्गेण कफमारग्वधादिना ॥ सिता वैगंधिको द्राक्षा पयस्या मधुकं मधु ॥ पानं समंत्रपूतांबुप्रोक्षणं सांत्वहर्षणं ॥ सर्पांगाभिहते युंज्यात्तथा शंकाविषार्दिते ॥ पूतनाप्रेतकूष्मांडपिशाचाद्या नरद्विषः ॥ निहंत्यौषधिवीर्याणि रक्षाकर्माण्यथाचरेत् ॥ तस्माद्रक्षां प्रयुंजीत रक्षोगणनिवारिणीं॥ गोमयेन सुसंमृष्टे धूपागुरुसुधूपिते॥गंधमाल्योपहाराद्यैर्गुरुपूजितदैवते॥सूत्रकारान्समभ्यर्च्य शंकरास्तिककश्यपान्॥संतर्प्य हव्यकव्याभ्यां समिद्धाननलद्विजान् ॥ प्राङ्मुखायोपविष्टाय विषार्त्ताय चिकित्सकः॥उत्तराभिमुखो युंज्यात्सिद्धमंत्रादि भेषजं॥समप्रमाणैर्हरितैर्दर्भैः प्रागभिमंत्रितैः॥अच्छिन्नाग्रैः समूलैश्च कुर्यात्तस्यापमार्जनं॥ब्राह्म्याद्यैरगदैरेनं नित्यमेवानुलेपयेत् ॥ संजीवनादीन् पानादौ दंशलेपे च योजयेत् ॥ पूर्णकुंभं सकुसुमं सर्षपांश्च गले सितान्॥ शस्तं दूर्वामधुघृतं कुर्याद्दष्टस्य मूर्द्धतः ॥ एवं शाम्यति सप्ताहाद्विषमात्मवतां सदा ॥ कर्केतनं मरकतं वज्रं वारणमौक्तिकं ॥ वैदूर्यं गर्दभमणिं पिचुकं विषमूषिकां॥ हिमवद्गिरिसंभूतां सोमराजीं पुनर्नवां ॥ तथा द्रोणां महाद्रोणां मानसीं सर्पजं मणिं॥ विषाणि विषशांत्यर्थं वीर्यवंति च धारयेत् ॥ छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः॥ तच्छायाशब्दवित्रस्ताः प्रणश्यंति भुजंगमाः ॥ इति सर्पविषप्रतिषेधो नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

अथातः कीटविषविज्ञानप्रतिषेधं व्याख्यास्यामः॥सर्पाणामेव विण्मूत्रशुक्रांडशवकोथजाः ॥दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्वि-

१ विषापगमेसति २ तयोश्छत्रझर्झरयोः यथासंख्यं छायाशब्दाभ्यां वित्रस्ताः सर्पाः प्रणश्यंति

धाः ॥ कुंभीनसस्तुंडिकेरी शृंगी शतकुलीरकः ॥ उच्चिटिंगोऽग्निनामाच चिंच्चिटांगो मयूरकः ॥ अहिजोरभ्रकावर्त्तसारिकामुखवैदलाः ॥ शरावकुर्दी परुषश्चित्रशीर्षोऽहिजारिकः ॥ अष्टादशैते वायव्या कीटा वायुप्रकोपनाः ॥कौंडिन्यकः कणभको वरटी पत्रवृश्चिकः ॥ विनामिका ब्राह्मणिका विदुलो भ्रमरस्तथा ॥ बाह्यकः पिच्चकः कुंभी वर्चःकीटो ऽरिमेदकः ॥ दुंदुभः पद्मकीटश्च मकरः शतपादकः ॥ पंचालः पाकमत्स्यश्च सूक्ष्मतुंडोऽथ गर्दभिः ॥ क्लीतः कृमिसरावी च य श्चाप्युत्क्लेशकः स्मृतः ॥ चतुर्विंशतिराग्नेयाः कीटाः पित्तविकारदाः ॥ विश्वंभरः पंचशुक्लः पंचकृष्णोऽथ पौंडकः ॥ शीर्यकः प्रचलाकश्च व टभाः किटिभो जटी ॥ सूचीमुखः कृष्णगोधा दभ्रः काषायवासिकः ॥ त्रयोदशैते निर्दिष्टाः कीटाः श्लेष्मप्रकोपनाः ॥ भृंगीलसो वलिभकः शूलको वाहकस्तथा ॥ कोष्टकारी कृमिकरो यश्च मंडलपुष्पकः ॥ तुंडनाभः सर्षपको सर्षपी शंबुकस्तथा ॥ अग्निकीटश्च संकीर्णा द्वादश प्राणनाशनाः ॥ दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ॥ आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥ पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथवा ॥ कफाधिकैर्मंदरुजः पक्वोदुंबरसन्निभः ॥ स्रावाढ्यः त्रैलिंगस्तु दंशः[1] स्यात्सान्निपातिकैः ॥ वेगाश्च सर्पवच्छोफो वर्द्धिष्णुर्विस्ररक्तता ॥ शिरोक्षिगौरवं मूर्च्छा भ्रमः श्वासोऽतिवेदना ॥ सर्वेषां कर्णिकाशोफो ज्वरः कंडूररोचकः ॥ वातिकः पक्षवातेन स्पर्शाद्दशति पैत्तिकः ॥ मुखेन श्लैष्मिकः कीटः सर्वथा सान्निपातिकः ॥ दष्टस्य कणभैः शोफो विसर्पो वमथुर्ज्वरः ॥ दंशश्च कर्णिकाकारः श्यावरक्तो विशीर्यते ॥ त्रिकंटकैस्तु दष्टस्य नानावर्णोऽथवाऽसितः ॥ दंशो भवेच्छ्वयथुमान्मोहो भेदश्च वर्चसः ॥ काक-

1 विलक्षणः सान्निपातिकैरिति पाठः

लासोऽर्द्धचंद्राभः श्याववान् भृशलोहितः ॥ दंशो रक्तैश्चितैः स्फोटैः सशूनैः कमलोद्भवः ॥ एकदंष्ट्रार्पितः पीतः कंडूमान् दर्दुरः सरुक् ॥ दंशो दष्टः सतृण्निद्रो मूर्च्छावान् हरितं वमेत् ॥ मात्स्यो दंशः सरुग्दाहः प्रागेवोक्तो जलौकसां ॥ विश्वंभरकृतो दंशः शोफकंडूरुजान्वितः ॥ फेनोद्गममतीसारं कुरुते कोठजन्म च ॥ पीतः शतपदीदंशः स्वेदरुग्रागशोफवान् ॥ अतसीपुष्पवर्णो वा पिटिकावान् भ्रमप्रदः ॥ गृहगोधिकया स्वेदतोदश्वयथुदाहवान् ॥ क्रुंदीच दंशो दष्टस्य हृत्पीडा ग्रंथिसंभवः ॥ कंडूमान्माषकैरीषच्छ्वयथुर्मंदवेदनः ॥ असाध्यकीटसदृशमसाध्यमशकक्षतं ॥ प्रायेण मक्षिकाः क्षेत्रे दशंति श्वयथूल्बणः ॥ तद्दंशो दाहकंडूमांस्तासां तु स्थगिकां त्यजेत् ॥ तद्दष्टे पिडिका श्यावा स्राविणी भूर्युपद्रवा ॥ रुग्वान्पिपीलिकादंशो वन्हिनेवच दह्यते ॥ कालबिंदुनिभैः स्फोटैर्दाहकंडूरुजान्वितैः ॥ यद्गात्रमाचितं सोष्म तद्विद्यादवमूत्रितं ॥ वृश्चिकस्य विषं तीक्ष्णमादौ दहति वन्हिवत् ॥ ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ दंशः सद्यो ऽतिरुक् श्यावस्तुद्यते स्फुटतीव च ॥ ते[1] गवादिशकृत्कोथाद्दिग्धदष्टादिकोथतः ॥ सर्पकोथाच्च संभूता मंदमध्यमहाविषाः ॥ मंदाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ रोमशा बहुपर्वाणो रोहिता पांडुरोदराः ॥ धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥ पिशंगाः शबलाश्चित्राः शोणिताभा महाविषाः ॥ अग्न्याभा ह्येकपर्वाणो रक्तासितसितोदराः॥ तैर्दष्टः[2] शूनरसनः स्तब्धगात्रो ज्वरार्दितः ॥ खैर्वमन् शोणितं कृष्णमिंद्रियार्थानसंविदन् ॥ स्विद्यन्मूर्च्छन्विशुष्कास्यो विव्हलो वेदनातुरः ॥ विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥ उच्चिटिंगस्तु वक्रेण दशत्यभ्यधिकव्य-

---

१ ते गवादिशकृत्कोथात् विषदिग्धदष्टादिकोथात् सर्पकोथाच्च संभूता यथासंख्यं मंदविषा मध्यविषा महाविषाश्च स्युः २ तैः महाविषैः

थः ॥ साध्यतो वृश्चिकास्स्तंभं शेफसो हृष्टरोमतां ॥ करोति सेकमंगानां दंशः शीतांबुनेव च ॥ उष्ट्रवर्णतया चोक्तः स एव ह्युष्ट्रधूमकः ॥ रात्रिको रात्रिचाराच्च पृथक्कृत्वं कणभादिषु ॥ विकारसाधनाभेदाद्भेदाः संतोऽपि नोदिताः ॥ वातपित्तोत्तराः कीटाः श्लैष्मिकाः कणभोंदुराः ॥ प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः॥ यस्य यस्यैव दोषस्य लिंगाधिक्यं प्रतर्कयेत् ॥ तस्यतस्यौषधैः कुर्याद्विपरीतगुणैः क्रियां ॥ हृत्पीडोर्ध्वानिलस्तंभः सिरायामोऽस्थिपर्वरुक् ॥ घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥ संज्ञानाशोष्णनिःश्वासो हृद्दाहः कटुकास्यता ॥ मांसावदरणं शोफो रक्तपीतश्च पैत्तिके ॥ छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ॥ सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषं ॥ पिण्याकेन व्रणे लेपस्तैलाभ्यंगश्च वातिके ॥ स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥ पैत्तिकं स्तंभयेत् सेकैः प्रदेहैश्चातिशीतलैः ॥ लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ कीटानां त्रिप्रकाराणां त्रैविध्येन क्रिया हिता ॥ स्वेदालेपनसेकांस्तु कोष्णान्प्रायोऽवचारयेत् ॥ अन्यत्र मूर्छितादंशपाकतः कोथतोऽपि वा ॥नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनं ॥ विषदंशस्य सर्वस्य काश्यपः परमब्रवीत्॥विषघ्नं च विधिं सर्वं कुर्यात् संशोधनानि च॥साधयेत्सर्पवद्दष्टान्विषोग्रैः कीटवृश्चिकैः ॥तंदुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् ॥ याति कीटविषैः कंपं न कैलास इवानिलैः ॥ क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः॥ मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत्॥वचा हिंगु विडंगानि सैंधवं गजपिप्पली॥पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितं ॥ दशांगमगदं पीत्वा सर्वकीटविषं जयेत्॥भैषज्यं कीठवत्पीतं महास्नेहपयो मधु ॥ शिखिकुक्कुटजैः पिच्छैः सतैललवणोत्तमैः ॥ धूपो हंति क्रनः शीघ्रं कीटवृश्चिकजं विषं ॥ विषे कणभजे कुर्याद्दुंदुरोक्तमुपक्रमं ॥ शिरीषबीजं मंडूके लेपः स्नुक्क्षीर-

कल्कितः ॥ मधु त्रिकटुकं श्वेता भिंडामूलं च मत्स्यजे ॥ वचां वंशत्वचं पाठां नतं सुरसमंजरीं ॥ द्वे बले नाकुलीं कुष्टं शिरीषं रजनीद्वयं ॥ गुहामतिगुहां श्वेतामजगंधां शिलाजतु ॥ कट्तृणं कटभीक्षारं गृहधूमं मनःशिलां ॥ रोहीतकस्य पित्तेन कल्कयेत्स परोऽगदः ॥ विश्वंभरादिष्वालेपनावनांजनपानतः ॥ स्वर्जिकाजशकृत्क्षारः सुरसः साक्षिपीडकः ॥ मदिरामंडसंयुक्तो हितः शतपदीविषे ॥ कपित्थसिक्थपिंडार्कक्षीरं त्रिकटुकान्वितं ॥ करंजं द्वे हरिद्रे च गृहगोधीविषापहः ॥ काकांडयुक्तः सर्वेषां विषाणां तंदुलीयकः ॥ प्रशस्तो बर्हिणांऽडेन तद्वद्वायसपीलुकः ॥ तगरं नागरं नागकेसरं मरिचानि च ॥ प्रयुक्तं पाननस्याभ्यां मक्षिकाविषनाशनं ॥ सितासिते च लवणे मरिचं च सनागरं ॥ फणिज्जकरसोपेतं वरटीनां विषापहं ॥ सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ॥ विदारिगंधासिद्धेन कवोष्णेनेतरेण वा ॥ लवणोत्तमयुक्तेन सर्पिषा वा पुनःपुनः ॥ सिंचेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ उपनाहो घृते भृष्टः कल्कोऽजाज्याः ससैंधवः ॥ आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ रजनीसैंधवव्योषशिरीषफलपुष्पजैः ॥मातुलुंगाम्लगोमूत्रपिष्टं च सुरसाग्रजं ॥ लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा ॥ पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करं ॥ गुडोदकं वा सुहिमं चतुर्जातकवासितं॥पलाशबीजसंयुक्तो लेपोऽर्कक्षीरभावितः॥ पारावतशकृत्पथ्यातगरं विश्वभेषजं ॥ बीजपूररसोन्मिश्रं परमो वृश्चिकागदः ॥ मनोह्वा सैंधवं हिंगु मालतीपल्लवानि च ॥ गोशकृद्रसपिष्टेयं गुलिका वृश्चिकार्दिते ॥ लशुनो मरिचं हिंगु सुरसं विश्वभेषजं ॥ अर्कक्षीरेण गुलिका वृश्चिकार्दितशंकरी ॥ ससैंधवोष्ट्रदंष्ट्रा च हंति वृश्चिकजं विषं ॥ हिंगुना हरितालेन मातुलुंगरसेन च ॥ लेपांजनाभ्यां गु-

१ सशैवलोष्ट्रदंष्ट्राचेत्यष्टांगहृदये पाठः

लिकाः परमं वृश्चिकापहाः ॥ करंजार्जुनशेलूनां कटभ्याः कुटजस्य च ॥ शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनं ॥ पिप्पलीं मरिचं यष्टीं श्वेतां सुरसमंजरीं ॥ सहदेवीमपामार्गं तंदुलीयं च कल्कयेत्॥ कुंतलक्षारतोयेन लेपोऽलिविषनाशनः ॥ यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ तस्य पथ्यानिशाकृष्णामंजिष्ठातिविषोषणं ॥ सालाबुवृंतं वार्ताकुरसपिष्टं प्रलेपनं॥ आदंशं यस्य कंडूः स्यात्कोथः कुष्टं च दारुणं ॥ तस्यालेपस्त्रिकटुकं यवक्षारोऽक्षिपीडकः ॥ पारावतशकृत्कांतास्वर्जिकाग्निहरेणवः ॥ रसेन मातुलुंगस्य क्षीरेणार्कस्य च द्रुतः ॥ हृदयं पीड्यते यस्य मूर्च्छा चिमिचिमायनं ॥ दंतौष्ठदंशो रोम्णां संहर्षस्तस्य निवर्त्तते ॥ वेगो विषस्य पंचाहान्नैव वा क्रियया विना ॥ तत्र कुर्वीत दंशस्य लेपनं मस्तुकल्कितैः ॥ श्वेतपाटल्यतिविषाहरिद्राहरिणीनतैः॥ बिल्वमूलयवक्षारकुष्टमागधिकायुतैः ॥ उद्धृत्यतइवादंशः शूनः क्लिन्नो हतच्छविः ॥ जंबूफलमिवारक्तः कूजन्वमति चेष्टते ॥ इंद्रियार्थान्न जानाति प्रस्विद्यति च यो मुहुः ॥ स्वर्जिकाकुष्टतगरनाकुलीपीलुपिप्पलीः ॥ बृहतीं चाच्छसुरया तस्य पिष्ट्वा प्रलेपनं ॥ सर्वत्र चोग्रालिविषे पाययेद्दधिसर्पिषी ॥ विध्येत्सिरां विदध्याच्च वमनांजननावनं ॥ उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहं ॥ नागरं गृहकपोतपुरीषं बीजपूरकरसैर्हरितालं ॥ सैंधवं च विनिहंत्यगदोऽयं लेपतोऽलिकुलजं विषमाशु ॥ अंते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ॥ विषेण लेपयेद्दंशं स्थावरेण यथोदितं ॥ क्रियेयमुच्चिटिंगेऽपि प्रतिलोमं च पांशुभिः ॥ उद्वर्तनं सुखाम्लोष्णैस्तथा वाऽऽच्छादनं घनैः ॥ कुटजस्य फलं कुष्टं मालती जालिनी नतं ॥ तिक्तेक्ष्वाकुश्च पिष्टानि पानप्रधमनादिभिः ॥ वृश्चिकोंदुरुलूतानां सर्पाणां च विषापहं ॥ समानममृतेनेदं गराजीर्णं च नाशयेत् ॥ अर्कस्य दुग्धेन शिरीषबीजं त्रिर्भावितं पिप्पलिचूर्ण-

मिश्रं ॥ एषो ऽगदो हंति विषाणि कीटभुजंगलूतोंदुरुवृश्चिकानां ॥ शिरीषपुष्पं सकरंजबीजं काश्मीरजं कुष्ठमनःशिले च ॥ एषोऽगदो रात्रिकवृश्चिकानां संक्रांतिकारी कथितो जिनेन ॥ इति कीटविषविज्ञानप्रतिषेधो नाम त्रयश्चत्वारिंशोऽध्यायः ॥ ४३ ॥

अथातो लूताविषविज्ञानप्रतिषेधं व्याख्यास्यामः ॥ विश्वामित्राय रुष्टस्य वसिष्ठस्य ललाटजाः॥स्वेदलेशाः स्मृता लूता लूने ये पतितास्तृणे ॥ खांडवे दह्यमानानामसुराणां शरीरतः ॥ याः स्फुलिंगा विनिश्चेरुस्ता लूता इति केचन ॥ अन्ये वदंति भुक्तस्य दुष्टस्यान्नस्य भोजनात् ॥ संभवंति विषस्फोटा ये लूताः कीटलक्षणाः॥यथास्वं धारयंतस्ते लूताः कीटाश्च संज्ञिताः ॥ तत्र घोरतरा लूता भिद्यंते ता अपि त्रिधा ॥ तीक्ष्णमध्यावरत्वेन घ्नंति चाश्वचिकित्सिताः ॥ सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ॥ कपिलाऽग्निमुखीपीता पद्मा मूत्रा सिता ऽसिता ॥ आग्नेयाः स्वेदजाः सप्त लूताः पित्तविकारदाः ॥ रक्तपादाभृंगनीलापिंगलाभात्रिमंडलाः ॥ पूतिगंधाभिधा लूता लूताश्च चिरमंडलाः ॥ लूता वीरांडजाः सप्त सौम्याः श्लेष्मविकारदाः ॥ कुमुदाऽलविषारक्ताश्चित्रासंतानिमेचकाः ॥ कसना चोद्भिदाः सप्त वायव्या वायुरोगदाः ॥ काकांडघेणपदी लाजा वैदेही जालिनी तथा ॥ मालागुणा सवर्णा च मिश्राः सप्तोपपादुकाः ॥ व्यामुवंत्याशु गात्राणि ज्वलत्पावकसन्निभाः॥सन्निपातकृताऽसाध्याः साध्याः कृच्छ्रेण चेतराः ॥ ता दशंति सिते पक्षे ऽसिते संधौ सदैव च ॥ दंशः सामान्यतस्तासां दद्रुमंडलसन्निभः ॥ सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरुन्नतः ॥ मध्ये कृष्णोऽथवा श्यावपर्यंतो जालकावृतः ॥ विसर्पवान् शोफयुतस्तप्यते बहुवेदनः ॥ ज्वराशुपाकविक्लेदकोथावदरणान्वितः ॥ क्लेदेन यत्स्पृशत्यंगं तत्रापि कुरुते व्रणं ॥ श्वासदंष्ट्रा-

---

१ मूर्च्छनादिति पाठः २ दोषलक्षणमिति शेषः

शकृन्मूत्रशुक्रलालानखार्त्तवैः ॥ अष्टाभिरुद्गमंत्येता विषं वक्त्रैर्विशेषतः ॥ श्वासेन दंशः सहसा शूयते ज्वरदाहवान् ॥ दंष्ट्राकृतस्तूग्रतरो विवर्णः कठिनः स्थिरः ॥ गंभीरशोफवांस्तोदवेदनादाहसंयुतः ॥ दुर्गंधः शकृता दाहकंडूचिमिचिमान्वितः ॥ पच्यते चाशु पक्वश्च पांडुः पीलुफलोपमः ॥ मूत्रेण रक्तपर्यंतो मध्ये कृष्णो विशीर्यते॥ आवर्त्तसंदृशः शूनः पूतिः सर्पति दह्यते॥ शुक्रेण ग्रंथिसंस्थानः कठिनस्तीव्रवेदनः ॥ अल्पमूलोऽल्परुक्कोचो लालया कंडुरो मृदुः॥ नखेन चोषः कुल्लकः कंडूधूमायनान्वितः ॥ किंशुकोदरवर्णस्तु रजसा चंचुमालवान् ॥ लूता नाभेर्दशंत्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः ॥ तद्दूषितं च वस्त्रादिदेहे पृक्तं विकारकृत् ॥ दिनार्द्धं लक्ष्यते नैवं दंशो लूताविषोद्भवः ॥ सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ॥ अव्यक्तवर्णः प्रचलः किंचित्कंडूरुजान्वितः ॥ द्वितीयेऽभ्युन्नतोंऽतेषु पिटिकैरिव चाचितः ॥ व्यक्तवर्णो ततो मध्ये कंडूमान् ग्रंथिसन्निभः ॥ तृतीये सज्वरो रोमहर्षकृद्रक्तमंडलः ॥ शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः ॥ महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ॥ विकारान्कुरुते तांस्तान् पंचमे विषकोपजान् ॥ षष्ठे व्याप्नोति रोमाणि सप्तमे हंति जीवितं ॥ इति तीक्ष्णं विषं मध्यं हीनं च विभजेदतः ॥ विषं शाम्यति सर्वासामेकविंशतिरात्रितः ॥ दंशः पित्तात्मको दाहतृट्स्फोटज्वरमोहवान् ॥ सशोफः कठिनः पांडुः कंडूमान् श्लैष्मिकोऽल्परुक् ॥ वातिकः परुषः श्यावः पर्वभेदातिरुक्करः ॥ सर्पज्ञानोदितैर्लिंगैर्दोषोद्रेकं च लक्षयेत् ॥ त्रिदोषाः प्रायशो लूताः सर्वाः पित्तकफाधिकाः ॥ प्राणांतिकीषु हृन्मोहश्वासहिध्माशिरोग्रहाः ॥ श्वेताः पीताः सिताः रक्ताः पिटिकाः श्वयथूद्भवः ॥ वेपथुर्वमथुर्दाहतृडांध्यं वक्रनासता ॥ श्यावौष्ठवक्त्रदंतत्वं पृष्ठग्रीवावभंजनं ॥ पक्वजंबूसवर्णं च दंशात् स्रवति शोणितं ॥ अथाशु लूतादष्टस्य शस्त्रे-

णादंशमुद्धरेत् ॥ दहेच्च जांबवौष्ठाद्यैर्नतु पित्तोत्तरं दहेत् ॥ कर्क-
शं भिन्नरोमाणं मर्मसंध्यादिसंश्रितं ॥ प्रसृतं सर्वतो दंशं न छिं-
दीत दहेन्न च ॥ लेपयेद्गधमगदैर्मधुसैंधवसंयुतैः ॥ सुशीतैः सेचये-
च्चानु कषायैः क्षीरिवृक्षजैः ॥ सर्वतोऽपहरेद्रक्तं शृंगाद्यैः सिरया ऽपि
वा ॥ स्रुते रक्ते परीषेकः स्मृतः क्षीरादिभिर्हृतः ॥ प्रपौंडरीकह्रीबेर-
सारिवोशीरजीवकाः ॥ रोध्रचंदनजीवंतीमंजिष्ठासर्जवंजुलाः ॥ मृ-
णालबिसशैवालकुमुदोत्पलगैरिकाः ॥ न्यग्रोधोदुंबराश्वत्थनिचुलप्लक्ष-
वेतसाः ॥ समंगापाटलीगुंद्राकाकोलीसितपर्विकाः ॥ शिरीषधातकी
मूर्वाविदारीपद्मकं कुशाः ॥ शृंगाटकं कोशवतीवायसीसोमराजयः॥
मधुकांशुमतीदूर्वा यथालाभं समाहृतं ॥ शस्तः पर्युषितो लेपः सघृ-
तः पैत्तिके विषे ॥ श्यामाद्वयनिशामुस्तानखरास्नामहासहाः ॥ वा-
सापत्तंगसुवहानाकुलीगिरिकर्णिकाः ॥ सर्पगंधायवफलानिर्गुंड्यश्मं-
तकस्थिराः ॥ शुकाख्यामहिषक्रांतकुष्ठेंद्रयवकुंकुमं ॥ करवीरागुरुनतं
सुगंधं सिंधुवारितं ॥ आस्फोतगुंद्री च हितः प्रलेपः श्लैष्मिके विषे
॥ बिंबीविदुलबंधूककोविदारयवासकाः ॥ सुवहारिष्टकब्राह्मीगुडूची-
बिल्वसैर्यकाः ॥ सिद्धार्थकादेवदारुविडंगानींद्रवारुणी ॥ शतावरी-
लांगलकीराजवृक्षपुनर्नवाः ॥ जीवंतीवायसीभार्ङ्गीकतकेंद्रयवार्जुनं
॥ निशे व्याघ्रपदी सिंहपुष्पी मंडलपर्णिका ॥ श्वदंष्ट्राकोलबृहतीरे-
वतीश्वेतपुष्पिकाः ॥ प्रपुन्नाटः कुरुबकः प्रलेपो वातिके विषे ॥ स-
र्वत्रैव च शस्यंते बोधिश्लेष्मातकाक्षकाः ॥ उदीर्णदोषान्बलिनो वि-
षे महति वामयेत्॥कांकांडकीकोशवतीरोध्रेंद्रयवसैंधवैः॥पटोलीपत्रम-
रिचकरघाटप्रियंगुभिः ॥ कृष्णाशुकनखानीपनिंबसमाह्वग्रंथिभिः ॥
विरेचयेच्च त्रिफलात्रिवृत्त्रिकटुसैंधवैः ॥ मदंतीपूगमृद्वीकाविडंगैरथ-
वा पचेत् ॥ एभिः पलांशकैः प्रस्थं समं ब्राह्मीरसं घृतात् ॥ पंचमूल-
शृतं क्षीरं तोयं वा शोधनौषधैः ॥ यथास्वं कल्कितैर्युक्तं पृथगद्याद्धि-

शोधनं ॥ पिप्पलीपिप्पलीमूलशुंठीद्वयवसैंधवैः ॥ पाठाऽजमोदाय-
ष्ट्याव्हमुस्तासर्षपदारुभिः ॥ लघुना पंचमूलेन लवणेन सुसाधिता ॥
पेया संसर्जने योज्या सघृता विषनाशिनी ॥ आध्मानहिध्माश्वासेषु
पृष्ठग्रीवादिभंजने ॥ संकोचस्तंभकंपेषु शूलेष्वर्द्धावभेदके ॥ वात-
रोगेषु चान्येषु पर्वभेदार्दितादिषु ॥ एरंडबिल्वसरलचिरबिल्वार्कपाट
लीः ॥ शिग्रुपाठाकुशविषं विदुलं च जले पचेत् ॥ कनीयः पंचमूलं
च तस्मिन्मंदं पचेद्घृतं ॥ द्विगुणे तुल्यगोक्षीरे पिष्टैर्यष्टीनिशानतैः ॥
सुराव्हवेल्लसरलशताव्हारोध्रगैरिकैः ॥ पयस्याकुष्टगांधेयीकृष्णामदन-
कैः समैः ॥ बस्तौ प्रत्यागतेऽश्नीयात् पंचमूलान्वितैरसैः ॥ नावनं
गौरवे शोफे लालास्रावे हनुग्रहे ॥ गिरिकर्णीफलरसो बंधूकं किणिही
सिता ॥ षड्ग्रंथालशुनव्योषबृहतीवेल्लसैंधवैः ॥ अपामार्गफलं भार्ङ्गी-
नाकुली सर्पगंधिका ॥ संज्ञानाशे प्रधमनं भार्ङ्गीयुक्तैः प्रशस्यते ॥ ति
क्तालाबुफलव्योषबृहतीजालिनीफलैः ॥ श्यामा यवफला बीजं फणि-
ज्जकशिरीषयोः ॥ वार्ताकरसपिष्टानि नस्यं विषहरं परं ॥ विरिक्त-
शिरसश्चास्य सर्पिर्मंडो ऽनुवासनं ॥ नेत्रोपरोधश्वयथुकंडूनिद्रासमाग-
मे ॥ वचामनोव्हात्रिकटुत्रिफलारोध्रगैरिकाः ॥ शंखो नीलोत्पलं ता
म्रं मुक्ताहेमप्रवालकं ॥ जीवंती लशुनं कुष्टं कतकं मार्कवं नतं ॥
प्रपौंडरीकं मधुकं करंजफलसैंधवं ॥ निशे फणिज्जकं तुत्थं स्रोतोंज-
नरसांजने ॥ मेषशृंग्याश्च कुसुमं पिष्टं गोवारिणाऽञ्जनं ॥ सुरसप्रस-
वव्योषबिल्वमूलसुराव्हयं ॥ हरिद्रा छागलीमूत्रं लूताकीटघ्नमंजनं ॥
शिरीषपद्मकोशीरपाटलीसिंदुवारितं ॥ क्षीरशृंगीनतोदीच्यसारिवाकु
ष्टचंदनं ॥ सेलुस्वरसपिष्टोऽयमगदो नावनांजने ॥ पाने प्रलेपे सेके
च लूतासु परमं हितं ॥ पयस्यामधुमृद्वीकाश्वदंष्ट्राक्षीरमोरटाः ॥ गो
जीविदारीयष्ट्याव्हामधुकानि च तद्गुणाः ॥ तथा शिरीषकुसुमं चं-

द्रलेखोद्भवं फलं ॥ सुराला कटभी जातिः श्वेता च गिरिकर्णिका ॥ तद्वच्च गुंजातगरकुष्टनागबलाबलाः ॥ हरिद्रायुगुलं नागदंतीरोध्रं च शाबरं ॥ शिरीषपुष्पं तगरं सहदेवी शतावरी ॥ पुनर्नवा नागबला सर्पगंधा कुटन्नटं ॥ गवादनी दंतशठसोमवल्केंदुराजयः ॥ विषेषु स र्वेष्वगदः सक्षौद्रः सर्वकर्मकृत् ॥ सर्पाक्षी चंदनं चक्रं मृगाक्षी गंधनाकुली ॥ एला महासुगंधा च बस्तमूत्रेण कल्किताः ॥ लेपे पाने च लूतासु नानेन सदृशोऽगदः ॥ कटभीमूलतगरसमंगादेवदारुभिः ॥बृहतीद्वयगांगेयीरोचनाचंदनैर्घृतं ॥ सिद्धं चतुर्गुणे क्षीरे पानाभ्यंजनयोर्हितं ॥ लूताकणभकीटानां विषे परमदारुणे ॥ निवृत्ते दाहशोफादौ कर्णिकां पातयेद्व्रणात् ॥ कुसुंभपुष्पं गोदंतः स्वर्णक्षीरी कपोतविट् ॥ त्रिवृता सैंधवं दंती कर्णिकापातनं तथा ॥ हरिद्रा गुग्गुलुः किण्वं वंशलेखः कपोतविट् ॥ तद्वच्च सैंधवं कुष्टं दंती कटुकदौग्धिकं ॥ राजकोशातकीमूलं किण्वो वा मथितोद्भवः ॥ कर्णिकापातसमये बृंहयेत्तं विषापहैः ॥ ऋतुकालेषु लूतानां यावंतः शुक्रबिंदवः ॥ देहे पतंति तावंत्यो जायंते कर्णिकाः समं ॥ गोदंतदंती त्रिवृता हरिद्रे सैंधवं तिलाः ॥ मधुकं निंबपत्राणि घृतं च व्रणशोधनं ॥ कांताविडंगखदिरनिंबकंपिल्लकांबुदैः ॥ सर्जैलाधातकीलोहैः सिद्धं सर्पिर्व्रणापहं ॥ शिरीषकटभीसेलुक्षीरिवृक्षार्जुनत्वचः ॥ कल्कचूर्णपरीषेकैः कीटलूताव्रणापहाः ॥ शताव्हारोध्रकासीसदार्वीजंब्वस्थिरोचनाः ॥ हरीतकी पूगफलं चूर्णोऽयं व्रणरोपणः ॥ लाक्षारजन्यौ मंजिष्ठा हरितालं मनःशिला ॥ सर्पिर्मधुप्रलेपोऽयं त्वग्विशुद्धिकरः परं ॥ रोमसंजननं कुर्याद्यदुक्तं व्रणशोधने ॥ स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ॥ विषस्य वृद्धये तैलमग्नेरिव तृणोलुपं ॥ इति लूताविषविज्ञानप्रतिषेधो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

अथातः प्रत्येकलूताविषप्रतिषेधं व्याख्यास्यामः॥आदंशे पिटिका

ताम्रा भवेत्कपिलया स्थिरा ॥ लसीका रोमकूपेषु दाहोऽक्ष्णोर्मूर्ध्नि गौरवं ॥ पाननस्यांजनालेपसेकांश्चात्र प्रयोजयेत् ॥ निशापद्मककुष्ठैलाकरंजककुभत्वचः ॥ स्थिरार्कपर्ण्यपामार्गब्राह्मीशाद्वलनाकुलीः ॥ अथवा कुष्टपत्तंगनखजोंगककुंकुमं ॥ अग्निमुख्या ऽतिरुक् स्फोटः संभवत्यग्निदग्धवत् ॥ अग्निज्वालासमानेन प्रस्विद्यति विषोष्मणा ॥ तृड्दाहकंपमूर्च्छाश्च पित्तास्रमतिसार्यते॥ योजयेत् पूर्ववत्तत्र प्रत्याख्याय त्वरान्वितः ॥[1] कुष्टलामज्जकोशीरमधूकं मधुकं मधु ॥ लाभतः शीतवीर्याणि तालीसं गोपकन्यकां ॥ पीतया पीतविण्मूत्रदंशक्लेदाक्षिदर्शनः मूर्च्छाछर्दिशिरोदुःखज्वरारोचकशूलवान् ॥ तत्रेष्टाः करभोशीरमंजुवंजुलपद्मकाः ॥ वंशत्वगर्जुनकुशाः[2] शिरीषकिणिहीत्वचः ॥ अथवा वन्हिबाल्हीककुष्टकेसरजोंगकं ॥ पद्माभः पद्मया स्फोटो भिन्नो भिन्नः पुनर्भवेत् ॥ क्लिद्यत्याशु स्रवत्युष्णं क्लेदं क्लेशोऽतिरुग्ज्वरः ॥ तत्र पद्मोत्पललताहिमवेतसवंजुलाः ॥ समृणालाः सकुसुमाः सक्षौद्रघृतशर्कराः ॥ पूतिर्मूत्रविषादंशो विसर्पी कृष्णशोणितः ॥ श्वासकासज्वरच्छर्दिमूर्च्छादाहभ्रमान्वितः ॥ मनःशिलालमधुकमधुकोत्पलचंदनं ॥ कुंष्टैलामधुकोशीरपद्मकं तत्र भेषजं ॥ आदंशे श्वेतया श्वेता पिटिका पीतकंडुरा ॥ दाहमूर्च्छाज्वररुजाविसर्पक्लेदकारिणी ॥ श्वेतायां शीतलालेपा ह्रेणुनलवंजुलाः॥ कुष्टमांसीनलोशीरकांताध्यामकपद्मकाः ॥ आदंशः कृष्णया कृष्णो विड्बंधिः क्लेदशोफवान् ॥ उत्थाप्यते कृष्णमसृग्दुष्टं तत्र भिषग्जितं ॥ महासुगंधासपाक्षीवक्रैलागंधनाकुलीः ॥ शूनः[3] पांडुरया दंशः शोफो वंक्रस्य गौरवं ॥ ज्वरो विघूर्णनं जृंभा शिरोरुक् तत्र भेषजं॥मूलं वारुणपुष्पाया रोचनागोशकृद्रसः॥ आपांडुः पिटिकादंशः शोफवान् रक्तपादया ॥ अश्रुस्रावो-

---

१ वंशकाशार्जुनकुशा इति पाठः २ कुष्टलामज्जकोशीरपद्मकमिति पाठः ३ पांडुरासंज्ञकलूतादंशलक्षणं चिकित्सितं चाधिकं भाति

ऽत्र नलदसेव्योदीच्यहिमं मधु ॥ भृंगाभो भृंगया दंशः पिटिका दाह-रुक्करी ॥ कोठैश्च चीयते गात्रं तत्र शस्तं भिषग्जितं ॥ अंकोल्लसारः फलिनी गवां पित्तं मिशिर्गदः॥ पिंगया वन्हिदग्धाभो दंशे स्फोटो बहु-द्युतिः॥तीव्रशोफज्वररुजाहृत्पीडादाहतृड्युतः॥ तत्रागदः सितागुंद्राम ल्लिकामधुकोत्पलं ॥ जीवकः क्षीरिणां शुंगा द्विनिशा नागकेसरं॥ त्रि-मंडलाया बहुलो दंशः कृष्णं स्रवत्यसृक् ॥ अरुचिर्नेत्रयोर्दाहः कलु-षस्रुतिदूषिता ॥ विविधैर्मंडलैश्चास्य शरीरमुपचीयते॥ तत्रार्कमूल-द्विनिशासुराह्लापृश्निपर्णिकाः ॥ दधित्थनाकुलीब्राह्मीज्योतिष्मत्यो हितोऽगदः ॥ आदंशः पूतिगंधाया विसर्पक्लेददाहवान् ॥ अलजी-सन्निभो रुग्वान्निर्गंधः पिटिकान्वितः ॥ भार्ङ्गीनिदिग्धिकानिंबपटो-लीसिंदुवारितं ॥ मूर्वा हरिद्रे वासा च पूतिगंधाविषापहः ॥ चिरमं-डलया दंशः पिटिकाजालकावृतः ॥ [1]वीराया मूर्द्धरुक्शीतज्वरान्न-द्वेषसंयुतः ॥ हरिद्रे नलदं कुष्ठमेला सुरसमंजरी ॥ तगरं च श्वपि-त्तेन पिष्टं वीराविषापहं ॥ दंशः कुमुदया दाहस्फोटस्फुरणतोदवा-न् ॥ पिच्छिलः क्लेदविस्रावी सश्वासः सगलग्रहः ॥ प्रत्याख्यायात्र कुर्वीत सामान्योक्तं क्रियाक्रमं ॥ भवंत्यलविषादंशे पीता लोहित-मंडलाः ॥ पिटिकाः सर्षपप्रख्यास्तालुशोषो रुजा ज्वरः॥ छर्दिर्दाहः शिरःकंपस्तत्र सेव्याः समाक्षिकाः ॥ सकांतामिशिन्हीबेराः सपि-प्पलिवटांकुराः ॥ रक्तांतो रक्तया दंशः सपांडुपिटिकोद्भवः ॥ श्वे-तोऽतिसारः श्वसनं दाहः क्लेदः सशोणितः ॥ विसर्पश्चात्र न्हीबेरचं-दनोशीरपद्मकं॥शस्तं शेल्वर्जुनाम्रातात्त्वङ्मूलं सिंदुवारतः॥ अन्दंशे चित्रया रक्ता पिटिका विस्तृता स्थिरा॥पर्वभेदशिरस्तापज्वरशोफवि-सर्पिणी ॥ भिन्ना कृष्णत्वमभ्येति पीतास्रावा महाव्रणा॥ तत्रेष्टाः कुष्ठनलदशिरीषनतरेणुकाः ॥ दंशोऽति संतानिकया शूलमाकुलता

१ अत्र लेखकप्रमादाच्चिरमंडलालूताचिकित्सितं गलितं भाति

श्रुतेः ॥ प्रमुग्याक्षेपकौ तत्र केसरं क्षीरिणां त्वचः ॥ आम्रस्य सिंदुवारस्य मूलमश्मंतकत्वचः ॥ पिटिका मेचकादंशे मध्ये जतुकणोपमा ॥ ज्वरः शोफोऽत्र वारुण्या रोचना रजनीद्वयं ॥ राजिमान्कसनादंशो ज्वररुक्श्वासकासवान् ॥ शीतपिच्छिलरक्तस्रुद्रक्तोक्तं[1] तत्रभेषजं ॥ पांडुरक्तोऽतिरुग्दंशः काकांड्याः स्मृतिमोहकृत् ॥ हिध्माश्वसनतृण्मूर्च्छानिद्राऽऽक्षेपकहृद्द्रदाः ॥ रक्तांतस्त्वेणपादाया दंशः कृष्णतिलाकृतिः ॥ दाहमोहाग्निवीसर्पतृड्भ्रमिश्वासकासवान् ॥ पूतिध्यामोऽतिकासासृगादंशो लाजवर्णया ॥ शीतज्वरसमुत्थानो दाहमूर्च्छातिसारवान् ॥ अग्निदग्धनिभो दंशो वैदेह्या भृशवेदनः ॥ गंभीरः सज्वरतृष्णामोहो हृदयपीडनं ॥ ऊर्ध्वराजीचितो दंशो जालिन्यास्तीव्रशोफरुक् ॥ उदीर्णतृड्भ्रमः श्वासः स्तंभमोहौ विदीर्णता ॥ रक्तो मालागुणादंशो धूमगंधिः सतीव्ररुक् ॥ दीर्यते पार्श्वतस्ताम्रैः संरब्धैर्मंडलैर्युतः ॥ अंतर्दाहो बहिः शैत्यं साध्मानं कृच्छ्रमूत्रता ॥ मूर्च्छाप्रलापातीसारज्वराः प्राणांतकारिणः ॥ ध्मातः सौवर्णिकादंशः स्पंदते मत्स्यगंधिकः ॥ शिरोऽक्षिरुक्करः कासस्तृष्णा फेनोद्गमो भ्रमः ॥ असाध्यानामपि हितं प्रत्याख्यायाशु योजयेत् ॥ दोषोच्छ्रये विशेषेण छेददाहादिवर्जितं ॥ कपिला तत्र नासायामग्निर्दशति जत्रुणि॥पीतिका गल्लयोः पद्मा दक्षिणांसेऽथ कक्षयोः ॥ लूता मूत्रविषा श्वेता चिबुके तालुकेऽक्षिणि ॥ असिता दक्षिणे स्कंधे कराभ्यां रक्तपादिका ॥ वामपार्श्वे दशेद्भृंगा वामांगे पिंगला दशेत् ॥ त्रिमंडलोदरे पूतिः पृष्टे वीरा[2] तु दक्षिणे ॥ बाहौ नाभ्यां कुमुदिका वामस्कंधेऽलसंज्ञिता ॥ कंठे रक्ता ललाटे तु चित्रा संतानिकोष्ठयोः ॥ मेचका मूर्ध्नि कसना हस्तयोः कुक्षिमूलयोः ॥ काकांड्येणी तु हृदये लाजवर्णा स्तनांतरे ॥ बाहुसंधिषु वैदेही लूताऽपांगेतु जालि-

१ रक्तोक्तं रक्तोलूतोक्तं २ अत्र चिरमंडलायाः दंशस्थानं लिखितं नदृश्यते

नी ॥ मालागुणाख्या ग्रीवायां सौवर्णा कर्णमूलयोः ॥ इति क्षेत्राणि नियतानीत्युदीर्णविषाः पुनः॥ परक्षेत्रेऽपि वर्त्तंते राजानोऽतिबला इव॥इति प्रत्येकलूताविषप्रतिषेधो नाम पंचचत्वारिंशोऽध्यायः॥ ४५॥

अथातो मूषिकालर्कविषविज्ञानप्रतिषेधं व्याख्यास्यामः ॥ लालनश्चपलः पुत्रो हसिरश्चिक्किरो ऽजिरः ॥ कषायदंतः कुलकः कोकिलः कपिलोऽसितः ॥ अरुणः शबलः श्वेतः कपोतः पलितोंदुरः ॥ छुच्छुंदरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥ यस्मिन्नंगे पतत्येषां शुक्र मंगैः स्पृशंति वा ॥ यच्छुक्रदिग्धैस्तत्रास्रे दूषिते पांडुतां गते ॥ ग्रंथयः श्वयथुः कोठो मंडलानि भ्रमोऽरुचिः ॥ शीतज्वरोऽतिरुक्सादो वेपथुः पर्वभेदनं ॥ रोमहर्षः स्रुतिर्मूर्च्छा दीर्घकालानुबंधनं ॥ श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं सतृट् ॥ व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति ॥ मूर्च्छांऽगशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणं ॥ शूनबस्तिं विवर्णौष्ठमाखुभिर्ग्रंथिभिश्चितं ॥ छुच्छुंदरसगंधं च वर्जयेदाखुदूषितं॥ शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाः श्रिताः ॥ मुष्णंतः कुर्वते क्षोभं धातूनामतिदारुणं ॥ लालावानंधबधिरः सर्वतः सोऽभिधावति ॥ स्रस्तपुच्छहनुस्कंधः शिरोदुःखी नताननः ॥ दंशस्तेन विदष्टस्य सुप्तः[1] कृष्णं क्षरत्यसृक् ॥ हृच्छिरोरुक्ज्वरस्तंभस्तृष्णामूर्च्छोद्भवोऽनु च ॥ अनेनान्येऽपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः ॥ शृगालाश्वतराश्वर्क्ष द्वीपिव्याघ्रवृकादयः ॥ कंडूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ॥ विदाहरागरुक्पाकशोफग्रंथिविकुंचनं ॥ दंशावदरणं स्फोटाः कर्णिका मंडलानि च ॥ सर्वत्र सविषे लिंगं विपरीतं तु निर्विषे ॥ दष्टो येन तु तच्चेष्टारुतं कुर्वन्विनश्यति ॥ पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ जलदर्शनसंस्पर्शशब्देभ्यो यश्च संत्रसेत् ॥ अदष्टमपि तं ज-

१ अचेतनः ॥

स्याज्जलसंत्रासरोगिणं ॥ आखुना दष्टमात्रस्य दंशं कांडेन दाहयेत् ॥ दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकाऽन्यथा ॥ दग्ध्वा विस्रावये-द्दंशं प्रच्छितं च प्रलेपयेत् ॥ शिरीषरजनीवक्रकुंकुमामृतवल्लिभिः ॥ आगारधूममंजिष्ठारजनीलवणोत्तमैः ॥ लेपो जयत्याखुविषं कर्णि-कायाश्च पातनः ॥ ततोऽम्लैः क्षालयित्वा तु तोयैरनु च लेपयेत् ॥ पालिंदीश्वेतकटभीबिल्वमूलगुडूचिभिः ॥ अन्यैश्च विषशोफघ्नैः सि-रां वा मोक्षयेद्द्रुतं ॥ छर्दनं नीलिनीक्वाथैः शुकाख्यांकोल्लयोरपि ॥ कोशातक्याः शुकाख्यायाः फलं जीमूतकस्य च ॥ मदनस्य च सं-चूर्ण्य दध्ना पीत्वा विषं वमेत् ॥ वचामदनजीमूतकुष्टं वा मूत्रपे-षितं ॥ पूर्वकल्पेन पातव्यं सर्वोंदुरविषापहं ॥ निष्पावकदलीमू-लं बंधुजीवफलानि च ॥ सुवर्चलारामठकं स्वर्जिकातिविषाद्वयं॥ श्यामाद्विकर्णिकामूलमर्द्धेन वमनत्रयं ॥ वांतस्य शुद्धहृदये शुष्का हिध्माऽरुचिर्भ्रमः ॥ शुष्कोद्गारानुबंधो वा स्याच्च तत्र तदौषधं ॥ जीरकं त्र्यूषणं कुष्टं तुगाख्या नागकेसरं ॥ रजन्यौ सैंधवं सेव्यं यष्टी मधुसुवर्चलं ॥ मधुरं लवणं पिष्ट्वा बीजपूरकपित्थयोः ॥ रसेन खांडवं कुर्यान्मधुमत्स्यंडिकान्वितं ॥ गंधवर्णरसोपेतं स पीतो विषदोषजित् ॥ द्विपिप्पलीद्व्यंशुमतीक्वाथः पेया च तद्गुणा ॥ विरेचने त्रिवृन्निली-त्रिफलाकल्क इष्यते ॥ शिरोविरेचने सारः शिरीषस्य फलानि च ॥ अंजने गोमयरसो व्योषसूक्ष्मरजोन्वितः ॥ कपित्थगोमयरसो मधुना चावलेहने ॥ तंदुलीयकमूलेन सिद्धं पाने हितं घृतं ॥ द्विनिशाक-टभीरक्तायष्ट्याव्हैर्वाऽमृतान्वितैः ॥ आस्फोतमूलसिद्धं वा पंचकापि-त्थमेव वा॥ अधोभागे विशुद्धस्तु शूलं नाभ्यां भवेद्यदि ॥ पुरीषं ना-विबध्येत गुदे वास्याद्विकर्त्तिका ॥ तत्र पेयां पिबेच्छीतां शर्करामधु-

१ अथवा पंचकापित्थसिद्धं सर्पिः पाने हितं ॥ कपित्थस्येमानि कापित्थानि मूलत्वक्पत्रपुष्पफलानीतिपंच

योजितां ॥ पिप्पलीपिप्पलीमूलसारिवाकच्छुराद्वयैः ॥ शृतैः सिद्धं सह बलासमंगाविश्वभेषजैः॥ नलदध्यामकव्योषरोध्रचित्रकदीप्यकं॥ कुंतलक्षारतोयेन पिष्टं माक्षिकसर्पिषा ॥ दध्ना वा प्राशयेत् क्षौद्रयव-क्षारपयोदधि ॥ फाणितं तैलमाज्यं च विषघ्नं पीतमेकतः ॥ सिंदुवा-रनतं शिग्रुबिल्वमूलपुनर्नवं ॥ वचाश्वदंष्ट्राजीमूतमेषां क्राथं समाक्षि-कं ॥ पिबेच्छाल्योदनं दध्ना भुंजानो मूषिकार्दितः ॥ तक्रेण शरपुंखा-या बीजं संचूर्ण्य वा पिबेत् ॥ अंकोल्लमूलकल्को वा बस्तमूत्रेण क-ल्कितः ॥ पानलेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ किराततिक्तममृ-तां समंगां ककुभत्वचं ॥ बाणं पलाशं काश्मर्यं पयस्यां तंदुलीयकं ॥ आखुविन्नां महानिंबं सप्तपर्णां मधूलिकां ॥ कपित्थं राजवृक्षं वा पि-बेदन्यतमं गेरी ॥ स्थिरे मंदरुजे प्रच्छेत्कर्णिकां पातयेत वा ॥ श्यामा लांगलकी दंती किणिही गिरिकर्णिका ॥आखुविन्ना महावृक्षस्त्रिवृदं-जनकी स्नुही॥ कर्णिकापातनं द्रव्यमेकैकं तिलकल्कवत्॥ क्षीरिप्रवा-लमंजिष्ठाबलादार्वीहयाव्हयाः ॥ रोपण्यः कल्किताम्तैलं घृतं वा सा-धितं तथा ॥ द्विनिशातिलयष्ट्याव्हनगरोशीरपद्मकैः॥सामान्येनेति नि र्दिष्टा क्रियाऽऽखूनां विशेषतः ॥ लालनेन वमिर्मूर्च्छा लालास्रावश्च जायते ॥ लिह्यात्समाक्षिकं तत्र चूर्णितं तंदुलीयकं ॥ चपलेन व-मिर्मूर्च्छा तृड्वा तत्रावलेहयेत् ॥ सदारुमुस्तां त्रिफलां पुत्रकेण तु पां-डुता ॥ सादोऽगे सर्वतश्चाखुसदृशग्रंथिसंभवः ॥ शिरीषबीजं कुष्टं च मधुना तत्र लेहयेत् ॥ हसिरेणान्नविद्वेषो जृंभणं रोमहर्षणं ॥ आरग्व-धादिनिर्यूहं सुवांतं तत्र पाययेत् ॥ चिक्किरेण शिरोदुःखं शोफो हिध्मा वमिर्भ्रमः ॥ वांतोऽत्र जालिनीक्राथैः सारमंकोल्लजं पिबेत् ॥ अजि-रेणाशु कृष्णत्वमूर्च्छाछर्दनहृद्द्रवाः ॥ मधुना तत्र मंजिष्ठां लिह्या-त् स्नुक्क्षीरकल्कितां ॥ निद्रा कषायदंतेन हृच्छोषः कृशताऽति च ॥

१ घृतमितिशेषः २ ज्वरीतिपाठः

शिरीषसारत्वग्बीजं तत्र क्षौद्रेण लेहयेत् ॥ कुलकेन रुजा स्रावो राजयो दंशमडले ॥ ससिंदुवारिते तत्र सहे लिह्यान्मधुप्लुते ॥ ग्रंथयः कोकिले नोग्रा ज्वरो दाहश्च दारुणः॥नीलीपुनर्नवाक्राथसिद्धं तत्र पिबेद्घृतं॥कपिलेन व्रणे कोथो ज्वरो ग्रंथ्युद्गमः सतृट् ॥ लेहयेन्मधुना श्वेतां श्वेतां चात्र पुनर्नवां॥रक्तं कृष्णेन वमति विशेषाद्दुर्दिने पिबेत्॥तत्र किंशुकभस्मांबु शिरीषफलवाल्कं ॥ अरुणाद्याः पृथग्दोषसन्निपातास्रसंभवान् ॥ जनयंति क्रमाद्रोगान्सर्वेऽत्र ग्रंथिकर्णिकाः ॥ करंजारग्वधव्योषबृहत्यंशुमतीर्द्वयात् ॥ क्वाथं दधिपयः सर्पिः पृथक् प्रस्थोन्मितं पिबेत् ॥ कपित्थदाडिमच्छल्लीविशालाहिंसुगंधिकाः ॥ त्रिवृतावृत्तिकावक्रगुडूचीश्चात्र कल्किताः ॥ क्षिपेत्तदरुणादीनां पंचानां विषनाशनाः ॥ काकादनीकाकमाचीस्वरसेन घृतं शृतं ॥ क्रमश्छुच्छुंदरेणाग्रो ग्रीवास्तंभो विसूचिका ॥ यवनालर्षभीक्षीरं बृहत्यौ चात्र पाययेत् ॥ ग्रीवास्तंभो रलासेन वेदना दंशमंडले ॥ लिह्यान्महागदं तत्र घृतमाक्षिकसंयुतं ॥ सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने ॥ यथायथं वा कालेषु दोषाणां वृद्धिहेतुषु ॥ तत्र सर्वे यथावस्थं प्रयोज्याः स्युरुपक्रमाः ॥ यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥ दंशं त्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ॥ प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ व्रणस्योपरिनिष्पीड्य प्रत्यक्पुष्पीरसोऽथवा ॥ तिलगुग्गुलुदूर्वाणां दाडिमस्य गुडस्य च ॥ कल्को मुहुर्मुहुर्लेप्यः श्वदंष्ट्राविषजित् परं ॥ नलमूलं जले पिष्टं पानलेपनयोर्हितं ॥ मातुलुंगच्छदैर्दंशं बध्नीयाद्दंतचूर्णितैः ॥ अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनं ॥ पिबेत् पुनर्नवां श्वेतां धत्तूरकफलान्वितां ॥ फलं धत्तूरकान्मूलं काकोदुंबरिकोद्भवं ॥ सोधुना श्वविषं हंति पीतं वा तंदुलांबुना ॥ ऐकध्यं पललं तैलं रूपिकायाः पयो गुडः ॥

निर्हंति विषमालर्कं घनवृंदमिवानिलः ॥ लशुनोषणवैदेहीवचा गोपित्तकल्किताः ॥ पाननस्यांजनालेपैः श्वदष्टस्यौषधं परं ॥ जलवेतसपत्रत्वङ्मूलं क्षुण्णं पचेज्जले ॥ स क्वाथः शीतलः पीतः परं श्वविषभेषजं ॥ तत्सिद्धं च घृतं पाननस्याभ्यंजनलेपने ॥ जलत्रासे समस्ते च विषे तद्गरुडोपमं ॥ यवमाषकुलत्थानां पंचमूलस्य चांभसि ॥ क्षीरद्विगुणिते सर्पिः साधयेच्छ्लक्ष्णकल्कितैः ॥ अश्वगंधावचाकुष्ठबृहतीरजनीद्वयैः ॥ विदारीकंदकट्वंगपयस्यासिंदुवारितैः ॥ सर्पगंधानखाभीरुशर्करारक्तचंदनैः ॥ श्वदंष्ट्रोपद्रवान् सर्वान् पानाभ्यंगैर्निहंति तत् ॥ हृदि दाहे प्रसेके च विरेकवमनैर्भृशं ॥ विषदोषहरो योज्यः शुद्धे संसर्जनक्रमः ॥ दद्यात् संशोधनं तीक्ष्णमवश्यं विषनाशनं ॥ अशुद्धरूढेऽपि व्रणे प्रकुप्यति च तद्विषं ॥ सरत्नबीजौषधिभिः कुंभैः शीतांबुपूरितैः ॥ अष्टोत्तरशतं वारान्सिद्धमंत्राभिमंत्रितैः ॥ अष्टोत्तरशतोन्मानैः पुष्पमालावगुंठितैः ॥ गोचर्ममात्रके लिप्ते ज्वलिताग्नौ कुशास्तृते ॥ स्थंडिले सरितस्तीरे स्नानवान् स्याच्चतुष्पथे॥अलर्काधिपते यक्षसारमेय गणाधिप॥अलर्कजुष्टमेतन्मे निर्विषं कुरु मा चिरात्॥स्वाहेतिमंत्रोऽलर्कार्ते सर्वकर्मसु शस्यते ॥चतुष्पाद्भिर्द्विपाद्भिर्वा[1] नखदंतपरिक्षते॥ शूयते पच्यते रागज्वरस्रावरुजान्वितं ॥ सोमवल्कोऽश्वकर्णश्च गोजिव्हा हंसपादिका ॥ रजन्यौ गैरिकं लेपो नखदंतविषापहः ॥ इति मूषिकालर्कविषविज्ञानप्रतिषेधो नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

अथातो विषोपद्रवप्रतिषेधं व्याख्यास्यामः ॥ ज्वरकासवमिश्वासहिध्मातृष्णातिमूर्च्छनं ॥ व्रणदाहातिसाराश्च विशेषाद्बस्तिमूर्द्धरुक् ॥ श्वयथुः पूतिगंधत्वं रक्तस्रावो ऽग्निमंदता ॥ इति षोडश निर्दिष्टा विषार्तानामुपद्रवाः ॥ गच्छंत्युपेक्षिता नाशं यैर्जुष्टा विषरोगिणः ॥ राज-

१ चतुष्पाद्भिर्हस्त्यश्वप्रभृतिभिः द्विपाद्भिर्मनुष्यमयूरकुक्कुटादिभिः ॥

प्लक्षफलोशीरकाश्मर्यघनपद्मकात् ॥ क्वाथः सशर्करक्षौद्रो विषज्वरहरः परः॥पीता तंदुलतोयेन कटुका ससितोपला ॥ विषज्वरहरा ऽजाजी-जीवकर्षभकोत्पलं ॥ कोलमज्जासिताधान्यभार्ङ्गीयष्ट्याह्वकेसरं ॥ विषज्वरवमिश्वासकासतृष्णानिबर्हणं ॥ त्रिफलारग्वधव्याघ्रीक्वाथो ज्वरविबंधजित् ॥ बालबिल्ववचामुस्तकषायः सपुनर्नवः ॥ ज्वरा-ग्निसादश्वयथूंन्हिहंति विषसंभवान् ॥ वैदेहिकारामठकक्कपित्थरससैं-धवं ॥ ससितामाक्षिकं लीढं श्वासकासज्वरापहं ॥ द्राक्षाक्षं नगरं कृ-ष्णामथवा सवराघनं ॥ लीढ्वाऽऽज्यमधुना कासान्मुच्यते विषसंभवात् ॥ सपाठांजनमंजिष्ठाद्विनिशामधुकं तथा ॥ यष्ट्याह्वं चांभसा पीत्वा मरिचैरवचूर्णितं ॥ विषवम्यां पिबेत् क्वाथं बिल्वमूलाद्रसोऽथवा॥ ब्रा-ह्मीपरूषकद्राक्षामधुकं पयसा द्रुतं ॥ सेलुलाजघनोशीरयष्ट्येलाकण-केसरं ॥ लिह्यान्मरिचकुंभं वा घृतपुष्परसद्रुतं ॥ क्षीरिवृक्षांकुरक्षौद्र-सितास्तृड्वमथुच्छिदः ॥ जीर्णे शाल्योदनं क्षौद्रं क्षीरं चंदनसाधितं ॥ शीतांभोऽनुपिबन् भुक्त्वा विषच्छर्दिमपोहति ॥ तैलगोविड्रसक्षौ-द्रैर्लिह्यात्कृष्णाप्रियंगुके ॥ श्वासी क्षौद्रेण वा द्राक्षाशृंगीमागधिकासि-ताः॥ गुडनागरवैदेहीविजयामलकानि च ॥ हिध्मायां शंखकनककटु-कास्वर्णगैरिकं ॥ वेल्लशुंठीकणोशीररजनीद्वितयानि वा ॥ लिह्याद्वा क्षीरमृद्वीकां बीजपूररसेन वा ॥ सक्षौद्रं बालकरजः क्वाथं वा सगुडं पिबेत् ॥ विश्वभेषजगायत्रीहरिद्रामरदारुजं ॥ दंतींद्रवारुणीद्वीपीक-ल्कं सौवीरकेण वा ॥ तृण्मूर्च्छायेंऽगशिरसोर्लेपसेका हिमा हिताः ॥ अंभोजनालकुमुदचंदनोशीरमौक्तिकैः ॥ वैहायससितायोयक्षीराढ्ये-क्षुरसाप्लुतैः॥ व्यजनं तालवृंतेन शीते सिकतिले स्थलिः॥कमलोत्पल-किंजल्कपाटलाश्रितबारिषु ॥ विषतृड्दाहमूर्च्छाघ्नं सरसीष्ववगाहनं ॥ विषवेगसमुत्थायां तृष्णायां लाजतर्पणं ॥ शर्करादाडिमक्षौद्रं सलि-लप्लावितं पिबेत् ॥ वटवेतसजंब्वाम्रसेव्यतोयं च शीतलं ॥ भूनिंबमु-

स्तकटुकात्रायंतींद्रयवान् समान् ॥ द्वौ भागौ चित्रकादष्टौ कुटजाद्वारिणा पिबेत्॥ विषातिसारोदावर्त्तकासश्वासज्वरापहः॥ रोध्रमोचरसांबष्टाधातकीस्तंदुलांबुना॥समाक्षिकाः पिबेत्तद्वन्नागरातिविषाऽभयाः॥ सधातकीः सकुटजाः सांजनाः श्लक्ष्णचूर्णिताः ॥ पाठानागरचूर्णं वा दध्ना युक्तं समाक्षिकं ॥ बस्तिरुग्वर्त्तदाहेषु फलवर्तिं प्रयोजयेत् ॥ सारग्वधां समधुकां सोपकुल्यां हरीतकीं ॥ पिबेद्धृतेन सक्षौद्रां बस्तिशूलादिनाशिनीं ॥ गृहधूमनतश्यामानीलिनीतंदुलीयकैः ॥ सिद्धं चाज्यं तथा सिंदुवारात्काथे त्रिवृद्घृतं ॥ काकोलीक्षीरवृक्षत्वक्द्राक्षायष्ट्याव्हशर्कराः ॥ नस्यं विषशिरोरुग्घ्नं संयोज्यं शीतवारिणा ॥ श्वयथौ शुद्धकोष्ठस्य पयः पाने हितं स्मृतं ॥ विश्वभेषजवैदेहीकटुकादेवदारुभिः ॥ सुरसामूलकल्कैर्वा छागं वा पिप्पलीशृतं॥ त्रिफलायाः कषायेण त्रिफला भाविता त्र्यहं ॥ आलोड्य सर्पिषा पीता विषश्वयथुनाशिनी ॥ मधुवेल्लवराव्योषसुराव्होशीरपद्मकैः ॥ विषश्वयथुजिल्लेपस्तथास्वादुकषायकैः ॥ शिरीषपुष्पाहिशिरोनतकुष्ठं घृतान्वितं ॥ धूपोऽगदः श्वयथुहृत् समस्तविषनाशनः ॥ अल्पेनाप्यपचारेण दंशः पूतित्वमश्नुते ॥ प्रायो न सहते तीक्ष्णमुष्णं वा भेषजं विषं ॥ मधुरस्निग्धशीतानि युंज्यात्तस्माद्विषव्रणे ॥ संकाले पाश्च सक्षीरैः कषायैः क्षीरिवृक्षजैः ॥ न्यग्रोधशृंगमधुकतिलसर्षपसैंधवं ॥ साभयानिंबमध्वाज्यं दंशपूतित्वनाशनं ॥ कर्णिकापातनं श्रेष्ठं विषव्रणविशोधनं ॥ रक्ते स्रवत्यतिभृशं घृतं समरिचं पिबेत् ॥ तंदुलीयकमूलेन सितया च समन्वितं ॥ दंशं प्रलेपयेच्चास्य दार्व्या सुश्लक्ष्णपिष्टया ॥ सितोपलाक्षौद्रघृतच्छागदुग्धादिनावनं ॥ शमीकल्कं पिबेच्छ्लक्ष्णमंगं लिंपेद्विशालया ॥ भावयेद्धेमशुक्लांच ततः शाम्यति शोणितं ॥ कृशस्यातिस्रुते रक्ते रूक्षैरत्यर्थसेवितैः॥ विषस्य च प्रभावेन मातरिश्वा प्रकुप्यति ॥ उन्मादाक्षेपकमनोभ्रंशाप

स्मृतयस्ततः ॥ तत्रेष्टं स्नेहनं बस्तिनस्यप्रधमनांजनं ॥ नागदंत्यभ-
याकुष्टं पिप्पलीवृषकट्फलं ॥ भल्लातकास्थिकटुकाबिल्वप्रतिविषा-
ग्निकाः ॥ सक्षीरं तैर्घृतं सिद्धं विषवातविकारजित् ॥ पिबेदैरंडतैलं
वा छागमांसरसान्वितं ॥ ऐकध्यं घृततैलं वा मेध्यमांसरसाशनः ॥
कार्पासमूलं मरिचं हरिद्रे नलदं नलं ॥ पिप्पलीं स्वर्जिकां कुष्टं ज-
लेनालोड्य पाययेत् ॥ उन्मत्तं विषवातेन तथाऽपस्मारिणं नरं ॥ वचां
हंसपदीं व्योषं दधित्थं हस्तिपिप्पलीं ॥ देवदारुबलाबिल्वकृमिजित्कु
ष्टपुंड्रकं ॥ रोध्रारवुपर्ण्यतिविषं क्षीरं सर्पिश्च पाचयेत् ॥ निहंति पा-
नाभ्यंगाभ्यां घृतं सर्वविषाणि तत् ॥ प्रतिकुर्याद्यथास्वं च रोगेष्वेव
परेषु च ॥ दोषानुबंधमालोच्य विषतंत्राविरोधतः ॥ दृश्यशब्दागदे-
रस्य विषशेषं निवर्त्तयेत् ॥ अल्पमप्यवशिष्टं हि व्याधये मरणाय
वा ॥ धवाश्वकर्णतिनिशकरहाटकपीतनं ॥ पलाशाम्रातककुभपा-
रिभद्रकतिल्वकान् ॥ कपित्थकुटजांकोल्लप्रग्रहामलकेंबुकं ॥ शमी-
श्लेष्मातकाश्मंतगोजीमलयूकंटकान् ॥ चिरबिल्वार्ककट्वंगान्सशाक-
मधुशिग्रुकान् ॥ गोपघोंटाहिमारो च भस्मीकृत्यांभसा गवां ॥ क्षा-
रकल्पेन विस्राव्य पचेत्क्षिप्त्वा ऽवचूर्णितं ॥ पिप्पलीद्वयकुंभाम्रसम
पर्णैलवालुकं ॥ वरांगचोचमंजिष्ठाकुष्टवंजुलटिंटुकान् ॥ विडंगाति-
विषाऽनंतासर्षपातंदुलीयकान् ॥ सुराव्हसरलप्लक्षगृहधूमकरंजिकाः ॥
नागदंतीसुरश्रेणीनिचुलं वरुणं वचा ॥ वर्द्धमानपयोबिल्वं क्षार-
वत्पाकमागतं ॥ तल्लोहकुंभे निहितं कार्यं सन्निहितं सदा ॥
तेन दुंदुभिमालिप्य पताकास्तरणानि च ॥ दर्शनश्रवणस्पर्शैर्नि
र्विषं तानि कुर्वते ॥ पानक्षारागदश्चैवं विषं स्थावरजंगमं ॥ शू-
लगुल्मोदराजीर्णश्वासकासाश्मशर्कराः ॥ शोफार्शोग्रहणीदोषान-
रुचिं विनियच्छति ॥ अपि तक्षकतुल्यानां सर्पाणां दर्पनाशनं ॥ श्री-
वेष्टकमनोव्हालं ससर्जरसवालकं ॥ कर्षांशं नागपुष्पस्य प्रकुंचलु-

द्विविंशकं ॥ हरेणवश्चतुः षष्टिः कुटन्नटचतुष्टयं ॥ शताव्हाषोडशै-
तानि पुष्ये संभृत्य पेषयेत् ॥ आश्लेषासु गवां मध्ये सिद्धमंत्राभि-
रक्षितं ॥ कुमार्या स्नातया तत्र मंत्रोऽयं विष्णुनिर्मितः ॥ माता
मे विजया नाम जयो नाम पिता मम ॥ अहं जयस्य पुत्रोऽसौ वि-
जये च जयामि वः ॥ सुगंधाख्योऽयमगदो नित्यं देहविलेपनात् ॥
अभंगकरणो युद्धे विवादे च जयावहः ॥ अमुना लेपिताश्छत्रदुं-
दुभिध्वजतोरणाः ॥ दृष्टस्पृष्टश्रुता घ्नंति विषं स्थावरजंगमं ॥ भूत-
बालग्रहोन्मादान् गेहस्थोऽपि निवारयेत् ॥ प्रपौंडरीकसरलदेवदारु-
कुटन्नटं ॥ जटा शताव्हा ऽतिविषा तिलपर्णी सुगंधिका ॥ नीली
यवफला भार्ङ्गी मधुयष्ट्येलवालुकं ॥ तोयतोयदकालीयतगरध्या-
मकत्वचः ॥ नखपद्मकपुन्नागपत्रकालानुसारिवाः ॥ तालीसपत्र-
मूर्वजोंगकं चंदनद्वयं ॥ ध्येलाद्विसैन्यद्विश्वेताद्विनिशानलदद्वयं ॥
लाक्षाशीतशिवव्योषफलिनीधान्यगैरिकं ॥ शैलेयकशिलापुष्पग्रंथि-
तालोचनाभयाः ॥ अर्कस्थौणेयवृश्चीकाकटुकाचंद्रराजयः ॥ कलिं-
गकः सर्जरसः कुष्टं लवणपंचकं ॥ श्रीपर्णीकाश्मरीसेतुशिंशिपासिं-
दुवारजाः ॥ चंपकाशोकसुरससुमनस्तिलकोद्भवाः ॥ पाटल्यास्तृ-
णशूल्याश्च प्रसवाः कुमुदोत्पलं ॥ तिनिशार्जुनशम्याकधवपुष्पं सपं-
कजं ॥ पंचाशीतिरितश्चूर्णं समूत्रघृतमाक्षिकं ॥ निधापयेद्गवां शृं-
गे मनुष्यं तेन जीवयेत् ॥ भग्नस्कंधं विवृत्ताक्षं मृत्योर्दंष्ट्रांतरं गतं ॥
महासुगंधो नामायमतिवीर्योऽतितेजसा ॥ वारयत्यतिदुर्वारं विषा-
ण्यपि वासुकेरपि ॥ नृपोऽनेनानुलिप्तांगो भवेत् सर्वजनप्रियः ॥ ते-
जस्वितां च लभते राजकस्यापि मध्यगः ॥ शीतमेव च कुर्वीत वि-
धानं विषरोगिणां ॥ मुक्त्वा कीटविषं तद्धि शीतेनातिप्रवर्द्धते ॥
शालयः षष्टिका जीर्णाः कोरदूषाः प्रियंगवः ॥ मुद्गो हरेणुस्तुवरी प-
टोलं वेत्रपल्लवाः ॥ तंदुलीयकजीवंतीवार्ताकं सुनिषण्णकः ॥ जां-

गलं दाडिमं धात्री कपित्थं सैंधवं सिता ॥ अविदाहि यदप्यन्नवि- ज्ञानीये स्वरूपतः ॥ तत्तद्द्याद्विषार्तेभ्यः कार्या व्यंजनसंस्कृतिः ॥ कषायैर्विषहर्तॄणां घृतैः कल्याणकादिभिः ॥ दिव्यसारसकूपोत्थमन्य- द्वा शृतशीतलं ॥ मध्वामलकयुक्तं वा विषार्त्तः सलिलं पिबेत् ॥ न- दीतडागजं त्याज्यं विशेषेण घनागमे ॥ शुक्लवस्त्रोदरायाताः सुकृताः सक्तवो यवाः ॥ तक्रेण सघृताः पीताः परमं विषनाशनाः ॥ तिल- मद्यकुलत्थक्षुत्तृड्भयायासमैथुनं ॥ वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥ प्रशांतदोषप्रकृतिं सुधातुमाहारकामं सममूत्रविट्कं ॥ प्रसन्नचित्तेंद्रियचेष्टितं च वैद्योऽवगच्छेदविषं मनुष्यं ॥ इति विषोप- द्रवप्रतिषेधो नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

अथातो विषोपयोगीयमध्यायं व्याख्यास्यामः ॥ विषे प्रतिवि- षं योज्यं मंत्रतंत्रैरसिध्यति ॥ अतीते पंचमे वेगे सप्तमस्यानतिक्र मे ॥ प्रभोर्निवेद्य प्रयतेन्नैव व्याख्याय कस्यचित् ॥ सिद्धमं- त्रधरः कृत्वा धरणीबंधमादितः ॥ नहि मंत्रमाहात्म्यस्य विषं या- त्यविधेयतां ॥ श्लेष्मतुल्यगुणं प्रायः स्थिरमूर्ध्वगमं विषं ॥ प्रायः पित्तगुणैर्युक्तं मध्यगामि च जंगमं ॥ गुणैरेभिर्विपर्यस्तैर्निह- तस्ते परस्परं ॥ युंज्यान्मूलविषं तस्माद्दष्टानां पानलेपयोः ॥ वि- षपीतं च कुशलो दंशयेत्पवनाशिभिः ॥ न विषप्रतिमं किंचिन्निर्वि- षीकरणं विषे ॥ चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमां यवैः ॥ मात्रां विषस्य मौलस्य प्रयुंजीत यथायथं ॥ दष्टस्य द्वौ यवौ कीटैस्तिल- मात्रं तु वृश्चिकैः ॥ नैव त्वसृक्स्थे पाने च लूतादष्टस्य नेष्यते ॥ प्रच्छाय लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितं ॥ सविषे युक्तममृतं वि- षमे वा विषे विषं ॥ अबले चातिबलवद्व्यापन्नं चाप्रयोगतः ॥ सवि- षाविषशंकायामगदानपि योजयेत् ॥ अविरुद्धान्प्रयुक्तो हि निर्वि- षस्य गदोऽगदः ॥ तद्वच्च सविषस्यापि क्रियाकालातिपाततः ॥ आ-

नीयाद्विषसद्भावं भिषक् तस्मात्प्रयत्नतः ॥ सात्तुकं मुस्तकं शृंगी वा
लकं सर्षपाव्हयं ॥ वत्सनाभं च कर्माणं विषं स्निग्धं घनं गुरु ॥ न-
जात्वन्यत्प्रयोक्तव्यं कालकूटं विशेषतः ॥ विषेऽवचारिते तीक्ष्णे पे
यं घृतमनंतरं ॥ सभार्ङ्गीदधिमंडोत्थसारिवातंदुलीयकं ॥ आगारधूम
मंजिष्ठायष्ट्याव्हैर्वा समन्वितं ॥ लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जु
नत्वचं ॥ क्षीरक्षौद्रघृतैर्युक्तं पीतं हंति विषं विषं ॥ ससिंदुवारतगरं
मृतसंजीवनं विषं ॥ शिरीषकुसुमं वक्रं विषमाशु विषापहं ॥ देवदा-
रुनतं मांसीदाडिमीबाकुचीविषं ॥ कुष्टं च पानलेपाभ्यां समं सविष
नाशनं ॥ मनःशिलाललालैलासिंदुवारामराव्हयं ॥ सरक्ताकुंकुमवि-
षं ध्मातं निःसंज्ञबोधनं ॥ देहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्हितः ॥
यस्तु संरोषितो भोगी धूमं वक्राद्विमुंचति ॥ दंडाग्रे पिशितं बध्वा
बहुशस्तेन दंशयेत् ॥ अशक्तमगदैरन्यैर्विषपीतं चिकित्सकः ॥ पाय
येन्मांसचूर्णं तं ज्ञात्वा विषबलाबलं ॥ अन्येष्वपि च वेगेषु शेषोपा
यपरिक्षये ॥ विषं युंजीत नित्यं च रसायनगवेषिणः ॥ घृतोपस्कृत
देहस्य विशुद्धस्य हिताशिनः ॥ सात्विकस्योदिते भानौ योज्यं शी-
तवसंतयोः ॥ ग्रीष्मे चात्ययिके व्याधौ न च वर्षासु दुर्दिने ॥ न
क्रोधने न पित्तार्त्ते न क्लीबे राजनि द्विजे ॥ क्षुत्तृष्णाश्रमघर्माध्व-
व्याध्यंतरनिपीडिते ॥ गर्भिणीबालवृद्धेषु न रूक्षेषु न मर्मसु ॥ स्व-
भ्यस्तेऽपि विषे यस्माद्वर्जनीयान्विवर्जयेत् ॥ कट्वम्लतैललवणदि-
वास्वमातपानलान् ॥ रूक्षमन्नं विशेषेण भयं वा ऽजीर्णतः सदा॥
दृग्विभ्रमं कर्णरुजामन्यांश्चानिलजान् गदान् ॥ विषं रूक्षाशिनः कु-
र्यान्मृत्युमेव त्वजीर्णतः ॥ अलं गोमूत्रसंयुक्तमातपे शोषयेत्त्र्यहं ॥
विषं बृंहणमेतद्धि विषस्यादौ प्रशस्यते ॥ तत्पिबेन्मस्तुना वातज्वरे
क्षीरेण पैत्तिके ॥ युक्तं मूत्रेण कफजे सर्वजे त्रिफलांभसा ॥ रो-
ध्रचंदनषड्ग्रंथाशर्कराघृतमाक्षिकैः ॥ क्षीरेण च घृतं युक्तं जीर्णज्व-

रहरं परं ॥ निकुंभकुंभत्रिफलासर्पिर्मधुविषैः कृतः ॥ निहंति मोद-
को ऽजीर्णज्वरमेहत्वगामयान् ॥ शिखिककेरसोपेतं विषमज्वरजिद्विषं
॥ विषं यष्ट्याह्वयं रास्नासेव्यमुत्पलकंदकः ॥ तंदुलोदकपीतानि-
रक्तपित्तस्य भेषजं ॥ विषं रसांजनं भार्ङ्गी वृश्चिकाली महासहा ॥
सवेदने सपाके च व्रणे दुष्टे प्रलेपनं ॥ सिताविषक्षीरतरुप्रवाला
मधुना द्रुताः ॥ श्वासहिध्मापहा लीढाश्छर्दिघ्नास्तु विषान्विताः ॥
क्षौद्रोशीरमधुक्षाररजनीकुटजत्वचः ॥ विजयापिप्पलीमूलपिप्पली-
द्वयचित्रकैः ॥ पुष्कराह्वरीद्राक्षायवानीक्षीरदीप्यकैः ॥ सितायष्टी-
द्विबृहतीसैंधवैः पालिकैः पचेत् ॥ सविषार्द्धपलैः प्रस्थं घृतात्तज्जीर्ण-
भुक् पिबेत् ॥ दुर्नाममेहगुल्मार्मतिमिरकृमिपांडुताः ॥ गलग्रहग्रहो-
न्मादकुष्ठानि च नियच्छति ॥ कृच्छ्रघ्नं विषपथ्याग्निदंतीद्राक्षानिशा-
विषं ॥ शिलाजतुविषं मूत्रमुदावर्त्ताश्मरीहरं ॥ गोमूत्रक्षारसिंधूत्थविषं
पाषाणभेदकं ॥ वज्रवद्दारयत्येतदातंकं पीतमश्मरीं ॥ समूलपिप्पली-
मूत्रं विषं शूलहरं तथा ॥ विषद्रवंतीमधुकद्राक्षारास्नाशठीकणाः ॥
ऐरंडतैलं त्रिफलागोमूत्रं चित्रको विषं ॥ सर्पिषा सहितं पीतं वातां-
डत्वमपोहति ॥ त्रिफला स्वर्जिकाक्षारो विषं गुल्मप्रभेदनं ॥ विषवेल्ल-
मिशिक्षीरं गुल्मप्लीहनिबर्हणं ॥ प्लीहोदरघ्नं पयसा शताह्वाकृमिजिद्वि-
षं ॥ वायसीमूलनिःक्वाथपीतं कुष्ठहरं विषं ॥ पयसा राजवृक्षत्वग्गा-
यत्रीबाकुचीफलात् ॥ लीढं स्नेहकणाभ्यां च विषं क्वाथेन कुष्ठजित्॥
अवल्गुजैडगजयोर्बीजं क्षारद्वयं विषं ॥ लेपः ससैंधवः पिष्टो वारिणा
कुष्ठनाशनः ॥ चित्रकार्कजटाहस्तिपिप्पलीबाकुचीविषैः ॥ गोमूत्रपि-
ष्टैरन्योऽन्यो मनोह्वास्नुक्पयोविषैः ॥ सचंद्रैरेडगजकरंजफलसैंधवैः
॥ सव्योषस्वर्जिकाक्षारयवक्षारनिशाद्वयैः ॥ आगारधूमसहितैर्बस्तमूत्रे-
ण कल्कितैः ॥ भल्लातकाग्निशम्याकविषैर्गोमूत्रपोषितैः ॥ लेपो विच-

चिकादद्रुरकसाकिटिभापहः ॥ शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणं ॥ विषभल्लातकद्वीपिगुंजानिंबफलैर्जयेत् ॥ लेपोऽम्लपिष्टैः श्वित्राणि पुंडरीकं च दारुणं ॥ वक्रकुष्ठरसद्वीपिस्पृक्कापत्रैलवालुकं ॥ पिष्टं खदिरतोयेन त्रिरात्रमुषितं पिबेत् ॥ श्वित्री विषेण संसृष्टं ततः स्फोटान्किलासजान् ॥ कंटकेन विभज्यानु लेपैर्लिपेत कौष्ठिकैः ॥ अथवा करवीरार्कमूलबाकुचिकाविषैः ॥ बस्तांबुपिष्टैः सद्वीपिद्विपपिंप्पल्यरुष्करैः ॥ लाक्षासुराह्वमंजिष्ठाकुष्टपद्मकसारिवाः ॥ गुंजाफलं कुरबको लांगलीवज्रकंदकः ॥ वाराहीकंदजास्फोतासमाह्वगिरिकर्णिकाः ॥ अर्काश्वमारयोर्मूलं नागपुष्पनतं निशे ॥ दंतीविषं हंति विषं पिप्पलीमरिचानि च ॥ तैस्तैलं कटुतैलं च श्वित्रस्याभ्यंजनं पचेत् ॥ सवर्णीकरणं श्रेष्ठमास्तिकस्य वचो यथा ॥ वीरालांगलकीदंतीविषपाषाणभेदकैः ॥ प्रयोज्यो मूढगर्भाणां प्रलेपो गर्भमोचनः ॥ स्वरसं बीजपूरस्य वचाब्राह्मीरसं घृतं ॥ वंध्या पिबंती सविषं सुपुत्रैः परिवार्यते ॥ नष्टशुक्रः पयोद्राक्षाकपिकच्छूवचाविषं ॥ विषं सर्पिः सिताक्षौद्रं तिमिरापहमंजनं ॥ विषं चैकमजाक्षीरकल्कितं विषधूपितं ॥ विषं धात्रीफलरसैरसकृत्परिभावितं ॥ अंजनं शंखसहितं प्रगाढतिमिरप्रणुत् ॥ विषमिंद्रायुधं स्तन्ये घृष्टं काचच्छिदंजनं ॥ बीजपूररसे घृष्टं विषं तद्वा सितायुतं ॥ विषं मागधिका द्वे च निशे काचघ्नमंजनं ॥ शुकामजिद्विषं कृष्णायुक्तं गोमूत्रभावितं ॥ समुद्रफेनस्फटिककुरुविंदसुधांजनं ॥ कूर्मपृष्ठं च तुल्यानि तेभ्योऽर्द्धांशा मनःशिला ॥ अर्द्धहीनानि मरिचसैंधवयोरजांसि च ॥ अतो यथोत्तरं दद्यादयसा च समं विषं ॥ रसक्रियेयं मधुना शुक्रपिल्लार्मकाचजित् ॥ अभीक्ष्णं शीततोयेन सिंचेन्नेत्रे विषांजिते ॥ रसोनकंदमरिचविषसर्षपसैंधवैः ॥ पिल्लेऽक्षि लिखितं पूर्वं सुरसार-

१ रकसा क्षुद्रकुष्ठं सौश्रुते पठितं ॥

सर्षपेषितैः ॥ पूरयेत् सर्पिषा चानु सर्पिरेव च पाययेत् ॥ मधूकसारमधुकविषक्षीरजलैर्घृतं॥ पक्कं संतर्पणं श्रेष्ठं रात्र्यंधत्वे चिरोत्थिते॥ नस्यं शिरोरुक्शमनं प्रत्यक्पुष्पीसिताविषं॥ अथवा घृतयष्ट्याव्हशर्करा विषसंयुताः॥ शुंठी पथ्या विषं पाका द्रवंती पूतिनासजित्॥कटुतैलं विषं नस्यं पलितारुंषिकापहं ॥ स्वर्जिकाक्षारसिंधूत्थशुक्तयुक्तं विषं परं ॥ कर्णयोः पूरणं तीव्रकर्णशूलनिवर्हणं ॥ प्रपौंडरीकमंजिष्ठाविषसिंधुसमुद्भवैः ॥ निहंति साधितं तैलं गंडूषेण मुखामयान्॥ देवदारुविषं सर्पिर्गोमूत्रं कंटकारिका ॥ वाचःस्खलनतां हंति पीतमित्याह काश्यपः ॥ शत्रुप्रयुक्ताद्विषतो गराद्वा भूताद्भुजंगाखुगणाज्जरायाः ॥ अकालमृत्योर्ग्रहपाप्मतो वा विषाशिनो नास्ति भयं नरस्य ॥ इति विषोपयोगीयो नामाऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ इति विषतंत्रं नाम षष्ठमंगं संपूर्णं ॥ ६ ॥

अथातो रसायनाध्यायं व्याख्यास्यामः ॥ दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ॥ प्रभावर्णस्वरौदार्यं देहेंद्रियबलोदयं ॥ वाक्सिद्धिं वृषतां कांतिमवाप्नोति रसायनात् ॥ लाभोपायो हि सप्तानां रसादीनां रसायनं ॥ पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ॥ स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ॥ न भाति मलसंक्लिष्टे वस्त्रे रंगइवार्पितः ॥ युक्तं संस्कारहीनस्य सम्यगप्यप्रमादिनः ॥ यथैव पौरुषं तद्वन्न सिध्यति रसायनं ॥ सर्वे च दोषा भवंति ग्राम्यादाहाराद[1]म्ललवणकटुकक्षारविरुद्धासात्म्यरूक्षाभिष्यंदिक्लिन्नगुरुपूतिपर्युषितनवधान्यशुष्कशाकमांसतिलकुलत्थदधिशुक्तकांजिकपिष्टान्नविरूढनिषेविणां दिवास्वप्नमद्यस्त्रीनित्यानां विषमातिमात्रव्यायामसंक्षोभितवपुषां क्रोधलोभभयशोकायासबहुलानां पापकर्मणामसम-

१ अधउपरिष्टाच्च ·

जसाहारव्याहारनीहारनिरतानां ॥ अतो निमित्तं ह्यविशुद्धः संजायते रसो विदह्यते रक्तं शिथिलीभवंति मांसानि विष्यंदते मेदो दृष्यंते दोषाः विमुच्यंते संधयो न संधायंतेऽस्थिषु मज्जानो नाप्यायते शुक्रं नौजो न बलं न वीर्यं ॥ तत एवंभूतो ग्लायति सीदति निद्रातंद्रालस्यसमन्वितः खिद्यते निर्विद्यते निरुत्साहोऽसमर्थः शारीरमानसानां विशिष्टानां भ्रष्टच्छायो नष्टस्मृतिरल्पबुद्धिरसंपाद्यमानाभिलषितार्थोऽहर्निशमनिशमनिशं निःश्वसन्नधिष्ठानभूतो रोगाणां नोपात्तमपि सर्वमायुरवाप्नोति ॥ तस्माद्बुद्धिमानपास्य यथोक्ताहारादिदोषान्निर्वाह्य च पूर्वोपचितान् रसायनं विधिसहितमुपसेवेत ॥ तत्तु द्विविधं कुटीप्रावेशिकं वातातपिकं च ॥ तत्र वीर्यप्रभावप्रयोगपरिहारगुरुत्वात्कुटीप्रावेशिकं महाफलतरं ॥ तस्य विधिः ॥ क्षेमसुभिक्षधार्मिकश्रद्दधानजननृपतिवैद्यविप्रे सुलभमहौषधिघृतक्षीरपथ्यभोजनोपकरणे ग्रामे नगरे वा पूर्वोत्तरस्यां दिशि प्रागुदक्प्रवणे सुविभक्तविहारोद्देशे देशे दृढघनसुमृष्टभित्तिमुत्सेधविस्तारसंपन्नां सूक्ष्मलोचनां त्रिगर्भामृतुसुखां निवातां प्रवातैकदेशां प्राग्द्वारामुदग्द्वारां वा शमीबिल्वक्षीरिवृक्षपरिगृहीतामनिष्टेंद्रियार्थवातातपरजोधूमस्वेदक्लेदरदंशमशकसरीसृपव्यालबालस्त्रीदासांतावसायिनामगम्यां सन्निहितवैद्यपरिचारकोपकरणां कुटीं कारयेत् ॥ तस्यां रसायनार्थी शरदि वसंते शुक्लपक्षे प्रशस्ते ऽहनि पूजयित्वा यथार्थं देवगुरुवृद्धान्प्रणम्य दक्षाश्विप्रभृतीन् परिमृज्य सुवर्णघृतमधुसिद्धार्थकप्रियंगुरोचनाः प्रदक्षिणीकृत्य गोब्राह्मणमनुप्रविशेत् ॥ तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥ ब्रह्मचारी धृतियुतः श्रद्दधानो जितेंद्रियः ॥ दानशीलदयासत्यव्रतधर्मपरायणः ॥ देवतानुस्मृतियुतो युक्तस्वप्नप्रजागरः ॥ प्रियौषधः पेशलवागारभेत रसायनं ॥ हरीतकीमामलकं सैंधवं नागरं वचां ॥ हरिद्रां पिप्पलीं वेल्लं गुडं

कोष्णांबुना पिबेत् ॥ स्निग्धः स्विन्नो नरः पूर्वं तेन साधु विरिच्यते ॥ ततः शुद्धशरीराय कृतसंसर्जनाय च ॥ त्रिरात्रं पंचरात्रं वा सप्ताहं वा घृतान्वितं ॥ दद्याद्यवकमाशुद्धेः पुराणशकृतोऽथवा ॥ इत्थं संस्कृतकोष्ठस्य रसायनमुपाचरेत् ॥ यस्य यद्योगिकं पश्येत्सर्वमालोच्य सात्म्यवित् ॥ हरणात्सर्वरोगाणां याऽसावुक्ता हरीतकी ॥ पथ्यत्वात् सर्वधातूनां पथ्या शिवतया शिवा ॥ यस्माद्विजयते व्याधीन् समग्रान् विजया ततः ॥ अभयं सर्वरोगेभ्यो भवत्यायुश्च शाश्वतं ॥ यतः शीलयतामेनां तेनेयमभया स्मृता ॥ नवा वृत्ता घना स्निग्धा गुर्वी मज्जति चाप्सु या ॥ बालस्य सा प्रयोक्तव्या नवनीतसमन्विता ॥ वाते ससर्पिर्लवणा पित्ते सगुडशर्करा ॥ कफे सपिप्पलीक्षौद्रा सर्वदा सा प्रशस्यते ॥ अथ हरीतकीनां हिमवच्छैलसंभवानां काळजानामापूर्णरसवीर्याणां निरामयानां द्विशस्त्रिशो वा शकलितानामाढकं चतुर्गुणेन पयसा संस्वेद्य मृदुभूतमवतार्य शीतं सर्पिर्मध्वाढकाभ्यां संसृज्य सुगुप्तं स्थापयेत् ॥ ततस्त्रिरात्रादूर्ध्वमाहारानुपरोधिनीं मात्रां प्रत्यहमुपयुंजीत ॥ जीर्णे शालिषष्टिकं पयसा भुंजीत ॥ प्रयोगांते च तावंतमेव कालं ॥ अस्य प्रयोगाद्वर्षशतमजरो निर्वलीखलतिपलितामयः श्रुतिस्मृतिसंपन्नः समिद्धानलश्च पुरुषो भवति ॥ बृहच्छरीरं गिरिसारसारं स्वरो घनौघस्तनितानुकारी ॥ भवत्यपत्यं विपुलं स्थिरं च समश्नतो योगमिमं प्रयत्नात् ॥ पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितं ॥ पंचानां पंचमूलानां सार्द्धं पलशतद्वयं ॥ जले दशगुणे पक्त्वा दशभागस्थिते रसे ॥ आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ ॥ विनीय तस्मिन्निर्यूहे योजयेत् कुडवांशकं ॥ त्वगेलामुस्तरजनीपिप्पल्यगुरुचंदनं ॥ मंडूकपर्णीकनकशंखपुष्पीवचाप्लवं ॥ यष्ट्याह्वयं विडंगं च चूर्णितं तुलयाऽधिकं ॥ सितोपलार्द्धभारं च पात्राणि त्रीणि सर्पिषः ॥ द्वे च तैलात्पचेत्सर्वं तदग्नौ

लेहतां गतं ॥ अवतीर्णं हिमं युंज्याद्द्विशैः क्षौद्रशतैस्त्रिभिः ॥ ततः खजेन मथितं निदध्याद्घृतभाजने ॥ एतद्रसायनं ब्राह्मं समं पूर्वेण सर्वथा ॥ वैखानसा वालखिल्याः प्राश्य प्राप्ता नवं वयः ॥ आरोग्यममितं चायुर्वीततंद्राश्रमक्लमाः ॥ अभयामलकबिभीतकपंचात्मकपंचमूलनिर्यूहे ॥ वल्लीपलाशकरसे क्षीरेऽष्टगुणे च विपचेत ॥ घृतस्य कुंभं मधुकं मधूकं काकोलियुग्मं च बलां सुगुप्तां ॥ सक्षीरशुक्लामृषभं सुजीवं सुखांबुपस्तच्च पिबेद्गुणाढ्यं ॥ आमलकसहस्रं पिष्टस्वेदनविधानेन क्षीरोष्मणा सुस्विन्नमनातपशुष्कमनस्थि चूर्णयेत् ॥ तदामलकसाहस्रस्वरसपरिपीतं स्थिराजीवंतीपुनर्नवानागबलामंडूकपर्णीब्रह्मसुवर्चलाभीरुशंखपुष्पीवचापिप्पलीविडंगस्वयंगुप्ताऽमृताऽगुरुचंदनमधुकमधूकपुष्पपद्मोत्पलनवमालिकायुवतीयूथिकाचूर्णाष्टभागसंपृक्तं पुनर्नागबलापलसहस्रस्वरसपरिपीतं छायोपशोषितं द्विगुणितसर्पिषा क्षौद्रेण क्षुद्रगुडाकृतिं कृत्वा घृतभाजनस्थं भस्मराशेरधःस्थापयेदंतर्भूमौ पक्षमथर्ववेदविदा कृतरक्षं पक्षात्यये चोद्धृत्य कनकरजतताम्रप्रवालकालायश्चूर्णाष्टभागसंयुक्तमर्द्धकर्षाभिवृद्ध्या यथाग्नि प्रातः प्रयोजयेदिति समानं पूर्वेण॥आमलकसहस्रमार्द्रपलाशद्रोण्यां सपिधानायां बाष्पमनुद्वमंत्यामारण्यगोमयाग्निभिरुपस्वेदयेत् ॥ तानि सुस्विन्नशीतानि चोद्धृत्य निष्कुलीकृतान्यापोथ्य पिप्पलीविडंगतंदुलानां पृथगाढकेनाध्यर्द्धेन शर्करायाः षड्भिर्मधुघृततैलानां संयोज्य घृतकुंभे स्थापयेद्द्विशतिरात्रं॥परं चोपयोजयेदिति समानं पूर्वेण॥आमलकसहस्रं पिप्पलीसहस्रसंयुक्तं तरुणपलाशक्षारोदकेनाप्लाव्य शुचौ भांडे स्थापयेत्॥ततोनुगतक्षारमनातपशुष्कमस्थिरहितं चूर्णयित्वा सितोपलापादेन चतुर्गुणाभ्यां मधुघृताभ्यां च संयोज्य घृतभाजने षण्मासानंतर्भूमेः स्थापयित्वा परतो यथाग्निबल-

---

१ अभयामलकसहस्रमित्यष्टांगहृदये पाठः

मुपयुंजीतेति समानं पूर्वेण ॥ आमलकचूर्णाढकमेकविंशतिरात्रमामलकस्वरसभावितं मधुयुतं घृताढकाभ्यां पिप्पलीचूर्णाष्टभागेन शर्कराचतुर्भागेन संसृष्टं घृतभाजनस्थं प्रावृषि तद्भस्मराशाविति समानं पूर्वेण ॥ अभयामलकबिभीतकानां द्विशस्त्रिशो वा संयोजितानां पलाशत्वगवनद्धानां मृदावलिप्तानां कुकूलस्विन्नानां निरस्थीकृतानां पलसहस्रमुलूखले संक्षुद्य दधिमधुघृततैलपललशर्करासंपृक्तं भक्षयेदंनन्नभुक् ॥ प्रयोगांते द्विगुणं कालं यवागूयूषक्षीरघृतषष्टिकान्नमाहारोऽभ्यंजनं सर्पिरुद्वर्त्तनं यवचूर्णमिति समानं पूर्वेणाभ्यधिकफलं वा ॥ विडंगतंदुलानामाढकमाढकं पिप्पलीतंदुलानामध्यर्द्धं सितोपलाया मधुघृततैलाढकैः षड्भिरेकीकृतं प्रावृषि भस्मराशाविति समानं पूर्वेण ॥ दशमूलबलामुस्तजीवकर्षभकोत्पलं ॥ पर्णिन्यौ पिप्पली शृंगी मेदा तामलकी त्रुटिः ॥ जीवंती जोंगकं द्राक्षा पौष्करं चंदनं शठी ॥ पुनर्नवद्विकाकोलीकाकनासामृताह्वयं ॥ विदारीविषमूलं च तदैकध्यं पलोन्मितं ॥ जलद्रोणे पचेत्पंचधात्रीफलशतानि च॥पादशेषं रसं तस्माद्यस्थीन्यामलकानि च ॥ गृहीत्वा भर्जयेत्तैलघृताद्द्वादशभिः पलैः ॥ मत्स्यंडिकातुलार्द्धेन युक्तं तल्लेहवत् पचेत् ॥ स्नेहार्द्धं मधु सिद्धे च तवक्षीर्याश्चतुष्पलं ॥ पिप्पल्या द्वे पले दद्याच्चतुर्जातं कर्णार्द्धिंतं ॥ अतोऽवलेहयेन्मात्रां कुटीस्थः पथ्यभोजनः ॥ इत्येष च्यवनप्राशो यं प्राश्य च्यवनो मुनिः ॥ जराजर्जरितोऽप्यासीन्नारीनयननंदकः ॥ कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितं ॥ मूत्रशुक्राशयान् दोषान् वैस्वर्यं च व्यपोहति ॥ बालवृद्धक्षतक्षीणकृशानामंगवर्द्धनं ॥ मेधां स्मृतिं कांतिमनामयत्वमायुःप्रकर्षं पवनानुलोम्यं ॥ स्त्रीषु प्रहर्षं बलमिंद्रियाणामग्नेश्च कुर्याद्विधिनोपयुक्तः॥मधुकेन तवक्षीर्या पिप्पल्या सिंधुजन्मना ॥ पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥

१ कणार्द्धकमिति पाठः

सितया वा समा युक्ता समायुक्ता रसायनं ॥ त्रिफला सर्वरोगघ्नी-
मेधायुःस्मृतिबुद्धिदा ॥ त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवां ॥
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतं ॥ प्रभूतस्नेहमशनं जीर्णे तत्र
प्रशस्यते ॥ जीवत्यरुक्नरस्तस्य समाभ्यासात्समाः शतं ॥ वर्षं खा
देत्प्राणदां प्रातरेकामश्नन्नन्नात्पूर्वमक्षद्वयं च ॥ साज्यक्षौद्रं भो-
जनांते चतुष्कं शृंगीकानां तद्वयःस्थापनेऽलं ॥ अथायसानि चतुरं-
गुलदीर्घाणि तिलोत्सेधानि पत्राणि कारयेत् ॥ तान्यग्निवर्णानि कृ-
त्वा ऽऽमलकस्वरसे निर्वापयेदेकविंशतिं कृत्वा तेषां तादृशानां पल-
शतमायस्यां स्थाल्यां प्रक्षिप्यामलकशतोत्तरं कृत्वा सुविहितं भस्म
राशौ निखनेत् ॥ मासि मासि चोद्धृत्यायसेन दंडेन घट्टयेत् ॥ एवं
तानि लोहपत्राणि संवत्सराद्द्रवीभवंति ॥ ततश्चोत्तरकालमकृत्वावम-
नविरेचनं वा स्निग्धतनुरेव केवलं समंततोऽगुष्ठपर्वमात्रमुखेनायसेन
स्रुवेणायस एव भाजने तस्मात्कल्कीकृतात्स्रुचमेकं गृहीत्वा मधुघृ-
ताभ्यां पृथक् स्रुचेन संयोज्य प्राश्नीयात् ॥ जीर्णे क्षीररसयूषाणा
मन्यतमेन सर्पिर्मिश्रं नवं षष्टिकौदनमश्नीयात् ॥ अनेन विधिना व
र्षमुपयुज्य वर्षमेव चान्यदप्युद्दिष्टाहारो यंत्रितात्मा कुटीमावसेत् ॥
ततः सर्वोपतापान् जित्वा व्याधिजरामरणशस्त्राग्नितोयविषाणामग-
म्यः सर्वभावेष्वतींद्रियो वर्षसहस्रद्वयं जीवति ॥ वाजिवेगो गजप्रा-
णो भवेत्तु स्मृतिबुद्धिमान् ॥ वाग्मी वृषः श्रुतधरो महाभोगो म-
हाधनः ॥ ताम्यरूप्यसुवर्णानामयमेव पृथग्विधिः ॥ द्विगुणं तु गु-
णोत्कर्षं जानीयादुत्तरोत्तरं ॥ हेमधात्रीफलक्षौद्रं गायत्रीपरिमंत्रि-
तं ॥ लिहन्ननुपिबन् क्षीरं दृष्टरिष्टोऽपि जीवति ॥ सुवर्णं पद्मबीजा-
नि मधु लाजाः प्रियंगवः ॥[1] क्षीरेण पीतं परममलक्ष्मीविनिवारणं ॥
सपद्मबीजामलकाभयाक्षं सर्पिर्मधुभ्यां कनकं लिहंतः ॥ दीर्घायु-

१ रसभावितमितिपाठः

षो मंदजरोपतापाः सरीसृपाणां च भवंत्यगम्याः ॥ मधुमागधिका-विडंगसारत्रिफलाहेमघृतं सितां च खादन् ॥ जरसा ऽनवलीढदेहकांतिः समधातुश्च समाः शतं स जीवेत् ॥ हेमबिल्वं वचासर्पिरैकध्यमुपयोजितं॥ मेध्यमायुष्यमारोग्यकांतिसौभाग्यपुष्टिदं ॥शतावरीघृतं लीढं ससुवर्णं समाक्षिकं ॥ करोति चिरजीवित्वं राजानं च वशानुगं ॥ आयुष्कामः शंखपुष्प्या समेतं मेधाकामः कांचनं सोग्रगंधं ॥ लक्ष्मीकामः पद्मकिंजल्कयुक्तं खादेत्कामं कामकामो विदार्या ॥ मंडूकपर्ण्याः स्वरसं यथाग्नि क्षीरेण यष्टीमधुकस्य चूर्णं ॥ रसं गुडूच्याः सहमूलपुष्प्याः कल्कं प्रयुंजीत च शंखपुष्प्याः॥ आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ॥ मेध्यानि चैतानि रसायनानि मेध्या विशेषेण तु शंखपुष्पी ॥ नलदं कटुरोहिणी पयस्या मधुकं चंदनसारिवोग्रगंधाः॥ त्रिफलाकटुकत्रयं हरिद्रे सपटोलं लवणं च तैः सुपिष्टैः ॥ त्रिगुणेन रसेन शंखपुष्प्याः सपयस्कं घृतनलवणं विपक्वं॥ उपयुज्य भवेज्जडोऽपि वाग्मी श्रुतधारी प्रतिभानवानरोगः ॥ ब्राह्मीवचासैंधवशंखपुष्पीमत्स्याक्षकब्रह्मसुवर्चलैंद्र्यः ॥ वैदेहिका च त्रियवाः पृथक्स्युर्यवो सुवर्णस्य तिलो विषस्य ॥ सर्पिषश्च पलमेकत एतद्योजयेत्परिणते च घृताढ्यं ॥ भोजनं समधु वत्सरमेवं शीलयन्नधिकधीस्मृतिमेधः ॥ अनिक्रांतजराव्याधितंद्रालस्यश्रमक्लमः ॥ जीवत्यब्दशतं पूर्णं श्रीतेजःकांतिदीप्तिमान् ॥ विशेषतः कुष्ठकिलासगुल्मविषज्वरोन्मादगरोदराणि ॥ अथर्वमंत्रादिकृताश्च कृत्याः शाम्यंत्यनेनातिबलाश्च वाताः ॥ यथोक्तगुणायां भूमौ-जातामबालामजीर्णां शीर्णपुराणपर्णामसंजातान्यपर्णां [1]तपसि तपस्ये

---

1 तपसि माघे ॥ तपस्ये फाल्गुने ॥ तपा माघेऽथफाल्गुने ॥ स्यात्तपस्यः फाल्गुनिक इत्यमरः ॥

वा मासे यथोक्तेन विधिना पुष्ययुक्ते चंद्रमसि सुमुहूर्ते नागबलां समूलामुद्धारयेत् ॥ तस्या मूलानां त्वक् पिंडमात्रमक्षमात्रं वा श्लक्ष्णपिष्टं वा चूर्णितं पयसा पिबेत् ॥ मधुघृताभ्यां वा लिह्यात् ॥ जीर्णे क्षीरवृत्तिरेव स्यात् ॥ क्षीरेणैव वा ससर्पिष्कं शालिषष्टिकमश्नीयात् ॥ एवं संवत्सरं प्रयोगाद्वर्षशतमजर इत्यादि समानं पूर्वेण॥बलाऽतिबलाचंदनागुरुधवतिनिशखदिरकदरशाकाशिंशिपाऽसनस्वरसा. पुनर्नवांताश्च वयःस्थापनोक्ता दशौषधयः सविदारीश्वदंष्ट्राश्वगंधावाराहीशतावर्यो नागबलया व्याख्याताः ॥ तत्र सारवृक्षाणां सर्वेषां स्वरसार्थी कुष्ठचिकित्सिते खदिरकल्पमीक्षेत ॥ आर्द्रवृक्षासंभवे तु सारशकलानि द्व्यंगुलत्र्यंगुलानि तनूनि चतुर्गुणांभसाऽऽप्लाव्यातपे त्रिरात्रं स्थापयेत् ॥ ततस्तान्युद्धृत्यान्यानि तत्र प्रक्षिपेत् ॥ त्रिरात्राच्च पुनरन्यानि ॥ एवं नवरात्रेण त्रिःप्रक्षेपेणोद्धारेण च स्वरसः परिकल्पितो भवति ॥ फलानां पुनर्वीरुदोषधीनां च यंत्रेणोलूखलेन वा निष्पीड्य स्वरसं गृह्णीयात् ॥ परिशुष्काणां तु चूर्णीकृतानामाढकमाढकमुदकस्याहोरात्रस्थितं विमृदितपूतं स्वरसवत्प्रयोज्यं ॥ तुवरकभल्लातकादीनां पुनः पृथगेवोपदेशः ॥ वृक्षास्तुवरकानाम पश्चिमार्णवतीरजाः ॥ वीचीतरंगविक्षोभमारुतोद्धूतपल्लवाः ॥ तेभ्यः फलान्याददीत सुपक्वान्यंबुदागमे ॥ मज्ज्ञः फलेभ्यश्चादाय शोषयित्वाऽवचूर्णयेत् ॥ तिलवत्पीडयेद्द्रोण्यां क्वाथयेद्वा कुसुंभवत् ॥ तत्तैलं संभृतं भूयः पचेदासलिलक्षयात् ॥ अवतार्य करीषेषु पक्षमात्रं निधापयेत् ॥ स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य तं ततः ॥ चतुर्थभक्तांतरितः प्रातः पाणितलं पिबेत् ॥ मंत्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ मज्जासार महावीर्य सर्वान्धातून्विशोधय ॥ शंखचक्रगदापाणिस्त्वामा-

१ अमृता पथ्या धात्री जीवंती श्रेयसी स्थिरा युक्ता ॥ मंडूकपर्ण्यतिरसा स्थापयति पुनर्नवा च वय इति महाकषायसंग्रहोक्ताः ॥

ज्ञापयतेऽच्युतः ॥ तेनास्योर्ध्वमधस्ताच्च दोषा यांति सकृत्ततः ॥ सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥ पंचाहानि पिबेत्तैलमित्थं वर्ज्यान्विवर्जयेत् ॥ पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥ तदेव-खदिरक्काथे त्रिगुणे साधु साधितं ॥ निहंति पूर्ववत्पक्षं पिबेन्मासं-सुयंत्रितः ॥ तेनाभ्यक्तशरीरस्तु कुर्वन्नाहारमीरितं ॥ भिन्नस्वरं रक्त नेत्रं शीर्णांगं कृमिभक्षितं ॥ अनेनाशु प्रयोगेण साधयेत्कुष्ठिनं नरं ॥ सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना ॥ पक्षं मांसरसाहारं करोति द्वि शतायुषं ॥ तदेव नस्ये पंचाशद्दिवसानुपयोजितं ॥ वलीपलितनि-र्मुक्तं स्थिरस्मृतिकचद्विजं ॥ वपुष्मंतं श्रुतिधरं करोति त्रिशतायु-षं ॥ अंतर्धूमं तस्य मज्जा सुदग्धः क्षिप्तस्तैले सैंधवं चाग्निवर्णे ॥ तुल्यं हन्यादर्मनक्तांध्यकाचान्नीलीरोगं तैमिरं चांजनेन ॥ एकां-तरं तौवरकं च तैलं पिबेद्धिताशी नियमेन मासं ॥ प्रभिन्नकुष्ठो गलितांगदेशस्त्वचं त्यजेत्सर्पइवाशु जीर्णां ॥ साधयेत्षोडशगुणे स-लिले तुवराढकं ॥ अष्टांशशेषे विस्राव्य संक्षुद्योदूखले ततः ॥ शुष्कारग्वधकल्कपादरजसा व्यामिश्रितं कल्कितं तस्य क्काथजलै-रुदुंबरसमान् छायाविशुष्कान् गुडान् ॥ कुर्यादेकमतश्च सार्द्धमथवा गोवारिणाऽऽलोडितं कुष्ठी तद्दिवसं स्थितो निरशनः सूर्ये गतेऽस्तं पि-बेत् ॥ तावदेव च तथैव च भूयः पाययेत्तमरुणोदयकाले ॥ अप्य-जीर्णमविचिंत्य वमिं वा भेषजं पुरुषदोषबलज्ञः ॥ मध्यान्हेऽद्याद्भूरि निष्पावतैलं कंडूकारं शिग्रुकंदोपदंशं ॥ दध्ना युक्तं स्वल्पसिंधूत्थचूर्णं गव्येनानु स्तोकतक्रानुपायी ॥ तैलाक्तगात्रो दिवसांतरं च कंग्विष्टि-काचूर्णकृतप्रघर्षः ॥ स्नायात्सुखांभोभिरमद्यमांसस्त्रीसंगतिः स्यात्त्रिगु-णं च योगात् ॥ उपयुज्य योगमखिलं प्रतिदिनमेव द्विकालमभियुक्तः ॥ कुष्ठीकुष्ठमपोहति विशीर्णकर्णौष्ठनासमपि ॥ अथ भल्लातकान्यनुप-

हृतान्यनामयान्यापूर्णरसप्रमाणवीर्याणि पक्कजांबवप्रकाशानि शुक्रे-[1]
शुचौ वा मासे संगृह्य यवपल्ले माषपल्ले वा निधापयेत् ॥ तानि चतुर्मा-
सस्थितानि सहसि[2] सहस्ये वा मासे प्रयोक्तुमारभेत ॥ शीतस्निग्धम-
धुरोपस्कृतशरीरः पूर्वं दशभल्लातकान्यापोथ्याष्टगुणेनांभसा साधयेत्
॥ तेषां रसमष्टभागावशिष्टमनुष्णं सपयस्कं सर्पिर्गंडूषाभ्यक्तोष्ठतालु-
जिव्हः प्रातः प्रातः पिबेत् ॥ एवमेतानि दश भल्लातकान्येकैकोत्क-
र्षापकर्षणात्त्रिंशत्प्रयोज्यानि ॥ विधिनाऽनेन साहस्रं प्रयोगस्त्रिगुणश्च
कालो घृतक्षीराभ्यां शालिषष्टिकमशनमेवं विशेषाद्विगतकुष्ठदुर्नामक-
कृमिप्रमेहमेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण॥पूर्वमेव च भ-
ल्लातकक्काथं सपयस्कं पिबेदेकैकं च भल्लातकमभिवर्द्धयेत् ॥ यावत्पं-
च ॥ ततः पंचपंच वर्द्धयेद्यावत्सप्ततिः ॥ प्राप्य च सप्ततिमपकर्षये-
त् ॥ भूयः पंचपंचयावत्पंचपंचभ्यश्चैकैकं विधिनाऽनेन सहस्रं प्रयोग
इत्यादि समानं पूर्वेण ॥ सप्ततिवच्च शतमुपयुंजीत ॥ तथा च सहस्र-
द्वयं प्रयोग इत्यादि समानं पूर्वेण ॥ द्विगुणस्त्वायुषः कालः ॥ भल्ला-
तकानां जर्जरीकृतानां पिष्टस्वेदनं[3] पूरयित्वा भूमावाकंठनिखातस्य
स्नेहभावितस्य दृढस्योपरि कुंभस्यारोप्योडुपेनापिधाय कृष्णमृदवलिप्तं
गोमयाग्निनोपस्वेदयेत् ॥ तेषां यः स्वेदरसः कुंभं प्रपद्येत तमष्टभाग-
मधुसंप्रयुक्तं द्विगुणितघृतमद्यात् ॥ त्रिगुणश्च कालो घृतक्षीराभ्यामि-
त्यादि समानं पूर्वेण ॥ अनेनैव विधिना भल्लातकस्वरसं गृहीत्वा केव-
लमेव मासमेकं प्रयुंजीत त्रिगुणः कालइत्यादि समानं पूर्वेण ॥ मस-
सि मासि वर्षशतमायुषोऽपि वृद्धिः ॥ एवं दशमासानुपयुज्य वर्षसह-
स्रमायुर्भवति ॥ भल्लातकतैलपात्रं सपयस्कं मधुकाक्षपात्रेण शतपा-

---

१ शुक्रे ज्येष्ठे ॥ शुचौ आषाढे ॥ ज्येष्ठे शुक्रः शुचिस्त्वयं ॥ आषाढे इत्यमरः ॥ २ सहसि मार्गशीर्षे ॥ सहस्ये पौषे ॥ मार्गशीर्षे सहा मार्गआग्रहायणिकश्च सः ॥पौषे-तैषसहस्यौ द्वावित्यमरः ३ पिष्टं शालिचूर्णं स्विद्यतेऽस्मिन्निति पिष्टस्वेदनं भांडमित्यरुणदत्तः

कमुपयुंजीत ॥ त्रिगुणश्च काल इत्यादि समानं पूर्वेण ॥ भल्लातकतैलं कृष्णतिलतैलं सर्पिरामलकरसोऽसनादिसारकषाय इत्येषां द्रोणं द्रोणं त्रिफलात्रिकटुकविडंगसारचित्रकहरिद्राद्वयत्रिवृद्दंतीद्रवयष्टीमधुविषातिविषारसांजनप्रियंगूनां पालिका भागास्तदैकध्यं स्नेहपाकविधिना विपाच्यावतार्य परिपूर्य चानुगुप्तं निदध्यात् ॥ तत उपस्कृतशरीरः प्रातः प्रातः पाणिशुक्तिमात्रं क्षौद्रेण प्रतिसंयोज्योपयुंजीत ॥ जीर्णे मुद्गामलकयूषेणाल्लवणेन सर्पिष्मता खदिरोदकसिद्धं मृदुमोदनमश्नीयात् ॥ खदिरोदकेनोदककार्यंकर इत्येवमतोद्रोणमुपयुज्य विगतकुष्ठदुर्नामेत्यादि समानं पूर्वेण ॥ पुष्टानि पाकेन परिच्युतानि भल्लातकान्याढकसंमितानि ॥ घृष्ट्वेष्टिकाचूर्णकणैर्जलेन प्रक्षाल्य संशोष्य च मारुतेन ॥ जर्जराणि विपचेत्कलशेऽपां पादशेषधृतगालितशीतं ॥ तद्रसं पुनरपि श्रपयेच्च क्षीरकुंभसहितं चरणस्थे॥ सर्पिः पक्कं तेन तुल्यप्रमाणं युंज्यात्प्रस्थं शर्कराया रजोभिः ॥ एकीभूतं तत्खजक्षोभणेन स्थाप्यं धान्ये सप्तरात्रं सुगुप्तं ॥ तममृतरसपाकं यः प्रगे प्राश्यमश्नन्ननुपिबति यथेष्टं वारि दुग्धं रसं वा ॥ स्मृतिमतिबलमेधासत्वसारैरुपेतः कनकनिकषगौरः[1] सोऽश्नुते दीर्घमायुः ॥ सहामलकशुक्तिभिर्दधिसरेण तैलेन वा गुडेन पयसा घृतेन यवसक्तुभिर्वा सह॥तिलेन सह माक्षिकेण पललेन सूपेन वा वपुष्करमरुष्करं परममेध्यमायुष्करं॥ भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ॥ भवंत्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ कफजो न स रोगोऽस्ति न विबंधोऽस्ति कश्चन ॥ यन्न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदं ॥ वातातपविधानेऽपि विशेषेण विवर्जयेत् ॥ कुलत्थदधिशुक्तानि तैलाभ्यंगाग्निसेवनं ॥ पंचाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ॥ रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ तिस्रस्तिल-

[1] कनकनिचयगौर इति पाठः

स्त्वस्तु पूर्वाह्णे भुक्त्वाऽग्रे भोजनस्य च ॥ पिप्पल्यः किंशुकक्षार-भाविता घृतभर्जिताः ॥ प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ॥ दश वृद्ध्या दशाहानि दश पैप्पलिकं दिनं ॥ वर्द्धयेत्पयसा सार्द्धं त-थैवापनयेत्पुनः ॥ जीर्णौषधश्च भुंजीत षष्टिकं क्षीरसर्पिषा ॥ पि-प्पलीनां प्रयोगोऽयं सहस्रस्य रसायनं ॥ पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ॥ शीतीकृता मध्यबलैर्वीक्ष्य दोषान्प्रयोजयेत् ॥ तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥ एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥ यक्ष्ममेहग्रहण्यर्शःपांडुत्वविषमज्वरान् ॥ घ्नंति शोफं वमिं हिध्मां प्लीहानं वातशोणितं ॥ विडंगचूर्णं यष्टी-मधुकचूर्णयुक्तं शीततोयेन मासमुपयुंजीत ॥ जीर्णे मुद्गयूषेणाल-वणेन सघृतमोदनमश्नीयात् ॥ तेन विशेषाद्विगतकृमिदुर्नामकुष्ठप्र-मेह मेदोदोषो वर्षशतमजर इत्यादि समानं पूर्वेण ॥ विडंगचूर्णं क्षौ-द्रभल्लातकक्काथाभ्यां मध्वामलकरसाभ्यां गुडूचीक्काथेन ॥ एतांश्च-तुरो योगान्मासमुपयुंजीतेति समानं पूर्वेण ॥ सर्वेषु च मासि मासि वर्षशतं वर्षशतमायुषो वृद्धिः ॥ अलंबुषां स्वेन रसेन भावितां पृथक् पृथक् क्षीरमधूष्णवारिभिः॥ पिबेत्तथा कांजिकतक्रमस्तुभिर्भगंदरोरु ग्रहकासवान्नरः॥उष्णा विपाके कटुका कषायमधुरा रसे॥अत्यर्थं दी-पनी मेध्या वातश्लेष्महरा च सा॥वर्षोपयोगात् कुरुते नरं वर्षशतायुषं॥ दृढेंद्रियानलबलं निर्वलीपलितामयं ॥श्वेतावल्गुजफलान्यातपशुष्का-णि चूर्णयित्वा तत्तुल्यगुडेन संक्षुद्य घृतकुंभे धान्यराशौ सप्तरात्रं निद-ध्यात्॥ततोऽनुदिते भास्वति यथाबलमात्रं सुखोदकानुपानमुपयोज-येत्॥जीर्णे शीतांबुपरिषिक्तः शालिषष्टिकौदनं सशर्करेण पयसाऽश्नी-यात्॥तस्य मासप्रयोगाद्विशेषेण विगतकुष्ठो ग्रहणधारणवान् वर्षशतम-जर इत्यादि समानं पूर्वेण ॥ प्रयोगाच्चोर्ध्वं द्विगुणपरिहारः ॥ बाकुचि-

१ भगंदरोरुग्रहगुल्मकासवानिति पाठः

काकर्षचूर्णं सुखांबुना पिबेत् ॥ पीत्वा चातपे निर्वातोष्णेन वा गर्भगृहे तिष्ठेदपराण्हे तद्वदेव स्नानमशनं यूषरसाभ्यां वा तस्य त्रिःसप्तरात्रोपयोगाद्विगतकुष्ठइत्यादि समानं पूर्वेण ॥ त्वग्रोमकेशदशननखांस्तुमुक्त्वा पुनर्नवाँल्लभते ॥ स्वरवर्णबलोत्साहं नवंवयो नष्टपलितं च ॥ पलानि दश बाकुच्या दशैव च फलत्रयात् ॥ सप्त कृमिघ्नादयसस्त्रीणि द्वे गिरिसंभवात् ॥ पुरपुष्करमूलाभ्यामाहरेत पलं पलं ॥ सूक्ष्मैलार्द्धपलं व्योषघनकेसरकुंकुमं ॥ रोध्रत्वक्पत्रयष्ट्याव्हचित्रकं कार्षिकं पृथक् ॥ भल्लातकानां च शतं सर्वं खंडसमांशकं ॥ चूर्णयेदथ तन्मात्रा भक्षयेत्पालिकीं परां ॥ यथेष्टचेष्टो लभते वर्षाद्रासायनान् गुणान् ॥ सर्वान् रोगान्विजयते त्वग्विकारान्विशेषतः ॥ अर्शोभगंदरश्वासकासपार्श्वामयकृमीन् ॥ गुल्मप्लीहाश्मरीवर्ध्मप्रमेहारुचिपीनसान् ॥ मंदानलत्वं कृशतां शोफग्रंथ्यर्बुदानपि ॥ बाकुचिकाफलानि गोमूत्रे सप्तरात्रं वासयेत् ॥ ततो निस्तुषीकृत्य छायायां शोषयित्वा सुसूक्ष्मं च संचूर्ण्य त्र्यहं त्र्यहं क्रमशो भावयेत्त्रिफलाक्काथेन कारवेल्लीवासाब्राह्मीगुडूचीभृंगराजस्वरसैः पृथक् पृथक् खदिरासनराजवृक्षपिचुमंदक्काथैः॥तस्य पीतः प्रतिदिनं धात्रीफलरसाप्लुतः ॥ कर्षः सर्वामयान्हंति त्वग्विकारं विशेषतः ॥ असनखदिरयूषैर्भाविता सोमराजीं मधुघृतशिखिपथ्यालोहचूर्णैरुपेतां ॥ शरदमवलिहानः पारिणामान्विकारांस्त्यजति मितहिताशी तद्वदाहारजातान् ॥ तीव्रेण कुष्ठेन परीतमूर्तिर्यः सोमराजीं नियमेन खादेत् ॥ संवत्सरं कृष्णतिलद्वितीयां ससोमराजीं वपुषाऽतिशेते॥ ये सोमराज्या वितुषीकृतायाश्चूर्णैरुपेतात्पयसः सुजातात् ॥ उद्धृत्य सारं मधुना लिहंति तक्रं तदेवानु पिबंति चांते ॥ कुष्ठिनः शीर्यमाणांगास्ते जातांगुलिनासिकाः॥भांति वृक्षा इव पुनः प्ररूढनवपल्लवाः ॥ खदिरांभसा पिबेद्वा रविसेवी तया यवागूं वा ॥ गायत्रीजलसिद्धां कुष्ठी न तोयकार्यकरः

गजलिंडक्षारयुता तत्क्षारस्नायिनो विलेपिभुजः ॥ श्वित्राणि सोमराजी प्रसह्य हन्यात्प्रलेपाच्च ॥ गोमूत्रे सप्तरात्रं शशिशकलमयोवासितं पेषयित्वा कुर्याच्छायाविशुष्कं पृथगिति च पलं प्रापुनाटं च शुष्कं ॥ अंशस्ताभ्यां तथांऽशः कृमिरिपुदहनस्फोटकघ्नः स चूर्णो गोमूत्रेणोपयुक्तः प्रमितहितभुजः श्वित्रमाश्वेव हंति ॥ इक्षुरगोक्षुरसिंहीव्याघ्रीपंचांगुलांबुना पीता ॥ उपलेपनं घनं वा रसाशिनां हंति बाकुचिका॥ उष्णोदकेन पिष्टा पीता घृतमिश्रिता जयेद्गुल्मं ॥ लघुपंचमूलसिद्धां पेयामुपयोजयेज्जीर्णे ॥ कटुंगकुटजयूषैरर्शांसि भगंदरं च नाशयति ॥ मेहान्मद्यैर्निगदैर्निषेविता बाकुची प्रबलान् ॥ विष्किररसेन पीता दशमूलरसेन वा गुडूच्या वा ॥ अपतंत्रकं निहन्यादायामं वा रसान्नभुजः ॥ जठरे प्रपिबेन्मूत्रैर्जलोदरे त्रैवृतेन यूषेण ॥ शोफे पांडुव्याधाववल्गुजं सीध्वरिष्टसंयुक्तं ॥ इक्षुरकादिक्वाथैर्वर्ध्मनि मूत्रेण वा गवां शस्ता ॥ धारोष्णेन तु पयसा युक्ता शोफज्वरौ हंति ॥ उष्णांबुना प्रयोज्या लूताकीटाखुसर्पदष्टेषु ॥ कृमिहरचतुरंगुलयोः क्वाथैः कोष्णैः कृमिणकोष्ठे ॥ लेखामिंदोः सघृतां सुखांबुना पुत्रिणी भवति पीत्वा ॥ पुष्पोदये ऽश्वगंधाशृतेन पयसा च भुंजाना ॥ वंध्याऽपि सप्ताहमिमं प्रयोगं करोति या हर्षवती सुगंधी ॥ प्रियंवदा च व्रतशौचयुक्ता सूते सुतान् सा नियमाद्गुणाढ्यान् ॥ स्निग्धैरुष्णैर्मधुरैर्हरति गदान्वातजान् युता पैत्तान् ॥ तिक्तमधुरकषायैः कफजांस्त्रिफलारसमधुभ्यां ॥ इति शमनी धन्येयं विषधरभूतोपसर्गपाप्मघ्नी ॥ गेहे स्थिताऽपि रेखा चांद्रमसी किमुत कोष्ठस्था ॥मनुष्यमप्यागतमृत्युशासनं प्रनष्टबुद्धींद्रियमल्पचेतसं ॥ अवल्गुजा मोक्षयते महाभयाच्छ्रियं च मेधां च ददाति पुष्कलां ॥ हैमवत्या वचायाः पिंडमामलकमात्रं पयसाऽऽलोड्य पिबेत् ॥ जीर्णे पयःसर्पिरोदनइत्याहारः ॥ एवं सप्तरात्रेण मेधावी भवति ॥ सप्ततिसप्तरात्रैः

श्रुतधरो वर्षशतमजर इत्यादि समानं पूर्वेण ॥ तच्चूर्णं क्षौद्रसर्पिर्भ्यां यथाबलमवलिह्याज्जीर्णे पय इत्यादि समानं पूर्वेण ॥ वचाकल्कशतपाकं घृतद्रोणमुपयुज्य विशेषाद्ग्रहोन्मादापस्मारगलगंडगंडमालाश्लीपदस्वरभेदविमुक्तः सर्वार्थेषु सिद्धिमान् पंचवर्षशतायुर्भवति॥शीतवर्षहिमदिग्धतनूनां स्तब्धभग्नकुटिलव्यथितास्थ्नां ॥ भेषजस्य पवनोपहतानां वक्ष्यते विधिरतो लशुनस्य ॥ राहोरच्युतचक्रेण लूनाद्ये पतिता गलात् ॥ अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ द्विजा नाश्नंति तमतो दैत्यदेहसमुद्भवं ॥ साक्षादमृतसंभूतेरल्पाग्रेः स रसायनं ॥ शीलयेल्लशुनं शीते वसंते च कफोल्बणः ॥ घनोदयेऽपि वातार्तः सदा वा ग्रीष्मलीलया ॥ मासः परोऽस्य रसकल्कनिषेवणाय स्वच्छंदमप्युपदिशंति विमर्दकैस्तु ॥ षण्मासमन्नविधिनानमुशस्तमाहुः पक्षप्रयोगमपिसाधुतरंरसोने॥स्निग्धशुद्धतनुः शीतमधुरोपस्कृताशयः ॥ तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः ॥ तस्य कंदान्वसंताते हिमवच्छकदेशजान् ॥ अपनीतत्वचो रात्रौ तिमयेन्मदिरादिभिः ॥ तत्कल्कस्वरसं प्रातः शुचितांतवपीडितं ॥ मदिरायाः सुरूढायास्त्रिभागेन समन्वितं ॥ मद्यस्यान्यस्य तैलस्य मस्तुना कांजिकस्य वा ॥ तत्कालएव वा युक्तं युक्तमालोच्य मात्रया ॥ तैलसर्पिर्वसामज्जक्षीरमांसरसैः पृथक् ॥ क्वाथेन वा यथाव्याधि रसं केवलमेव वा ॥ पिबेद्गंडूषमात्रं प्राक्कंठनाडीविशुद्धये ॥ प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ शीतांबुसेकः सहसा वमिमूर्च्छाययोर्मुखे ॥ शेषं पिबेत्क्रमापाये स्थिरतां गत ओजसि ॥ विदाहपरिहाराय परं शीतानुलेपनः॥ धारयेत्सांबुकणिकामुक्ताकर्पूरमालिकाः ॥ सहिमस-

१ राहोरमृतचौर्येणेत्यष्टांगहृदये पाठः २ साक्षादमृतसंभूतेर्ग्रामणीः स रसायनमित्यष्टांगहृदये पाठः ३ तिमयेत् क्लेदयेत्

लिलगर्भाचंद्रशुभ्रामृणाली कुवलयदलमाला हारयष्टीश्च लोलाः ॥ स्तनतटविनिविष्टाश्चारुगात्र्यो दधानास्तनुसरसविलिप्ता गाढमेनं स्वजेरन् ॥नलिनीदलतालवृंतवातैः प्रगलद्वारिलवैर्जलार्द्रया वा ॥दयिताः करपल्लवैश्च शीतैर्लशुनस्वेदकृतं क्लमं हरेयुः ॥कुडवोऽस्य परं मात्रा तदर्द्धं केवलस्य तु ॥ पलं पिष्टस्य तन्मज्ञः समभक्तं प्राक् च शीलयेत् ॥ रसोनकल्पो मृदुनौजसा हि संयुज्यमानः सहसा हि तस्य ॥ दाहातिसाराऽरतिचित्तनाशान्कुर्यादतस्तं त्वरितो न युंज्यात् ॥ जीर्णशाल्योदनं जीर्णं शंखकुंदेंदुपांडुरं ॥ भुंजीत यूषैः पयसा रसैर्वा धन्वचारिणां ॥ दीप्ताग्निर्मंडकान् खादेत्सर्पिर्मंडोपसेवनान् ॥ अखंडमंडलेंद्वाभान्निंडरीखंडमंडितान् ॥ राजिकासुक्तसंपर्कविनिर्वर्तितगौरवैः ॥ पिष्टिकाचूर्णधवलैर्वधैः सौकरकैर्युतान् ॥ मद्यमेकं पिबेत्तत्र तृट्प्रबंधे जलान्वितं ॥ गंधमत्तक्कणदलि प्रियावक्त्रेंदुचोषितं ॥ अमद्यपो मस्तुफलाम्लतक्रमवंतिसोमं च सुगंधिशीतं ॥ सौवीरकं जांगलजं रसं वा कूपोदकं वा परिसितिथकं वा ॥ तत्कल्कं वा समघृतं घृतपात्रे खजाहतं॥स्थितं दशाहादश्नीयात्तद्वद्वा वसया समं ॥सद्यःपिष्टं सर्पिषा संयुतं वा निर्यासेन स्वेन युक्तं निकामं ॥ युंजीतैनं पूर्वकैरेव पानैः कोष्णांभोभिर्वैष कल्पोऽतिवीर्यः ॥ रसोनकल्कः सदृशाजसर्पिः षण्मासमुड्याभुषितो निहंति ॥ अभ्यंगपानांजननस्ययुक्तो नानाविकारान्विषमज्वरं च ॥ समतैलं ससुक्तं वा यवराशौ समास्थितं ॥ वातरोगान् जयेत्खादन् घृतमांसोत्तराशनः ॥ तैलसर्पिर्गुडसिताः पृथक्कुर्यात्पलोन्मिताः ॥ द्वे पले लशुनाच्छुद्धात्र्यूषणात् कुडवत्रयं ॥ पलं त्वचश्च तच्छ्लक्ष्णं निहितं घृतभाजने ॥ द्वे समे यवमध्यस्थं पूर्वस्मादधिकं गुणैः ॥ क्षुण्णां पिबेत्कंदतुलां तक्रस्य पलविंशतिः ॥ गते तु सप्तरात्रे तु तुलार्द्धमसितात्तिलात् ॥ धौतक्षुण्णात् पृथक्क्षौद्रगुडशुंठीचतुष्पलं ॥ अजाजीचव्यधान्यानि द्विकृष्णादी-

प्यग्रंथिकान् ॥ पलोन्मितांश्चतुर्जातात्पलमेकं सुचूर्णितं ॥ पृथक् पलाष्टकं तैलाहृतात् क्षुण्णाच्च सर्षपात् ॥ पटूनि पंच क्षारौ द्वौ दद्यात्तत्राक्षमानतः ॥ एकादशाहं तद्धान्ये स्थितमश्नन्प्रगे प्रगे ॥ गुणान् रासायनान्सर्वान् संप्राप्नोति निरामयः ॥ द्विपंचमूलनिक्काथे नल्वणे लशुनाढकं ॥ पिष्टं पर्युषितं वर्षं हंति वातकफामयान् ॥ तत्कंदकल्कस्वरसे घृततैलं पृथक् पचेत् ॥ शीलयेच्च यथासात्म्यं दारुणानिलपीडितः॥नवनीतसमांशं वा खादेत्तत्कल्कमर्दिते ॥ विकंचुकप्राज्यरसोनगर्भान्सशूल्यमांसान्विविधोपदंशान् ॥ विमर्दकान्वा[1] घृतसुक्तयुक्तान्प्रकाममद्याल्लघु तुच्छमश्नन् ॥ कुस्तुंबरीजीरकभृष्टमुद्गसौवर्चलश्लक्ष्णरजोवकीर्णान् ॥ रसोनकंदांकुरपत्रचित्रैः सव्यंजनैर्नैकरसानुपानैः ॥ तत्कंदसिद्धान् क्रमशो यूषक्षीररसान् पिबेत् ॥ कफपित्तानिलाशंकी यथास्वौषधसंस्कृतान् ॥ कृशोऽश्वगंधोद्भवचूर्णकीर्णं सन्नस्वरो यष्टिमधूपधानं ॥ तैलेन गुल्मी खदिरेण कुष्ठी खादेत् कृमिघ्नैः कृमिमान् रसोनं ॥ मांसादमांसैर्यक्ष्माणमर्शांसि कुटजत्वचा ॥ हंति स श्रेष्ठया मेहकासश्वासविलंबिकाः ॥ अन्नस्वरूपविज्ञानात् स्वरूपमुपलभ्य च ॥ यथायथं प्रयोगोऽस्य कार्यस्तं तं गदं प्रति ॥ लशुनस्वरसप्रस्थान्द्वात्रिंशत्तिलतैलतः ॥ द्वावपेतमलात्किण्वादष्टौ पिष्टाच्च षड्यवात् ॥ मेषशृंगीभवात्काथाद्रोणयुग्मं च शीतलात् ॥ स्नेहपात्रे तदैकध्यं निदध्याच्चशुचौ दृढे ॥ क्रमात्तत्र पुनर्दग्धात्पिष्टात्पात्रचतुष्टयं ॥ पश्चात्परमियं पेया सुरा वातविकारिभिः ॥ त्रिरात्रमुषितं क्षुण्णं लशुनं खादयेत्ततः ॥ क्षीरदध्याज्यमथितं ब्राह्मणस्यापि शस्यते ॥ पित्तरक्तविनिर्मुक्ते समस्तावरणाहृते ॥ शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परं ॥ सुखात्मनां विशेषेण प्रयोज्यो लशुनोद्भवः[2] ॥ नारदेनोद्धवस्यैष वातभग्नस्य

---

१ तुच्छमल्पमश्नन् भुंजानः २ कंद इति शेषः

कल्पितः ॥ आमांबुपानेक्षुविकारमत्स्ययानाध्ववातातपभाष्यचिंताः ॥ स्वप्नं दिवा जागरणं निशासु पिष्टं व्यवायं दधि चात्र नेच्छेत्॥ स्नेहकल्कविधानेन स्नेहयुक्तं प्रयोजयेत्॥लशुनं स्नेहसंयोगाद्गरीयान् जायते हि सः ॥ पित्तकोपभयादंते युंज्यान्मृदु विरेचनं ॥ रसायनगुणानेवं परिपूर्णान्समश्नुते ॥ प्रियांबुगुडदुग्धस्य मांसमद्याम्लविद्विषः ॥ अतितिक्षोरजीर्णं च रसोनो व्यापदे ध्रुवं ॥ पांडूदरोरःक्षतशोफतृष्णापानात्ययच्छर्दिविषव्रणेषु ॥ पैत्ते विकारेऽक्षिगदेऽतिसारे क्षामे शरीरे च स वर्जनीयः॥शीलितएव करोति दुरापं वन्हिशरीरबलं सममेव ॥ वाङ्मतिरूपगुणाढ्यसुतेशं स्त्रीपुरुषस्य च बीजविशुद्धिं ॥अमृतकणसमुत्थं यो रसोनं रसोनं विधियुतमिति खादेच्छीतकाले सदैव॥ स नयति शतजीवी स्त्रीसहायो जरांतं कनकरुचिसवर्णो नीरुजस्तुष्टपुष्टः॥ लशुनानंतरं वायोः पलांडुः परमौषधं ॥ साक्षादिव स्थितं यत्र शकाधिपतिजीवितम् ॥ यस्योपयोगेन शकांगनानां लावण्यसारादिव निर्मितानां ॥ कपोलकांत्या विजितः शशांको रसातलं गच्छति निर्विदेव ॥ स्निग्धांगत्वं गौरता कांतिमत्ता वन्हेर्दीप्तिर्वर्ष्मपुष्टिर्वृषत्वं ॥ संप्राप्यंते यंत्रणोद्वेगमुक्तैर्यस्याभ्यासाद्दीर्घमायुः सुखं च ॥ अन्याहारे शीलितो दीर्घरात्रं बल्यश्चक्षुस्तर्पणः स्थैर्यकारी ॥ तैस्तैर्योगैर्योजितोऽयं पलांडुस्तानातंकान्देहिनामुच्छिनत्ति॥रसं रसोनवत्तस्य पीत्वाऽश्नीयात्तथैव च ॥ सबीजपूरस्वरसं मदिरामधुसीधुपः ॥ मरकतमणिनीलं नालमस्याति हृद्यं परिणतशशिगौरं यच्च बीजं सुपिष्टं ॥ ससुरससुमुखाभ्यां प्राश्य मासं सशुक्तं मृदुधवलसुवृत्तैर्मंडकैरार्द्रमूर्तिः ॥ बहुशः शोभितं शुभ्रैः शशांकशकलोपमैः ॥ घारिकेंडरिकावल्लैः क्षीरोदावयवैरिव ॥ यवमुद्गमाषगोधुमबहुविधविकारकल्पितान् भक्ष्यान् ॥ कांबलिकरागषांडवसट्टकखलकान्सफलसारान् ॥ पटुसुरभिमधुरगंधान्वलाक्षकधवलबहुलरसान्॥खर्जूरदाडिमसिताद्राक्षापानानुपोऽभ्यसेन्नि-

त्यं ॥लभते बलवर्णौजोवीर्यस्वरसौमनस्यतेजांसि ॥ क्षीणशक्रुद्रुधिरोऽपि च रसोनवत्तद्रसं पीत्वा ॥ सुरासुरैः क्षीरसमुद्रमंथनोद्गतास्तदा येऽमृतबिंदवः पुरा ॥ बभूव तेभ्यः किलकुक्कुटी यया व्रजंति देवत्वमिवाद्य मानुषाः ॥ कुक्कुटांडनिभैः कंदैः किंचित्कटुकपिच्छिलैः ॥ स्निग्धैर्मरकतच्छायैः खर्जूरसदृशच्छदैः ॥ निखिलरोगहराऽपि विशेषतो जयति दारुणमप्यनिलामयं ॥ गुदजगुल्मतमोविषनाशिनी जनयति स्थिरतां वपुषः पुरा ॥ कुटीं प्रविश्य तत्कंदान् भक्षयेद्घृतभर्जितान् ॥ पयोऽनुपाने धारोष्णं तत्रेष्टमसनांबु वा ॥ तन्मात्रवृत्तिस्तु भवेद्दशाहं विंशत्यहं स्वादुभुगप्रमादी ॥ जत्रूर्ध्वकोष्ठत्रिकसंधिवातं . पार्श्वामयार्शस्तिमिराणि जित्वा ॥ वलीपलितनिर्मुक्तः स्थिरकेशद्विजश्रुतिः ॥ मेधामतिस्मृतियुतो जीवेद्वर्षशतद्वयं ॥ आपूर्यमाणचंद्रप्रतिपदमारभ्य वर्द्धयेत्कंदं ॥ एकैकं घृतभृष्टं प्राक्भुक्तं पथ्यभुक् खादेत् ॥ भुंजीताल्पतरं दिनां*घनमृषिपक्षक्षयेद्भक्षयनृक्षीरं बीजकवारि तक्रमथवा पीत्वा स्थितिं कल्पयेत् ॥ मासं प्राश्य तथा नखद्विजकचैः शीर्णोत्थितैः कांतिमान् जीवत्यब्दशतत्रयं धृतिमतिस्मृत्यादिभिर्भूषितः ॥ क्षीरेण कंदचूर्णं पिबन्यवागूं च परिणते मासं ॥ लवणस्नेहविहीनां दृढदृग्जीवेद्द्वितीयशतिं ॥ तिमिरं क्षौद्रघृताभ्यां पथ्यभुजस्तद्रसो जयेन्मासात् ॥ कंदत्रयं च भृष्टं घृतेन वा भक्षितं वातान् ॥ तत्कंदसूक्ष्मरजसा त्रिभागगोधूमचूर्णमिश्रेण ॥ पयसा पक्त्वा खादेद्घृतपूरानंत्रवृद्धिहरान् ॥ त्रीन् कंदकांश्च निशि भक्षयिताज्यभृष्टान् धात्रीफलांबु संसितच्छगलीपयो-वा ॥ पेयं दृगामयजयाय निषेवितव्या कामं च रोगशमनाय फलार्थिभिः सा ॥ क्षीरान्विता कंचुकिमूलकंदा समाष्टपत्रा सितरक्तकांडा ॥ बिभर्ति या पल्लवशब्दशब्दान् सा कंचुकी श्वेतवपुर्वरेण्या॥आषाढे कार्तिके वाऽपि तत्कंदः शीतले स्थितः ॥ अंगुष्ठपर्वद्वयसंपिष्टः

क्षीरपलाष्टके ॥ कुटीप्रावेशिकं पीत्वा क्षीरमेव पिबेदनु ॥ क्षीरमेव च जीर्णेऽपि पेयां वा स्नेहभर्जितां ॥ किंचिदुष्णाम्ललवणां स्पृशेदुष्णांबुनोदितं ॥ एकेन सप्तरात्रेण कुष्ठान्येवं नियच्छति ॥ सर्वव्याधीन् द्वितीयेन तृतीयेन तु सर्पवत् ॥ त्यक्त्वा त्वचं ततो जीर्णो केशदंतनखानपि ॥ मेधावी रूपवान् जीवेत्पंचवर्षशतानि वा ॥ कंचुकीकंदचूर्णं वा स्वेन क्षीरेण भावितं ॥ गोक्षीरकुडवे न्यस्तं सर्वं खंडपलान्वितं ॥ पीतं सर्वामयान् हंति नखकेशास्थितानपि ॥ पीतं तत् स्वरसं चूर्णं तस्या मधुसमन्वितं ॥ खादन् हिताशी सप्ताहं त्वग्दोषं तिमिरं जयेत् ॥ विडंगताप्यत्रिफलालोहकांचुकिजं रजः ॥ सप्तरात्रत्रयं लिह्याज्जितात्माससितामधु ॥ क्षीरेण भोजनं जीर्णे शालेर्लावरसेन वा ॥ तथाऽस्य काचतिमिरं सरुच्छ्राः शिरसो गदाः ॥ मेधाविनः प्रणश्यंति गात्रं सुप्तं च बुध्यते ॥ एष सप्तामृतश्चूर्णः सर्वव्याधिषु पूजितः ॥ पलं चूर्णस्य कांचुक्याः क्षीरप्रस्थं समावपेत् ॥ स्नेहजग्धं ततो लिह्याज्जितात्मा ससितं मधु ॥ शालेरन्नं पयःपानं मासमेवं प्रयोजयेत् ॥ चतुर्गुणपरीहारः षोडशाब्दसमद्युतिः ॥ शतानि पंचवर्षाणि जीवेद्देववदूर्जितः ॥ पचेत्पलानि द्रोणेऽपां कांचुक्याः पलविंशतिः ॥ अष्टांशशिष्टे तु घृतात्प्रस्थं क्षीरसमं पिबेत् ॥ शंखपुष्पीवचाकुष्ठत्रिवृतामरदारुभिः ॥ वरायष्टीसिताद्राक्षामहिषाक्षैः पलांशकैः ॥ युक्तैः कमलकिंजल्कत्रैफलेन हिमेन च ॥ क्षौद्राच्चतुष्पलं दद्यात्तद्ददंत्यमृताह्वयं ॥ चक्षुष्यं बृंहणं मेध्यं बल्यं वृषं शतत्रयं ॥ अष्टौ पलानि कंचुक्यास्त्रीणि लोहात् सुचूर्णितात् ॥ पलाशबीजाच्चत्वारि दश द्वे च पलत्रयं ॥ अष्टादश शतावर्या बीजकस्यैकविंशतिः ॥ जीवंत्याः षोडशैकध्यं पौर्णिमास्यां विपाचयेत् ॥ वहेऽपां पादशेषेण पृथगद्वाढकेऽपि च ॥ पचेत्कांजिकमस्तुभ्यां घृतप्रस्थं पिचून्मितैः ॥ शताह्वारुष्करवचाकुष्ठैलाबिडहिंगुभिः ॥ सौव-

चलान्वितैः पद्मकेसराच्च त्रिभिः पलैः॥ पंचभिः पद्मबीजानां पद्मद्वादशकेन च ॥एतत्सोमामृतं पीत्वा यत्सोमोऽद्यापि राजते ॥ इदमुपयुज्य सर्पिरतिवीर्यमुदारगुणं भवति सुवाक् सुधीः सदृढवाक् सुबलः सुभगः ॥ग्रहगरकोपसर्पविषभीभिरधृष्यवपुर्विजितजराज्वरो नयति वर्षशतद्वितयं ॥ दानवेंद्रविजितान् पुरा सुरान् भ्रष्टकांतिधृतिधैर्यतेजसः ॥ वीक्ष्य विष्णुरमृतं किलासृजद्गुग्गुलं बलवपुर्जयप्रदं ॥ अद्याप्यतः सुरगणाः किल धूपमुख्यान् हित्वा वरागुरुतुरुष्कहिमेंदुदर्पान् ॥ निर्दह्यमानवपुषोऽपि शिवां पिबंतो गंधेन तस्य मुदिता दधति प्रसादं ॥ संयोगवाही स शिवः सशार्वः सर्वर्तुसेव्यः सुखशीलनीयः ॥ हंता जरापाप्ममलामयानां कर्ताऽग्निमेधास्मृतिपाटवानां॥ गंधोत्कटः स दाहे स्निग्धद्रवपिच्छिलो विगतशल्यः ॥ महिषाख्यः पुष्परागस्फटिकसितनीरजच्छायः ॥ यः पद्मरागरागो यः कनकच्छेदपाटलो यो वा ॥ जयतींद्रनीलममलं भग्नेप्यतिकांतिमत्वेन ॥ ज्येष्ठः प्रयोगोऽस्य तुला पलान्नैवाधिकं पिबेत् ॥ आत्रेयमुनिगीतश्च मंत्रोऽयं सर्वकर्मकृत् ॥ भगवान् पुंडरीकाक्षो देवाश्च सपुरंदराः ॥ आज्ञापयंति सम्यक् त्वां प्रभावं चादिशंति ते ॥ जरामरणदुःखेभ्यो यथा तेऽभ्युत्थिताः सुराः ॥ उपयोक्तुस्तथैवास्य भव त्वं हि महाबल इति ॥ पंचमूलस्य महतः क्वाथेन हिमभोजनात्॥गुग्गुलुः शीलितो हंति सर्वान्वातकफामयान् ॥ लघीयसोऽपि तद्वच्च सुखोष्णेन जलेन वा॥मस्तुधान्याम्लमद्यैर्वा वचादेः सलिलेन वा ॥ वरणादेस्तु बाधिर्यं दंतकर्णशिरोरुजः ॥ स्वरभेदोदरश्वासवर्ध्मांतर्गुल्मविद्रधीन् ॥ वातपित्तास्ररोगेषु बृंहणार्थीनि चेष्यते ॥ क्वाथेन वाजिगंधाया जीवनीयगणस्य वा॥ क्वाथेनोत्पलमृद्वीकारक्तचंदनजन्मना॥वातपित्तं निहंत्येष पद्मकादिगणस्य वा॥चव्यकुष्ठविडंगानां यवान्या नागरस्य वा॥प्रसारण्याश्च तोयेन गुग्गुलुः कफवातजित् ॥त्र्यूषणाग्निघनवेल्लवराभिर्भक्षयन् समघृतं म-

हिषाक्षं॥आशु हंति कफमारुतमेदोदोषजान्बलवतोऽपि विकारान् ॥ पटोलनिंबत्रिफलागुडूचीगायत्रिरात्रिद्वयबीजकानां ॥ क्वाथैः पृथक् पथ्यरसस्य हंति मासेन घोरान् कफपित्तरोगान्॥विशेषाच्छोषवीसर्प-दुष्टव्रणभगंदरान् ॥ शुक्रार्त्तवमनोदोषप्रमेहश्वित्रपांडुताः॥ पटोला-रिष्टनिर्यूहपिष्टस्तुल्यरसांजनः ॥ गलरोगापचीव्यंगग्रंथिस्थौल्यकृमि-प्रणुत् ॥ शिलाजतुसमः पीतः पयसा वातशोणितं॥ निवर्त्तयत्यति-बलं क्षीरमांसघृताशिनः ॥ रसेन पयसा मूत्रैर्वातपित्तकफापहः ॥ ब्राह्मीमंडूकिशंखानां पृथङ्मेधादिकृद्रसैः ॥ मागधिकाग्निकलिंगविडं-गैर्बिल्वधृतैः सवचापलषट्कैः ॥ गुग्गुलुना सदृशेन समेतैः क्षौद्रयुतैः सकलामयनाशः ॥ पिबेत्पलशतं योऽस्य विधिना नियतो यतिः ॥ नाकालमृत्युर्न व्याधिर्न तस्य जरसो भयं ॥ कल्पयेदोषधैः स्वैः स्वै-र्व्याधिष्वामयनाशनैः ॥ शिलाजतुविधानं तु गुग्गुलौ सर्वमिष्यते ॥ गु-णनिधिरपि कुर्यात्सोऽतिमात्रोपयुक्तस्तिमिरवदनशोषक्लीबताकार्श्यमे-हान् ॥ [1]शमलशिथिलभावं देहरौक्ष्यं च तस्माद्रजनिचरनिषेवी स्या-न्न रोगेष्वमीषु ॥ ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमंति यत् ॥ हेमा-दिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥ सर्वदोषप्रशमनं सर्वरोगविना-शनं ॥ शिलाभ्यो यच्च यज्जातं धातोस्तत्तद्गुणं वदेत् ॥सर्वं च तिक्तक-टुकं नात्युष्णं कटुपाकतः ॥ छेदनं तु विशेषेण लौहं तत्र प्रशस्यते ॥ गोमूत्रगंधि कृष्णं गुग्गुलवाभं विशर्करं मृत्स्नं ॥ स्निग्धमनम्लकषायं मृदु गुरु च शिलाजतु श्रेष्ठं ॥ रास्नादशमूलबलापुनर्नवैरंडशुंठिमधुका-नां ॥ क्वाथेन भावितं तद्विशेषतो वातरोगघ्नम् ॥ द्राक्षाभीरुपटोली-त्रायंतिगुडूचिजीवनीयानां ॥ निर्यूहेण सुभिन्नं शस्तं पित्तामये सुतरां ॥ कृमिजिद्वचाफलत्रयकरंजघनमुख्यपंचमूलानां ॥ सह पंचकोलकानां क्वाथेन कफामये भाव्यं ॥ लघुपंचमूलशुंठीद्राक्षा-

१ शमलं शकृदित्यमरः

काश्मर्यवाजिगंधानां ॥ सगुडूचिशरबलानां रसेन पित्तानिलगदेषु ॥ घनकुष्ठवचात्रिफलासुरदारुविडंगपंचकोलानां ॥ रजनीमरिचातिविषासहितानां वातकफजेषु ॥ पाठापटोलनिंबत्रिफलाघनकुटजसप्तपर्णानां ॥ त्रायंत्यमृतातिविषासहितानां पित्तकफजेषु ॥ निचयेऽपि दोषबलतो योगानेतान्विकल्प्य युंजीत ॥ विविधगणसंग्रहोक्तैस्तैस्तैश्च गणैर्गिरेः सारं ॥ व्याधिव्याधितसात्म्यं समनुसरन् भावयेदयःपात्रे ॥ प्राक्केवलजलधौतं शुष्कं काथैस्ततो भाव्यं ॥ समगिरिजमष्टगुणिते निःक्वाथ्यं भावनौषधं तोये ॥ तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेद्गिरिजं ॥ तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ॥ स्वैः स्वैरेवं काथैर्भाव्यं वारान् भवेत्सप्त ॥ अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितं ॥ त्र्यहं युंजीत गिरिजमेकैकेन तथा त्र्यहं ॥ फलत्रयस्य यूषेण पटोल्या मधुकस्य च ॥ योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥ शिलाजमेवं देहस्य भवत्यत्युपकारकं ॥ गुणान् समग्रान्कुरुते सहसा व्यापदं न च ॥ एकत्रिसप्तसप्ताहं कर्षमर्द्धपलं पलं ॥ हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः ॥ संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाव्हयं ॥ युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥ क्षीरेणालोडितं कुर्याच्छ्रीघ्रं रासायनं फलं ॥ हन्याद्रोगानशेषांश्च जीर्णे हितमिताशिनः ॥ व्यायामातपमारुतचेतःसंतापगुरुविदाह्यादि ॥ उपयोगादपि परतो द्विगुणं परिवर्जयेत्कालं ॥ कुलत्थान्काकमाचीं च कपोतांश्च सदा त्यजेत् ॥ पिबेन्माहेंद्रमुदकं कौपं प्रास्रवणांबु वा ॥ ज्वरी ज्वरघ्नांबुदपर्पटादिक्काथेन रक्ती मधुयष्टिकायाः ॥ शोषी रसैः क्रव्यभुगामिषोत्थैर्मायूरमांसैः पयसा च कार्श्ये ॥ मध्वंबुना मेदसि संप्रवृद्धे क्षीरेण प-

१ वक्ष्यमाणेन.

र्यांकुलबुद्धिसत्वः ॥ पांड्वामयार्तोवुदरे सशोफे पिबेच्छिलाजं महिषीजलेन ॥ अश्म वीरतराद्येन कुष्ठं खदिरवारिणा ॥ विषं विषघ्नैरगदैर्हंत्येवं तद्यथामयं ॥ शैलजत्रिकटुक्षौद्रक्षौद्रधातून्निषेवते ॥ क्षीरौदनाशी यो जीर्णे यक्ष्मणा स न बाध्यते ॥ सुभावितां सारजलैस्तुलां पीत्वा शिलोद्भवात् ॥ सारांबुनैव भुंजानः शालिं जांगलजैरसैः ॥ व्यपोह्य मधुमेहाख्यमंतकं रोगसंकरं ॥ वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ शिलाह्वात्षोडशपलं त्रिस्त्रिरेकत्र भावयेत् ॥ वराया दशमूलस्य गुडूच्याः कर्कटस्य च ॥ बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि ॥ क्षीरे सकृत्क्रमेणैवं ससकृत्वस्तथा पुनः ॥ काकोलियुग्मघनपुष्करवन्हिरास्नामेदायुगर्द्धिचविकागजपिप्पलीनां॥ पाठार्द्विजीवकनिकुंभविदारियुग्मवीरावरीमधुफलांशुमतीद्वयानां ॥ पलिकानां तु द्रोणे सिद्धानां पादशेषिते क्वाथे ॥ भावितमित्थं गिरिजं द्विपलैश्चूर्णीकृतैर्युंज्यात् ॥ कर्कटशृंगीधात्रीव्योषैस्तालीसकुडवेन ॥ चूर्णपलेन विदार्याःक्षीरविदार्याश्च कर्षयुग्मेन ॥ द्विपलेन चतुर्जातात्तैलघृतक्षौद्रशर्कराभिश्च ॥ द्विपलाभिर्द्विगुणाभिः कुर्याद्गुलिकास्ततोऽक्षसमाः ॥ ताः शुष्के नवकुंभे जातीपुष्पाधिवासिते स्थाप्याः ॥ तासामेकां खादेत्प्रतिदिनमनुपानमत्रेष्टं ॥ क्षीररसदाडिमांभोमार्द्वीकसुरासवान्यतमं ॥ जीर्णेऽन्नं लघु भोज्यं यूषपयःपिशितनिर्यूहैः ॥ सप्ताहमात्रमेवं सर्वान्नीनः क्रमाद्भवेत् परतः ॥ भुक्तस्यांते प्राग्वा गुलिका न विरुध्यते चैषा ॥ निरपाया भूरिफला ऽपरिहारसुखोपयोजिता जयति ॥ प्रबलमपि वातशोणितमूरुस्तंभं ज्वरं दीर्घं ॥ भगमूत्रशुक्रदोषप्लीहयकृत्पांडुहृद्रोगान् ॥ वर्त्मवमिगुल्मपीनसहिध्माकासारुचिश्वासान् ॥ विद्रधिमुदरं कुष्ठं श्वित्रं षांढ्यं क्षयं मदं मूर्च्छां ॥ उन्मादमपस्मारं मुखनेत्रशिरोगदांस्तांस्तान् ॥ आनाहमतीसारं हलीमककामलाग्रहणिरोगान् ॥ ग्रंथ्यर्बु-

दान् सपिटिकान् भगंदरं गंडमालां च ॥ अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीपदं गुदकीलान् ॥ दंष्ट्राविषं समूलं गरप्रयोगांस्तु घोरांश्च ॥ अभिचारमरातिकृतं दुःस्वप्नं भौतिकीं तथा बाधां ॥ पाप्मालक्ष्मीं चेयं गुलिका शमयेच्छिवा नाम ॥ वृष्याऽऽयुष्या धन्या कांतियशःश्रीविबोधिनी मेध्या ॥ कुरुते नृपवल्लभतां जयं विवादे च वक्त्रस्था॥ विजितखलतिवलिपलिता जीवयति सुखं शतद्वयं शरदां ॥ वर्षद्वयं प्रयोगाद्वर्षशतचतुष्टयं जीवेत् ॥ नसोऽस्ति रोगो भुवि साध्यरूपो जत्वश्मजं यं न जयेत्प्रसह्य ॥ तत्कालयोगैर्विधिवत्प्रयुक्तं स्वस्थस्य चोर्जां विपुलां दधाति ॥ अमरमंदिरमंदरसंभवाद्दशपलं गिरिजादुपयोजय ॥ यदिजरामयदुःखविवर्जितां सुचिरमिच्छसि जीवितसंततिं ॥ दशगुणमुपयुक्तं यः शतं शैलजाताल्लघुहितमितभोजी वर्जयन्वर्जनीयान् ॥ सततसमनुषक्तान्वर्जितान्वैद्यवृंदैर्विधमति स गदौघान्प्रेक्षते चायुषोऽतं ॥ समुद्भवामृतमंथनोत्थः स्वेदः शिलाभ्योऽमृतवद्गिरेः प्राक् ॥ यो मंदरस्यात्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी ॥ सुवर्णशैलप्रभवो विष्णुना कांचनो रसः ॥ तापीकिरातचीनेषु यवनेषु च निर्मितः ॥ ताप्यां सूर्यांशुसंतप्तो माधवे मासि दृश्यते ॥ मधुरः कांचनाभासः साम्लो रजतसन्निभः ॥ किंचित्कषायउभयः शीतः पाके कटुर्लघुः ॥ शिलानिर्यासवच्चात्र कुलत्थादीन् परित्यजेत् ॥ न तन्निषेवी जरसाऽभिभूयते न पन्नगैर्नापि गरैर्न वृश्चिकैः ॥ न पांडुमेहज्वरशोफयक्ष्मभिर्न कंठनेत्रश्रवणत्वगामयैः ॥ स्वादुस्तिक्तो माक्षिकधातुः सघृतो वा सक्षौद्रो वा क्षौद्रसिताभ्यां सहितो वा ॥ सांभस्को वा तैलयुतो वा विनिहंता त्वग्दोषाणां सर्वविषाणां सगराणां ॥ अक्षद्राक्षाऽयोमलमुस्तामलकानां सव्योषाणां पर्वतनिर्यासयुतानां ॥ दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं लिह्यात्पांडुव्याध्यभिभूतः शिवमिच्छन् ॥ अंशः शुंठ्या लोहमलांशो बदरांशः

पिप्पल्यंशो माक्षिकधातुर्द्विगुणांशः ॥ क्षौद्रैकांशः कृष्णतिलानामपि चांशः श्रेष्ठा पिंडी पांडुविकारश्वयथुघ्नी ॥ सायश्चूर्णं माक्षिकधातुं मधुमिश्रं व्योषोपेतं पर्वतनिर्यासमेतं ॥ क्षीराहारश्चावलिहानः प्रयतात्मा मृत्युद्वारं शोषमपोहत्यचिरेण ॥ लोहं सर्पिर्माक्षिकधातुं मधुमिश्रं धात्रीचूर्णं केसरमंबुप्रभवानां ॥ योगः कुर्याच्चैव सिताभागविमिश्रश्चक्षुर्घ्राणश्रोत्ररसज्ञानवबोधं॥कृत्वैकस्थं माक्षिकधातुं त्रिफलां च भ्राष्ट्रे पक्त्वाऽऽज्यैः सह पिष्टं विलिहंति ॥ पथ्यादास्तान्बाधकदोषा न भजंते मातुर्दोषास्तन्यनिवृत्तानिव बालान् ॥ समश्नतो माक्षिकधातुचूर्णं सर्पिर्मधुभ्यां त्रिफलारजश्च ॥ शनैः शनैर्याति जरा विनाशं प्रत्यंतवासादिव लोकयात्रा ॥ त्रिकोणकांडासुबहुप्रताना फलेषु पीता कुसुमेषु रक्ता ॥ पत्रैः सुदिग्धैर्मृदुरोमवद्भिस्तांबूलयुक्तैर्घनकंदमूला ॥ पवनविवस्वदंशुवनितादिभिरासजराविविधमनःशरीरगदद्वंदनिवृत्तकरी ॥ भुवि परमौषधीमहिषवल्लिरितिप्रथिता क्वचिदपि वृद्धदारक इयं त्वपि वेल्लरिका॥वसंते संगृहीतानां शोषितानामनातपे ॥ वृद्धदारकमूलानां तुलां संचूर्ण्य सर्पिषा ॥ आप्लाव्य घृतपात्रस्थां धान्ये पक्षमुपेक्षितां ॥ लिह्यादनु पिबेत्क्षीरं जीर्णे क्षीरघृताशनः ॥ तत्प्रयोगाज्जराजीर्णो वृद्धो दारकतामियात् ॥ भग्नास्थिगद्गदः पंगुः श्यावो ऽह्रस्वोऽन्यरूपतां ॥ निरस्ताशेषदोषोत्थनखभेदाद्युपद्रवः ॥ अपस्मारगरोन्मादपाप्मालक्ष्मीविवर्जितः ॥ दीप्ताग्निर्बलवान्वाग्मी जीवेद्वर्षशतानि षट् ॥ चूर्णितैरश्वगंधायाः संयुतं त्रिंशता पलैः ॥ तत्तुल्यं दारकं प्राश्य पयसा सर्पिषाऽथवा ॥ जीर्णे पूर्ववदश्नीयाद्यो जीवेत्स समाः शतं ॥ वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः ॥ अश्वगंधेन संयोज्यौ वरीगोक्षुरकौ पृथक् ॥ यो लिह्यात्सर्पिषा चूर्णं वृद्धदारकमूलजं ॥ सप्ताहं यूषभक्ताशी स्यात्स किन्नरतुल्यवाक् ॥ स्वरसेन शतावर्याः सप्ताहं भावितं च तत् ॥ लिहानः

पूर्ववन्मासं शतं जीवेन्महामतिः ॥ लिह्याद्वा मधुसर्पिर्भ्यां धात्रीस्वर-
सभावितं ॥ क्षीरेण वा पिबन्मासं शतं जीवेदरुक् सुखी ॥ वृद्धादार-
कमूलानां रसं क्षीरेण यः पिबेत् ॥ तत्कल्कसिद्धं सर्पिर्वा स जीवेन्नी-
रुजः शतं ॥ पीतं वेल्लरिकामूलं गोमूत्रेण सहोषितं ॥ कुष्ठगुल्मोदरग-
रश्लीपदक्षशोपचीर्जयेत् ॥ पिप्पलीत्रिफलादार्वीमहौषधपुनर्नवाः ॥ पृ-
थग्दशपलाः सर्वतुल्यांशो वृद्धदारकः ॥ धान्याम्लपीतस्तच्चूर्णो जीर्णे
स्वच्छंदभोजनः ॥ स दुष्टवातान् हंत्याशु गुल्मोदरगरादिकान् ॥ शौं-
डीविश्ववराद्वीपिवेल्लमुस्ताः समांशकाः ॥ तुल्यवेल्लरिकामूलाः साज्य-
क्षौद्रांस्तथागुणाः ॥ तत्पलं स्वरसात्कर्षं लिहंस्तुल्याज्यमाक्षिकं ॥ ग-
व्यं पिबेदनुपयो माहिषं वा यथेष्टभुक् ॥ पंचाहेन जयेत्कासान्सप्ता-
हेन त्वगामयान् ॥ महाकुष्ठानि मासेन भवेन्मासद्वयेन तु ॥ पंचवर्ष-
शतायुष्को धीमेधाबलवर्णवान् ॥ वेल्लरीफलमूलाभ्यां पिप्पल्याश्च स-
मं रजः ॥ वेल्लरीफलमूलोत्थस्वरसेनैव भावयेत् ॥ अमृताया रसेनानु
ततः शुष्कं घृताप्लुतं ॥ निखनेद्धृतकुंभस्थं करीषे बहुसंचये ॥ मासा-
दुद्धृत्य तं लेहं यो वर्षमुपयोजयेत् ॥ सहस्रायुः स जरसा सह-
सा नाभिभूयते ॥ कृष्णाचूर्णतुलां क्षौद्रा* घृतं च द्वितयान्वितं ॥
धान्यराशौ दिनशतं निहितामुपयोजयेत् ॥ सुसंधिकायो दृक्श्रो-
त्रस्वरवर्णो ऽप्यतींद्रियः ॥ गतव्याधिजरो जीवेत्सप्तवर्षशतानि च ॥
कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः ॥ अतोऽन्यथा तु ये ते-
षां सूर्यमारुतिको विधिः ॥ वातातपसहा योगा वक्ष्यंते ऽतो विशे-
षतः ॥ सुखोपचारा भ्रंशेऽपि ये न देहस्य बांधकाः ॥ शीतोद-
कं पयः क्षौद्रं घृतमेकैकशो द्विशः ॥ त्रिशः समस्तमथवा प्राक्-
पीतं स्थापयेद्वयः ॥ हरीतकीमागधिकाक्षधात्रीश्चूर्णीकृता लोहरजो-
विमिश्राः ॥ सर्पिर्मधुभ्यामदतः शरीरं कालाग्रदूती न जरा दु-
नोति ॥ हरीतकीमागधिकाविडंगशशांकलेखामलकच्छवीनां ॥ सि-

तोपलातैलघृतान्वितानां गदा न लेढारमभिद्रवंति ॥ त्रिफलामसनोदकेन पिष्टां रजनीपर्युषितामयःकपाले ॥ मधुना मधुरां लिहन्निहंति स्थविमानं जरसं गदांश्च सर्वान् ॥ खदिरासनयूषभावितायास्त्रिफलाया घृतमाक्षिकप्लुतायाः ॥ नियमेन नरा निषेवितारो यदि जीवंत्यरुजः किमत्र चित्रं ॥ असनस्वरसेन भावितानामभयानां सविडंगतंदुलानां ॥ मधुलोहरजोघृतप्लुतानां न हि लेढारमभिद्रवंति रोगाः ॥ बीजकस्य रसमंगुलिहार्यं शर्करामधुघृतं त्रिफलां च ॥ शीलयत्सु पुरुषेषु जरत्ता स्वागताऽपि विनिवर्त्ततएव ॥ दर्वीप्रलेपस्त्रिफलाकषायः सितोपलातैलमधुप्रगाढः ॥ सपिप्पलीनागरलोहरेणुस्तनोः सपत्नीं जरसं निहंति ॥ फलत्रयं त्र्यूषणचूर्णयुक्तं द्राक्षां ससर्पिर्मधुशर्करांच ॥ क्षीरानुपानां पुरुषा लिहंतो जीवंति निर्धूतजराविकाराः ॥ हरीतकीं सर्पिषि संप्रताप्य समश्नतस्तत्पिबतो घृतं च ॥ भवेच्चिरस्थायि बलं शरीरे सकृत्कृतं साधु यथा कृतज्ञे ॥ आसंधितानां कलशं पुराणं धात्रीफलानां मधुनश्च चूर्णं ॥ संवत्सरार्द्धं निहितं यवेषु निषेवमाणो जरसं निहंति ॥ धात्रीकृमिघ्नासनसारचूर्णं सतैलसर्पिर्मधुलोहरेणु ॥ निषेवमाणस्य भवेन्नरस्य तारुण्यलावण्यमविप्रनष्टं ॥ नवामलकशुक्तयो मधुघृतं रजश्चायसं चतुष्टयमयोघटस्थमतिचूर्णितं वत्सरं ॥ क्रमेण लिहतः पयोऽनुपिबतश्च पथ्याशिनश्चिरं भवति जीवितं क्षयमुपैति पृथ्वी जरा ॥ चूर्णं श्वदंष्ट्रामलकामृतानां लिहन्ससर्पिर्मधुभागयुक्तं ॥ वृषः स्थिरः शांतविकारदुःखः समाशतं जीवति कृष्णकेशः ॥ विडंगभल्लातकनागराणि येऽश्नंति सर्पिर्मधुसंयुतानि ॥ जरानदीं रोगतरंगिणीं ते लावण्ययुक्ताः पुरुषास्तरंति ॥ विडंगकल्कं स्वरसेन धात्र्याः क्षौद्रेण युक्तं च पिबन्नरो यः ॥ द्राक्षारसक्षौद्रपरिप्लुतं वा विजित्य रोगान् स भवेच्छतायुः ॥ चूर्णं समं मागधिकाकणानां विडंगचूर्णेन

सचित्रकेण ॥ निषेवमाणो मधुतैलमिश्रं वयःपरीणामजलेन मज्जेत् ॥ पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद्यः पयसाऽर्द्धमासं ॥ मासद्वयं तत्रिगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥ मूर्वाबृहत्यंशुमतीबलानामुशीरपाठासनसारिवाणां ॥ कालानुसार्यागुरुचंदनानां वदंति पौनर्नवमेव कल्पं ॥ शतावरीकल्ककषायसिद्धं ये सर्पिरश्नंति सिताद्वितीयं ॥ तान् जीविताध्वानमपि प्रपन्नान्न विप्रलुंपंति विकारचौराः॥पीताऽश्वगंधा पयसाऽर्द्धमासं घृतेन तैलेन घृतांबुना वा॥कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथांऽबुवृष्टिः ॥दिने दिने कृष्णतिलप्रकुंचं समश्नतां शीतजलानुपानं॥ पोषः शरीरस्य भवत्यनल्पो दृढीभवंत्यामरणाच्च दंताः ॥ शिलाजतुक्षौद्रविडंगसर्पिर्लोहाभयापारदताप्यभक्षः ॥ आपूर्यते दुर्बलदेहधातुस्त्रिपंचरात्रेण यथा शशांकः ॥ मधुमधुरसालज्जाभार्ङ्गीमधूकशतावरीकमलकुसुमत्वक्क्षीरिभिः समं जतु पार्वतं ॥ प्रचुरहविषा लेहं लीढ्वा समृद्धसितोपलं शिथिलजरसो मंदातंका भवंति चिरायुषः ॥ गायत्रीशिखिशिंशिपासनशिवावेल्लाक्षकारुष्करान् पिष्ट्वा ऽष्टादशसंगुणेंऽभसि धृतान् खंडैः सहायोमयैः ॥ पात्रे लोहकृते त्र्यहं रविकरैरालोडयन् पाचयेदग्नौ चानु मृदौ सलोहशकलं पादस्थितं तत्पचेत् ॥ पूतस्यांशः क्षीरतोंऽशस्तथांऽशौ भार्ङ्गीनिर्यासाद्वौ वरायास्त्रयोंऽशाः ॥ अंशाश्चत्वारश्चेह हय्यंगवीनादेकीकृत्यैतत्साधयेत् कृष्णलोहे ॥ विमलया सितया मधुनाऽथवा युतमयुक्तमिदं यदि वा घृतं ॥ स्वरुचिभोजनपानविचेष्टितो भवति ना पलशः परिशीलयन् ॥ श्रीमान्निर्धूतपाप्मा वनमहिषबलो वाजिवेगः स्थिरांगः केशैर्भृंगांगनीलैर्मधुसुरभिमुखो नैकयोषिन्निषेवी ॥ वाङ्मेधाधीसमृद्धः सुपटुहुतवहो मासमात्रोपयोगाद्धत्तेऽसौ नारसिंहं वपुरनलशिखातप्तचामीकराभं ॥ हविरिदमतिप्रभावं स्वमिववपुर्निर्मितं नृसिंहेन ॥ नश्यंति यतो भीता-

व्याध्यादिजरासुरा दूरात् ॥ भृंगप्रवालानमुनैव भृष्टान्घृतेन यः खादति यंत्रितात्मा ॥ विशुद्धकोष्ठोऽसनसारसिद्धं दुग्धानुपस्तत्कृतभोजनार्थः ॥ मासोपयोगात्स सुखी जीवत्यब्दशतत्रयं ॥ गृह्णाति सकृदप्युक्तमविलुप्तस्मृतींद्रियः ॥ अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ॥ तानेवाप्नोति स गुणान्कृष्णकेशश्च जायते ॥ काश्मर्याणां तुलां मासं स्थितां मधुघृतोषितां ॥ उपयुज्य पयोन्नाशी चिरंजीवति कांतिमान् ॥ उक्तानि शक्यानि फलान्वितानि युगानुरूपाणि रसायनानि ॥ महानुशंसान्यपि चापराणि प्राप्त्यादिकष्टानि न कीर्तितानि ॥ अमानुषाणामपि विस्मयानां तत्कर्मणां यद्यपि तानि हेतुः ॥ समूलकाषं तु कषंति देहं भ्रंशाद्विधेस्तानि विवर्जितानि ॥ युगप्रभावाद्यदि चौषधीनां क्रियासु शक्तिः परिकल्प्यतेऽल्पा ॥ आयुर्बलादिष्वपि सा तथेति यत्नान्निषेव्याणि रसायनानि ॥ न चौषधीनामपि सर्वथैव प्रभावहानिः परिशंकनीया ॥ फलं प्रयात्यूर्ध्वमधश्चिवृत्तु प्रत्यक्षतः कस्य न सिद्धमेतत् ॥ अदेशकालोपहितान्यसात्म्यान्यत्युष्णतीक्ष्णानि यथौषधानि ॥ नाशं नयंते सहसैव देहं सम्यक्प्रयुक्तानि तथैव वृद्धिं ॥ जित्वा तस्मादिंद्रियादीन्सुदुष्टान्कालोपेतः श्रद्दधानो यथावत् ॥ आयुःप्रज्ञातेजसां यच्च वृद्धौ वीर्योपेतं शीलयेदौषधं तत् ॥ उत्साहधीरैरपि सर्वकालं नरैरगम्यानि तपोदरिद्रैः ॥ महाकथानामपि दुस्तराणां पाराण्यपाराणि रसायनानां ॥ रसायनानामुपयोगसंपदा कृतप्रसादैः समदोषधातुभिः ॥ स्थिरं शरीरं क्रियते शरीरिणां कुलं यथा सत्पुरुषैरधिष्ठितं ॥ दांतेंद्रियेण शास्त्रार्थं यथावदनुतिष्ठता ॥ कियद्वा दीर्घजीवित्वं नेंद्रत्वमपि दुर्लभं ॥ रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ॥ यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनं ॥ अत्याक्रांता येऽम्लपटुक्षारकटूष्णैर्द्रव्यैस्तीक्ष्णैः सन्निहिता तेषु जरत्ता ॥ संधुक्ष्योऽग्निस्तै-

रुपजाते च विवर्जायोगास्तेऽग्नौ धातुसमृद्धेः स हि मूलं ॥ आयुर्योगाः साध्वपि युक्ता मृदुवन्हौ नैरर्थक्यं यांति कृतघ्नेऽप्युपकाराः ॥ दीप्ते वन्हौ ते च गुणौघैरपि तुच्छा विस्तीर्यंते पात्रविसृष्टा इव भोगाः॥ सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियं ॥ शांतं सद्वृत्तनिरतं विद्यान्नित्यरसायनं ॥ गवां मृदुत्वेन कृतानुकारैरनन्यवागाशयदेहचेष्टैः ॥ स्थिरेंद्रियायुर्ज्वलनैः सुशीलैः सुवृद्धगोपैः समधिष्ठितेषु ॥ प्राज्याज्यदुग्धौषधिपादपेषु हंभारवैर्वल्गिततर्णकेषु ॥ मठप्रवेशेन विनापि सिद्धिं व्रजंति गोष्ठेषु रसायनानि ॥ इति रसायनविधिर्नामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥

इतिसप्तमं रसायनाख्यमंगं संपूर्णं ॥ ७ ॥

अथातो वाजीकरणमध्यायं व्याख्यास्यामः ॥ वाजीकरणमन्विच्छन् सततं विषयी पुमान् ॥ तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितं ॥ अपत्यसंतानकरं यत्सद्यः संप्रहर्षणं ॥ वाजीवातिबलो येन यात्यप्रतिहतोंऽगनाः ॥ भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ॥ तद्वाजीकरणं तद्धि देहस्यौजस्करं परं ॥ सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता ॥ स्त्रियः साधु प्रसवते नरान् गुणमयानिह ॥ गोत्रवृद्धिकरा ह्येता गृहिण्यो गृहदेवताः॥गृहं हि हीनमेताभिर्न श्रीमदपि शोभते ॥ न तु ता अपि शोभंते जरसानुगता इव ॥ पुंयोगेन विना स्त्रीणां न हि संवननं परं ॥ वाजीकरणनित्यस्य कामं कामं सिषेविषोः ॥ न शरीरमवाप्नोति न वा रतिरतिः क्षयं ॥ अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ॥ यथैकश्चैकशाखश्च निरपत्यस्तथा पुमान् ॥ अदृष्टपुत्रपौत्रस्य कुलतंत्वनुवर्तिनः ॥ संसारसुखबाह्यस्य कीदृशं नाम जीवितं ॥ असंबंधो ह्यपुत्रस्य नित्यमेव परापरः ॥ सीदत्यस्यावसाने च गृहं

१ वाजीव येन समर्थः क्रियते तद्वाजीकरणं ॥ २ वशीक्रियासंवननमित्यमरः ॥

सुस्थेऽप्यनायकं ॥ अतो वाजीकरा योगा निषेव्याः शुक्रवर्द्धनाः ॥ कल्यस्योदग्रवयसो वाजीकरणसेविनः॥सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥ चिंताजराभ्यां शुक्रं तु व्याधिभिः कर्मकर्शनात् ॥ क्षयं गच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥ शुक्रक्षयाद्भयाच्छोकादविश्रंभादिसेवनात् ॥ अतिहर्षादतिस्थौल्यान्मलोपचयतः श्रमात् ॥ स्त्रीणामकौशलाद्दोषदर्शनादभिचारतः॥ मेढ्रामयात्तु महतः क्रोधतो मर्मकर्त्तनात् ॥ हृष्टस्यापि स्त्रियो गंतुं न शक्तिरुपजायते ॥ बृहच्छरीरा बलिनः केचिन्नारीषु दुर्बलाः ॥ संति चाल्पाश्रयाः स्त्रीषु बलवंतो बहुप्रजाः ॥ नराश्चटकवत्केचिद्व्रजंति बहुशः स्त्रियं ॥ गजवत्तु प्रसीदंति केचिन्न बहुगामिनः ॥ केचित्प्रयत्नैर्बोध्यंते वृषाः केचित्स्वभावतः ॥ तस्मात्प्रयोगान्वक्ष्यामि दुर्बलानां बलप्रदान् ॥ सुखोपयोगान्बलिनो भूयश्च बलवर्द्धनान् ॥ अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान् ॥ घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनां ॥ ततो वाजीकरान् योगांश्छुक्रापत्यबलप्रदान्॥ शरेक्षुकुशकाशानां विदार्या वीरणस्य च ॥ मूलानि कंटकार्याश्च जीवकर्षभकौ बलां ॥ मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीं ॥ अश्वगंधामतिबलामात्मगुप्तां पुनर्नवां॥ वीरां पयस्यां जीवंतीमृद्धिं रास्नां त्रिकंटकं ॥ मधुकं शालिपर्णीं च भागांस्त्रिपलिकान् पृथक् ॥ माषाणामाढकं चैतद्द्विद्रोणे साधयेदपां ॥ रसेनाढकशेषेण पचेत्तेन घृताढकं ॥ दत्वा विदारीधात्रीक्षुरसानामाढकाढकं ॥ घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ॥ वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्पलीं ॥ द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीं ॥ तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ शर्करायास्तुगाख्यास्तु पिप्पल्याः कुडवेन च ॥ मरिच-

१ कल्यस्य समर्थस्य

स्य प्रकुंचेन पृथगर्द्धपलोन्मितैः ॥ त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्रा-द्विकुडवेन च ॥ पलमात्रं ततः खादेत्प्रत्यहं रसदुग्धभुक् ॥ ते-नारोहति वाजीव कुलिंग इव हृष्यति ॥ माषात्मगुप्ताबीजानामा-ढकं प्रसृतोन्मितं ॥ मेदाश्वगंधाद्विवरीवीरायष्टीद्विजीरकं ॥ शूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत् ॥ विदारीक्षुरसप्रस्थद्वयेन सदृशेन च ॥ सर्वैः क्षीरेण हविषो नवात्प्रस्थं शृतेन च ॥ सिताक्षौद्रतुगा-ख्यानां पृथग्दद्याच्चतुष्पलं ॥ पलं कणा पुरोभुक्तं लिहंस्तत्पलपू-र्वकं ॥ तरुणीष्वतितृप्तासु प्रसभं रासभायते ॥ मेदादिभिश्च कर्षांशैः शृतं बाष्कयणं पयः ॥ सशर्कराक्षौद्रघृतं शुक्रवृद्धिकरं परं ॥ प-यसा पायसस्तेन माषकंडूकरीफलैः ॥ वृष्यो वेगकरः सिद्धः स-घृतक्षौद्रशर्करः ॥ श्वदंष्ट्राया विदार्याश्च रसे क्षीरचतुर्गुणे ॥ घृता-ढ्यः साधितो वृष्यो माषषष्टिकपायसः ॥ समूलिका माषपर्णी सि-ता शृंगाटकं यवाः ॥ स्वगुप्तामूलयष्ट्याह्वविदारीक्षुरकाः समाः ॥ सपियालाः कृताश्चूर्णं पृथङ्मध्वाज्यषड्गुणाः ॥ पादाभ्यामस्पृशेद्भूमिं लिहन्कोलमितः पिचुं ॥ लभते बलमुत्साहं स्त्रीश्चायाति कुलिंग-वत् ॥ स्वगुप्ताक्षीरकाकोलीविदारीजीवकद्वयं ॥ तिलान् सुलुंचि-तान् भृष्ट्वा शर्कराज्यमधुप्लुतं ॥ तच्चूर्णं प्रसृतं लीढ्वा गच्छति प्र-मदाशतं ॥ प्रसृतं माषचूर्णस्य धात्रीस्वरसभावितं ॥ विदारीरज-सो वाऽपि लिहन्मधुघृतद्रुतं ॥ क्षीरानुपश्चटकवद्दशकृत्वो व्रजेत्स्त्रि-यं ॥ चूर्णं विदार्या बहुशः स्वरसेनैव भावितं ॥ क्षौद्रसर्पिर्युतं ली-ढ्वा प्रमदा दश गच्छति ॥ कृष्णाधात्रीफलरजः स्वरसेनैव भावितं ॥ शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत् ॥ स नरो ऽशीतिवर्षो ऽपि युवेव परिहृष्यति॥कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितं ॥पयो-नुपानं यो लिह्यान्नित्यवेगः सदा भवेत्॥कुलीरशृंग्या यः कल्कमालो-ड्य पयसा पिबेत्॥सिताघृतपयोन्नाशी स नारीषु वृषायते॥धातुमांस-

रसक्षीरं क्षौद्रमिक्षुरसो घृतं॥द्विमेदाजीवकयुगक्काथश्चैकत्र योजितः॥ पीतः करोति पुरुषं प्रमदाशतगामिनं ॥ भल्लातकैश्चतुर्भिश्च दुग्धस्या द्धाढकं शृतं ॥ पीतं करोति वृषतां सुजीर्णस्यापि देहिनः ॥ स्वयंगु-प्तेक्षुरकयोर्बीजचूर्णं सशर्करं ॥ धारोष्णेन नरः पीत्वा पयसा रासभा-यते ॥ उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥ शूर्पपर्णीद्विका-कोलीजीवकर्षभकशृतं ॥ लघुना पंचमूलेन द्विकाकोलीयुतेन च ॥ पयोऽतिवृष्यमभ्यस्य वृद्धोऽपि तरुणायते ॥ क्षीरिणी च श्वदंष्ट्रा च फाणितं शर्करा मधु ॥ गृष्टिक्षीरं नवं सर्पिरेतत् पुंसवनं परं ॥ अ-श्वत्थपत्रमूलत्वक्तुंगासिद्धं पयो नरः ॥ पीत्वा सशर्करं शीतं कुलिंग इव वृष्यति ॥ पयः पयस्यया सिद्धं शुक्रकृत्साज्यमाक्षिकं ॥ शता-वरीकल्करसे पयोदशगुणं घृतं ॥ घृतं सपिप्पलीक्षौद्रशर्करं वृष्यमु-त्तमं ॥ शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयं ॥ प्रस्थं घृतस्य शुक्लां च द्राक्षामांसीपरूषकं ॥ जीवकर्षभयष्ट्याह्वबलामेदाकसेरुकं ॥ प्रिया-लबीजकाकोलीयुग्मं चैकत्र पाचयेत् ॥ पक्वपूते क्षिपेच्चास्मिन् कुड-वांशां सितोपलां ॥ गृष्टिक्षीरानुपः प्राश्य स नारीषु वृषायते ॥ वि-जयेत च वातास्रं पित्तास्रोरःक्षतक्षयान् ॥ जीवकक्षीरकाकोली-स्थिराहंसपदीघनैः ॥ शठीक्षुगंडिकायष्टीमृणालैः कार्षिकैः पिबेत् ॥ घृतप्रस्थं दशगुणे क्षीरे तद्बलपुष्टिकृत् ॥ वंध्यानां पुत्रजननं शुक्रव-र्द्धनशोधनं ॥ जलाढके स्वयंगुप्तामूलात्पंचपलं पचेत् ॥ पादशेषे तु-संचूर्ण्य कुडवांशाः पृथक् क्षिपेत् ॥ स्वगुप्तामूलगोधूममाषेक्षुरकपि-प्पलीः ॥ सपियाँलरसैः* क्षौद्रात्प्रस्थार्द्धं नवसर्पिषः ॥ सितोपलातु-लापादं कुर्यात्तान्मोदकांस्ततः ॥ मोदकं भक्षयित्वैकं षष्टिं व्रजति योषितां ॥ पलाशबृहतीव्याघ्रीपृश्निपर्णीत्रिकंटकान् ॥ द्व्याढकेनां-भसा पक्त्वा पादशेषे रसे स्थिते ॥ पलानि क्षीरकाकोल्याः पंच मा-

१ शुंगसिद्धमिति पाठः

गधिकापलं ॥ स्वगुप्ताफलमूलाभ्यां माषाणामिक्षुरस्य च ॥ विदार्या मधुनश्चात्र कुडवं कुडवं क्षिपेत् ॥ पृथग्द्वौ मुद्गतिलयोर्घृते शष्कुलिकास्ततः ॥ पचेदेकांततः प्राश्य शतं ब्रजति योषितां ॥ स्वगुप्ताढक चूर्णेन प्लुतेन पयसा कृताः ॥ घृते सशर्कराक्षौद्रा भक्ष्या वेगशतप्रदाः ॥ माषात्मगुप्तागोधूमशालिषष्टिकपैष्टिकान् ॥ शर्कराया विदार्याश्च चूर्णानीक्षुरकस्य च ॥ संयोज्य क्षीरसर्पिर्भ्यां घृते पूपलिकाः पचेत् ॥ पयोनुपानास्ताः शीघ्रं कुर्वंति वृषतां नरं ॥ चूर्णं माषात्तिलाच्छालेर्विदार्याश्च ससैंधवं ॥ रसेन पुंड्रकासेक्षोः प्लुतं वाराहमेदसि ॥ पक्वां शष्कुलिकां खादन्नारोहेत्षष्टिमंगनाः ॥ मुखप्रियाणां स्निग्धानां फलानां मधुरात्मनां ॥ फलानामात्मगुप्तायाः शालेर्माषात्तिलाद्घृतात् ॥ मुद्गाद्गोधूमतश्च स्यात्कुडवं कुडवं पृथक् ॥ चूर्णितैर्निस्तुषैस्तैस्तु क्षीरेणालोड्य मर्दितैः ॥ पक्वां पूपलिकां खादन्कुक्कवाकुरसानुपः ॥ मायूरं तैत्तिरं हांसमेवमेव रसं पिबेत् ॥ अनेनाश्व इवोदीर्णो बली लिंगं समर्पयेत् ॥ पिष्ट्वा वराहमांसानि दत्वा मरिचसैंधवं ॥ कोलवद्गुलिकाः कृत्वा तप्ते पयसि वर्त्तयेत् ॥ वर्त्तनस्तंभितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ॥ घृताढ्ये गंधपिशुने दधिदाडिमसारके ॥ प्रक्षिप्य साधयेद्युक्तां धान्यजीरकनागरैः ॥ पीतो युक्तश्च स रसः कुरुते शुक्रमक्षयं ॥ हंसबर्हिणदक्षांडान् भृष्टांस्तप्तेन सर्पिषा ॥ सुरानुपानान् यः खादेत्स तृप्तस्तर्पयेत्स्त्रियः ॥ आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभर्जिताः ॥ तप्ते सर्पिषि यः खादेत्स गच्छेत् स्त्रीषु न क्षयं ॥ घृतभृष्टान्न्यसेच्छागे रोहितान्फलसारके ॥ अनु पीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥ घृतं मांसात्सबस्तांडात् फलाम्ले माहिषे रसे ॥ मेदो वा साधयेत्पूतं तद्रसं भर्जयेद्घृते ॥ ईषल्लवणितं युक्तं धान्यजीरकनागरैः ॥ पीतः स वृष्यो बल्यश्च बृंहणश्च परं रसः ॥ चटकांस्तैत्तिरे तद्वत्तित्तिरीन् कौक्कुटे रसे ॥ कल्पयेच्छिखिनो हांसे हंसान्वा शिखिजे रसे ॥ तृप्तिं चटकमांसानां

गत्वा योऽनु पिबेत्पयः ॥ प्रभूतकालसंरुद्धाः संतर्पयति योषितः ॥ घृताक्तं कुक्कुटं शूल्यं शीतं खादेत्समाक्षिकं ॥ पिबेच्चानंतरं क्षीरं य इच्छेच्छुक्रमक्षयं ॥ पिप्पलीलवणैर्युक्तौ बस्तांडौ क्षीरसर्पिषा ॥ साधितौ भक्षयेद्यस्तु स गच्छेत्प्रमदाशतं ॥ बस्तांडसिद्धे दुग्धे तु भावितानसकृत्तिलान् ॥ यः खादेत् ससितान् गच्छेत्स स्त्रीशतमपूर्ववत् ॥ भुक्त्वा यो माषसूपेन घृताढ्यं षष्टिकौदनं ॥ पयः पिबति जागर्ति कृत्स्नां रात्रिं स वेगवान् ॥ आत्मगुप्ताफलं माषान् खर्जूराणि शतावरीं ॥ शृंगाटकानि मृद्वीकां पचेत्तत्प्रसृतोन्मितान् ॥ क्षीरप्रस्थं जलप्रस्थमेतत्क्षीरावशेषितं ॥ शुचिना वाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥ शर्करायास्तवक्षीर्याः सर्पिषोऽभिनवस्य च ॥ तत्पिबेत्क्षौद्रसंयुक्तं भुंजानः षष्टिकौदनं ॥ तथा जरापरीतोऽपि पुत्रैः संपरिवार्यते ॥ द्राक्षाखर्जूरखर्जूरीमस्तकान्युच्चटाफलं ॥ पयस्याभीरुमाषांश्च मधुकानि च साधयेत् ॥ तोयाढके पलांशानि पादशेषेण तेन च ॥ क्षीरप्रस्थं पचेत्क्षीरशेषेणाद्याहृतान्वितं ॥ षष्टिकान्नं सिताज्येन योगोयं शुक्रकृत्परं ॥ जीवकर्षभकौ मेदा जीवंती श्रावणीद्वयं ॥ खर्जूरं मधुकं द्राक्षा विदारी विश्वभेषजं ॥ शृंगाटकानि चपला नवं सर्पिः पयो जलं ॥ घृतावशेषं सिद्धं च शर्करामाक्षिकान्वितं ॥ षष्टिकौदनसंयुक्तमुपयोज्यं यथायथं ॥ तद्वृष्यं बलकृद्वर्ण्यं कंठ्यं देहस्य बृंहणं ॥ गृष्टिबष्कयणी नीरुगूर्ध्वशृंगी चतुःस्तनी॥ सांद्रस्वादुबहुक्षीरा रूपशीलसमन्विता ॥ इक्षुभिर्माषपर्णैर्न या सुतृप्ताऽर्जुनेन वा ॥ तत्क्षीरं ससिताक्षौद्रघृतं पुत्ररतिप्रदं॥शुक्लैर्जीवनीयाख्यैर्बृंहणैर्बलवर्द्धनैः॥वयःसंस्थापनैश्चैतत्पयः सिद्धं पृथक् पृथक् ॥ युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करं ॥ पर्यायेण प्रयोक्तव्यमिच्छता शुक्रमक्षयं ॥ मेदां पयस्यां जीवंतीं विदारीं कंटकारिकां ॥ माषान् श्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टि-

१ सकृत्प्रसूतागौर्गृष्टिरितिकोशः ॥ चिरप्रसूताबष्कयणीत्यमरः

कान् ॥ तत्क्षीराद्धौदके सिद्धान्कार्षिकानाढकोन्मिते ॥ विवर्जयेत् पयः सिद्धं तत्पूतं क्षौद्रसर्पिषा॥सितया च युतं पीत्वा वृद्धोऽपि तरुणायते॥ मंडलैर्जातरूपस्य सुतप्तैस्तत्पयःशृतं ॥ सिद्धं पुंसवनं वृष्यं ससिताघृतमाक्षिकं ॥ रूप्यायस्ताम्रसीसानामयमेव पृथग्विधिः ॥ चूर्णिताः पिप्पलीस्त्रिंशत्प्रकुंचैस्तैलसर्पिषोः ॥ भृष्टाः सशर्कराक्षौद्राः क्षीरेणालोडिताः पिबन्॥अश्नंश्च षष्टिकं क्षीरसर्पिभ्यां वाजिवद्भवेत् ॥ चंद्रांशुशुभ्रं पयसा घृताढ्यं षष्टिकौदनः ॥ शर्करामधुसंयुक्तं भुंजानो ना वृषायते ॥ दध्नः सरेण सघृतो भक्षितः षष्टिकौदनः ॥ सैलातुगोषणक्षौद्रशर्कराढ्येन शुक्रकृत् ॥ अध्यंडामार्षभीं चैव स्वयंगुप्ताफलानि च॥सिद्धश्चरणलेपोयं भुवं पद्भ्यां न तु स्पृशेत्॥ घृतक्षीराशनो निर्भीर्निर्व्याधिर्नित्यगो युवा ॥ संकल्पप्रबलो नित्यं नरः स्त्रीषु प्रजायते ॥ आत्मगुप्ताफलं माषा गोधूमः शालिषष्टिकं ॥ इक्षुरिः क्षुरिकः क्षीरं क्षौद्रं द्राक्षा सितोपला ॥ उच्चटाशरमूलानि विदारी सशतावरी ॥ जीवनीयानि खर्जूरं मोचचोचफलानि च ॥ एभिर्भक्ष्याणि पेयानि लेह्यानि च घृतानि च ॥ नित्यमासेव्यमानस्य स्त्रीषु हर्षो विवर्द्धते ॥ जीवनीयघृतक्षीरमधुतैलसितारसैः ॥ रसक्षीराशिनः क्षिप्रं वृषं कुर्वंति बस्तयः ॥ सिद्धबस्तिविकल्पोक्तान् बलशुक्रसुतप्रदान् ॥ युंजीत बस्तीन् पुत्रार्थी पुत्रकामोदितं च यत् ॥ यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनं ॥ मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ द्रव्यैरेवंविधैस्तस्माद्भावितः प्रमदां व्रजेत् ॥ आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ इष्टा ह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परं ॥ किं पुनः स्त्रीशरीरे ये संघातेन प्रतिष्ठिताः ॥ रुचिभेदेन लोकस्य दैवयोगाच्च योषितां ॥ तं तं प्राप्य विवर्द्धंते नरं रूपादयो गुणाः ॥ तस्माद्या यस्य हृदयं विशतीव वरांगना ॥

---

१ वृषायते इति पाठः

तुल्यस्वभावा या हारीमृजारूपगुणान्विता ॥ पाशभूतैर्विहृत्यंगैर्लावण्यमिव मूर्तिमत् ॥ आलपंत्यमृतेनैव या गात्राणि निषिंचति ॥ पिबंतीव च पश्यंती स्पृशंती लिंपतीव या ॥ नित्यमुत्सवभूता या या समानमनःशया ॥ नयत्युत्सुकतां चेतो नित्यं सन्निहिता च या ॥ यया विमुक्तो निःस्त्रीकमरतेर्मन्यते जगत् ॥ प्रगल्भा रतिसंग्रामे स्वस्था लज्जामयी च या ॥ बहुशोऽपि च यां गत्वा तत्पूर्वमिव गच्छति ॥ चरितैर्निर्विकारा या चरितैरिव निर्मिता ॥ कांतानुवृत्तिपरमा सा स्त्री वृषतमा मता ॥ अभ्यंजनोद्वर्तनसेकगंधस्रक्चित्रवस्त्राभरणप्रकाराः ॥ सुगंधिपुष्पोत्तररेणुकीर्णा मृदुर्मनोज्ञा विपुला च शय्या ॥ प्राज्ञा कलाज्ञा वशगा विनीता प्रियंवदा प्रीतिपरा वयस्या ॥ विश्रंभसत्वप्रकृतिक्रियैक्या शरीरमात्रेण पृथक् च भूता ॥ कांता वनांताः परपुष्टघुष्टा रम्याः स्रवंत्यः सततं स्रवंत्यः ॥ मद्यं यदामोदकरं विशेषाद्भृत्याः प्रसन्नाः सुरभिः प्रसन्ना॥वरांगनागंडतलाभिपांडु तांबूलपत्रं परिवारशोभि॥प्रसाधनं स्त्रीमुखपंकजानां यदायुधं मूर्तमिवात्मजस्य॥मंथाचलोद्धूनितदुग्धसिंधुसमुद्भवत्फेनचयावदातं॥सौधं सुधाशुभ्रतराः कराश्च चंद्रस्य कुर्वंति परं वृषत्वं॥ बंधेन पूर्वां पहितेन पुंसः खिन्नस्य वृत्तिःकरणांतरेण ॥ संवाहनं स्पर्शसुखं करैश्च करोत्यपूर्वामिव मन्मथेच्छां ॥ सांयोगिकाधिकरणोदितचित्रचेष्टासंशीलनोद्भवदनल्परसार्द्रचित्तः ॥ वृष्योपभोगपरिवृंहितदेहधातुर्नारीमनांसि वशमानयति प्रसह्य ॥ तस्मान्नित्यं स्त्रीषु वांछन्प्रियत्वं वृष्यैर्योगैर्जातकामोऽपि कामी ॥ सत्वं सात्म्यं देशकालौ च बुध्वा चातुःषष्टे चेष्टिते व्याप्रियेत ॥ वलयस्वनसंकुलमुष्टिरवद्विगुणीकृतमेखलिकानिनदः ॥ चलनूपुरशब्दयुतोऽपि मुहुः शममावहते न रतातिशयः ॥ सर्वार्थसिद्धिः प्रथमो ऽनुरागः शृंगारगांधर्वकथाविशेषाः ॥ सीत्कारगर्भं हसितं सहावं छिन्नाक्षरं विभ्रमवच्च गीतं ॥ सव्याजसं-

दर्शितचारुगात्रं वृत्तं प्रियाणामवलोकितं च ॥ चूतांकुरं पुष्पफलं य थर्तुविद्युत्तदुद्योतितगर्जितानि ॥ विहंगमाला स्तनितानुयातं स्त्रीकूजितं भूषणसिंजितानि ॥ काले यथास्वं वपुषश्च शुद्धिः संकल्पयोनेर्धुरमुद्वहंति ॥ स्रोतःसु शुद्धेष्वमले शरीरे वृष्यं यदाद्यं मितमत्ति काले ॥ वृषायते तेन परं मनुष्यस्तद्बृहणं देहबलप्रदं च ॥ उपदिष्टे विचित्रेऽस्मिन्वक्तव्यार्थानुरोधतः ॥ कर्तव्यमेव कर्तव्यं प्राणाबाधेऽपि नेतरत् ॥ एतत्स्वरूपं शास्त्रस्य यद्व्यापित्वेन वर्ण्यते ॥ स्पृशति न्यूनता दोषो महानव्यापिनि ध्रुवं ॥ वीर्यहीनैरसंकीर्णैः प्रयोगैरविभूषितं ॥ अर्थानुतंत्रं यत्तंत्रं तंत्रतामाप्नुयात्कथं ॥ हंसबर्हिणदक्षांडा यद्यप्यत्यर्थशुक्लाः ॥ मुनयः सदया ब्रूयुस्तांस्तथैवान्यथा कथं ॥ कथं च सर्व एवैते योगा रागाग्निदीपनाः ॥ क्लिष्टसंकल्पजननाः प्रोक्ताः संसारवर्द्धनाः ॥ त्रिकालदर्शिभिर्दिव्यैः सत्वदोषविवर्जितैः ॥ पूर्वाचार्यैः कृतं वर्त्म को लंघयितुमर्हति ॥ प्रक्रांते सर्वथा सर्वमुक्तं भवति सूदितं ॥ न हि लेशाभिधानेन लभ्यः सर्वार्थसंग्रहः ॥ तथा च गर्दभीक्षीरं मांसमश्वश्वहस्तिनां ॥ सहसागरतोयं च प्रोक्तं निरुपयोगिकं ॥ आद्यत्वेन विशेषेण भूरितंत्रार्थसंग्रहात् ॥ संग्रहाद्यन्न बुध्येत तज्ज्ञानमतिदुर्लभं ॥ यथाप्रतिज्ञातमिति क्रमेण वेदोऽयमष्टांगनिधेर्निबद्धः ॥ अभ्यस्यतो मार्गमिवार्थसत्यं संजायते स्वार्थपरार्थसिद्धिः ॥ पितामहमुखोदीर्णमित्यायुर्वेदवाङ्मयं ॥ जीवितारोग्यधर्मार्थसुखगौरवकीर्तिकृत् ॥ अलंकृतं युक्तिपदैः सद्रत्नैरिव कांचनं ॥ षट्त्रिंशतार्थदुर्गेषु भिषजां संक्रमैरिव ॥ तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च॥ प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनं॥ उपदेशाप

---

१यदा ना मितमत्ति कालेइतिचरकपाठः ,२ संक्रमः क्रमणे पुंसिन स्त्री स्याद्दुर्गसंचरइतिमेदिनी ॥

देशातिदेशार्थापत्तिनिर्णयाः ॥प्रसंगैकांतनैकांताः सापवर्गौ विपर्ययः॥ पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥ अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः॥निदर्शनं निर्वचनमभियोगो विकल्पनं ॥ प्रत्युत्सारस्तथोद्धारः संभवस्तंत्रयुक्तयः ॥ सरसः सुप्रपद्मस्य रविदीधितयो यथा ॥ वाक्यार्थयोजनादेतायुक्तयस्त्विष्टसिद्धिदाः ॥ असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः ॥ लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः ॥ वादयन्यायविधेः सारं गृहीत्वैक्यं व्यवस्थिताः ॥ एतदागमसिद्धत्वात्प्रत्यक्षफलदर्शनात् ॥ प्रयोज्यं मंत्रवत्तंत्रं तंत्रज्ञानविशारदैः ॥ पितामहेन लोकस्य स्मृत्वा तदिदमव्ययं ॥ अकालमृत्युरक्षार्थमलौहं वर्म निर्मितं ॥ सुज्ञातमेतदमृतं स्वस्थास्वस्थसुखास्पदं ॥ यथेप्सितफलाशेषपुरुषार्थप्रसाधनं ॥ इदं शास्त्रमदृष्टीनामेवमालोककार्यपि ॥ मंडलं भास्करस्येव न प्रकाशाय जायते ॥ ध्रुवं वैद्येषु कल्याणमायुर्वेदानुसारिषु ॥ इतरेष्वितरच्छस्त्रविषज्वलनकर्मकृत् ॥ कुर्यात्प्रयुक्तशस्त्रादिसशेषमपि रोगिणां ॥ मत्वेति भेषजं मोहादनालोचितयोजितं ॥ सदा महौषधादीनां वीक्ष्य द्वादशतत्वतः ॥ कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलं ॥ मात्रादिसम्यगज्ञात्वा यदृच्छाप्रतिपादितः ॥ हिनस्ति व्याधितं योगो घृतमाक्षिकयोरिव ॥ दृष्ट्वा ह्यमृततां क्षौद्रघृतादौ मारणात्मतां ॥ शास्त्रतत्वमविज्ञाय न दुरात्मा चिकित्सतु ॥ सुगीतश्चैष कस्यापि महाश्लोको महात्मनः ॥ वैद्या ह्यश्रुतशास्त्रार्था भृत्याश्च प्रभविष्णवः ॥ अकालमृत्यवो ह्येते विचरंति महीतले ॥ लोभयंत्यातुरं वैद्या ये चित्रैः कर्मकौशलैः ॥ तेभ्यो रक्षेत् सदाऽऽत्मानमात्मा यस्मात्सुदुर्लभः ॥ ते घुणाक्षरवत्कंचिदुत्तार्य नियतायुषं ॥ घ्नंति वैद्याभिमानेन शतानि नियतायुषां ॥ रोगार्तस्य विषण्णस्य यत्नलभ्यसुखायुषः ॥ अवैद्यो निर्घृणः क्रूरो यः करोति भिषग्जितं ॥ पापस्य मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ॥ नरो नरकपाती स्यात्तस्य

संभाषणादपि ॥ अतंत्रीकृततंत्रार्थः शास्त्रमात्रोपजीवनः ॥ राज्ञां प्रमादाद्राष्ट्राणि चरंति व्याधिवृत्तयः ॥ तान्कालपाशसदृशान्वर्जयेच्छास्त्रधर्षणान् ॥ सेवेत शमविज्ञानज्ञानपूर्वान् भिषकृतमान्॥अन्नपानानि पथ्यानि व्याधिनिर्घातमौषधं ॥ रसायनानि वृष्याणि प्राप्यंते वैद्यसंश्रयात् ॥ अराजका यथा देशा भर्तृहीना यथा गृहाः ॥ आतुराद्यास्तथा पादाः शोच्या वैद्यानधिष्ठिताः ॥ प्राणाचार्यं बुधस्तस्माद्दयालुं विजितेंद्रियं ॥ अश्विनाविवदेवेंद्रः पूजयेदादृतस्तदा ॥ यज्ञस्य हि शिरश्छिन्नमश्विभ्यां संधितं पुनः ॥ पातिता दशनाः पूष्णो भगस्य च विलोचने ॥ राजयक्ष्मार्दितश्चंद्रस्ताभ्यामेव चिकित्सितः ॥ सोमातिपिबतो वज्री भुजस्तंभे च दारुणे ॥ भार्गवश्च्यवनः कामी वृद्धः सन्विकृतिं गतः ॥ वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा ॥ एभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ॥ बभूवतुर्भृशं पूज्याविंद्रादीनां महात्मनां॥अश्विभ्यां सहितः सोमं प्रातः पिबति वासवः॥ सौत्रामण्यां च भगवानश्विभ्यां सह मोदते॥अश्विनोः कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि ॥ अजैरमरैर्नित्यं सुखितैरेवमादृतैः ॥ व्याधिमृत्युजरात्रस्तैर्दुःखप्रायैः सुखार्थिभिः ॥ किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नातिशक्तितः ॥ शीलवान्मतिमान् युक्तो द्विजातिर्वेदपारगः ॥ प्राणिभिः पितृवत्पूज्यः प्राणाचार्यः स हि स्मृतः ॥ विद्यासमाप्तौ भिषजां द्वितीयाजातिरुच्यते ॥ न वैद्यो वैद्यशब्दं हि लभते पूर्वजन्मना ॥ विद्यासमाप्तावत्यर्थं ब्राह्मं वा भिषजां ध्रुवं ॥ सत्वमाविशति ज्ञानात्तेन वैद्यो द्विजः स्मृतः ॥ नाभिध्यायेन्न चाक्रोशेदहितैर्न समाचरेत् ॥ प्राणाचार्यं बुधः कश्चिदिच्छन्नायुरनीश्वरं॥ भिषगप्यातुरान् सर्वान्स्वसुतानिव सत्ववान् ॥ अबाधेभ्योऽपि संरक्षेदिच्छन् धर्ममनुत्तमं ॥ कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयं ॥ ते हित्वा कांचनं राशिं भस्मराशिमुपासते ॥ रोगाख्यान् दारुणा-

न् पाशानंतकांतिककर्षिणः ॥ यश्छित्वा यच्छति प्राणान् दाता नास्त्येव तत्समः ॥ न जीवितप्रदानाद्धि दानमन्यद्विशिष्यते ॥ तस्मादुपाचरेत्स्वेन स्वेन निःस्वतपस्विनः॥स्वत्वार्थमीहमानस्य वैद्यस्यैव महात्मनः॥वर्त्तते सन्निधानेन नियतं सिद्धदेवताः॥क्वचिद्धर्मःक्वचिन्मित्रं क्वचिदर्थः क्वचिद्यशः ॥ कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ नित्यमादरवान्वैद्यस्तस्मादार्त्तानुपाचरेत् ॥ प्राणान्सहात्मनः कीर्त्या निहंत्येषामनादरात् ॥ सर्वत्रमैत्री करुणाऽऽतुरेषु निरामदेहेषु नृषु प्रमोदः ॥ मनस्युपेक्षा प्रकृतिं व्रजत्सु वैद्यस्य सद्वृत्तमलं तनोति ॥ सामिषेणापिचित्तेन जीवितोच्छेदकारिणः ॥ यो निहंत्यामयान्वैद्यः सोऽपि केनोपमीयतां ॥ किमुत निरामिषेण मनसा करुणामृदुना कृपणविशिष्टयोः सदृशमुद्वहता ॥ अतिगुरवोऽधिकसत्वचरितं सततं विदधच्छमयति रोगजालमपि योऽतिविरोधिमिथः ॥ दाहः शूलं तृडाध्मानं क्षुत्क्षामत्वमरोचकं ॥ कः प्राकृतो जयेद्रोगान्नित्यमन्योन्यरोधिनः ॥ मारुतामग्रहोन्मादमदान्सुसदृशाकृतीन् ॥ को जानीयाच्चिकित्सेद्वा दूरभिन्नक्रियाक्रमान् ॥ पर्वभेदोंऽगमर्दस्तृट्कासः श्वासोऽरुचिर्भ्रमः ॥ एतान्यलंघिते लिंगान्येतान्येवातिलंघिते ॥ प्राणाचार्यं वेदपारं प्रयातं बुध्या युक्तं पूजयेन्नित्यमस्मात् ॥ यस्मिन् ह्यस्य प्राणयात्रा निबद्धा तस्मै यच्छन् को धनानां धनायेत् ॥ आयुर्वेदं श्लोकलक्षेण पूर्वं ब्राह्मं त्वासीदग्निवेशादयस्तु ॥ कृच्छ्राद्ज्ञेयान्प्रापपारान्सुतंत्रांस्तस्यैकैकं नैकधांऽगानि तेनुः ॥ भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मि यस्य॥सुतो भवत्तस्यच सिंहगुप्तस्तस्याप्यहं सिंधुषु लब्धजन्मा॥समधिगम्य गुरोरवलोकितादुरुतराच्च पितुः प्रतिभामयं॥सुबहुभेषजशास्त्रविलोकनात्सुचरितांगविभागसुनिश्चितः ॥पूर्वोक्तमेव वदता किमिवोदितं स्याच्छ्रद्धालुतुष्टिजननं न भवत्यपूर्वं ॥ संक्षिप्तसंशयितविस्तृतसंप्रकीर्णं कृत्स्नार्थं

शशिरिति साधु स एव दृष्टः ॥ आयुर्वेदोदधेः पारमपारस्य प्रयाति कः ॥ विश्वव्याध्यौषधिज्ञानसारस्त्वेषः समर्थितः ॥ स्मृत्वेदमुदितं पूर्वं श्रुत्वेदानीं द्वयोः पुनः ॥ स्मर्तुः श्रोतुश्च सुतरां श्रद्धातुं कस्य युज्यते ॥ अथवा भूतमप्येतं स्मर्तुरेव क्रमागतं ॥अभिधातृविशेषेणकिं तथाऽपि प्रयोजनं ॥ ऊर्ध्वमेति मदनं त्रिवृताऽधो वस्तुमात्रक इति पाद्ये ॥ मद्विधो यदिवदेदथवाऽत्रिः कथ्यतां कइव कर्मणि भेदः॥ साध्वसाध्विति विवेकवियुक्तो लोकपंक्तिकृतभक्तिविशेषः ॥ बालिशो भवति नो खलु विद्वान् सूक्तएव रमते मतिरस्य ॥ अभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढकः ॥ पठतु यत्नपरः पुरुषायुषं स खलु वैद्यकमाद्यमनिर्विदः॥ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ॥भेडाद्याः किं न पठ्यंते तस्माद्ग्राह्यं सुभाषितं॥इति मुनिवचनानां जीवितोपाश्रयाणामभिलषितसमृद्धौ कल्पवृक्षोपमानां ॥ यदुदितमिह पुण्यं कुर्वतो मेऽनुवादं भवतु विगतरोगो निर्वृतस्तेन लोकः ॥ इतिवाजीकरणयोगो नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

इत्यष्टमं वाजीकरणमगं संपूर्णं ॥ ८ ॥

इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यं विरचितेऽष्टांगसंग्रहे षष्ठमुत्तरस्थानं संपूर्णं ॥ ६ ॥ समाप्तश्चायं ग्रंथः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



# अष्टांगसंग्रहस्य

## शुद्धिपत्रम्

### पूर्वभागस्य

| पत्रे | पंक्तौ | त्याज्यं | ग्राह्यं |
|---|---|---|---|
| ८ | १७ | भवयु | भवेयु |
| १० | २० | गज | गजं |
| १२ | १ | वृत्य् | वृत्य |
| १४ | २० | भवति | भवंति |
| १५ | २४ | ककुभो | ककुंभो |
| ३२ | २२ | कढिना | कठिना |
| ३८ | २४ | त्वरं | त्ववरं |
| ४६ | २२ | स्वाप | स्त्राप |
| ४९ | ६ | सापधान | सापिधान |
| ५३ | २२ | चूर्णौ | चूर्णौ |
| ५५ | १९ | विरुढ | विरूढ |
| ६९ | १७ | सुत्वानुवृत्तिः | सुखानुवृत्तिः |
| ७१ | ११ | कषयं | कषायं |
| ७९ | ४ | पित्तफापहे | पित्तकफापहे |
| ८५ | २४ | सेवाल | शेवाल |
| ८९ | २१ | राजन्हं | राजान्हं |
| ९३ | १ | विपक्ति | विविक्त |
| १०१ | १४ | मायैर्मैदः | प्रायैर्मैदः |
| १०४ | २० | भेवत् | भवेत् |
| १०८ | ९ | दोर्गंध्यं | दौर्गंध्यं |
| ११७ | २२ | पारवारा | परिवारा |
| ११९ | २३ | परस्पेरण | परस्परेण |
| १४७ | २५ | बिमर्दित | विमर्दित |
| १४८ | १ | आत्ययित्वात् | आत्ययिकत्वात् |
| १६८ | २९ | कर्णादि | कर्णादि |
| १७१ | १६ | कुशपत्रारामुखे | कुशपत्राटामुखे |
| १७२ | १७ | आसूरी | आसुरी |
| १७५ | ८ | तीर्यक् | तिर्यक् |
| १७६ | २३ | समंताद्व्यंगुले | समंताद्‌व्यंगुले |
| १७७ | १० | त्रिकटुंक | त्रिकटुक |
| १७९ | १६ | अंगुष्ठेनापरुध्य | अंगुष्ठेनोपरुध्य |
| १८२ | १० | यथामार्गं | यथामार्गं ॥ |
| „ | ११ | हरं ॥ अन्यतो | हरमन्यतो |
| „ | १७ | कशाभिर्बध्वा | कुशाभिर्बध्वा |
| १८३ | २३ | उष्मणा | ऊष्मणा |
| १८६ | ९ | सक्तुभिघृताक्तैः | सक्तभिर्घृताक्तैः |
| „ | १२ | बात | वात |
| १८९ | १८ | नृणां | नॄणां |
| १९२ | ४ | सारिवाद्भिः | सारवद्भिः |
| १९६ | २५ | मत्तावुपलब्धिः | प्रवृत्तावुपलब्धिः |
| २०७ | ९ | मयाजयेत् | मयोजयेत् |
| २०७ | २१ | खादु | स्वादु |
| २२१ | १ | क्रोधा | क्रोधो |
| २२४ | २४ | भ्रूवोः | भ्रुवो |
| २३१ | २ | स्रोतोभ्यश्च | स्रोतोभ्यश्च |
| २३८ | २३ | संसर्गकृतिः | संसर्गप्रकृतिः |
| २४७ | ९ | पुष्याणि | पुष्पाणि |
| २५० | १३ | अनाधिगच्छंतं | अनधिगच्छंतं |
| २६२ | १९ | स्वरा | खरा |
| २७२ | ९ | कषांयतिक्तमधुरं | कषायतिक्तमधुरं |
| २७४ | २० | जायते | जायंते |

# शुद्धिपत्रम्

| पत्रे | पंक्तौ | त्याज्यं | ग्राह्यं |
|---|---|---|---|
| २७५ | १० | सन्यासा | संन्यासा |
| ,, | २४ | सन्यासो | संन्यासो |
| २७६ | ४ | सन्यासे | संन्यासे |
| २९२ | ३ | रुचिः | रुचि |
| २९८ | ४ | श्यावारुणाः | श्यावारुणा |

## उत्तरभागस्य

| पत्रे | पंक्तौ | त्याज्यं | ग्राह्यं |
|---|---|---|---|
| २७ | २४ | रवर्जूराणि | खर्जूराणि |
| २८ | १९ | वर्ण्यं | वर्ण्यं |
| ४४ | २० | तस्मा | तस्मात् |
| ४७ | २२ | पिबे | पिबेत् |
| ४८ | २२ | द्वीपनाद्यैः | दीपनाद्यैः |
| ५७ | २३ | मनिना | मुनिना |
| ५८ | ३ | त्रिरात्र | त्रिरात्रं |
| ७५ | २ | पक्कवार्ताककुंडवं | पक्कवार्ताक-कुडवं |
| ८७ | १३ | ईक्षते | ईक्षेत |
| ९९ | १६ | अम्लस्नुतं | अम्लस्रुतं |
| ९९ | २५ | अंभःस्नुतं | अंभःस्रुतं |
| १०५ | २१ | हलीकमी | हलीमकी |
| १०६ | १४ | पंचपलप्रकर्ष | पंचपलप्रकर्षं |
| १०७ | ४ | चूंर्ण | चूर्ण |
| १०९ | २५ | वातरलेष्मणि | वातश्लेष्मणि |
| ११८ | १८ | कंपिलकः | कंपिल्लकः |
| ११९ | २४ | विलंयंति | विलयंति |
| १२० | २१ | शुद्धिः | शुद्धिः |
| १२५ | २३ | मूत्रणे | मूत्रेण |
| १२६ | ८ | निषन्यात् | निखन्यात् |
| १३३ | २५ | कत्थिमपधु | कपित्थमधु |
| १४५ | ७ | गुल्प | गुल्म |
| १५४ | ९ | सुरवान् | सुखान् |
| १६१ | २ | मृदुकोष्ट | मृदुकोष्ठे |
| १६२ | १९ | अन्योन्यमृंसर्गे | अन्योन्यसंसर्गे |
| १६६ | ४ | निरुहित | निरूहितं |
| १६६ | १० | निरूहबस्ते | निरूहबस्तेः |
| १७१ | १० | निष्ठ्यूयादित्यत्रनिष्पुनियादि तिचरके पाठः | |
| १७७ | ५ | आध्यान | आध्मान |
| १७९ | १७ | उत्पत्तः | उत्पत्तिः |
| २०० | १५ | मधुकन्हीबेर | मधुकन्हीबेर |
| २०० | १६ | सुराभिषमूत्र पिष्टैः | सुराभिषमूत्रपिष्टैः |
| २१५ | २१ | वीतशस्त्राश्मजने | वीतशस्त्राश्मजने |
| २२१ | ६ | वर्त्मांत- | वर्त्मांतः |
| २२४ | १ | वमनैःयापयेत् | वमनैर्यापयेत् |
| २२८ | २ | पिष्टकघ्न | पिष्टकघ्नम् |
| २२८ | १७ | ईक्षमणस्य | ईक्षमाणस्य |
| २३० | ९ | शिरोवक्रं | शिरोवक्रं |
| २३१ | १ | शूद्धशुक्रं | शुद्धशुक्रं |
| २३७ | २४ | शीलाल० | शिलाल० |
| २४२ | १७ | पटोल्या | पोटल्या |
| २४५ | ७ | दार्वीतूत्थ० | दार्वीतुत्थ० |
| २५३ | २१ | हेतुः | हेतु |
| २८८ | १९ | सुहुः | मुहुः |
| २८८ | २४ | पांडू० | पांडु० |
| २९३ | १९ | प्रयुजीत | प्रयुंजीत |
| २९८ | २४ | आचरमो २ च्छ्वासात् | आचरमोच्छ्वासात् |
| ३१९ | १ | प्रपौंडरीमकधुक | प्रपौंडरीकमधुक |
| ३३० | २० | माहरणं | माणहरं |
| ३३६ | २५ | अग्निवक्रः | अशिवक्रः |
| ३७१ | २१ | सितायोय | सितातोय |
| ३८० | १६ | माग्द्वाराम् | प्राग्द्वाराम् |

# शुद्धिपत्रम्

| पत्रे | पंक्तौ | त्याज्यं | ग्राह्यं |
|---|---|---|---|
| ३९० | २३ | वर्शशतम् | वर्षशतम् |
| ३९५ | २४ | लशुनोद्भवः | लशुनोद्भवः |
| ३९७ | ११ | मेघा | मेधा |
| ४०५ | २ | सुरवी | सुखी |
| ४०९ | १९ | संवेनतम् | संवेननम् |
| ४१५ | ७ | षष्टिकौदनः | षष्टिकौदनं |
| ४२१ | ६ | पाद्ये | प्रतिपाद्ये |

# अष्टांगसंग्रहग्रंथास आश्रयदात्यांचीं नावें.

| | नावें | प्रती | बक्षिस | पत्ता |
|---|---|---|---|---|
| १ | श्रीमन्महाराजावखतसिंगजी संस्थान लुणा वाडा | १५ | ५० | लुणावाडा |
| २ | सर दिनशाजी माणकजी पेटिट | ५ | ५० | मुंबई |
| ३ | मेहरबान नबाबसाहेब बाहादुरखानजी संस्थान जुनागढ | १० | | जुनागढ |
| ४ | श्रीमंत पंतसचिव निसबत श्रीधर विनायकशास्त्री भोरकर | ४ | | भोर |
| ५ | शेट चतुर्भुज मोरारजी | १० | ५० | मुंबई |
| ६ | रावसाहेबविश्वनाथ नारायण मंडलिक वकील सी. आय. ई- | १ | | मुंबई |
| ७ | रावबाहादुर लालशंकर उमयाशंकर फर्स्ट क्लास सबार्डिनेट जडज नासिक | २ | ५ | नासिक |
| ८ | रावबाहादुर विष्णुमोरेश्वर भिडे | ३ | २० | पुणें |
| ९ | श्रीमंत संस्थान मिरजमळा कारभारी | ३ | | मिरज |
| १० | रावबाहादुर महादेव गोविंद रानडे सी. आय. ई- | २ | | पुणें |
| ११ | रावसाहेब गोपाळ मोरेश्वर साठे रिपोर्टर ऑनधि नेटिव मेस | १ | २ | मुंबई |
| १२ | रावबाहादुर गोपाळराव हरिदेशमुख | १ | | मुंबई |
| १३ | रावबाहादुर रामचंद्र गोपाळदेशमुख | १ | | कडीप्रांत |
| १४ | डाक्तर मोरेश्वर गोपाळ देशमुख एम.डी | ५ | | मुंबई |
| १५ | डाक्तर भालचंद्रकृष्ण भाटवडेकर | २ | | मुंबई |
| १६ | शेट हरकिसनदास नरोत्तमदास | १ | | मुंबई |
| १७ | डाक्तर रामकृष्णगोपाळ भांडारकर प्रोफेसर | १ | | पुणें |
| १८ | राजमान्यराजश्री मनोहर गणेशदेव | १ | २ | नासिक |

## आश्रयदात्यांचीं नांवें

| नांवें | प्रती | बक्षिस | पत्ता |
|---|---|---|---|
| १९ श्रीमंत रा० रा० गणपतराव दामोदर चांदवडकर | १ | १५ | नासिक |
| २० राजमान्यराजश्री गणेश रघुनाथ मुठे | २ | २ | नासिक |
| २१ राजमान्यराजश्री पुरुषोत्तम उमाशंकर | १ | १० | नासिक |
| २२ रावबाहादुर नारायण आपाजी वाड वकील | २ | | नासिक |
| २३ श्रीमंत श्रीबाई साहेब मलेक श्रीबापजी मियानीसौभाग्यवती दिकरी | २ | | विरमगाम जिल्हा अमदाबाद |
| २४ शेट ठाकुरजी मुळजी सन्स | २ | १० | मुंबई |
| २५ शेट धनजी मावजी | २ | | मुंबई |
| २६ राजमान्यराजश्री मनसुखराममसूर्यरामत्रिपाठी | २ | | मुंबई |
| २७ शेट धरमशी मुरारजी गोकुळदास | २ | | मुंबई |
| २८ श्रीमंत राजश्री येल्लापाबाळाराम | २ | | मुंबई |
| २९ श्रीमन् महाराजाकेसरीसिंगजी के.सी. एस आइ संस्थान इडर | २ | | इडर |
| ३० रा०रा० जयराम आबाजी वकील | १ | ५ | नासिक |
| ३१ रावसाहेब गंगारधर नृसिंह केतकर वकील | १ | ५ | नासिक |
| ३२ रावसाहेब गणेश पांडुरंग वैद्य वकील | १ | ५ | नासिक |
| ३३ रावसाहेब नरहर पुरुषोत्तम टिळक डे० इनस्पेक्टर | १ | ५ | सोलापुर |
| ३४ रावबाहादुर मार्त्तंड वामनश्रोत्रिय | १ | | पुणें |
| ३५ मलेक श्रीहायातखानजी लाखाजीसाहेब वणोद दरबार | १ | | वणोदताबे वढवाण |
| ३६ रावबाहादुर धोंडोशामरावगरुड सालिसिटर | १ | | मुंबई |
| ३७ राजमान्यराजश्री हरि महादेव पराजपे नेटिवओपिनियनचे मालक | १ | | मुंबई |
| ३८ राजमान्यराजश्री सिताराम दामोदर भोंडे | १ | २ | नासिक |
| ३९ रावसाहेब बाळाजी दाजी धमाळ | १ | २ | नासिक |

| | नांवें | प्रती | बक्षिस | पत्ता |
|---|---|---|---|---|
| ४० | श्री०रा.रा.लक्ष्मणराव रामराव सुकेणकर जा० | १ | २ | नासिक |
| ४१ | रावसाहेब पुरुषोत्तम सदासिव वकील | १ | २ | नासिक |
| ४२ | राजमान्यराजश्री रामचंद्र विश्वनाथ पटवर्धन वकील | १ | २ | नासिक |
| ४३ | रावसाहेब दाजी विष्णु केतकर वकील | १ | २ | नासिक |
| ४४ | राजमान्यराजश्री माधवराव जनार्दन पळनिटकर वकील | १ | २ | नासिक |
| ४५ | रावसाहेब शंकर कृष्ण देवभानकर | १ | २ | धुळें |
| ४६ | वेदशास्त्रसंपन्न जटाशंकर विठ्ठलजी वैद्य | २ | | मुंबई |
| ४७ | शेट वृंदावनदास पुरुषोत्तमदास | २ | | मुंबई |
| ४८ | शेट ठक्कर मुळजी जेठा | २ | | मुंबई |
| ४९ | वेदशास्त्रसंपन्न परभुराम जीवनराम वैद्य | २ | | मुंबई |
| ५० | रावबाहादुर यशवंतराव त्र्यंबक मिरीकर जाहागीरदार | १ | | नेवासें |
| ५१ | वेदशास्त्रसंपन्न रामचैतन्यबुवा ब्रह्मचारी | १ | १ | मुंबई |
| ५२ | रावसाहेब वासुदेवराव बाळकृष्ण टाकळकर जाहागीरदार | १ | १ | नासिक |
| ५३ | रावसाहेब कचरदास मयाराम शेट | १ | १ | नासिक |
| ५४ | वेदशास्त्रसंपन्न वैजनाथ लक्ष्मणशास्त्री दाते वैद्य | १ | | नासिक |
| ५५ | राजमान्यराजश्री गोपाळरावजी चांदवडकर कार्टिंगएजंट | १ | | नासिक |
| ५६ | वेदशास्त्रसंपन्न हरिधोंडदेव भाटवडेकर | १ | | पुणेंपेठबुध० |
| ५७ | रावसाहेब द्वारकानाथ राघोबा तरखडकर हेडमास्तर हायस्कूल नगर | १ | | नगर |
| ५८ | राजमान्यराजश्री मोहनलाल हिरालाल वकील | १ | | नगर |
| ५९ | रावसाहेब केशवराव विश्वनाथ पटवर्धन वकील | १ | | नगर |

# आश्रयदात्यांचीं नांवें

| | नांवें | प्रती | बक्षिस | पत्ता |
|---|---|---|---|---|
| ६० | रावबाहादुर निळकंठराव भगवंत मुळे डिस्ट्रिक्ट्‌डेपुटिकलेक्टर | १ | | नगर |
| ६१ | रावबाहादुर नारोमहादेव ठोसर फर्स्टक्लास स०जज्ज | १ | | नगर |
| ६२ | रावसाहेब प्रभाकरलक्ष्मण नागपुरकरवकील | १ | | सोलापुर |
| ६३ | राजमान्यराजश्री नारायणमल्हार वकील कोर्टशेवगांव जिल्हा अहमदनगर | १ | | शेवगांव |
| ६४ | राजमान्यराजश्री भगवंतराव धोंडदेव | १ | | शेवगांव |
| ६५ | सौभाग्यवती वज्रचुडेमण्डित काशीबाई कानिटकर | १ | | नेवासें जि० नगर |
| ६६ | राजमान्यराजश्री श्रीधर दाजी नेवासे बुद्रुख | १ | | नेवासें |
| ६७ | मेहेरबान जाहागीरदार उस्थल | १ | | नेवासें |
| ६८ | रावसाहेब भगवंत बळवंत प्रधान मामलेदार नेवासें | १ | | नेवासें |
| ६९ | राजमान्यरा० दामोदरकृष्ण करंदिकर | १ | | मुंबई |
| ७० | रावबाहादुर महादेव वासुदेव बर्वे माजी कारभारि कोल्हापुर | १ | | रत्नागिरी |
| ७१ | राजमान्यराजश्री दामोदर जनार्दन गोखले | १ | | पुणें |
| ७२ | राजमान्यराजश्री महादेव चिमणाजी आपटे वकील हायकोर्ट | १ | | मुंबई |
| ७३ | राजमान्यरा० रामचंद्र दाजी नगरकर यांचेहस्ते देवरुख येथील लायब्ररी करितां | १ | | देवरुख |
| ७४ | वेदशास्त्रसंपन्न गोपाळ रामचंद्र बिवलकर वैद्य | १ | | नासिक |
| ७५ | रावसाहेब गणेश वेंकटेशजोशी संस्कृतमास्तर हायस्कूल | १ | | मुंबई |
| ७६ | राजमान्यराजश्री शामराव विठ्ठल वकील | १ | | मुंबई |

## आश्रयदात्यांचीं नांवें

| नावें | प्रति | बक्षिस | पत्ता |
|---|---|---|---|
| ७७ राजमान्यराजश्री जनार्दन दामोदर कोल्हटकर | १ | | मुंबई |
| ७८ राजमान्यराजश्रीदत्ताराम पुरुषोत्तम इर्याटे | १ | | मालवण |
| ७९ राजमान्यराजश्री रामचंद्र बळवंत पाठक | १ | | मुंबई |
| ८० डाक्टर गोविंद बाळाजी खेर | १ | | मुंबई |
| ८१ वेदशास्त्रसंपन्न हरि बापु जोशी (काकावैद्य) | १ | | वसई |
| ८२ रावसाहेब बाळकृष्णबापुजी खत्री | १ | | मुंबई |
| ८३ रावबाहादुर रघुनाथ रामचंद्र इंजनीयर | १ | | नासिक |
| ८४ वेदशास्त्रसंपन्न मोरेश्वर काशीनाथ पाटणकर वैद्य | १ | | मुंबई |
| ८५ रावसाहेब लक्ष्मण रामचंद्र वैद्य | १ | | मुंबई |
| ८६ डाक्तर कृष्णाजी काशीनाथ गोखले | १ | | नागपुर |
| ८७ वेदशास्त्रसंपन्न राघवानंद बुवा ब्रह्मचारी | १ | | मुंबई |
| ८८ रावसाहेब सखाराम पंत जोशी मुनसफ मुक्काममाढे | १ | | माढे |
| ८९ रावबाहादुर माधवराव पांडुरंग बर्वे | १ | | मुंबई |
| ९० राजमान्यरा० शेषगिरिराव विठ्ठल कारवार | १ | | कारवार |
| ९१ शेट विजभूखण दास आत्माराम | १ | | मुंबई |
| ९२ राजमान्यराजश्री गणेश पांडुरंग पराजपे व० | १ | | नासिक |
| ९३ राजमान्यराजश्री रामचंद्रमोरेश्वर वैशंपायन वकील | १ | | नासिक |
| ९४ शेट रामदिन गंगाराम | १ | | नासिक |
| ९५ शेट आमलक केवळचंद | १ | | नासिक |
| ९६ शेट गोपाळ पानाचंद | १ | | नासिक |
| ९७ विद्वद्वर्य राजमान्यराजश्री विष्णुशामजीरानडे (बंडुनाना) | ५ | | पुणें |
| ९८ रावसाहेब आपाजी ऊर्फ रंगनाथबाळकृष्ण देशपांडे जालनापुरकर सबरजिष्ट्रार | १ | २ | नासिक |
| ९९ राजमान्यराजश्रीकृष्णराव गंगाधरमभुणेमालेगांवकर अबकारी क्लार्क | १ | १ | नासिक |
| १०० रावबाहादुर अंबालाल साकरलाल हायकोर्टजज्ज बडोदा | १ | | बडोदा |